*Sanskrit Sahitya Vimarsha Can be had from:—*

I. BHARATI PRATISHTHAN
31, Anandpuri, Merath Nagar.
U. P. India

II. SHETH SANATKUMAR SHAH
31, Yogesh Bhawan, Huges Road,
BOMBAY 7.

III. MUNSHIRAM MANOHARLAL & CO.
Sanskrit Book Sellers & Publishres
Nai Sadak DELHI (India)

IV. **ALL BIG BOOK SELLERS OF INDIA**

Price Rs. 16/- Only In India
...... 30 Shillings Abroad





संस्कृतमणिमालायाः प्रथमो मणिः

# संस्कृतसाहित्यविमर्शः

[ समस्तसंस्कृतवाङ्मयस्य समालोचनपुरस्सरेतिवृत्तरूपो गद्यमयः सन्दर्भः ]

प्रतिष्ठित-सिद्धान्तशिरोमणिरिति पदवीविभूषितैः वृन्दावनस्थगुरुकुलविश्वविद्यालयस्य पूर्वकुलपतिमहाभागैः सर्वतन्त्रस्वतन्त्रैः पदवाक्यप्रमाणपारावारीणैः

**कविराजश्रीमदाचार्यपण्डितद्विजेन्द्रनाथशास्त्रिभिः**

विरचितः

तैरेव च रचितया टिप्पण्या

समलङ्कृतः






**भारतीप्रतिष्ठानम्**

मयराष्ट्रनगरम् (उत्तरप्रदेशः)

प्रकाशक

भारती प्रतिष्ठान

३१, आनन्दपुरी

मेरठ नगर, उ० प्र० [भारत]




*Sole Distributors :*

**MUNSHI RAM MANOHAR LAL**

ORIENTAL & FOREIGN BOOKSELLERS & PUBLISHERS

**Post Box 1165, Nai Sarak, DELHI-6.**

मूल्यम् : षोडश रूप्यकाणि १६)

सं० २०१३, सन् १९५६ ई०

प्रथमाऽऽवृत्तिः २०००






मुद्रक

न्यू इण्डिया प्रेस

कनाट सर्कस, नई दिल्ली




Vice-President
India
New Delhi
17 August, 1956

## FOREWORD

I now read the volume on SAMSKRITA SAHITYA VIMARSHA by Shri Dwijendra Nath Acharya.

Part I deals with Vaidika literature in its varied aspects, including Darshanas, Vedic and non-Vedic. The second part deals with Laukika Literature. It is impossible in a single volume to deal adequately with such a vast range, but the author has dealt with this subject in an interesting way and in many sections his account is quite full. In some parts the treatment is rather brief. He gives us quotations from the different works which help the reader a great deal. His learning is wide and his insight penetrating. The style is simple and attractive. I hope the book will find many readers.

S. Radhakrishnan

(S.Radhakrishnan).



या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता ।
या वीणा वरदण्डमण्डितकरा या श्वेतपद्मासना ॥
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता ।
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥

# समर्पणम्

यैः काव्यरत्नोदधिमन्थनेन,
रत्नान्यनेकानि समुद्धृतानि ।
तेषां कवीनां करपल्लवेषु,
इमां स्वकीयां कृतिमर्पयामि ॥

—द्विजेन्द्रनाथः

# ❀ पुण्यस्मृतिः ❀

अस्ति हि गुर्जरप्रान्ते बडोदाराज्यमण्डले ।
'उभोई'ति प्रथितो ग्रामो गुणिग्रामसुशोभितः ।।
शाहोपाधिधरात्तत्र त्रिभुवन-लालसंज्ञकात् ।
श्रीमत्या गिरिजादेव्याः गर्भशौक्तिमौक्तिकः ।।
बाल्ये हि मणिलालोऽयं विद्याऽध्ययनकाङ्क्षया ।
मुम्बापुरीं समायातो मातुलस्य गृहे शुभे ।।
स्वल्पेनैव तु कालेन मणिलालः कुशाग्रधीः ।
जग्राह तां वणिग्विद्यां बिम्बोद्ग्राहिमणीन्द्रवत् ।।
विदुषीं प्रमिलादेवीमुपयेमेऽद्भुतश्रियम् ।
'काञ्चन-मणिसंयोगः' इत्युक्ति चरितार्थयन् ।।
अल्पीयसैव वयसाऽलङ्कृतो भाग्यसम्पदा ।
मुम्बय्या धनिनां मध्ये जातः श्रेष्ठिगणाग्रणीः ।।
भाग्यवान् लक्ष्मीपुत्रो विद्याव्यसनितां गतः ।
गीर्वाण–वाणी–प्रणयि–गिरां सेवा-समुत्सुकः ।।
अर्थ्यस्मानर्थयामास, मयाऽपि च समर्थितः ।
इत्थं संस्कृत–साहित्यविमर्श इति नामभाक् ।।
सन्दर्भो भावगर्भोऽयं तत्प्रीत्यै परिकल्पितः ।
मया द्विजेन्द्रनाथेन प्रीत्या च समुट्टङ्कितः ।।
हन्त दैववशात् सोऽयमगमत्त्रिपुरालयम् ।
विद्युद्दामचलं ह्येतज्जीवितं प्रतिभासयन् ।।
तस्य पुण्यस्मृतौ तावत् तत्पत्न्या पुण्यशीलया ।
ज्येष्ठेन सनत्कुमारेण तत्पुत्रेण च धीमता ।।
श्रद्धया नयशीलेन ग्रन्थोऽयं संप्रकाशितः ।
प्रीयतां तेन वाग्देवी प्रीयताञ्च महेश्वरः ।।

——ग्रन्थकृत्



स्वर्गीय शेठ–

**श्री मणिलाल टी० शाह**

जन्म ता ३ फ्रेब्रुआरी १९०४ स्वर्ग. ता ३ अगस्त १९५२



तत्पुण्यशीला

**धर्मपत्नी श्रीमती प्रेमिला बहेन**

——



स्वर्गीय शेठ–

**श्री मणिलाल टी० शाह**

जन्म ता ३ फ्रेब्रुआरी १९०४ स्वर्ग० ता ३ अगस्त १९५२



तत्पुण्यशीला

**धर्मपत्नी श्रीमती प्रेमिला बहेन**

# पूर्वोद्धासः

अयि भोः अभिरूपशिरोमणयः विद्वत्तल्लजाः आर्यमिश्राः !

अथेमं समस्तसंस्कृतवाङ्मयमहाम्भोनिधिमन्थनोत्थसाररूपं संस्कृतसाहित्य-विमर्शाख्यं सन्दर्भं तत्रभवतां भवतां करकमलेषु समर्पयतो मम हृदि खलूज्जृम्भते स कोऽपि महीयान् हर्षप्रकर्षोल्लासः।

अस्मिन् हि ग्रन्थे वैदिकलौकिकोभयविधसाहित्यस्य मूलङ्कषमालोचनं गीर्वाणगिरैव पल्लवितम्। समग्रसंस्कृतस्यान्तरङ्गपरिचायनमेव ग्रन्थस्यास्य प्रयोजनत्वेनोद्दिष्टम्, गीर्वाणवाणीप्रणयिनां मनोविनोदाय, संस्कृतमहाविद्यालयानामाङ्गलविद्यालयानामुच्चतमश्रेणीस्थानां संस्कृताध्यायिनामन्तेवासिनाञ्च कृते सौकर्येण संस्कृतवाङ्मयस्वरूपप्रतिपत्त्यर्थञ्च सविशेषमेष उपक्रमः। इति हेतोरेव भाषासरणिरप्यत्र सरला सुगमावबोधा चाश्रिता न जटिला।

अथ च यावन्तोऽपि विषयाः सन्दर्भेऽस्मिन् गर्भीकृताः ते सर्वे युक्ति-प्रमाणोपपत्तिपूर्वकमेव प्रपञ्चिताः सावष्टम्भा न कर्हिचिन्निरवष्टम्भाः। यथा-वश्यकं प्रमाणत्वेनोपात्तानि वचनानि च टिप्पणीभिरलङ्कृतानि।

यच्च क्वचिदत्र पुनरुक्तिवदाभासमाना विषयाः प्रतीयेरन् तेऽपि विषय-विशदीकरणप्रयोजना एव खलु बोद्धव्याः। तत्तत् प्रस्थानानां ते ते राद्धान्ता यावद् बुद्धिबलोदयं याथार्थ्येनैव प्रतिपादिताः।

यस्याचार्यस्य यन्नाम अभिमतं यादृशञ्च तत्तथैवात्र वदनारविन्दमिव दर्पणपटले सुतरां प्रतिबिम्बीकृतम्। दर्पणे तु तावद् बिम्बस्य वैपरीत्यमपि प्रति-पद्यते किञ्चिदिव, यद्वामतस्तद्दक्षिणतो यच्च दक्षिणतस्तद् वामत इति। परमेष सन्दर्भस्तु तावन्मात्रमपि विपर्यासं न सहत इति निश्चप्रचम्।

एतदपि अत्रावधेयं भवति यद् भारतीय-सांस्कृतिकस्वर्णसूत्रग्रथितमहर्षि-गण-कविवरनिकरकान्तमणिरत्नपिनद्धेयं विमर्शाख्या माला समारम्भावन्तपर्यन्तं भारतीयं भास्वरं सांस्कृतिकञ्ज्योतिरभितः समुद्भासयन्तीव नितरां बाभासते-तराम्। यत्सत्यं साहित्यं नाम हि संस्कृतेः कोऽप्यतिभासुरो रमणीयतरश्च

सुमहानुदन्वान् । अतएव सांस्कृतिकतत्त्वं बुभुत्सुभिः साहित्यसमुद्र एव आलोडनीयो भवति ।

सोऽयं महता प्रयत्नेन सावधानतया च सम्पादितः स्वतन्त्रो गद्यमयः सन्दर्भः भारतीयविद्वुषामिव पाश्चात्यानामपि विपश्चिदपश्चिमानां मनसः प्रीतये प्रपद्येतेति मनीषयैव गीर्वाणवाणीसपर्यापर्युत्सुकेन, वाग्देवताचरणकमलचञ्चरीकेण मया विरचितो ग्रन्थोऽयं चेन्नाम मौकुरीं श्रियमादधानः संस्कृतानुरागिणामनुरागाय मनः सन्तोषपोषाय च प्रकल्पेत र्ताह प्रयत्नममुमात्मनः सुतरां फलेग्रहिमाकलयिष्यामीति ।

विदुषां विधेयः
*द्विजेन्द्रनाथः*



वेदादिशास्त्रसम्पन्नः पदवाक्यप्रमाणवित् ।
श्रीमद्द्विजेन्द्रनाथोऽयं कविराजो विराजते ॥



वेदादिशास्त्रसम्पन्नः पदवाक्यप्रमाणवित् ।
श्रीमद्धिजेन्द्रनाथोऽयं कविराजो विराजते ॥

# ग्रन्थकारपरिचयः

**(निखिलशास्त्रनिष्णातैः व्याकरण-दर्शन-साहित्याचार्यादिविरुदालङ्कृतैः खुर्जासंस्कृतमहाविद्यालयप्रधानाचार्य (प्रिन्सिपल) महाभागैः श्रीकुबेरदत्तशास्त्रिभिरारचितः ग्रन्थकारपरिचयः ।)**

संस्कृत-साहित्य-विमर्शप्रणेतॄणां सुप्रतिष्ठितसिद्धान्तशिरोमण्याद्यनेकविरुदावलिविभूषितानां श्रीमदाचार्यप्रवराणां श्रीपण्डितद्विजेन्द्रनाथशास्त्रिमहाभागानां पुण्यपरिचयमारचयितुं नूनं मे हृदि समुल्लसति कोऽप्यपूर्व आनन्दसन्दोहोद्रेकः ।

त इमे उत्तरप्रदेशे मुज़फ्फरनगर-मण्डलान्तर्वर्त्तिनि परसोलीनामनि गुणिग्रामे ग्रामे महोज्ज्वले सुप्रतिष्ठितस्य ब्रह्मर्षिवरिष्ठस्य वशिष्ठस्य वंशावतंसस्य श्रीमद्विद्वद्वरिष्ठस्य श्रीगणेशीलालशर्मणः पुत्ररत्नात् श्रीजानकीनाथ-वैद्यशिरोमणेस्सुताताद् विदुष्याः श्रीगंगादेव्या गर्भशुक्तितो मुक्ताफलोपमाः वैक्रमे १९४८ संवत्सरे मार्गशीर्षमासे पुण्यतिथौ नवम्यां जनिं लेभिरे।

शैशव एव कुलाचारपरम्परामनुरुन्धाना विधिविहितविद्यारम्भसंस्कारसमारम्भा वृन्दावनीयगुरुकुलविश्वविद्यालये संस्कृतविद्यामभ्यसितुं तत्पितृचरणैः प्रेषिताः। ते च कुशाग्रधियः प्रदीप्तप्रतिभाप्रभावेण व्याकरण-साहित्य-दर्शनादि-सर्ववेदशास्त्रेषु अनन्यादृशं वैदुषीवैभवं चतुर्दशभिर्वर्षैः समासाद्य निखिलशास्त्रनिष्णाताः सन्तो लब्धनैकस्वर्णपदका आसन् ।

पद-वाक्यप्रमाणपारावारीणा हि अमी महानुभावा व्याकरणं वैयाकरणधौरेयस्य श्रीदेवदत्तशास्त्रिणः सकाशात्, तत्रापि पातञ्जलं महाभाष्यं श्रीमहाभाष्याचार्यात् श्रीहरनामदत्तमहोदयात् जगाधरीवास्तव्यात्, तर्कविद्यां श्रीस्वामिकृष्णानन्दमहाभागात् तर्काचार्यात्, साहित्यसर्वस्वञ्च कविवरात् श्रीदेवीदत्तसाहित्याचार्यात्, श्रीगुरुवरकाशीनाथाचार्यसकाशात् सर्वामपि निगमागमसरणिमधिगत्य संस्कृतसाहित्यपाथोनिधिमन्थनोत्थां सुधामारसयन्तो नूनं निगमागमपारदृश्वानः समपद्यन्त। अत्रार्थे तन्निर्मितोऽयं 'संस्कृतसाहित्यविमर्श'नामा ग्रन्थ एव जागरूकं प्रमाणमिति को नाम नाङ्गीकरोति। एतादृशस्य महतोऽशेषविशेषस्य संस्कृतसाहित्यार्णवस्य संस्कृतयैव गिरा यत् समालोचनपुरस्सरं गभीरावगाहनं कृतं तत्खलु कस्य न सहृदयस्य मनसि कौतुकमुपजनयेत् ।

प्रतिविषयं विषयप्रतिपादनतन्मया शैली च महानुभावानां मन्ये तत्तद्-विषयोपज्ञतामिवाविष्करोति ।

अस्मिन् हि ग्रन्थरत्ने लौकिकवैदिकोभयविधसाहित्यस्य मार्मिकं पर्यालोचनमितिहासरूपेण सुललितया सरसया भावशालिन्या सुप्रवाहया च भाषयोपस्थापितम् ।

वैदिकसाहित्यं च वेद-वेदाङ्ग-ब्राह्मणग्रन्थ-आरण्यक-सूत्रग्रन्थ-समस्तदर्शन-साहित्य-पुराणागमतन्त्रेषु मर्मस्पर्शिनां वृत्तान्तानां सिद्धान्तानाञ्च विशदं वर्णनं नवनवामिव चमत्कृतिमादधाति ।

लौकिकसाहित्ये च आदिकविवाल्मीकिप्रणीतं रामायणं महर्षिव्यासप्रणीतञ्च महाभारतमारभ्य भास-कालिदास-भवभूति-माघ-अश्वघोष-भारवि-भट्टिप्रभृतीनाञ्च महाकवीनां महाकाव्यानां नाटकानाञ्च गद्यकाव्यप्रणेतॄणाञ्च सुबन्धु-बाणभट्ट-दण्डिप्रभृतीनां संस्कृतस्य अन्येषां भास्वरविद्वद्रत्नानां पाणिनि-कात्यायन-पतञ्जलीनाम् • कामार्थशास्त्रप्रणेतॄणां वात्स्यायनचाणक्यादीनां वेदभाष्यकाराणां सायण-महीधर-उव्वटप्रभृतीनाञ्च भाष्याणां यन्मूलङ्कषमालोचनमकारि तत्कस्य न विदुषो मनसो मोदाय प्रभवति ।

यद्यपि नूनमत्र विलसन्ति पाश्चात्यानां परश्शताः मैक्समूलर-मेक्डानल-कीथ-विन्टरनीजप्रभृतीनां संस्कृतवाङ्मयप्रणयिनां विदुषाम् एतद्विषयालङ्कृताः संस्कृतैतिह्यविषयिण्यः आङ्गलभाषाग्रथिताः काश्चन गाथाः तथापि न ता विदुषां मनोमोदाय प्रकल्पन्ते । एतादृशश्चायं समस्तसंस्कृतसाहित्यसारभूततत्त्वालङ्कृतः सर्वङ्कषः सर्वाभिमतश्चानन्यसाधारण एकल एव 'संस्कृतसाहित्यविमर्श'-नामाऽपूर्वो ग्रन्थः। अतएवास्य विषये साम्प्रतिकानां भासुराणां विदुषां सम्मतयो नूनमक्षरशो ग्रन्थरत्नस्यास्य महिमानं सबहुमानं पुष्णन्ति ।

नातितिरोहितं तलावगाहिनां विदुषां यत् तत्तद्विषयवर्णनप्रसङ्गे तन्मयतया तत्परतया च विमर्शरचयितृविषया वर्णनीयविषयोपज्ञताधीरेव विमर्शाऽध्येतृवर्गे बलादुपजायते इति नूनं सर्वमनवद्यम् । यथा कविमूर्धन्यस्य कालिदासस्य कृति-चित्रणसमये विचित्रां कल्पनामारचयत्सु सर्वतो वर्णनतादात्म्येनाऽपूर्वां विच्छित्ति-मातन्वानेषु महानुभावेषु किं स एवायं कविवरो भूमिकान्तरमारचयन्नस्तीति विदुषोऽपि प्रत्यभिज्ञा सततमुदेति ।

कुमारसम्भवे 'सर्वोपमाद्रव्यसमुच्चयेन', शाकुन्तले च 'मानुषीषु कथं वा स्यात्', रघुवंशस्य महाकाव्यस्य आदिमे सर्गे 'वागर्थाविव सम्पृक्तौ', पञ्चमे च 'गतो

वदान्यान्तरमित्ययं मे माभूत् परीवादनवावतारः' इत्यादीनि बहूनि पद्यानि अभिनवमेव भावमुद्दिश्य कविवरस्य व्याचिख्यासितानीति प्रदर्श्य विमर्शकृद्भिर्वर्णितानि मदुक्तिनिदर्शनत्वेनाऽभ्युपगन्तव्यानीति नातिशयिततालेशोऽपि।

नैतावदेव, किन्तु सर्वतन्त्रस्वातन्त्र्यं लेखकमहाभागानां सुरक्षितं यत्पाणिनीयवर्णनमारचयतां यद्यपि पाणिन्युपज्ञं व्याकरणमित्याभाणकमक्षरशो मन्वानानामपि समालोचनाप्रेक्षावद्धिया भगवत्पाणिनेरपि रचनां नामुचत्। दिङ्मात्रमत्रोदाह्रियते--हरिर्गच्छतीति वाक्यस्य आपामरप्रसिद्धसाधुत्वस्य साधुतासमर्थनाय किन्नाम तत्सूत्रं पाणिनेः यद्विसर्गस्य रेफविधायि स्यात् यथा 'नामिनो रः' इति चान्द्रं सूत्रम्। यत्तु श्रीनागेशभट्टेन वाक्यसंस्कारपक्षेण समर्थ्य पदसंस्कारपक्षे हरिः गच्छतीति सविसर्गमेव वाक्यं साधु इति कल्पितं तत्कस्यालं परितोषाय विदुषो भवेत् पक्षान्तरेणाऽसाधुत्वस्याऽपरिहार्यत्वात् सविसर्गस्य तादृशस्य क्वाऽप्यदर्शनाच्च अर्थविषये वाक्यस्फोटाङ्गीकारेऽपि पदान्वाख्यानस्यैव व्याकरणमात्रेतिकर्तव्यताऽवधारणात् वाक्यलक्षणाया वाचोऽर्थलक्षणं व्याकरणमिति यत्रतत्रोक्तत्वात्।

'ज्योत्स्नाकरम्भमुदरम्भरयश्चकोरा' इति मुरारिकविसूक्तिरपि नानेन पाणिनीयेन व्याकरणेन साधुत्वमलम्भिर्भति।

श्री भट्टोजीदीक्षितस्यापि वैयाकरणसिद्धान्तकौमुदी-कृतिः यद्यपि सम्प्रति प्रत्नामपरां कृतिमतिशयाना जागर्तीति को नाम नोररीकरोति ? परममी पर्यालोचकास्तत्रापि प्रेक्षावतां धियं बलादाकर्षन्ति यद् ण्यन्तप्रक्रियायां 'बालमुल्लापयते' इति 'लियः सम्माननशालिनीकरणयोश्चेति' सूत्रस्योदाहरणस्य 'उल्लापयते' इत्यस्य वञ्चयतीत्यर्थं कृतवतो दीक्षितस्य वञ्चयतीति परस्मैपदप्रयोगः, 'गृधिवञ्च्योः प्रलम्भने' इत्यात्मनेपदविधायिसूत्रप्रतिकूलः।

राजन् शब्दे प्रथमान्तो 'राजा' इति प्रयोगः, तत्र 'परत्वादुपधादीर्घः, हल्ङ्यादिलोपः, ततो न लोपः, राजा' इत्युक्तिः; हलन्तनपुंसकलिङ्गप्रकरणे च दीर्घाहन् शब्दे 'इह हल्ङ्यादिलोपे प्रत्ययलक्षणेन असुपीति निषेधाद् रत्वाभावे रुः। तस्यासिद्धत्वान्नान्तलक्षण उपधादीर्घः।' राजा पदसाधने हल्ङ्यादिलोपात्परत्वात् उपधादीर्घः इति वदतः, अत्र च लोपानन्तरं दीर्घं वदतश्च दीक्षितस्य मिथो वदतोव्याघातो दुष्परिहर एव प्राप्त इति शेषेण समर्थनन्तु मतिमतामसह्यम्।

'रामात्' इति प्रयोगे जश्त्वं वावसाने, इति ब्रुवाणस्य बाधित्वेति शेषं व्याचक्षाणानामपि विचक्षणानां हलन्ते 'मधुलिट्' पदसाधने जश्त्वचर्त्वे इत्युक्तिगतेः कः पन्थाः ? यत्तु 'जश् तु अचर्त्वे' इत्येवं छित्त्वा चर्त्वाभावपक्षे जश् इत्यर्थेन दोषं परिमार्जयन्ति तन्न ग्रन्थकृद्हृदयम् इत्यादिविषयभूयस्त्वभियैव विमर्शकृद्भिरुपे-

क्षितमाभाति । एवमेवान्यत्र बहुषु स्थलेषु नवनवा समालोचना विमर्शकृतां गभीरां मतिमुद्भासयतितराम् । भाषाऽपि प्रयुक्ताऽस्मिन् सन्दर्भेऽतीव मनोहरा ललित-ललितैः पदविन्यासैरलङ्कृता प्रौढा श्लाघनीया नितरां प्राञ्जला सुतरां रञ्जयति मनांसि रसिकानाम् । ग्रन्थेऽस्मिन् सन्निवेशितानां विषयाणां परिशीलनेन शास्त्रिवर्याणां वैदिकधुरन्धरत्वं, प्रौढदार्शनिकत्वं, प्रखरतार्किकत्वं सकलसंस्कृत-वाङ्मयपारगामित्वञ्च सुतरां प्रस्फुटीभवति--एषां विषये सूक्तिरियं नितरां सञ्जाघटीति--

**"सरस्वती यद्वदनारविन्दे आभाति वीणामिव वादयन्तीति"**ति ।

आयुर्वेदेऽपि निष्णाता अमी महाभागा मुम्बापुर्याम् नेशनलमेडिकलनामनि महाविद्यालये प्रधानाचार्यपदम् चिकित्साकार्येऽपि महता साफल्येन तत्रत्यवैद्य-सभायाः प्रधानमन्त्रिपदं चिरायाऽलङ्कृतवन्तो मुम्बईवैद्यमण्डले परां प्रतिष्ठां बहुलं द्रविणञ्चोपार्जयामासुः ।

स्ववैदुष्यगुणगरिम्णैवामी महोदया वृन्दावनस्थ-गुरुकुलविश्वविद्यालयस्य चिराय कुलपतिपदमलमकार्षुः । स्वविद्याद्युतिवैभवेन वेदपारदर्शिन इमे वेदभाष्य-प्रणयनोद्देश्येन संस्थापितस्य वेदसंस्थानस्य अध्यक्षपदमुपलम्भिताः । एषा-मध्यक्षतायां महान्तो विद्वांसः सम्पादकमण्डलमलं मण्डयमाना आसन् ।

**एभिर्विरचिता ग्रन्थाः :--**

यजुर्वेदभाष्यम्, ऋग्वेदादिभाष्यभूमिकाप्रकाशः, वेदतत्त्वालोचनम्, संस्कृत-साहित्यविमर्शः, स्वराज्यविजयं महाकाव्यञ्च मुद्राप्यमाणं वर्तते ।

इमे च भूयसीनामपि भाषाणाम् उर्दू-फारसी-गुजराती-मरहठीप्रभृतीनां विद्वांसोऽपि सन्तः संस्कृतायाम् आङ्गलभाषायां परां प्रौढिमाप्ता आप्ताः कैर्नानु-मन्यन्ते । सम्प्रति चामी उत्तरप्रदेशस्यालङ्कारभूतेऽतिरमणीये मयराष्ट्रनगरे आनन्दपुर्य्यामात्मीयेन ब्राह्मतेजसा देदीप्यमाना विराजन्ते विद्वद्वृन्दैरभिवन्द्य-मानाः संस्कृसाहित्यसमृद्धिमातन्वानाः ।

महानुभावानां भव्याकृतिः विशिष्टा सदाचारपद्धतिः, वचोमाधुर्यगतिः, अभिनवसंस्कृतगीतिरतिश्च कं दर्शकं प्रेक्षकञ्च नात्मसात्करोतीति मन्ये सम्प्रति कृतशब्दब्रह्मसाक्षात्कारा अमी नूनं ब्रह्मर्षय एवेति सततमनुभवामि हृदा चाभि-नन्दामि चिरायुष्याय चैषां भगवन्तमुपस्तौमीति ।

--०--

# कतिपयप्रसिद्धविदुषां सम्मतयः

**महामहोपाध्याय श्रीगिरधर शर्मा चतुर्वेदः विद्यावाचस्पतिः (काशीविश्वविद्यालयः), साहित्यवाचस्पतिः (हि० सा० स०), संस्कृतान्वेषणविभागाध्यक्षः (काशी हिन्दू विश्वविद्यालय)**

आयर्वेदाचार्य-सिद्धान्तशिरोमण्याद्यनेकविरुदालङ्कृतेन कविराजश्रीद्विजेन्द्रनाथशास्त्रिमहाभागेन निबद्धः संस्कृतसाहित्यविमर्शो मया नैकेषु विषयेषु श्रुतिविषयतां नीतः। .... अत्र वैदिकलौकिकोभयविधसंस्कृतवाङमयस्यालोचनपद्धत्या सङ्ग्रहोऽस्ति। अस्यैकस्य ग्रन्थस्याध्ययनेन संस्कृतवाङमयस्यान्तरङ्गपरिचयः सिद्ध्येदिति ग्रन्थकारस्य मनीषा, सा च बहुष्वंशेषु सफलतां यातेत्यनुमीयते। हिन्दीभाषायामीदृशाः संस्कृतस्य तत्तद्विषयका निबन्धा अवलोक्यन्ते परं संस्कृतभाषायान्तु ईदृशस्य ग्रन्थस्य नव एवावतार इति मदीया बुद्धिः। ऐतिहासिकी कालनिर्णयपद्धतिर्दुरूहा असफला चेति यद्यपि ग्रन्थकृतोपेक्षिता, परं तत्तच्छास्त्राणां पौर्वापर्यदर्शने वेदानामपौरुषेयत्वानादित्वादिविवरणे चात्र बहु पराक्रान्तं पाण्डित्यपाटवेन। यावन्मया श्रुतं तत्र भारतीयपरम्परा क्वाप्युल्लङ्घिता न प्रतीता। एवंविधे सर्वसंस्कृतवाङमयपरिचायके ग्रन्थे पुराणवाङमयस्योपेक्षा तु मां दुनोतीव। संस्कृतवाङमयमन्दिरस्य सुवर्णकलशायमानं पुराणवाङमयं नोपेक्ष्यम्। आगमविषयोऽपि च संक्षेपेण परिचाययितव्य इति मदीया सम्मतिः[1]। अहमस्य ग्रन्थस्य शीघ्रं प्रकाशनं प्रचारञ्चाभिलषामि।

**काशी हिन्दू विश्वविद्यालय कार्त्तिक शुक्ल १२ बुधे २०१० विक्रम०**

*गिरिधर शर्मा चतुर्वेदः*

—०—

१. **सा च ग्रन्थप्रणेतृभिः सहर्षं स्वीकृता। पुराणागमयोः परिचयोऽपि समासेन सङ्कलितः।**

**अखितन्त्रनदीष्णः श्रीमहादेवपाण्डेयः संस्कृतविभागाध्यक्ष काशीहिन्दूविश्वविद्यालयः**

श्रीविद्वद्वरद्विजेन्द्रनाथशास्त्रिप्रणीतः संस्कृतसाहित्यविमर्शो मया यत्रतत्र तैरेव प्रणेतृप्रणयिभिः श्रावितो हृदयेऽवतारितः। नूनं सन्दर्भोऽयं विषयविवेचनचतुरस्रो, भारतीयप्राक्तनपारम्पर्यमवगाहमानो, भाषासौष्ठवसम्भृतः, सिद्धान्तपदवीमक्षुण्णां संरक्षन्, प्रामाण्यकोटिमाटीकमानस्तर्ककर्कशपरीक्षणक्षमो वर्त्तते। मन्ये पवित्रस्यास्य सन्दर्भसौरभस्य परिशीलनेन सहृदया मनीषिणोऽन्तरमान्तमानन्दमुद्वहेयुः, अन्तेवसन्तः प्रगाढां प्राचीप्रवाहितां व्युत्पत्तिसम्पदं दध्युः, अग्रेसराश्च समाजस्य प्रकामं प्रसरं वितरेयुरिति प्रमोदभरनिर्भरेण मनसा प्रबन्धस्य प्रस्तुतस्य प्रसारं यशोभिवर्धनञ्च वाढं कामयते —

*महादेवपाण्डेयः*

--o--

**कविकुलगुरुः, साहित्याचार्यः, साहित्यवाचस्पतिः, महामहोपाध्यायः श्री पं० नारायण शास्त्री खिस्ते, भूतपूर्व प्रिन्सिपल गवर्नमेंण्ट संस्कृत कॉलेज बनारस।**

श्रीमद्भिरायुर्वेदाचार्यसिद्धान्तशिरोमण्याद्यनेकोपाधिसमलङ्कृतैरपि सरलहृदयैर्निरुपाधिभिरिव सर्वशास्त्रावगाहिधिषणैर्धिषणोपमैः कविराजैः श्री पं० द्विजेन्द्रनाथशास्त्रिमहाभागैर्निबद्धः संस्कृतसाहित्यविमर्शो मया बहुषु स्थलेषु दृष्टः। ग्रन्थोऽयं नाद्यावधि मुद्रितः। अहं चास्य निबन्धस्याचिरात्खण्डशो मुद्रणं कामये। अत्र वैदिकलौकिकोभयविधसंस्कृतवाङ्मयस्यालोचनं सरलया पद्धत्या सहृदयहृदयग्राहिण्या संस्कृतवाण्या कृतमस्ति। अस्यैकस्यैव ग्रन्थस्याध्ययनेन संस्कृतविदुषां छात्राणाञ्च संस्कृतवाङ्मयान्तरङ्गपरिचयो वाढं भवेदिति विश्वसिमि।

आंग्लभाषायां हिन्दीभाषायां चेदृशाः केचन ग्रन्थाः प्रकाशिताः सन्ति, संस्कृतभाषायां चायमेकल एव तथाविधोऽपिताननतिशेते इति महत्कौतुकास्पदम्।

आगमपुराणेतिहास-पाली-प्राकृतादि वाङ्मयस्यापि अत्र समावेशो ग्रन्थकर्त्रा करिष्यत इत्यस्ति मे विश्वासः। अहमस्य ग्रन्थस्य सर्वाङ्गीणां सफलतां कामये।

किं बहुनाः—एष निबन्धः संस्कृतसाहित्ये विमर्शरूपतां बिभ्रत्।
आसूर्यचन्द्रतारकमस्तु मनस्तोषको विदुषाम्॥
श्रीमद्द्विजेन्द्रनाथस्य शास्त्रिणोऽपि यशःशशी।
पार्वणोऽपि कलापूर्णो निष्कलङ्को विराजताम्॥

**दूधविनायक, बनारस** *नारायण शास्त्री खिस्ते*

२-२-१९५४

**संस्कृतसाहित्यधुरन्धराणां कविवराणां श्रीमद्विद्वद्वरश्रीजयन्तकृष्ण हरिकृष्ण दवे एम० ए०, एडवोकेट पदालङ्कृतानां, संस्कृत-विश्व-परिषदः मानार्ह-मन्त्रिमहोदयानां मुम्बापुरीनिवासिनाम्--**

श्रीमत्सु कविराजपण्डितप्रकाण्डद्विजेन्द्रनाथशास्त्रिमहोदयेषु सस्नेहं सादरं निवेद्यते यद्---

भवतां 'संस्कृतसाहित्यविमर्शा'ख्यो ग्रन्थः मया कतिपयेषु प्रकरणेषु अंशतः पठितः। पठनेनात्यन्तं प्रमुदितोस्मि । ग्रन्थेऽस्मिन् भवद्भिः कालिदासादिकवि-प्रभृतिषु विवेचनार्थं काचिन्नवीनैव प्रणाली स्वीकृताऽस्ति यया रसास्वादसौकर्यं वर्धत इति मन्ये। भवद्भिः संस्कृतसाहित्ये बहवो विषया निरूपिता ग्रन्थश्चायं विदुषां छात्राणां रसिकानां च गीर्वाणवाङ्मयपरिचयार्थं सुतरां सोपकारो हितावहो ज्ञानवृद्धिकरश्च भवितेति न मे लेशतोऽपि सन्देहः । संस्कृतसाहित्यस्येतिहासः संस्कृतभाषायां च संकलित इति पयसि शर्करापात एव।

**विदुषां वशंवदः**

*जयन्त कृष्ण हरिकृष्ण दवे*

--०--

**पदवाक्यप्रमाणपारावारीणानां व्याकरणाचार्यश्रीसभापतिउपाध्याय एम० एल० सी० महोदयानां परमविदुषां वाराणसीयविरला-संस्कृत-कालेज-प्रिन्सिपल-महाभागानाम्--**

श्रीमता सिद्धान्तशिरोमणिना आयुर्वेदाचार्येण कविराजेन पं० द्विजेन्द्रनाथ-शास्त्रिणा प्रणीतः संस्कृतसाहित्यविमर्शो मया दृष्टिपथमवतारितः। अत्र लौकिक-वैदिकसाहित्ययोः प्राक्तनस्वरूपपर्यालोचनपुरस्सरं वेदानामपौरुषेयत्वं, वर्णाश्रम-धर्म्माणां वर्णनं, आधुनिकाश्चर्यकारिविज्ञानस्यापि तत्र-तत्र संस्कृतसाहित्ये उल्लेखप्रदर्शनं, ये साम्प्रतमपेक्ष्यन्ते ते ते बहवो विषया वैदुष्यपाटवेन पर्यालोच्या-स्मिन् संस्कृतसाहित्यविमर्शनामधेये ग्रन्थे ग्रन्थप्रणेतृभिर्निवेशिताः सन्ति। एतद्-ग्रन्थस्य स्थालीपुलाकन्यायेन पर्यालोचनेनावगम्यते यदेतस्य समस्तसंस्कृतवाङ्मय-परिचायकस्य सुललितसंस्कृतभाषया निबद्धस्य विशदसन्दर्भस्य प्रामाण्यं, बहूप-कारित्वं, विदुषामन्तेवासिनाञ्च ग्राह्यत्वं सुतरां भवेदिति सम्भावयते --

१।११।५३ *सभापतिशर्मोपाध्यायः*

--:०:--

**डा० वासुदेवशरण अग्रवाल, एम० ए०, पी०–एच० डी०, डी० लि० प्रोफ़ेसर ऑफ कालेज आफ़ इण्डोलोजी हि० विश्वविद्यालय काशी ।**

श्री पं० द्विजेन्द्रनाथ जी शास्त्री सिद्धान्तशिरोमणि द्वारा अति परिश्रम-पूर्वक लिखा गया 'संस्कृतसाहित्यविमर्श' नामक ग्रन्थ देखने को मिला। इसमें वैदिक और लौकिक दोनों साहित्यों के प्रमुख ग्रन्थों का विस्तृत अन्तरंग परिचय ललित संस्कृत शैली में दिया गया है। पंडित जी संस्कृत साहित्य के मार्मिक विद्वान् हैं, संस्कृत भाषा पर उनका पूर्ण अधिकार है और वे स्वयं संस्कृत के श्रेष्ठ कवि हैं। अपनी बहुमुखी प्रतिभा से उन्होंने भारत के प्राचीनतम महान् साहित्य का जो उदात्त वर्णन किया है, मैं उसका स्वागत करता हूँ और आशा करता हूँ कि संस्कृत के प्रेमी विद्वानों में इसका समुचित आदर होगा। उनकी यह कृति शीघ्र प्रकाश में आने योग्य है।

१५।११।१९५३ वासुदेवशरण अग्रवाल

---o---

**श्री सूर्यकान्त शास्त्री एम० एल० सी० मयूरभंज प्रोफेसर आफ संस्कृत तथा अध्यक्ष संस्कृत तथा पाली विभाग, हिन्दू विश्वविद्यालय काशी।**

मैंने श्री पंडित द्विजेन्द्रनाथ जी शास्त्री का बनाया संस्कृतसाहित्यविमर्श पढ़ा। साहित्यिक दृष्टि से विमर्श उत्तम सम्पन्न हुआ है और गवेषणा की दृष्टि से भी पंडित जी ने इसमें नवीनता पैदा की है। संस्कृत में इस प्रकार की रचनाओं का प्रायः अभाव है। पंडित जी ने संस्कृत में विमर्श की रचना करके इस त्रुटि को पूरा करने का सफल प्रयत्न किया है। मैं विमर्श का स्वागत करता हूँ और पंडित जी को इसकी रचना पर बधाई देता हूँ।

१७।११।५३ सूर्यकान्त

---o---

वटोदरीय (बड़ौदा) आर्यकन्यामहाविद्यालयस्य पूर्वाचार्यैः कविरत्न-महाभागैः श्रीमन्मेधाव्रतमुनिमहोदयैः कृतम् ।

# ❀ शुभाशंसनम् ❀

( १ )

मुररिपुशिशुलीलाभूमिवृन्दावनान्ते
भुवनविदितकीर्त्तेर्विश्वविद्यालयस्य ।
कुलपतिपदभाग्भिः सर्वतन्त्रस्वतन्त्रै-
र्निखिलनिगमनिष्णैः पण्डितेन्द्रैर्द्विजेन्द्रैः ॥

( २ )

अमरगिरि वरेण्यं वैदिकं लौकिकञ्च
सुकविमुनिप्रणीतं मञ्जुलं वाङ्मयं यत् ।
जलधिमिव गभीरं प्रज्ञयाऽऽलोड्य तस्मान्-
मणिरिव बहुमूल्यो ग्रन्थराडुद्धृतोऽयम् ॥

( ३ )

श्रुतिसलिलपवित्रप्रातिभज्योतिरीड्यः
सहृदयहृदयैश्चानन्दसंवेद्यसारः ।
सरलललितवाचा लोककल्याणकामै-
र्व्यरचि मुदभिवर्षः कोऽप्ययं वाग्विमर्शः ॥

( ४ )

विबुधजनमिलिन्दान् नन्दयन्तसारभूतै-
रुचिररससमृद्धैः सत्परिच्छेदपुष्पैः ।
विविधविषयवर्णैः ग्रन्थमन्दारवृक्षो,
विलसति भुवि चित्रज्ञानसौगन्ध्यशाली ॥

( ५ )

श्रीमद्द्विजेन्द्रस्य कलानिधेस्ते विद्वन्मनोव्योमनि निर्मलेऽलम् ।
साहित्यसंदर्भविमर्शकीर्त्तिर्विराजतां सुन्दरचन्द्रिकेव ॥

—मेधाव्रतः

---

श्रीमन्तो मेधाव्रतमुनिमहाभागा इमे काव्यकलानिधयः बालकविपदालङ्कृता दाक्षिणात्याः साहित्यधुरन्धरा नासिकमण्डले येवलापत्तनान्ते दिव्याश्रमे विराजन्ते । एभिः गद्यपद्यमयानि बहूनि काव्यानि विरचितानि । तेषु प्रसिद्धतमानि—कुमुदिनी-चन्द्रो गद्यमयः, दयानन्ददिग्विजयो महाकाव्यं, प्रकृतिसौन्दर्यं नाम नाटकञ्च ।

**लक्ष्मणपुर (लखनऊ) विश्वविद्यालयस्य संस्कृतविभागाध्यक्षाणां वाङ्मय-दलावेक्षकाणां (डीन आफ फेकल्टी ऑफ आर्ट) श्रीसुब्रह्मण्य अय्यर महाभागानां**

**शुभसम्मतिः**

दृष्टो मया आयुर्वेदाचार्य-सिद्धान्तशिरोमणि-पण्डितद्विजेन्द्रनाथशास्त्रि-महाभागैर्विरचितः संस्कृतसाहित्यविमर्शनामा ग्रन्थः। ग्रन्थनामघटकः साहित्य-शब्दो नात्र संकुचितार्थः। निखिलस्य संस्कृतवाङ्मयस्य विस्तरतो वा संक्षेपतो वात्र वर्णनं कृतं वर्तते। आदौ तावद् वैदिकवाङ्मयवर्णनं कृतमिति स्वाभाविक-मेतत्। वेदेषु समुपलभ्यमानाः पदार्थाः सोदाहरणमुपवर्णिताः। तदनन्तरं दर्शन-प्रकरणे दर्शनसाहित्यस्य निरूपणं कृतम्। एतदंशपरिशीलनेनाऽऽस्तिकानां नास्ति-कानां च दर्शनानां तत्संबद्धानां मुख्यानामाचार्याणां तत्कृतीनाञ्च बोधो भवति। तत्तद्दर्शनानां मुख्याः सिद्धान्ताः के इत्यपि ग्रन्थाध्ययनेनावगम्यते। तदनु पुराणागम-साहित्योपवर्णनेन सह ग्रन्थस्य पूर्वार्द्धभागः समाप्तिं गतः। उत्तरार्द्धे लौकिकसाहित्य-वर्णनपरे आदिकवेर्वाल्मीकेरारभ्य प्रायेण सर्वेषामपि मुख्यानां कवीनां कृतयः सविवेकमुपवर्णिताः।

एतादृशो ग्रन्थो न केवलं विद्यार्थिनां परं तु प्रौढानां विदुषामप्युपयोगी भविष्यतीत्यत्र नास्ति कोऽपि संदेहः। ग्रन्थकर्त्रा तत्र-तत्र तानि-तानि मतानि प्रकटि-तानि विद्यन्ते। तेषु का[illegible]सर्वसम्मतानि न भवेयुः। नानेन ग्रन्थस्यास्य सौष्ठवे काचिद्धानिर्भवति। सर्वत्र ग्रन्थकर्त्रा महता विवेकेन विषयाः प्रतिपादिताः। आशासे यद ग्रन्थोऽयं विद्वद्भिः सादरं स्वी[illegible]रिष्यते सोत्साहं च पठिष्यत इति।

**को० [illegible] सुब्रह्मण्य अय्यरः**

लक्ष्मणपुरविश्वविद्यालये संस्कृतविभागाध्यक्षः वाङ्मयदलावेक्षकश्च

## मुम्बापुरीस्थभारतीयविद्याभवनस्य प्रिन्सिपलमहोदयानां श्रीपण्डितराज-आचार्य टी० ए० वेङ्कटेश्वरदीक्षितारमहाभागानाम्

### सम्मतिः

श्रीमद्भिः पंडितप्रकांडैः पंडितद्विजेन्द्रनाथशास्त्रिमहाशयैर्विरचितः संस्कृतसाहित्यविमर्शाख्यो ग्रंथो मयाऽवालोकि। सोऽयं ग्रंथो भागद्वयात्मकः। सर्वेष्वपि शास्त्रेषु विशिष्य व्याकरणे साहित्ये च परं निष्णातैः ससंप्रदायमधिगत-विद्यैर्गुरुकुलक्लिष्टैरेतैः संपादितोऽयं ग्रंथस्सर्वदा श्लाघास्पदः। ग्रंथकर्तृणां योग्यताया आदर्शरूपमिति सुनिश्चितं प्रतीयते। संस्कृतभाषायामेतादृशो ग्रंथो नास्तीति प्रथाया अपाकरणरूपेणानेन प्रयत्नेन यत्सत्यं सर्वे संस्कृतपंडिताः संस्कृतप्रण-यिनश्चाधमर्णा अमीषाम्। वैदिक-लौकिकवाङ्मयमधिकृत्य बहवोऽपूर्वा विषया अत्रोल्लिखिताः सन्ति। एवं सर्वेषामपि दर्शनानां विमर्शनपूर्वकं कृत्स्नोऽपि प्रमेयः सुस्पष्टं प्रतिपादितोऽस्ति। तथा संस्कृतवाङ्मयविचारे बहूनां कवीनां परिचयः समालोचनपूर्वकं सुस्पष्टं प्रतिपादितोऽस्ति। अध्यापनेन वृन्दावनीय-गुरुकुल-विश्वविद्यालयस्याचार्यकेण च असंख्याकानां छात्राणां कुलपतयोऽमी एतद्ग्रन्थ-द्वारैतत्पठितॄणां भूयसां विद्यार्थिलोकानामपि सार्थकाः कुलपतयो भविष्यन्ति। बहून् सारिष्ठान् विषयान् विमर्शनपूर्वकमेकत्र समाहृतवतामेतेषां प्रयासः सर्वथा प्रशंसास्पदः। विश्वविद्यालयेषु 'एम० ए०' परीक्षायाः एव'माचार्यपरीक्षाया'श्च कृते पाठ्यग्रन्थत्वेन विनिवेशनयोग्योऽयमित्यत्र न[illegible]नागपि संशयलेशः।

तस्यास्य ग्रंथस्य भगवतोऽनुग्रहेण सर्वत्राव्याहतप्रचारो भूयादित्याशासे,

**—टी० ए० वेङ्कटेश्वर दीक्षितारः**

**विद्वद्धुरन्धराणां राजपरिषदः सदस्यानां श्री इन्द्रविद्यावाचस्पतिमहाभागानां सम्मति :—**

श्रीमत्पण्डितद्विजेन्द्रनाथशास्त्रिभिर्विरचितः संस्कृतसाहित्यविमर्शाख्यो ग्रन्थः मयाऽवलोकितः। ग्रन्थोऽयं वैदिकलौकिकोभयविधसंस्कृतवाङ्मयस्य समालोचनपूर्वकेतिहासरूपः, सरलसुललितभाषयोपनिबद्धः संस्कृतच्छात्रेभ्योऽत्यन्तं लाभकरो भविष्यतीत्यत्र सन्देहो नाऽस्ति। संस्कृतभाषायामेतादृशो ग्रन्थः अद्यावधि न मे दृष्टिपथङ्गतः। एतस्मिन् ग्रन्थे वेदविषयका, दर्शनविषयकाः, साहित्यविषयकाश्च प्रमुखा बहवो विषया महता विवेकेन विवेचिताः. ये न खल्वध्येतॄणामेव प्रत्युत पण्डितानामपि महते उपयोगाय भविष्यन्तीत्यत्र न कोऽपि सन्देहः।

एतादृशा ग्रन्था विश्वविद्यालयेषु संस्कृतवाङ्मयस्यान्तरङ्गपरिचयं सम्पादयितुं एम० ए० आचार्यादिकक्षास्थविद्यार्थिनां महते उपकाराय स्युरिति निर्विशंकम्। शास्त्रिमहाभागैरेतद् ग्रन्थनिर्माणेन संस्कृतसाहित्यस्य महती सेवा कृतेति ते संस्कृतप्रणयिनां सुतरां धन्यवादार्हाः।

**—इन्द्र विद्यावाचस्पतिः**

# प्रास्ताविकम्

महदिदं प्रमोदस्थानं, सन्तुष्यतितराञ्च नितरामस्माकं खल्वन्तरङ्गं यदद्य वयं संस्कृतसाहित्यविमर्शाख्यं ग्रन्थममुं गीर्वाणवाणीप्रणयिनां तत्रभवतां विद्वद्धौरेयानां करकमलेषु सानन्दमुपहरामः।

चिराय चेतसि समारोपितोऽयं सङ्कल्पकल्पद्रुरद्य भगवदनुकम्पया फलेग्रहितामभजत। क्रैस्त १९४७ तमेऽब्दे यदाहं वृन्दावन-गुरुकुलविश्वविद्यालयस्य कुलपतिपदाधिष्ठित आसम्, उच्चश्रेणीस्थैरन्तेवासिभिः पृष्टम्——यत् संस्कृतभाषायां संस्कृतसाहित्यस्येतिवृत्तं नैवाऽस्ति किम्? न खल्विदानींयावन्मे दृष्टिपथङ्गतमित्युत्तरं ददानस्य मे हृदि कोप्युदगान् महीयान् व्याकोपः। चिरकालाऽध्ययनाध्यापनप्रसङ्गे मैक्समूलर-विलसन-विन्टरनीज़-कीथ-मेक्डानल-प्रभृतीनां पाश्चात्यविदुषामाङ्गलभाषालङ्कृतानां संस्कृतसाहित्येतिवृत्तग्रन्थानां परिशीलनं, संस्कृतभाषायाञ्च तादृशग्रन्थानां सर्वथाऽभावः, हृदयेशयशङ्कुरिव सुभृशं व्याकुलमकार्षीत् मदीयम्मनःपटलम्। तथापि स्थितिपारवश्यमनुसन्दधतो मम मौनावलम्बनमन्तरेण नोपयातं यद्यपि किमपि शरणान्तरं दृष्टिपथम्, तथाऽपि तत्काल एव कापि समुन्मिमेष मम हृदयपटले तादृशग्रन्थरचनाप्रवृत्तिकलिका। वस्तुतः देववाण्यामेतद्विषयकग्रन्थानामभावं प्रति न केवलं भारतीयपण्डितसमाजः अपितु तदानीन्तनं प्रशासनमप्यपराध्यति बहुशः। नूनमत्र ते ते पाश्चात्यपण्डिता अस्माकं हार्दिकं धन्यवादमर्हन्ति ये यथाबुद्धिबलोदयं गभीरतरमालोडच संस्कृतसाहित्यसागरं महता प्रयत्नेन तास्ताः तदितिवृत्तविषयिणीः गाथा जग्रन्थुः, याभिः स्म वयमद्य सञ्जाताः कृतिनः। यद्यपि ता यथार्हतया हृदयङ्गमास्तु न सम्पन्नाः तथापि ताभिस्तादृशग्रन्थलेखनसरणिस्त्वग्रेसरत्वेनाविष्कृत्य निदर्शनत्वेनास्मभ्यं या प्रदर्शिता, तदर्थं तेभ्यः समुदारचेतोभ्यः संस्कृतप्रणयिभ्यो हार्दिकीं कृतज्ञतां वयमावहामः।

प्रायशो वर्षाणां चतुष्टयं व्यतीयाय, क्रैस्त १९५१ तमे वर्षे सौराष्ट्रदेशे प्रभासपत्तनाख्ये पुण्यतीर्थे भगवतः सोमनाथस्य ज्योतिर्लिङ्गप्रतिष्ठापनपुण्यावसरे विश्वसंस्कृतपरिषदः संस्थापनायाः पवित्रतमे प्रसङ्गे समुन्मिमेष नो हृदि तादृशग्रन्थप्रणयनानुबन्धिनी सा कापि बलीयसी समीहा, यत्तादृशः कश्चन सन्दर्भः प्रणेतव्यः, यस्मिन् समस्तसंस्कृतवाङ्मयस्येतिवृत्तात्मकं स्वरूपं भवेत् किल प्रतिबिम्बितम्।

अथ व्रजति काले सा चेयं समीहा मया संस्कृतानुरागिणां कतिपयसुहृद्व-राणां विदुषां पुरः प्रत्युपस्थापिता। तैश्चैकपदे सा आनन्दविस्फारिताभ्यां नयनाभ्यां सहर्षमभिनन्दिताऽनुमोदिता च।

तथापि समभवमहं चिराय दोलाचलचित्तवृत्तिः। यदा किल तादृशस्य बृहद्ग्रन्थस्य मुद्रापणार्थमर्थविषयिणी सा महीयसी समस्या हिमाचलशिखेव मम पुरतः समुपस्थिता। एतच्च न तिरोहितं विदुषां यदर्थानुबन्धिनी हि खलु मुद्रापणादिव्यवस्था। तत्रापि संस्कृतग्रन्थानां तु सा किलातीव क्लिष्टा। यथा कथञ्चिन्मुद्रितेऽपि ग्रन्थे पुनस्तद्विक्रयादिव्यवस्था च क्लिष्टतरा। को वै तस्य ग्राहकत्वमङ्गीकुर्यात्? आङ्गलभाषाविदां समाजे त्वेतादृशस्य ग्रन्थस्यादर एव कुतः? संस्कृतविदस्तु पुनः कौपीनधना एवेत्यादि चिन्ताशताक्रान्तचेतसः काञ्चित् सर्वविधया सरलामजिह्माञ्च राजपद्धतिमन्विष्यतो मम व्यत्यगाद् भूयान् कालः। अन्ततः कालक्रमेण 'य एष वृणुते स तेन लभ्यः' इति न्यायमाश्रित्य निरचैषं ग्रन्थं प्रकाशयितुम्। कर्त्तव्यधिया च ग्रन्थलेखनसमारम्भः कृतः महता समारम्भेण। स चायं ग्रन्थोऽद्य भगवदनुकम्पया निष्प्रत्यूहं पूर्णतां गतो मुद्रितश्च विलसति। मन्येऽत्र प्रभवति स कालाधिनाथो भगवान् विधिरेव।

## ग्रन्थस्य प्रतिपाद्यो विषयः

स एष संस्कृतसाहित्यविमर्शाख्यो ग्रन्थः संस्कृतवाङ्मयमहोदधिमन्थनोत्थः साररूपः संस्कृतसाहित्यस्येतिहासस्वरूपो देववाण्या प्रणिबद्धो गद्यमयो मौलिकः सन्दर्भः।

अत्र हि वैदिकलौकिकोभयविधसाहित्यस्य समालोचनपुरस्सरं मूलङ्कषमालोचनं पल्लवितम्। **वैदिके** तावद् वेद-वेदाङ्ग-उपाङ्ग-ब्राह्मण-आरण्यक-उपनिषद्-दर्शन-पुराण-निगमान्तं, **लौकिके** च पुनर्भगवतो वाल्मीकिमुनिपादादारभ्य निखिलमहाकविनिकरमहर्षिव्यास-भास–कालिदास–अश्वघोष–माघ-भारवि-भट्टि-भवभूति-श्रीहर्ष–हर्षवर्धन–विशाखदत्त–सुबन्धु–दण्डि–बाणभट्ट–जयदेव-भर्तृहरि-गुणाढय-सोमदेव-विष्णुशर्मप्रभृतिपर्यन्तं समस्तसंस्कृतमहापयोनिधिं प्रभूतमुन्मथ्य सारभूतं नवनीतञ्च ततः समुद्धृत्य चारुतया ग्रन्थकलशेऽस्मिन् सम्भृतम्।

संस्कृतसाहित्यालोडनेनावगम्यते यत् प्रायशो वर्षाणां सहस्रद्वयी व्यतीयाय यदाप्रभृति शक-हूण-भारत-परिपन्थिनां वैदेशिकानामाक्रमणपारम्पर्योपप्लवः समारब्धः, असंख्यातानि देवमन्दिराणि पुस्तकालयादीनि च वह्निसात्कृतानि, ध्वस्तानि परःसहस्राणि च गृहाणि। श्रिया सह सारस्वतसम्पदपि भारतस्य एभिर्लुण्ठकैरतिमात्रमुल्लुण्ठिता। अतः तदवशेषभूतं जीर्णं शीर्णञ्च यावत्साहित्यं दिष्ट्याऽधुना उपलभ्यते तदाधारेणैव सारभूतं वस्तुतत्त्वमत्रोट्टङ्कितं स्थितिवशंवदतया।

तस्माद्रचनेयं सर्वाङ्गपूर्णेति वक्तुं तु न पार्यते । भूयान् कालः श्रमश्च अपेक्षणीयो भवति तत्सर्वाङ्गसुन्दरं विधातुं महीयांसि च साधनानि ।

## संस्कृतभाषैव विश्वभाषा-जननी

प्रायशोऽखिलभाषाणां जननीयं संस्कृतभाषैव । संस्कृतभाषात एव ग्रीक-लेटिनप्रभृतयो निखिला जगद्भाषाः प्रादुरभूवन्निति भाषातत्त्वविदामाघोषः । अस्या भाषाया एवेदमनितरसाधारणं गौरवं यद् विश्वपुस्तकालयस्य प्राचीनतमा ग्रन्था ऋग्वेदादयः संस्कृतसाहित्यमन्दिरस्यैव स्वर्णकलशायमानाः संस्कृतभाषाललामभूता विलसन्ति । अस्यामेव भाषायामाध्यात्मिकविषयानवलम्ब्य निरुपमाः सन्दर्भाः बाभान्ति । उपनिषदो दर्शनानि च आध्यात्मिकतत्त्वज्ञानस्य किमपि लोकोत्तरं सजीवचित्रं पुरस्कुर्वन्ति । संस्कृतभाषायामेव प्राचीनैराचार्यैः भौतिकविज्ञानप्रसरेऽपि विविधान् विषयानाश्रित्य लोकोपकारका बहवो ग्रन्था विरचिताः । एकतो दर्शनशास्त्रेषु जीवब्रह्मणोः प्रकृतेश्च विषयमाश्रित्य कश्चनातीव हृदयङ्गमो विचारो विहितः, अपरतश्च पुनः धर्मशास्त्र-अर्थशास्त्र-कामशास्त्र -मोक्षशास्त्र-नीतितन्त्र-राजतन्त्र-शिल्पकला-तन्त्रानुबन्धिविषयानालम्ब्य चमत्कारकारकाः सन्दर्भाः भारतीयविद्वद्भिः प्राणायिषत । सूक्ष्मात्सूक्ष्मतरं चिन्तनं कुर्वाणैरस्माकं भारतीयैराचार्यैः वात्स्यायन-कौटिल्य-प्रभृतिभिः मानवविचारधाराया उच्चैस्तरं शिखरमपि परिचुम्बितमासीदित्यत्र को वा सन्देहावसरः । इतरतश्च पुना रससिद्धैः कवीश्वरैर्भास–कालिदासप्रभृतिभिः संख्यातीतैर्ललितसाहित्य-सन्दर्भरत्नैरस्य संस्कृतसाहित्यस्य अक्षय्यो निधिः परिपूरितः । कविकुलगुरोः कालिदासस्य शाकुन्तलं मेघदूतञ्चेत्यतिभास्वरं रत्नद्वयमेव सर्वातिशायिगुण-गरिम्णा जगतीतलालङ्कारभूतत्वेन सुतरां विराजतेतराम् निखिलान् सहृदया-नाश्चर्योदन्वति विनिमज्जयत् ।

एतदप्यत्रावधेयं भवति यद् विश्वसाहित्यालङ्कारभूतं संस्कृतसाहित्यं न केवलं भारतं वर्षमेव आत्मीयत्वेनानुबध्नाति अपि त्वखिलं जगदेवेदं क्रोडीकरोति । यतः सर्वा एव भाषा यया कयाऽपि विधया संस्कृतभाषाया अधमर्णतामावहन्ति । यतः सर्वास्वेव भाषासु अद्यापि बहवः संस्कृतशब्दाः प्रयुज्यमाना दृष्टिपथमुपयान्ति । यत्र तत्र प्रकीर्णाश्च ते सुतरामुपोद्बलयन्ति संस्कृतगिरां सर्वभाषाप्रसवित्रीत्वम् ।

एतावतेदमप्यत्रावगतं भवति यदस्माकं संस्कृतभाषासम्बन्धवत् सांस्कृतिकः सम्बन्धोऽपि पुरा सार्वभौमत्वमश्नवान आसीत् । यानि च भूखननादिना सर्वत्र भारतीयसभ्यतायाः लिङ्गानि समुपलब्धानि दृश्यन्ते तेभ्योऽपि सुतरामनुमातुं शक्यते यत्पुराकाले कश्चन सांस्कृतिकोऽनुबन्धोऽपि व्यराजत भारतस्यान्यदेशैः

सह । न केवलमेशियाभूभागैरेवापितु यूरोपामेरिकादिभिर्महाद्वीपैः सहापि स आसीत् पम्फुल्यमान इति बहवः कालकोविदा अपि मुक्तकण्ठेन सम्यक् प्राचीकशन् । सोऽयं सांस्कृतिकः सम्बन्धोऽस्माकमधन्यतया अन्तरालकाले विच्छेदङ्गतोऽपि अस्माभिः पूर्णस्वतन्त्रैर्भारतीयैरधुना पुनरुज्जीवनीयो विकासनीयश्चेत्यस्माकं हार्दिकी स्पृहा ।

प्रचलितासु विश्वभाषासु संस्कृतभाषैव प्राचीनतमेति सर्वसम्मतः पक्षः । भाषातत्त्वविदां दृशाऽपि भाषा द्वेधाऽनुश्रूयते--संस्कृता प्राकृता चेति । संस्कृतभाषेयं भारती-देववाणी-विद्येति पदैरप्याख्यायते । संस्कृतभाषात एव प्राकृतभाषाः सेमेटिकभाषाश्च लब्धप्रसवाः । पौरस्त्यपाश्चात्यप्रदेशेषु प्रचुरप्रचाराः ग्रीक-लैटिन-टयूटानिक-फ्रेञ्च-जर्मन-इंग्लिशादिसमस्ता भाषापदवीमारूढा लोकगिरः संस्कृतमहासरित्सकाशादेव निष्क्रान्ता इति भाषातत्त्वविदोऽप्यभिमन्यन्ते । 'सम्' पूर्वात्कृधातोर्निष्पन्नोऽयं संस्कृतशब्दः, भाषाया अस्याः प्रकृति-प्रत्ययादि-संस्करणानुगृहीतत्वं स्फुटं सूचयति । सर्वतः प्राक् संस्कृतशब्दस्य प्रयोगः वाल्मीकीय-रामायणे सुन्दरकाण्डे कृतोऽवलोक्यते । तत्र भगवत्या सीतया सह सम्भाषणे का खलु भाषा व्यवहर्त्तव्येति विचारणायामत्रभवान् हनूमान् प्राह :--

'यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् ।
रावणं मन्यमाना मां सीता भीता भविष्यति ।। [सु० ५।१८]

एतेन ध्वनितं भवति, यत्तदानीं संस्कृतभाषा व्यवह्रियमाणा भाषा आसीत् इति ।

## संस्कृतभाषाया व्यावहारिकत्वम्

संस्कृतभाषा व्यावहारिकी भाषा आसीन्न वा ? इति प्रश्नावतारे किञ्चिद्विविच्यते । संस्कृतभाषा न कदापि व्यावहारिकी भाषा आसीदिति वचनं तु भ्रान्तिविजृम्भणमात्रम् । यतः 'दूराद्धूते च', 'प्रत्यभिवादे शूद्रे' [पाणि० अष्टा० ८।२।८३-८४] इति सूत्राभ्यां प्लुतत्वानुशासनं सुतरां संस्कृतभाषायाः व्यावहारिकत्वं प्रमाणयति । निरुक्तकारेण तत्रभवता यास्केनाऽपि 'भाषिकेभ्यो धातुभ्यो नैगमा कृतो भाष्यन्ते' [नि० २।२] । 'शवतिर्गतिकर्मा कम्बोजेषु भाष्यते,' विकारमस्यार्येषु भाषन्ते शव इति । 'दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येषु', [महाभाष्ये] एवमादिवाचोयुक्तिभिः संस्कृतभाषाया भाषणव्यवहारगतत्वम् अभ्युप-पन्नं भवति । भाषणादिव्यवहारवैधुर्याङ्गीकारे तु अस्याः प्राच्योदीच्यदेशभेदात् तत्तद्भाषोपनतभेदस्य न कथमपि सामञ्जस्यमभ्युपपद्येत । अतः भाषेयं पुरा आसीदेव भाषणादिव्यवहारेषु प्रयुज्यमानेति तर्कानुमोदितं वचः ।

## तेईस

# किन्नाम संस्कृतभाषा मृतभाषा ?

संस्कृतभाषाया मृतभाषात्वमधिकृत्य पाश्चात्यविद्वत्समाज इव भारतीया अपि केचन विद्वांसः पाश्चात्यानां पदानुकारिणः संस्कृतवाण्या मृतभाषात्वे विश्वसन्ति । व्यवतिष्ठन्ते च ते यद् विगतद्विसहस्रवर्षाद् भाषेयं मृतपदवीमधिष्ठिता । यदा भगवता बुद्धदेवेन क्रैस्तशताब्द्याः ५०० वर्षप्राग्भवेन समादिष्टं यत्तदीया आदेशा उपदेशाश्च प्राकृतभाषायामेव सर्वसाधारणावबोधविषयीभूतायां प्रचारणीयाः, न खलु संस्कृतभाषायाम् । तदनुरोधन सम्राजाऽशोकदेवेन ख्रैस्त तृतीयशताब्द्याः प्राग्भवेन ते ते उपदेशाः प्रस्तरपटलेषु, ताम्रलेखेषु, कीर्तिस्तम्भेषु च विविधप्राकृतभाषास्वेव समुत्कीर्त्तिताः विशिष्य तु मागधीभाषायाम् । इमाः प्राकृतगिरोऽपि बहुभेदभिन्नाः संस्कृतवाणीतो नितरां व्यतिरिक्ताश्च । एतावतैतदनुमातुं न दुष्करं, यत् क्रीस्तीयतृतीयशताब्द्याः प्राक् संस्कृतभाषाया व्यावहारिकत्वं सर्वथा पर्यवसन्नमभूत् । न केवलमेतावदेव, अपितु बुद्धकालेऽपि कतिपयैर्ब्राह्मणकुलोद्भवैस्तदीयशिष्यैः संस्कृतानुरागिभिः, प्रस्तावितं यत्सर्वेऽपि बुद्धोपदेशाः संस्कृतभाषया प्रणिबन्धनीयाः । परं भगवता बुद्धेन तत्प्रतिषिद्धम् । सर्वे जना बौद्धसिद्धान्तान् स्वस्वभाषायामेव समाकलयेयुरिति भगवतो बुद्धदेवस्य मनीषा आसीत् । इत्यनेन हेतुना, संस्कृतभाषा व्यवहारपदात् प्रच्युता सती स्वयमेवावसतिमँवापेति । परमत्र वयमभिदध्महे, यद् दुर्जनतोषन्यायेन क्षणं स्वीक्रियेताऽपि उक्ता वाचोयुक्तिः, तथापि नैषा अमृतवाणी तावता मृतेति पदव्यपदेश्या भवितुमर्हति । कुतः ? उच्यते,. यतः संस्कृतस्य मृतभाषात्ववादिनस्तावदनुयोक्तव्याः यत्तैर्मृतभाषापदेन किमभिप्रेयते । मृतानां भाषा मृतभाषा, मृता भाषा मृतभाषेति वा ? पूर्वः कल्पश्चेन्न, न वयं मृता येषामियं भाषा ? द्वितीयश्चेत् नतराम् यतो नेयं भाषा मृता अद्यापि यत्रतत्र सर्वत्र विद्वत्समाजे भाषणलेखनादिव्यवहारविषयीभूतत्वात् । इदानीमपि सा कापि चेतश्चमत्कारिणी परम्परा जागर्त्ति । आश्चर्यविषयोऽयं नूनं विस्मयावहो यत्सत्स्वपि नैकेषु वैदेशिकानामाक्रमणेषु, संवृत्तेषु च बहुविधेषु राजनैतिकपरिवर्त्तनेषु, प्रवर्त्तितेषु धार्मिकान्दोलनेषु, प्रगुणितरयेषु च कुटिलक्रान्तिचक्रेषु अपि, यदि काचिद्भाषाऽस्ति तादृशी याऽस्मिन् विशालेऽपि भारतेऽद्यापि भाषणादिव्यवहारपदवीमधिष्ठिता तर्हि सा केवलमियं गीर्वाणवाणी एव । या आसेतुहिमाचलं मातृभाषापदवीमारूढा सुतरां सञ्जागर्त्तितराम् । यद्यपि बौद्धसैद्धान्तिका ग्रन्थाः तासु तासु प्राकृतभाषासु प्रकाशिताः तथापि सार्वजनिकताम्रलेखाः, तदानीन्तनशासनीयलेखप्रसरश्च संस्कृतभाषाविभूषिता एवाद्यापि विलसन्ति इति सर्वविदितम् ।

कालिदासीयादिनाट्यसाहित्येऽपि स्त्रीकिङ्करादिभाषितं विहाय, अन्यदखिलं संवादजातं संस्कृतगिरैव सम्पन्नं राजते। श्री विद्वद्वरमोक्षमूलरसम्मत्यानुगुण्येन[१] सत्यपि शताब्दीपर्यन्तं लब्धप्रतिष्ठे आङ्गलसाम्राज्ये, आङ्गलभाषाध्ययनाध्यापने लब्धबहुतरप्रचारे, आङ्गलशासनचक्रानुकम्पिते चाङ्गलवाणीविदां समाजेऽपि संस्कृतभाषैव अस्य देशस्य लब्धसर्वाऽधिकप्रचारा सर्वत्र भारतेऽवबुध्यमाना आभाष्यमाणा च यदि काचिद्भाषाऽस्ति तर्हि सा संस्कृतभाषैव। इदानीमपि भारतीयविद्वन्मण्डलं पत्रव्यवहारादिकं संस्कृतभाषयैव प्रतनोति। धर्मविषयकाः सन्दिग्धा विवादास्पदीभूता च प्रश्ना अद्यापि संस्कृतगिरा गुम्फितैर्व्यवस्थापत्रैर्निर्णीयन्ते बुधाग्रगण्यैः। बहूनि संस्कृतसमाचारपत्राणि च संस्कृतवाण्यलङ्कृतानि प्रकाश्यन्तेऽधुनापि-मञ्जुभाषिणी-शारदा-सहृदया-सुप्रभातं-संस्कृतं-संस्कृतरत्नाकरः-श्रीः-उषा-पण्डितः-विद्योदयः-संस्कृतभवितव्यमादीनि विद्वद्गोष्ठीप्रमुखपत्राणि संस्कृतभाषायाः सजीवकत्वं प्रसाधयितुं मुद्रियमाणानि विराजन्ते किल। अद्यापि अमुद्रितग्रन्थानां, केवलं पाण्डुलिपिबद्धानां संख्या लक्षपरिमितां संख्यामतिक्रमते मुद्रियमाणाश्च सहस्रशो ग्रन्थमालारूपेण संस्कृतसिरीजइत्याख्या काशीतः, काव्यमालाख्या मुम्बापुरीतः सुतरां सम्प्रकाश्यन्ते। परःसहस्राश्च विद्वांसोऽद्यापि संस्कृतभाषयैव व्यवहरन्ति भाषणलेखनादिकर्मणि इति विदितमेव नाऽत्र काचिदत्युक्तिरिति।

अतः अखिलासु परिष्कृतभाषासु देववाणी-भारती-समाह्वयं संस्कृतभाषा सर्वतः प्राचीना अपि अद्यापि जीवति न मृतेति कल्प एवानवद्य इति।

भाषोत्कर्षदृशा द्वे एव भाषे एवञ्जातीयके ययोः प्रयोक्तृभिः संस्कृतेः सभ्यतायाश्च निर्माणं कृतम्। ते च भाषे आर्यभाषा, सेमेटिकभाषा चेति। आर्यभाषा चेयं, पुनर्द्वेधा विभज्यते पश्चिमी-पूर्वीति शाखाद्वयभेदेनेति। योरोपदेशस्य सर्वा एव भाषाः प्राचीनाः। अधुनातन्यश्च, ग्रीक-लेटिन-टयूटानिक-फ्रेञ्च-जर्मन-इङ्गलिश-प्रभृतयः सर्वा अमी भाषा आर्यभाषास्वेवान्तर्भवन्ति। वस्तुतस्तु ता इमाः सर्वाः आर्यभाषातः एव प्रादुरभूवन् इति भाषातत्त्वविद आचक्षते। पूर्वीशाखानुवन्धिन्यौ च--ईरानी-भारतीयेति द्वे भाषे। ईरानीभाषेयं जिन्द भाषेति नाम्नापि व्यवह्रियते। भारतीयशाखा च संस्कृतपदेन व्यपदिश्यते। आर्यभाषासु संस्कृतभाषैव प्रधानपदं जुषते। सम्प्रति लब्धप्रचारा निखिला अपि भारतीयभाषाः, द्राविड़ीभाषावर्जं, संस्कृतत एव लब्धप्रसवाः इति विमर्शका आकलयन्ति। प्रकृति-

१. 'Even at the present moment, after a century of English rule and English teaching, I believe that Sanskrit is more widely understood in India than Latin was in Europe at the time of Dante.' (India, What Can it Teach us ?)

प्रत्ययादिसंस्करणैः संस्कृतत्वादियं संस्कृतभाषेत्युच्यते । तद्भिन्नाश्च प्राकृतभाषेति पदेन परिभाष्यन्ते। वस्तुतः संस्कृतत एव प्रभ्रश्यापभ्रश्य वा गृहीतजन्मपरिग्रहत्वात्ताः प्राकृताः समाख्यायन्ते । संस्कृतं हि प्रकृतिस्तत आगतं प्राकृतमिति तद्व्युत्पत्तेः ।

भाष्यमाणत्वादियं भाषेति पदेन परिभाष्यते भाषणादिव्यवहारविधुरा तु सा कथं भाषापदमलङ्कुर्यादिति प्रश्नोऽपि खलु दुरुत्तर एवेति ।

अथैतदपि विचारणीयं भवति यदि नाम संस्कृतभाषेयं भाषणलेखनादिषु व्यवहृता नाभविष्यत् तर्हि संस्कृतसाहित्ये भाषणादिचर्चाऽपि क्वचिन्नोपालप्स्यत। लभ्यते च सा बहुत्र । यथा :--भगवता शङ्कराचार्येण मण्डनमिश्रधाम्नो जिज्ञासाविषयकः प्रश्नः कृतः तदा तदुत्तरं निम्नाऽङ्कितेन पद्येन दत्तम्--

स्वतः प्रमाणं परतः प्रमाणं कीराङ्गना यत्र गिरं गिरन्ति ।
द्वारस्थनीडान्तरसन्निरुद्धाः जानीहि तन्मण्डनमिश्रधाम ॥

अपि च : 'न वदेद् यावनीं भाषां प्राणैः कण्ठगतैरपि ।' इत्यादिभिर्वचोभिः स्फुटं ध्वन्यते यद् भाषेयं पुरा किलासीदेव भाषणलेखनादिव्यवहाररसमुपभुञ्जाना । एवं स्थितेऽपि संस्कृतभाषाया मृतत्वमभिमन्यमानः कश्चिदनाकलिततत्त्वः कथमिव विदुषामादरास्पदं भवेद् इति ।

## संस्कृतसाहित्ये इतिहासवैरल्यम्

संस्कृतसाहित्ये इतिहासवैरल्यविषयकः प्रश्नोऽप्यतीव जटिलः। तत्कारणं प्रतिपादयन्तः केचन पाश्चात्यविपश्चितः व्यवतिष्ठन्ते यत्पुरा भारते इतिहासाध्ययनाध्यापनपरिपाट्येव नासीत् । न केवलं त एव, अपितु भारतीयाः अपि तानेवानुवदन्ति। इयद्यावत्ते घोषयन्ति यत्कः खल्वितिहासो नामेत्यपि ते न जानन्ति स्म । भारतस्यावनतिं प्रति चेदमप्येतदेकमन्यत्तत्कारणत्वेन पुरस्सरीकुर्वन्ति कारणान्तरेषु यतः न कोऽपि देशः प्राचीनेतिवृत्तमन्तरोन्नतिपथमारोहति इति । सेयमुक्तिस्तेषां कियद्यावत्तथ्यतां बिभर्त्ति इति किञ्चिदिह विवेचनीयम्--

यदि पुरा भारतीया इतिहासमेव न जानन्ति स्म तदा संस्कृतसाहित्ये पदे-पदे इतिहासपदप्रयोगस्य किं प्रयोजनमिति एकः प्रश्नः। दृश्यते च इतिहासशब्दोऽनेकत्र ब्राह्मणग्रन्थेषु 'इति ह आस' इति पदं पौनःपुन्येन पठ्यमानम् । छान्दोग्योपनिषदि नारदसनत्कुमारसंवादे--

"ऋग्वेदं भगवो अध्येमि यजुर्वेदं सामवेदं आथर्वणमितिहासपुराणं पञ्चमं वेदानां वेदमिति ।" भगवता यास्काचार्येणापि निरुक्ते ऐतिहासिकपक्षप्रदर्शन-

प्रसङ्गे 'इत्यैतिहासिकाः'. अत्र 'इतिहासमाचक्षते' इत्याद्याः प्रयोगाः बहुशः उदाहृताः। इतिहासज्ञानाभावे कथमितिहासपदप्रयोगः, इत्यपि विचार्यम् भवति। अपि च :—

'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरेदिति ।। [महाभारते]

इत्याद्याः प्रसिद्धाः सूक्तयश्च कथमिव सङ्गच्छेरन्, चेदितिहासाज्ञता भारतीयानामङ्गीक्रियेत इति। श्रीमता कविराजेन राजशेखरेण काश्मीरकेण 'काव्यमीमांसाया'मितिहासनामोल्लेखः किमर्थकः? "इतिहासवेदधनुर्वेदौ गान्धर्वायुर्वेदावपि चोपवेदाः" इति [काव्यमीमांसायाः द्वितीयाध्याये]।

अपि चान्यत्र काव्यमीमांसायामेव "परिक्रिया पुराकल्प इतिहासगतिर्द्विधा।" इतिहासस्य गतिद्वैविध्यं इतिहासानभिज्ञेन तेन कथङ्कारं प्रतिपादितं सम्भवेत्? अतः भारतीयाः इतिहासपठनपाठनं न विदन्ति स्म, भारते इतिहासलेखनप्रणाली नैवासीदित्यादिधारणा वैदेशिकानां नितरां विभ्रमविलसिता।

किञ्च क्रैस्तद्वादशशतकसम्भवेन काश्मीरकेण महाकविकह्लणन प्रणीता राजतरङ्गिणी क्रमबद्धेतिहासप्रणिबद्धाऽद्यापि विलसति भारतीयानामितिहासलेखनचातुरीसाक्ष्यमादधाना। नासीत्तदानीमस्मिन् पुण्यक्षेत्रे भारते वर्षे वैदेशिकानां कटाक्षपातोऽपि। किमेतावता, एतादृशा बहवोऽन्येपीतिहासग्रन्था आसन् पुरा इति समर्थितन्न भवति?

कुतूहलास्पदन्त्विदं यत्ते रामायणमहाभारतादिग्रन्थानामैतिहासिकत्वं निरस्यन्तोऽपि वेदेषु इतिहासं प्रणिभालयन्ति। यदि प्राचां भारतीयानामितिहासज्ञानमेव नासीत् तदा वेदेष्वितिहासप्रतिपत्तिः कुतः समुच्छलिता?

न च यास्काचार्येणापि 'तत्र ब्रह्मेतिहासमिश्रं ऋङमिश्रं गाथामिश्रं भवति।" इति वेदानामैतिहासिकताऽङ्गीकृता। किञ्च इषिसेण-शन्तनु-देवापि-पिजवनपुत्र-सुदास-कौशिक-विश्वामित्रप्रभृतीनां वर्णनं कथं कृतं निरुक्ते? इति वाच्यम्, इतिहासवादिनां पक्षस्यैव तत्रोद्धृतत्वात्। स्वयं कृतार्थेन स्वतन्त्रतया कृतेन तद्विभिन्नार्थेन च तत्परिहारात्। यथा ऐतिहासिकपक्षमालम्ब्य वृत्रोऽसुरविशेषः। यास्कमतानुगुण्येन च वृत्रो मेघः। एवमन्यत्रापि द्रष्टव्यम्। इतिहासपदञ्चात्र गाथापरम् आख्यानवचनं वा न त्वितिवृत्तार्थकम्। वस्तुतः अर्थवादमात्रमेव अत्रेतिहासपदार्थः। गाथामुखेन वेदतत्त्वार्थावबोधनप्रयोजनकत्वादर्थवादरूपा एव ते इतिहासाभासाः। वस्तुतः. तात्त्विकदृशा तु प्रणिभाल्यमाने स्फुटं ह्येतद् विज्ञातं भवति यद्वेदेषु अनित्येतिहासलेशोऽपि नाऽस्त्येवेति। आख्यानविशेषो हि नाम यः स एव किलेतिहासपदवीमुपलम्भितस्तत्रेति दिक्।

# संस्कृतभाषैव विश्वभाषापदवीमर्हति

तदेवञ्जातीयकैरुक्तगरिष्ठगुणगरिम्णा सुतरामेतत्प्रतिपत्तुं पार्यते यत्संस्कृत-भाषैव विश्वभाषापदमर्हतीति। विषयममुमधिकृत्य किञ्चिदिवात्र विविच्यते। विश्वस्मिन् जगति यावत्यो भाषापदार्हाः संस्कृत-प्राकृत-लेटिन-ग्रीक-इंग्लिशाद्याः भाषाः तत्रतत्र देशेषु लब्धप्रसरा दृश्यन्ते तासु श्रेष्ठत्वेन, सौष्ठवेन, परिपूर्णत्वेन, सारल्येन, माधुर्यादिना, यथार्हगुणगरिम्णा, सर्वोत्कृष्टत्वेन च या विलसतितरां सा तु खलु संस्कृतभाषैव। अन्यस्यां कस्यामपि भाषायां न तादृशं सर्वाङ्गपूर्णं व्याकरणम्, नापि तादृशः शब्दकोषः, न च तादृशी वैज्ञानिकी लिपिः वर्ण माला वा विद्यते, यादृशी संस्कृतभाषायाम्। संस्कृतभाषायां यल्लिख्यते तदेव पठ्यते न मात्रयाऽपि ततो भिद्यते। अन्यासु भाषासु तथा नास्ति। लिख्यतेऽन्यत् पठ्यते चान्यत्। तद्यथा आङ्ग्लभाषायाम् लिख्यते Know क्नो पठ्यते च नो, But बट पठ्यते, Put च पुट इति पठ्यते। किं हेतुकोऽयं भेद इति कारणं पृष्टाः प्रतिवदन्ति ते इदं स्वयमेवावगतम्भवति। एतदवगतमाहोस्वित् कदवगतमिति तु खल्वीश्वर एव वेत्ति (It is understood. God knows whether it is understood or misunderstood.) इति प्रज्ञावन्त एव विभावयन्तु। एवं शतशः शब्दाः सन्ति तादृशाः येषां लेखनमन्यादृशमुच्चारणञ्चान्यादृशमिति कीदृशोऽयं विभ्रमविलासः।

किञ्च--भाषोच्चारणौपयिका यावन्तः कण्ठताल्वादिस्थानविशेषसमुद्भूता ध्वनिविशेषा न तावन्तः सर्वे संस्कृतं विहाय अन्यासु भाषासु सम्भवन्ति। यथा-- आङ्ग्लभाषायां तकारो नास्ति। फ्रेंचभाषायां टकारडकारौ न स्तः। आङ्ग्ललिप्यां पुनः चकारः, धकारः, ठकारः, छकारः, फकारः, खकारः, थकारश्च न स्वतन्त्रसत्तां लभन्ते संस्कृतभाषायां तु पुनः स्वतन्त्रसत्ताकास्ते। किं बहुना वर्गाणां चतुर्थस्याक्षरस्य सर्वथा अभावः एव तासु तासु आङ्ग्ललिपिपिनद्धासु भाषासु दृश्यते। ईदृशं वर्णवैकल्यं नाम किन्नास्त्युपहासास्पदम्? सर्वासामपि योरापीयभाषाणां वर्णमालायाः समानाकारत्वाद् ता अपि तद्दोषदुष्टा एवेति कृत्वा आङ्ग्लभाषावत्ता अपि विश्वभाषापदवीं नार्हन्तीति।

यथा हि वर्णदारिद्र्यं तथा शब्ददारिद्र्यमपि तत्र नग्नतया नरीनृत्यति। तद्यथा सूर्यवाचकः केवल एक एव शब्दः 'सन' (Sun) इति। चन्द्रमसः कृतेऽपि एक एव केवलं 'मून' (Moon) इति। जलवाचीशब्दोऽपि एक एव 'वाटर' इति इत्थमेव सहस्रशः सन्तिशब्दाः तासु तासु भाषासु पर्यायान्तरबुभुक्षिताः। परन्तु संस्कृतशब्दकोशः खल्वपूर्वः। एकैकस्य वस्तुनोऽनेकानि नामानि विलसन्ति। यथा

सूर्यस्य पर्यायवाचित्वेन--'**खगविहङ्गवियन्मणिभानवो हरिभगेननिदाघकराद्रयः । दिनमणिस्तरणिश्चदिनप्रणीः ।**' इत्यपूर्णश्लोकेनैव कियन्ति नामानि समुपश्लोकितानि । तदियमार्याणामस्माकं भाषेयं सर्वेतराढ्यत्वात् सर्वथा धन्या सर्वमान्या च भवति । स्थाने एवोक्तं केनापि कविना :--

**"अपूर्वः कोऽपि कोशोऽयं विद्यते तव भारती ।"**

अन्यश्चापि एको हेतुरस्याः विश्वभाषापदवीयोग्यत्वे । स चायं यद्भाषाया भूषणभूताः शोभाधायका ये यमकानुप्रासश्लेषविरोधाभासादयः परस्सहस्रा अलङ्कारास्ते संस्कृतवाण्यां यथा समुपलालिता न तथा कस्यामपि इतरभाषायामुपलभ्यन्ते । इदमपरं महत्खलु वैशिष्ट्यं संस्कृतभाषाया भाषान्तरेभ्यः । एवमन्येऽपि समुत्कर्षाः संस्कृतभाषायाः समुल्लसन्ति न ते विस्तरभिया अत्र विविच्यन्ते ।

तदेवञ्जातीयका बहवो हेतवो भवन्ति ये संस्कृतभाषाया विश्वभाषापदार्हत्वम्मुक्तकण्ठतः सडिण्डिमनादं निनदन्ति । या किल भाषा शक-हूण-यवनादिभिर्भारतवर्षमात्मसात्कुर्वद्भिः, या च किल व्यवहारभाषातोऽपि बहिष्कुर्वद्भिः शतधाऽवहेलिता, या च पुनः राजकीयभाषासु नैपुणीं सम्पादयद्भिः केवलमात्रमर्थार्जनपरैः पार्थिवभोगप्रवणैरुदरम्भरिभिर्भारतीयैरपि नेयमर्थकरी विद्येति कृत्वा चिरादनादृताऽपि पङ्के गौरिवावसीदन्ती आसेतुहिमाचलमद्यापि केनापि भास्वरेण प्रभावेण दीव्यन्ती राजतेतराम् । नूनं ते विप्रकुलावतंसा मानवहंसा भूसुरा अत्रास्माकं कोटिशः धन्यवादानर्हन्ति यैः सत्यपि वृत्तिकार्श्ये, भौतिकान् भोगानवहेल्य गायत्रीपुरश्चरणपरायणैरेव मधुकरीं वृत्तिमालम्ब्यापि, '**गोपाय मां शेवधिष्टेऽहमस्मी**'ति सरस्वत्यादेशं परिपालयद्भिः एष विद्याशेवधिः परिरक्षितः प्राणपणेनाऽपि ।

सेयं भव्या दिव्या प्रौढा चाऽमरवाणी इदानीं सम्प्राप्ते हि स्वातन्त्र्यस्योदयकाले[1] विश्वजनहिताय, सांस्कृतिकैक्यप्रतिष्ठापनाय, विश्वस्मिन् जगति चार्यसंस्कृतेः पुनः प्रसाराय, संस्कृतानुरागिभिर्विद्वद्भिः प्रशासनेन च सा भूयस्तरमुपबृंहणीया, अनुप्राणयितव्या, विश्वभाषापदवीञ्चोपलम्भनीयेत्यस्माकं हार्दिकी अभ्यर्थना विद्वत्तल्लजेभ्यः गीर्वाणवाक्प्रणयिभ्यो भारतीयेभ्य इव वैदेशिकेभ्योऽपि ।

---

**१. नूनं क्रैस्त १९४७ तमः सम्वत्सरोऽयं भारतस्येतिवृत्ते स्वर्णाक्षरैरुल्लिखितो भवेत् तत्रापि अगस्तमासस्य १५ तमस्य दिवसस्य निशीथकालः यदा भारतीयैः दिष्टचा सर्वाङ्गपूर्णं स्वातन्त्र्यं भगवदनुकम्पया स्वतपःपुण्यप्रभावेण च समुपलब्धम् ।**

एतच्च संस्कृतसाहित्यं मन्यामहे विश्वैकसाम्राज्यसंस्थापनाय, विश्वबन्धुत्वोज्जीवनाय, विष्वक् शान्तिसुरतरुसमारोपणाय च अस्ति किमपि मानवेभ्यो भगवदुपायनीकृतं दिव्यतमन्नाम तत्त्वम् । अतएवेदानीं सा खलु देववाणी लोकहितकाम्यया सर्वैः सम्भूय सर्वप्रयत्नेन पुनः समुद्धरणीयेति ।

तादृशस्य महतोऽस्य संस्कृतवाङ्मयस्य संरक्षणं, संवर्द्धनं, सदनुसन्धानं, गभीरगवेषणञ्च सर्वेषां विदुषामैदम्प्राथम्येनानुष्ठेयं कर्त्तव्यमस्ति विशिष्य तु भारतीयानाम् ।

तदेवंविधं विविधं प्रयोजनजातं विमृश्य स्वल्पशक्तिनाऽपि मया यावद्बुद्धिबलोदयं परिश्राम्यता सम्प्रत्युपलभ्यमानसाधन सौकर्य्यमनुसन्धाय सम्यगालोडनञ्च विधाय अस्य महतो गीर्वाणवाणीमहार्णवस्य, तस्माज्जाज्वल्यमानानि परमभास्वराणि रत्नानि च समुद्धृत्य ग्रन्थेऽस्मिन् सावधानतया यत्नेन सङ्कलितानि ।

अथैतदप्यत्रावधेयं भवति, यत्तथा कुर्वता मया न कस्यचित् पक्षस्य खण्डनं न च मण्डनं वा व्यधायि, प्रत्युत तत्तत्सिद्धान्तानां याथार्थ्येन सारभूतानि तत्तद्वस्तुतत्त्वान्येव स्फटिकमणौ जपाकुसुमलौहित्यवद् इदमित्थन्तया तत्तत्पूर्वाचार्य्यग्रथितसिद्धान्तानां सत्यस्वरूपप्रतिपत्तये प्रतिबिम्बीकृतानि । तथापि चेदत्र किञ्चिदप्रतिपन्नं विप्रतिपन्नं वा तत्त्वमवभासेत तद् विपश्चिद्भिः शोधनीयम् ।

किञ्चात्र 'नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ।' इति मल्लिनाथोक्तिमनुसृत्यैव सर्वमुट्टङ्कितम् । तदत्र प्रेक्षावन्तो विपश्चित एव प्रमाणम् । स एष मामकीनः श्रमः कियन्मात्रं सफलीभूतः सुसम्पन्नो वा सञ्जात इत्यस्मिन् विषये तु विशेषज्ञा दोषज्ञा एव निकषीभविष्यन्ति । अस्माभिस्त्वेतदेवाभ्यर्थयितुं शक्यते—

नाऽस्माभिरधिक्षिप्ता गुरवः क्वापि महर्षयः ।
'विमर्शे' दर्पणे ह्यस्मिन् याथातथ्येन बिम्बिताः ॥

तथापि :—

प्रमाणसिद्धान्तविरुद्धमत्र यत्किञ्चिदुक्तं मतिमान्द्यदोषात् ।
मात्सर्यमुत्सार्य तदार्यचित्ताः प्रसादमाधाय विशोधयन्तु ॥

अथ त्वत्र या सरला सुगमा प्रासादिकी च भाषासरणिः समालम्बिता मन्ये साऽप्यनुवाचकानां मनसः प्रीतये कल्पेत । यच्च क्वचित्तत्सन्धिबन्धो नोपलालितस्तदपि केवलमुच्चारणसौकर्यमनुसन्धायैव, 'सन्धीनां विवक्षाधीनत्वा'दिति पातंजलशासनमवष्टभ्येति 'सा विवक्षामपेक्षते' इति वैय्याकरणमान्यतामुद्दिश्येति वा ।

यद्यपि मादृशस्य स्वल्पशक्तिमतस्तादृशविशालवाङ्मयमहार्णवोन्मन्थनेन

तत्सारभतनवनीतसमुद्धरणाभिनिवेशोऽयं नूनं बालचापलमेवानुहरति, यतो दुर्बलाङ्गस्य विषमे पथि सञ्चरणं खलु दुःसाहसमेव केवलम् । उक्तञ्च, **'अपथे पदमर्पयन्ति हि, श्रुतिवन्तोऽपि रजोनिमीलिताः'** इति । तथापि वाग्देव्याः सपर्यापर्युत्सुकेन चेतसा यन्मयाऽनुष्ठितं मन्ये तन्न कथञ्चिदप्यनधिकृतम् । यतः सर्वे हि खलु वाग्देवतासमाराधयितारः साधिकारास्तत्सपर्यामारचयितुम् । इत्याकलयतैव मया संस्कृतसाहित्यविमर्शाख्योऽयं तादृशः स्वतन्त्रो ग्रन्थः श्रद्धाञ्जलिरूपः भगवत्याः सरस्वत्याश्चरणारविन्दयोः परमप्रह्वीभावेन विरच्य समर्पितः ।

कवीन्द्रवृन्दैरभिवन्दितायाः वाग्देवतायाश्चरणारविन्दे ।
इमं हि गीर्वाणगिरां विमर्श-पुष्पाञ्जलिं मञ्जुलमर्पयामि ।।

आशास्यते च सा किल भक्तवत्सला करुणामसृणहृदया वागधिदेवता तमवश्यमेवाङ्गीकृत्य मां करुणाभङ्गितरङ्गितैराशीर्वचोभिः सुतरां सम्भावयिष्यतितरामिति ।

इयञ्चापरा प्रार्थना सुरभारतीभक्तेभ्यो गुणैकपक्षपातिभ्यो विद्वद्भ्यो यदस्मिन् महति कर्मणि प्रवृत्तस्य मे चेन्मानवनिसर्गसुलभाः प्रमादाः सम्भवेयुर्नाम ते करुणार्द्रहृदयैः भवद्भिः सकरुणं परिमर्षणीयाः । सानुग्रहञ्च ते सूचनीया येन द्वितीये संस्करणे कृतज्ञताप्रकाशनपूर्वकं ते प्रकाश्येरन् । एवं सफलयितव्यश्च ममायं प्रयासो ग्रन्थस्यास्याध्ययनाध्यापनपर्यालोचनादिनेति शम् ।

उपसंहृतौ च श्रीमद्भगवच्छङ्कराचार्यमुनिपादवचोभिरुपस्तुत्य भगवतीं वाग्देवतां विरमामि । अयि भगवति वाग्देवते !

'प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः ;
सुधासिक्तैश्चन्द्रोपलजललवैरर्घ्यरचना ।
स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणम्,
त्वदीयाभिर्वाग्भिस्तव जननि ! वाचां स्तुतिरियम् ।।

इति शं शुभञ्च भूयात् ।

संवत् २०१३, श्रावणमासे स्वातन्त्र्यदिवसे
भारतीप्रतिष्ठानं, आनन्दपुर्यां, मयराष्ट्रनगरे,
उत्तरप्रदेशे (भारते)

विदुषां वशंवदः
**कविराजो द्विजेन्द्रनाथः**

# कृतज्ञताप्रकाशनम्

तदित्थं विमर्शविषये यत्किमपि प्रयोजनप्रयोजकतया वक्तव्यमासीत् तत्सर्वं प्रतिपादितमेव प्राक् प्रास्ताविके तदिदानीं शिष्टाचारपरम्पराप्राप्तं कार्तज्ञ्य-प्रकाशनपुरस्सरं धन्यवादादिप्रदानमवशिष्यते। तत्र तावद्—

एतस्मिन् ग्रन्थे प्राचामर्वाचां प्राच्यानां पाश्चात्यानाञ्च येषां केषामपि विदुषां मुद्रिता अमुद्रिता वा ग्रन्थास्तद्गतविचारधाराश्च परामृश्य विनिर्दिष्टा-स्तेषां सर्वेषां नतेन हृदयेन मूर्ध्नोपकारभारमुद्वहन् कृतज्ञतामावहामि। यैश्च भासुरै-र्विद्वद्रत्नैः ग्रन्थममुमुद्दिश्य शुभसम्मतिततिं प्रदाय अनुगृहीतः, यैश्च पुनर्यया कयापि विधया साहाय्यमाचरद्भिराप्यायितस्तेभ्यो महानुभावेभ्यः कृतज्ञतया शतशो हार्द्दिकान् धन्यवादानुपहरामि। न तेषां हृदयेनाभिनन्दनादृते कमप्यन्यमृण-निर्यातनपथमुत्पश्यामि। परं तेषां नामाऽननुस्मरणन्तु किल महते दोषाय स्यादिति तदत्र पुरस्क्रियते :—

(१) विद्यावाचस्पतिमहाभागः महामहोपाध्यायः श्री पं० गिरिधरशर्म्मा चतुर्वेदः (डायरेक्टर ऑफ संस्कृत स्टडीज़, हिन्दू विश्वविद्यालय, काशी)।

(२) महामहोपाध्यायः श्री पं० नारायणः शास्त्री खिस्ते कविकुलगुरुः साहित्याचार्यः (भूतपूर्व प्रिंसिपल गवर्नमेंट संस्कृत कालेज, बनारस)।

(३) निखिलशास्त्रनिष्णातः श्री पं० सभापतिः उपाध्यायः एम०एल०सी० (प्रिंसिपल बिरला संस्कृत कालेज, लालघाट, बनारस)।

(४) सकलशास्त्रपारदृश्वा पं० महादेव पाण्डेयः, संस्कृतमहाविद्यालयस्य विभागाध्यक्षः। (हिन्दू विश्वविद्यालयः, काशी)।

(५) विद्वद्धौरेयः श्री डा० वासुदेवशरण अग्रवालः एम० ए०, पी०-एच० डी०, डी० लिट्० (प्रोफेसर आफ इण्डॉलॉजी, हिन्दू यूनिवर्सिटी, बनारस)।

(६) परमपण्डितः श्री डा० सूर्यकान्तः एम० एल० सी०, एम० ए०, डी० लिट्०, डी० फिल० मयूरभञ्ज प्रोफेसर, संस्कृत तथा पाली विभागस्य अध्यक्षः (हिन्दू यूनिवर्सिटी बनारस)

(७) निखिलशास्त्रनिष्णाताः व्याकरणदर्शनसाहित्याचार्याः श्री पं० कुबेरदत्तशास्त्रिणः खुर्जानगरस्थसंस्कृतमहाविद्यालयस्य प्रिंसिपलमहोदयाः ।

(८) विद्वद्वर्य्याः कविकर्मकुशलाः श्री जयन्तकृष्ण दवे एम० ए०, एल०एल०बी० एडवोकेट विरुदभाजः विश्व-संस्कृत-परिषदः प्रधानमन्त्रिमहाभागाः, बम्बई ।

अन्यैर्यैर्महानुभावैरस्य ग्रन्थस्य प्रकाशने प्रेरणाप्रदानेन प्रयोज्य-प्रयोजकतया साक्षात् परम्परया वा अनुग्रहकर्तृभिः मुद्रण-लिपिसम्पादन-प्रूफसंशोधनादिकर्मणि यदमूल्यं साहाय्यं प्रदत्तं तेभ्योऽपि निम्नाङ्कितेभ्यः :—

(९) श्री आचार्य पं० देवदत्तशास्त्रिभ्यो वाराणसीय गवर्नमेण्ट संस्कृत महाविद्यालयस्य दर्शनविभागाध्यक्षेभ्यः ;

(१०) श्री वेदशिरोमणि पं० आर्येन्द्रशर्मसाहित्याचार्येभ्य एम० ए० उपाधिधारिभ्यः ;

(११) ममापत्यनिर्विशेषाय आयुष्मते साहित्यरत्नाय प्रो० रामकुमार-शर्मणे बी० एस०-सी० एच० उपाधिभृते संस्कृतविदुषे ;

(१२) श्रीमत्यै सौभाग्यवत्यै मदीयधर्मपत्न्यै विदुष्यै गार्गीदेव्यै च ; मदीयानि भूयांसि शुभाशीर्वचांसि समुल्लसन्तु धन्यवादपुरस्सरम् ।

अन्येभ्योऽपि, न्यू० इण्डिया प्रेसाध्यक्षेभ्यः परमसौजन्यशालिभ्यः श्री वेदव्रतविद्यालङ्कारमहोदयेभ्यः, येषां सौहार्देन ग्रन्थोऽयं सम्मुद्रितः, अथाऽपि व्याकरणसाहित्यधुरन्धरेभ्यः पण्डितप्रवर-श्रीशान्तिस्वरूपशर्मवेदालङ्कारेभ्योऽपि येषामकारणसहयोगेन पूर्णमनोयोगेन च ग्रन्थोऽयं सुसंस्कृतः सौन्दर्येण च हृदयावर्जकः सम्पन्नः, मदीयाः शतशो धन्यवादा विलसन्तु ।

अन्ते च—

श्रीमद्भ्यः मम प्रेष्ठेभ्यः श्रेष्ठिप्रवरेभ्यः श्रीमणिलाल टी. शाहेभ्यः हार्दिकीं धन्यवादर्तातिं वितरामः । येषां गीर्वाणवाणीं प्रति भूयसीं भक्तिमप्रमेयामनुरक्तिञ्च स्मारं स्मारमद्यापि न तृप्यति ममान्तरङ्गम्, ये च खलु सरस्वतीसेवां विधातुं सततं समुत्सुकतया प्रयेतिरे, ये च हन्त दैवदुर्विलसिताद् अकाल एव कृतान्तेन कवलीकृताः । हंहो ! सर्वङ्कषा भवितव्यता केन वा वारयितुं शक्या ? इति प्रकृतेर्नियमस्यानुल्ल-ङ्घनीयतां दर्शयितुमिव स्वर्गङ्गता, येषां प्रखरप्रेरणैवास्य ग्रन्थस्य निर्माणबीजम-भूत् । हन्त !

चिन्तयत्यन्यथा जीवो हर्षचरितमानसः।
विधिस्त्वेष महावैरी कुरुते कार्यमन्यथा ॥

परन्तु तत्र हर्षविषयोऽयं यत्स्वर्गीयश्रेष्ठिरत्नानामेषां पुण्यशीलया धर्मपत्न्या श्रीमत्या प्रमिलादेव्या, तत्प्रतिबिम्बरूपेण तदीयज्येष्ठतनयेन नयविनयशीलवताऽऽयुष्मता विदुषा सनत्कुमारेण च स्वर्गारूढानामपि स्वपूज्यानां मनीषितं सफलयितुं तत्पुण्यस्मृतौ ग्रन्थोऽयं परमश्रद्धया प्रकाशतां नीतः। अतः तावुभावपि मया धन्यवादसचिवैराशीर्वचोभिः सम्भाव्येते। किं बहुना :—

अन्ये चापि महाभागा नामतो ये न संस्मृताः।
ते सर्वेऽपि प्रसीदन्तो धन्यवादान् भजन्तु मे ॥

विदुषां विधेयः
**कविराजो द्विजेन्द्रनाथः**

—०—

# सम्वत्सरपरिज्ञानतालिका

प्रायशः भारते पञ्चविंशतिसंख्याकाः संवत्सराः प्रचलन्ति। तेषु प्रसिद्धास्तु किल कलि-विक्रम-शक-क्रैस्ताख्याः चत्वार एव। ग्रन्थेऽस्मिन् कालनिर्देश-प्रसङ्गे बहुशो लब्धप्रचारत्वात्सुविधाजनकत्वाच्च क्रैस्तसंवत्सरस्यैव प्रयोगः कृतः। स खलु संस्कृतानुरागिभिर्मर्षणीयः।

परन्तु उक्तेषु चतुर्षु संवत्सरेषु कस्याप्येकस्य बोधे सति कस्याप्यभिलषितस्य ज्ञानं सम्भवितुमर्हति सौकर्य्येणेति तत्तालिकाऽधस्तात् दीयते :--

(१) कलिसम्वत्सरस्यारम्भः कलियुगारम्भसमयात् सञ्जातः। अतः शकसम्वत्सरात् कलिसंवत्सरस्य जिज्ञासुना शकसम्वत्सरे ३१७९ संख्यायोगे कृते कलिसम्वत्सरः फलितो भवति।

(२) एवमेव शकसंवत्सरारम्भः क्रैस्ते ७८ तमे वर्षे जातः। तस्मात् क्रीस्तसम्वत्सरपरिज्ञानार्थं शकसंवत्सरे ७८ संख्यायोगात् क्रीस्तसंवत्सरः फलितो भवति। इत्थमेव शकसंवत्सरावबोधार्थं क्रीस्तसम्वत्सरात् ७८ संख्यान्यूनीकरणात् शकसंवत्सरः फलितो भवति।

(३) किञ्च विक्रमसंवत्सरस्य प्रारम्भः क्रैस्तपूर्व ५६–५७ तमे वर्षे सञ्जातः। तस्माद् विक्रमसंवत्सरात् क्रैस्तसंवत्सरस्य परिज्ञानार्थं ५६ संख्या न्यूनीकरणीया फलितः क्रैस्तसंवत्सरः। एवमेव क्रैस्तसंवत्सराद् विक्रमसंवत्सराव-बोधनार्थं क्रैस्ते संवत्सरे ५६ संख्या योज्या, शकसंवत्सरज्ञानार्थञ्च वैक्रमात् ७८+५६=१३४ संख्या न्यूनीकरणीया।

अनया सरण्या एकस्मिन् संवत्सरे ज्ञाते सति अन्यस्येष्टस्य ज्ञानमपि सुगमं सम्भवतीति।

---

# विषय-सूची

# अभ्यर्थना

स्तुता मया वरदा वेदमाता प्रचोदयन्तां पावमानी द्विजानाम् ।
आयुः प्राणं प्रजां पशुं कीर्त्तिं द्रविणं ब्रह्मवर्चसम् ॥
मह्यं दत्त्वा व्रजत ब्रह्मलोकम् ॥ (अथर्ववेदः)

सर्गादौ स्फुरतां समग्रजगतां यः श्रेयसे जज्ञिवान्,
अर्थानभ्युदयाय संप्रथितवान् तांस्तांस्तु वैज्ञानिकान् ।
यश्चोच्चावचभाववान विविधसद्विद्याभिरुद्योतवान्,
विश्वस्मिन् भुवने स वेदभगवान् भूयो जरीजृम्भताम् ॥

यत्प्रभापटलोद्भासा भासतेऽद्यापि भारतम् ।
दिव्यं तत् संस्कृतं ज्योतिरासंसारं प्रकाशताम् ॥

❀ ॐ ❀

# अथ संस्कृतसाहित्यविमर्शः

## प्रथमपरिच्छेदः

## वेदप्रकरणम्

केयं संस्कृतभाषा नाम ? भाषाणां द्वैविध्यं संस्कृतं प्राकृतञ्चेति। संस्कृतावतरणम्। भाषास्वरूपनिरूपणम्। वर्णसमाम्नायः ऋगुपज्ञः। ऋग्वेदस्य प्राथम्यम्। साहित्यं नाम किम् ? संस्कृतसाहित्यस्याविर्भावः। एकोऽपि वेदः विषयभेदाच्चतुष्टयत्वं गतः। वेदानामपौरुषेयत्वं तत्र दर्शनोपपत्तिश्च। कोयं वेद-शब्दस्य व्युत्पत्तिलभ्योऽर्थः। न केवलं मन्त्रा एव नित्याः अपितु तेषामानुपूर्वी अपि नित्या। वेदे इतिहासाभावः। वेदे स्वराः, स्वराङ्कनप्रकारश्च। स्वराणां प्रयोजनम्। षड्जादिस्वराणामध्येतेष्वेवान्तर्भावः। वेदपाठस्य विशुद्धिपरिरक्षणार्थं हि पदपाठादयः। वेदे पाठभेदः। वेदे ऐतिह्यभ्रमः। वेदे वर्णाश्रमधर्माः। वेदे विविधज्ञानविज्ञानोपदेशाः। वेदकाल निर्णयः। ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदः।

### केयं संस्कृतभाषा नाम ?

**संस्कृतभाषेयं सर्वास्वपि विश्वभाषासु प्राचीनतमा इति समस्त-भाषाशास्त्रविदां डिण्डिमः।**

**भाषान्तरविलक्षणैर्विशिष्टैः प्रकृतिप्रत्ययादिसंस्कारविशेषैः संस्कृतत्वा-दियं किल संस्कृतभाषेति अन्वर्थसंज्ञां लेभे। भाषा हि द्विविधा श्रूयते—[1]प्राकृतभाषा संस्कृतभाषा चेति। तत्र केचन—प्रकृतिः संस्कृतं, तदागतं प्राकृतमिति व्यवतिष्ठन्ते। अपरे तु शुद्धसंस्कृतोच्चारणाक्षमाणां प्राकृत-भाषेयं व्यावहारिकी भाषेत्याचक्षते। विद्वद्वरेण मार्कण्डेयमहाभागेन स्वकीय-प्राकृतसर्वस्वाख्ये ग्रन्थेऽस्याः प्राकृतभाषायाः भाषा-विभाषा-अपभ्रंश-पैशाची-भेदाच्चत्वारो भेदाः सूत्रिताः। पुनस्तच्चतुर्भेदभिन्नानां तासां प्रत्येकं चत्वारो**

---

१ महाकविः काश्मीरको बिल्हणः प्राह :—
'यत्र स्त्रीणामपि किमपरं जन्मभाषावदेव।
प्रत्यावासं विलसति वचः संस्कृतं प्राकृतञ्च॥ [विक्रमाङ्कचरिते]

**भेदाः प्रतिपादिताः। इत्थं प्राकृतभाषेयं [1]षोडशभेदभिन्ना सम्पन्ना। संस्कृत-भाषा तु पुनर्माधुर्यलालित्य-गाम्भीर्यादिनिखिलातिशायिगरिष्ठगुणगरिम्णा सर्वैः महता समारम्भेणाद्रियमाणा समस्तसंसृतिवाङ्मयस्रजि मध्यमणिरिव विलसन्ती राराजते।**

## संस्कृतावतरणम्

**विदितचरमेवात्र भवतां विद्वन्मूर्द्धन्यानां विदुषाम् यत् संस्कृतं हि नाम दैवी वाक्। सेयं देवैर्विद्वद्भिः व्यवह्रियमाणत्वाद्देवभाषेत्युच्यते। 'विद्वांसो वै देवा' इत्युक्तेः। संस्करणैः संस्कृतत्वाच्च सैव संस्कृतमित्युच्यते।**

**उक्तञ्च--**

**'संस्कृतं हि दैवी वागन्वाख्याता महर्षिभिः'। इति।**

**'भाषासु मधुरा मुख्या दिव्या गीर्वाणभारती'। इति॥**

---

१. तद्यथा--महाराष्ट्री, शौरसेनी, प्राची, आवन्ती, मागधी, शाकारी, चाण्डाली, शावरी, आभीरिका, हाक्की, नागरी, व्राचडी, उपनागरी, कैकयी, पाञ्चाली, पैशाची इति।

इदमत्र प्रतिपत्तव्यम्---पूर्वं तावत् प्राकृतभाषेयं प्राच्य-प्रतीच्यभेदात् द्विविधैवासीत् इति अशोकीयपालीप्रस्तरलेखानां प्राक्सम्पन्नबौद्धजैन-ग्रन्थानां पर्यालोचनेनावगम्यते। तदनन्तरं गच्छति काले सा चतुर्धा विभागं गता। पश्चिमायां दिशि सिन्धुतीरादारभ्य गङ्गायमु-नयोर्मध्यगते मथुराप्रधाने प्रदेशे व्यवह्रियमाणा भाषा शौरसेनी। तस्याः शौरसेन्या एव प्रभेदाः गौर्जरी, आवन्ती, महाराष्ट्री चेति। एवं पूर्वस्यां दिशि मगधदेशप्रसिद्धा मागधी अर्द्धमागधी च सम्भूता। ता इमाः प्राकृतभाषा एव सम्प्रति सर्वत्रापि भारते वर्षे विविधरूपेण भाष्यमाणाः प्राचीन-संस्कृतभाषात एव विकारमापन्नाः, सिन्धी, पञ्जाबी, काश्मीरी, गौर्जरी, बङ्गालीप्रभृतिभाषारूपेण व्यवहृतिं गताः। दृश्यन्ते हि ताः सुनिपुणमीक्ष्य-माणाः सर्वाः संस्कृतसाहित्यकोषाल्लब्धशब्दसमुदयाः प्राधान्येन संस्कृत-सर्वस्वोपजीविन्य एव सञ्जाताः। दक्षिणापथे च व्यवहृताः तैलगु-तेमिल-मलयालम-कर्णाटकप्रभृतयः प्रसिद्धा द्रविडभाषाः सुदूरमाक्रान्तास्तथापि ता अपि संस्कृतसाहित्यादुपात्ताभिः शब्दावलिभिरेवातितरां विभूषिताङ्गा विलसन्तीति संस्कृतभाषैव प्राकृतानामपि प्रसवभूमिरिति चतुरस्रम्।

सेयमन्वर्थसंज्ञा गीर्वाणवाण्या यत्संस्कृतभाषा देवभाषा वा नामेति। भाषणाद्धि भाषा भवति। भाष्यते भाषणादिव्यवहारोऽनुष्ठीयते यया सा भाषा इति तद्व्युत्पत्तेः। भाषा हि लोकव्यवहारनिर्वहणसाधनेषु प्रधानभावं जुषत इति न तिरोहितं मतिमताम्। भाषाधीनो हि खलु सर्वोऽपि व्यवहारो लोकस्य। यद्यपि जना इङ्गितैस्तत्तदङ्गाभिनयेन वा स्वान्तरङ्गभावान् ताँस्तानाशयविशेषान् वा परत्र सङ्क्रामयितुं प्रभवन्ति यथाकथञ्चित् तथापि भाषां द्वारीकृत्य आशयमावेदयितुं यादृशी सौकरी, नैव तादृशी कराद्यवयवाभिनयेन विद्यत इति विश्वजनीनम्। तदेवम्, अन्तरेण भाषां नाणुरपि लोकव्यवहारो निष्पद्यते जगति इति निर्विशङ्कम्। तदिदं भाषापरनामधेयं शब्दाह्वयं ज्योतिः सावित्रं ज्योतिरिव लोकयात्रायामस्माकं कियद्वा नोपकरोतीति तु वक्तव्यं नापेक्षते। भाषाया अभावे न कथमपि सिध्येदस्याभिजातजनसमाजस्य लोकव्यवहारप्रपञ्चः। स्थान एवोक्तं खलु महाकविना दण्डिना महाभागेन :—

'इदमन्धतमः कृत्स्नं जायेत भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते॥' इति।

अखिलेऽपि भूमण्डले नास्ति तादृशः कश्चिदपि भूखण्डो यत्र जनसमाजेन नापेक्ष्यते भगवत्या भाषाया अनुग्रहः। भाषाऽऽलोकं विना कृत्स्नोऽपि लोकोऽन्धकारमयः सम्पद्येतेति प्रस्फुटम्। तस्माद् भाषा अपरिहार्या लोकव्यवहारनिष्पत्त्यर्थमित्यत्र तु प्रमत्तं विना कोऽन्यः संशयीत।

## भाषास्वरूपनिरूपणम्

सा च पुनर्भाषा शब्दसंघातजन्या। शब्दसंघातश्च वर्णप्रकृतिकः। वर्णाश्चाज्झल्लक्षणाः। तदेषां अज्झलाञ्च स्वरव्यञ्जनापरनामधेयानां, सकलभाषाबीजभूतानां अवतरणं कुत इति प्रश्नावतारेऽभिधीयते, यदेषां अज्झलामाविर्भावस्तावद् वेदादेवेति। तत्कथमिति चेदुच्यते—वेदादृते नान्यत्र क्वचिदपि तेषां दृष्टिगोचरता।

## वर्णसमाम्नायः ऋगुपज्ञः

इदमत्र प्रतिपत्तव्यम्। अखिलभाषामूलभूतानां अजादिस्वराणां कवर्गादिव्यञ्जनानाञ्चादिमो नादः विश्वगगनमण्डलं प्रतिध्वनयन्—

'अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्।' (ऋ.१.१.१.) इति ऋग्वेदीयश्रुतित एव प्रससार सर्वतः प्राक्। अस्यां हि श्रुतौ प्रधानानां स्वराणां प्रमुखव्यञ्जनानाञ्चोपदेश ऐदम्प्राथम्येन भगवता आदि-

गुरुणा परमेश्वरेणैव कृतः। वस्तुतः इयमेव भगवती श्रुतिः साक्षात् सर्ववर्णानां, परम्परया त्वखिलभाषाणां प्रसवित्रीति सुदृढं विमृशामः। तथाहि–'अग्नि' इत्यत्र अ, इ; 'ईडे' इत्यत्र दीर्घ ईकारः, एकारश्च; 'पुरोहितं' इत्यत्र उकारः, ओकारश्च; 'ऋत्विजं' इत्यत्र ऋकारस्योपदेशः। तदिदं स्वरोपदेशो दिङ्मात्रम्। एवमेव व्यञ्जनानामुपदेशः। वर्गाणां तृतीयस्याक्षरस्य कोमलत्वं मधुरत्वं वा सर्वत्र सुप्रथितं, सर्वसङ्गीताचार्यैश्चाप्यङ्गीकृतम्। तदेवं कुचुटुतुपुमध्यपतितानां—तृतीयाक्षर ग, ज, ड, द,ब, इत्येतेषामुपदेशोऽपि अस्यामेवर्चि प्रव्यक्तमवलोक्यते। तदेष वर्णसमाम्नाय ऋग्वेदीयैतदृगुपज्ञ एवेति सूपपन्नमाकलयामः।

## ऋग्वेदस्य प्राथम्यम्

तदेतदेवं वर्णसमाम्नायस्य ऋगुपज्ञत्वमालम्ब्यैव वेदान्तरेभ्य ऋग्वेदस्य प्राथम्यमुन्नीयते मनीषिभिः। यद्यपि वेदत्वेन वेद एक एव, परं तेषां संख्याचतुष्टयत्वं विषयीकृत्य अनुसन्धीयमाने, तेषु प्राथम्यादितारतम्येन कः प्रथमः, कतरो द्वितीयः, कतमश्च पुनस्तृतीयश्चतुर्थो वेति प्रश्न उज्जृम्भते। तत्र ऋग्वेदस्य प्राथम्यं सर्वैरेव वैदिकैरुदीर्यते। हेतुत्वेन वर्णसमाम्नायस्य ऋगुपज्ञतैव च तैः पुरस्क्रियते। ते खलु तर्कयन्ति—सत्यं, भगवता परमेश्वरेण सर्गारम्भे वेदाख्यं ज्ञानज्योतिर्महर्षीणां हृदयेषु प्रणोदितम्। परन्तैर्महर्षिभिस्तु तज्ज्ञानं परत्र प्रकाशयितुम्भाषा तावदपेक्ष्यते सर्वतः प्राक्। भाषामूलभूतश्च वर्णसमाम्नायः। वर्णसमाम्नायस्य च प्रथमोपदेश्यता वादि-प्रतिवादिसर्वसम्मता। अतः वर्णसमाम्नायस्य प्राथम्यं स्वीकुर्वताऽपरिहार्यत्वेन ऋग्वेदेनैव स वर्णोपदेशः संग्रहेण, बीजरूपेणोपक्रान्त इति सर्वमनवद्यम्। इत्थं तथोपनतम्, ऋग्वेदस्याखिलेतरवेदप्राथम्यं वयं सुयौक्तिकमव्याहतञ्चोत्पश्यामः।

तदस्य संस्कृतस्य साहित्यं संस्कृतसाहित्यम्। हितेन सह सहितं तस्य भावः साहित्यम्। साहित्यं हि चतसृणा[1]मपि विद्यानां निस्यन्दः। संस्कृतसाहित्यस्य विमर्शो विचारो विवेचनं वा यस्मिन् सोऽयं "संस्कृतसाहित्य[2]विमर्शो" ख्यो ग्रन्थः, समस्तसंस्कृतसाहित्यस्यान्तरङ्गस्वरूपपरिचायनाय गद्यमयः प्रबन्ध इति विवेकः।

---

१. आन्वीक्षिकी त्रयी वार्ता दण्डनीतयश्चतस्रो विद्याः इति कौटिल्यः, पञ्चमी तु साहित्यविद्येति यायावरीयः।

२. सहितयोः शब्दार्थयोर्यत्र सामञ्जस्यम् तत्साहित्यम्। परस्तात् साहित्यशब्दोऽयं गद्यपद्यमये संस्कृतवाङ्मये योगरूढः संवृत्तः।

## संस्कृतसाहित्यस्य द्वैविध्यम्

अथेदं संस्कृतसाहित्यं किल द्वेधा विभज्यते। वैदिकं लौकिकञ्चेति। तत्र वैदिके तावद् वेदाः, उपवेदाः, वेदाङ्गानि, ब्राह्मणानि, उपनिषदः, आरण्यकानि, दर्शनानि, पुराणानि, निगमतन्त्रादीनि संगृह्यन्ते। लौकिके पुनः रामायणमहाभारतादिमहाकाव्य-खण्डकाव्य-नाटक-गद्यपद्यमयचम्पूपन्यासादीनि परिगण्यन्ते। तदेतयोरुभयोरेव विमर्शः सङ्ग्रहेणात्रोपक्रम्यते। स चेत्कल्पेत संस्कृतसाहित्यमहोदधिपारमधिजिगांसूनां गीर्वाणवाणीप्रणयिनां सौकर्येण तत्स्वरूपावबोधनाय, संस्कृतसाहित्यधुरन्धराणां पण्डितपुरन्दराणाञ्च पुनः मनोविनोदाय, तर्हि आत्मनः परिश्रममममुं नितरां फलेग्रहिमाकलयिष्यामः।

## संस्कृत-साहित्यस्याविर्भावः

स एष संस्कृतसाहित्यप्रपञ्चस्याविर्भावो महामहिमवतो हिमवतो गङ्गादिमहाप्रवाह इव निखिलज्ञानराशेर्भगवतो वेदादेवेति सर्वसम्मतः पक्षः। सोऽयं वेदः वेदत्वेन सन्नपि एकः, विषयभेदात् चत्वारः सञ्जाता ऋग्यजुःसामाथर्वाभिधानतया प्रथिताः। ते चामी वेदाः सर्गारम्भकाले मानवसृष्टिसमकालमेव प्रादुरभूवन्। नूनमासीत्स कोऽपि पुण्यमयः समयः, यदा अशेषशेमुषीसम्पन्नानां, निखिलार्थजातं हस्तामलकवत् दिव्येन चक्षुषा प्रत्यक्षीकुर्वाणानां तपस्यतां निर्मलधियां पूर्वेषामृषीणां सदयहृदयपटले उदयमाससाद। स कोऽपि अविद्यातमःपटलोत्पाटनपटीयान् दिव्यतमः प्रकाशो वेदाह्वयो नाम, परमकारुणिकेन भगवता परमेश्वरेण प्रणोदितः। यत्रेदमाम्नातं भवति :—

यज्ञेन वाचः पदवीयमायन्तामन्वविन्दन्नृषिषु प्रविष्टाम्।
तामाभृत्या व्यदधुः पुरुत्रा तां सप्तरेभा अभि सन्नवन्ते॥

[ऋग् १०। ७१। ३]

परमेश्वरवचनोऽत्र यज्ञशब्दः। यज्ञेन यजनीयेन परमेश्वरेणेति यावत्। वाचो वेदवाचः। ऋषिषु प्रविष्टां ऋषिहृदयेषु प्रणोदितामिति भावः।

अपिच—

'बृहस्पते प्रथमं वाचो अग्रं यत्प्रैरयत नामधेयं दधानाः। यदेषां श्रेष्ठं यदरिप्रमासीत् प्रेणा तदेषां निहितं गुहाविः'[1]॥ [ऋ०१०।७१।१]

---

[1]अत्रेदं खलु वाणीसूक्तं ऋग्वेदीयदशममण्डलस्य एकसप्ततितमं सूक्तं विदुषामवधानमर्हति सविशेषम्।

किञ्च :—

'तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥'
[ऋ० १०।९० ९]

अथर्वण्यपि :—

तस्मादृचोऽपातक्षन् यजुर्यस्मादपाकषन् ।
सामानि यस्य लोमान्यथर्वाऽङ्गिरसो मुखम् ॥
[अथर्व० १०।७।२०]

एवमुक्तमन्त्रवर्णैः स्फुटं प्रपञ्चितं भवति यद् यज्ञादीश्वरादेव सर्वे वेदाः प्रादुरभूवन् इति।

तथा चेयं वेदवाणी ईश्वरवाणीति प्राञ्चः सर्वे एव विद्वांसः स्वीकुर्वन्ति । तथाहि गीर्वाणवाणीपारावारपारीणानां श्रीमच्छङ्कराचार्यभगवन्मुनिपादानां 'शास्त्रयोनित्वा'-दिति वैयासिक-सूत्र-व्याख्याप्रसङ्गे—

"महत ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य प्रदीपवत्सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म । नहीदृशस्य शास्त्रस्य ऋग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतः सम्भवोऽस्ति" इति—वाचोयुक्तिरपि सुतरां समर्थयति निर्दिष्टमेवार्थम् । बृहदारण्यकेऽपि :—

'अस्य महतो भूतस्य निःश्वसितं यदृग्वेदः इति । [बृह० २।४।१०]

परन्तु नेयमीश्वरवाणी किन्तु ऋषीणामेवेयं वाणीति केचनार्वाञ्चः समाकलयन्ति। भवतु तद्यथातथावेति नाऽत्रविस्तरभिया तद्विमृशामः। परन्तु वेदसाम्प्रदायिकानां प्राचां त्वयमेव द्रढीयान् विश्वासः यद्वेदाः अपौरुषेया नित्याः सर्वज्ञानमयाश्च, ईश्वरप्रणीतत्वात् । 'वाचा विरूपनित्यया' [ऋ० ६।५।२५] इत्यादि मन्त्रवर्णैः तन्नित्यत्वस्य सुस्पष्टमुपपादितत्वाच्च ।

## वेदानां नित्यत्वेऽपौरुषेयत्वे च सर्वदर्शनोपपत्तिः

एतदेवाकलय्य मीमांसकमूर्द्धन्यैर्भगवज्जैमिनिमुनिपादैः पूर्वमीमांसायां 'कर्मैके तत्रदर्शनात्' इत्यादि द्वादशसूत्रैर्वेदात्मकस्य शब्दराशेरनित्यत्वं पूर्वपक्षत्वेनोट्टङ्क्य 'नित्यस्तु स्याद्दर्शनस्य परार्थत्वात्' [१।१।६।] इत्यादि षट्सूत्रैर्नित्यत्वं सिद्धान्तितम् । उत्तरमीमांसायामपि भगवता बादरायणेन 'शास्त्रयोनित्वात्' [वे० १ ।२] इत्यस्मिन् सूत्रे शास्त्रं वेदः, तस्य ब्रह्मयोनित्वं प्रतिपादयता 'अतएव च नित्यत्वम' [१।३।२९] इत्यनेन तन्नित्यत्वमेवोपपादितम् । एवं सति

परमेश्वरस्य नित्यत्वे व्यवस्थापिते, तज्ज्ञान-लक्षणस्य वेदस्यापि नित्यत्वं सुतरां सूपपन्नम्। को नाम तदपह्नोतुं क्षमो यत्नशतेनापि ?

किञ्च अथर्ववेदे प्रव्यक्तमुक्तम्—

"अपक्रामन् पौरुषेयाद् वृणानो दैव्यं वच:।
प्रणीतिरभ्यावर्तस्व विश्वेभिः सखिभिः सह ॥ [अथर्ववेद]

पौरुषेयाद्वचनादपक्रामन् दैव्यं वच: वेदवचांसि वृणान: विश्वेभिः सखिभिः सह प्रणीतिः प्रकृष्टनीतीः अभ्यावर्त्तस्व सेवस्वेति भावः। मन्त्रेऽस्मिन्नपि प्रस्फुटं वेदवाचामपौरुषेयत्वमेवाभिप्रेतमवगम्यते।

किञ्च वेदस्य ईश्वरकर्त्तृत्वं मन्त्रेष्वपि स्वयं वर्णितम्। तद्यथा-

'अहं दा गृणते पूर्व्यं वस्वहं ब्रह्म कृणवं मह्यं वर्धनम्।
अहं भुवं यजमानस्य चोदिता यज्वनः साक्षि विश्वस्मिन् भरे ॥

[ऋ० १०।४९]

ब्रह्मशब्दोऽत्र वेदवचनः। अहं ब्रह्म अकृणवम्। अहं परमेश्वरः वेदं व्यरचयमिति भावः। अतःपरं वेदानामीश्वरकर्त्तृत्वेऽन्यत्किं प्रमाणं भवितुमर्हति । अतो वेदानामपौरुषेयत्वमेवाभिमतं वैदिकानाम्।

अथच, प्रायशः सर्वाण्येव दर्शनानि वेदानामीश्वरकर्त्तृत्वमेवाभिमन्यन्ते। तदपि दिङ्मात्रमत्र प्रदर्श्यते—

## वेदस्यापौरुषेयत्वे स्वतःप्रामाण्ये च दर्शनोपपत्तिः

तद्यथा 'तद्वचनादाम्नायस्य प्रामाण्यमि'त्यस्मिन् वैशेषिकसूत्रे उपस्कारभाष्ये एवमुपपादितम्—"तदित्यनुपक्रान्तमपि प्रसिद्धिसिद्धतयेश्वरं परामृशति। यथा 'तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः' इत्यस्मिन् गौतमीयसूत्रेऽपि तच्छब्देनानुपक्रान्तोऽपि वेदः परामृश्यते। तथा च तद्वचनात्तेनेश्वरेण प्रणयनाद् आम्नायस्य वेदस्य प्रामाण्यम्। यद्वा तदिति सन्निहितं धर्ममेव परामृशति। तथा च धर्मस्य वचनात्प्रतिपादनाद्वेदस्य प्रामाण्यम्। यद्धि वाक्यं प्रामाणिकमर्थं प्रतिपादयति तत्प्रमाणमेव यत इत्यर्थः।" ननु तेनेश्वरेण वेदः प्रणीत इत्यत्रैव विप्रतिपत्तिरत आह इति शास्त्रपरिसमाप्तौ । तद्वचनादाम्नायस्य प्रामाण्यम् । तथाहि—वेदस्तावत्पौरुषेयः वाक्यत्वादिति साधितम्। न चास्मदादयस्तेषां सहस्रशाखावच्छिन्नानां वक्तारः सम्भाव्यन्ते। अतीन्द्रियार्थत्वात्। न चातीन्द्रियार्थदर्शिनोऽस्मदादयः। किञ्चाप्तोक्ताः वेदाः, महाजनपरिगृहीतत्वाद यन्नाप्तोक्तं, न तन्महाजनपरिगृहीतम् । महाजनपरिगृहीतश्च

वेदस्तस्मादाप्तोक्तः। स्वतन्त्रपुरुषप्रणीतत्वात्। तच्चाप्तोक्तत्वं, महाजनपरिगृहीतत्वञ्च सर्वदर्शनान्तःपातिपुरुषानुष्ठीयमानार्थत्वम्। क्वचित्फलाभावः कर्मकर्त्तृसाधनवैगुण्यादित्युक्तम्। कर्त्तृस्मरणाभावान्नैवमिति चेन्न। कर्त्तृस्मरणस्य पूर्वमेव साधितत्वात्। तत्प्रणीतत्वं च स्वतन्त्रपुरुषप्रणीतत्वादेव सिद्धम्। न त्वस्मदादीनां सहस्रशाखवेदप्रणयने स्वातन्त्र्यं सम्भवतीत्युक्तत्वात्। किञ्च प्रमाया गुणजन्यत्वेन वैदिकप्रमाया अपि गुणजन्यत्वमावश्यकम्। तत्र च गुणो वक्तृयथार्थवाक्यार्थज्ञानमेव वाच्यम्। तथा च तादृश एव वेदे वक्ता। यः स्वर्गापवर्गादिविषयकसाक्षात्कारवान् तादृशश्च नेश्वरादन्य" इति।

एवं गौतमीये "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्" इति सूत्रे वात्सायणभाष्यम्। "द्रष्टृप्रवक्तृसामान्याच्चानुमानम्। य एवाप्ता वेदार्थानां द्रष्टारः प्रवक्तारश्च त एवायुर्वेदप्रभृतीनामित्यायुर्वेदप्रामाण्यवद्वेदप्रामाण्यमनुमातव्यम्। नित्यत्वाद्वेदवाक्यानां प्रमाणत्वे तत्प्रामाण्यमाप्तप्रामाण्यादित्युक्तम्। शब्दवाचकत्वादर्थप्रतिपत्तौ प्रमाणत्वं, न नित्यत्वात्। नित्यत्वे हि सर्वस्य सर्वेण वचनाच्छब्दार्थव्यवस्थानुपपत्तिः" इति।

अपिच अयमेवार्थः कपिलेनाऽपि विशदय्य प्रपञ्चितः। ननु शब्दार्थसम्बन्धस्य नित्यत्वे शब्दराशिर्वेदोऽपि नित्यः कथं न स्यात्? इति पूर्वपक्षमुत्थापयन्नाह 'न नित्यत्वं वेदानां कार्यत्वश्रुतेः" (सां० ५।४५) 'तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे' इति वेदानामीश्वरजन्यत्वश्रुते नित्यत्वं न सम्भवति। एवं सति वेदानां [१]जन्यत्वे, कथं तेषामपौरुषेयत्वमित्यत्रोत्तरपक्षमाह :—

"न पौरुषेयत्वं तत्कर्त्तुः पुरुषस्याभावात्।" [सां०५।५१]

इति वेदानां पौरुषेयत्वमुपपाद्य, तत्स्वतःप्रामाण्यं सिद्धान्तयति—

"निजशक्त्यभिव्यक्तेः स्वतःप्रामाण्यम्" [सां० ५।५१]

प्रतिसर्गं भगवतः परमेश्वरस्य स्वाभाविक्या शक्त्या प्रादुर्भावाद्वेदानां स्वतःप्रामाण्यम् इति।

तदेवं वैदिकानां वेदस्यापौरुषेयत्वं नित्यत्वमत एव स्वतःप्रामाण्यञ्चेति बलीयानभ्युपगमः।

एष किल वेदानां पौरुषेयापौरुषेयत्वविचारः प्राक्तनकालादेव अतिप्राचीनकौत्सचार्वाकबौद्धादिकालादेव विवादविषयीकृतोऽवगम्यते, परमनेकदर्शनकारैर्न्यायवैशेषिकसांख्यमीमांसावेदान्तकृद्भिराचार्यैर्व्याख्याकृद्भिश्च

१. जनेश्च प्रादुर्भावार्थकत्वात् नात्र जनिरुत्पत्त्यर्थः।

निपुणतरमालोच्य विदलितपौरुषेयत्ववादैरपौरुषेयत्वं स्वतःप्रामाण्यञ्च सिद्धान्तितम् ।

## न केवलं मन्त्रा एव नित्या अपितु तेषामानुपूर्वी अपि नित्या

यद्यपि ज्ञानार्थकाद्विद्धातोः विदन्त्यनेनेति व्युत्पत्त्या निष्पन्नोऽयं वेदशब्दः प्रज्ञानस्य साधनमात्रतामवगमयति, तथापि अत्र स वेदशब्दः 'अग्निमीडे पुरोहितम्' इत्याद्यानुपूर्वीविशिष्टशब्दराशावेव योगरूढः । स चानुपूर्वीविशेषविशिष्टः शब्दराशिः, गुरुपरम्परावेदाध्ययनपरम्पराप्राप्तायां तस्यामानुपूर्व्यामक्षरमात्रस्यापि व्यत्यासे कृते वेदवाच्यत्वात्प्रच्यवते इति वैदिकानामभ्युपगमः। तथाहि 'अग्निमीडे पुरोहितम्' इत्यस्मिन् ऋङ्मन्त्रे अग्न्यादिपदानि, 'ईडे पुरोहितमग्निं' इति क्रमान्तरेण पठ्यमानानि वेदत्वाद्विहन्यन्त इति । सा चानुपूर्वी[1] प्रतिकल्पमेकरूपैव। न जातु भिद्यते मात्रयापि । प्राङ् निर्दिष्टतादृशानुपूर्वीविशेषविशिष्टं शब्दराशिमेव परमेश्वरः प्रतिकल्पं ऋषीणां हृदयेषु प्रहिणोति । अत एव वेदस्यापौरुषेयत्वं,[2] केनचित्पुरुषविशेषेणाऽकृतत्वादिति ।

स चाऽयं वेद ईश्वरस्यैव निश्वसितत्वादपौरुषेय उच्यते। इदमत्रावसेयम्। यत्सर्वेषु कल्पेषु समानानुपूर्वीविशिष्टशब्दराशिरूपवेदस्य प्रलयावस्थायामपि यथार्थतया सर्वज्ञेनेश्वरेण धार्यमाणत्वात्, पुनः सर्गारम्भे च तादृशानुपूर्वीविशिष्टस्यैव वेदस्य आद्यर्षीणामग्निवाय्वादित्याङ्गिरसां हृदयेषु यथापूर्वं प्रेर्यमाणत्वाच्च तन्नित्यत्वम् । एवं तादृशानुपूर्वीविशिष्टशब्दराशेः प्रयोक्तृपुरुषस्याभावादपौरुषेयत्वमिति पर्यवसितं भवति । प्रवक्तृपुरुषान्तरस्य कल्पनायां तु तत् पुरुषगतभ्रमप्रमादविप्रलिप्सादिदोषमूलकतया वेदात्मकस्य तच्छब्दस्याप्यप्रामाण्यप्रसक्तेः ।

अतः ईश्वरप्रवक्तृत्वादेव वेदस्यापौरुषेयत्वं नित्यत्वञ्च । अत एव स्वतःप्रामाण्यम् । न स स्वप्रामाण्यार्थं रविरिव रूपविषये प्रमाणान्तरमपेक्षते ।

---

१ इदमत्र बोध्यम्—यल्लोके सिद्धानामेव पदानां पौर्वापर्यनियममनङ्गीकृत्य यथेच्छं वाक्यानि प्रयुज्यन्ते कविभिः । तथाच वृद्धिसंज्ञासूत्रे भाष्ये संस्कृत्य-संस्कृत्य पदान्युत्सृज्यन्ते तेषां यथेष्टमभिसम्बन्धो भवति । यथा आहर पात्रं, पात्रमाहरेति। वेदे तु नियतमेव पौर्वापर्यं न तत्केनापि परिवर्तयितुं शक्यत इति विवेकः ।

२ अपौरुषेयत्वं पुरुषसम्बन्धरहितत्वम्। ईश्वरीयत्वमिति भावः।

समेषां प्रमाणानां तदायत्तत्वादिति भावः। लौकिकेऽलौकिके वार्थे वेद एव परमं प्रमाणमिति वैदिकानां परमोऽभ्युपगमः इति दिक्।

## वेदशब्दार्थः

अथ कोऽयं वेदशब्दस्य व्युत्पत्तिलभ्योऽर्थः इति जिज्ञासाया मुच्यते—"विद्यन्ते ज्ञायन्ते लभ्यन्ते वा एभिर्धर्मादिपुरुषार्थाः इति वेदाः" इति बह्वृक्प्रातिशाख्यवृत्त्युपक्रमे देवमित्रेण विहितं वेदशब्दव्युत्पादनम्। 'अपौरुषेयं वाक्यं वेदः' इति सायणीय ऋग्भाष्ये। 'इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो वेदयति स वेदः इति सायणीयकृष्णयजुर्वेदीयभाष्यभूमिकायाम्। तत्रैव सायणेन

"प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।
एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता॥"

इति वचनमभ्युपन्यस्तं प्रमाणत्वेन। आधुनिकभाष्यकारेण श्रीस्वामिना दयानन्देनापि स्वकीय-ऋग्वेदादिभाष्यभूमिकायाम्—'विदन्ति जानन्ति, विद्यन्ते भवन्ति, विन्दन्ति सर्वा सत्यविद्या यैर्येषु वा स वेद' इति व्युत्पत्तिः कृता। तदेवंविधानां सर्वेषामपि व्युत्पादनानां तात्पर्यविषयीभूतोऽर्थः समान एव। स च वेदानामखिलविद्यानिधानत्वेऽपौरुषेयत्वे नित्यत्वे च पर्यवसितोऽवेक्षितव्य इति।

एवं तात्त्विकदृशा विमृश्यमाने सुतरां प्रतिफलितं भवति यद् वेदो हि नामाशेषविशेषज्ञानविज्ञानप्रतिपादकं शाश्वतिकमपौरुषेयं शास्त्रम्। आम्नायः, आगमः, श्रुतिः वेदः, इत्यनर्थान्तरम्। सोऽयं वेदः त्रयीति पदेनापि परिभाष्यते, वस्तुतो वेदरचनायास्त्रैविध्यमेव वेदानां त्रयीत्वे बीजम्। या खलु रचना पद्यमयी सा ऋगुच्यते, या गद्यमयी सा यजुः, या च पुनर्गानमयी सा सामेति। तदाहुः भगवज्जैमिनिमुनिपादाः 'तेषामृग्यत्रार्थवशेन पादव्यवस्था। गीतिषु सामाख्या, शेषे यजुःशब्द इति।' [मीमांसा–२.१.३२-३३-३४] एतदेव च विशदीकृतं 'न्यायविस्तरे' माधवाचार्येणापि। तत्तु तत्रैवानुसन्धेयम्। सोऽयं गद्यपद्यगानलक्षणतया त्रयीसंज्ञितो वेदः ऋग्यजुःसामाथर्वेति चतुःसंहितासु विभक्तो विषयभेदात्। ये केचन व्यवतिष्ठन्ते यत् त्रय एव ऋग्यजुःसामाख्याः वेदाः पुरा आसन्; अथर्ववेदस्तु वस्तुतो न वेदः, अपितु उक्तवेदत्रयीपरिशिष्टरूपः, अतोऽर्वाचीनः, प्राचीनतमेषु ग्रन्थेषु तदुल्लेखाभावात्। तथा चोपलभ्यते प्राचीनेषु छान्दोग्यमन्वादिसंहितास्वपि त्रयाणामेव वेदानामुल्लेखः—तद्यथा :—

'अग्ने ऋचो वायोर्यजूंषि सामान्यादित्यादिति'। [छान्दो० ब्रा० ६।१७]

अपिच :--

'अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।
दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम्॥ [मनु० १।१३] इति।

किञ्च, अर्वाचीनेषु च ग्रन्थेषु बृहदारण्यकमहाभारतादिषु अथर्ववेदस्यापि यन्नामग्राहमुल्लेखनमुपलभ्यते, तत्त्वकिञ्चित्करम्। कुतः? उच्यते, तावता कालेनाथर्ववेदोऽपि विरचितोऽभूदिति सम्भाव्यते इति। तच्चिन्त्यम् प्रमाणासद्भावात्। ऋग्वेदेऽपि अथर्ववेदस्य नामोपलम्भाच्च। समस्तेऽपि वैदिके साहित्ये तादृशाभिमतस्य न कोऽपि उपलभ्यत आधारः। वस्तुतः त्रयीति व्यवहारस्तत्र रचनानिबन्धनो न खलु संख्यानिबन्धन इत्यवोचाम प्रागेव। यथा चैषां रचनानुबन्धी त्रयीत्वव्यवहारस्तथैव मन्त्रगतक्रियामनुरुध्यापि तेषां त्रैविध्यमुपपादितं यास्काचार्येण। तथा हि--

'ता ऋचः परोक्षकृताः प्रत्यक्षकृता आध्यात्मिक्यश्चेति भेदात्त्रिविधाः। ऋक्शब्दोऽत्र मन्त्रवचनः। यासु प्रथमपुरुषक्रियास्ताः परोक्षकृताः, यासु मध्यमपुरुषक्रियास्ताः प्रत्यक्षकृताः, यासु चोत्तमपुरुषक्रियास्ता आध्यात्मिक्य इति।''

अतः यत्र कुत्राऽपि प्राचां लेखेषु वेदे त्रयीत्वव्यवहारः, न स तच्चतुष्टयत्वनिरासाय अपितु केवलं तद्रचनात्रैविध्यमालम्ब्यैवेति दिक्।

## वेदेषु इतिहासोऽस्ति न वा?

वेदेषु इतिवृत्तमस्ति न वेति प्रश्नोदये पक्षद्वयमुज्जृम्भते। एकः पक्ष इतिहासवादी। अपरः इतिहासाभाववादी। वेदनित्यत्ववादिन एवेतिवृत्ताभाववादिनः। वेदानां नित्यत्वाभ्युपगमे तत्र पुरुरव-उर्वश्योः, वशिष्ठ-विश्वामित्रयोः, इन्द्रवृत्रयोः, इन्द्राहल्ययोः कथांशा उपाख्यानानि वा कथं संगच्छेरन्। नित्येषु खलु सत्सु वेदेषु तत्रानित्यानां मर्त्यानामुपाख्यानानि कथं नाम सम्भाव्येरन्? विलसन्ति च तत्र बहुत्र तादृशकथांशा इतिचेदुच्यते--यानि तु वृत्तान्तरूपेणाभासमानानि वृत्तानि तत्रोपलभ्यन्ते, तानि अर्थान्तरावगमार्थतया विभिन्नतात्पर्यत्वेन च सुधीभिरुन्नेयानि, इत्यवधेयम्। यदि क्वचिद्वेदेषु संज्ञापरा वशिष्ठादयः शब्दाः केषाञ्चिदनित्यमर्त्यानामवबोधकाः आपाततोऽवभासन्ते, न तावता तेषामस्मदादिवत् इन्द्रवृत्रादीनामितिहासपरत्वमवधार्यम् अपितु तत्वज्ञानपरमर्थान्तरमपि तेषां मृग्यम्। निरुक्तभाष्यकृद्भिः स्कन्ददुर्गप्रभृतिभिरपि महाभागैरेष एवार्थः सिद्धान्तितः। तद्यथा:--

"एवमाख्यानस्वरूपाणां मन्त्राणां यजमाने नित्येषु च पदार्थेषु योजना कर्त्तव्या।

एष शास्त्रे सिद्धान्तः । तथा च वक्ष्यति 'तत्को वृत्रः ?'[1] मेघ इति नैरुक्ताः ।

  

औपचारिकोऽयं मन्त्रेष्वाख्यानसमयः । परमार्थे तु नित्यपक्ष एवेति सिद्धम्" ॥

[स्कन्दस्वामी]

एवं प्रजापतेः सुतोपगमनम्, इन्द्रस्याहिल्योपगमनम् इत्याद्याः कथांशा विभिन्नतात्पर्यत्वेन व्याख्येयाः । व्याख्याताश्च किल ते तथैव वेदविद्द्भिः प्राक्तनैः ।

तद्यथा—ऐतरेये ऋग्ब्राह्मणे—"प्रजापतिर्वै स्वां दुहितरमभ्यधावद् दिवमित्यन्य आहुरुषसमित्यन्ये तामृश्योभूत्वा रोहितंभूतामभ्यैत्" इति कथांशः । अत्र मीमांसाभाष्य-वार्त्तिककार आह—'प्रजापतिस्तावत्प्रजापालनाधिकारादादित्यः एवोच्यते । स चारुणोदयवेलायामुषसमुद्यन्नभ्यैत् । सा तदागमनादेवोपजायते, इति तद्दुहितृत्वेन व्यपदिश्यते । तस्यां च अरुणकिरणाख्यबीजनिक्षेपात् स्त्रीपुरुषयोगवदुपचारः । इति तत्वम् । इत्थमेव शतपथब्राह्मणे इन्द्राहल्यावृत्तमपि प्रपञ्चितम् । तत्र निरुक्तकाराः आदित्योऽत्र जार उच्यते रात्रेर्जरयिता । तत्र वार्त्तिककारश्चापि 'एवं समस्ततेजाः परमैश्वर्यनिमित्तेन्द्रशब्दवाच्यः सवितैव । अहर्निलीयमानतया रात्र्याः अहल्याशब्दवाच्यायाः क्षयात्मकजरया हेतुत्वाज्जीर्यत्यस्मादनेनोदितेनेत्यादित्य एवाहल्याजार इत्युच्यते न तु परस्त्रीव्यभिचारात् ।' इति । एवंविधाः समस्ता अपि इतिवृत्तवदाभासमानाः कथांशा वैदिकैर्व्याख्यायन्ते । तेषां नयेन न मनाक् तत्रेतिवृत्तशङ्कावकाशः । ऐतिहासिकास्तु पुनर्वेदवाणीमशाश्वतिकीमृषिप्रणीतां पौरुषेयीञ्च मन्यमानाः, (न जातु अपौरुषेयीं) ये तत्रेतिहासमभिमन्यन्ते, ते विवृण्वन्ति च तांस्तान् कथांशानिति वृत्तरूपेणैवेति । सत्यम् सन्ति ते खलु अल्पीयांस एव । बाहुल्यं तु वेदवाणीमीश्वरीयत्वेनैव स्वीकुर्वतामवगम्यते । अतः तात्विकदृशा विमृश्यमाने नेदं प्रतिपत्तुं दुष्करम् यन्नित्यमपौरुषेयञ्च शास्त्रं तदितिवृत्तलवलेशमपि कथं संस्पृशेदिति । प्राधान्यं तु वेदानां नित्यत्ववादिनामेव, न खल्वितिहासवादिनाम् ।

## स्वराङ्कनप्रकारः

वेदमन्त्राणां पदपाठप्रक्षेपोत्सादादिविकारजातात्परिरक्षणार्थं हि स्वराणां प्रवृत्तिः । ते चामी स्वराः उदात्तानुदात्तस्वरितभेदात् त्रिविधाः ।

---

१. तत्को वृत्रः ? मेघ इति नैरुक्ताः, त्वाष्ट्रोऽसुर इति ऐतिहासिकाः । अपाञ्च ज्योतिषाञ्च मिश्रीभाव कर्मणो वर्षकर्म जायते, तत्रोपमार्थेन युद्धवर्णा भवन्ति । …………इत्येव वृत्रकथातत्त्वम् ।

तदेषां स्वराणामङ्कनप्रकारोऽधोऽङ्कितसरण्याऽवगन्तव्यः । उदात्तस्वरस्य तत्र न कापि चिह्नरेखा। अनुदात्तस्वरस्त्वधस्तात् तिर्यग् रेखयाऽङ्क्यते । स्वरितश्च पुनरुपरिष्टादूर्ध्वरेखया । स एष प्रकार ऋग्वेदीयैराद्रियते किल । तद्यथा :--

'यज्ञस्य' इत्यत्र यकारोऽनुदात्तोऽधस्तात्समरेखयाऽङ्कितः । 'ज्ञ'कार इति सर्वथा चिह्नरेखया रहित उदात्तः। 'स्य' इति च उपरिष्टादुच्छ्रितोर्ध्वरेखयाऽङ्कितः स्वरितः।

तेषु स्वरेष्वपि तावद् उदात्तानुदात्तौ स्वतन्त्रौ, स्वरितस्तु खलु तदुभयसमाहाररूप एव। तथा हि सूत्रयामास तत्रभवान् महामुनिः पाणिनिरपि :--उच्चैरुदात्तः, नीचैरनुदात्तः, समाहारः स्वरितश्चेति । तत्र ताल्वादिस्थानोर्ध्वभागनिष्पन्नोऽजुदात्तः । तत्र ताल्वादिस्थाननीचैर्भागनिष्पन्नोऽजनुदात्तः । उदात्तत्वानुदात्तत्वलक्षणवर्णधर्मसमाहारवाँश्चाच् पुनः स्वरितः इति ।

अपरे स्वराङ्कनप्रकाराः क्रमेण काठकमैत्रायणाख्ययजुर्वेदीयसंहिताद्वये, शतपथ ब्राह्मणे सामवेदे च दृश्यन्ते। तत्र यजुर्वेदे उदात्त उपरिष्टादूर्ध्वरेखाङ्कितः। शतपथे च पुनः स एवाधस्तात् समरेखयाऽङ्कितो भवति, साम्नि तु खलु स्वरत्रयस्योच्चैस्त्वादिस्थितिविशेषाभिव्यञ्जनार्थं, १.२.३. इत्येते अङ्काः प्रयुज्यन्ते। तत्र एकाङ्केन निर्दिश्यमानः स्वरः उदात्तोऽवगन्तव्यः इति दिक् । इमे च स्वराः केवलमचामेव धर्माः न जातु व्यञ्जनानाम्। तेषां सर्वत्राज्बोधकस्वरेणैव व्यपदेशात् । अजुपरागादेव क्वचित् स्फटिके जपाकुसमलौहित्यवत् व्यञ्जनान्यपि सम्भवन्ति तद्धर्मसंभाञ्जि गौणवृत्या। इमे च किल स्वरा वेदेष्वेव पुनः लब्धावसरा नक्वचिदन्यत्र, छन्दोऽधिकार एव स्वरसूत्राणामुपनिबन्धनात्, इत्यभिप्रयतां मतं तु न सर्वसम्मतमित्यश्रद्धेयम् ।

ये खलु सामवेदे प्रपञ्चिताः कुष्टप्रथमद्वितीयतृतीयचतुर्थमन्द्रातिस्वर्याभिधाः सप्तस्वरास्तेऽपि उदात्ताद्यवान्तरभेदभूता न कर्हिचित् तद्व्यतिरिक्ताः इति दृढमाकलयामः । केचित्तु नारदीयशिक्षामाश्रित्य व्यवतिष्ठन्ते यत्सङ्गीतशास्त्रप्रसिद्धाः षड्जादयः स्वरास्तेऽपि पुनरस्मि एव सामस्वरा न तेभ्योंऽशतोऽपि बेभिद्यन्ते । एतेष्वेव उदात्तानुदात्तस्वरितेषु, ते षड्जादयः स्वरा अप्यन्तर्भवन्ति । उक्तञ्च पाणिनीयशिक्षायाम् :--

'उदात्तो निषादगान्धारावनुदात्त ऋषभधैवतौ।
स्वरितप्रभवा ह्येते षड्जमध्यमपञ्चमाः ॥ इति ।

## स्वराणां प्रयोजनम्

किञ्च न केवलं वेदपाठपरिरक्षणार्थमेव स्वराणां प्रवृत्तिः। अपितु प्रयोजनान्तरवत्यपि सा। तत्तच्छब्दगतोऽर्थोऽपि स्वरैर्निर्धार्यते। अर्थविशेषावगतिहेतवो हि स्वरा भवन्ति। यथा चाह तत्रभवान् गोनर्दीयः पस्पशायाम् :—

"याज्ञिकाः पठन्ति 'स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत" इति। तस्यां सन्देहः स्थूला चासौ पृषती च स्थूलपृषती स्थूलानि पृषन्ति वा यस्याः सेयं स्थूलपृषतीति। तां नावैयाकरणः स्वरतोऽध्यवस्यतीति। यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः। अथ समासोदात्तत्वं ततस्तत्पुरुषः इति। इत्थं वेदार्थनिर्णयोऽपि स्वरायत्त एव। तथा च :—

"दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति। यथेन्द्रशत्रुः[1] स्वरतोऽपराधात्" इति। एतद्वचनमपि निर्दिष्टतत्त्वमेवोद्वलयति।

एवमेव वाक्यनिर्णयोऽप्यपरं प्रयोजनं स्वराणां निर्धार्यते। यत्र क्वचिन्मन्त्रेषु मुद्रणादिदोषवशंवदतया, विरामादिचिह्नाऽनङ्कितेषु कुतो वाक्यमारभ्यते कुत्र वावसीयते इति परिज्ञातुं न पार्यते तत्र स्वरलिङ्गैरेव निर्णेतुं शक्यते किल इदन्तयेति। तद्यथा—

'पत्नीवन्तं ग्रहं गृह्णाम्यग्न' इत्यत्र 'पत्नीव' इह अन्तिमं पदद्वयं किं पूर्ववाक्य सम्बन्धि ? उत वा उत्तरवाक्यसम्बन्धीति सन्देहे प्राप्ते स्वरेणावधार्यते यदि आमन्त्रितत्वादनुदात्तत्वं ततः पूर्वान्वयि, आद्युदात्तत्वे तु खलूत्तरान्वयि, इति। इत्थमेव "अदर्श्म ज्योतिरविदाम देवान्" इत्यत्र देवान् अदर्श्म, ज्योतिरविदाम इति नान्वयः स्वरविरोधात् इति स्वरावष्टम्भेनैवावगम्यते। एतस्मात् सम्यग् वाक्यभेदज्ञानमपि स्वराणां प्रयोजनान्तरत्वेनोन्नेयमितिदिक्।

## संहितापाठस्य परिरक्षणार्थमन्येऽपि कतिपयोपायाः

वेदानां परिरक्षणार्थं, केचनान्येप्युपाया अपि ऋषिभिर्निदर्शिताः। तेषु प्रथमः पदपाठः। येन संहितानि पदानि छित्वा संहितापाठस्य मौलिकं रूपं प्रदर्शितं भवति। मन्त्राणां मूलांशप्रक्षिप्तांशयोर्विवेचने, स एष पदपाठप्रपञ्च एव निकषायते। ततः संहितापाठं प्रक्षेपच्युत्यवसादादिविकारेभ्यः परित्रातुं पद, क्रम, घन, जटादि-

---

१. अत्र इन्द्रः शत्रुर्यस्य, इन्द्र एव वा शत्रुरिति इति सन्देहः स्वरेणैव निर्धार्यते।

पाठा आविष्कृताः । यथा न तत्राणुमात्रमपि दोषलेशः संश्लिष्येत् । नच मात्रयाऽपि कश्चिदाविलीकुर्यात् संहितापाठस्य तन्मौलिकमौज्ज्वल्यम् । तद्यथा :—

## पदपाठो यथा

अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ।
ऋ० १।१।१।

इत्यत्र:—

'अग्निं, ईले, पुरोहितं, यज्ञस्य, देवम्, ऋत्विजम् ।' इत्येवंविधः पदपाठः ।

## क्रमपाठः

क्रमपाठे पदपाठगतं प्रत्येकं पदं पूर्वोत्तरपदाभ्यां संगमय्य द्विरुच्चार्यते । यथा—

अग्नि ईले, ईले पुरोहितम्. पुरोहितं यज्ञस्य, यज्ञस्य देवं, देवं ऋत्विजम् ।' इत्येवंविधः क्रमपाठः ।

## जटापाठः

क्रमपाठमालम्ब्य प्रत्येकं पदयुगलं त्रिरुच्चार्यतेऽत्र द्वितीयावृत्तौ पदयोः प्रातिलोम्येनोच्चारणं भवति । यथा—

अग्नि ईले, ईले अग्नि, अग्नि ईले, ईले पुरोहितं, पुरोहितं यज्ञस्य, यज्ञस्य देवं, देवं यज्ञस्य, यज्ञस्य देवं, देवं ऋत्विजं, ऋत्विजं देवं, देवं ऋत्विजम् इत्येवंविधः पाठः जटापाठ उच्यते ।

## घनपाठः

घनपाठोऽयमतितरां सङ्कुलीभावेनोच्चार्यते । तद्यथा :—

अग्नि ईले, ईले अग्नि, अग्नि ईले , पुरोहितं, पुरोहितं, ईले अग्नि, अग्नि ईले-पुरोहितं, ईले पुरोहितं, पुरोहितं ईले, ईले पुरोहितं यज्ञस्य, यज्ञस्य पुरोहितं ईले, ईले पुरोहितं यज्ञस्य, पुरोहितं यज्ञस्य,यज्ञस्य पुरोहितं.पुरोहितं यज्ञस्य देवं, देवं यज्ञस्य पुरोहितं, पुरोहितं यज्ञस्य देवं, यज्ञस्य देवं, देवं यज्ञस्य, यज्ञस्य देवं ऋत्विजं, ऋत्विजं देवं यज्ञस्य, यज्ञस्य, यज्ञस्य देवं ऋत्विजमिति ।,इत्येवंविधो घनपाठः ।[1]

---

१. वेदानां परिरक्षणार्थं महर्षिभिः पाठप्रणालिराविष्कृता । पाठपद्धतिमनुरुध्य निर्भुजसंहिता, प्रतृणसंहितेति द्वेधा पाठो विभज्यते । तत्र मूलस्याविकलः पाठो निर्भुजपाठ उच्यते । मूलस्य विकृतरूपेण पाठः प्रतृणपाठ इति ध्येयम् । स च पाठः अष्टविधः ।

तदेवंविधा अष्ट[1] विकृतयो भवन्ति तास्तत्र तत्रैव यथाप्रकरणं प्रणिभालनीया जिज्ञासुभिः।

एवमेव प्रातिशाख्याख्यग्रन्था अपि वेदपाठस्य परिरक्षणार्थमेव विरचिताः। ये किल मन्त्रपदपाठे विश्लेषितानां पदानां पुनः संश्लेषे समुत्पद्यमानान् वर्णविकारविशेषान् व्याकुर्वन्ति। प्रतिशाखमधिकृत्य प्रवृत्तत्वादिमानि प्रातिशाख्यानि परिभाष्यन्ते।

तदित्थमेव संहितापाठस्य रक्षार्थं काचिदनुक्रमणी अपि न केवलं संहितापठितानां सूक्तानां मन्त्राणामपितु पदानामक्षराणाञ्चापि सङ्ख्याविशेषां निरूपयन्ती बहुधा तदीयविषयप्रसरमपि निर्दिशति। एवं संहितापाठः प्रक्षेपोत्सादादिभिर्विकारविशेषैः सर्वथा सुरक्षितः प्रतीयते। वेदप्रादुर्भावकालादारभ्य इदानीं यावदक्षुण्णतया अव्याकुलीभूतः परम्पराप्राप्तश्च स तथैव समुपलभ्यते, सर्वैः वेदविशेषज्ञैः सुभृशं समाद्रियते च बद्धश्रद्धैरिति न तिरोहितं विपश्चिताम्।

## वेदेषु पाठभेदः

एवं निर्दिष्टदिशा महतावधानेन संरक्षितेष्वपि वेदेषु बहुत्रोपनतः पाठभेदः किंहेतुक इति सम्प्रश्नः सुतरामुदेति। तत्रोच्यते, सत्यं, तादृशा अवभासमाना भेदा बहुशः परश्शतसंख्याकाश्च दृक्पथमवतरन्ति। परन्तु नैते भेदाः शब्दान्यत्वकृता अपितु संहितावशात् किञ्चित्स्वरूपभेदं प्रापिता बहुधा अवगम्यन्ते। प्राधान्येन लौकिकसंस्कृतोपनतसन्धिनियमवशादुदपद्यन्त। तत्त्वतो विमृश्यमाने विज्ञातं भवति यदीदृशा विकाराः प्रायशः सन्धिनिमित्तका एव। तेऽपि क्वाचित्का न सार्वत्रिकाः। ये तु खल्वन्ये विकारा शब्दान्तरत्वेनोपनम्यमाना दृश्यन्ते ते तु दवीयसः कालादागताः तत्तच्छाखाविशेषोपनता वर्णोच्चारणभेदपारवश्याद्वा क्रमिकधारावाहिकतया तथा पाठभेदत्वेन परिणताः। अल्पीयांस इमे पाठभेदाः न भूयांस इति। कारणान्तरं तु मृग्यमाणमपि बुद्धिसरणिं नावतरति। वस्तुतः किन्निमित्तका इमे पाठभेदा इत्येवंविधा जिज्ञासा तु नूनं भूयस्तरमनुसन्धानमपेक्षते, वेदविदाञ्च सुनिपुणमवधानम्।

याथार्थ्येन वेदार्थावबोधनार्थं साधारणरूपेण ब्राह्मणानि, प्रातिशाख्यम्, बृहद्देवता, सर्वानुक्रमणी, सूत्रग्रन्था, निरुक्तं, पूर्वमीमांसाद्या ग्रन्था अपेक्ष्यन्ते। सायणस्कन्दस्वाम्युद्गीथवेंकटमाधवोव्वटमाधवप्रभृतीनां वेदविदुषां भाष्याण्यपि

---

१. जटा माला शिखा लेखा ध्वजो दण्डो रथो घनः।
अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा मनीषिभिः॥ इति
[ व्याडिमुनिकृतायां विकृतिवल्ल्याम् ]

सहायभूतानि परं शाकलसंहितायाः संम्पूर्णं भाष्यन्तु सायणाचार्यस्यैवोपलभ्यते । न कस्याप्यन्यस्य सम्पूर्णभाष्यं दृष्टिपथमवतीर्णमद्यावधि ।

वेदार्थानां प्राधान्येन त्रैविध्यम्, आध्यात्मिकाधिभौतिकाधिदैविकभेदात् । आधियाज्ञिकमपि व्याख्यानं भवति । यद्यपि सायणाचार्येण यथाप्रदेशं सर्वविधा एव अर्थाः परिक्रान्ताः यथा इन्द्रशब्द ईश्वरदेवज्ञानविद्युत्परः प्रदर्शितः, वृत्रश्च असुराज्ञानमेघार्थको विवृतः । यथाप्रकरणञ्च समन्वयीकृत्यार्थो व्यधायि तथापि सविशेषं स यज्ञपरानेवार्थानुपलालयामास । हठादाकृष्यापि क्वचित्तु भिन्न-तत्त्वार्थकान् शब्दानपि यज्ञपरानेव व्याख्यातवान् । नूनमिदमत्याचरितं सायणस्य वेदमनीषिणो नाभिनंदन्ति । एवं स्वीक्रियमाणेऽपि, वेदार्थतत्त्वावबोधने सायणाचार्येण यन्महत्वसंवलितं भाष्यमारचितं तदभिलक्ष्य वेदविद्वांसो भगवतः सायणाचार्यस्य सर्वदैव स्थास्यन्ति कृतज्ञतापाशबद्धाः, इत्यत्र तु न कश्चित् सन्देहावसर इति ।

## वेदेष्वैतिह्यविभ्रमः

वेदेषु आख्यानसमयं नयनगोचरीकृत्य, तदितिवृत्तत्वेनोन्नयन्ति । परन्तु केवलंव्यक्तिनाममात्रोल्लेखेन, नदी-पर्वतादिवर्णनेन वा इतिवृत्तत्वं साधयितुं तु को नामाप्रमत्तः समुत्सहेत । वेदेषु शन्तनु-देवापीकथां प्रणिभाल्य, सुदास-विश्वामित्र-कण्वप्रभृतीनामाख्यानानि पर्यालोच्य, ऋग्वेदस्य दाशराजयुद्धवर्णलिङ्गा-न्यालोक्य, तथैव तत्र-तत्र गंगा-कुभा-असिक्नी-परुष्णी-वितस्ता-यमुना-विपाश्-सिन्धु-शतुद्री-सुवास्तु-प्रभृतिनदीनां नामानि दृष्ट्वा एवं मत्स्य-मगध-पुण्ड्र-कौशल-आदि प्रदेशनामानि नयनगोचरीकृत्य च वेदेषु इतिहासं वितर्कयन्ति बहवः । सायण-स्कन्दोद्गीथ-वेंकट-माधव-भट्टभास्कर-महीधरादि भाष्यकारा अपि तत्रेतिहासममन्यमानाः आख्यानप्रपञ्चानेवोपदेशरूपान् स्वीकुर्वाणाः तद्-रूपेणैव व्याख्यानं कुर्वन्ति । इतिहासाख्यानयोरनर्थान्तरत्वमुररीकुर्वाणा एते तादृश-विभ्रमविलासपाशे निपतन्ति ! 'तत्रेतिहासमाचक्षत' इत्यादि निरुक्तोक्तीरवलम्ब-माना यास्कमपि इतिवृत्तवादिनं मन्यन्ते । यास्काचार्यस्यापि प्रव्यक्तमितिहासपक्ष-खण्डनमवहेल्य, ते तमपि स्वपक्ष एव निपातयन्ति । परं यास्कस्तु ऐतिहासिकपक्षा-वलम्बिनः सन्तीति, तेषां पक्षमुद्धृत्य तत्खण्डनपराणि अर्थान्तराणि विधाय स सुस्पष्टमात्मीयमनैतिहासिकत्वं प्रमाणयति । वस्तुतः वेदेतिहासवादो यद्यप्यतीव प्राचीनः तथापि सोऽल्पदेशीयः सीमितश्च । इतिहासलक्षणाघटितश्चेति अन्य-त्रोपपादितप्रायम् । भवतु नाम तत्रोभयपक्षप्रसरस्तथापि न तावता वेदानां महत्त्वं परिहीयते । वेदे प्रतिपादितानि यानि महत्त्वपूर्णानि सार्वदेशिकानि सार्वकालिकानि तत्त्वज्ञानानि समुज्जृम्भन्ते तानि तु तदवस्थानि एवेति निर्विशङ्कम् ।

## वेदकालनिर्णयः

वेदाभ्यासप्रवणैर्भारतीयविद्वद्भिः वेदकालनिर्णयस्य दुरधिगम्यता प्रकटीकृता । वस्तुतस्तु तेषां नयेन परोक्षविषयीभूतस्य वेदस्य निर्माणकाल निर्णिनीषाभिनिवेश उपहास विशेष एव तथापि पाश्चात्यविपश्चिदपश्चिमैः वेदकालनिर्णये प्रशंसनीयः श्रमो विहितः । यद्यपि तेषां मतानि किल बहुधा भिद्यन्ते । तेषु तत्र कस्य सत्यं कस्य वाऽसत्यमिति विनिगमनाभावात्तानि प्रामाण्याच्च्यवन्ते । केचन खृस्तसंवत्सरात्प्राक् १००० वर्षदेशीयः, अन्ये तत्प्राक् २००० वर्षदेशीयः, भारतीयविद्वत्सु तिलकमहोदयाः खृस्तपूर्वः ४५०० वर्षदेशीयः, पावगीमहोदयः खृस्तपूर्वं ७००० वर्षदेशीयः, अविनाशचन्द्रदासः २५००० वर्षादारभ्य ७५००० वर्षपर्यन्तसमयान्तराल एव वेदनिर्माणकालः इति निश्चिन्वन्ति । परं न तेषामैकमत्यम् इत्यपि विद्वांसो विदाङ्कुर्वन्तु ।

## ऋग्वेदः

तत्र तावद् ऋग्वेदः--ऋच्यते स्तूयते प्रतिपाद्यार्थो यया सा ऋक्,[1] स एष ऋचां समूह एव ऋग्वेदपदवाच्यः । यश्च सूक्तमण्डलरूपेण ऋषिप्रवरेण शाकलेन विभाजितः । उक्तञ्च प्रातिशाख्ये:--

ऋचां समूह ऋग्वेदस्तमभ्यस्य प्रयत्नतः ।
पठितः शाकलेनादौ चतुर्भिस्तदनन्तरम् ॥

सुष्ठुतयोक्तत्वादेतत्सूक्तमित्युच्यते । सूक्तं स्तोत्रं स्तोममित्यनर्थान्तरम् । तथा च बृहद्देवतायाम्--

सम्पूर्णऋषिकाम्यन्तु, सूक्तमित्यभिधीयते ॥ [बृहद्दे०]

तदेतत्सूक्तं चतुर्विधम् ऋषिसूक्त-देवतासूक्त-छन्दःसूक्त-अर्थसूक्तभेदात् । तत्रैकर्षिदृष्टमन्त्राणां समूहः ऋषिसूक्तम्, एकदेवताकमन्त्राणां समूहः देवतासूक्तम्, समानच्छन्दसां मन्त्राणाञ्च समूहः पुनः छन्दःसूक्तं, यावदर्थसमाप्तमन्त्राणां समूहः अर्थसूक्तमुच्यते ।

उक्तञ्च--

"देवतार्थर्षिछन्दोभ्यो वैविध्यं तस्य जायते ।
ऋषिसूक्तं यावन्ति सूक्तान्येकस्य वै कृतिः ॥
स्तूयेतैका तु यावत्सु तत्सूक्तं दैवतं विदुः ।

---

१. तेषामृग्यत्रार्थवशेन पादव्यवस्था [जैमिनिः] । यत्र-पाद-व्यवस्था स मन्त्र ऋङ्नामा [शवरस्वामी २।१।२५] । पादेन चार्थेनोपेता वृतबद्धा मन्त्रा ऋच इति माधवः, [जैमिनिन्यायमालायाम् ।]

यावदर्थसमाप्तिः स्यादर्थसूक्तं वदन्ति तत्।
समानच्छन्दसो मन्त्राश्छन्दःसूक्तं तदुच्यते ॥
[बृहद्दे० १। १४। १५। १६]

सोऽयम् ऋग्वेदः, मण्डलानुवाकवर्गभेदेन, अष्टकाध्यायसूक्त भेदेनच द्वेधा विभक्तः। बालखिल्यसंज्ञकानि षोडशसूक्तानि विहाय अखिलसंहितायां दश (१०) मण्डलानि, पञ्चाशीति(८५)श्चानुवाकाः, अष्टोत्तरशतद्वय(२००८) मिताश्च वर्गाः। एवं अष्टकाष्ट(८)कम्, चतुःषष्टि(६४)रध्यायाः, सप्तदशोत्तर-सहस्राणि(१०१७) च सूक्तानि सन्ति। चतुर्दश(१४)छन्दोनिबद्धाश्च समस्ता मन्त्राः। मन्त्राश्च सर्वे दशसहस्रचतुःशतसप्तषष्टि(१०४६७)मिताः। तत्र महर्षि-शौनकस्यानुक्रमणीमनुरुध्य सर्वे मन्त्रा दशसहस्रपञ्चशतोत्तराशीति(१०५८०) मिताः। शब्दास्तु एकलक्षत्रिपंचाश सहस्राष्टशतोत्तरषड्विंशति(१,५३,८२६) संख्याकाः। अक्षराणि च पुनश्चतुर्लक्षद्वात्रिंशत्सहस्र(४,३२,०००)मितानि। परं शाकलसंहितानुगुण्येन गणना तु शौनकानुक्रमणीं न संवदति। कतिपयमन्त्राणां विलोपापत्तिः सुलभसम्भवा। इतिकृत्वैवैष भेद आपन्नो गम्यते। तथा हि--

ऋचां दशसहस्राणि ऋचां पञ्चशतानि च।
ऋचामशीतिपादाश्चैतद् पारायणमुच्यते ॥

मन्त्राणाञ्च संख्या १०५८० शौनकीयानुक्रमणीमतानुसारेण। परन्त्वत्र मतानि भिद्यन्ते विदुषाम्। विनिगमनाभावाद्यथार्थसंख्योल्लेखो न सुकरः। स च भेदः शतद्विशतमन्त्राणामन्तरालमेवालम्बते। नातोऽधिकम्। तदत्र युक्तायुक्तविवे-चनपरा विपश्चित एव प्रमाणम्।

स चायम् 'ऋग्वेदः' 'अग्निमीडे' इति प्रथमसूक्ताद्यमन्त्रादारभ्यान्तिम-सूक्तस्यान्तिम-'समानी वाकूति'रिति मन्त्रेण च समाप्तः समुल्लसति। अग्नि-सूक्तेनारब्धः संज्ञान-सूक्तेन समाप्त इति भावः।

## अथ वेदविषयोपन्यासः

कः खलु वेदप्रतिपाद्यो विषय इति प्रश्नस्त्वतीव जटिलः। कः खलु वेदाना-मविषयः? इति प्रश्नोऽपि समकालावच्छेदेनैव समुज्जृम्भते। को हि नाम स विषयो यो वेदेषु न चर्चितः। वेदो हि नाम अशेषविश्वविज्ञानविशेषपरिज्ञानप्रदं शाश्वतिक-मपौरुषेयं शास्त्रम्। "विद्यन्ते ज्ञायन्ते लभ्यन्ते एभिर्धर्मादिपुरुषार्था इति वेदाः" इति बह्वृक्प्रातिशाख्यवृत्त्युपक्रमे। "अपौरुषेयं वाक्यं वेद" इति सायणीय-ऋग्भाष्ये। "इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो वेदयते स वेदः।" इति सायणः। "विदन्ति जानन्ति, विद्यन्ते भवन्ति, विन्दन्ति, विदन्ते लभन्ते सर्वाः सत्यविद्या

यँ येंषु वा" इति दयानन्दः । तदेषां सर्वेषामपि व्युत्पादनानां तात्पर्यविषयीभूतोऽर्थः समान एव । स च वेदानामखिलविद्यानिधानत्वेऽपौरुषेयत्वे च पर्यवसित इति प्रागेवावोचाम ।

विश्वोत्पत्तिसूक्तेषु यदतिरमणीयमाभाति तत्तु नासदीयसूक्तम् । अस्मिन् सूक्ते सृष्टयुत्पत्तिक्रमविकासविषयका यादृशा प्रगल्भा विचाराः समुपलभ्यन्ते ते नूनं तत्त्वविशेषज्ञानामपि कुतूहलमुत्पादयन्ति । 'नासदासीन्नो सदासीदि'त्यादिना आपाततः पर्यालोचयतां प्रतिभाति यदेतत् सांख्य-प्रतिष्ठापितेन सत्कार्यवादेन सह संवादं न भजते । परं तात्त्विकदृशार्थपर्यालोचने सति तदेकपदे खपुष्पायते । नाऽत्र 'असत्' शब्दोऽभाववचनः, सत्स्वरूपाभववतीं प्रकृतिमभिधत्तेऽनुद्भूतरूपाम् ।

## नासदीयूसक्तम्

नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत् ।
किमावरीवः कुह कस्य शर्मन् अम्भः किमासीद् गहनं गभीरम् ।।
न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः ।
आनीदवातं स्वधया तदेकं तस्माद्धान्यं न परः किञ्चनास ।।
तम आसीत्तमसा गूढमग्रेप्रकेतं सलिलं सर्वमा इदम् ।
तुच्छ्येनाभ्वपिहितं यदासीत्तपसस्तन्महिनाऽजायतैकम् ।।
कामस्तदग्रे समवर्त्तताधि मनसो रेतः प्रथमं यदासीत् ।
सतो बन्धमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा ।।
को अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः ।
अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव ।।
इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न ।
यो अस्याध्यक्षः परमे व्योमन् सो अङ्ग वेद यदि वा न वेद ।।
[ऋ० १० । ११ । १२९]

किञ्च सृष्टि-सूक्तेष्वन्यतमं प्रधानतममेकं पुरुषसूक्तम् । विश्वविख्यातेऽस्मिन् पुरुषसूक्ते जगदिदं पुरुषविशेषादुत्पन्नम् । सच पुरुषविशेष ईश्वर एव सम्भवेत् । तत्रालङ्काररूपेण प्रपञ्चितमखिलविश्वमिदं विराट्पुरुषाकारेण परिणतमुपवर्ण्यते । तदिदं कस्य प्रतिभावतो न कुतूहलकरम् ।

## पुरुषसूक्तम्

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमि ँ सर्वतः स्पृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ।।१।।
पुरुष एवेदँ सर्वं यद्भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ।।२।।

एतावानस्य महिमा अतो ज्यायाँश्च पूरुषः।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥३॥
त्रिपादूर्ध्वमुदैत्पुरुषः पादोऽस्येहाभवत्पुनः।
ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥४॥
ततो विराडजायत विराजो अधि पूरुषः।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥५॥
तस्माद्यज्ञात्सर्वहुतः संभृतः पृषदाज्यम्।
पशूँस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ॥६॥
तस्माद्यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे।
छन्दाᳬंसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥७॥
तस्मादश्वा अजायन्त ये के चोभयादतः।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥८॥
तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥९॥
यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्।
मुखं किमस्यासीत् किं बाहू किमूरू पादा उच्येते ॥१०॥
ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्याᳬं शूद्रो अजायत ॥११॥
चन्द्रमा मनसो जातश्चक्षोः सूर्य्यो अजायत।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥१२॥
नाभ्या आसीदन्तरिक्षᳬं शीर्ष्णो द्यौः समवर्त्तत।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकां २॥ अकल्पयन् ॥१३॥
यत्पुरुषेण हविषा देवा यज्ञमतन्वत।
वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥१४॥
सप्तास्यासन् परिधयस्त्रिःसप्त समिधः कृताः।
देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ॥१५॥
यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥१६॥
अद्भ्यः संभृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्त्तताग्रे।
तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥१७॥
वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।
तमेव विदित्वाऽतिमृत्युमेति नाऽन्यः पन्था विद्यतेऽयनाय ॥१८॥

प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते ।
तस्य योनिं परिपश्यन्ति धीरास्तस्मिन् ह तस्थुर्भुवनानि विश्वा ॥१९॥
यो देवेभ्य आतपति यो देवानां पुरोहितः ।
पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥२०॥
रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन् ।
यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन् वशे ॥२१॥
श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे
पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।
इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण ॥२२॥
[यजुः]

अस्मिन् खलु पुरुषसूक्ते विश्वोत्पत्तिरहस्यमतीव रमणीयतयोपवर्णितम् । जगदुत्पादकस्येश्वरस्य महिमानं निरूप्य तत एव निखिलोत्पत्तिञ्च प्रदर्श्य विविधजीवानां समुद्भवः, वर्णव्यवस्थापनं, वेदाविर्भावः, जीवानाञ्च बन्धनम्, ऐहिकोन्नतिपुरस्सरं मोक्षमार्गप्रदर्शनमित्यादिकं सर्वमेव सृष्ट्युपयोगि तत्त्वजातं निर्दिश्य प्रकृतिनिगूढरहस्यं संग्रहेण प्रपञ्चितं विभाव्यते ।

इदञ्च पुरुषसूक्तं ऋग्वेदे षोडशर्चम् । अव्यक्तमहदादिविलक्षणो यः पुरुषविशेषः स एवास्य देवतात्वेनोन्नीयते । स च सर्वप्राणिसमष्टिरूपो ब्रह्माण्डविग्रहो विराडाख्यः । सोऽयं सहस्रशीर्षा । सहस्रशब्दोऽत्र अनन्तवचन उपलक्षणत्वात् । अनन्तशिरोभिर्युक्तः विराट् पुरुषः परमेश्वर इति यावत् । भूमिं ब्रह्माण्डगोलकरूपां विश्वतः वृत्वा परिवेष्टय, दशाङ्गुलमत्यतिष्ठत् । दशाङ्गुलमत्र उपलक्षणम् । ब्रह्माण्डाद् बहिरपि सर्वतो व्याप्याधिष्ठित इति भावः । इत्यनेन ब्रह्मणो विराट्पुरुषस्य परमेश्वरस्य सर्वव्यापकत्वं, सर्वनियन्तृत्वं, सृष्टिकर्तृत्वञ्चेत्युपोद्बलितं भवति । यद्यपि परमेश्वरस्येयत्ताभावात् पादचतुष्टयत्वं निरूपयितुमशक्यम्, तथाऽपि जगदिदं परमेश्वरापेक्षयात्यल्पमिति बोधनाय तत्पादत्वेनोपन्यासः । 'तस्माद् विराडजायत' तस्मात् आदिपुरुषात् विराड्-ब्रह्माण्डदेह उत्पन्नः । ततो भूमिसृष्टिः । भूमि-सृष्टेरनन्तरञ्च जीवानां पुरः शरीराणि ससर्ज । जीवानां नित्यत्वात् तत्सर्जनानुपपत्तेः । पुरः—पूर्यते सप्तधातुभिरिति तद्व्युत्पत्तेः । ततो वायव्या आरण्या ग्राम्याश्च पशवः अश्वा गावः जज्ञिरे । ततो वेदाश्च जज्ञिरे देवाः साध्या ऋषयश्च । अन्यत्सर्वं सुगमम् । इति सृष्ट्युत्पत्तिवर्णनम् इति ।

अन्यानि कानिचित् सूक्तानि इतिहासपरत्वेनाभासमानानि संवादरूपेण तत्तद्वस्तुतत्त्वज्ञानप्रतिपत्त्यर्थं प्रतिपादकान्यतिकौतुकावहानि विलसन्ति ऋग्वेदे । दशममण्डलस्य षडशीतितमे सूक्ते इन्द्राणीन्द्रसंवादः । तस्यैव सप्तोत्तरशततमे सरमा

देवशुनी नामेन्द्रस्य दूती, पणिभिश्चोरिता गाः प्रत्याहर्त्तुंकामा तैः सह तनोति संवादम्। एवं उर्वशी-पुरूरवसोः संवादस्तु प्रसिद्ध एव। एवं यम-यमीसूक्तमपि निरतिशयं मनोहारि। परमेतान्युपाख्यानानि पुरावृत्तविषयमतिरिच्य किमप्यन्यज्जीवनोपयोगि तत्त्वज्ञानमाविष्कुर्वन्ति हितोपदेशपरम् इति वैदिका मन्यन्ते। न खलु वेदे पुरावृत्त-विषयीकृतं तत्त्वं किमपि प्रतिपाद्यते नित्यत्वात्, अपौरुषेयत्वाच्च। न हि नित्येऽनित्येतिवृत्तचर्चा श्रद्धेया भवितुमर्हति। अतएव एतानि संवादरूपेणोपनतानि उपाख्यानानि, तत्त्वविद्यापरत्वेनैव विभाव्य व्याख्येयानि।

## गायत्रीमन्त्रः

वेदेषु सुप्रसिद्धो मन्त्रो गायत्रीमन्त्रः सवितृदेवताकः सवितारमभिलक्ष्य प्रवृत्तः। प्रतिपाद्यदेवतानुरोधेनैवायं सावित्रीत्यप्युच्यते। गायत्री तु छन्दोऽनु-रोधात्। एष च मन्त्रः प्रधानत्वात् त्रिष्वपि वेदेषु ऋग्यजुःसामसु उपलभ्यते। मन्त्रोऽयं वैदिकैरतीव महत्त्वमुपलम्भितः।

'तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि।
धियो यो नः प्रचोदयात्॥

केचनात्र 'सविते'तिपदेन सूर्यस्य, इतरे जगत्प्रसवितुः परमेश्वरस्य ग्रहणम-भिकांक्षन्ति। चतुर्विंशत्यक्षरा गायत्री। एवमष्टाक्षरनिबद्धैस्त्रिभिः पादैर्घटितं छन्दोऽदश्चतुर्विंशत्यक्षरात्मकम् परन्त्वस्मिन् मन्त्रे त्रयोविंशतिरेवाक्षराणीति कृत्वा केचन ओमिति संयोज्य, अपरे 'वरेण्यं' इत्यतेत् 'वरेणिय'मिति विभज्य, चतुर्विंशत्य-क्षराणि साधयन्ति। ब्रह्मपरत्वेनाभ्युपगमान्मन्त्रोऽयं 'ब्रह्मगायत्री' पदेनापि व्यव-ह्रियते। एष एव मन्त्रः सर्वमन्त्रगुरुत्वात् 'गुरुमन्त्रो'ऽप्यभिधीयते। नित्यसन्ध्यो-पासनादिषु केनाऽपि गौरववैलक्षण्येनैव मन्त्रोऽयं जपादौ प्राधान्येन निवेशितोऽव-धार्यते॥

## वेदतत्त्वज्ञानमीमांसा

अस्मिन् संसारप्रपञ्चे, जीवननिर्वहणार्थं यावज्ज्ञानमावश्यकं तावद् भगवता परमेश्वरेण वेदद्वारा जनेभ्यः प्रदत्तम्। तच्च ज्ञानं न कस्मैचिद्वर्गविशेषाय अपितु मनुष्यमात्राय प्रदत्तम्। आम्नातं तथैव वेदे—'यथेमां वाचं कल्याणीमा-वदानि जनेभ्यः। ........,इति। तदेवं वेदेषु सर्वेषामेव जिज्ञासूनामधिकारः प्रतिपादितो भवति।

## दीर्घायुष्ट्वम्

लोके एकः प्रवादः प्रचरति 'जीवन्नरो भद्रशतानि पश्यति' इति। एतेन विज्ञाप्यते यज्जीवनसाफल्यार्थं सर्वोत्कृष्टमावश्यकं मूल्यवच्च वस्तु यदस्ति

तदायुर्नाम। सति दीर्घे आयुषि एव मनुष्यः स्वमनोरथतरुं सफलयितुं पारयते, नाल्पायुष्को जनः। अतः तथा प्रयतितव्यं मनुष्येण यथा स दीर्घायुष्ट्वं लभेत। 'शतायुर्वै पुरुषः' इति शतवर्षमितं परिमाणसामान्यमायुषः। शतादपि अधिकं भवितुमर्हति। आम्नातञ्च तथाहि :—

'तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतं भूयश्च शरदः शतात्।' इत्यत्र 'भूयश्च शरदः शतादिति' पदमायुषः शतवर्षादपि भूयस्त्वं सङ्केतयति।[1] अपि च

"त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं यद्देवेषु त्र्यायुषम् तन्नोऽस्तु त्र्यायुषम्।"
........इति अस्मिन् मन्त्रे[2] सहस्रवर्षमितमायुरुपभोक्तुं शक्यते मनुष्येण यथावदूर्ध्वरेतस्केन यथोपदेशानुष्ठानेन पूर्णादित्यब्रह्मचारिणा योगानुष्ठानपुरस्कृतजीवनयापनेनेति निर्दिष्टं भवति। तत्सिद्ध्यर्थं ब्रह्मचर्याश्रमधर्म उपदिष्टः। ब्रह्मचर्यपूर्वकं विद्याध्ययनं यस्मिन्नाश्रमे स ब्रह्मचर्याश्रम उच्यते, प्रथमाश्रमापरपर्यायः। सोऽयमाश्रमः मानवजीवनस्याधारभित्तिरूपः अपरिहार्यत्वेनानुष्ठेयः इत्यनेकैर्मन्त्रवर्णैराम्नातम्।

## देवता ज्ञानस्य प्राधान्यम्

वेदार्थविधौ हि दैवत-परिज्ञानं प्रधानम्। अविदित्वा तु दैवतं न यथार्थार्थसंविधानाय कश्चित् कल्पते। तथा कुर्वाणश्च अविदितदैवतविज्ञानो व्याकुलीकरोति मन्त्रप्रतिपाद्यमाशयमिति वेदविदां प्रवादः। विज्ञातदैवतेनापि विनियोग-

---

१. दीर्घायुःप्राप्त्यर्थमथर्ववेदेऽपि श्रूयते :—
"उत्क्रामतः पुरुष मावमंस्था मृत्युः षड् वो शमवमुञ्चमाना।
मा च्छित्था अस्माल्लोकादग्नेः सूर्यस्य संदृशः॥"
[८।१।१।४]

२. शतवर्षमितमेकमायुरुच्यते-तादृंशि त्रीणि आयूंषि इति त्र्यायुषं, तज्जमदग्नेः ज्वलज्जठराग्नेः पुरुषस्य सुलभम्। पुनश्च द्वितीयं त्र्यायुषं कश्यपस्य—पश्यकस्येति यावत्, चक्षुष्मतो सम्यग्ज्ञानध्यानप्रेक्षावत इत्यर्थः, पुनश्च त्र्यायुषंदेवेषु दिव्यगुणवत्सु परिपूर्णयमनियमादिअनुष्ठातृषु यत्सम्भवति तदायोज्य सर्वं नवशतमितं भवति मिलितम्। ततः शतवर्षसामान्यमायुर्मिलितं तत्सहस्रायुर्भवतीति निर्दिश्यते स्फुटम्। तथा चोक्तं बृहद्देवतायां—'महानाम्न्यः ऋचो गृह्यश्चैन्द्र्याश्चैव यो वदेत्। सहस्रयुगपर्यन्तं अहर्ब्राह्मं स राध्यते। [८: १८]

वशात् कृतोऽर्थो न मनाक् स्वारस्यमश्नुते। विनियोगो[1] हि नाम मन्त्राणां इदंकर्त्तव्यतया कर्मभिर्विशेषः सम्बन्धः। उक्तञ्च--"अनेनेदं तु कर्त्तव्यं विनियोगः प्रकीर्त्तितः" इति। स च विनियोगः द्विविधः सामान्यो विशेषश्च। कृत्स्नायाः संहिताया आम्नातक्रमेण यस्मिन् कस्मिन् वापि कर्मणि कृतो विनियोगः सामान्यः। विशेषस्तु तत्तत्क्रतौ सूत्रकारैराश्वलायनादिभिः सविशेषं निर्दिष्टः। स च पुनस्त्रिविधः सूक्तविनियोगः, त्र्यर्चादिविनियोगः, एकर्चादिविनियोगश्च। तद्विनियोगानुरोधेन, तत्तत्क्रत्वर्थमपेक्ष्य कृतस्यार्थस्य, मन्त्रार्थस्वारस्यविरहान्न तथा प्रामाण्यं यथा दैवतमपेक्ष्य प्रकरणानुरोधेन मन्त्रगतपदार्थस्योहापोहव्यूह-समर्थितस्यार्थस्य। अतः विनियोगमनुसन्धाय कृतोऽर्थो न कर्हिचित् संहिताया-माम्नातमंत्रक्रमस्वारस्यमधिष्ठाय कृतस्य वेदार्थस्य तुलामधिरोहति।

तस्मान्मन्त्रस्वारस्यसमर्पितोऽर्थ एव मुख्यः। विनियोगजोऽर्थश्च गौण इत्यवसेयम्।

## पृथिव्या गतिद्वैविध्यम्

'आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः। पितरञ्च प्रयन्त्स्वः। [यजु० ३।८]

अस्मिन् मन्त्रे पृथिव्याः स्वाक्षोपरि प्रात्यहिकं भ्रमणं सूर्यमभितश्च वार्षिक-प्रदक्षिणमावर्त्तनमिति द्विविधा गतिः प्रव्यक्तं प्रतिपादिता। अत्र पृश्निः भूतानां प्राणरक्षिका गौः असदत्--अविरतं मातरं=मानदण्डभूतं स्वाक्षदण्डम् अक्रमीद् भ्रमति। पुनः पितरं भूतानां पातारं सूर्यमित्यर्थः। पुरः पुरतश्च स्वः प्रयत् द्युलोकं प्रयन् आक्रमन्ती सती आ-समन्तात् प्रदक्षिणं पुर एव आवर्त्तत इति भावः। तदेद् भूभ्रमणविज्ञानं समुपदिष्टं भवति। इति मन्त्रमाधारीकृत्यैव कदाचिदार्य-सिद्धान्ते भूमेर्गतिद्वैविध्यमभिव्यक्तीकृतम्।[2]

---

१. कर्मभिः सम्बन्धो विनियोग इत्युक्तम्। तत्र कस्य केन कर्मणा विनियोग कुतश्चेत्येतद्विषये मीमांसकैः श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यालक्षणानि षट् प्रमाणानि सूत्रितानि, तेषां पूर्वापेक्षया परवर्त्तिनां दौर्बल्यम्। तत्र साक्षा-त्सम्बन्धबोधकः शब्दः श्रुतिः। श्रुतिमपेक्ष्य विनियोगः श्रौतविनियोगः। लिङ्गं नाम शब्दनिष्ठम् अर्थनिष्ठं वा सामर्थ्यम। तदपेक्ष्य कृतो विनियोगो लैङ्गिक-विनियोगः इति दिक्।

२. प्रायशः ४२१ मितशाकोद्भवेन आर्यभट्टेनापि स्वीये आर्यसिद्धान्ते 'अनुलोमगतिर्नौस्थः पश्यत्यचलं विलोमगं यद्वत्। अचलानि भान्ति तद्वत् सम-पश्चिमगानि लङ्कायामित्यादि सन्दर्भेण भूमेर्गतिद्वैविध्यमभिव्यक्तीकृतम्।

## व्योमयानविज्ञानम्

किञ्च व्योमयानवर्णनमप्युपलभ्यते वेदे :—

'तुग्रो ह भुज्युमश्विनोदमेघे रयिं न कश्चिन्ममृवाँ अवाहाः ।
तमूहथुर्नौभिरात्मन्वतीभिरन्तरिक्षप्रुद्भिरपोदकाभिः ।। [ऋक् १।११६।३]

अस्मिन् मन्त्रे आख्यानरूपेण व्योमयानवर्णनमाम्नातम् । तुग्रो नाम राजर्षिः अरातिविजयाय स्वसुतं भुज्युनामानं नावा प्राहैषीत् । तमेतं नौभिः अश्विनावूहथुः । कीदृशीभिर्नौभिरित्याह—आत्मन्वतीभिः यान्त्रिकयोजनया गतियुक्ताभिः पुनः अन्तरिक्षप्रुद्भिः अन्तरिक्षे गच्छन्तीभिः अतएव अपोदकाभिः उदकसम्पर्करहिताभिः, इत्यर्थः । अत्रायमाशयः, जलस्थलान्तरिक्षगामिन्यो नौका व्योमयानादिवाहनविशेषा निर्मातव्याः ।

## वेदे वर्णाश्रमधर्मविषयः

वेदानां पर्यालोचनेन ज्ञायते यन्मनुष्याणां कर्मादिभेदतः पञ्च श्रेणिविभागाः उपदिष्टाः, ब्राह्मणः, क्षत्रियः, वैश्यः, दासः, दस्युश्चेति । तेषु चत्वार[1] आर्याः । दस्युश्चानार्यः । ते भेदा पश्चाज्जातिपदेनोपचरिताः । जातिशब्दश्च जन्मवचनः । अतएव तदनुक्रामति काले ते-ते भेदा जन्मना एव प्रवृत्ताः । जातिः जन्मानुसारिणीति लोकोक्तिरपि तदानुगुण्येन प्रचलिता । परन्तु अभ्युपगमोऽयं वेदैर्न संवदतीति वैदिकसाहित्यावलोकने विभाव्यते । तथा चापस्तम्बे :—

"धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ । अधर्मचर्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ' इति [२.५.१०-११] परन्तु केचनात्र विप्रतिपद्यन्ते, जातिशब्दस्य जन्मपर्यायत्वेन, जन्मान्तरे जातिपरिवर्तनमिति भावेनैवैतदुक्तमित्यभ्युपगच्छन्ति ।

एभिः सर्वैर्जनैः परस्परं प्रीतिभावेन वर्त्तितव्यमित्यप्युपदिष्टं भवति ।

'प्रियं मा कृणु देवेषु प्रियं राजसु मा कृणु ।
प्रियं सर्वस्य पश्यतः उत शूद्र उतार्ये ।।
[अथर्व० १८।१।८।१]

१ 'ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत' ।। [ऋक् १०।९०।१२]

अपि च :—

ब्राह्मणे ब्राह्मणं क्षत्राय राजन्यं मरुते वैश्यम् तपसे शूद्रम् [यजुः]

इति समानभावेन स्नेहभावोऽभिनन्दनीयः सर्वेषु मानवसमाजेष्विति निर्दिष्टं भवति। न जातु वैषम्यनैर्घृण्ये इति भावः।

## ब्रह्मचर्याश्रमः

वेदाध्ययनेनाऽवगम्यते यन्मानवजीवनं चतुर्षु विभागेषु विभक्तम् । ते च चत्वारो विभागाः चत्वार आश्रमा अप्युच्यन्ते । आश्रम्यते स्थीयते यस्मिन् स आश्रमः। ते च आश्रमाः, ब्रह्मचर्य-गृहस्थ-वानप्रस्थ-संन्यासलक्षणाः । पञ्चविंशतिवर्षपर्यन्तमेकस्मिन् एकस्मिन् आश्रमे विश्रम्य चत्वारोऽपि आश्रमास्सेव्यत्वेन निर्दिष्टाः, तत्रापि ब्रह्मचर्याश्रमाख्यप्रथमाश्रमस्तु सर्वैरेव जनैः अपरिहार्यत्वेन परिपालनीयः । प्रथमाश्रममन्तरा आश्रमान्तराणि अनुष्ठातुं न शक्यन्ते । गृहस्थादित्रयः आश्रमास्तु ऐच्छिकाः । तत्परिपालने पुरुषः सर्वथा स्वतन्त्रः। परन्तु प्रथमाश्रमानुष्ठाने स स्वातन्त्र्यन्नार्हति । यतः प्रथमाश्रम एवालम्बः सर्वाश्रमान्तराणाम् । सिद्धे सति प्रथमाश्रमे सर्वे आश्रमास्सफला भवन्ति । इति तस्य प्राधान्यमपरिहार्यत्वञ्च प्रतिपादितम् । आचार्यो ब्रह्मचारी भवन्नेव सफलाचार्यो भवति। राजा ब्रह्मचारी सन्नेव राष्ट्रं रक्षति। युवा ब्रह्मचारी सफलतामश्नुते। युवतिः कन्याऽपि ब्रह्मचारिणी भवन्ती साफल्यं भजते। अस्मिन् हि आश्रमे प्रतिष्ठितस्य जनस्य शारीरिकी मानसी च स्थितिः सम्यग्व्यवस्थिता विकसिता च भवति। "प्राणापानौ जनयन्नुदव्यानौ" इत्यनेनादिश्यते। ब्रह्मचर्यमनुतिष्ठन् हि ब्रह्मचारी "भ्राजद् ब्रह्म ज्ञानज्योति र्बिभर्ति। तस्मिन् (विश्वेदेवाः) सर्वे दिव्यगुणाः समेताः समाविष्टा भवन्ति। अथ च वाचं, मनो, हृदयं, ब्रह्म, मेधां जनयन् वर्त्तते इति। वाक्शक्ति, र्मनोबलं, सौहार्द, ज्ञानज्योतिः, बुद्धिबलञ्च सर्वोत्कृष्टत्वेन प्रवर्त्तन्ते इति भावः।" किञ्च, 'स स्नातो बभ्रुः पिङ्गलः पृथिव्यां बहु रोचते" स ब्रह्मचारी स्नातको भूत्वा तेजस्वी स्वर्णवर्णः पृथिव्यां निरतिशयं देदीप्यमानो विभाति इत्याशयः । सर्वाश्रमाणां श्रेष्ठतमे द्वितीयाश्रमे गृहस्थाख्ये, प्रविशन्ति, प्रवेशयोग्यतामासाद्य, विद्यातपोभ्यां शारीरिकीं मानसीं शक्तिरूपाम् यदीच्छति गृहाश्रमे प्रवेष्टुम् । अन्यथा यावदायुषं पुनीतं ब्रह्मचर्य्यं चरन्तः उर्ध्वरेतस्काः भवन्तः, प्रसाधयन्तः चित्तप्रसादनीश्चतस्रो मैत्र्यादिभावनाः, प्रसादयन्तश्च विशोकां ज्योतिष्मतीं चित्तवृत्तिं, ऋतम्भरां प्रज्ञामासादयन्तः, प्रदीपयन्तश्चोजस्वलमन्तर्ज्योतिः, निर्धूतसकलकलमषाः स्फटिक इव विशुद्धान्तःकरणा निर्मलाः सन्तो ब्रह्मानन्दमुपरसयन्तः सन्तः ब्रह्मभूयाय कल्पन्ते, मानवजीवनस्य चरमोद्देश्यं पल्लवयन्तः।

सोऽयम् आश्रमाणां प्रथमः सर्वोत्कृष्टश्च ब्रह्मचर्याश्रमः मानवजीवनस्याधारभूतः । ब्रह्मचर्याश्रम एव शारीरिकीं मानसीञ्च शक्ति विकासयति, विशद-

यति च विद्याबुद्धिबलं बालः। तदेतं ब्रह्मचर्यमहिमानं प्रदर्शयन्तः कतिपये मन्त्रा अत्र प्रस्तूयन्ते--

आचार्य उपनयमानो ब्रह्मचारिणं कृणुत गर्भमन्तः।
तं रात्रीस्तिस्र उदरे बिभर्त्ति तं जातं द्रष्टुमभिसंयन्ति देवाः॥२॥
इयं समित्पृथिवी द्यौर्द्वितीयोतान्तरिक्षं समिधा पृणाति।
ब्रह्मचारी समिधा मेखलया श्रमेण लोकाँस्तपसा पिपर्त्ति॥
पूर्वो जातो ब्रह्मणो ब्रह्मचारी घर्मं वसानस्तपसोदतिष्ठत्।
तस्माज्जातं ब्राह्मणं ब्रह्म ज्येष्ठं देवाश्च सर्वे अमृतेन साकम्॥

* * *

आचार्यो ब्रह्मचारी ब्रह्मचारी प्रजापतिः।
प्रजापति र्विराजति विराडिन्द्रोऽभवद्वशी॥
ब्रह्मचर्येण तपसा राजा राष्ट्रं विरक्षति।
आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छते॥
ब्रह्मचर्येण कन्या ३ युवानं विन्दते पतिम्।
अनड्वान् ब्रह्मचर्येणाश्वो घासं जिगीर्षति॥
ब्रह्मचर्येण तपसा देवा मृत्युमुपाघ्नत।
इन्द्रो ह ब्रह्मचर्येण देवेभ्यः स्व राभरत्॥

* * *

चक्षुः श्रोत्रं यशो अस्मासु धेह्यन्नं रेतो लोहितमुदरम्॥
तानि कल्पद् ब्रह्मचारी सलिलस्य पृष्ठे तपोऽतिष्ठत्तप्यमानः समुद्रे।
स स्नातो ब्रभ्रुः पिङ्गलः पृथिव्यां बहु रोचते॥ इति॥

अस्मिन् खलु ब्रह्मचर्यकाले गुरुकुलाश्रमे निवसन्तो ब्रह्मचारिण आचार्यसकाशात् विविधा विद्याः, विज्ञानानि, शिल्पकलाश्च शिक्षन्ते निःशुल्कम्। तदर्थं वेदेऽतिरमणीयं वाणीसूक्तं प्रवर्त्तते सहृदयहृदयावर्जकम्। ऋग्वेदस्य दशममण्डलस्य एकसप्ततितमं सूक्तम् :--

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताऽधिवाचि।

[ऋ० १०।७१ सू०]

यज्ञेन वाचः पदवीयमायन्तामन्वविन्दन्नृषिषु प्रविष्टाम्।
तामाभृत्या व्यदधुः पुरुत्रा तां सप्तरेभा अति संनवन्ते॥३॥
उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं वि सस्रे जायेव पत्य उशती सुवासाः॥४॥

उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु।
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् ॥५॥
अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः।
आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे ॥७॥
इमे ये नार्वाङ्न परश्चरन्ति न ब्राह्मणासो न सुतेकरासः।
त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञयः ॥९॥

वाणी, विद्या, सरस्वती, भारती इत्यनर्थान्तरम्। सेयं वाणी द्विविधा, परा-अपराभेदात्। या हि ज्ञानविज्ञानपदेनापि परिभाष्यते। तत्र ज्ञानं आध्यात्मिकमभिधत्ते, विज्ञानञ्च भौतिकं तद्धि विद्या-अविद्यापदेनापि श्रूयते। यत्रेदमाम्नातं भवति विद्याञ्चाविद्याञ्चेति। यत्र ज्ञानमन्तरेण विज्ञानमन्धम् तत्र विज्ञानमन्तरेण ज्ञानमपि पङ्गु। अन्ध-पङ्गु-न्यायेनोभयोर्मिथः सहकारभाव एव कल्पते सिद्धये नान्यथा। 'सक्तुमिव तितउना पुनन्तः' इति मन्त्रलिङ्गेन व्यज्यते यथा तितउना पुनीताः सक्तवः भवन्ति तद्वन्मनसा मननशक्तिशालिमेधया, वाचं विद्यां ज्ञानविज्ञानरूपां पुनन्त इति भावः।

## वेदे गृहस्थाश्रमोपदेशः

गृहस्थाश्रमो हि नाम मानवसमाजस्य मूलाधारभूतः कोऽपि परमपुनीतः प्रेयःप्रधानः श्रेयस्साधनश्चाश्रमः। एष हि आलम्बः सर्वोन्नतीनां, प्रश्रयः समस्तसुखसम्पदाम्। एतदाश्रमोत्कर्षेणैव संसिध्यति मानवानां शारीरिकी, आध्यात्मिकी, मानसी चोन्नतिः। अतएवाश्रममम्ं, मनीषिणः आमनन्ति सर्वेतराश्रमाणामाधारभूमिम्। अस्य गृहस्थाश्रमस्य चोपक्रमः विवाहसंस्कारेण सञ्जायते। विवाहविधिप्रतिपादका मन्त्रा अतीवरमणीयार्थं पल्लवयन्तः कस्य मनीषिणो हृदयोल्लासं नातन्वते।

'शुद्धाः पूता योषितो यज्ञिया इमा ब्रह्मणां हस्तेषु पृथक् सादयामि।
यत्काम इदमभिषिञ्चामि वोऽहमिन्द्रो मरुत्वान्त्स ददातु मे।
[अथर्व, ६।१२२।५]

अयं भावः—शुद्धाः पूताः यज्ञियासः वैवाहिकयज्ञयोग्याः योषितः तरुण्यः ब्रह्मणां ज्ञानिनां हस्तेषु प्रदातव्या इति भावः। तदेतेन तरुणीनां विवाहो योग्यः, ताश्च ज्ञानिभ्यः पुरुषेभ्य एव प्रदेया इति निर्दिश्यते।

## वेदे स्त्रीपुरुषयोः समानाधिकारः

वैदिकदृशा विमृश्यमाने तु वेदेषु स्त्री-पुरुषयोः समानाधिकारः उपदिष्टो विभाव्यते। अन्तरेण पुरुषं नारी नार्थकरी, पुरुषोऽपि तथैव नारीं विना अपार्थः।

उभयोरनयोः मिथः सम्पृक्तयोः सायुज्यं सहकारिता चैवार्थावहा सती फलाय कल्पते समानभावेन। नानयोर्विषये उत्कर्षापकर्षौ पदं दधतः। मन्यामहे पुरुषो जनिता-जनकः, परं स्त्री अपि जननीति न विस्मर्त्तव्यम्। यानि कार्याणि पुरुषाः साधयन्ति, सत्यं, तानि स्त्रियः साधयितुं न परिवृढाः। परन्तु यानि स्त्रियः साधयन्ति तानि पुरुषा अपि साधयितुं न प्रभविष्णव इत्यप्यपेतशङ्कम्। अत उभयोः शिक्षा दीक्षा च पितृभ्यां समानभावेन सम्पादनीयेति वेदनिर्देशः।

विवाहसूक्तमिदमतीव रमणीयार्थप्रतिपादकम्। विवाहविधौ प्रयोजनीयेषु मन्त्रेषु प्रधाना निम्नाङ्किताः। तत्र सौभाग्याय दम्पती हस्तग्रहणं कुरुतः। वरो वधूमभिभाषते--

'गृभ्णाभि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः।
भगो अर्यमा सविता पुरन्धिः मह्यं त्वादुर्गार्हपत्याय देवाः॥

ततो अग्निरभ्यर्थ्यते:--

तुभ्यमग्रे पर्यवहन्त्सूर्यां वहतुना सह।
पुनः पतिभ्यो जायां दा अग्ने प्रजया सह॥

ततो विवाहसंस्कारानन्तरं नवोढयोर्दम्पत्योः नित्यमाङ्गल्यमाशंसितुं प्रवर्तन्ते मन्त्राः। तथा हि--

'इहैव स्तं मा वियौष्ट विश्वमायुर्व्यश्नुतम्।
क्रीडन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे॥

वैदिकसंस्कृतिप्रसिद्धेषु षोडशसंस्कारेषु विवाहः खलु प्रधानतमः। विवाहो हि नाम दम्पत्योः कोऽपि अविच्छेद्योऽग्निसाक्षिकः सम्बन्धो मैत्रीभावरूपो मन्त्रैर्नियन्त्रितः। पाणिग्रहणानन्तरं वधूवरौ ब्रुवाते :--

समञ्जन्तु विश्वे देवा समापो हृदयानि नौ।
सम्मातरिश्वा सं धाता समु देष्ट्री दधातु नौ॥

विवाहविधौ हि प्रथमं तावत्पणिग्रहणं, ततो यज्ञाग्निपरिक्रमा, ततो लाजाहोमः, शिलारोहणं, ध्रुवदर्शनं, सूर्यदर्शनं, सप्तपदी च। ततो मिथः सम्मानं सौहार्दम्। अन्योऽन्यदोषसहिष्णुत्वं ततः आत्मोत्सर्गादिप्रदर्शनम्। परिणीताया देव्याः पतिकुलं कीदृशं गौरवास्पदं पदमित्यपि ध्वनयति श्रुति :--

साम्राज्ञी श्वशुरे भव साम्राज्ञी श्वश्र्वां भव।
ननान्दरि साम्राज्ञी भव, साम्राज्ञी अधिदेवृषु॥

अहो कीदृशं सम्मानास्पदं पदं स्त्रीभ्यः समर्पितं वेदे। पाणिग्रहणानन्तरं वधूः श्वशुरकुले निवसेदिति निर्दिशन्नाह--

भगमस्या वर्च आदिष्यधि वृक्षादिव स्रजम् ।
महाबुघ्न इव पर्वतो ज्योक्पितृष्वास्ताम् ॥ [अथर्व० १।१४।१]

अस्याः कुमार्या भगमैश्वर्यं वर्चः ओजः प्रतिष्ठामित्यर्थः वृक्षादिव स्रजम् आददामि। पितृषु मम पितृकुले इदं निरन्तरं पर्वत इव निश्चला भवतु । स्वपितृदेशात् वृक्षात् स्रजमिव पृथग्भूय सम्प्रति श्वशुरवेश्मनि स्थिरीभूय इयं निवसतु इति भावः।

पुनश्च वधूपक्षवर्त्तिनः आहुः ––

'एषा ते राजन् कन्या वधूर्निधूयतां यम ।
सा मातुर्बध्यतां गृहेऽथो भ्रातुरथो पितुः ॥ [अथर्व १।१४।२]

हे यम-संयमशील राजन्–वरराजन् एषा कन्या तव वधूः तव गृहे निवसेत् । परन्तु स्वमातृ-पितृ-भ्रातृगृहेपि बध्यताम् ततोऽपि सम्बन्धविच्छेदं न कुर्यादित्यर्थः। स्वकन्यादानं प्रकुर्वन् पिता वरराजानमाह :––

एषा ते कुलपा राजन् तामु ते परि दद्मसि ।
ज्योक् पितृष्वासाता आशीर्ष्णः शमोप्यात् ॥ [अथर्व १।१४।३]

हे वरराजन् एषा कन्या तव कुलपा भवेत् इति हेतोस्तां तुभ्यं ददामीति भावः। इयं ज्योक् निरन्तरं शीर्ष्णः––शिरसि मस्तिष्के वा आ-समन्तात् शमोप्यात् । शमविचारबीजानां वपनं कुर्यान्न कदापि विषमानामित्यर्थः।

भूयोऽपि वधूरक्षणार्थं पत्युर्विधेयमुपदिशति :––

'असितस्य ते ब्रह्मणा कश्यपस्य गयस्य च ।
अन्तः कोशमिव जामयोऽपि नह्यामि ते भगम् ॥
[अथर्व० १।१४।४]

इत्यनेन जामयोऽन्तः कोश इव सर्वदा रक्षणीया इति निरूपितं भवति ।

गृहस्थाश्रमप्रविष्टा स्त्री विदुषी भवन्ती मूर्धन्या वाक्कलाकुशला स्यात् । पतिश्चापि तत्सम्मत्या एव समस्तगृहकार्यभारं वहतु इत्यपि निर्दिशति श्रुति :––

'अहं केतुरहं मूर्ध्वा हमुग्रा विवाचनी ।
मामेदनुक्रतु पतिः सेहानाया उपाचरेत् ॥ इति ॥

एवं पूर्णतयाऽनुष्ठितब्रह्मचर्यव्रतानामेव कुमाराणां, कुमारीणाञ्च गृहस्थाश्रमे प्रवेशो निर्दिष्टः।

'ब्रह्मचर्येण वै कन्या युवानं विन्दते पतिम्' इति । तथैव युवाऽपि ब्रह्मचर्येण युवतिं पत्नीं विन्देतेति ध्वनितं भवति। तदेतेन वृद्धबालविवाहोऽपि सुतरां परिहृतो वेदितव्यः।

## वेदे विवाहसम्बन्धस्याविच्छेद्यत्वम्

स च विवाहसम्बन्धो मन्त्रविधिप्रणिबद्धग्रन्थिकः, प्रतिज्ञातपतिपत्नी-व्रतोदेवैरभ्यनुज्ञातः पुनीतयज्ञाग्निसाक्षिकः वरवधूपित्रोरनुमतो यावज्जीवन-मविच्छेद्यत्वेन मिथो गुरुग्रन्थिनिगड़ितो वरीवर्त्ति इति प्राङ निरूपितैः मन्त्रवर्णै-रवबुध्यते। एतादृङनियमनियन्त्रित एव समाजः सुखं शान्ति समृद्धिपद्धतिञ्चा-वलम्बते। एष प्रणयसम्बन्धः न तात्कालिकोऽनियतो वा अपितु नित्यो यावज्जीवन-कालस्थायी च। केवलं मृत्युरेव तमपहर्त्तुं परिवृढ़ः[1] अथवा कश्चिदप्रतिकार्यः प्रत्यहव्यूहरूपो रुग्विशेषः अशेषविशेषोपायैरप्रतिविधेयः आपद्धर्मरूपो[2] नान्यः कश्चिन्मनश्चाञ्चल्यप्रणोदितः। रूपलावण्यतारतम्यपारस्पर्यपरिवेल्लितः, प्रकाम-कामौच्छृङ्खल्यलालितो लाम्पट्याभिनिवेशः। एवं सत्येव दाम्पत्यप्रणयप्रसरः प्रकर्षतरो भवन् उत्तरोत्तरं द्रढिमानमभिनन्दति सन्तानवितानललितलतामण्डपं समाश्रित्य। गार्हस्थ्यजीवनानन्दस्य चाधिरोहति पराकाष्ठाम्। इष्टापूर्त्तं, योगक्षेमं चतुरस्रमुपलभते, शशशृङ्गायते चानिष्टनिकरः।

## वेदे-एकपत्नीकमेव व्रतं न बहुपत्नीकम्

एवं सति निषिद्धे विवाहसम्बन्धोच्छेदे निसर्गत एव बहुपत्नी-परिणयोऽपि सुतरां निरस्तः। तस्य कुत्रापि विधानासद्भावात्। एकः एकामेव पत्नीं परिणयेत्। एवं पत्न्यपि एकमेव पतिं वृणुयात्। तथा च भगिनी-भ्रातृविवाहो नितरां निषिद्धः। 'यमयमीसूक्तञ्चैतदुपोद्बलकत्वेन प्रागेवोदाहृतम्।

## वेदे राजधर्मः

'अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम्।
तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयन्तीम्।
मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम्।
अमन्तवो मां त उप क्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि।

[ऋग्वेद १०।१२५ ३–४]

---

१. वस्तुतः न क्षणिकसम्भोगलक्षणं हि तद्विवाहो नाम। एष खलु दम्पत्योः चिरजीवनमिलनरूपः। नारी न मनाक् सम्भोगवस्तुरूपा अपितु सम्मान्या, गृहसाम्राज्ञीस्वरूपा च। न केवलं दम्पत्योरेव शान्तिर्विवाहे निर्भरा किन्तु समाजस्य शान्तिरपि सुतरामनुसन्दधाति तम् इति विवेकः।

२. आपद्धर्मश्च—नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ।
आपत्स्वेतासु नारीणां पतिरन्यो विधीयते॥

त्रीणि राजाना विदथे पुरूणि परिविश्वानि भूषथः सदांसि।
[ऋग्वेद म० ३ सू० ३८]

एवमथर्वणि अपि राजसभायाः मन्त्रिमण्डलस्य, राज्यकार्यस्य च सौकर्येण सञ्चालनार्थमतिदेशो विहित :--

"विराड् वा इदमग्र आसीत् । सोदक्रामत् । सा सभायां न्यक्रामत् । सोदक्रामत्–सा समितौ न्यक्रामत् । सोदक्रामत् मन्त्रणे न्यक्रामत् ।।
[अथर्व ८।१०।१-१२]

## वेदे वैश्यधर्मः

राष्ट्रस्यार्थिकस्थितिं समुन्नेतुं वणिग्धर्म उपदिश्यते । निर्धनं राष्ट्रं परैरभिभूतं सर्वदा दुःखभाजनं सदवनतिगर्त्ते निपतति । अतो व्यापारोद्योगद्वारा धनधान्यसमृद्धिं कर्त्तुमेव वैश्यैस्सततं प्रयत्नशीलैः भवितव्यम् ।

'इन्द्रमहं वणिजं चोदयामि स न एतु पुर एता नोऽस्तु ।
नुदन्नराति परिपन्थिनं मृगं स ईशानो धनदा अस्तु मह्यम् ।।
[अथर्व ८।१०।३-१२]

ये पन्थानो बहवो देवयाना अन्तरा द्यावापृथिवी सञ्चरन्ति ।
ते मा जुषन्तां पयसा घृतेन यथा क्रीत्वा धनमाहरन्ति ।।
[अथर्व ३.१५.२]

अत्र वणिग्धर्मनिरूपणपुरस्सरं वाणिज्यस्य मौलिको राद्धान्तः पल्लवितः । धनेन धनवर्द्धनाय वणिग्भिः रथपोतवायुयानादिभिः स्थलजलगगनमार्गेण सञ्चरद्भिः राष्ट्रस्य कोषवृद्धिः सम्पादनीया । किञ्च--

येन धनेन प्रपणं चरामि धनेन देवा धनमिच्छमानाः ।
तन्मे भूयो भवतु मा कनीयो अग्ने सातघ्नो देवा हविषा निषेध ।।
[अथर्व ३।१५।५]

तच्च धनं भूयो भवतु मा कनीय अल्पीय इति मन्त्रनिष्कर्षः । सर्वेऽपि जना राष्ट्रे धनवन्तः श्रीमन्तश्च स्युः इति भावः ।

## वेदानां महत्त्वम्

वेदो हि विश्वप्रपञ्चस्य ज्ञानराशेरपूर्वो निधिः । तेषां नित्यत्वमपौरुषेयत्वञ्च प्रायशः सर्वैः प्राचीनाचार्यैः स्वीकृतम् । भगवता कुल्लूकभट्टेन, मानवधर्मशास्त्रस्य टीकाकारेणोक्तम्--

"प्रलयकालेऽपि परमात्मनि वेदराशिः स्थितः" इत्युक्तिरपि वेदानां नित्यत्वं व्यवस्थापयति । वेदमन्त्रेषु पठितान् शब्दानेवादाय लोके नामानि कृतानि आदौ,

ततः कालान्तरे च तानि व्यक्तिविशेषाणां नामानि वेदमन्त्रेषु दृष्टिपथं गतानि इतिहासं परामृशन्ति इतिहासवदाभासमानानि। वस्तुतः वेदेषु इतिहासगन्धोऽपि नास्ति नित्यत्वात् इति सर्वे वैदिका आमनन्ति। भगवता मनुना तु 'नास्तिको वेद-निन्दकः' इति वेदनिन्दका नास्तिका इत्युद्घोषितम् वेदानामीश्वरीयज्ञानत्वात्। एवं सर्वैः ब्राह्मणारण्यककल्पोपनिषत्प्रभृतिभिर्निखिलैः सन्दर्भैर्वेदानां ईश्वरीयत्वं समुपपादितम्। सर्वैर्दर्शनैश्च मुक्तकण्ठेनैतदेवोद्घोषितमित्यवोचाम पुरस्तात्।

## वेदानां निर्माणकालविषयको भ्रमाभिनिवेशः

अथ वेदानां निर्माणकालविषये किञ्चिदिव विमृश्यते। तदेवं वेदनित्यत्व-वादिनां नये तु वेदाविर्भावकालनिर्णयस्य प्रश्न एव नोदेति। परन्तु ऐतिहासिकानां नयेऽपि वेदानां कालनिर्णयो न सुकरः। पाश्चात्यविदुषा मोक्षमूलरमहाभागेन ऋग्वेदस्यावतरणकालः खूैस्ताब्दात् प्राग्द्वादशशतमितोऽवधारितः। परं तन्निर्णयो ऽप्येषोऽनुमानिकः नखल्विदमित्थन्तया निर्णीतः। एवमन्येऽपि कोलब्रुक-विल्सन-कीथप्रभृतिमहानुभावा अपि मोक्षमूलरमेवानुधावन्ति। अन्ये हाग-आर्कविशपाद्याः पाश्चात्यविपश्चितः ऋग्वेदकालं खूैस्तप्राक्सहस्रद्वयवर्षमितं परिकल्पयन्तिः। कल्प-सूत्रेषु ध्रुववर्णनमवलोक्य शार्मण्यदेशीयज्योतिर्विदा ई० जैकाबी-महोदयेनाङ्कितं यत्पुरा काले ध्रुवमति भास्वरं सुस्थिरञ्चासीत्। तस्य तादृशस्थितिकालः खूैस्त-प्राक् २७०० वर्षमितः संभाव्यते। तदित्थं कल्पसूत्राणां निर्माणकालः ४७०० वर्षदेशीयः। ज्योतिर्विद्यानुगुण्येन जैकोबीनाम्ना विदुषा वेदकालनिर्णयः ६५०० वर्षादप्यधिककालः निर्धारितः। एवं लोकमान्येन बाल-गङ्गाधर-तिलकमहाभागेन प्रतिपादितं यन्नक्षत्रमध्ये कृत्तिका एव सर्वप्रथमत्वेनाभिमन्यते। ब्राह्मणनिर्माण-काले–कृत्तिकानक्षत्रे एव नक्तंदिवोभयसाम्यं भवति स्म।

परमद्यत्वे एकविंशतिमार्चमासे त्रयोविंशतिसितम्बरमासे च रात्रिदिवसयोः साम्यमुपजायते। सूर्यश्च तदाश्विनीनक्षत्रे स्थितो भवति, खगोलज्यौतिषयोः सिद्धान्तानुसारेण एतत्परिवर्त्तनं–महतो दीर्घात् ४५०० मिताद् वर्षात् पूर्वमेव भवितुं सम्भवति। स एव ब्राह्मणग्रन्थनिर्माणकालोऽपि सम्भवितुमर्हति।

मन्त्रसंहिताकाले नक्षत्राणां गणना मृगशिरोनक्षत्रत उपक्रमते स्म। एतन्नक्षत्रगते सूर्ये रात्रिः दिवसश्च साम्यमश्नुवाते स्म। ज्यौतिषखगोलशास्त्रानु-रोधेन स्थितिरियं ६५०० वर्षपूर्वं सम्भवितुमर्हति, अतः संहितानामपि निर्माण-कालः ६५०० वर्षमित एव भवितुमुपपद्यते। लोकमान्यतिलकमहोदयानां मते सहस्रद्वयवर्षाभ्यन्तरमेव संहितान्तर्गता सर्वे मन्त्रा विरचिता अभूवन्। अतः कतिपयाः प्राचीना ऋचः ८५०० वर्षपूर्वविरचिता विभाव्यन्ते। मृगशिरोनक्षत्रे

वसन्तसम्पातघटनमेव तिलकमहाभागस्य बलीयसी युक्तिः प्रतीयते। उक्ततत्त्व-निर्धारणे एव श्रविष्ठायां रात्रिदिवससाम्यमधिगम्य तिलको बालगङ्गाधरः मैत्रायणीसंज्ञकोपनिषदो निर्माणकालं त्रिसहस्रवर्षमितमवधारयति। एवं सति ऋग्वेदकालः ८००० वर्षमितोऽनुमानपथमारोहति, इति तिलकोक्तिः।

किञ्च पुण्यपत्तननिवासिना नारायण भवनराय पावगी महाभागेन तु भूगर्भशास्त्रप्रमाणैः ऋग्वेदनिर्माणकालः नवसहस्रवर्षसम्मितः समुद्घोषितः। एवं यैः कैरपि विद्वद्भिः वेदनिर्माणकालो निर्धारितः तैः यथार्थसाधनासौलभ्यात् केवलं स्वमनःकल्पितानुमानानुरोधेनैवेति तद्विधया कृतं निर्धारणं कियद्यावत्प्रामाण्य-कोटिमधिकर्त्तुमर्हति। अन्धानुकरणमात्रमेवानुहरत्येतत्। तुष्यतु न्यायेन स्थिति-वशंवदतया अस्माभिरपि तेषामेव मतं तत्तदवबोधाय तथैव यथास्वरूपं प्रतिबिम्बी-कृतमत्र। तदत्र प्रामाण्याप्रामाण्यनिर्णायका विद्वांस एव प्रमाणम्।

वेदनिर्माणकालनिर्धारणस्य दुरूहता न केवलमस्माभिरेव समुट्टङ्किता, अपि अन्यदेशीयविदुषां सम्मतिरपि अस्मन्मतेन सह पूर्णसंवादं भजते। शार्मण्य-देशीयप्रसिद्धवेदज्ञेन श्लेगालमहोदयेन वेदानां समस्तसंसारवाङ्मयेषु प्राचीन-तमत्वमङ्गीकुर्वता, वेदनिर्माणकालनिर्णयस्य दुःशकत्वमुपपादितम्। एवमेव तद्देश-सम्भवेनैव अल्बर्त्तवेव्वरमहोदयेनापीति दिक्। एवं पाश्चात्यैः कालविद्भिः वेदाना-माविर्भावकालः खृ स्ताब्दात्पूर्व सहस्रत्रय (३०००) वर्षपर्यन्तं निर्धारितः। अपरैश्च षट्सहस्रवर्ष (६०००) पर्यन्तम्। भारतीयविद्वद्वरेण्येन श्री बालगंगाधरतिलक-महाभागेन स्वकीय 'ओरियन' नाम्नि पुस्तके षट्सहस्रवर्षादपि पूर्वकालिको वेद-कालः निर्धारितः, वेदोपवर्णितज्यौतिषतत्त्वदृष्टिमनुसन्धाय। विद्वद्वर-मैक्समूलर-महोदयेनापि खृ स्तशतकात्पूर्वत्रयोदशशताब्द्या अन्ते कतिपयऋचां निर्माण-कालः स्वीकृतः। एवं ह्विटनी, ग्रासमेन प्रभृतिभिः महाभागैश्च खृ स्तपूर्व २०००वर्ष-मितः, मेकडानेल महोदयेन खृ स्तपूर्व १५००वर्षमितः कालः निश्चितः। एवं वेदरचनाकालविषये विदुषां भूयान् मतभेदः। शार्मण्यविदुषा वेवरमहाभागेन युक्त-मेवोक्तं,यदधुना चिरन्तनातीतकालसम्भवानां वेदानां निर्माणकालनिर्णये प्रयासोऽपार्थ एव, न स इदानीं कथमपि इदन्तया निर्णेतुं शक्यः। यथा कथञ्चिन्निरूपितोऽपि न श्रद्धास्पदम्, सन्देहदोलारूढत्वात्। एवं व्यतिकरे उपस्थिते वेदनिर्माणकाल-निर्णयो दुरूह एव प्रतिभाति। वस्तुतः भारतीयविद्वद्वराणां दृष्ट्या तु वेदा नित्या एव ईश्वरीयज्ञानत्वान्न तेषां कोऽपि निर्माणकालः सम्भवितुं शक्यः। वेदो हि खलु दिव्यं काव्यम्। प्रतिकल्पञ्चेश्वरः यथावस्थं ऋषिषु प्रहिणोति प्राणिमात्रस्य योगक्षेमावबोधनाय। वेदप्रकाशविधुरमखिलञ्जगदन्धकारमयमेव सम्भवेत्। स्थाने एवोक्तं भगवता दण्डिमहाभागेन :--

इदमन्धतमं कृत्स्नं जायेत भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ।। इति।

अत्र शब्दाह्वयं ज्योतिर्वेदमेव सङ्केतयति।

वेदेऽपि अस्य वेदरूपस्य दिव्यकाव्यस्य अमरत्वं बलवदुपपाद्यते :—

'पश्य देवस्य काव्यं न ममार न जीर्यति', 'वाचा विरूपनित्यया' इत्यादीनि भूयांसि वेदवचांसि वेदस्य नित्यत्वं प्रति श्रद्दधति इत्यत्र न सन्देहलेशोऽपि।

ये खलु वेदान् ऋषिगणप्रणीतान् आमनन्ति तेषामप्येषोऽभ्युपगमः यदीश्वर-प्रेरितस्य ज्ञानस्यैव महर्षिभिः मन्त्ररूपेण रचना कृता परत्र सङ्क्रान्तये इति। अत एव ते मन्त्रद्रष्टारः कर्त्तारश्चाभूवन्। तेषां नयेऽपि ज्ञानन्तु ईश्वरीयमेव, तस्य सर्वज्ञाननिधानत्वात् सर्वज्ञत्वात्। 'कविर्मनीषी'त्यादिपदैरलङ्कृतत्वाच्च। तदेव ज्ञानं महर्षिभिः मन्त्राकारेण परिणम्य वेदेषु सङ्कलितम्। मन्त्रगत-ज्ञानस्यापि ऋषिकर्त्तृत्वकल्पनायां तु तद्गतभ्रमप्रमादविप्रलिप्सा-व्याघातादिदोषाणां दुर्वारापत्तेस्तदप्रामाण्यप्रसक्तिर्दुर्निवारैव। मन्त्रकृद्भिः महर्षिभिः कृता वेदा इत्यभ्युपगमेऽपि वेदानामीश्वरीयज्ञानत्वं तदवस्थमेव। न जातु मात्रया-ऽपि तद्विहन्यते। इति नास्ति भूयान् भेदः ऋषिकृतत्वस्वीकारेऽपि वेदानाम्। ऋषिकृतत्ववादिनोऽपि उपोद्बलकत्वेन मन्त्रानेव पुरस्कुर्वन्ति।

तद्यथाः—

'ब्रह्माणि ससृजे वसिष्टः।' [ऋ०७।१८।८]
'इयं गीर्मान्दार्यस्य'। [ऋ० १।१६६।१९]
'गोतमो नव्यमतक्षत् ब्रह्म।' [ऋ० १।६२।१३]
'ब्रह्माणि जनयन्ति विप्राः।' [ऋ० ७।२२।९] इत्यादि।

अस्तु तावद् भवतु यद्वा तद्वा। परन्तु विश्वसाहित्ये वेदानां प्राचीनत्वं तु सर्वैरेव मुक्तकण्ठतः स्वीकृतम् इति त्वपेतशङ्कम्।

## वेदाविर्भावकालः

'सृष्ट्युत्पत्तिसमकालमेवादिमहर्षीणां हृदयेषु वेदाः प्रादुरभूवन्' इत्येकः कल्पः। भगवतो ब्रह्मणः सकाशाल्लब्धसम्यग्ज्ञानज्योतिष्कैः ऋषिभिरेव वेदा रचिता इत्यपरः। परं ते कदाविर्भूता कस्मिन् काले वा महर्षिभिः प्रणीता इति त्विदन्तया प्रतिपादयितुं न सुकरम्। तत्साधनसामग्रीसौकर्यस्याभावात्। वस्तुतस्तु अलक्ष्यस्य परोक्षस्य वस्तुनो इदमित्थन्तया प्रतिपादनं कपोल-कल्पितत्वादश्रद्धेयमेव। तादृश-निरतिशयातीतविषयस्येतिवृत्तरूपेणोल्लपनप्रवृत्तिस्तु गगनारविन्दमिवासम्भवकोटौ

निपतति । तथापि यथाकथञ्चिद् वेदानां कालनिर्णिनीषया प्रवर्त्तमाना भारतीया अभारतीया वा विद्वांसः यद् व्यवस्थापयन्ति तदिहोल्लिखितमगतिकतयेति ।

## वेदे वर्णव्यवस्था

वेदपर्यालोचनेन विज्ञातं भवति यद् वर्णाश्चत्वारः सन्ति, ब्राह्मण-क्षत्रिय-वैश्य-शूद्रभेदात् । यथाऽस्माकं वपुषि मुखं, बाहू, ऊरू, पदञ्चेति चतुःसंख्याकानि अङ्गानि सन्ति तथैव समाजशरीरे ब्राह्मणादयः चत्वारोऽङ्गविशेषा एव सन्ति कार्यभारनिर्वहणार्थम् ।

तत्र ब्राह्मणाः मुखस्थानीया विद्याध्ययनाऽध्यापनकुशला, विधायका, ज्ञान-विज्ञानप्रसारका, धर्मशस्त्रप्रवर्त्तका, राज्यनियमव्यवस्थापका, विधिविधानविधायकाः, परोपकारिणः, त्यक्तविशेषपरिग्रहाः, तपःपुनीतविग्रहा, ब्रह्मतेजःसम्पन्नाः, स्वल्पसाधनाः, कौपीनधनाः, राष्ट्रनीतिनिर्णायिकाः, प्रजाप्रणेतारश्चेति 'ब्राह्मणोऽस्य मुख' मित्यनेन निर्दिश्यते ।

क्षत्रियाः धृतराष्ट्ररक्षणव्रता, राज्यपाला, राष्ट्रपतयः, सकलशास्त्र-पारङ्गता, शस्त्रास्त्रविद्याकुशला, वीरा, अभीरवः, युद्धार्थबद्धपरिकराः, शासकाः, आयुधधना, योधनाः, क्षात्रधर्मसविग्रहा, न्यायाग्रहग्रहिलाः, नीतिकुशलाः, तेजस्विनो, वर्चस्विनो, यशस्विनश्च, राष्ट्रनीतिसञ्चालकाः, प्राणिमात्रपरिपालका, बलिष्ठाः, श्रेष्ठाः, सहृदया, हृदयालवो, दयालवश्चेति 'बाहू राजन्यः कृतः' इत्यनेन संसूच्यते ।

वैश्याश्च––व्यापारवृत्तिकुशला, अर्थशास्त्रपण्डिता, धनोत्पादननिपुणा, गतागततत्वज्ञाः, कृषिविशेषज्ञाः, खनिशास्त्रपारंगता, राष्ट्रसम्पत्तिवर्द्धका, दानशीला, उन्मुक्तकराः, शिल्पकलाकलापप्रज्ञावन्तः, सकलायुधनिर्माणालङ्कर्मीणाः, प्रवीणा, धनधान्यधुरीणाः, धर्मपरायणाः, राष्ट्रकृते त्यक्तसर्वपरिग्रहा, अतन्द्राः, अमन्द्राश्च इति 'ऊरू तदस्य यद्वैश्य' इत्यनेन विज्ञाप्यते ।

शूद्राः गतिमन्तः, अविश्रान्तश्रमाः, सेवाहेवाकिनः, दृढाङ्गा, भक्ति-परिवृढाः, जागरूकाः, शिष्टाः, विनम्राः, सशक्ताः, स्वामिभक्ताः, अज्ञातनकारा, भारवाहिनः, तपःपरायणाः, अनिद्रालवो, हृदयालवश्चेति 'तपसे शूद्रम्-पद्भ्यां शूद्र' इत्यनेनादिश्यते इति ।

सुप्रसिद्धे पुरुषसूक्ते 'ब्राह्मणोऽस्य मुखमासी'दित्यस्मिन् वर्णव्यवस्थाया निर्देशो विहितः । यदि समाजप्रसरः पुरुषाकारेण पल्लवितो भवेत्तर्हि ब्राह्मणो मुख-

स्थानीयः मुख्यः प्रधानो वा ज्ञानप्राधान्यात् । 'बाहू राजन्यः कृतः' क्षत्रियश्च बाहुस्थानीयः रक्षणप्रधानत्वात् । 'ऊरू तदस्य यद्वैश्यः' कोषसंरक्षणात् । 'पद्भ्याᳬ शूद्रोऽजायत' शूद्रश्च पादस्थानीयः सेवाधर्मत्वात् । एवमिमे चत्वारो वर्णाः श्रुतिप्रतिपादिताः वेदे समुपदिष्टाः । तत्तद्वर्णकर्त्तव्यमनुसन्धाय यजुषि च आम्नातम् :—

'ब्रह्मणे ब्राह्मणं, क्षत्राय राजन्यं, मरुते वैश्यं, तपसे शूद्रम्' इति ।

अत्र मरुच्छब्देन मरुतो व्यापारो व्यपदिश्यते । तपसा च सेवाधर्मो निर्दिश्यते । यदा सर्वेऽमी वर्णाः सम्भूय कार्यं स्वस्वधर्मं वाऽनुतिष्ठन्ति तदानीमेव विश्वसमुन्नतिः सम्भवा । तथा चाम्नातम् :—

यत्र ब्रह्म च क्षत्रञ्च उभौ सञ्चरतः सह ।
तं देशं पुण्यं प्रज्ञेषं यत्र देवाः सहाग्निना ॥—यजुः

इत्यादिभिर्मन्त्रलिङ्गैः सर्वेषां वर्णानां सायुज्यं, सहसञ्चारित्वं राष्ट्रोन्नतिमूलकत्वेनोपवर्णितम् ।

इदमत्रावसेयम्—तत्र भवान् प्रजापतिः समारब्धे सृष्टिक्रमे प्रजानां हितकाम्यया, कामपि वर्णाश्रमलक्षणां शाश्वतिकीं मर्यादां समुद्भावयामास । ब्राह्मणाः क्षत्रियाः वैश्याः शूद्राश्चेति चत्वारो वर्णा गुणकर्मानुगुण्येन निर्धारिताः । तत्र यजनादिषट्कर्मसु प्राधान्येन अधिकृता ब्राह्मणाः संबभूवुः । क्षत्रियास्तु प्रजापालनं रक्षणमायोधनं यजनाध्ययनदानानि चाङ्गचकार्षुः । कृषिकर्म-गोरक्षण-वाणिज्यानि यजनाध्ययनदानानि च परिजगृहुर्वैश्याः । शूद्राश्च पुनरवशिष्टां पूर्वोक्तत्रिवर्णपरिचर्यामाददिरे । एतस्या एव वैदिकमर्यादायाः परिरक्षणाय स्थिरीकरणाय च स्मृति-पुराणेतिहासादीनि शास्त्राणि प्रावर्त्तिषत इति ।

तदिदानीं कतिपयानि रहस्यपूर्णानि सूक्तानि वेदतत्त्वावबोधनाय प्रस्तूयन्ते । दवता हि मन्त्रप्रतिपाद्यो विषयः इति प्राङनिरदेशि । 'यत्काम ऋषिर्यस्यां देवतायाम् आर्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवतीति' यास्कः । अतः यद्देवताका मन्त्रास्तद्विषयप्रतिपादका एव खलु त इत्यवगन्तव्यम् । ऋग्वेदस्य प्रथममण्डलान्तर्गतस्यैकोनविंशतिसूक्तस्य 'प्रति त्य' मित्यादि ऋग्भिः कारीरीष्टिः कार्य्या । तथा चाश्वलायनसूत्रे निर्दिष्टम् 'वर्षकामेष्टिः कारीरी" इति । तदत्र सूक्ते वृष्टि-कर्म कथं सम्भवति कथं वा निर्वर्त्तनीयमिति वैज्ञानिकं तत्वं समुपदिष्टं भवति इत्यनुसन्धेयम् ॥

[1]'प्रति त्यम् चारुम् अध्वरम् गोपीथाय प्र हूयसे ।
मरुद्भिः अग्न आगहि ॥ १ ॥

---

१. 'प्रति त्य'मिति नवर्चम् सूक्तम् अग्नि-मरुद्देवताकम् ।

मरुद्भिः अब्भृद्वायुविशेषैः मानसूनाह्वयैः सह अग्निरिति तेजोमात्रमत्र विद्युदायात्मकमभिधत्ते । तन्मिश्रणेनैव वर्षकर्म जायते इत्याकूतम् ।[1]

'नहि देवो न मर्त्यो महस्तव क्रतुं परः । मरुद्भिः अग्न आगहि ॥२॥

[2]ये महो रजसो विदुः विश्वे देवासो अद्रुहः । मरुद्भिः अग्न आगहि ॥३॥

ये उग्रा अर्कम् आनृचुः अनाधृष्टास ओजसा । मरुद्भिः अग्न आगहि ॥४॥

अर्कमुदकमुच्यते । ये मरुतः उग्रास्तीव्राः सन्तः उदकं अर्चितवन्तः वर्षणेन सम्पादितवन्त इति सायणः । कीदृशा मरुतः बलेन अनाधृष्टासः अतिरस्कृताः, सर्वेभ्योऽपि प्रबलाः ।

ये शुभ्राः घोरवर्पसः सुक्षत्रासो रिशादसः । मरुद्भिः अग्न आगहि ॥५॥

(स्पष्टम्)

ये नाकस्याधिरोचने दिवि देवास आसते । मरुद्भिः अग्न आगहि ॥६॥

य ईङ्खयन्ति पर्वतान् तिरः समुद्रम् अर्णवम् । मरुद्भिः अग्न आगहि ॥७॥

आ ये तन्वन्ति रश्मिभिः तिरः समुद्रम् ओजसा । मरु० ...॥८॥

अभि त्वां पूर्वपीतये सृजामि सोम्यं मधु । मरुद्भिः अग्न आगहि ॥९॥

पूर्वपीतये पूर्वकाले प्रवृत्ताय त्वां सोम्यं मधुरसं जलं सर्वतः सृजामि सम्पादयामीत्यर्थः ।

ऋग्वेदे,अन्यदपि चमत्कारपूर्णं वरुणदेवताकं एकविंशत्यृचं सूक्तम् । 'यच्चिद्'-इत्यादिकम् । वरुणोऽत्र प्रजाभिर्वृतो राजाऽवगम्यते । वर्ण्यविषयपरामर्शात् । तदपि विदुषामवधानमर्हति । अत्र राज्ञः प्रजायाः कीदृशः सम्बन्धो भवेदिति निर्दिश्यते—

'यत् चित् हि ते विशो यथा प्र देव वरुण व्रतम् । मिनीमसि द्यविद्यवि ॥१॥

मा नो वधाय हत्नवे जिहीड़ानस्य रीरधः । मा हृणानस्य मन्यवे ॥२॥

विमृडीकाय ते मनो रथीरश्वं न सन्दितम् । गीर्भिर्वरुण सीमहि ॥३॥

परा हि मे विमन्यवः पतन्ति वस्य इष्टये । वयो न वसती रप ॥४॥

[3]कदा क्षत्रश्रियं नरमा वरुणं करामहे । मृडीकायोरुचक्षसम् ॥५॥

---

१. सेयमृक् यास्केनैवं व्याख्याता—तं प्रति चारुमध्वरं सोमपानाय प्रहूयते अग्निः मरुद्भिः सहागच्छ । इति

२. हे अग्ने ये मरुतः महो रजसः महत उदकस्य वर्षणप्रकारं विदुस्तैर्मरुद्भिरित्यन्वयः इति सायणः ।

[रजो रजतेः, ज्योती रज उच्यते, उदकं रज उच्यते, लोका रजांसि उच्यन्ते]
इति निरुक्तम्

३. क्षत्रश्रियं नरं उरुचक्षसं वरुणं करामहे । राजत्वेन वृणीमहे । प्रजाया मृडीकाय सुखायेति निष्कर्षः ।

तदित्समाशाते वनन्ता न प्रयुच्छतः । धृतव्रताय दाशुषे ॥६॥

## वैदिकधर्मस्वरूपम्

वेदप्रतिपादितो धर्मो वैदिको धर्मः । वेदे ये ये सिद्धान्ता मानवसमुन्नत्यर्थं प्रतिपादितास्ते धार्यन्ते यस्मिन् स एव वैदिकधर्मपदेन व्यपदिश्यते । वैदिकधर्मे, ईश्वर एव सर्वशक्तिमान् सृष्टिस्थितिप्रलयकर्त्ता व्यापकः अजरः अमरः शुद्धः बुद्धः मुक्तस्वभावश्च, जगन्नियन्ता, जीवेभ्यः शुभाशुभकर्मफलप्रदाता, न्यायशीलः, सर्वज्ञश्च स्वीकृतः । उक्तञ्च––

'स पर्यगाच्छुक्रमकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम् ।

कविर्मनीषी परिभूस्स्वयम्भूः याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः" ।

'तमेकं सत् विप्रा बहुधा वदन्ति' ।

स एव परमेश्वरः, इन्द्र-मित्र-वरुणाद्यनेकनामभिः स्मर्यते, गुणानुगुण्येन । अपिच––

ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥

स एव ईश्वर उपास्यत्वेन निर्दिष्टः ––

"ऋचोऽक्षरे परमे व्योमन्यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुः त इमे समासते ॥
[ऋ० म० १ सूक्त १६४ मन्त्र ३९]

वेदे हि स्तुतिरूपेण, आख्यानरूपेण, विधिनिषेधरूपेण च तत्त्वविद्यावर्णनानि भवन्ति इति प्रागवोचाम । स ईश्वरः किंगुणः, किंकर्मा, किंस्वरूपः, किंशक्तिश्चेति–वर्णनपरेषु सूक्तेषु मुख्यतमानि अत्र स्थालीपुलाकन्यायेन पुरस्क्रियन्तेः––

ऋग्वेदीयप्रथममण्डलस्य शतोत्तरचतुःपञ्चाश (१५४) त्तमं सूक्तं षड्ऋचम् ।

विष्णो र्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥१॥

––इत्यादिकम्

## वाणी सूक्तम्

ऋग्वेदस्य दशममण्डले एकसप्ततितमसूक्तं भाषासूक्तसंज्ञया प्रसिद्धम् । तत्र इयं वेदवाणी कुतः कथं च प्रवृत्तेति सर्वमेवातिचारुतया वर्णितमतीव कौतूहलावहम् :––

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥२॥
यज्ञेन वाचः पदवीयमायन्तामन्वविन्दन्नृषिषु प्रविष्टाम् ।
तामाभृत्या व्यदधुः पुरुत्रा तां सप्तरभा अति सं नवन्ते ॥३॥
उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः ॥४॥
अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः ।
आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे ॥७॥
इमे ये नार्वाङ् न परश्चरन्ति न ब्राह्मणासो न सुतेकरासः ।
त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञयः ॥९॥ इत्यादि

## वेदे त्रित्ववादः

ईश्वरः जीवः प्रकृतिश्चेति पदार्थत्रयं वेदे समुपवर्णितमुपलभ्यते :—
'असच्च सच्च परमे व्योमन् दक्षस्य जन्मन्नदितेरुपस्थे ।
अग्निर्ह नः प्रथमजा ऋतस्य पूर्व आयुनि वृषभश्च धेनुः [ऋ० १०–५–७]
त्रयः केशिन ऋतुथा विचक्षते संवत्सरे वपत एक एषाम् ।
विश्वमेको अभिचष्टे शचीभिर्ध्राजिरेकस्य ददृशे न रूपम् ॥[ऋ० १-१६४-४४]
द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥ [ऋ० १.१६४.२०]

एषु मन्त्रेषु संसारचक्रनिर्वहणाय ईश्वरः जीवः प्रकृतिश्चेति त्रयः पदार्था निर्दिष्टाः । अपि च :—

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ।
[ऋ० १-२२-२०]

अत्र 'विष्णु' पदमीश्वरमभिधत्ते, 'सूरयश्च' जीवान् । 'दिवीव चक्षु' रिति प्रकृत्युपलक्षितं सूर्यम् । एतेनाऽपि त्रैतवादो ध्वनितो भवति । किञ्च :—

'यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा ।
प्रजापतिः प्रजया स꣡ꣳरराणस्त्रीणि ज्योतींषि सचते स षोडशी ।
य० ८।३६॥

अत्र प्रजापतिः परमेश्वरं परामृशति, भुवनानीति प्रकृतिं, प्रजयेति च जीवजातमभिलक्षयति ।

## परमेश्वरस्य मुख्यं नाम ओम्

यद्यपि वेदे स परमेश्वरः, अग्नि-मित्र-वरुणप्रभृतिभिरनेकनामभिः स्मियते तथापि तस्य मुख्यं नाम तु खलु 'ओम्' इत्येवाम्नातम् ।

'ओ३म् खं ब्रह्म' [यजु० ४०]

कठोपनिषद्यपि :—

'सर्वे वेदा यत्पदमामनन्ति, तपांसि सर्वाणि च यद्वदन्ति।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत् ।।
[कठोप० वल्ली २.म० ५]

एवं "यो अस्याध्यक्षः परमे व्योमन्त्सो अंग वेद वा न वेद" इत्याद्यनेकमन्त्र-लिङ्गेष्वयमेवार्थः पल्लवितः यत्परमेश्वरस्य मुख्यतमं नामोमिति।

"ऋचोऽक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः"।. . . . . . . इत्ययमपि द्रढ़यति उक्तमेवार्थम् । परमेश्वरस्य ओम्नाम्नो मुख्यत्वादेव हेतोर्महर्षि-पाणिनिमुनिना 'ओमभ्यादाने" इत्यनेन सूत्रेण प्रतिमन्त्रं आदौ युज्यमानस्य ओमिति पदस्य प्लुतत्वमनुशासितमवगम्यते ।

## वेदे स्वराज्यप्रशस्तिः

'आ यद्वामीयचक्षसा मित्र वयं च सूरयः । व्यचिष्ठे बहुपाय्ये यतेमहि स्वराज्ये ।।
[ऋग्वेद ५।६६।६ ।]

यदजः प्रथमं सम्बभूव तत्स्वराज्यमियाय ।
तस्मान्नान्यत्परमस्ति भूतम् ।। अथर्व १०।७।३

एषु मन्त्रवर्णेषु स्वराज्यस्य महिमा गौरवञ्च वर्णितम् ।

आत्मना मनसा वपुषा समुन्नतो मानवसमाज एव स्वराज्यपात्रतां याति यतो नान्यत् किमपि भूतं कल्याणकरतत्वमास्ति । तच्च स्वराज्यं बहुभिः विद्वद्भिः पाय्यं रक्षणीयमस्ति अतः अस्माभिः सूरिभिः मित्रभावापन्नैः ज्ञान-पूर्वकं तदारक्षणीयमिति भावः ।

## राष्ट्र भावना

ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः ।
ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् ।। [ऋग्वेद १०।१७४।५ ।]
आ त्वाहार्षमन्तरेधि ध्रुवस्तिष्ठाविचाचलिः ।
विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधिभ्रशत् । [ऋग्वेद १०।१७३।१]
इहैवैधि माप च्योष्ठाः पर्वत इवाविचाचलिः ।
इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय ।। [ऋग्वेद १०।१७३।२]
भद्रमिच्छन्त ऋषय स्वर्विदस्तपो दीक्षामुप निषेदुरग्रे।
ततो राष्ट्रं बलमोजश्च जातं तदस्मै देवा उपसंनमन्तु ।। [अथर्व १९।४१।१]

वेदे विश्वमेवाखिलं राष्ट्रत्वेनाभिमतम् । न जातु भौगोलिकभेदविभिन्नं देशविधया खण्डभूतम् यत्तद्वा देशविशेषानुगृहीतं राष्ट्रम् । तादृशराष्ट्रस्य राजा तादृशो भवेत् यं सर्वाः प्रजा वाञ्छेयुः । तादृशस्य एकच्छत्रवतो राज्ञो राष्ट्रं न जातु भ्रष्टाचारपद्धतिमवतरेत् इति भावः । स च तादृशगुणोपतो नृपः पर्वत इवाचलस्सन् राष्ट्रं धारयति नान्यथेति विवेकः ।

## पृथिव्यादिभ्रमणविज्ञानम्

'सविता यन्त्रैः पृथिवीमरम्णादस्कम्भने सविता द्यामदृंहत् ।
अश्वमिवाधुक्षद्धुनिमन्तरिक्षमतूर्त्ते बद्धं सविता समुद्रम् ।
[ऋ० १०।१४९।१]

सविता आदित्यः यन्त्रैः पृथिवीमरमयद् अनारम्भणे अन्तरिक्षे सविता द्यामदृंहदश्वमिवाधुक्षद्धुनिमन्तरिक्षे मेघं बद्धमतूर्त्ते बद्धमतूर्णं इति वा त्वरमाण इति वा सविता समुदितारमिति कमन्यं मध्यमादेवमवक्ष्यत् । अस्मिन् मन्त्रे पृथिव्यादिभ्रमणं वर्णितम् ।

## सूर्यश्चक्षुर्ज्योतिप्रदः सर्वसुखकरश्च

महि ज्योति बिभ्रतं त्वा विचक्षण भास्वन्तं चक्षुषे मयः ।
आरोहन्तं बृहतः पाजसस्परि वयं जीवाः प्रतिपश्येम सूर्य ।।
[ऋ० १०।३।३७]

हे विचक्षण ! सूर्य महज्ज्योतिर्बिभ्रतं भास्वन्तं आरोहन्तं चक्षुषे मयः—चक्षुषे सुखकरं त्वां वयं जीवा प्रतिपश्येम प्रतिदिनं पश्येम । उदयतः सूर्यस्य नित्यदर्शनेन दृष्टिप्रसादो जायते इति भावः ।

शन्नो भव चक्षसा अह्ना शं भानुना शं हिमा शं घृणेन ।
यथाशमध्वञ्छमसद् दुरोणे तत्सूर्य द्रविणं धेहि चित्रम् ।।
[ऋग् म० १०।३।३७।१०]

शैत्ये औष्ण्ये मार्गे गृहे वा यथाविधिसेवनेन सूर्यः विचित्रं द्रविणामारोग्यरूपं स्वतेजसा रश्मिना च प्रयच्छति ।"

## एकचक्रे सप्तरश्मिवति सूर्ये एवाखिलानि भुवनानि तस्थुः

'सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा ।
त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः ।।
[ऋ० १।१६४।२]

एवं—

नवो-नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम्।
भागं देवेभ्यो विदधात्यायन् प्रचन्द्रमास्तिरते दीर्घमायुः ।।
[ऋ० १०।८५।१९]

## दिव्यरथः

अन्यत्रापि वेदेषु दिव्यरथवर्णनमुपलभ्यते विविधाशयम्। तदपि दिव्यरथनिर्माणविधिं सूचयति।

'इन्द्रस्य वज्रो मरुतामनीकं मित्रस्य गर्भो वरुणस्य नाभिः।
सेमं नो हव्यदातिं जुषाणो देव रथ प्रतिहव्या गृभाय ।। [यजु० १९।५४]

अपिचः—

रथे तिष्ठन्नयति वाजिनः पुरो यत्र यत्र कामयते सुषारथिः।
अभीशूनां महिमानं पनायते, मनः पश्चादनु यच्छन्ति रश्मयः ।।
[यजु० १९।४३]

## दिव्या नौः

सुत्रामाणं पृथिवीं द्यामनेहसम् सुशर्माणमदितिं सुप्रणीतिम् ।।
दैवीं नावं स्वरित्रामनागसम्, अस्रवन्तीमारुहेमा स्वस्तये ।।
[अथर्व० ७।६३।३]

इत्याद्या मन्त्रा अपि निर्दिष्टार्थमुपोद्वलयन्तोऽनुसन्धेया जिज्ञासाकुतूहलिभिस्तत्रतत्रैवेति दिक्।

किञ्च :—

'आवां रथो अश्विना श्येनपत्वा सुमृलीकः स्ववां यत्वर्वाङ।
यो मर्त्यस्य मनसो जवीयान् त्रिबन्धुरो वृषणा वातरंहाः ।।
[ऋ० १।११८।१]

हे अश्विनौ ! वां श्येनपत्वा-श्येन इव शीघ्रपतनशीलः गमनशील इति यावत्। मर्त्यस्य मनसो जवीयान् त्रिविधबन्धनयुक्तः सुमृडीको रथो वातरंहाः वायुवद्वेगवान् अस्तीति यावत्। ईदृशो रथस्तु वायुयानमेव भवितुमर्हति। अत्र सायणीयभाष्यमपि अमुमेवार्थं पुष्णाति।

अपिच :—

अनश्वो जातो अनभीशुरुक्थ्यो रथस्त्रिचक्रः परिवर्त्तते रजः।
महत्तद्वो देव्यस्य प्रवाचनं द्यामृभवः पृथिवीं यच्च पुष्यथ ।।"
[ऋ० ४।३६।१]

अत्रापि त्रिचक्रस्य[1] रथस्य[2] आकाशगामिनो व्योमयानस्य वर्णनं सुविशदमेव।

## सूर्यः आकर्षणेन पृथिव्यादिलोकान् स्वकक्षायामादधाति भ्रमयति च

एतद्विज्ञानार्थमधोऽङ्किता मन्त्रा अनुसन्धेयाः।

"यदा ते मारुतीर्विशस्तुभ्यमिन्द्र नियेमिरे।
आदित्ते विश्वा भुवनानि येमिरे।"
[ऋ० अ० ६ अ० १ व० ६ मं० ४]

"यदा सूर्यममुं दिवि शुक्रं ज्योतिरधारयः।
आदित्ते विश्वा भुवनानि येमिरे॥"
[ऋ० अ० ६ अ० १ व० ६ मं० ६]

"यदा ते हर्यता हरी वावृधाते दिवे दिवे।
आदित्ते विश्वा भुवनानि येमिरे॥"
[ऋ० अ० ६ अ० १ व० ६ मं० ३]

यजुष्यपि :—

आ कृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यं च।
हिरण्येन सविता रथेना देवो याति भुवनानि पश्यन्॥
[यजु० अ० ३३ मं० ४३]

व्यस्तभ्नाद्रोदसी मित्रो अद्भुतोन्तर्वावदकृणोज्ज्योतिषा तमः।
वि चर्मणीव धिषणे अवर्त्तयद्वैश्वानरो[3] विश्वमधत्त वृष्ण्यम्।
[ऋ० अ० ४ अ० ५ व० १० मं० ३]

एवमन्यान्यपि हितोपदेशपराणि बहूनि सूक्तानि। तेषु कानिचित् अत्र उदाह्रियन्ते :—

## श्रद्धासूक्तम्

सूक्तेऽस्मिन् पञ्च मन्त्राः सन्ति, तेषु श्रद्धाया प्रशस्तिरतिशयेनोपवर्णिता।

---

१. ज्योतिष्मन्तं केतुमन्तं त्रिचक्रं सुखं रथं सुषदं भूरिवारम्। चित्रामघा यस्य योगेऽधिजज्ञे तं वां हुवे अति रिक्वं पिबध्यै॥ [ऋ० ८।५८।३]

२. रथो रंहतेर्गतिकर्मणः। स्थिरतेर्वास्याद्विपरीतस्य रममाणोऽस्मिन्तिष्ठतीति वा रयतेर्वा रसतेर्वा। निरु० अ० ९ खं० ११

३. विश्वानरस्यादित्यस्य। निरु० अ० ९ खं० १२।

मानवजन्मसाफल्यार्थं, तत्त्वान्तरेषु श्रद्धा हि नाम प्रधानभावं भजते। श्रद्धया सर्वाणि कार्याण्यनायासेन सिद्धिसरणिमवतरन्ति। किन्नाम हि तद् यच्छ्रद्धया न साध्यम् :—

श्रद्धयाग्निः समिध्यते, श्रद्धया हूयते हविः।
श्रद्धा भगस्य मूर्द्धनि, वचसा वेदयामसि॥
(ऋ० १०।१५१।१)

श्रद्धां देवा यजमाना वायुयोगा उपासते।
श्रद्धां हृदय्याकूत्या श्रद्धया विन्दते वसु॥४॥
श्रद्धां प्रातर्हवामहे श्रद्धां मध्यन्दिनं परि।
श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः॥५॥

## संज्ञान-सूक्तम्

ऋग्वेदवदथर्ववेदेऽपि संज्ञानसूक्तमुपलभ्यते। तदप्यतिरमणीयम्। सम्यग्ज्ञानं संज्ञानम् तच्च सौहार्दे साम्मनस्ये परस्परप्रेमभावे च पर्यवस्यति :—

'सहृदयं साम्मनस्यमविद्वेषं कृणोमि वः।
अन्योऽन्यमभिहर्यत वत्सं जातमिवाघ्न्या॥१॥
अनुव्रतः पितुः पुत्रो मात्रा भवति संमनाः।
जाया पत्ये मधुमतीं वाचं वदतु शान्तिवाम्॥२॥
मा भ्राता भ्रातरं द्विक्षन् मा स्वसारमुत स्वसा।
सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया॥३॥
ज्यायस्वन्तश्चित्तिनो मा वियौष्ट।
संराधयन्तः सधुराश्चरन्तः॥४॥
अन्योऽन्यस्मै वल्गु वदन्त एत।
सध्रीचीनान्वः संमनसस्कृणोमि॥५॥

अत्र मानवानां कल्याणाय कीदृशो मधुरो मनोहरश्चोपदेशः।

## वेदे पशुपक्षिविशेषाणां वर्णनम्

वेदे मानवसमाजस्य हितकाम्यया वन्यानां सिंहादिदुष्टसत्त्वानां पक्षिविशेषाणाञ्च वर्णनं विशेषरीत्या कृतमवगम्यते। तत्र वन्यपशुषु सिंहस्य वर्णनमसकृत् निर्दिश्यते। सिंहस्य गर्जनं, अद्रिनिवासः, वागुरया निग्रहणञ्च, शतुद्राचाः सिन्धोश्च तटवर्तिघनारण्येऽधिवासश्च मन्त्रेषु वर्णितः। गजस्य वर्णनमप्युपलभ्यते। ऋङ्मन्त्रेणैकेन गजबन्धनोपायोऽपि प्रदर्शितः। तस्य च निवासो हिमाचलोपत्यकारण्यप्रदेशो निर्दिष्टः। वृकस्यापि नाम वेदे बहुत्र कीर्त्तितम्। वराहो, ग्राम्यो वन्यश्च महिषः, ऋक्षः, कपिः, वानरजातिश्च नरसादृश्यवती, वनेच-

रत्वेन संकीर्तिता। एवमेव मृगाः, मेषा, अजा, गर्दभाः, श्वानश्च वर्णिताः। ग्राम्येषु पशुषु गावः अतीवोत्कृष्टत्वेन प्रस्तुताः। गावश्च वेदे अघ्न्याशब्देनापि उच्यन्ते। शुक्लयजुर्वेदे गोघ्नस्य वधदण्डो विहितः। वृषभाश्च उक्षाणश्च कृषि-कर्मणे रथादिवाहनक्षेत्रकर्षणाय नियमेन प्रयोजनीयत्वेन संकेतिताः। गोमेध-यज्ञद्वारा गवां संवर्द्धनं वृषभाणाञ्च परिपालनं भूयसा समादरास्पदमिव कीर्तितम्। गोसदृशाः प्राधान्यभाजो नाऽन्ये पशवः। यद्यपि गोधनमि-वाश्वधनमपि आदरणीयत्वेनाम्नातम्, तथापि तद् गोतुलां नारोहति। ततः युद्धेषु अश्वा रथवहनकर्मण्युपयोज्याः। अश्वमेधयागश्चापि गोमेधवत् समादरणीयत्वेन निर्दिष्टः। तत्राश्वजातेः संवर्द्धनं परिपालनञ्च संकीर्तितम् राष्ट्रहिताय। वेदविदां नैतत्तिरोहितं यद्वेदे हिंसा-निषेधः पदे-पदे उपलभ्यते। यजुर्वेदे 'यजमानस्य पशून् पाहि', 'पशून्मे पाहि' इति सुस्पष्टो निषेधः। "गां मा हिंसीः, अजां मा हिंसीः, अविं मा हिंसीरिमं मा हिंसीर्द्विपादं पशुम्। मा हिंसीरेकशफं पशुं, मा हिंस्यात् सर्वा भूतानि" इत्यादीन्यनेकानि वेदवचनानि प्राणिमात्रस्य हिंसाया निषेधम्प्रत्यपीपदन्। चतुष्पादवत् द्विपादस्यापि च हिंसा निषिद्धा। गोमांसभक्षणनिषेधोऽपि बलवत्कृतो लभ्यते—

'एतद्वु स्वादीयो यदधिगवं, क्षीरम् वा मांसं वा तदेव नाश्नीयात्।
[अथर्व ९।६।९] इति।

## मांसभक्षण-निषेधः

गोमांसवदश्वादिपशुमांसभक्षणं मनुष्यमांसभक्षणं च निषिद्धम्।

यः पौरुषेयेण क्रविषा समङ्क्ते यो अश्व्येन पशुना यातुधानः।
यो अघ्न्याया भरति क्षीरमग्ने तेषां शीर्षाणि हरसा वि वृश्च॥
[ऋ० १०।८७।१६]

पुरुषाश्वादिमांसभक्षयितुः शिरश्छेदो दण्डरूपेण विहितः। गोदुग्ध-परिहर्त्तुश्चापि।

एवमेव पक्षिणामपि वर्णनमुपलभ्यते। तत्र पतत्रिगणे नीरक्षीर-विवेकित्वेन प्रसिद्धः हंसः असकृन्निर्दिशितः। सोऽयं जले प्लवमानो वियति च पतमानः आम्नातः। अस्य लोकप्रसिद्धा जलदुग्धविभेदनचातुरी नीर-सोमयोः विभेदनकरी श्रूयते। नभसि पंक्तिबद्धतया पतमानस्य क्रौञ्चपक्षिणोऽपि वर्णनं रमणीयतां बिभर्त्ति। दाम्पत्यपाशबद्धाश्चक्रवाका अपि वर्णिताः। अथर्ववेदश्च चक्रवाकान् दाम्पत्यानुरागस्य निदर्शनत्वेन वर्णयामास। मयूरा विषापहरण-निपुणत्वेन शुकाश्च हरिद्वर्णत्वेन च संस्तुताः। शुकानां पञ्जरबद्धता, मनुष्यवाचा उदीरणञ्चापि समुट्टङ्कितम्।

## गम्यागम्योपदेशः

ऋग्वेदे यम-यमीसूक्तनाम्ना प्रसिद्धे सूक्ते संवादरूपेण गम्यागम्योपदेशः कृतः। तत्र यमस्य स्वसा यमी स्वभ्रातरि यमे आत्मनोऽनुरागं प्रदर्शयति। स च भ्राता तदीयानुरागमस्थाने इतिकृत्वा प्रत्यादिशति :—

'न तिष्ठन्ति न निमिषन्त्येते देवानां स्पश इह ये चरन्ति।
अन्यमू षु त्वं यम्यन्य उ त्वां परिष्वजाते लिबुजेव वृक्षम्।
[ऋ० १०।१०।८]

हे यमि! भ्रातुरन्यमेव त्वं लिबुजेव वृक्षमालिङ्गितुमर्हसि न जातु भ्रातरमितिभावः।

सूक्तान्तराणि देवतानां, दैवतीकृतानां वा पदार्थानां प्रशंसार्थं प्रवृत्तानि संवादरूपेण, आख्यानविधया वृत्तान्तशैल्या वा। एवंविधानि सूक्तानि विधिनिषेधमुखेन कमपि तात्त्विकमर्थं निर्दिशन्ति। तदत्र ऋग्वेदस्य दशममण्डलस्य चतुस्त्रिंशत्तमात्सूक्तात् कतिपयमन्त्राः द्यूतकारस्य करुणविलापव्याजेन कमपि मर्मस्पृशमर्थमुदीरयन्तः समुदाह्रियन्ते :—

'नीचा वर्त्तन्त उपरि स्फुरन्त्यहस्तासो हस्तवन्तं सहन्ते।
दिव्या अंगारा इरिणे न्युप्ता शीताः सन्तो हृदयं निर्दहन्ति।।
स्त्रियं दृष्ट्वाय कितवं ततापान्येषां जाया सुकृतं च योनिम्।
पूर्वाह्णे अश्वान् युयुजे हि बभ्रून्त्सो अग्नेरन्ते वृषलः पपाद।।
अक्षैर्मा दीव्यः कृषिमित् कृषस्व वित्ते रमस्व बहु मन्यमानः।
तत्र गावः कितव तत्र जाया तन्मे विचष्टे सवितायमर्यः।।

अत्र द्यूतक्रीडातः परिणतामात्मनो दुरवस्थामनुभवन् द्यूतासक्तिञ्च परित्यक्तुमक्षमः अतितरां विषीदति। ततो द्यूतनिषेधपूर्वकं तन्निन्द्यतामुद्घोषयति।

## परमेश्वरस्य माहात्म्यम्

प्र तद्विष्णुः स्तवसे वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा।।२।।
प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे।
य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरुत्पदेभिः।।३।।
यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति।
य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा।।४।।
तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति।
उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः।।५।।

ता वा वास्तून्युश्मसि गमध्यै यत्र गावो भरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि ॥६॥

एषां तात्पर्यार्थः । योऽयं विष्णुः व्यापनशीलः परमेश्वरः स पार्थिवानि पृथिवीसम्बन्धीनि रजांसि अग्निवायुसूर्यरूपाणि लोकलोकान्तराणि निर्मिमीते तस्य उरुगायस्य परमेश्वरस्य वीर्याणि वीरकर्माणि प्रावोचम् ।

स च विष्णुः गिरिष्ठाः कुचरः भीमः मृगसिंह इव स्वपराक्रमेण दुष्टानां हननशीलः शिष्टानाञ्च पालक इति शेषः । यमाश्रित्य सर्वाणि भूतानि त्रयो लोका निवसन्ति । यश्चैकः सन् विश्वानि भुवनानि धृतवान् यस्य महिम्ना स्वधया अन्नादि-सामग्र्या, दिव्यामृतेन मधुरेण पूर्णानि भूतजातानि मदन्ति हर्षोपेतानि भवन्ति । अस्यैव विष्णोः प्रियं पाथः अन्तरिक्षं ब्रह्मलोकमिति वा । यत्र नरा विष्णुपदमिच्छन्तो यज्ञदानादिभिः मदन्ति तृप्तिमनुभवन्ति । अत एव विष्णोः व्यापकस्य परमेश्वरस्य उत्कृष्टे निरतिशयकेवलसुखात्मके पदे मधुरसस्य उत्सः निष्यन्दो वर्त्तते तमश्यामिति भावः । स हि खलु सर्वेषां सुकृतिनां बन्धुः तस्य पदं प्राप्तवतां निरतिशय आनन्दः सम्भवति ।

तथा हे स्त्रीपुरुषौ वां युष्मदर्थं तानि गन्तव्यत्वेन प्रसिद्धानि वसितुं योग्यानि स्थानानि कामयामहे यत्र गावः ज्ञानरश्मयः अत्युन्नताः सर्वैराश्रयणीया अयासः अत्यन्तप्रकाशयुक्ताः विलसन्ति । अत्र कामानां वर्षितुः उरुगायस्य बहु स्तुत्यस्य वृष्णः परमेश्वरस्य पदं स्वमहिम्ना स्फुरति । समस्तमानवानां मोक्षपदं प्रकाशात्मकं गन्तव्यत्वेनात्रोपदिष्टमवभाति । नूनं परमेश्वरस्य माहात्म्यप्रदर्शकमिदं सूक्तम् ।

ऋग्वेदे एकमन्यदतिरहस्यमयं पञ्चदशर्चं सूक्तं इन्द्रस्वरूपवर्णनात्मकम् । इन्द्रशब्दोऽत्र परमेश्वरं जनेश्वरञ्चाभिधत्ते । यद्यप्यत्रैतिहासिकैरितिहासमाचक्षाणै-रुच्यते 'पुरा किलेन्द्रादयो वेन्ययज्ञं समाजग्मुः । गृत्समदोऽपि महर्षिस्तत्रास । दैत्या-श्चेन्द्रजिघांसया तत्र समागमन् । तान् दृष्ट्वा निर्जगामेन्द्रो यज्ञाद् गृत्समदाकृतिः । तदनु वेन्येन पूजितं यज्ञवाटान्निर्गच्छन्तं गृत्समदर्मृषिं दृष्ट्वा, अयमेव इन्द्र इति मन्य-मानास्तमसुरा परिवव्रुः । नाहमिन्द्रः किन्त्वेवं गुणोपेतः स इत्यनेन सूक्तेन तान् प्रत्युवाच । अन्ये त्वेवं वर्णयन्ति गृत्समदस्य यज्ञे प्रविष्टमेकाकिनमिन्द्रं ज्ञात्वा असुराः परिवव्रुः । इन्द्रश्च यज्ञान्निर्गत्य गृत्समदरूपेण स्वर्गं जगाम । ततो असुरा अन्तः प्रविश्य, गृत्समदस्तु गतोऽयमेवेन्द्रो गृत्समदरूपेणास्ते इति तं जगृहुः । स तान् नाहमिन्द्रोऽयमिति 'यो जात' इति सूक्तेन प्रत्युवाच । परन्तु नैरुक्तास्तु परमेश्वरः कीदृग्गुणोपेतः, राज्ञा वा कीदृग्गुणोपेतेन भवितव्यमिति सूक्तेनास्मिन्नुपवर्ण्यते । न कर्हिचिदितिहासः । मन्त्रेषु गृत्समदादीनां चर्चाया नितरामसद्भावात् ।

तथाच :

यो जात एव प्रथमो मनस्वान्देवा देवान्क्रतुना पर्यभूषत् ।
यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ला स जनास इन्द्रः ॥१॥

यः पृथिवीं व्यथमानामदृंहद्यः पर्वतान्प्रकुपिताँ अरम्णात् ।
यो अन्तरिक्षं विममे वरीयो यो द्यामस्तभ्नात्स जनास इन्द्रः ॥२॥

× × ×

यस्मान्न ऋते विजयन्ते जनासो यं युध्यमाना अवसे हवन्ते ।
यो विश्वस्य प्रतिमानं बभूव यो अच्युतच्युत्स जनास इन्द्रः ॥९॥

× × ×

यः शम्बरं पर्वतेषु क्षियन्तं चत्वारिंश्यं शरद्यन्वविन्दत् ।
ओजायमानं यो अहिं जघान दानुं शयानं स जनास इन्द्रः ॥११॥

× × ×

द्यावा चिदस्मै पृथिवी नमेते शुष्माच्चिदस्य पर्वता भयन्ते ।
यः सोमपा निचितो वज्रबाहुर्यो वज्रहस्तः स जनास इन्द्रः ॥१४॥

अयमाशयः—

यः खलु सर्वप्रकारेण सर्वोत्कर्षमादधानं विश्वजिद्यज्ञमनुतिष्ठन् सर्वश्रेष्ठतया प्रथमः देवानां प्रधानभूतः मनस्विनामग्रगण्यः देवः द्योतमानः इन्द्रत्वेन जातः सर्वैर्देवैः वृतो रक्षकत्वेन देवान् प्रजाजनान् पर्यभूषत् । यो नृपः खल्वखिलान् वृत्ररूपान् शत्रुजनान् पराजित्य विश्वजिद्यज्ञं विधाय इन्द्रपदं प्राप्नोति——स एव पुरुषव्याघ्रः इन्द्रपदेनालंक्रियत इति प्राचीना परम्परा। स एव इन्द्रो राष्ट्रपती राजा वा भवेत्। यस्य शुष्मात् बलात् द्यावापृथिव्यौ अबिभीताम् (भ्यस भये) नृम्णस्य सेनादिबलस्य महिम्ना युक्तः स एव राजेतिपदयोग्य इति भावः । यो व्यथमानां पृथिवीं राष्ट्रमिति यावत् दृढां करोति । यश्च प्रकुपितान् पर्वतसदृशान् विपक्षान् स्थाने व्यवस्थापयति । अन्तरिक्षमुपलक्षणमेतद् वातावरणस्य । यश्च वायु-मण्डलं वरीयो निर्माति यश्च तेजसा द्युलोकं अस्तभ्नात् स एव इन्द्रो भवितुमर्हति । यस्मादृते प्रजाजना विजयं न प्राप्नुवन्ति, अतः युद्धचमाना यमवसे रक्षणाय आह्वयन्ति । यश्च विश्वस्य राष्ट्रस्य प्रतिनिधिर्बभूव पर्वतानां पर्वत इव द्रढीयसां शत्रूणां च्यावयिता स एव इन्द्रपदभाक् ।

यस्मै इन्द्राय द्यावापृथिवी स्वयं प्रह्वीभवतः। यस्य बलात् पर्वता बिभ्यति यश्च वज्रबाहुः वज्रहस्तः स एव इन्द्रो भवेत्। यस्य च राज्ये सोमः पय-आदि-पेय-

वस्तूनि पुष्कलानि यस्य वा राधः अन्नादिखाद्यसामग्री च प्रवृद्धा भवति स एव, इन्द्रपदारूढो भवतु, नान्यः। सूक्तमिदं पक्षे ईश्वरपरत्वेनापि व्याख्येयम्।

## मोक्षानन्दः

मोक्षानन्दस्वरूपं वर्णयन् तदभ्यर्थनञ्च मन्त्रवर्णैराहः—

'यत्र ज्योतिरजस्रं यस्मिन् लोके स्वर्हितम्।
तस्मिन् मां धेहि पवमानामृते लोके अक्षित इन्द्रायेन्दो परिस्रव ॥
[ऋ० मं० ९, सू० ११३,७]

'आ पवस्व दिशांपते आर्जीकात् सोम मीढ्वः।
ऋतवाकेन सत्येन श्रद्धया तपसा सुतं इन्द्रायेन्दो परिस्रव ॥
[ऋ० ९। ११३। २]

इत्यनेनैतदुक्तं भवति—स खलु मोक्षानन्दानुभवः सत्येन श्रद्धया तपसा चाध्यात्मिकज्योतिष्प्रदीप्त्या एव सम्भवति।

ज्ञानज्योतिरेव मोक्षमार्गपरिपन्थिनः समस्तान् प्रत्यूहव्यूहान् निदहाति, सर्वाणि च दुर्गाणि च पर्षदति। इत्याहः—

'जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥
[ऋ० म० १, सू० ९९, मं० १]

यस्य ज्योतिषा सोऽयमात्मा ज्योतिष्मान् भवति विश्वं चैतद् विभाति तं ज्योतिषां ज्योतिःस्वरूपं परमेश्वरं स्तौति :—

'एक एवाग्निर्बहुधा समिद्ध एकः सूर्यो विश्वमनुप्रभूतः।
एकैवोषाः सर्वमिदं विभात्येकं वा इदं वि बभूव सर्वम्।
[ऋ० ८।५८।२]

एकैव 'उषाः' इति पदं प्रकाशात्मकस्याद्वितीयस्य परमेश्वरस्य महिमानमवद्योतयति।

## पुनर्जन्म विषयः

पुनर्जन्माधिकृत्यातिरमणीयं तत्त्वं ऋचो वर्णयन्ति :—

'असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिह नो धेहि भोगम्।
ज्योक् पश्येम सूर्यमुच्चरन्तमनुमते मृडया नः स्वस्ति ॥
[ऋ० ८।१।२३।६]

पुनर्मनः पुनरायुर्म आगन् पुनः प्राणः पुनरात्मा म आगन्।
पुनश्चक्षुः पुनः श्रोत्रं म आगन् ।
वैश्वानरो अदब्धस्तनूपा अग्निर्नः पातु दुरितादवद्यात्। [यजु०४।१५]
आ यो धर्माणि प्रथमः ससाद ततो वपूंषि कृणुते पुरूणि ।
धास्युर्योनिं प्रथम आविवेश यो वाचमनुदितां चिकेत।।
[अथर्व० कां० ५ । अनु० १ । व० १ । म० २]

अन्यच्चाप्येकं प्रजापतिदेवताकं दशर्चं सूक्तं परमेश्वरस्वरूपवर्णन-परमतीव रमणीयम् हिरण्यगर्भाख्यम् । अत्र परमात्मैव हिरण्यगर्भः तदुपाधि-भूतानां पृथिव्यादीनां भौतिकानां ब्रह्मणः सकाशादुत्पत्तेः तदुपहितत्वात्तदुत्पन्नत्व-व्यपदेशः । 'भूतस्य जातः पतिरेक आसीदिति' । स एव एकोऽद्वितीयः सन् भूतस्य विकारजातस्य ब्रह्माण्डादेः पतिरासीत् । यश्च पुनः पृथिवीं उत द्याञ्च दाधार धारयतीत्यर्थः ।[1] 'कस्मै देवाय हविषा विधेम' ? तस्मै हिरण्यगर्भरूपाय प्रजापतये हविषा-नमोवाचा परिचरेमेत्यर्थः । 'कं' इति सुखनाम-सुखस्वरूपाय कस्मै, कमिति प्रजापतिः तस्मै प्रजापतय इति व्याख्यान्तराणि इति । अस्मिन् सूक्ते परमेश्वरस्यैकत्वप्रतिपादकानि वचनानि भूम्नाऽम्नातानि । 'एक इद् राजा जगतः', 'यः देवेषु अधि देव एक आसीत्' इत्यादीनि । अन्ते च

'प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥१०॥

तस्याद्वितीयस्य परमेश्वरस्य देवाधिदेवस्यानुकम्पयैव वयं रयीणां सर्व-विधैश्वर्याणामाध्यात्मिकाधिभौतिकानां पतयः स्वामिनः भवितुमर्हाम इति भावः ।

किञ्चैकमन्यदपि अतिमहत्त्वपूर्णं, सच्चिदानन्दात्मकसर्वगतपरमात्म-देवताकमष्टर्चं 'अहं रुद्रेभिरिति'[2] रोचिष्णु सूक्तम् । सूक्तमिदं वस्तुतः परमेश्वरस्याद्भुतमहिम्नः प्रदर्शकम् ।

'अहं रुद्रेभिः वसुभिः चरामि अहं आदित्यैः उत विश्वदेवैः ।
अहम् मित्रावरुणा उभा बिभर्मि अहम् इन्द्राग्नी इति अहं अश्विना उभा[3] ॥१॥

---

१. छन्दसि लुङ्-लङ्-लिट इति सार्वकालिको लिट् ।
२. ऋग्० १०।१२५ सू० ।
३. ऋग० १०।१२५ सू० ।

अहं सर्वान्तर्यामी परमेश्वरः, रुद्रैः वसुभिः आदित्यैः विश्वदेवैश्च तत्तदात्मना चरामि । अहमेव मित्रावरुणौ, इन्द्राग्नी, अश्विनौ च धारयामि । ईश्वर एव सर्वेषामेषां जगत्कारणानां रुद्रवसुप्रभृतीनां धारकः सञ्चालकश्चेति आकूतम् । केचन सूक्तमिदं अहंपदमहिम्ना, ब्रह्मैकवादस्य मूलं मन्यमाना व्यवस्थापयन्ति 'सर्वं खलु अहं ब्रह्मेति' मयि हि सर्वं जगत् शुक्तौ रजतमिवाध्यस्तं संदृश्यते । माया च जगदाकारेण विवर्तते । तादृश्या मायाया आधारेण असङ्गस्यापि ब्रह्मण उत्पत्तिरित्यादि । तत्रेतरे विप्रतिपद्यन्ते । तेऽभ्युपगच्छन्ति यदत्र सर्वस्यास्य जगतोऽधिष्ठानरूपत्वेन भगवतः सर्वान्तर्यामिणः परमेश्वरस्यैव संस्तवः प्रदर्श्यते न जातु जगद्ब्रह्मणोरेकत्वं प्रस्तूयते । किञ्च —

अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् ।
ताम् मा देवाः व्यदधुः पुरुत्रा भूरिस्थात्राम् भूरि आवेशयन्तीम् ॥ ३ ॥
[ऋ० १०।१२५।३]

अहम् एव स्वयं इदम् वदामि जुष्टं देवेभिः उत मानुषेभि ।
यम् कामये तम् उग्रं कृणोमि तं ब्रह्माणम् तम् ऋषिं तम् सुमेधाम् ॥५॥

अहम् रुद्राय धनुः आ तनोमि ब्रह्मद्विषे शरव हन्तवै ऊँ इति ।
अहम् जनाय समदं कृणोमि अहम् द्यावापृथिवी इति आ विवेश ॥६॥

ब्राह्मीं शक्तिमुद्दिश्य कीदृशं मनोज्ञं संस्तवनम् । वस्तुतः प्रशस्तकर्मणैव जनः लब्धेश्वरप्रसादः ब्रह्मत्वमृषित्वं सुमेधाञ्च प्राप्तुं शक्नोति नान्यथेति 'यं कामये, तं ब्रह्माणं' इत्यादिना सूच्यते ।

## वेदे आयुर्वेद-विज्ञानम्

आयुर्वेदो हि नाम आयुषो वेदः । 'आयुर्जीवितमुच्यते । जीवितं येन ज्ञातेन विन्द्यते लभ्यते वा स आयुर्वेदः । तदिदं आयुर्वेदशास्त्रमुपाङ्गमथर्ववेदस्य एवमायुर्वेदस्य वेदाङ्गत्वमभ्युपगते, सुतरां स्वीकृतं भवति यदायुर्वेदस्य मूलभूताः सिद्धान्ता वेदेषु तत्र तत्र गर्भीकृता अनुसन्धेया एव । वेदेषु बहुशो वैद्यकविषयः उपलभ्यते । ऋग्वेदे उपाख्यानरूपेणोपवर्णितं विश्पलाया अश्विभ्यां जङ्घा-योजनम् । ऋज्राश्वस्य चक्षुषोरुन्मीलनम्, श्रोणस्य जानु प्रगुणीकृतञ्च कस्य न कुतूहलं जनयेत् । अन्यत्र ओषधीनां नामकीर्तनं प्रयोगश्चाप्युपदिष्टोऽवगम्यते । रोगाणां संज्ञाः, तेषां निरसनोपायाश्च वैलक्षण्येन वर्णिताः । अथर्ववेदेऽपि नाना रोगास्तद्धेतवः रोगप्रतीकाराश्चापि निर्दिष्टा विलोक्यन्ते । मान्त्रिकी चिकित्साऽपि भूयसा तत्र पल्लविता । रोगविशेषाणां निरासाय मन्त्रविशेषैः व्याधितानां

मार्जनजलाभिषेचनाभिमन्त्रणधूपनादीनामुपदेशः। शल्यप्रक्रियया ऽपि च विकृतानां शरीरावयवानां छेदनभेदनादिना रोगनिबर्हणम्। मन्त्रविद्यायामिव भेषज-प्रयोगेनापि व्याधिप्रतीकारो यत्र तत्र बहुत्र समाम्नातो मन्त्रलिङ्गतः। भिषग्वरैः विप्रैः नानौषधीनां प्रभूतः संग्रहः कार्य इत्युपदिष्टं भवति।

यत्रौषधीनां समग्मत राजानः समिताविव।
विप्रः स उच्यते भिषग्रक्षोहामीवचातनः॥
[ऋक्. १०. ९७. ६]

शतं ते राजन् भिषजः सहस्रमुर्वी गभीरा सुमतिस्ते ऽस्तु।
[ऋग्वेद. १. २४. ९.]

एवं अथर्वण्यपि--

शतं ह्यस्य भिषजः सहस्रमुत वीरुधः। [अथर्व. २. ९. ३]

## त्रिदोषसिद्धान्तः

आयुर्वेदीयचिकित्साशास्त्रस्य मूलभूतः सिद्धान्तः त्रिदोषसमाह्वयः। दूषयन्ति विकृतिमापादयन्ति शरीरं मनश्चेति ये ते दोषाः। ते च दोषा द्विविधाः शारीर-मानसभेदात्। तत्र वायुः पित्तं कफश्चेति शारीराः। रजस्तमश्चेति द्वौ पुनर्मानसौ। सत्वन्तु अविकारित्वान्नाटीकते दोषकोटिम्। गुण एव खलु सः न स दोषपदव्यपदेशभाक्। इदमत्रावधेयम् विकृता एवामी वायुपित्तकफा लभन्ते दोषसंज्ञां न पुनरविकृताः। अविकृतास्त्वमी धातुसंज्ञां भजन्ते। एवं रजस्तमस्यपि वैषम्यं गते एव दोषसंज्ञामवगाहेते। प्रकृतिस्थे ते गुणपदेन व्यपदि-दिश्येते न जातु दोषसंज्ञयेति विवेकः। अमी च दोषा मलिनीकरणान्मला अप्यु-च्यन्ते। उक्तञ्च

शरीरदूषणाद्दोषा धातवो देहधारणात्।
वातपित्तकफा ज्ञेया मलिनीकरणान्मलाः॥ [शार्ङ्गधरः]

एवं चरकेऽपि :--

वायुः पित्तं कफश्चेति शारीरो दोषसंग्रहः।
मानसः पुनरुद्दिष्टो रजश्च तम एव च॥
[चरक सं० अ० १]

तात्त्विकदिशा तु अधिष्ठानभेदेन रोगा द्विविधाः, शारीरा मानसा-श्चेति. तत्र विकारमापन्ना वातादयः तत्तद्रोगाणामाभ्यन्तरकारणभूता रसरक्ता-दीनि दूष्याणि दूषयन्तः ये जनयन्ति शरीरभवान् रोगान् ते शारीराः। वैषम्य-

मापन्ने पुना रजस्तमसी तत्तद्रोगाणामाभ्यन्तरकारणभूते कामक्रोधलोभमोहोन्मादविक्षेपविभ्रमादिरोगाधिष्ठानभूतं मनो दूषयन्ती उपजनयतस्ताँस्तान् रोगान् मनोभवान् ये ते मानसाः। तत्र सत्त्वस्य निर्मलत्वात् प्रकाशात्मकत्वात् गुणत्वमेव न दोषत्वमिति भावः। तदेषां त्रिदोषाणां गतिः क्षयोपचयस्वरूपावस्थानभेदात् त्रिविधा। क्षये एषां ह्रासः, उपचये एषां वृद्धिः प्रकोपो वा, स्वरूपावस्थाने च पुनः स्वाभाविकी स्थितिः प्रकृतिस्थता समत्वरूपा। तथा चोक्तं चरके 'क्षयः स्थानं वृद्धिश्च विज्ञेया त्रिविधा गतिः।' तत्र क्षयवृद्धी विकृतिरूपे, स्थानं च समत्वरूपं प्रकृतिस्थं न विकारभूतं, विकृतिस्तु स्वभावविपर्ययः, स च क्षयवृद्धिरूप एव इति दिक्। तदेवंस्वरूपाणां वातपित्तकफात्मकानां त्रयाणां दोषाणां बीजभूतो मौलिकः सिद्धान्तोऽपि समीचीनतयोट्टङ्कीकृतो दृश्यते वेदे सारतरोच्चयरूपेण तथाहि—

तं युञ्जाथां मनसो यो जवीयान् त्रिबन्धुरो वृषणा यस्त्रिचक्रः।
येनोपयाथः सुकृतो दुरोणं त्रिधातुना पतथो विर्न पर्णैः॥
[ऋ. १।१८३।१]

अत्र त्रिधातुरित्यनेन वातपित्तकफसमाख्याः त्रिधातव एव परिसंख्यायन्ते।

त्रिर्नो अश्विना यजता दिवे दिवे परि त्रिधातु पृथिवीमशायतम्।
तिस्रो नासत्या रथ्या परावत आत्मेव वातः स्वसराणि गच्छतम्॥
[ऋग्० १।३४।७]

अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन्।
अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम॥
[ऋ० ३।२६।७]

त्रिरा दिवः सवितर्वार्याणि दिवे दिवे आसुव त्रिर्नो अह्नः।
त्रिधातु राय आसुवा वसूनि भग त्रातर्धिषणे सातये धाः॥
[ऋग्० ३।५६।६]

अहमपो अपिन्वमुक्षमाणा धारयं दिवं सदन ऋतस्य।
ऋतेन पुत्रो अदितेर्ऋतावोत त्रिधातु प्रथयद्विभूम॥ [ऋग्० ४।४२।४]

इत्यादिमन्त्रेषु त्रिधातुपदेन वातपित्तश्लेष्माण एव विवक्षिताः। त्रिधातुः, त्रिदोषः, त्रिमलः इत्यनर्थान्तरम्। त्रिदोषविज्ञानमेव एषां प्रतिपाद्यो विषयः। तत्र धातुसाम्यात्स्वास्थ्यं त्रिधातुवैषम्याच्च रोगः। दोषाः क्षीणा बृंहयितव्याः, कुपिताः प्रशमयितव्याः, वृद्धा निर्हर्त्तव्याः, समास्तु तादवस्थ्येन परिपालनीयाः स्वास्थ्यमभिलषद्भिर्भिषग्भिरिति भावः॥

## शल्यक्रियया रोगनिबर्हणम्

वि ते भिनद्मि मेहनं वि योनिं वि गवीनके ।
वि मातरं च पुत्रं च वि कुमारं जरायुणाऽव जरायु पद्यताम् ॥
[अथर्व० १।११।५]

अत्रातीव क्लिष्टरोगेषु गर्भिण्याः चिकित्सा शस्त्रक्रिययोपदिष्टा ॥ 'भिनद्मि' पदेन भेदनं छेदनञ्चोपदिश्यते । क्लिष्टप्रसवकर्मणि यदा मातुर्वा पुत्रस्य वा जीवनं सङ्कटापन्नं तदा शल्यक्रियया जीवनं रक्षेत् क्रियाकुशलः शल्य-तन्त्रतत्वज्ञः ।

## वेदे अलङ्कारोपदेशः

वेदेषु यथा अनेका विद्या, बहूनि विज्ञानानि, शिल्पकलाः गणित-ज्यौतिष-शास्त्राणि बीजरूपेणोपदिष्टानि, तथैवालङ्कारनिर्देशोऽप्यतिरमणीयतया समाविष्टो-ऽवगम्यते । प्रायशः प्रमुखाः सर्वे एवालङ्कारा दृग्गोचरीभवन्ति । तेषु कतिचन दिङमात्रदिशाऽत्र पुरस्सरीक्रियन्ते सहृदयहृदयाह्लादनाय :—

तत्र तावद्-उपमाऽलङ्कार :—

"सूर्यो देवीमुषसं रोचमानां मर्यो न योषामभ्येति पश्चात् ॥"
[ऋग्० १।११५।२]

'स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये ॥
[ऋग्० १।१।९]

अत्र 'मर्यो न योषामित्यत्र 'न' इतीवार्थः ।

तल्लक्षणञ्च 'साधर्म्यमुपमाभेदे' इति ।

अतिशयोक्ति :—

'यदिन्द्र यावतस्त्वमेतावदहमीशीय ।
स्तोतारमिद्दिधिषेय रदावसो न पापत्वाय रासीय ॥
[ऋ० ७।३२।१८]

हे इन्द्र ! यदि यावदैश्वर्यं तवास्ति तावन्मम स्यान्नाम, तर्हि स्तोतृगणान् धनदानेनोपकुर्याम् । इत्यादि । अत्र असम्भाव्यमपि इन्द्रैश्वर्यं सम्भावितमित्य-तिशयोक्तिः । तल्लक्षणञ्च 'प्रस्तुतस्य यदन्यत्वमित्यादि' (रसगङ्गाधरे)

दृष्टान्तालङ्कार :—

'यद्धरिणो यवमत्ति न पुष्टं पशु मन्यते ।
शूद्रा यदर्यजारा न पोषाय धनायति ॥

अत्र यथा हरिणो यवमदन् न पुष्ट इति मन्यते किन्तर्हि कोपनिमित्तं भवति

क्षेत्रिणः तथा व्यवायमुपेता शूद्रा न धनं लब्धवतीति मन्यते किन्तर्हि व्यभिचारिणीयमिति कोपनिमित्तं भवति। इत्यस्मिन्नर्थे द्वयोरपि वाक्यार्थयोः विम्बप्रतिबिम्बभावस्य सङ्गमनात्साधीयान् दृष्टान्तः। तल्लक्षणञ्च—

'प्रकृतवाक्यार्थघटकानामुपमादीनां साधारणधर्मस्य च बिम्बप्रतिबिम्बभावो दृष्टान्तः" इति।

अपिच :—

'अहरहरप्रयावं भरन्तोऽश्वायेव तिष्ठते घासमस्मै। रायस्पोषेण समिषा मदन्तोऽग्ने मा ते प्रतिवेशा रिषाम॥ (यजुः० ११।७५)

अत्रापि बिम्बप्रतिविम्बसद्भावाद् दृष्टान्तालङ्कारः न तूपमेति।

रूपकालङ्कार :—

'यः कुक्षिः सोमपातमः समुद्र इव पिन्वते॥ [ऋ० १।८।७]

अत्र सोमपातमे इन्द्रे कुक्षित्वारोपाद्रूपकम्। उक्तञ्च—

'तद्रूपकमभेदो य उपमानोपमेययोः।' इति

अर्थान्तरन्यास :—

मा त्वा सोमस्य गल्दया सदा याचन्नहं गिरा।
भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत्॥

इत्यत्र 'क ईशानं न याचिषत्' इति सामान्येन वाक्यार्थेन विशेषस्य मेधातिथिकर्तृकस्य इन्द्रकर्मकयाचनस्य समर्थनात् अर्थान्तरन्यासः। उक्तञ्च काव्यप्रकाशेः— 'सामान्यं वा विशेषेण तदन्येन समर्थ्यते।
ज्ञेयः सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा॥

व्यतिरेकालङ्कार :—

'मूरा अमूर न वयं चिकित्वो महित्वमग्ने त्वमङ्ग वित्से॥ [ऋ० १०।६।४]

इत्यत्र वयं मूरा त्वञ्चामूर इति व्यतिरेकः।

उत्प्रेक्षा :—

'अस्येदु भिया गिरयश्च दृढा, द्यावा च भूमा जनुषस्तुजेते॥
[ऋ० १।६१।१४]

अत्र, इन्द्रस्य भिया गिरीणां दृढत्वं, द्यावाभूम्योश्च कम्पनं संभाव्यते। तस्य सम्भावनस्येवादिशब्दासद्भावादपि गम्यत्वादगम्योत्प्रेक्षाऽलङ्कारोऽयम्। इत्याद्या बहवोऽलङ्कारा अपि वेदेषु निर्दिष्टा दृश्यन्त इति।

## सामाजिक व्यवस्था

रुचं नो धेहि ब्राह्मणेषु रुचं राजसु नस्कृधि।
रुचं विश्येषु शूद्रेषु मयि धेहि रुचा रुचम्॥ [यजु० १८।४८]

अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेषु असमा बभूवुः ।
आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे ॥
[ऋ० १०।७१।७]

सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे सञ्जानाना उपासते ॥ [ऋ० १०।१९१।२]

इत्यादिषु मन्त्रेषु ब्राह्मणादिचतुर्वर्णेषु कीदृशं साम्यं तेजश्च परस्परञ्च साम्मनस्यं भवेदिति समासतः प्रपञ्चितम् । यद्यपि मनोजवेषु ते असमाः सम्भवेयुः परं परस्परं सखायः सन्तः स्व-स्वधर्मं संगमनेनानुतिष्ठन्तु समाजहितपरायणाः । न तेषु कश्चिज्ज्येष्ठो नापि कनिष्ठः । तथाच :—

अज्येष्ठासो अकनिष्ठास एते संभ्रातरो वावृधुः सौभगाय ।
युवा पिता स्वपा रुद्र एषां सुदुघा पृश्निः सुदिना मरुद्भ्यः ॥
[ऋ० ५।६।५]

## वेदतत्त्वज्ञानम्

सामान्यदिशा, विहगावलोकनेन, विज्ञायते, यद्वेदेषु गणनातीतानां लोकोपयोगिविषयाणां निर्देशाः कृताः । येषां वर्णनमतीव रोचिष्णु हृदयङ्गमञ्च । तद्दिङ्मात्रमिहोपवर्ण्यते संग्रहेण ।—तत्र तावज्ज्यौतिषम् ।

ज्योतिर्विज्ञानस्य खगोलस्य चर्चाऽपि हृदयावर्जिका । सूर्यस्य रथः ५०५९ योजनं प्रचलति । गतिमानं प्रतिदण्डं, तस्य ७९ योजनमितम् । उषाश्च सूर्योदयादर्द्धदण्डपूर्वमुपयाति [१।१२३।८]

द्वादशराशीनां पञ्चर्त्तूनामुल्लेखोऽपि वेदे दृश्यते [१।१६४।१३] । हेमन्तशिशिरमेकीकृत्य ऋतवः पञ्च एवाभिमता इति प्रतिभाति । मलिम्लुचापरनामधेयस्य मलमासस्यापि [१।२५।८] वर्णनं विवृतम् । सूर्यग्रहणमप्युपदिष्टम् [५।४०।५९] । सति दक्षिणायने सूर्ये वृष्टिर्भवति । सूर्यरश्मिसम्पातेनैव चन्द्रमाः प्रकाशते न स स्वयं ज्योतिष्मान् इति निगदितम् । नगरेषु लौहमयानि स्वर्णमयानि गृहाणि सम्भवन्ति । सिंहादयो हिंस्रप्राणिनो हन्तव्याः [७।१८।१७], सुवर्णमुद्रोपवर्णनम् [८।२।४१], शतधारालंकृतस्य वज्रस्य विवरणम् । अश्वः, उष्ट्रः, हस्ती, गौः, इत्यादिपशूनां ग्राम्यत्वं प्रसाधनीयमिति निर्दिष्टम् [८।५६।२२-२४] पूर्वाफाल्गुनी, उत्तराफाल्गुनी, मघा इत्यादिवर्णनमपि । पृथिव्यादिभ्रमणं, ध्रुवारुन्धतीनिर्देशः वेदे ज्योतिर्विद्याविज्ञानबीजं प्रमाणयति । सूर्य्यदेवताकमेवैकं सूक्तं षड्ऋचं 'चित्रं देवाना' मित्यादि सूर्य्यस्य धर्माणि विवृण्वदतीव रोचिष्णु प्रतिपन्नम् ।

चित्रं देवानामुदगादनीकं, चक्षुर्मित्रस्य वरुणस्याग्नेः।
आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ।।

देवानां–दिव्यरश्मीनां अनीकं तेजः समूहरूपं, चित्रमाश्चर्यकरं मित्रवरुणाग्नेश्चैत्येतदुपलक्षितजगतः प्रकाशकम् सूर्यमण्डलमुदगात् उदयमाससाद। द्यावापृथिव्यन्तरिक्षञ्च आ प्राः अपूरयत् स्वीयतेजसा इति भावः। नूनं सोऽयं सूर्यः जगतस्तस्थुषश्चात्मा। जंगमस्थावरात्मकस्य सकलजगतः गतिप्रदायकः। उदिते सूर्ये जडीभूतं मृतप्रायमखिलं जगत्पुनश्चेतनतां प्रयातीति सूर्ये[१] आत्मत्वव्यपदेशः।

'सूर्यो देवीमुषसं रोचमानाम्मर्यो न योषामभ्येति पश्चात्।
यत्रा नरो देवयन्तो युगानि प्रतन्वते प्रति भद्राय भद्रम्।।

सूर्यः मर्त्य इव योषां, रोचमानामुषसं पश्चादभ्येति। यस्यामुषसि जातायां भद्राय आत्मकल्याणाय भद्रं कर्म वितन्वते। युगानि युग्मानि भूत्वा पत्नीभिः सहिता यज्ञादिकर्माणि विस्तारयन्तीत्यर्थः।

भद्रा अश्वा हरितः सूर्यस्य चित्रा एतग्वा अनुमाद्यासः।
नमस्यन्तो दिव आ पृष्ठमास्थुः परि द्यावापृथिवी यन्ति सद्यः।।३।।

सूर्यस्य हरितः हरितनीलादिचित्रा—चित्रविचित्रवर्णा अश्वा रश्मयः एतग्वा–गन्तव्यमार्गं गन्तारः दिवः पृष्ठमास्थुः आतिष्ठन्ति। सद्यः, द्यावापृथिवी परियन्ति व्याप्नुवन्ति। अभिव्याप्य च किं कुर्वन्ति, इत्यत्राह—

तत्सूर्यस्य देवत्वं तन्महित्व, मध्याकीर्त्तोर्विततं सं जभार।
यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ।।४।।

प्राङ्निर्दिष्टं-सूर्यस्य तद्देवत्वं तन्महत्त्वं यत्कर्मणो मध्य एव यद् विततं रश्मिजातं संजभार संहरति। यदेत् यस्मिन् काले हरितः रश्मीन् सधस्थादस्मात् मण्डलात् अयुक्त–अन्यत्र संयुक्तान् करोति तद् रात्री निशा वासः तमोलक्षणं पटं सिमस्मै-सर्वस्मै भूमण्डलाय विस्तारयतीत्यर्थः।

अस्तंगते हि सूर्ये निशा स्ववितानं तनुते इत्यर्थः।

पुनः किं करोति सूर्यः––

तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुत द्योरुपस्थे।
अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सं भरन्ति।।५।।

तस्य मित्रावरुणेत्युभयोपलक्षितस्य सर्वजगतः अभिचक्षे प्रकाशनाय नभसः मध्ये, रूपं हरितारुणनीलपीतादिसप्तवर्णात्मकं कुरुते। अस्य अनन्तं बलं

१. "प्राणः प्रजानामुदयत्येष सूर्यः" इत्यन्यत्रापि वेदे।

अन्यत् तमसो भिन्नं, श्वेतवर्णं तेजः संभरन्ति। इति सूर्य एव रश्मिद्वारा वनलता-तरुकुसुम फलादिषु वर्णजातं संभृत्य नानारूपं ददातीत्यर्थः।

किञ्च--

अद्या देवा उदिता सूर्यस्य निरंहसः पिपृता निरवद्यात्।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥६॥

इमे सूर्यस्य उदिता देवा रश्मयः अंहसः दोषाद् निष्क्रम्य तान् दूरीकृत्य पिपृता अस्मान् रक्षयन्त्वित्यर्थः। एवं मित्रादयः[1] षड् देवता अपि अस्मान् पालयन्तु।

वेदा यो वीनां पदमन्तरिक्षेण पतताम्।
वेद नावः समुद्रियः ॥७॥
वेद मासो धृतव्रतो द्वादश प्रजाऽवतः।
वेद य उपजायते ॥८॥
× × ×
निषसाद धृतव्रतो वरुणः पस्त्या ३ स्वा।
साम्राज्याय सुक्रतुः ॥१०॥
× × ×
त्वं विश्वस्य मेधिर दिवश्च ग्मश्च राजसि।
स यामनि प्रति श्रुधि ॥२०॥
उदुत्तमं मुमुग्धि नो वि पाशं मध्यमं चृत।
अवा धामानि जीवसे ॥२१॥

स पूर्वोक्तः शोभनकर्मा वरुणः प्रजासु साम्राज्याय निषीदतु। स च आकाशमार्गेण पततां विमानानां, ज्ञाता, निर्माता समुद्रियनौकानाञ्च सञ्चालको भवतु।

यश्च द्वादशमासान् त्रयोदशमधिकं मासञ्च परिचिनोति स विश्वस्य अद्वितीयो मेधावी द्युलोकभूलोकयोर्मध्ये तेजसा विराजमानो भवतु। अतीव तेजस्वीत्यर्थः किञ्च प्रजा रक्षिष्यामीति प्रतिज्ञावान् प्रजानां योगक्षेमप्रसाधको भवत्वित्यर्थः ॥२॥ तदाभिर्ऋग्भी राज्ञा कीदृशेन भाव्यमिति निर्दिष्टं भवति। इत्यर्थान्तरमपि ध्वन्यते। धृतव्रतः क्षत्रश्रियः, सुक्रतुरित्यादि विशेषणानि सुतरामर्थवन्ति प्रतिभान्ति।

---

१. मित्रः प्रमीतेस्त्रायकोऽहरभिमानी देवः। वरुणोऽनिष्टानां निवारयिता रात्र्यभिमानी। अदितिरखण्डमीया अदीना देवता। सिन्धुः, स्यन्दनशीलोदकाभिमानिनी देवता। पृथ्वी भूलोकस्याधिष्ठात्री देवता। द्यौः द्युलोकस्य, इति सायणः।

## अथ यजुर्वेदः

यथा ऋग्वेदः विविधपदार्थानां स्तोत्रलक्षणाभिः ऋग्भिर्घटितत्वादन्वर्थनामा, स्तुत्यर्थादृच्धातोर्निष्पन्नः तथैव यजुर्वेदोऽप्ययं यज्ञयागादिक्रियाकलापानुरोधेन मन्त्रघटितत्वात् अन्वर्थनामा, देवपूजासंगतिकरणदानाद्यर्थकाद्यजतेर्निष्पन्नः। ऋग्भिः स्तुवन्ति यजुर्भिर्यजन्तीति तद्व्युत्पत्तेः।

सोऽयं यजुर्वेदः चत्वारिंशद(४०)ध्यायघटितः त्रिशतोत्तरत्रि(३०३)भिरनुवाकैर्निबद्धः पञ्चसप्तत्युत्तरैकोनविंशतिशत (१९७५) मितकण्डिकाभिर्मण्डितः २९६२५ शब्दैरलंकृतः, ८८८७५ मिताक्षरैः संवलितश्च। कर्मकाण्डानुरोधेनास्य प्रथमेऽध्याये दर्शपूर्णमासौ, द्वितीये–पिण्डपितृयज्ञः, तृतीये चाग्निहोत्रं चातुर्मास्येष्टिः, चतुर्थादारभ्याष्टमाध्यायपर्यन्तमग्निष्टोमविधानम्, सोमयागः। नवमे वाजपेयो राजसूययज्ञश्च। दशमे सौत्रामणिः। पुनरेकादशादष्टादशपर्यन्तं 'अग्निचयन'-प्रकरणम् उखाभरणं, चितयः, रुद्रः शतरुद्रियम्, वसोर्धारा, राष्ट्रभृत्। एकोनविंशतितमाध्यायात्परिशिष्ट आरभ्यते। ततो विंशत्येकविंशतितमे च सोमसम्पादनविधिः। तदनु पञ्चविंशतिपर्यन्तमश्वमेधप्रसंगः। पुनः शेषे च पुरुषमेध-सर्वमेध-पितृमेधादिविवरणञ्च प्रपञ्चितम्। चत्वारिंशत्तमोऽध्यायश्च ईशावास्योपनिषद्रूपेण पर्यवसितः। इति संक्षेपतः यजुर्विषयविवृतिः।

वस्तुतो यजुर्वेदे मानवसमाजसमुन्नत्यर्थं वर्णाश्रमव्यवस्थानिर्देशव्यतिरिक्तं अन्यान्यान्यपि इतिकर्तव्यतोपदेशपराणि आध्यात्मिकोन्नतिविषयाणि वचनानि उपलभ्यन्ते। भौतिकविज्ञानपराणि गणितविज्ञाननिदर्शनानि च बहुशो दृश्यन्ते प्रेयःश्रेयःसाधनानि। तत्किञ्चिदिह स्थालीपुलाकन्यायेन सुमनसां मनोमोदाय विविच्यन्ते। मनुष्येण तावद् बलवता ओजस्विना तेजस्विना च भवितव्यं सर्वतः प्रागिति मौलिको सर्वसम्मतः कल्पः। शक्तिशाली पुरुषः एव प्रेयः श्रेयश्च साधयितुं शक्नोति नाशक्तः, इति प्रार्थनारूपेणोपदिशति :—

ओ३म् तेजोऽसि तेजो मयि धेहि, वीर्यमसि वीर्यं मयि धेहि।
बलमसि बलं मयि धेहि, सहोऽसि सहो मयि धेहि॥ [यजु० १९।९]

एवंविधा गुणा व्रतानुष्ठानेनैव सिद्ध्यन्ति तद्व्रतोपदेशः।

व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम्।
दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते॥ [यजु० १९।३०]

पुनन्तु मा देवजनाः पुनन्तु मनसा धियः।
पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा॥ [यजु० १९।३९]

## तिस्रो देव्यो वर्धनीयाः

तत्र प्रथमा सरस्वती शिक्षा विद्या, द्वितीया इडा भूमिः राष्ट्रमित्यर्थः, तृतीया भारती संस्कृतिश्चेति तिस्रः शक्तयो राष्ट्रं सुसमृद्धं कुर्वन्ति इति। तदुपदिश्यते--

तिस्रो देवीर्हविषा वर्धमाना इन्द्रं जुषाणा जनयो न पत्नीः।
अच्छिन्नं तन्तुं पयसा सरस्वतीडा देवी भारती विश्वतूर्त्तिः॥
[यजु० २०।४३]

अपि च :--

तिस्रस्त्रेधा सरस्वत्यश्विना भारतीडा।
तीव्रं परिस्रुता सोममिन्द्राय सुषुवुर्मदम् ॥६३॥

पावका नः सरस्वती वाजेभि र्वाजिनीवती।
यज्ञं वष्टु धिया वसु ॥ [यजु० २०।८४]

चोदयित्री सूनृतानां चेतन्ती सुमतीनाम्।
यज्ञं दधे सरस्वती ॥[यजु० २०।८५]

महो अर्णः सरस्वती प्र चेतयति केतुना।
धियो विश्वा वि राजति ॥ [यजु० २०।८६]

## मनुष्यमात्रकृते ज्ञानोपदेशः

'यथेमां वाचं कल्याणीमावदानि जनेभ्यः।
ब्रह्मराजन्याभ्या ँ शूद्राय चार्याय चारणाय च ॥ [यजु० २६।२]

इति उदाहृतपूर्वम्।

## मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षामहे

दृते दृ ँह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्।
मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे। मित्रस्य चक्षुषा समीक्षामहे ॥
[यजु० ३६।१८]

तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात्॥ [यजु० ३८।२४]

एतेन शतायुर्वै पुरुषो भवेत्। भूयश्च शरदः शतात् सर्वेन्द्रियः स्वस्थश्च भवेदिति उपदिष्टं भवति।

सुमित्रिया न आप ओषधयः सन्तु । दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः । [यजु० ३६।२३]

## विद्युद्विज्ञानम्

एषु मन्त्रेषु विद्युद्विज्ञानमुपदिश्यते :—

वैश्वानरः अदब्धस्तनूपा अग्निर्नः पातु दुरितादवद्यात् ॥ [यजु० ४।१५]

'त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्यः । रास्वेयत्सोमा भूयो भर देवो नः सविता वसोर्दाता वस्वदात् ॥ [यजु० ४।१६]

'एषा ते शुक्र तनू रेतद्वर्चस्तया सम्भव भ्राजं गच्छ ।
जूरसि धृता मनसा जुष्टा विष्णवे ॥ [यजु० ४।१७]

तस्यास्ते सत्यसवसः प्रसवे तन्वो यन्त्रमशीय स्वाहा ।
शुक्रमसि, चन्द्रमसि, अमृतमसि, वैश्वदेवमसि । [यजु० ४।१८ ]

चिदसि मनासि धीरसि दक्षिणासि, क्षत्रियासि यज्ञियासि अदितिरसि उभयतः शीर्ष्णी । सा नः सु प्राची सुप्रतीची एधि मित्रस्त्वा पदि बध्नीतां पूषाऽध्वनस्पात्विन्द्रायाध्यक्षाय ॥ [यजु० ४।१९]

इत्यादिमन्त्रेषु विद्युद्विज्ञानोपदेशः कृतोऽवगम्यते । स च प्राङ्निर्दिष्टेषु मन्त्रेष्वागतैः कतिपयपदैरेवावभासमानः बुद्धिपद्धतिमारोहति । तद्यथा—हे अग्ने विद्युदाख्याग्ने ! एषा ते शुक्रतनूः—तव रोचिष्णुविस्तृतिः—तनु विस्तारे इति धातोस्तन्निष्पत्तेः । एतद्वर्चः—एतत्ते अगोचरं बलम् । तत्त्वं सम्भव—प्रकटीभव ।

तदुत्पत्तिप्रकारं निर्दिशति :—उभयतःशीर्ष्णी—उभयतः शिरोवती भूत्वा । सुप्राची सुष्ठुप्रकारेण प्राङ्मुखी अथच सुप्रतीची—सुष्ठुप्रकारेण च प्रत्यङ्मुखी भूत्वा, एधि आयाहि । संगच्छेति भावः । भ्राजं गच्छ—स्फुलिङ्गरूपेण भ्राजिष्णुना आविर्भवेत्यर्थः । इदमत्राकूतम् :—

यद् ऋणधनात्मकौ विद्युत्तनूभूतौ तारौ, प्राक्प्रत्यङ्मुखौ साम्मुखीनौ सन्तौ मिथः संगच्छतः तदा भ्राजिष्णुतामुपयातौ भवतः । समुद्भूतविद्युद्रूपौ भवत इति विवेकः । अत्र मन्त्रेषु यानि च विद्युतो विशेषणानि तान्यखिलानि विद्युद्गुणव्यञ्जकानि इत्यवसेयम् । विस्तरभिया तानि अत्र न व्याख्यातानीति । विमलधियो विद्वांसोऽत्र विवेचयन्तु ।

एवमन्यान्यपि सामाजिकराजनीतिकार्थतन्त्रतत्त्वानि आम्नातानि तानि तु विद्वद्भिस्तत्र तत्रैव यथाप्रकरणमनुसन्धेयानि । न विस्तरभियाऽत्र प्रपञ्चितानि ।

## ओषधि-विज्ञानम्

ओषधिविज्ञानपरा अपि मन्त्रा यजुर्वेदे उपलभ्यमाना कुतूहल जनयन्ति :—

यत्रौषधीः समग्मत राजानः समिताविव ।
विप्रः स उच्यते भिषग्रक्षोहाऽमीवचातनः ॥ [यजु० अ० १२ मन्त्र ८०]

"या फलिनीः या अफला अपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥ [यजु० १२।८९]

नाशयित्री बलासस्यार्शस उपचितामसि ।
अथो शतस्य यक्ष्माणां पाकारोरसि नाशनी ॥ [यजु० १२।९७]

"आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् ।"

इत्यादयः मन्त्रवर्णा रमणीयतया भैषज्यविज्ञानं वर्णयन्ति ।

## सामवेदः

सामवेदः उपासनाकाण्डपरः । अस्मिन् नवीनाः सामसम्बन्धिनो मन्त्रास्तु पञ्चसप्तति (७५) संख्याकाः । अन्ये सर्वेऽपि ऋग्वेदादुपात्ताः । ते च प्रायेणाष्टममण्डलान्नवममण्डलाच्च संगृहीताः । एवं सर्वे मिलित्वा १५४९ मन्त्राः सन्ति साम्नि इति यत् कथनं, तत्र विप्रतिपद्यन्ते वैदिकाः । सर्वेषां वेदानां समकालावच्छेदेन प्रादुर्भावात् न तेषां पौर्वापर्यचर्चा न वा एकस्मिन्नन्यतो मन्त्रसंकलनकथनं विदुषामादरास्पदम् । प्रौढिवादमात्रमेवैतत्कथनमिति दिक् । ऋग्वेदेऽपि १.५.८ मन्त्रे साम्नः समाम्नातत्वात् । ते च मन्त्रा आर्चिकद्वये विभक्ताः । ऋचां समूहो हि आर्चिकमित्युच्यते । तत्र प्रथमार्चिकं षड्भिः प्रपाठकैर्निबद्धम् । षष्ठं प्रपाठकं विहायेतरेषु दश-दश मन्त्रा गुम्फिताः । षष्ठे तु पुनर्नवैव ।

द्वितीयमार्चिकञ्च न प्रपाठकात्मकम् । अस्मिंश्च द्वितीयार्चिके, प्रथमार्चिकगता अपि बहवो मन्त्राः पुनरावृत्ताः । यद्यपि यत्र-तत्र मन्त्रेषु पाठभेदोऽपि दृग्गोचरीभवति परं ते ते पाठभेदाः क्वचिच्छाखासम्प्रदायशैथिल्यात् क्वचिच्च तत्तत्क्रियानुगुण्येन पाठान्यथाकरणाद्वोपनताः । सामवेदोऽपि यजुर्वेद इव यज्ञयागादिक्रियोपयोगार्थकः । ऋग्वेदादुद्धृता मन्त्राः केवलं सोमयागसम्पादनार्थमेवात्र सन्निवेशिता इति सामवेदिनः प्रायशो व्यवतिष्ठन्ते । ऋग्वेदीयमन्त्राणां सामवेदीयमन्त्रेभ्यः यदि कश्चिद् भेदः स स्वरकृत एव । एवं सामवेदोऽयं, सोमयागे उद्गातृभिः स्वरविशेषेणोद्गेयैः भूम्ना ऋङ्मन्त्रैरेव संवादं भजते ।

## सामवेदोऽयमुपासनाप्रधानः

विज्ञानकर्मोपासनाज्ञानकाण्डभेदाच्चत्वारो वेदविभागा इति प्रागवोचाम। तत्रोपासनाप्रधानः सामवेदः। ऋग्भिर्ऋचन्ति स्तुवन्ति। यजुर्भिर्यजन्ति। सामभिर्गायन्ति। थर्वतिश्चरतिकर्मा तत्प्रतिषेधः [नि० ११।१९।१] अथर्वेति।

वेदेषु वर्णितानां सर्वासां देवतानां मध्ये परमात्मन एव मुख्यं देवतात्वम्। 'महाभाग्याद्देवताया एक एवात्मा बहुधा स्तूयते। एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति।" इति [निरुक्त ७।४।८।९]। तस्मादस्मिन् सामवेदे तस्यैवाद्वितीयस्य सर्वशक्तिमतः परमात्मन एव बहुधाऽग्न्यादिनाम्नोपासना विहिता, 'अग्न आयाही'-त्यादिषु मन्त्रेषु।

तद्यथा :—

अग्न आयाहि वीतये गृणानो हव्यदातये नि होता सत्सि बर्हिषि ॥१॥

## सामवेदे स्वराङ्कनप्रकारः

स्वरांकनप्रकाराश्चतुर्विधाः समुपलभ्यन्ते। तत्र ऋग्वेदीयः प्रकारः बाहुल्येनाद्रियते। ऋग्वेदे तावदुदात्तस्य न कापि चिह्नरेखा। अनुदात्तस्याधस्तात्समरेखा, स्वरितस्य च पुनरुपरिष्टादूर्ध्वरेखाऽङ्किता भवति। इति निर्दिष्टपूर्वम्। अपरे त्रिविधाः क्रमेण, कृष्णशुक्लयजुर्वेदीयसंहिताद्वये, शतपथब्राह्मणे, सामवेदे च। तत्र प्रथमे यजुर्वेद उदात्त उपरिष्टादूर्ध्वरेखया, द्वितीये च स एवाधस्तात् समरेखयाऽङ्क्यते। तृतीये सामवेदे तु स्वरस्योच्चैस्त्वाद्यवस्थाविशेषव्यक्तीकरणार्थं—१.२.३ इत्येते अङ्काः प्रयुज्यन्ते। तत्रैकाङ्केन निर्दिश्यमानः स्वर उदात्तः। द्व्यंकेनानुदात्त स्त्र्यंकेन च स्वरितो ज्ञेयः इतिदिक्।

## सामवेदस्य शाखाः

सामवेदस्य शाखाविषये 'सहस्रवर्त्मा सामवेदः'[1] इति प्रसिद्धिः, परमिदानीं ता नोपलभ्यन्ते तासां विलोपापत्तिरेवानुमीयते। एवं चरणव्यूहेऽपि 'सामवेदस्य किल सहस्रभेदा आसन्' इति स्मर्यते। यदासन् पुरा सहस्रमिताः साम्नः शाखाः। परं विरलप्रचारतया ता विलोपं गता इत्यनेनानुमातुं सुशकम्। चरणव्यूहस्य टीकायां महीदासेनापि स्वीकृतम् "आसां षोडशशाखानां मध्ये तिस्रः शाखा विद्यन्ते, गुर्जरदेशे कौथुमी प्रसिद्धा, कर्णाटके जैमिनीया प्रसिद्धा, महाराष्ट्रे तु राणायनीया" इति तासु राणायनीयशाखा तु सायणकृतभाष्योपेताऽद्याप्युपलभ्यते।

---

१. पस्पशायां पातञ्जले महाभाष्येऽप्युक्तम्—एकविंशतिधा बाह्वृच्यम्, एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, नवधाथर्वणो वेदः इति।

## सामगानम्

"गीतिषु सामाख्या" अतः गानसंवलितैर्मन्त्रैः यज्ञयागादिषु उद्गातृभिर्गीयमानत्वात् एष सामवेद उच्यते । एवंविधानां मन्त्राणां, गानविधिर्गानग्रन्थेषु पल्लवितः । वर्णाक्रोडनं, वर्णदीर्घीकरणं, वर्णान्तरप्रक्षेपणमित्येतानि संगीतपद्धतिमात्रसुलभानि लक्षणानि तत्र निर्दिश्यन्ते । सामगायकाः, सामगाश्छन्दोगाश्चाप्युच्यन्ते । एवंविधा गानग्रन्थाश्चत्वारः, यत्र सामगानस्य सरणिः सर्वांगपूर्णत्वेन निर्दिष्टा । यद्यपि सामगानविधिः सामान्यसंगीतशास्त्रतः किञ्चिद्विलक्षणस्तथापि षड्ज-ऋषभ-गान्धार-मध्यम-पञ्चम-धैवत-निषादाख्यानां सप्तस्वराणां प्रयोगस्तु सामगाने भवत्येव । त इमे षड्जादयः साम्नि क्रुष्ठ-प्रथम-द्वितीय-चतुर्थ-मन्द्रातिस्वर्याभिधानभेदेन परिभाष्यन्ते । केवलमभिधानभेदः तत्त्वतस्तु त एवामी, न खलु तेभ्यो भिद्यन्ते मात्रयापि । सामवेदीयछान्दोग्योपनिषदि सामगानं, हिंकार-प्रस्ताव-उद्गीथ-प्रतिहार-निधानञ्चेति पञ्चविभागेषु विभज्यते । तत्र प्रथमं स्वरत्रयं, स्थायिभावं, आन्तरमाभोगञ्च परामृशन्ति निधानञ्च तानम् । सोऽयं सामगानविधिरत्र दिङ्मात्रमुदाह्रियते--

'अग्न आयाहि वीतये, गृणानो हव्यदातये ।
निहोता सत्सि बर्हिषि ॥ (साम० सं० १)

गानम्--ओ३म् ओग्न इ (प्रस्तावः); ॐ आयाहि वीतये गृणानो हव्यदातये (उद्गीथः); नि होता सत्सि बर्हिषि ओम् (प्रतिहारः); नि होता सत्सि बर्हिषि ओम् (निधानम्) । स्तोमपूर्त्यर्थमिमे त्रिरावृत्यन्ते । गेयमन्त्राः छन्दोबन्धनं न सहन्ते । शतपथब्राह्मणे प्रतिपादितम्--यत्सामगानविरहितो यज्ञो न भवति न च हिंकृतिं विना सामगानम्--'नासाम यज्ञो भवति' "न न वा हिंकृत्य साम गीयते" इति । सामगानमहिमा तु तद्विशेषज्ञैर्मुक्तकण्ठतः कीर्त्यते ।

## वेदचतुष्टयत्व-निर्देशः

पाहि नो एकया पाह्युत द्वितीयया । पाहि गीर्भिस्तिसृभिरूर्जाम्पते पाहि चतसृभिर्वसो ॥ [साम० ४ दश० म० ३६]

हे ऊर्जाम्पते अग्ने--सर्वशक्तिमन् परमात्मन् ! एकया--ऋग्वेदलक्षणया गिरा (अभिष्टुतः सन्) नः अस्मान् पाहि । उत द्वितीयया यजुर्वेदलक्षणया, नः पाहि । तिसृभिः ऋग्यजुःसामलक्षणाभिर्गीर्भिः नः पाहि । चतसृभिः ऋग्यजुःसामाथर्वलक्षणाभिर्गीर्भिः नः पाहि इति ।

उप त्वाग्ने दिवे दिवे दोषावस्तर्धिया वयम् ।
नमो भरन्त एमसि ॥१४॥

हे अग्ने परमात्मन् ! वयमुपासका दिवे दिवे—विज्ञानस्य प्रकाशाय, 'दोषावस्तः', रात्रावहनि धिया धारणावत्या बुद्धचा नमस्कारं भरन्तः त्वामुपेमसि त्वामुपगच्छामः प्राप्नुमः उपासीमहीतिभावः ।

अग्निमिन्धानो मनसा धियꣳ सचेत मर्त्यः ।
अग्निमिन्धे विवस्वभिः ॥ [साम० २ दशति म० १९]

मुमुक्षुः अग्निं प्रकाशस्वरूपं व्यापकं परमात्मानमिन्धानः ध्यानादिना मनसि प्रकाशयन् मनसा मननात्मकेन चेतसा धियं धारणावतीं प्रज्ञां सचेत सम्यक् प्राप्नुयात् । विवस्वभिः विज्ञानप्रकाशहेतुभिः ध्यानधारणासमाधिभिः परमेश्वर-इन्धान उपासीत ।

एवं प्रायशः सामवेदे उपासनात्मका मन्त्रा दृश्यन्ते, योगसरणिनिर्देशपरा आध्यात्मिकोपदेशनिर्देशकाश्च समुपलभ्यन्ते भूयांसः ।

## सामवेदे पाठभेदः

सामवेदे दृश्यमानं पाठभेदमुद्दिश्य यद्विवेचितं पाश्चात्यैर्विद्वद्भिः न तत् प्रमाणाभावाद् वैदिकानां श्रद्धास्पदम् । सामवेदस्य कौथुमीय-राणायनीयसमाह्वयं शाखाद्वयं समुपलभ्यते । तयोरुभयोः शाखयोरल्पीयानेव पाठभेदः । तत्र राणायनीयशाखोपनतः पाठ एव भूयसा समाद्रियमाण आसीत् । परन्त्वेष पाठः १८४२तम ख्रैस्तेऽब्दे स्टीवन्सनाख्येन विदुषा प्रथमं प्रकाशितेन तदनु च बैनफैसंज्ञकेन पाश्चात्यपण्डितेन, १८४८ ख्रैस्तेऽब्दे, सटिप्पणं शार्मण्य-भाषानुवादोपेतेन प्रकटितेन पाठेन निराकृतः । पश्चाद् भारतेऽपि स एव राणायनीयपाठः सायणाचार्यभाष्यसंवलितः मुद्रणं गतः । कौथुमीयपाठोऽपि ख्रैस्ते १८६८ तमे ब्दे प्रकाशं गतः । परन्तु नायं वास्तविकः पाठः इति विदुषामश्रद्धेयः । नूनं पाठभेदविषय गवेषणाप्रवणानां विदुषां महीयान् यत्नोऽपेक्षणीयो भवति । आशासे तज्ज्ञैस्तत्र विशेषो यत्न आधास्यते ।

सामवेदोऽयं, पूर्वार्चिकोत्तरार्चिकेति विभागद्वयविभक्तः । तत्र पूर्वार्चिकम् आग्नेय-ऐन्द्र-पवमान-आरण्यकपर्वसु विभक्तम् । उत्तरार्चिकन्तु पुनः दशरात्र-संवत्सर-ऐकाह-अहीन-सत्र-प्रायश्चित्त-क्षुद्रेषु विभक्तम् ।

अत्र सामगाने सप्तस्वराणां प्रयोगः अतीव रमणीयतया कृतोऽवलोक्यते

इति प्रागवोचाम । गीतिसंवलितै र्मन्त्रै रुद्गातृभि र्गीयमानत्वादसौ सामवेद इत्यन्वर्थसंज्ञामलभत ।

कर्मकाण्डपण्डितास्तु यज्ञकार्यसौकर्यार्थमेव एकस्यापि वेदस्य चत्वारो विभागा जाता इत्युपपादयन्ति । यज्ञे खलु ब्रह्मण आदिकर्त्तव्यकर्मणि सर्वेषामेव वेदानामवबोधः प्रयोजनीयो भवति । सर्ववेदविद् ब्रह्मेति तदनुशासनात् । सर्व-वेदज्ञत्वञ्च चतुर्णामपि वेदानां ज्ञानमन्तरेण न सम्भवति ब्रह्मत्वञ्च अथर्ववेदविद एवेति सर्वविदितम्। उक्तञ्च यथा—'होत्रे ऋग्वेदः, आध्वर्यवे यजुर्वेदः, औद्गात्रे च सामवेदः तथैव ब्रह्मत्वाय अथर्ववेदः ।' एवं च वेदानां विषयभेदाच्चचतुष्ट्वव्रत् यज्ञादिसौकर्यानुरोधादपि तच्चतुष्ट्वत्वस्वीकारे न कञ्चिद्दोषमाकलयाम इति । तदेतावता स्फुटमिदं प्रतिभाति यद्वेदान्तरवत् सामवेदस्यापि निरतिशय-महनीयं पदं वरीवर्त्ति, इत्यलं पल्लवितेन।

## अथर्ववेदः

सुविदितमेव एतत् वैदिकसाहित्यपाथोनिधिकृतावगाहानाम् विद्वद्व-राणाम् यद् वैदिकं साहित्यं सर्वतः प्राचीनम् तत्रापि वेदाः प्राचीनतमाः। वैदिकाना-ममन्तव्यानुसारेण वेदः एक एव । स च विषयभेदात् संहितारूपेण पश्चात्काले विभक्तः चतुष्टयत्वमापन्नः, इति प्रागभिहितम् ।

सृष्ट्यारम्भे अग्नि-वायु-आदित्य-अङ्गिरा इति चतुर्णाम् ऋषीणां हृदि प्रादुर्भूताः ऋग्यजुःसामाथर्वेति नामभिः प्रसिद्धिं गताः सम्प्रति वेदाः चतुस्संहितासु प्रविभक्ताः समुल्लसन्ति। अथर्ववेदः चतुर्ष्वपि वेदेषु क्रमानुरोधेन किल चतुर्थः। महत्वधिया तु चत्वारोपि वेदाः समानपदभाजः, न हि तेषु महत्वविषयकं तार-तम्यं पदं धत्ते। अन्तिमो भवन्नपि अथर्ववेदो वेदेषु महत्वपूर्णं पदमालम्बते कर्म-काण्डदृशा। कर्मकाण्डे खलु यागादिकार्यनिर्वहणार्थं चत्वारो भवन्ति ऋत्विजः। ब्रह्मा, अध्वर्युः, होता, उद्गाता चेति । तेषु प्रमुख-पदे ब्रह्मा एवाभिषिक्तो भवति। अथर्ववेदविदेव ब्रह्मा भवितुमर्हति नान्यः।

स्वयं ऋग्वेदेनापि अथर्ववेदः यज्ञादिषु प्रथमपदमुपलम्भितः—'यज्ञैरथर्वा प्रथमः पथस्तते ।' [ ऋ० १।८३।५। ] नैतावता अथर्ववेदस्य अग्रिमभाव एव प्रदर्शितोऽपितु तस्य प्राचीनत्वमप्युपपादितं भवति । तदर्वाग्भवत्ववादिनामभ्युप-गमोऽपि च सुतरां निरस्तः । आधुनिकाः वेदानां महत्वतारतम्ये यद् भाषामेव हेतुत्वेनालम्बन्ते, तन्न मनोज्ञम् । भाषायाः विषयाधीनत्वात् । भाषा हि वक्तुरधीना भवति । वक्ता च विषयानुरोधेन यथार्हपदावलिं प्रयुञ्जानो न कथमपि तत्प्रा-

क्तनत्वार्वाक्तनत्वावबोधाय कल्पते। अतः न वेदेषु कालकृतः तारतम्यविशेषः समादरमर्हति कालविदाम्।

अथर्ववेदोऽयं विंशति (२०) काण्डनिबद्धः, सप्तशतोत्तरैकत्रिंश (७३१) त्सूक्तैः संवलितः ५९८७ संख्यामितैर्मन्त्रैः गुम्फितः समुल्लसति। एषु मन्त्रेषु प्रायशः द्वादशशतमिता मन्त्रास्तु ऋग्वेदेऽपि समुपलभ्यन्ते। विंशतितमे काण्डे १४३ सूक्तानि विद्यन्ते। द्वादश सूक्तानि विहाय, शेषाणि सूक्तानि ऋग्वेदीयदशममण्डलेन सम्वदन्ते। तदेतेषु समाम्नाता मन्त्राः सर्वे पद्यमयाः। अथर्ववेदस्य प्रायशः अशीतिमितानि सूक्तानि च गद्यात्मकानि। एवमस्य वेदस्य षष्ठांशमितो भागः गद्यात्मकः।

वैदिकसाहित्ये वेदानामनेकाः शाखाः। प्रतिवेदं च ब्राह्मणानि, आरण्यकानि, उपनिषदः, श्रौतसूत्राणि, गृह्यसूत्राणि, धर्मसूत्राणि वेदतत्वार्थावबोधकानि ऋषिभिः प्रणीतानि वैदिकैः महता आदरेण अवलोक्यन्ते इत्यवोचाम प्राक्।

अथर्ववेदस्यापि नव शाखाः श्रूयन्ते। तथाच भगवान् पतञ्जलिराह— 'नवधा आथर्वणो वेदः' इति। किन्तु सम्प्रति तस्य शौनक-पिप्पलाद-समाख्ये द्वे शाखे एव सायणभाष्यसमन्विते समुपलभ्येते। प्रचलिता अथर्व-संहिता शौनकशाखान्तर्गता। पैप्पलादीयशाखान्तर्गता संहिता अपि अधुना मुद्रिता। अथर्ववेदसाहित्यान्तरे उपलभ्यमानम् गोपथब्राह्मणम्, वैतानश्रौत-सूत्रम्, कौशिकगृह्य-सूत्रम्, पैठीनसीधर्मसूत्रम्, उपनिषत्सु च पुनः प्रश्न-मुण्डक-माण्डूक्याख्याः तिस्र उपनिषदः। तत्र प्रश्नोपनिषद् पैप्पलादशाखानिबन्धनी, मुण्डक-माण्डूक्ये च पुनः शौनकशाखां सम्बध्नीतः।

## अथर्ववेदस्य मुख्यो विषयः

अथर्ववेदस्य मुख्यः प्रतिपाद्यो विषयः खलु आयुर्वेदः। अस्य सप्तशतो-त्तरैकत्रिंशत्सूक्तमध्ये चतुश्चत्वारिंशदुत्तरशतमितानि सूक्तानि आयुर्विज्ञानं निरूपयन्ति। द्विशतोत्तरचतुश्चत्वारिंशत् सूक्तानि राजधर्ममुपदिशन्ति। पंचसप्ततिसूक्तानि च समाजव्यवस्थां निर्दिशन्ति। षडशीतिसूक्तानि च अध्यात्मविद्यात्मकानि। अवशिष्टानि २१८ सूक्तानि विभिन्नविषयप्रतिपाद-कानि। अस्य आयुर्विज्ञानीयसूक्तेषु मानवशरीरस्य अंगप्रत्यंगानां निरव-शेषाणां नामग्राहं तेषामापादमस्तकानां निरूपणं च कस्य कौतूहलं न जनयति। एवं शरीररचनानन्तरं शारीरिक-मानसिकरोगाणां वर्णनमुपन्यस्तम्। राजयक्ष्म-ज्वर-कुष्ठ-प्रभृतयो व्याधयोऽपि निरूप्यन्ते। तत्तद्रोगाणां विशिष्टा चिकित्सापि किल समुदीरिता। तदधुना किञ्चिद् दिङ्मात्रमत्रोदाह्रियते:—

त्रीणि च्छन्दांसि कवयो वि येतिरे पुरुरूपं दर्शतं विश्वचक्षणम्। आपो वाता ओषधयस्तान्येकस्मिन् भुवने अर्पितानि। [अथर्व० १८।१।१]

अस्मिन् मन्त्रे स्वास्थ्यरक्षणार्थं परमावश्यकानि त्रीण्येव वस्तूनि जल-वायु-औषधलक्षणानि समाम्नातानि स्वास्थ्यरक्षाधारभूतानि। अग्रे च अपां महिमानं प्रदर्शयन्नाह—

'अप्स्वन्तरमृतमप्सु भेषजम् अपामुत प्रशस्तिभिः।
अश्वा वाजिनो गावो भवथ वाजिनीः॥ [अथर्व० १।४।४]

अप्सु निखिलमपि भेषजतत्त्वम् निहितमस्ति । प्रशस्तजलनिषेवणेन मनुष्याः अश्वा इव वाजिनो वृषभा इव बलवन्तो भवन्ति इति ।

किंच :—

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे॥
[अथर्व० १।५।१]

इत्यनेन जलानि खलु तेजोबलानन्ददायकानि इत्युपदिष्टम्भवति।

अपि चः—

आपः इद् वा उ भेषजीरापो अमीवचातनीः।
आपो विश्वस्य भेषजीस्तास्त्वा मुंचन्तु क्षेत्रियात्॥ [अथर्व० ३।७।५]

न केवलम् आपः साधारणरोगापहारिण्यः अपितु पितृ-पितामहानुगतानपि रोगान् उपशमयितुं ताः क्षमाः इति विज्ञापितम्।

अपां सर्पविषहारित्वमपि एकत्र प्रतिपादितम् :—

अहीनां सर्वेषां विषं परा वहन्तु सिन्धवः।
हतास्तिरश्चिराजयो निपिष्टाकः पृदाकवः।२०। इति

नद्यां समुद्रे वा सर्पदष्टस्य यावद् विषापहृतिप्रक्षेपणेन विषनिवृत्तिर्भवतीति ध्वन्यते।

यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः॥
[अथर्व० १।५।२]

स्वास्थ्यं कामयमाना मातर इव आप उपकुर्वन्तीति भावः। एतावता जलचिकित्सा संस्तुता।

व्याधिप्रतीकाराय रविकिरणचिकित्सापि समुपदिष्टा। तथाहि :—

अनुसूर्यमुदयता हृद्द्योतो हरिमा च ते।
गो रोहितस्य वर्णेन तेन त्वा परिदध्मसि॥ [अथर्व० १।२२।१]

आयुः संरक्षणार्थं गव्यं घृतं चारु मधु च परिसेवनीयम् ।

आयुर्दा अग्ने जरसं वृणानो घृतप्रतीको घृतपृष्ठो अग्ने।
घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रानभिरक्षतादिमम् ।
[अथर्व० २।१३।१]

आ हरामि गवां क्षीरमाहार्षं धान्यं रसम् ।
आहृता अस्माकं वीरा आ पत्नीरिदमस्तकम्।। [अथर्व० २।२६।५]

इति गव्यं पयः प्रशंसति ।

औषधिविज्ञानम् :--

क्षुधामारं तृष्णामारमगोतामनपत्यताम् ।
अपामार्ग त्वया वयं सर्वं तदपमृज्महे। [अथर्व० ४।१७।७]

पिप्पली क्षिप्तभेषज्यू३तातिविद्धभेषजी ।
तां देवाः समकल्पयन्नियं जीवितवा अलम्। [अथर्व० ६।१०९।१]

दशवृक्ष मुंचेमं रक्षसो ग्राह्या अधि यैनं जग्राह पर्वसु ।
अथो एनं वनस्पते जीवानां लोकमुन्नय। [अथर्व० २।९।१]

इत्यनपत्यतासन्धिवातादिरोगनिवृत्त्यर्थमपामार्ग-पिप्पली-दशमूलादीनामुपदेशः ।

स्वर्णस्य सर्वरोगविनाशकत्वं दीर्घायुःप्रदातृत्वं च प्रतिपादितम् :--

नैनं रक्षांसि न पिशाचा सहन्ते देवानामोजः प्रथमजं ह्येतत् ।
यो बिभर्ति दाक्षायणं हिरण्यं स जीवेषु कृणुते दीर्घमायुः ।
[अथर्व० ५।३।२]

अत्र पिशाचा रक्षांसि च व्याधिवचनाः ।

एवमुदयं गच्छतो निम्रोचतश्च रवेः कृमिनाशकत्वम् प्रतिपादितम् । निम्रोचतः अस्तङ्गच्छतः--

"उद्यन्नादित्यो क्रिमीन् हन्तु निम्रोचन् हन्तु रश्मिभिः ।
ये अन्तःक्रिमयो गवि । [अथर्व० २।३२।१]

दीर्घायुःप्राप्त्यर्थमग्निसूर्यरश्मिसेवनम् साधनत्वेनोपदिष्टम् :--

उत्क्रामातः पुरुष मावपत्था मृत्योः पड्वीशमवमुंचमानः।
मा च्छित्था अस्माल्लोकादग्नेः सूर्यस्य सन्दृशः ।। [अथर्व० ८।१।४]

दीर्घायुष्ट्वं प्रति ब्रह्मचर्यस्य च निर्भरं कारणत्वमादिष्टम् :--

ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत ।
इन्द्रो ह ब्रह्मचर्येण देवेभ्यः स्वराभरत्।। [अथर्व ११।३।२]

एकत्र श्वेतकुष्ठस्यौषधिं व्यावृण्वन्नाह:--

नक्तं जात ऽस्योषधे रामे कृष्णे असिक्नि च ।

इदं रजनि रंजय किलासं पलितं च यत् ।। [अथर्व० १।२३]

वायोरपि भेषजत्वं प्रपंचितम् :--

आ वात वाहि भेषजं विवात वाहि यद्रपः ।

त्वं हि विश्वभेषजं देवानां दूत ईयसे ।। [अथर्व० ४।१३।३]

एवमाद्याः आयुर्विज्ञानप्रदर्शका बहवो मन्त्रा प्रपंचिताः ।

अथ शारीरविज्ञान-सम्भृता अप्यनल्पशः मन्त्रा उपलभ्यन्ते । तथाहि :--

केन पार्ष्णी आभृते पूरुषस्य केन मांसं सम्भृतं केन गुल्फौ ।१।

केनाङ्गुलीः पेशनीः केन खानि केनोच्छ्लङ्खौ मध्यतः कः प्रतिष्ठाम् ।

कस्मान्नु गुल्फावधरावकृण्वन्नष्ठीवन्तावुत्तरौ पूरुषस्य ।

जङ्घे निर्ऋत्य न्यदधुः क्व स्विज्जानुनोः सन्धी क उ तच्चिकेत ।२।

चतुष्टयं युज्यते संहितान्तं जानुभ्यामूर्ध्वं शिथिरं कबन्धम् ।

श्रोणी यदूरू क उ तज्जजान याभ्यां सन्धिं सुदृढं बभूव ।३।

कति देवाः कतमे त आसन् उरो ग्रीवाश्चिक्युः पुरुषस्य ।

कति स्तनौ विदधुः कः कफोडौ कति स्कन्धान् कति पृष्टिरचिन्वन् ।४।

कोऽस्य बाहू समभरत् वीर्यं करवादिति ।

अंसौ कौ अस्य तद्देवः कुसिन्ध अध्यादधौ ।५।

कः सप्त खानि वि ततर्द शीर्षणि कर्णाविमौ नासिके चक्षिणी मुखम् ।

येषां पुरुत्रा विजयस्य मह्मनि चतुष्पदो द्विपदो यन्ति यामम् ।६।

हन्वोर्हि जिह्वामदधात् पुरूचीमधात् महामधि शिश्राय वाचम् ।

स आ वरीवर्त्ति भुवनेष्वन्तरो वसानः क उ तच्चिकेत ।७।

मस्तिष्कमसय यतमो ललाटं ककाटिकां प्रथमो यः कपालम् ।

चित्वा चित्यं हन्वोः पूरुषस्य दिवं रुरोह कतमः स देवः ।८।

[अथर्व १०।२।८]

अग्रे च मस्तिष्कं हृदयं च विवृण्वन्नाह :--

मूर्द्धानमस्य संसीव्याथर्वा हृदयं च यत् ।

मस्तिष्कादूर्ध्वः प्रैरयत् पवमानोऽधिशीर्षतः ।२५।

तद् वा अथवर्णः शिरो देवकोशः समुब्जितः ।

तत् प्राणो अभिरक्षति शिरो अन्नमथो मनः ।२६।

ऊर्ध्वो नु सृष्टा३ स्तिर्यङ् नु सृष्टा३ः सर्वा दिशं पुरुष आ बभूवाँ३ ।

पुरं यो ब्रह्मणो वेद यस्याः पुरुष उच्यते ।२८।
यो वै तां ब्रह्मणो वेदामृतेनावृतां पुरम् ।
तस्मै ब्रह्म च ब्राह्माश्च चक्षुः प्राणं प्रजां ददुः ।२९।
न वै तं चक्षुर्जहाति न प्राणो जरसः पुरा ।
पुरं यो ब्रह्मणो वेद यस्याः पुरुष उच्यते ।३०।
अष्टचक्रा नवद्वारा देवानां पूरयोध्या ।
तस्यां हिरण्ययः कोशः स्वर्गो ज्योतिषावृतः ।३१।
तस्मिन् हिरण्यये कोशे त्र्यरे त्रिप्रतिष्ठिते ।
तस्मिन् यद् यक्षमातन्वत् तद् वै ब्रह्मविदो विदुः ।३२।

## राजधर्मः

अथेदानीं राजधर्ममुद्दिश्य वेदेऽस्मिन् यत्प्रतिपादितम् तदपि राज्यतत्वविदां सविशेषमवधानमर्हति । वेदोऽयं प्राजातन्त्रिकीं राज्यव्यवस्थां निर्दिशति । राजप्रजाधर्मञ्चातिरमणीयतया अनुशास्ति । नृपतिः कीदृशो भवेद् इति दर्शयन्नाह :—

सोऽरज्यत ततो राजन्योऽजायत ।।१।।
स विशः सबन्धूनन्नमन्नाद्यमभ्युदतिष्ठत् ।२।
विशां च वै सबन्धूनां चान्नस्य चान्नाद्यस्य प्रियं धाम भवति य एवं वेद ।३।
[अथर्व० १५।८।१–३]

एवंगुणसम्पन्नस्य पुरुषस्य प्रजा राज्याय निर्वाचनं कुर्यात् ।
त्वां विशो वृणुतां राज्याय त्वामिमाः प्रदिशः पंच देवीः ।
वर्ष्मन् राष्ट्रस्य ककुदि श्रयस्व ततो न उग्रो वि भजा वसूनि ।।
[अथर्व० ३।४।२]

मयि क्षत्रं पर्णमणे मयि धारयताद् रयिम् ।
अहं राष्ट्रस्याभीवर्गे निजो भूयासमुत्तमः । [अथर्व० ३।५।२]

अपिच :—

ये राजानो राजकृतः सूता ग्रामण्यश्च ये ।
उपस्तीन् पर्ण मह्यं त्वं सर्वान् कृण्वभितो जनान् ।७।

राज्ञा च प्रजया सह कथं वर्तितव्यम् इत्याह :—

आ त्वा गन् राष्ट्रं सह वर्चसोदिहि प्राङ् विशां पतिरेकराट् त्वं विराज ।
सर्वास्त्वा राजन् प्रदिशो ह्वयन्तूपसद्यो नमस्यो भवेह । [अथर्व० ३।४।१]

चतुर्थकाण्डस्याष्टमे सूक्ते च—

'अभि त्वा वर्चसा सिचन्नापो दिव्याः पयस्विनीः' इत्यादिना अभिषेकविधिरुपदिष्टः।

राजा च राष्ट्रसंवृद्धिं विदध्यात् :—

'बृहद्राष्ट्रं दधातु नः' इति।

शासनसंचालनार्थं न केवलं राष्ट्रपतिरपितु राष्ट्रसभा समितिश्चापि निर्दिष्टा।

सभा च समितिश्चावताम्। [७।१२।१]

राष्ट्रसंसदि च पुनः परस्परं सहयोग आवश्यकः। तथा चाह :—

ये ते के च सभासदस्ते मे सन्तु सवाचसः।
एषामहं समासीनानां वर्चो विज्ञानमाददे॥ [अथर्व० ७।१२।३]

राज्ञः प्रजायाश्च परस्परं विश्वासोऽभिवांछनीयः। तथाच :—

अहं गृभ्णामि मनसा मनांसि मम चित्तमनु चित्तेभिरेत।
मम वशेषु हृदयानि वः कृणोमि मम यातमनु वर्त्मानि एत॥ [३।८।६]

प्रजासु आचार-विचारयोः सामंजस्यं राज्ञा संस्थापनीयम् :—

सं वो मनांसि सं व्रता समाकूतीर्नमामसि।
अमी ये विव्रताः स्थन तान् वः सं नमयामसि॥ [अथर्व० ३।८।५]

प्रजासु वाक्कर्मणोः मिथो विरोधो न स्यात्तथा प्रयतितव्यम्।

स विशोऽनु व्यचलत् ।९।१। राज्ञा प्रजामतानुरोधेन प्रचलितव्यम्।

राजानं च सभा च समितिश्च प्रचालयेत्। इत्यपि समाम्नातम् :—
तं सभा च समितिश्च अनु सेना च सुरा चानु व्यचलन्। सुरा शब्दोऽत्र शेवधिवचनः। सभायाश्च वै समितेश्च सेनायाः सुरायाश्च प्रियं धाम भवति य उ एवं वेद ।३।

एवम्प्रकारेण अथर्ववेदे उच्चतमराज्यसिद्धान्तानाम् प्रजातन्त्रसरणिमालम्ब्य कृतं मनोहरं वर्णनं न कस्य मनो हरति॥

मनुष्यः खलु सामाजिकः प्राणी। समाजं विना स क्षणमपि जीवितुं नाभिवाञ्छति। अथर्ववेदस्य तृतीयकाण्डे त्रिंशत्तमे सूक्ते समाजोन्नत्यर्थम् आदर्शभूतानां कतिपयमौलिकगुणानामति मनोज्ञनिरूपणं कृतम् :—

सहृदयं साम्मनस्यमविद्वेषं कृणोमि वः।
अन्योऽन्यमभि हर्यत वत्सं जातमिवाघ्न्या ।१।
अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः।
जाया पत्ये मधुमतीं वाचं वदतु शान्तिवाम् ।२।

मा भ्राता भ्रातरं द्विक्षन् मा स्वसारमुत स्वसा।
सम्यंचः सव्रता भूत्वा वाचं वदत भद्रया ॥३॥

ज्यायस्वन्तश्चित्तिनो मा वियौष्ट संराधयन्तः सधुराश्चरन्तः।
अन्योऽन्यस्मै वल्गु वदन्तः एत सध्रीचीनान्वः संमनसस्कृणोमि ॥
[अ० ३।३०।५]

तदेवमादिषु मन्त्रेषु प्रेम-सहानुभूति-त्याग-सौमनस्य-सहृदयतायाश्च कीदृश आदर्शः प्रदर्शितः।

एवमेतादृशः समाजः स्वर्गोपमः यदि स्यात् तर्हि धरातले एव स्वर्गोऽवतरेत्।

अग्रे च समाजः शक्तिशाली यथा स्यात्तथा प्रार्थ्यते :—
ओजोस्योजो मे दाः स्वाहा।१। सहोसि सहो मे दाः स्वाहा।२।
बलमसि बलं दाः स्वाहा।३। आयुरस्यायुर्मे देहि स्वाहा।४।
श्रोत्रमसि श्रोत्रं मे दाः स्वाहा।५। चक्षुरसि चक्षुर्मे दाः स्वाहा।६।
परिपाणमसि परिपाणम्मे दाः स्वाहा।७।

## वैदिक तत्वज्ञानमीमांसा

प्राणभृतां निर्भयता नाम हि सर्वोत्कृष्टो गुणः। वेदे बहवो मन्त्रा निर्भयत्व-प्रार्थनापरा दृश्यन्ते। निर्भयो जनः विलक्षणानि लोकोत्तराणि कार्य्याणि कर्त्तुमर्हति। सर्वनिकृष्टो हि दुर्गुणो यद् भीरुता नाम। भीरवो जना मरणात् पूर्वमेव बहुशो म्रियन्ते, ते खलु शरीरेण धृता अपि मृता एव जीवन्ति अतएव "अभयं मित्रादभयममित्रादभयं ज्ञातादभयं पुरो यः" इति प्रार्थितम्। अपिच "यतो यतः समीहसे ततो नोऽभयं कुरु। शन्नः कुरु प्रजाभ्यः अभयं पशुभ्यः।" इति। बहुत्र वेदे प्रार्थनाविधया, अभयत्वस्य परमावश्यकत्वेन ऐदम्प्राथम्येन च महत्वमुद्घोषितम्। इदञ्च तावत्सूक्तमेव अभयार्थपरं, अति मनोज्ञं भावगर्भितञ्च प्रदिष्टम्।

'यथा वायुश्चान्तरिक्षं च न बिभीतो न रिष्यतः।
एवा मे प्राण मा बिभेः एवा मे प्राण मा रिषः ॥१॥
यथा वीरश्च वीर्यञ्च न बिभीतो न रिष्यतः।
एवा मे प्राण मा बिभेः एवा मे प्राण मा रिषः ॥२॥

यथा मृत्युश्चामृतञ्च न बिभीतो न रिष्यतः।
एवा मे प्राण मा बिभेः एवा मे प्राण मा रिषः॥
यथा भूतं भव्यं च न बिभीतः न रिष्यतः।
एवा मे प्राण मा बिभेः एवा मे प्राण! मा रिषः॥

एभिर्मन्त्रवर्णैरेतत्स्पष्टं ध्वनितं भवति यद् यो बिभेति स विनश्यति। प्रायशः भयमेव विनाशकारणं सम्भवति। विजिगीषुभिर्जनैर्महत्यां संकटावस्थायामप्युपस्थितायां कदापि भयापन्नैर्न भवितव्यमिति निर्देशः।

## गृहसूक्तम्

समृद्धिशालिनि राष्ट्रे गृहाणि कीदृशानि भवन्तु इत्यतिमनोज्ञं चित्रणं कृतम् अस्मिन् सूक्ते—

सूनृतावन्तः सुभगाः, इरावन्तो हसामुदाः।
अक्षुध्या अतृष्यासो गृहा मास्मद् बिभीतन॥
[अथर्व० ३।२६।३]

येषामध्येति प्रवसन् येषु सौमनसो बहुः।
गृहानुपह्वयाम यान् ते नो जानन्त्वायतः॥४॥
उपहूता इह गावः उपहूता अजावयः।
अथो अन्नस्य कीलाल उपहूतो गृहेषु नः॥५॥
उपहूता भूरिधनाः सखाय स्वादु सम्मुदः।
अरिष्टाः सर्वपुरुषा गृहा नः सन्तु सर्वदा॥६॥

अस्मद्गृहाणि सत्यमधुरसम्भाषणानि भवन्तु। शोभनानि, सौभाग्यवन्ति, हासप्रमोदशालीनि तृड्बुभुक्षाविरहितानि सर्वथा निर्भयानि च सन्तु इति भावः।

अपिच पुष्कलधनवन्ति, मित्रबन्धुसमन्वितानि स्वादुहर्षवर्द्धकानि यत्र नीरोगा पुरुषाः सर्वदा विलसन्ति तादृशानि च स्युः। अस्माकं गृहेषु अन्नादिसामग्री घृतदुग्धमध्वादिकीलालामृतं बाहुल्येन स्यात्। सर्वविधसमृद्धिभाञ्जि च भवन्तु गृहाणि इति आशयः। अत्र 'सूनृतावन्तः' 'सुभगा' 'हसामुदा', 'सौमनसः', 'भूरिधना' इत्यादि शब्दाः गृहाणामुत्कर्षद्योतका नितरां विदुषामवधानमाकर्षन्ति।

## दारिद्र्यनाशकं सूक्तम्

एतत्प्रतीपत्वेन चैकं दारिद्र्यनाशकं सूक्तमपि मनोरञ्जकम्।

(ऋग्वेदीय दशममण्डलस्य १५५ सूक्तम्)

अरायि काणे विकटे गिरिं गच्छ सदान्वे।
शिरिम्बिठस्य सत्वभिस्तेभिष्ट्वा चातयामसि॥

चत्तो इतश्चत्तामुतः सर्वा भ्रूणान्यारुषी ।
अराय्यं ब्रह्मणस्पते तीक्ष्णशृंगो दृषन्निहि ॥२॥

अदो यद्दारु प्लवते सिन्धोः पारे अपूरुषम् ।
तदा रभस्व दुर्हणो तेन गच्छ परस्तरम् ॥३॥

यद्ध प्राचीरजगन्तोरो मण्डूरधाणिकीः ।
हता इन्द्रस्य शत्रवः सर्वे बुद्बुदयाशवः ॥४॥

परीमे गामनेषत पर्यग्निमहृषत ।
देवेष्वकृत श्रवः क इमाँ आ दधर्षति ॥५॥

इत्यनेन सर्वात्मना दरिद्रता दूरीकरणीया राज्यपालैः सत्ताधारिभिरित्युपदिष्टं भवति ।

## द्यूतनिषेधः

ऋग्वेदीयदशममण्डलस्य चतुस्त्रिंशत्तमे सूक्ते 'अक्षाख्य-द्यूतक्रीडाया निन्दा निषेधश्च विहितः ।

अक्षैर्मा दीव्यः कृषिमित् कृषस्व वित्ते रमस्व बहु मन्यमानः ।
तत्र गावः कितव तत्र जाया तन्मे विचष्टे सवितायमर्यः ॥१३॥

प्रसविता अयमीश्वर आचष्टे अक्षैर्मा दीव्यः । द्यूतं मा कुरु । कृषिमेव कृषस्व, कृष्या सम्पादिते धन एव रतिं कुरु । वित्तलोभेन मा दीव्यः निजमपि वित्तं हारयिष्यसि । तत्र कृषौ गावः सन्ति तत्र जाया । इति द्यूतप्रतिषेधः, कृषि प्रशंसा । कृषिशब्दोऽत्र न केवलं कृषिपरः किन्तु खनिविलेखनादिना खनिजान् स्वर्णरजतादीन् पदार्थानपि बोधयति । तद्द्रव्यापहारमपि सूचयति । कथं निषिध्यते इति आह :--

द्वेष्टि श्वश्रूरप जाया रुणद्धि न नाथितो विन्दते मर्डितारम् ।
अश्वस्येव जरतो वस्त्यस्य नाहं विन्दामि कितवस्य भोगम् ।

जायाया माता कितवं निन्दति । भार्या च निरुणद्धि । याचमानः कितवः द्यूतकृद् धनं न लभते । किञ्च :--

अन्ये जायां परिमृशन्त्यस्य यस्यागृधद्वेदने वाज्यक्षः ।
पिता माता भ्रातर एनमाहुर्न जानीमो नयता बद्धमेतत् ॥४॥ (स्पष्टम्)
जाया तप्यते कितवस्य हीना माता पुत्रस्य चरतः क्वस्वित् ।
ऋणावा बिभ्यद्धनमिच्छमानोऽन्येषामस्तमुप नक्तमेति ॥१०॥

यत्र कुत्रापि सञ्चरतः कितवस्य भार्या तप्यते। मातापि सन्तप्ता भवति। अक्षपराजयाद् ऋणवान् कितवः भयमापन्नः कस्यचिद्धनिनो गृहे रात्रौ चौर्यार्थमुपगच्छतीति कीदृशः शोच्यः?

तदेवंविधानां वेदवचसामानुगुण्येन ये कर्त्तव्यकर्माणि अनुतिष्ठन्ति तेषामधिवाचि ज्ञान-विज्ञानरूपायां लक्ष्मीः निहिता भवति। भौतिकविज्ञानसाचिव्येनैव ज्ञानमूर्जस्वलं भवदानन्दपरम्परामनन्तां शान्तिञ्च वितनुते। एवं तथानुष्ठीयमानायैव सर्वोऽयं चिदचित्संसारः सम्यक्तयाऽखिलमपि रहस्यमुद्घाटयति यत्रेदं श्रुतं भवति 'उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती: सुवासाः' इति तथा सति बुद्ध्यादिबलेषु असमा अपि सन्तः केचनादघ्नास उपकक्षासः एते। तथापि यथाबुद्धिबलोदयं विद्याजलाशये स्नात्वा पूर्णप्रज्ञतामुपयान्ति इत्याशयेनाह 'उ त्वे ह्रद इव स्नात्वा ददृशिरे" इति। विद्याह्रदे स्नातत्वाद्धि स्नातका उच्यन्ते निखिलज्ञाननिष्णाताः।

इत्यादयः लोककल्याणहेतवः परामर्शा वेदेषु निर्दिष्टा वर्त्तन्त इति वैदिकानामभ्युपगमः द्रढीयान् विश्वासश्चेति दिक्।

समाजतन्त्रस्य निरतिशयोत्कर्षाधायकं किल आश्रम-वर्णव्यवस्थाद्वयं नाम। तत्र ब्रह्मचर्य-गृहस्थ-वानप्रस्थ-संन्यासाश्चेति चत्वारो महत्वपूर्णा आश्रमाः। ब्राह्मण-क्षत्रिय-वैश्य-शूद्राश्चेति चत्वारो वर्णाः। आश्रमेषु प्रथमो ब्रह्मचर्याश्रमः, तमनुतिष्ठन् हि ब्रह्मचारी भवति। स च द्विविधः स्नातको नैष्ठिकश्चेति। साङ्गोपाङ्गं वेदमधीत्य यः स्नायात् स स्नातकः। आजीवनमदारकर्मा च नैष्ठिकः। द्वितीयो गृहस्थाश्रमः। नित्यनैमित्तिककर्मानुष्ठाननिरतो विहितदारपरिग्रहो गृहस्थः। तस्य ब्रह्म-देव-पितृ-अतिथि-भूतयज्ञाख्यानि च कर्माणि। तत्र यत्स्वाध्यायमधीते स ब्रह्मयज्ञः, यदग्नौ जुहोति स देवयज्ञः, यद् बलिं करोति स भूतयज्ञः इत्येवमादि कर्मकाण्डग्रन्थेषु विशदय्य प्रपञ्चितं गृह्यधर्मोपदेशप्रसरे। अत्र दर्शपौर्णमासादियज्ञयागादिसमस्तकर्मप्रपञ्चानुष्ठानं अनुष्ठेयत्वेनोपदिष्टम्। तृतीयो वानप्रस्थाश्रमः। यः खलु सकलगृहस्थसंसारव्यवहारं परित्यज्य सकलत्रोऽकलत्रो वा वने प्रतिष्ठति स वानप्रस्थः। सोऽपि पुनर्द्विविधः। पचमानोऽपचमानश्चेति। योऽग्निपक्वमन्नं फलादिकञ्च भुङ्क्ते स पचमानः। यः पुनरपक्वाशी सोऽपचमानः। यश्च सम्यग्वीतरागो वितृष्णश्च सन् ज्ञाननौकया जगदम्बोधितरणाय यतते स यतिः संन्यासीत्युच्यते। सोऽयं तुरीयाश्रमः संन्यासाश्रमः। संन्यासिना तावत् त्यक्तव्या कर्मपटली, चिकित्सनीयो दुर्बोधव्याधिः, स्वीकर्त्तव्या भिक्षावृत्तिः, विषहणीयं, शीतोष्ण्यादिद्वन्द्वम्, समाधातव्यं परब्रह्मणि चेतः, प्रविलापनीयो वासनासमवायः,

हातव्यः कर्मसंश्लेषः, न कर्त्तव्यं प्राणिनां हिंसनम्, न विस्मर्त्तव्याः परोपकृतयः, न विचलितव्यं न्याय्यात्पथः। इत्यादयो यतिधर्माः सर्वात्मनाऽनुष्ठेयाः। वर्ण-धर्ममालम्बमानानां ब्राह्मण-क्षत्रिय-वैश्य-शूद्राणां कर्त्तव्यकर्माणि तु प्रागेव प्रदर्शितानि।

समाजतन्त्रवदन्येऽपि राजतन्त्र-अर्थतन्त्र-विज्ञानतन्त्रादयः श्लाघार्हा विषयाः प्रपञ्चिता वेदितव्याः। यदि नाम यज्ञपरानर्थान् परिहाय आध्यात्मिकाधिदैविका अप्यर्थाः क्रियेरन्, तर्हि विविधज्ञानविज्ञानाद्यर्थोद्भावना अपि तत्र सम्भाव्येरन्। परन्तु प्रायशः सर्वेऽपि भाष्यकारा वेदेषु यज्ञान् विहाय न किञ्चिदपि तदन्यदालोकयाञ्चक्रुरिति चिन्त्यमेव समपद्यत। तत्रभवद्भिः सत्यव्रत सामाश्रमिमहाभागैः स्थान एवोक्तम् :—

"हन्तैवं पदार्थविज्ञानशिक्षोपयोगीनि बहूपदेशपूर्णानि चैतादृशानि अधिदैवतव्याख्यानानि अपहाय परमात्मज्ञानपिपासूनां तर्पणानि अध्यात्मव्याख्यानानि च विलोप्य, अधियज्ञव्याख्यानान्येवाभाषत सर्ववेदभाष्यकारः सायणाचार्यः, —वस्तुतो ध्वान्तावच्छन्नविज्ञानकालिकानां, अशेषशेमुषीमतामपि तेषां सायणमहीधरादीनामधिदैवतार्थतोऽपि मन्त्राभिप्रेतार्थप्रकृतिविज्ञानं नैव स्फुरितं सम्यगिति शोच्यमेवाभवदिति।"

## वेद-भाष्यकाराः

१. स्कन्द स्वामी—ऋग्वेदस्य समुपलब्धेषु भाष्यकारेषु प्राचीनतमो भाष्यकारः स्कन्दस्वामी। महाभागोऽयं बलभीनिवासी। अनेन वेदार्थावबोधने छन्दोज्ञानं परमावश्यकत्वेनाङ्गीकृतम्। भाष्यमस्य यज्ञपरम्। सूक्तारम्भे चानेन देवता-ऋषि-बोधकाः श्लोकाः समुद्धृताः। 'केचन' इत्यादि लेखेन प्राक्तनभाष्यकृतां सङ्केतस्तु कृतः परं तेषां नामोल्लेखस्तु न कृतः। ऋग्वेदस्य प्रथमाष्टकस्य सम्पूर्णं भाष्यमुपलभ्यते, परन्तु द्वितीयादारभ्य पञ्चमाष्टकपर्यन्तानां भाष्यं तु खण्डितमेव। त्रिवेन्द्रमादिमद्रासीयराज्यपुस्तकालयेऽस्य भाष्यस्य हस्तलिपयोऽद्यापि सङ्कलिता विलसन्ति। भाष्यशैली त्वस्य रुचिरा, विशदा, प्रौढा च। स्थितिकालश्चास्य ६८७तमो वैक्रमसंवत्सरो विभाव्यते।

२. नारायणाचार्यः—आचार्योऽयं स्कन्दस्वामिनः सहकारी भाष्यकारः। अनेन ऋग्वेदस्य पञ्चम-सप्तमाष्टकेषु आंशिकं भाष्यं विरचितम्।

३. उद्गीथाचार्यः—भाष्यकारेषु तत्रभवानुद्गीथोऽपि नितरां प्रसिद्धः। परन्त्वस्य सम्प्रति दशममण्डलस्य पञ्चमसूक्तादारभ्य त्र्यशीतिपर्यन्तमेव भाष्यमुपलभ्यते। सायणाचार्येण स्वकीये भाष्येऽस्य नामोल्लेखः कृतः। अस्यापि भाष्यं

यज्ञपरमेव । सायणाचार्यभाष्येषु यत्रतत्र उद्गीथाचार्यस्यैव छाया प्रतिभाति । स्कन्दस्वामिनः समसामयिकश्चासौ इत्यपि निश्चितप्रायम् ।

४. हस्तामलकः—हस्तामलकोऽयं श्रीमच्छङ्कराचार्यस्य प्रमुखः शिष्यः आश्वालायनशाखावलम्बी । अस्य भाष्यनिर्माणकालः वैक्रमे ७५७तमे संवत्सरे विभाव्यते । परन्तु भाष्यमिदानीं यावत् प्रकाशितं नास्ति ।

५. वेङ्कटमाधवः—प्रख्यातभाष्यकारोऽयं दक्षिणजनपदे कावेरीकूल-परिसरे गोमाननामकग्रामे जनिं लेभे कौशिकगोत्राऽलङ्कृते भूसुरसुकुले । एतद्वि-रचिता ऋगर्थदीपिका हस्तलिपिबद्धा नाद्ययावत् प्रकाशं गता । भाष्यमिदमपि यज्ञपरमेव । ब्राह्मणज्ञानमन्तरा केवलं व्याकरणज्ञानं निरुक्तज्ञानं वा नालं वेदार्थविबोधाय इत्यस्य ध्रुवो विश्वासः । तथा चोक्तम्—

संहितायास्तुरीयांशं विजानन्त्यधुना जनाः ।
निरुक्तव्याकरणयोरासीद् येषां न परिश्रमः ॥

अस्य कालस्तु एकादशशताब्द्यां स्थितः सम्भाव्यते ।

६. लक्ष्मणाचार्यः—अनेन वेदभूषणाभिधं भाष्यं विरचितम् । परन्तु तदधुना न सुलभम् । अस्य कालः प्रायः द्वादशशताब्द्यां विभाव्यते ।

७. धानुष्कयज्वा—एष ऋग्-यजुः-सामेति वेदत्रयस्य भाष्यकारः ।

८. आनन्दतीर्थः—मध्वसम्प्रदायाचार्योऽयं मध्वपूर्णप्रज्ञनाम्नापि स्मर्यते । अनेन ऋग्वेदीयप्रथममण्डलस्य चत्वारिंशत्सूक्तेषु भाष्यमारचितम् । आनन्दतीर्थस्य समयः १२५५तः १३३५पर्यन्तमध्यघटितः सम्भाव्यते ।

९. आत्मानन्द तीर्थः—अनेन ऋग्वेदस्य प्रथममण्डलस्य चत्वारिंश-त्सूक्तेषु भाष्यमारचितम् । अस्यापि समयः क्वचित्त्रयोदशशताब्द्यामेव घटितो निर्धार्यते ।

१०. सायणाचार्यः—सर्ववेदभाष्यकारस्यास्य परिचयस्त्वन्यत्र दर्शितः ।

११. रावणः—अस्य ऋग्वेद-यजुर्वेदयोर्भाष्यं खण्डितरूपेण लभ्यते । अनेनाध्यात्मप्रधानं भाष्यमारचितम् । वेदभाष्यकारोऽयं लङ्काधिपती रावण एव कश्चिदन्यो वेति तु साधनाभावात् इदन्तया निर्णेतुं दुश्शकम् । तथापि रामायणावलोकनेनेदन्तु प्रतिपद्यते यल्लङ्काधिपती रावणो वेदवेदाङ्गपारङ्गतो ऽतीवोद्भटपण्डित आसीदिति । तेनेदमनुमातुं सुकरं यद् भाष्यकार एष ल ङ्काधि-पतिरेवासीदिति ।

१२. मुद्गलाचार्यः--अस्य भाष्यं ऋग्वेदस्य प्रथमाष्टके पूर्णं, चतुर्थाष्टकस्य पञ्चमाध्यायपर्यन्तमुपलभ्यते । अस्य भाष्यं सायणीयभाष्यमनुसृत्यैव प्रवर्त्तते । यदि नाम सायणीयभाष्यस्यैव संक्षिप्तरूपमिदमित्यप्युच्येत तदापि न काचिदत्युक्तिः । पञ्चदशशताब्द्यामेव घटितोऽस्य स्थितिकालः ।

१३. देवस्वामी--भाष्यकारोऽयं वैक्रमशताब्दीतः प्राक्कालिकः । अनेनापि ऋग्वेदस्य भाष्यमारचितमिति महाभारतटीकाकृतो विमलबोधनस्य लेखादवगम्यते ।

१४. चतुर्वेद्य स्वामी--ऋग्वेदस्य कतिपयेषु खंडेषु कृष्णपरं भाष्यमनेन विरचितम् । भगवतो वृन्दावनविहारिणः श्रीकृष्णस्य लीलाचरितमेव वेदमन्त्रेषु वर्णितमित्येव प्रदर्शितम् । तत्तु विदुषामुपहासास्पदमेव संवृत्तम् ।

१५. स्वामी दयानन्दः--अधुनातनेषु भाष्यकारेषु स्वामी दयानन्दः सुतरां शेखरायते । चिरविस्मृता वेदाध्ययनाध्यापनप्रवृत्तिः स्वामिनानेन भूयः समुद्दीपिता । एष महाभागः सामवेदीयमौदीच्यब्राह्मणकुलमलञ्चकार स्व जनुषा । अस्य भाष्यशैली बहुशः यास्कशैलीमनुसृत्य प्रवृत्ता । वेदेषु व्योमयान-जलयान-तारयन्त्रादयो वैज्ञानिका विषया अपि निरूपिताः सन्ति इति प्रस्फुटं स्वीये भाष्ये प्रदर्शितम् । अनेन यजुर्वेदस्य सम्पूर्णभाष्यमारचितम् । ऋग्वेदस्य च सप्तममण्डलस्य द्वितीयसूक्तस्य द्वितीयमन्त्रपर्यन्तमेव भाष्यमकारि । परन्तु तत्र तरुतृप्रभृतिशब्दानां व्याख्या वैदिकेभ्यो न रोचते । ते भृशं विप्रतिपद्यन्ते । तथापि तद् भाष्यपदात्तावता न च्यवते इति बहवस्तत्र बद्धादरा अपि दृश्यन्ते ।

१६. भट्टस्वामी--अनेन वैक्रमसंवत्सरादष्टशतवर्षप्राग्भवेन तैत्तिरीयसंहितायां भाष्यमकारि, परं तदधुना नोपलभ्यते ।

१७. भट्टभास्करः--भट्टभास्करोऽयमेकादशशताब्दीभवो भाष्यकारः । सायणाचार्येण देवराजेन च स्वभाष्येषु भट्टभास्करस्य बहुत्रोद्धरणं कृतम् । कौशिकगोत्रोत्पन्नेन भट्टभास्करमिश्रेण केचित् 'अपरे' इति सङ्केतेन स्वपूर्ववर्त्तिनां भाष्यकाराणां मतानि प्रदर्शितानि ।

१८. गुहदेवः--भाष्यकारोऽयं भवस्वामिसमसामयिकः । देवराजेन निघण्टुभाष्यभूमिकायां वेदभाष्यकारत्वेनास्यापि नाम संस्मृतम् ।

१९. दुर्गाचार्यः--सायणाचार्येण स्वधातुवृत्तिग्रन्थेऽस्य नामोल्लेखो बहुशः कृतः । तेनानुमीयते यदनेन तैत्तिरीयसंहितायां भाष्यं विरचितम्, यदधुना नोपलभ्यते । दुर्गाचार्यस्य स्थितिकालः पञ्चदशशताब्द्यामेव विभाव्यते ।

अन्येऽपि बहवो भाष्यकारा आसन् हलायुध-अनन्ताचार्यप्रभृतयः, ग्रन्थ-

विस्तरभिया न तेषां गणनामत्र कर्त्तुं प्रभवामः। परमुव्वट-महीधरौ तु सुप्रसिद्धौ भाष्यकारौ, तयोर्वर्णनं तु नोपेक्ष्यमिति दीयते।

२०. उव्वटः——अनेन एकादशशताब्द्या अन्तिमे चरणे महाराजभोजदेवस्य शासनकाले अवन्तीनाम्न्यां राजधान्यां शुक्लयजुर्वेदस्य भाष्यमकारि। काश्मीरेषु आनन्दपुरवासिनो वज्रभट्टनाम्नो महाविदुषो भूदेवस्य कुले लब्धजन्मासौ किल उव्वटो महोद्भटो विद्वान् भाष्यकारश्च।

२१. महीधरः——महीधराचार्येण वाजसनेयमाध्यन्दिनसंहितायां भाष्यं कृतम्। तच्चानेन सप्तशताब्द्यां लिखितमनुमीयते। मन्त्रमहोदधिनामा तन्त्रग्रन्थोऽपि तेन विरचितः। अस्य भाष्यमपि तन्त्रगन्धीति कृत्वा विद्वद्भिर्नाद्रियते यथार्हम्। केचित्तु द्वादशशताब्द्यामेवानेनैष ग्रन्थो विरचित इत्यवधारयन्ति।

## वेदसूक्तयः

सम्प्रति काश्चिदतीव रमणीया वेदसूक्तयोऽपि विपश्चितां मनोरञ्जनाय प्रदर्श्यन्ते——

ऋग्वेदीयास्तावत्——

एको भुवनस्य राजा। [६.३६.४]
कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति, [१०.११४.५]
एकं सद्विप्रा बहुधा वदन्ति। [१.१६४.४६]
यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा॥ [१०. ८२.३]
अज्येष्ठासो अकनिष्ठास एते भ्रातरो वावृधुः सौभगाय। [५.६०.५]
यत्रानन्दाश्च मोदाश्च मुद प्रमुद आसते।
कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधि। [९.११३.११]
त्वं सोम महे भग यून ऋतायते दक्षं दधासि जीवसे। [१.९१.७]
ऋतवान् ऋतजाता ऋतावृधः अनृतद्विषः सूरयः। [७.९६.१३.]
अदब्धानि वरुणस्य व्रतानि। [१.२४.१०]
बहु पाय्ये यतेमहि स्वराज्ये। [५.६६.६.]
सख्ये ते इन्द्र वाजिनो मा भेम शवसस्पते। [१.११. २.]
देवा देवानामपि यन्ति पाथः। [३.८.९.]
सत्यं सोमोऽवति हन्त्यसत्। [७.११.२.]
अग्निनाग्निः समिध्यते। [१.१२.३.]
अक्षैर्मा दीव्यः। [१०.३४.१३.]

जाया तप्यते कितवस्य दीना । [१०.३४.१७.]
राजा राष्ट्राणां पेशः। [७.३४.११.]
जागृवांसः समिन्धते। [१.२२.११.]
त्वमस्माकं तव स्मसि। [८.८१.३२.]

यजुर्वेदीय-सूक्तयः--

सऽओतः प्रोतश्च विभूः प्रजासु। [३१.१८.]
तमेव विदित्वाऽतिमृत्युमेति [३१.१८.]
अहमनृतात्सत्यमुपैमि। [१.५.]
मा गृधः कस्य स्विद्धनम्। [४०.१.]
मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्। [३६.१८.]
अदीनाः स्याम शरदः शतम्। [३६.२४.]
अश्रद्धामनृते दधात् श्रद्धां सत्ये प्रजापतिः। [१९.७७.]
पयसा शुक्रममृतं जनित्रम्। [१९.८४.]
अगन्म ज्योतिरमृता अभूम [८.५२.]
अभूत्यै स्वप्नं भूत्यै जागरणम्। [३०.१७.]
वयं राष्ट्रे जागृयाम पुरोहिताः। [९.२३.]
कुर्वन्नेवेह कर्माणि जिजीविषेच्छत ँ समाः। [४०.२०.]
तन्मे मनः शिवसङ्कल्पमस्तु। [३४.४.]
यशः श्रीः श्रयतां मयि। [२९.४.]

अथर्ववेदीय-सूक्तयः--

मा पुरा जरसो मृथाः। [५.३०.७.]
स एक एव एकवृत एक एव । [१३.५.७.]
एक एव नमस्यो विक्ष्वीड्यः। [२.२.१.]
प्रियं मा कृणु देवेषु। [१९.६२.ज्ञ.]
सर्वा आशा मम मित्रं भवन्तु। [१९.१५.६.]
आरोहणमाक्रमणं जीवतोऽयनम् । [५.३०.७]
माता भूमिः पुत्रोऽहं पृथिव्याः। [१२.१.१२.]
शतहस्त समाकिर सहस्रहस्त सङ्किर । [३.२४.५.]
अग्ने सख्ये मा रिषाम वयं तव। [२०.१३.३.]
समानी प्रपा सह वो अन्नभागः। [३.३०.३.]
भिषग्भ्यो भिषक्तरा आपः। [१९.६.३.]
परावृतो ब्रह्मणा वर्मणाऽहम्। [१७.१.२८.]

सामवेदीय-सूक्तयः--

सख्ये मा रिषाम वयं तव ॥ [७.६६.]

यातुधानस्य बलं न्युब्ज। [११०.९५.]

श्रद्धा माता कविः मनुः कविः। [१०.९०.]

भद्रा ते पूषन्निह रातिरस्तु। [८.७५.]

दिवे दिवे ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः। [८.७९.]

इत्यादि

तदिदं वेदप्रकरणं संक्षेपतः प्रदर्शितम्। अधुना सर्वजनीनेन सर्वहितावहेन यजुर्वेदीयप्रसिद्धमन्त्रेणेशस्तवनरूपेणोपसंह्रियते वेदप्रकरणमिदम् :--

आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम् आ राष्ट्रे राजन्यः शूर इषव्योऽति व्याधी महारथो जायताम्। दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः। सभेयो युवाऽस्य यजमानस्य वीरो जायताम्। निकामे निकामे पर्जन्यो वर्षतु। फलवत्यो न ओषधयः पच्यन्ताम्। योगः क्षेमो नः कल्पताम्॥ (यजुः)।

इति सर्वतन्त्रस्वतन्त्रैः पदवाक्यप्रमाणपारावारपारीणैः सिद्धान्त-
शिरोमणिपदालङ्कृतैः श्रीमदाचार्यद्विजेन्द्रनाथशास्त्रिभिः
प्रणीते संस्कृतसाहित्यविमर्शे वेदप्रकरणाख्यः प्रथमः
परिच्छेदः समाप्तः।

# द्वितीयः परिच्छेदः

# वैदिक-प्रकरणम्

उपवेदाः---वेदाङ्गानि---वेदशाखाः---वेदाऽनुक्रमणी---बृहद्देवता---ब्राह्मणानि--आरण्यकानि--उपनिषदः ।

## उपवेदाः

तदेषां चतुर्णां वेदानां चत्वार उपवेदाः, आयुर्वेद-धनुर्वेद-गान्धर्ववेद-अर्थवेदाश्चेति । तत्र ऋग्वेदस्य आयुर्वेदः, यजुर्वेदस्य धनुर्वेदः, सामवेदस्य गान्धर्ववेदः, अथर्ववेदस्य अर्थवेदश्चेति। [इति चरणव्यूहे] ।

## आयुर्वेदः

आयुर्वेदो नाम ऋग्वेदस्योपवेदः । केचन, अथर्ववेदस्यायमुपवेद इत्यपि व्यवस्थापयन्ति । आयुर्वेदस्य प्रधानग्रन्थाः चरक-सुश्रुतादयः। कालविद्भिश्चरक-निर्माणकालः खृ रतपूर्वद्वितीयशतकमवधार्यते। भगवत्पतञ्जलिमुनिना चरकापर-नामधेयेन ग्रन्थोऽयं प्रणिबद्धः। सुश्रुतसंहिता आयुर्वेदस्य शल्यशालाक्यचिकित्सायाः सर्वोत्कृष्टो ग्रन्थः । अन्येऽपि बहव आयुर्वेदीयग्रन्थाः सम्प्रत्युपलभ्यन्ते । तेषु प्रसिद्धतमाः--वाग्भटस्य खृ स्तपञ्चशततमसंवत्सरोद्भवस्य अष्टाङ्गहृदयाख्यो ग्रन्थः, खृ स्तसप्तमशतकसम्भवस्य माधवस्य प्रसिद्धो ग्रन्थो माधवनिदानाख्यः व्याधिनिश्चयार्थं प्रधानो लक्षणग्रन्थः, खृ स्तचतुर्दशतमशतकजातस्य शार्ङ्ग-धराचार्यस्य शार्ङ्गधरसंहिता, षोडशशतकलब्धजन्मनो भावमिश्रस्य भावप्रकाशो नाम सुप्रसिद्धः सन्दर्भः। एतदतिरिक्ता अन्येऽपि बहवो ग्रन्था अस्माकं दौर्भाग्या-ल्लोपङ्गताः। आर्युविज्ञानपरम्परानुरोधेनावगम्यते, यदयमायुर्वेदो नाम पुण्यतमं शास्त्रं वेदानभ्यस्य भगवान् लोकपितामहो ब्रह्मादौ निर्ममे । ब्रह्मणः सकाशात् प्रजापतिरधिजग्राह । प्रजापतेरश्विनौ, अश्विभ्यामिन्द्रस्ततो धन्वन्तरिभरद्वाजौ, ताभ्यां सुश्रुत-उरभ्र-अग्निवेश-भेलप्रभृतयो महान्तः संहिताकृतः प्राञ्चः । तदिदमायुर्वेदाख्यं पुण्यतमं शास्त्रं हेतु-लक्षण-औषधज्ञानाख्यप्रस्थानत्रयनिबद्धं अनन्त-पारमामनन्ति महर्षयः। उपदिदिशुश्च भगवच्चरकमुनिपादाः--

'न चैव ह्यस्ति सुतरामायुर्वेदस्य पारम्, तस्मादप्रमत्तः शश्वदभियोगमस्मिन् गच्छेत्। कृत्स्नो हि लोको बुद्धिमतामाचार्यः शत्रुश्चाबुद्धिमतामतश्चाभिसमीक्ष्य

बुद्धिमताऽमित्रस्यापि धन्यं यशस्यमायुष्यं पौष्टिकं लौकिकमभ्युपदिशतो वचः श्रोतव्यमनुविधातव्यञ्च इति। [च. वि. ८ अ.]

सोऽयमायुर्वेदः शल्य-शालाक्य-कायचिकित्सा-भूतविद्या-कौमारभृत्य-अगद-रसायन-वाजीकरणतन्त्राख्येषु अष्टाङ्गेषु विभक्तः।

## आयुर्वेद-साहित्यम्

आयुर्वेदस्य साहित्यमतीव बृहद् विशदञ्च वर्त्तते। तत्संग्रहेण किञ्चिदिवात्र तत्परिचयो दीयते--

१. पुष्कलसंहिता-- द्वात्रिंशतसहस्र (३२०००) श्लोकमिता पुष्कलमहर्षिणा विरचिता, प्रकरणचतुष्टयसंवलिता।

२. ब्रह्मसंहिता--चतुर्विशतिसहस्रश्लोकमिता, त्रिभिः प्रकरणैरुपनिबद्धा ब्रह्मनारदसंवादलक्षणा।

३. भेलसंहिता--षोडशसहस्रमितश्लोकसंवलिता, प्रकरणद्वयोपनिबद्धा ऋषिवरेण भेलेन प्रणीता।

४. अग्नीध्रसूत्रराजः--षट्पंचाशत्सहस्रश्लोकसमन्विता प्रकरणपञ्चकालङ्कृता ऋषिवरेणाग्नीध्रेण विरचिता। अत्र हि पारदस्य संस्कारविशेषैर्मारणं, धात्वन्तरीकरणं, रजतसुवर्णादिधातुषु परिवर्त्तनम्, विद्युत्-शक्तिपरिज्ञानादिकञ्च प्रपञ्चितम्।

५. किरणप्रभा--द्वादशसहस्रश्लोकविभूषिता क्रौंचमुनिना विरचिता प्रकरणद्वयोपान्विता, चन्द्रसूर्यकिरणपरिज्ञानसम्भृता।

६. धातुवादः--षष्टिसहस्रश्लोकयुता, सैनिकेन ऋषिणा निर्मिता, प्रकरणत्रयसुशोभिता, धातुनिर्माणविज्ञानविलसिता।

७. धन्वन्तरिसूत्रम्--दशसहस्रमितश्लोकैरलङ्कृतम् प्रकरणद्वयसमन्वितम्। निद्रा-तन्द्रा-जृम्भा-हास-परिहास-विहासादिविशदवर्णनयुतम्, भगवता धन्वन्तरिणा प्रणीतं, मनोविज्ञानात्मकं शास्त्रम्।

८. मानससूत्रम्--द्वादशसहस्रमितश्लोकयुतम्, मानसशक्ति-विकास-तत्फलकात्मकं शास्त्रम्।

इत्थमेव--सूपप्रकरणम्-सौभरिसूत्रम्-दाल्भ्यसूत्रम्-जाबालिसूत्रम्-इन्द्रसूत्रम् देवलसूत्रम्-वनस्पतिचन्द्रोदयम्-वनस्पतिविवरणम्-दाल्भ्यनिघण्टुः-रूपार्णवः, रत्न-

प्रभाकरः, रसार्णवप्रभृतयः, अन्येऽपि बहवो ग्रन्था नामशेषं गता इति न कस्य विषादकरम् ।

## धनुर्वेदः

यजुर्वेदस्योपवेदो धनुर्वेदः । यद्यपि धनुर्वेदोऽयं लुप्तप्रायोऽधुना तथापि ग्रन्थान्तरेषु अस्योद्धरणैरस्यास्तित्वं ज्ञायते । सोऽयं धनुर्वेदः, वशिष्ठ-विश्वामित्र-जामदग्न्य-वैशम्पायन-भरद्वाजप्रभृतिभिर्मुनिभिः प्रणीत इति प्रसिद्धिः । महाभारतादिग्रन्थेषु अस्य महत्वपूर्णवर्णनमुपलभ्यते । अस्मदधन्यतया तादृशा गौरवशालिनो ग्रन्थाः सर्वङ्कषस्य कालस्योदरोदर्यां विलीना इति सुभृशं विषीदति मनः । धनुर्वेदविषयका ग्रन्था अद्यत्वेपि समुपलभ्यन्त इत्यनुश्रूयते परं नाद्यावधि दृष्टिपथङ्गताः । विदुषां प्रवरैरत्र भूयस्तरमन्वेषणं विधेयम् ।

यजुर्वेदस्योपवेदो धनुर्वेदोऽयं पादचतुष्टयप्रणिबद्धः विश्वामित्रादिमहर्षिभिः संग्रथित इति निर्दिष्टपूर्वम् । तत्र दीक्षापादनाम्नि प्रथमे पादे धनुर्लक्षणम्, धनुषोऽधिकारिणां लक्षणञ्च निरूपितम् । अत्र धनुःशब्दः चतुर्विधायुधपरः । ते च आयुधाश्चतुर्विधाः । मुक्तक-अमुक्तक-मुक्तकामुक्तक-यन्त्रमुक्तकभेदात् । तत्राऽपि मुक्तकश्चक्रादिः, अमुक्तः खड्गादिः, मुक्तामुक्तकश्च शल्यादिः, यन्त्रमुक्तश्च शरादिः । पुनरपि त आयुधा ब्राह्म-वैष्णव-पाशुपत–प्राजापत्य–आग्नेय-भेदादनेकविधाः । द्वितीये पादे च अस्त्रशस्त्रादिविज्ञानम् । तृतीये च पुनः गुरुविशेष-साम्प्रदायिक-शस्त्रादिविवरणम् तेषामभ्यासः, सिद्धीकरणञ्च सम्यक् प्रतिपादितम् । चतुर्थाध्याये तु देवार्चनाऽभ्यासादिसिद्धिः, अस्त्रशस्त्रादिप्रयोगश्च प्रदर्शितः ।

श्रीमद्भगवद्द्रोणाचार्यगुरुपादैः प्रणीतो धनुष्प्रदीपाख्यः सप्तसहस्रश्लोकसम्मितो ग्रन्थोऽनुश्रूयते । एवमेव धनुश्चन्द्रोदयनामको ग्रन्थः षष्टिसहस्रश्लोकैः प्रणिबद्धो वीरपुङ्गवैर्विप्रवंशावतंसैः श्रीपरशुराममहाभागैः प्रणिबद्धोऽन्यः सन्दर्भः । अत्र हि––शब्दशक्त्या मन्त्रशक्त्या च शस्त्रास्त्रसञ्चालनविधयो दर्शिताः । अष्टोत्तरशतप्रकरणगुम्फितोऽयं ग्रन्थः सातिशयमहत्वपूर्णः । अत्र हि भुशुण्डी-कुलिश-पट्टिश-चामर-शक्ति-ब्रह्मास्त्र-रुद्रास्त्र-पाशनिर्माण-पाशमोचन–अग्निवर्ष-जलवर्ष–ज्वरप्रयोग– औषधप्रयोगप्रभृतिदिव्यायुधानामशेषविशेषवर्णनपुरस्सरं वर्णनमुपन्यस्तम् । परन्त्विदानीं कालवशादस्माकमधन्यतया वा सर्वेऽप्यमी धनुर्वेदग्रन्था हन्त ! लोपङ्गताः इति सुभृशं दुनोति ।

## गान्धर्ववेदः

सामवेदस्योपवेदो गान्धर्ववेदः । उपवेदोऽयं सामगानस्य सङ्गीतविद्यायाश्च

व्यवस्थापको ग्रन्थः। रागरागिणीनां सप्तस्वरताललयादीनां परिचायकोऽयं गान्धर्ववेदोऽपि प्रायशः प्रलुप्त एव । गीत-नृत्य-वाद्यादिभेदेन बहुप्रस्थानस्यास्य वेदस्य देवताराधनादि-निर्विकल्पसमाध्यादिसिद्धिश्चेति प्रयोजनत्वेनोद्दिष्टम् ।

## अर्थवेदः

अथर्ववेदस्योपवेदः अर्थवेदः । अस्मिन् वेदे राजनीतितन्त्र-अर्थतन्त्र-कृषि-वाणिज्य-समाजशास्त्रादीनि तत्त्वानि प्रतिपादितानि । मूलरूपेणायमपि वेदः प्रणष्ट एव । अस्यावष्टम्भेन विरचितेषु ग्रन्थेषु बृहस्पतेः, अर्थशास्त्रमतीव प्राचीनम् । सम्प्रति तु कौटल्यापरनामधेयस्याचार्यचाणक्यस्य खृस्तप्राक् चतुर्दशशतकसम्भवस्यार्थशास्त्रमेवैकमुपलभ्यते । तदर्वाक्कालाविर्भूता शुक्र-कामन्दकादि-प्रणीता नीतिग्रन्थास्तदङ्गभूता एव प्रकीर्णरूपेण समुपलभ्यन्तेऽद्यत्वेऽपि ।

अर्थवेदोऽयं लक्षमितश्लोकगुम्फितो बृहद्ग्रन्थः त्रिंशत्सहस्रश्लोकबद्धः । अर्थचन्द्रो नामा विंशतिसहस्रश्लोकालङ्कृतोऽन्यो ग्रन्थः । अमुद्रितौ पाण्डुलिपिबद्धौ द्वौ ग्रन्थावन्यावनुश्रूयेते रत्नप्रभा-काश्यपीयदण्डनीतिनामानौ । अर्थतन्त्रे हि समाजशास्त्र-दण्डनीति-सम्पत्तिशास्त्राणां समावेशः । तत्र रत्नप्रभाग्रन्थे चत्वारि प्रकरणानि । सप्तविंशतिमिताश्च श्लोकाः । प्रथमे प्रकरणे सृष्ट्युत्पत्तिवर्णनम् । द्वितीये वर्णव्यवस्थाविमर्शः । तृतीये व्यवहारकल्पः । चतुर्थे क्रयविक्रयविवाह-विधिनिर्णयप्रकारः कलह-शमन-तपश्चर्यादिविवृतिः । काश्यपीयदण्डनीतिश्च प्रकरणत्रयसंवलिता । प्रथमप्रकरणे शुभाशुभप्रतिफलविवेकः, ईश्वरीयदण्डविधानञ्च । द्वितीये राजकीयप्रकरणे मन्त्रराज्यस्यावश्यकत्वम् । विश्वसाम्राज्य-चक्रवर्त्तिराज्य-राजकीयदण्डविवृतिश्च । तृतीये तु प्रजापालनप्रकारः, प्रजाया नृपेण सहानुवर्त्तनसरणिः, भूमिसङ्ग्रहप्रकारः, राज-प्रजाव्यवहारः पशुपालनविधिः, व्यापाररीतिः, शिल्पकला, कृषिकर्म, शासनप्रणाली, अधिकारनिरूपणञ्चेति विषया गुम्फिताः ।

सम्प्रति कालव्यत्यासेन विलुप्तप्रायेषु प्राचीनेषु सकलार्थतन्त्रेषु यत्र-कुत्रचिद् ग्रन्थान्तरेषु समुपलब्धं समुद्धरणविशेषादिदन्तया न किमपि निर्णेतुं पार्यते । इत्थं, सर्वथा त्रुटित-भग्न-छिन्न-भिन्न-नष्टप्रायेषु विविधग्रन्थरत्नेषु कः खलु किन्नु ब्रूयात् । तदिदानीम् इतस्ततः प्रकीर्णसामग्रीगवेषणया यत्किञ्चिदुपलभ्यते तदेव पुरस्क्रियते । वस्तुतस्तु यत्र-तत्र वा प्रकीर्णानि प्राचीनसंस्कृतग्रन्थरत्नानि गवेषकविदुषां शासनस्य च सविशेषमवधानमर्हन्ति ।

## वेदाङ्गानि

वेदानां सम्यगर्थावबोधनाय वेदाङ्गानि प्रवृत्तानि। तानि चेमानि--शिक्षा-कल्प-व्याकरण-निरुक्त-छन्दो-ज्यौतिषमिति षट्संख्याकानि।[1] नहि वेदाङ्गानां ज्ञानमन्तरा वेदार्थः शक्यः सम्यक्तया प्रतिपत्तुम्। उक्तञ्च--

"साक्षात्कृतधर्माण ऋषयो बभूवुः। तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुरुपदेशाय ग्लायन्तोऽवरेभ्य बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदञ्च वेदाङ्गानि च।" तदेवं वेदार्थावबोधसौकर्यायैव वेदाङ्गानि, समाम्नातानि महर्षिभिरिति नातिरिक्तं वचः। तत्र तावत्--

## शिक्षा

शिक्ष्यते--वर्ण-स्वराद्युच्चारणविधिरुपदिश्यते यया सा शिक्षा। तथा च तैत्तिरीयाः समामनन्ति उपनिषदारम्भे--

"अथ शिक्षां व्याख्यास्यामः। वर्णः-स्वरः-मात्रा-बलं-साम-सन्तान इत्युक्तः शिक्षाध्यायः" इति। तत्र वर्णो अकारादिः, स्वरा उदात्तादिः, मात्रा ह्रस्वादिः, बलं स्थानप्रयत्नौ, साम निषादादिः, सन्तानो विकर्षणादिः। एषामवबोधनमेव शिक्षायाः प्रयोजनम्। सम्प्रति तु शिक्षाग्रन्थाः त्रिंशत्संख्याका उपलभ्यन्ते। याज्ञवल्क्यशिक्षा-वाशिष्ठीशिक्षा-कात्यायनीशिक्षा-पाराशरीशिक्षा-माण्डव्यशिक्षा-अमोघानन्दिनी शिक्षा-नारदीशिक्षा-शौनकीयशिक्षा-गौतमीशिक्षा-माण्डूकीशिक्षा-पाणिनीयशिक्षा चेति। परन्तु सम्प्रति विद्वांसः पाणिनीयशिक्षां प्रत्येव प्राधान्येन बद्धश्रद्धाकाः।

## कल्पसूत्राणि

कल्पसूत्र[2]मिति श्रौत-गृह्य-धर्मसूत्राणां पारिभाषिकी संज्ञा। सूत्रग्रन्था अमी कल्पसूत्रनाम्नाऽपि व्यवह्रियन्ते। तत्र वेदविहित-श्रुतिप्रतिपादित-यज्ञयागादि-विधानतद्विवरणप्रतिपादका ग्रन्थाः श्रुतिमूलकत्वात् श्रौतसूत्राणि परिभाष्यन्ते।

---

१. उदीरितञ्च, एषां षण्णां प्रबन्धानामेव वेदाङ्गत्वं पाणिनीय-शिक्षायामपि--

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।
शिक्षा प्राणस्तु वेदस्य मुखं तु व्याकरणं स्मृतम्।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते॥ पा० शि० ४१-४२॥

२. कल्प्यते-समर्थ्यते यज्ञयागादिप्रयोगा यत्रेति तद्व्युत्पत्तेः। कर्मकाण्डविधिप्रतिपादका ग्रन्थाः कल्पसूत्रेति पदेन व्यपदिश्यन्ते।

गृह्याश्रमिणां जन्मप्रभृतिमृत्युपर्यन्ता ये संस्कारादयः कर्त्तव्यविशेषा येषु विव्रियन्ते तानि गृह्यसूत्राणि । येषु पुनः पारमार्थिकाः सामाजिका राजनीतिविषयकाश्च धर्मविशेषा उपदिश्यन्ते तानि धर्मसूत्राणि ।

## श्रौतसूत्राणि

श्रौतसूत्रप्रतिपाद्याः क्रियाश्चतुर्विधाः । तासु सप्त हविःसंस्थाः[1] । सप्त च सोमसंस्थाः । तत्रापि अङ्गभूता विविधाः पशुयागा अनुष्ठेयत्वेन प्रतिपादिताः । प्रधानभूतश्च तत्र हविर्यज्ञः-अग्निहोत्राख्यः प्रातःसायमनुष्ठेयः । हविर्यज्ञेषु पुनः मुख्यतया पयोदध्याज्यव्रीह्यपुपादीनि हविर्द्रव्याणि । अन्ये च हविर्यागा दर्शपूर्णमासौ चातुर्मास्यानि । एतदन्येपि नैके अङ्गयागा विकृतियागाश्च तत्तत्कालविशेषे तत्तत्फलविशेषोद्देशेनानुष्ठेयतयोपदिष्टाः । सोमयागाश्च भूम्ना द्वादशाहादिपर्यन्तानुष्ठेयतया कष्टसाध्याः । केवलं तेषु अग्निष्टोमयाग एव एकाहसाध्यः । ऋत्विजश्च तत्र षोडशसंख्याकाः । तस्मिन् दिने प्रातर्मध्याह्न-सायञ्चेति त्रीणि सवनानि प्राधान्येन कर्त्तव्यकार्यत्वेनोद्दिष्टानि । तत्रापि सत्राभिधाना यागा एकवार्षिका अनेकवार्षिका अपि स्मर्यन्ते । तत्र सोमयागेषु वेद्यो विविधाकृतिकाश्चीयन्ते ।

तद्यथा--अग्निचयनाख्यो हि एकदिननिर्वर्त्तनीयः कर्मविशेषः सोमाङ्गभूतः । अपि च विभिन्नाकृतीनां तत्तदिष्टकानां चयनेन, पञ्चचितिका वेदी विरच्यते । पञ्चानां मध्येऽधस्तन्यां चितौ १९५० इष्टका भवन्ति । सम्भूय सर्वेष्टकानां संख्या १०५०० । तासां नामानि चापि पृथक्-पृथक् श्रूयन्ते । विस्तरस्तु तत्र-तत्रैव यथाप्रकरणमनुसन्धेयः ।

---

१. सप्त हविःसंस्थाः—अग्न्याधानम्, अग्निहोत्रम्, दर्शपूर्णमासौ, चातुर्मास्यानि, आग्रायणेष्टिः, निरूढपशुबन्धः, सौत्रामणीत्येताः । सप्त सोमसंस्थास्तु पुनः--अग्निष्टोमः, उक्थ्यः, षोडशी, वाजपेयः, अतिरात्रः, आप्तोर्यामा राजसूय इत्येता विज्ञेयाः ।

एवं गृह्यसूत्राणामपि पुनः सप्तधा पाकयज्ञाः—पितृयज्ञः, पार्वणयज्ञः, अष्टका यज्ञः, श्रावणी यज्ञः, आश्वयुजी यज्ञः, आग्रायणी यज्ञः चैत्री यज्ञश्चेत्याख्याः । एतान् चतुर्विधश्रौतयज्ञान् सप्त पाकयज्ञांश्चातिरिच्य गृह्यसूत्रेषु च पंचमहायज्ञान्तराणामपि वर्णनमुपलभ्यते । ते च देवयज्ञ-पितृयज्ञ-भूतयज्ञ-ब्रह्मयज्ञातिथियज्ञाश्चेत्यभिधानाः । एतेषु गृह्यसूत्रेषु--गर्भाधानादारभ्य अन्त्येष्टिपर्यन्ताः षोडश संस्कारा अपि प्रपञ्चिताः । स एष कर्मकलापप्रसरः कल्पसूत्रेषु सावष्टम्भं विवृतो बोद्धव्यः ।

## श्रौतसूत्रग्रन्थाः

श्रौतसूत्रग्रन्थेषु च शांख्यायनाश्वलायनाख्यौ त्वतिप्रसिद्धौ ऋग्वेदीय-श्रौतसूत्रग्रन्थौ । अस्मिन् सूत्रद्वयेऽपि क्रियाकलापविधयः प्रायेण समानसरणिमनु-सृत्यैव प्रवृत्ताः । केवलं शांख्यायने राज्ञानुष्ठेयाः केचिन् महायागाः किञ्चिद्विस्तरेण गुम्फिताः । शांख्यायनश्रौतसूत्रमिदं आश्वलायनापेक्षया किञ्चित्प्राचीनतरमवधा-र्यते । तच्चाष्टादशभिः काण्डैर्निबद्धः । आश्वलायनोऽयमृषिः शौनकर्षेः शिष्यत्वेन प्रसिद्धः । ऐतरेयारण्यकस्यान्तिमौ द्वावध्यायौ त्वाभ्यां गुरुशिष्याभ्यां मिलित्वैव संरचितौ । आश्वलायनश्रौतसूत्रे ऐतरेयारण्यकस्यैव छायामाश्रित्यैव यागादि-विवृतिः कृतावगम्यते । शांख्यायनश्रौतसूत्रे हि दर्शपूर्णमासादिवर्णनपुरस्सरं वाज-पेय-राजसूय-अश्वमेध-पुरुषमेध-सर्वमेधादिमहायागानां विशदविवरणपुरस्सरं वर्णनं कृतमवलोक्यते । अस्योपरि अनृतकृतभाष्यं गोविन्दकृतटीका चेति व्याख्या-द्वयमुपलभ्यते ।

सम्प्रति त्रय एव श्रौतसूत्रग्रन्था उपलभ्यन्ते––मशकश्रौतसूत्रम्, लाट्या-यनश्रौतसूत्रम्, दाक्षायणश्रौतसूत्रञ्चेति । तेषु आर्षेयसूत्रापरनामधेयं पञ्च-विंशब्राह्मणानुब्राह्मणानुगतक्रमानुरोधेन सोमयागीयकर्मव्यवस्थापकं मशकश्रौत-सूत्रन्तु प्राचीनतमम् ।

शुक्लयजुर्वेदीयन्तु कात्यायनश्रौतसूत्रम् षड्विंशाध्यायैर्गुम्फितम् शतपथ-ब्राह्मणप्रतिपादितां क्रियामुपवर्णयति । तत्र द्वाविंशतितमादध्यायादारभ्य चतुर्विंशत्य-ध्यायपर्यन्तं त्रयोऽध्यायाः सामवेदघटितकर्मविशेषान् प्रतिपादयन्ति ।

कृष्णयजुर्वेदसम्बद्धाः षट् सूत्रग्रन्था अधुना समुपलभ्यन्ते । अथर्ववेद-सम्बन्धिश्रौतसूत्रन्तु वैतानमनुमीयते । तदिदं वैतानसूत्रं शुक्लयजुर्वेदीयकात्यायन-सूत्रमनुकुर्वदपि गोपथब्राह्मणेन सह भूयसा संवदति । अस्य रचनाशैली तु तदत्यन्त-मर्वाचीनत्वं व्यनक्ति । सर्वे श्रौतग्रन्था गृह्यसूत्रग्रन्थैरेव प्रायशोनुसन्धीयन्ते । परमिदन्तु प्रतीपतया गृह्यसूत्रमनुसन्दधानो प्रतिभासते । तदेतस्य श्रौतसूत्रस्य तदीयगृह्यसूत्रादप्यर्वाचीनत्वं ध्वनयति ।

## गृह्यसूत्राणि

ऋग्वेदीयगृह्यसूत्रम् शांख्यायनम् । तच्च षडध्यायात्मकम् । अन्यदेतत्सजा-तीयं, ऋषिवरशाम्बव्यविरचितं शाम्बव्य-गृह्यसूत्रम् । तदेतत्शांख्यायनगृह्यसूत्रतः सर्वथा भिन्नमेव । अत्र प्रतिपादितः पितृयज्ञविषयकक्रियाविशेषः शांख्यायने तु नोप-लभ्यते । शांख्यायने च प्रतिपादिता बह्वृचः क्रियाः शाम्बव्यसूत्रेषु नोपलभ्यन्ते । तस्मात्तेषां वैलक्षण्यशङ्का तु सुतरां निरस्तैवेति । ऋग्वेदीयमाश्वलायनगृह्यसूत्रन्तु

ऐतरेयब्राह्मणाङ्गभूतोऽध्यायचतुष्टयात्मको ग्रन्थस्तदीयश्रौतग्रन्थ इव 'नमः शौनकाय' इति शौनकनमस्कारपुरस्सरमेवोपसंहृतः ।

सामवेदीयगृह्यसूत्रन्तु गोभिलगृह्यसूत्रम् । तच्च प्राचीनतमेषु गृह्यसूत्रेष्वभ्यर्हितत्वात् प्रकृष्टतममवधार्यते । खादिरगृह्यसूत्रं द्राह्यायणशाखासम्बद्धम् । सामवेदीयराणायनीयशाखासम्बद्धं प्रमाणत्वेनाङ्गीकृतं सूत्रं गोभिलसूत्रात् किञ्चित् संक्षिप्तम् ।

शुक्लयजुर्वेदीयञ्च पारस्करगृह्यसूत्रम् । सूत्रमिदं वाजसनेयसूत्रनाम्नाऽपि प्रसिद्धम् । अस्य कात्यायनसूत्रेण सह बलवत्तरोऽनुबन्धः । इदमेव पारस्करीयगृह्यसूत्रमालम्ब्य इयमर्वाचीना याज्ञवल्क्यीयस्मृतिः प्रवृत्ता । कृष्णयजुर्वेदसम्बन्धीनि सप्त गृह्यसूत्राणि लभ्यन्ते । तत्रादिमम् आपस्तम्बसूत्रम् । अन्यानि च षट्–हिरण्यकेशीगृह्यसूत्रम्, बौधायनगृह्यसूत्रम्, भरद्वाजगृह्यसूत्रम्, मानवगृह्यसूत्रम्, काठकगृह्यसूत्रम्, वैखानसगृह्यसूत्रञ्च । अथर्ववेदीयसूत्रग्रन्थेषु कौशिकगृह्यसूत्रं प्रधानतमम् । अस्मिन् हि सूत्रग्रंथे न केवलं गृह्याणि कर्माणि निर्दिष्टानि अपितु बहूनि आभिचारिकाणि कर्माण्यपि वर्णितानि । वेदान्तरीयगृह्यसूत्रागोचरा अपि बहवो विषयाश्चर्चिताः ।

तदेष समासत एव श्रौत-गृह्यसूत्राणां परिचयो दत्तः । विस्तरस्तु तत्र-तत्रैव जिज्ञासुभिरनुसन्धेयः ।

यद्यपि यावन्तो यज्ञयागादयोऽत्र सूत्रग्रन्थेषु विवृतास्तावन्तः सर्वेऽपि अनुष्ठेयत्वेनोन्नेयास्तथापि गृहमेधिनां कर्तव्यकर्मसु तेषु प्रधानतया पञ्च यज्ञास्तु निस्तन्द्रतयाऽनुष्ठेया एव आत्मकल्याणाय । तत्र यत्स्वाध्यायमधीते स ब्रह्मयज्ञः, यद्देवानुद्दिश्य हविर्जुहोति स देवयज्ञः, यत्पितॄन् श्रद्धयाऽर्चति तर्पयति च स पितृयज्ञः, यद्भूतान्युद्दिश्य भूमौ बलिमुपहरति स भूतयज्ञः, यद्ब्राह्मणान् भिक्षूनतिथींश्च सत्करोति सोऽतिथियज्ञः । तत्रापि ब्रह्मयज्ञः स्वाध्यायस्वरूपत्वात् प्रधानतमः । तत्राऽपि सन्ध्योपासनं, गायत्रीजपः, वेदाध्ययनञ्च प्रातःसायं तुल्यबलत्वेनाभिमतत्वादवश्यमनुष्ठेयमेवाऽपरिहार्यत्वेनेति ।

## धर्मसूत्राणि

धर्मसूत्राणि चेमानि लौकिकाचारव्यवहारधर्मप्रतिपादकानि । प्राधान्येन धर्मसूत्रेषु वर्णाश्रमधर्म एव प्रतिपादितः । धर्मसूत्रग्रन्थाश्चामी कृष्णयजुर्वेदीयशाखासम्बन्धिनः । सम्प्रति तेषु त्रय एव समुपलभ्यन्ते । तथापि वेदान्तरसम्बन्धिनोऽन्येऽपि तादृशा धर्मसूत्रग्रन्थाः पुरा आसन्निति ग्रन्थान्तरेषु तेषामुद्धरणादवगम्यते । धर्मसूत्रेषु अभ्यर्हिततमम् आपस्तम्बीयम् । यस्मिन् प्राधान्येन ब्रह्मचारि-गृहस्थधर्माः,

भोज्य-पदार्थाः, तपोमार्गाश्च निरूपिताः। विवाहधर्मो दायाधिकारः दण्डनियम-प्रभृतिलौकिका विषया अपि प्रपञ्चिताः। ग्रन्थोऽयं प्रायः आर्षशैल्यां निबद्धत्वात् खृस्ताब्दीतः प्राक् चतुर्थशतके विरचितः सम्भाव्यते। अपरो धर्मसूत्रग्रन्थः हिरण्य-केशीयः। साम्प्रदायिका हिरण्यकेशिशाखामिमां आपस्तम्बशाखोत्पन्नामेवाभि-मन्यन्ते, न स्वतन्त्रशाखाम्। ग्रन्थोऽयं आपस्तम्बीयधर्मसूत्रप्रतिपादिततत्त्वाव-बोधनाय परमोपकारकः। तृतीयश्च धर्मसूत्रग्रन्थ आपस्तम्बीयः।

अस्मिन् सूत्रग्रन्थे वर्णाश्रमधर्माः, यज्ञविशेषाः, राजधर्माः, दण्डविधानम्, साक्ष्यधर्माः, दायविभागप्रकारः, विवाहप्रकारः, स्त्रीणामधिकाराश्च निरूप्यन्ते। एवमन्येषामपि धर्मसूत्राणां नामानि ग्रन्थान्तरेषु समुपलभ्यमानानि दृष्टिपथमव-तरन्ति। तानि तु तत्र तत्रैव परिमर्शनीयानि। ग्रन्थकलेवरवृद्धिभयान्नाऽत्र प्रप-ञ्च्यन्ते। तदित्थं वैदिकवाङमये कल्पसूत्राणां पदमतीव वैशिष्ट्यमावहति। कल्प-सूत्राणि हि वैदिककर्मकाण्डमशेषविशेषवर्णनपुरस्सरं परिमण्डयन्ति, तद्रहस्याव-बोधने चातीव साहाय्यमाचरन्ति।

इदमत्र बोध्यम्--वेदप्रतिपादिताखिलकर्मप्रतिपत्त्यर्थं ब्राह्मणग्रन्थाना-मुदयः। ब्राह्मणग्रन्थोपवर्णितानां वस्तुतत्त्वानां विशदीकरणार्थं कल्पसूत्राणामुदयः। इति हेतोरेव तेषामपि वेदाङ्गत्वेनाङ्गीकारः। प्राचीनानि कल्पसूत्राणि तु वैदिक-कर्मकाण्डपरिरक्षणार्थमेव प्रवृत्तानीति सम्भाव्यते। तेषां प्रादुर्भावोऽपि बौद्धमताविर्भावकालिक एवेति तर्क्यते। तदनन्तरं वैदिककर्मकाण्डप्रातिलोम्यमालम्बमानस्य बौद्धसम्प्रदायस्य प्रादुर्भावोत्तेजितैर्वैदिकधुरन्धरैः प्राक्तनपरम्पराप्राप्तस्य कर्म-काण्डस्यावहेलनामसहमानैस्तैस्तैस्तद्विशदीकरणार्थमेवैते सूत्रग्रन्थाः प्राणायिषत इति न दुष्करमूहितुम् विपश्चितामिति दिक्।

## व्याकरणम्

व्याकरणस्य प्रयोजनम्--व्याकरणानि कति ?--पाणिनीयव्याकरणस्य विशेषः--कोऽयं पाणिनिर्नाम--को नु खल्वस्य जनपदः--पाणिनेः कालनिर्णयः--पाणिनेर्वैदुष्यम्--पाणिनीयाष्टकस्य प्रतिपाद्या विषयाः--व्याकरणस्यान्ये ग्रन्थाः--व्याकरणान्तराणि--भट्टोजिदीक्षितः--राजर्षिः भर्तृहरिः--पाणिनेः काव्यकला--अन्ये व्याकरणधुरन्धराः।

### व्याकरणस्य प्रयोजनम्

इह खलु लोकव्यवहारनिर्वहणार्थं भाषैव जुषते प्रधानभावम्। अन्तरेण भाषां लोका न प्रभवन्ति नैजमाशयं प्रकाशयितुम्। अप्रकाशयन्तश्चाशयं कथमिव ते पारयेयुः किञ्चिदनुष्ठातुम्। किञ्चिदनुष्ठातुमशक्नुवतां तेषां कृते सकलं जगदेवान्धकारमयम्भवेत्। अतएव स्पष्टमाचष्ट तत्रभवान् आचार्यप्रवरो दण्डिमहाभागः--

इदमन्धतमः कृत्स्नं, जायेत भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते॥ इति॥

भाषयापि तया पुनः सुसंस्कृतया भवितव्यम् परत्राशयं सङ्क्रमयितुम्। सुसंस्कृता भाषा च शब्दसाधुत्वमपेक्षते। साधुशब्दा हि प्रयुज्यमाना यथार्थमर्थमर्पयन्ति नासाधुशब्दाः। साधुशब्दप्रयोगे तु व्याकरणाध्ययनं हि प्रधानं प्रयोजकम्। न हि व्याकरणज्ञानरहितः साधुशब्दान् प्रयोक्तुं क्षमः। उक्तञ्च रामायणे--

नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्।
बहु व्याहरताऽनेन न किञ्चिदपभाषितम्॥

इत्यनेन हनुमतो वाग्व्यापारेण तस्य व्याकरणपारङ्गतत्वं ध्वनितं भवति।[1] नाऽवैय्याकरणः साधुशब्दप्रयोगे क्षमः, पद्यमिदमित्यपि च सूचयति। आलङ्कारिका अपि च्युतिसंस्कारत्वाख्यं काव्यदोषमाचक्षाणास्तत्परिहाराय व्याकरणाध्ययनस्यावश्यकत्वमपूपुषन्। आचार्यो वेङ्कटाध्वरोऽपि अमुमेवार्थं विशदयति स्वकीये पद्ये निम्नाङ्किते :--

अस्वीकृतव्याकरणौषधानामपाटवं वाचि सुगाढमास्ते।
कस्मिंश्चिदुक्ते तु पदं कथञ्चित् स्वैरं वपुः स्विद्यति वेपते च॥

---

१. तत्रभवान् वाल्मीकिराह--

दुःखेन बुबुधे सीतां हनूमानलङ्कृताम्।
संस्कारेण यथा हीनो वाचमर्थान्तरङ्गताम्॥ इति।

तदेवं व्याकरणच्युतिपरिहाराय व्याकरणस्याध्ययनं नितरामावश्यकम्।

तदित्थं व्याकरणस्य परमसहत्त्वमुपपादितमाचार्यैरिति।

व्याकरणस्य च पुनः प्रकृतिप्रत्ययाद्यनुशासनेन पदस्वरूपनिर्णयाय तदर्थनिर्धारणाय च परमोपयोगः। नहि व्याकरणमन्तरा पदपदार्थावबोधः सम्यक् शक्यते सम्भवितुम्। व्याकरणस्य प्रयोजनजातमुद्दिश्य आचार्यो वररुचिरप्याह वार्त्तिकमुखेन--'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्।' इति। तान्येतानि प्रयोजनान्तराण्यपि भगवत्पतञ्जलिमुनिपादैः प्रपञ्चितानि महाभाष्ये पस्पशाह्निके। 'रक्षार्थं वेदानामध्येयम् व्याकरणम्। लोपागमवर्णविकारज्ञो हि सम्यग्वेदान् परिपालयिष्यति वेदार्थञ्चाध्यवस्यति। ऊहः खल्वपि--न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदमन्त्रा निगदिताः ते चावश्यं यज्ञगतेन विपरिणमयितव्याः। तान्नावैय्याकरणः शक्नोति यथायथं विपरिणमयितुम्। तस्मादध्येयं व्याकरणम्।' तत्र रक्षोहादीनि[1] तु प्रमुखानि प्रयोजनानि, आनुषङ्गिकानि चेतराणि। एवं बहूनि व्याकरणस्य प्रयोजनानि प्रदर्शितानि, विशेषावगतिकुतूहलिभिस्तु तानि तत्रैवानुसन्धेयानि।

तदेतच्च किल व्याकरणं 'वृद्धिरादैच्' (१. १. १) इत्यारभ्य 'अ अ' इत्यन्तमष्टाध्यायात्मकं शब्दशास्त्रम् पाणिनिमुनिभगवत्पादैरुपनिबद्धम्। तत्र कात्यायनेन मुनिना वार्त्तिकमुपन्यस्तम्। तद्वार्त्तिकोपरि भगवत्पतञ्जलिमुनिपादैः महाभाष्यमारचितम्। तदेतत्त्रिमुनि व्याकरणं वेदाङ्गत्वेन प्रख्यायते। व्याकरणान्तराणि तु वेदाङ्गत्वेन नोन्नीयन्ते। कुतः? तेषां लौकिकप्रयोगावबोधमात्रपर्यवसानात्।

## व्याकरणानि कति?

तानीमानि पुनर्व्याकरणानि नव सन्ति, इति लघु-त्रिमुनि-कल्पतरुकारलेखेनानुमीयते :--

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चापिशलं शाकलं पाणिनीयकम्॥

अन्ये तु व्याकरणानामष्टकत्वमेव निरूपयन्ति। तद्यथा भविष्यपुराणे ब्राह्मे पर्वणि प्रथमाध्याये :--

प्रथमं प्रोच्यते ब्राह्मं, द्वितीयमैन्द्रमुच्यते।
याम्यं प्रोक्तं ततो रौद्रं, वायव्यं, वारुणं तथा।
सावित्रं तथा प्रोक्तमष्टमं वैष्णवं तथा॥ इत्यादि

---

१. तदाह प्रदीपकारः "भाष्यकारो विवरणकारत्वात् व्याकरणस्य साक्षात्प्रयोजनमाह रक्षोहेति"

परं वस्तुतस्तु ऐन्द्र-काशकृत्स्न-आपिशलि-शाकटायन-पाणिनिकृतं व्याकरणञ्चेति पञ्चकमेव प्राचीनतमं व्याकरणम् ।

## पाणिनीयव्याकरणस्य विशेषः

व्याकरणं हि नाम वेदाङ्गेषु प्रधानतममङ्गमिति न तिरोहितं विदुषाम् । सर्वेष्वपि व्याकरणेषु पाणिनीयतन्त्रस्यैव लौकिकवैदिकोभयप्रक्रियालङ्कृतत्वाद् वेदाङ्गत्वं नेतरेषाम् । तदिदं पाणिनीयव्याकरणमष्टभिरध्यायैर्गुम्फितत्वादष्टाध्यायीति पदेनापि परिभाष्यते ।

स एष पाणिनिमुनिः अक्षरसमाम्नायादारभ्य लोकवेदोभयपथा सञ्चरमाणः किमपि व्याकरणान्तरविलक्षणं तन्त्रं प्रणिनाय । यस्मिन् पथि पाणिनेः प्राङ् न कोऽपि आचार्यः सञ्चचार । इति हेतोरेव पाणिन्युपज्ञं व्याकरणमिति व्यपदेशो लब्धावकाशः । एष एव पाणिनिव्याकरणस्य व्याकरणान्तरेभ्यो विशेषः ।

अस्मिन् सर्वाङ्गरमणीये पाणिनीये विद्यमाने सति व्याकरणान्तरेषु विद्वांसः कथमिव बद्धादरा भवेयुरिति तानि प्रचारवैरल्यात् सहजगत्या विस्मृतिपथङ्गतानि । अत एव वेङ्कटाध्वरो व्याकरणान्तरापेक्षया पाणिनीयव्याकरणस्य समादरणे बीजमुपोद्बलयति––"पाणिनिव्याकरणमेव प्रायेणौपाधिकप्रतीतिकारणमिति ।" अतएव तत्र कृतधियामादरः । वैदिकशब्दानतिरिच्य लौकिकेष्वपि शब्देषु पाणिनिव्याकरणमेव प्रकृष्टतमं व्यवस्थापकत्वमलङ्करोति । तद्यथा––'शताच्च ठन्यतावशते' इति पाणिनीयविधिमालम्ब्य 'शतिक' इति रूपं भवति आपिशलि-काशकृत्स्नाभ्यां 'शताच्च ठन्यतावग्रन्थे' इति सूत्रकरणात् शत्य इति रूपम् । तत्र पाणिन्यनुगृहीतः शब्दः साधुरुतान्यानुगृहीत इत्युदेति विप्रतिपत्तिः । तत्र––'नियतकालाश्च स्मृतयो व्यवस्थाहेतवः' । इति 'मुनित्रयमतेनाद्यत्वे साध्वसाधु प्रविभागः ।' इति कैय्यटमहाभागेनाभ्यधायि समाधानम् । 'यथोत्तरं मुनीनां प्रामाण्य' मिति वचनादपि च पाणिनीयस्यैव प्रमुखं प्रामाण्यमभ्युपेयम्भवति । तथा च यथोत्तरमिति प्रतीकमुपादाय उत्तरोत्तरस्य बहुलक्ष्यदर्शितत्वादिति हेतुरपि प्रामाण्येनोपन्यस्तः । एतेनापि पाणिनीयस्यैवादरास्पदत्वं ध्वनितम्भवति । इदमत्र प्रतिपत्तव्यम्, स्वकाले प्रयुक्तानेव शब्दान् लक्ष्यीकृत्यैव पाणिनिः स्वकीयं व्याकरणं प्रणिनाय । तदनु कांश्चिद्विपर्यस्तान् शब्दान् स्वकाले प्रयुक्तानुद्दिश्य कात्यायनो वार्त्तिकान् रचयामास । एवमेव तदनु च भगवान् पतञ्जलिरपि पूर्वदृष्टान् शब्दान् साक्षात्कृत्य तदनुगुणं भाष्यं निर्ममे । तदेभिस्त्रिभिर्मुनिभिः प्रवर्त्तितत्वादेव त्रिमुनि व्याकरणमिति वैय्याकरणव्यवहारः । सत्येतस्मिन् व्यतिकरेऽपि व्याकरणस्य पाणिन्युपज्ञत्वन्तु किलाव्याहत-

मेवेति । विलसति च लोकवेदोभयशब्दानुशासनपरत्वात् पाणिनीयमेवाखिलव्याकरणराशिशिरोरत्नायमानमिति ।

अपि च--

अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः ॥

इति सूत्रलक्षणं यथा सञ्जाघटीति पाणिनीयसूत्रेषु न तथा क्वचिदन्यत्र । अस्य सूत्राणि अल्पाक्षराणि, सूत्रगतपदानाञ्च सूत्रान्तरेष्वनुवृत्तिः । न तु प्रतिसूत्रमनुवृत्तिपदप्रयोगः । संज्ञाश्चापि इत्, कृत्, षट्, लुक्, श्लु, घ, वि, घु, टि, भ, इत्येवंविधाः प्रायशः एकाक्षरा अल्पाक्षरा वा प्रणिबद्धाः । किञ्च यद्यच्छास्त्रमसिद्धत्वात् कार्यान्तरप्रयोजकं तन्निवर्त्तकं वा तत्तच्छास्त्रमसिद्धकाण्डे पठितम् । यस्य च परत्वेन प्राबल्यमभिप्रेतं तत्परस्तादुट्टङ्कितम् । अहो नु खलु बुद्धिवैलक्षण्यं पाणिनेः । इत्थं पाणिनीयव्याकरणस्योत्कर्षाधायकानि गणनातीतानि तत्त्वानि । नात्र ग्रन्थभूयस्त्वभिया तानि निरूपयितुमुत्सहामहे । सोऽयं व्याकरणमार्त्तण्डमण्डलाखण्डलपदवीमारूढः यशःशरीरेण वर्त्तमानोऽद्यापि कस्य चक्षुष्मतो हृदयानन्दममन्दं नोपजनयति ।

## अथ कोऽयं पाणिनिर्नाम ?

भगवतः पाणिनेराचार्यस्य चरितमद्यापि विद्यते तमसावृतम् । कस्मिन् काले स समुत्पन्नः, कतमञ्च जनपदमलञ्चकार स्वजनुषा, कुतश्च तस्य तादृशव्याकरणविज्ञानसम्पादनपाटवम्, इति निखिलमपि तत्त्वजातमिदमनुसन्धानमपेक्षते । तदत्र विदुषां प्रीतये तद्विषयेऽपि किञ्चिन्मात्रमिहोच्यते । तत्र तावत् शिक्षायां 'दाक्षीपुत्रस्य पाणिने' रिति वचनेन गम्यते--यदेष मुनिः कस्याश्चिद् दाक्षीनाम्न्या देव्या गर्भशुक्तिमुक्तामणिः । जनकश्चास्य कश्चित् पाणिनो नामा मुनिसत्तमः । तथा च स्वयमाचार्यः, पणिन्शब्दादणि, भ संज्ञायां, प्राप्ते टिलोपे 'गाथि-विदथि-केशि-गणि-पणिनश्चेति' सूत्रेण निषेधात् पाणिनं शब्दं व्याकुरुते । तस्यापत्यं पाणिनिः । तदेतावता गम्यते यत्कस्माच्चित्पाणिननाम्नो मुनिप्रवरात् दाक्षीनाम्न्यां देव्यां गृहीतजन्मपरिग्रहोऽयं पुण्यात्मा महर्षिः पाणिनिरिति निश्चितप्रायम् ।

## अथ कोऽस्य जनपदः

पाणिनिः 'तूदीशलातुरेति' सूत्रे शलातुर इति कस्यापि स्थानविशेषस्य नामेति निर्दिदेश । अतः सुशकमिदमभ्युपेतुं यदाचार्योऽयं शलातुराख्यं नगरं विभषयामास । यत्खलु क्रमेण सलातर-हलाहुर, लहुर, इति अपभ्रश्य, सम्प्रति लाहुर

इति नाम्ना परिणतम्। तत्रभवान् भाष्यकारश्च पुनः शालातुरीयशब्दं पाणिनीयपर्यायतयाऽसकृत् प्रायुङ्क्त। तेनैतत् सम्यक्तया प्रतिपत्तुं शक्यते यदसौ महामेधावी पश्चिमोत्तरदेशमेव स्वजन्मना समलञ्चकारेति।

इदञ्च शलातुर[1] नाम नगरं तक्षशिलायाः समीपे वर्त्तते। स च शलातुरशब्दोऽयमद्यत्वे लहुर इति समाख्यया प्रख्यायते। कैम्बलपुरमण्डलान्तर्गतजहांगीराख्यग्रामसविधे ततो दशक्रोशमितेऽन्तरे चावस्थितो लाहुरश्चायं साम्प्रतिकलाहौरनगराद् भिन्नः इति गवेषणयाऽवधार्यते।

पाणिनिमुनिरयमासीद् बाल्यकालादेव महान् मेधावी प्रदीप्तप्रतिभाशाली च। भगवता पतञ्जलिनाऽसौ कविपदेन विभूषितः—'अकीर्तितमाचरितं कविने'ति। अपि च 'प्रमाणभूत आचार्यः दर्भपवित्रपाणिः, शुचाववकाशे प्राङ्मुख उपविश्य, महता यत्नेन, प्रणयति स्मेति। तत्र वर्णेनापि अनर्थकेन न भवितव्यम्, किंपुनरियता सूत्रेणेति।' तमिमं वर्णसमाम्नायन्तु तत्तीव्रेण तपसा प्रत्यक्षीभूतः साक्षान्महेश्वर एव शब्दविद्यारहस्यप्रकाशनार्थं पाणिनये समुपदिदेशेति प्रवादस्तु तस्मिन् सातिशयबद्धश्रद्धाकानां तत्परमभक्तानामर्थवादमात्र एव।

एष किल वर्णसमाम्नायस्तु वस्तुतः ऋगुपज्ञः मूलोद्देशतः 'अग्नि मीळे' इति ऋग्वेदीयप्रथमश्रुतावेवोपदिष्टो भगवता आदिकविना परमेश्वरेण इति प्रदर्शितञ्चान्यत्र। यत्कालान्तरेणालङ्कारररूपेण कविभिर्मनीषिभिर्महेश्वरढक्कानिनादोत्थनिर्घोषरूपेण समासादितायां चतुर्दशसूत्र्यां परिणतोऽवधार्यत इति।

## पाणिनेः कालनिर्णयः

महर्षिः पाणिनिः कदा भारतभुवं स्वजनुषाऽनुजग्राह इत्यत्र तु विमर्शका अपि प्रायशो वाचंयमाः। ये च यं कमपि कालं निरूपयन्ति तेऽपि तं युक्तियुक्तवचोभिरुपपादयितुं न प्रभवः। इतरे कालनिर्णिनीषया प्रवर्त्तमाना अपि साधनसौकर्यमनवाप्य कुण्ठितधियः सन्तः मध्य एव विरताः। एवमेव कथासरित्सागरोऽपि पाणिनेः कालनिर्णये कुल्यायमान इवास्ते। केचन तु ख्रीस्तशतकारम्भात् सार्द्धत्रिंशद्वर्षात्पूर्वमेवास्य कालं सम्भावयन्ति। अपरे ख्रीस्ताब्दतःसार्द्धद्विसहस्रतोपि कतिपयवर्षपूर्वमस्य कालमाकलयन्ति। अन्ये च कथामप्येकामत्रोदाहरन्ति। यत्पुरा यदा कुण्ठितमतिः पाणिनिः श्रीगुरुवरमुपवर्षमुपाध्यायं विद्याध्ययनार्थमुपाश्रितः, तदा तस्य सतीर्थ्येन कात्यायनेन वादाहवे स बलवत्कदर्थितः परमविषण्णः सन् भगवन्तं महेश्वरं तपःप्रभावेन प्रसाद्य समासाद्य च तड्ढक्कानिनादसमुत्थं वर्णसमा-

---

१. गणरत्नमहोदधावपि शलातुर इत्युल्लिखितम्।

म्नायं शब्दविद्यारहस्यप्रकाशनार्थमिदं नूतनं पाणिनीयाष्टकं नाम व्याकरणशास्त्रं रचयामासेति। एवं ये कात्यायनसमकालभवत्वमाचार्यस्य प्रतिपादयन्ति न तद्युक्तं प्रतिभाति। यतो नहि पाणिनीयसूत्रेषु राज्ञो जनमेजयादुत्तरकालभवस्य कस्यापि नाम दृक्पथमवतरति। नैतावदेव अपितु परमप्रसिद्धस्य व्याससूनोः शुकस्यापि नाम नोपन्यस्तमुपलभ्यते। तत्र शुकस्य व्यासापत्यबोधिकां 'वैय्यासकिः' इति संज्ञामनुश्रुत्य परस्तात् तत्साधनाय कात्यायनेन वररुचिना 'व्यासवरुडेति' वार्त्तिकमारब्धम्। तेनैतदनुमातुन्न दुःशकम् यत्तदानीं पाणिनिकाले वैयासकिवारुडक्यादिपदानि लोके व्यवह्रियमाणानि नासन्। इति हेतोरेव पाणिनिः तदानीं तादृशं सूत्रं न जुगुम्फ। पाणिनिस्तु स्वकालव्यवहृतानेव शब्दान् सूत्रेषु न्यभान्त्सीदिति। पाणिनिना यन्नोक्तं कदुक्तं वा तदेव कात्यायनेन वार्त्तिकैः पूरितं प्रत्याख्यातं वा। तस्मात् पाणिनेः कात्यायनात् पूर्वकालभवत्वं सूपपन्नमेव। पुराणकालात्पूर्वमपि पाणिनेरिदमेवावलम्बनं यत् पुराणपठितान् बहून् शब्दान् अपाणिनीयान् पञ्चषैः सूत्रैः संस्कर्त्तुं सुशकानपि न स सञ्चस्कार। अतोपि पुराणकालात्पूर्वजत्वं पाणिनेरव्याहतम्। किञ्च स्वैरसञ्चाराः पुराणकर्त्तारो महर्षयः पाणिनीयानामपि शब्दानामार्षत्वं स्वीकुर्वाणा पाणिनीयव्याकरणं नाशिश्रियन् इत्यपि सम्भाव्येत चेत्तदापि तस्य पुराणकालात् प्राचीनत्वं तु दुरपह्नवमेवेति। अतः वैदिकपौराणिककालयोरन्तराल एव क्वचित्पाणिनेः कालः सम्भाव्यते। केचन कालविदः पाणिनेः कालः ख्रीस्तात् प्राक् ७०० वर्षदेशीयः कात्यायनस्य च ख्रीस्तात् ४०० वर्षदेशीयः इत्यामनन्ति।

वररुच्यपरनामा कात्यायनस्तु पाणिनेरुत्तरकालजात एव। यः किल स्वकाले प्रयुक्तप्रयोगानुस्यूतानव्यवहृतपूर्वान् शब्दानुद्दिश्य वार्त्तिकान् प्रणिनाय। यथा खलु पुरा पाणिनिकाले--'देवानां प्रिय' इति पदद्वयं असमस्तमेव प्रयुज्यते स्म। तदानीं तेनासमस्तपदेन यज्ञीयपशुरेवावबुध्यते स्म, तदनु कात्यायनकाले समस्तमेकपदीभूतं पशुसादृश्यप्रद्योतकतया मूर्खार्थकत्वेन व्यवहृतिं गतम्। ततो भगवता कात्यायनेन 'देवानांप्रियो मूर्खे' इति वार्त्तिकं प्रणीतम्। इत्यनेनापि कात्यायनस्यावरजत्वं सूच्यते इति।

## पाणिनेर्वैदुष्यम्

पाणिनेर्विलक्षणं वैदुष्यशेवधिमुपश्लाघयन् तत्रभवान् भाष्यकारो व्याजहार 'वृद्धिरादैजिति' सूत्रभाष्ये--'स प्रमाणभूत आचार्यः....महता प्रयत्नेन सूत्राणि प्रणयति स्म। तत्र वर्णेनापि अनर्थकेन न भवितव्यं किंपुनरियता सूत्रेणेति।' एतेन लोकोत्तरमेधाविनोऽस्य बुद्धिप्रौढिमाऽपूर्वक्रान्तदर्शिता च सुतरां ध्वनिता भवति। सोऽयमेवंविधालौकिकगुणगरिम्णा कस्य वा न नमस्यो भवेन्महामुनिः पाणिनिः --

अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः ।।

वस्तुतः पाणिनीयव्याकरणं सर्वतोमुखं सर्वाङ्गपूर्णञ्चेत्यत्र नास्ति संशयलवोऽपि ।

## पाणिनीयाष्टकप्रतिपाद्या विषयाः

पाणिनीयव्याकरणमिदम् अष्टभिरध्यायैरुपनिबद्धम् पाणिनीयाष्टकनाम्नाऽपि प्रसिद्धम् । अत्र हि प्रत्यध्यायं चत्वारः पादा अनुस्यूताः । व्याकरणं हि नाम प्रकृतिप्रत्ययाद्यनुशासनेन पदपदार्थस्वरूपव्यवस्थापकं पुण्यतमं शास्त्रम् । व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा येनेति तद्व्युत्पत्तेः । तदेतत्सर्वाङ्गलक्षणघटितत्वात् पाणिनीयमेवेतरव्याकरणमूर्द्धाभिषिक्तं विभाव्यते ।

एतत्प्रतिपाद्या विषयाः सङ्ग्रहेण निम्नपद्येषु समुपसंहृताः ––

सूत्राणां क्रमविन्यासो रुचिरो मुनिना कृतः ।
निरीक्ष्यतां सावधानं पूर्णञ्च परितुष्यताम् ।।
संज्ञानां परिभाषाणाम् पूर्वाध्याये प्रदर्शनम् ।
समासश्च विभक्त्यर्था द्वितीयाध्यायगोचराः ।।
तृतीये धातुविहिताः प्रत्ययाः सुव्यवस्थिताः ।
तुर्य्यपञ्चमयोरुक्ता अवशिष्टाश्च ते क्रमात् ।।
षष्ठे प्रकृतकार्याणि प्रायेण दर्शयन्मुनिः ।
सप्तमे प्रत्ययस्थानि द्विष्ठानि च यथाक्रमम् ।।
अष्टमे पूर्वचरणे पदकार्यं समासतः ।
यान्यसिद्धानि पूर्वत्र त्रिपाद्यां तान्यवेशयत् ।।
कृत्वा पूर्णमनोयोगं शिष्यप्रियचिकीर्षया ।
पाणिनीयमिदं पाठ्यं गुरुभिः करुणार्णवैः ।।
शब्दाम्बोधितितीर्षा चेद् व्याकृत्यधिजिगाँसुता ।
पाणिनीयं प्रयत्नेन समभ्यस्यं तदर्थिभिः ।। इति ।।

## पाणिनेः काव्यकला

सुगृहीतनामधेयो भगवान् पाणिनिर्न केवलं शब्दशास्त्रपारङ्गतः कवित्वकलायामप्यसौ परमकुशल आसीदिति रायमहाभागेन अमरकोशटीकायामुद्धृतानि पाणिनिप्रणीतानि कतिपयानि पद्यानि आचार्यस्य कवित्वकलाचातुरीं द्योतयन्ति :––

गतेऽर्द्धरात्रे परिमन्दमन्दं गर्जन्ति यत्प्रावृषि कालमेघाः ।
अपश्यती वत्समिवेन्दुबिम्बम् तच्छर्वरी गौरिव हुङ्करोति ।।

अपोढरागेण विलोलतारकम् तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद् गलितन्न लक्षितम् ॥
विलोक्य सङ्गमे रागं पश्चिमायां विवस्वतः ।
कृतं कृष्णमुखं प्राच्या नहि नार्यो विनेर्ष्यया ॥
अथाससादामुर्मानिद्यतेजा जनस्य दूरोज्झितमृत्युभीतेः ।
उत्पत्तिमद्वस्तु विनाश्यवश्यम् यथाहमित्येवमिवोपदेष्टुम् ॥
शरदि रविरश्मितप्ता बिभ्राणाः शोषमतिशयग्लपिताः ।...इत्यादि ।

विशिष्य तु काव्यप्रकरणमत्रानुसन्धेयम् । पाणिनिना काव्यद्वयं प्रणीतम् पाटलविजयं-जाम्बवीविजयञ्चेति । तत्र स्खलितमालोक्य केचन प्रत्यवतिष्ठन्ते यत्संस्कारच्युतिदोषदुष्टत्वान्नेयं पाणिनेः कृतिरिति सम्भाव्यते । व्याकरणो पज्ञव्यपदेशभाजः शब्दाह्वयस्य शाश्वतिकज्योतिषः संस्रष्टुः सिद्धवाग्विभवस्य कृतौ तु नाणोरपि च्युतिसंस्कारादिदोषस्य सम्भवोऽस्ति । परन्तु रुद्रटप्रणीतकाव्यालङ्कार टीकायां नेमिसाधुना च्युतिसंस्कारदोषोदाहरणप्रसङ्गे--'सन्ध्यां वधूं गृह्य करेणेत्यत्र' गृहीत्वेति वक्तव्ये गृह्येति प्रयोगः च्युतिसंस्कारदोषदूषितः इत्युदाहृतम् । तथा-विधोऽव्याकृतः प्रयोगः शब्दशास्त्रमार्तण्डमण्डलाखण्डलेन कृतः स्यादिति न बुद्धिपद्धतिमारोहति । अतः सैषा कृतिः पाणिनेः नास्त्येवेति निश्चितप्रायम् । सत्यमेतत् चेन्नाम रचनेयं न स्यात्पाणिनेरिति । परन्तु यदि नाम स्वीक्रियेत यद्र-चनेयं पाणिनेः कृतित्वं न व्यभिचरति, तदा तु पाणिनिकृतिबलादेवाऽस्य प्रयोगस्य साधुत्वमभ्युपेयमेव । गृह्य-गृहीत्वेति प्रयोगद्वयस्यापि साधुत्वं आचार्यानुगृहीतत्वा-देवोन्नेयमिति । न खलु पाणिनीयस्यापाणिनीयत्वं यत्नशतेनापि शक्यते साध-यितुम् । तथा सति काव्ययोरनयोः पाणिनिकृतित्वाङ्गीकारेऽपि न कापि विप्रति-पत्तिरिति । नहि तेजस्तिमिरयोः सामानाधिकरण्यं सम्भवति । परन्तु मानव-निसर्गसुलभदोषसंश्लेषात्तु पाणिनिरपि न मुक्तः । तदस्याद्भुतप्रज्ञस्य पाणिनेरपि सर्वविदः कृतिमुद्दिश्य दोषोद्घाटनं नाम कस्य न विस्मयकरम् । तथाऽपि मानव-स्वभावसुलभभ्रमादिदोषस्यापरिहार्यत्वमवगमयितुं किञ्चिदिवात्र प्रस्तूयते--

तथा च पदसंस्कारपक्षे 'हरिर्भवति, साधुर्भवति' इत्यत्र विसर्गस्य रेफ-भव्यः विधायकानुशासनाभावात् अव्याकृतत्वं दुर्निवारमिति । तदेवंजातीयका दोष-दृष्टयः पाणिनेरुत्कर्षं न मात्रयापि समपकर्षयितुं प्रभव्यः । सोऽयमलौकिकगुणसम्पन्नो महर्षिः क्वचिदरण्ये ध्यानावस्थितः व्याघ्रेणाक्रान्तः त्रयोदश्यां भौतिकं शरीरं तत्याज । इति हेतोरेव व्याकरणसम्प्रदाये तस्यामेव तिथौ सर्वैरनध्यायः परिपाल्यते तत्पुण्यतिथिमुद्दिश्येति ।

## पाणिनेरन्यरचना:

पाणिनीयाष्टकमतिरिच्य अन्येऽपि—गणपाठः-धातुपाठः-उणादिसूत्रं, फिट्-सूत्रं-शिक्षा-लिङ्गानुशासनम्-परिभाषाप्रभृतयो ग्रन्थाः पाणिनिना विरचिताः। तेषु फिट्सूत्र-लिङ्गानुशासनादीनि तु व्याडिकृतानीति बहव आशेरते।

## व्याकरणस्यान्ये ग्रन्थाः

कात्यायनवार्त्तिकप्रणयनात् प्राक् पाणिनीयाध्ययनाध्यापनस्य सौकर्यं नासीत् पुरा। यद्यपि सूत्रवार्त्तिककदम्बमधिकृत्य विद्वद्वरव्याडिकृतो लक्षैकश्लोकमितो ग्रन्थ आसीत् प्राक्। एवमन्यैः कुण्यादिभिराचार्यैर्गुम्फिता वृत्तयोऽप्यासन् तथापि न ते सन्दर्भा व्याकृतितत्त्वबुभुत्सूनां परितोषायालमभूवन्। ततो लोकानुजिघृक्षया भगवान् पतञ्जलिः पाणिनीयसूत्रतत्त्वार्थं विशदतया व्याचिख्यासुः महाभाष्याख्यं बृहद्ग्रन्थरत्नं प्राणैषीत्। तदेतस्य भगवतः पतञ्जलेः समयः कालज्ञैः ख्रीस्ताब्दतः शतचतुष्टयवर्षपूर्वं सप्तविंशतितमशताब्द्यामवधार्यते। जननी चास्य विदुषी गोणिकाख्या जन्मभूमिश्च गोनर्ददेशः। सोऽयं गोनर्ददेशः अवधजनपदे गोन्डानाम्ना प्रख्यातं नगरमित्येके। गोनर्ददेशोऽयं काश्मीरकेषु इत्यपरे। अनयोर्द्वयोः पक्षयोः समीचीनस्तु द्वितीय एव। भर्तृहरिकैयटप्रभृतयोऽन्येऽपि विद्वद्धुरन्धरा महाभाष्य-माधकृत्य विवृतीः वृत्तिग्रन्थाँश्च जग्रन्थिरे। कैयटप्रभृतिवत् पतञ्जलिशैली नूनमस्य काश्मीरकत्वं व्यनक्ति।

## भट्टोजिदीक्षितः

अत्र व्याकरणप्रसरप्रपञ्चे भट्टोजिदीक्षितस्य नाम स्वर्णाक्षरैरङ्कितम् भविष्यति। अनेन श्रीलक्ष्मीधरतनुजनुषा महाविदुषा शब्दकौस्तुभः, तन्निष्कर्षरूपा वैयाकरणसिद्धान्तकौमुदी, तद्व्याख्यानभूता प्रौढमनोरमा चेति सन्दर्भा निरमायिषत। सैषा कौमुदी व्याकरणसिद्धान्तसंग्रहात्मकतया व्याकृतितत्त्वावबोधाधिकसारल्यात् अद्यत्वे अतिमात्रं लब्धप्रचारा सञ्जाता।

तदनु फक्किकासम्पर्ककर्कशतया सुकुमारधियां बालानां कौमुद्याः दुःखावगाहतया ततः सङ्कलय्य भट्टोजिदीक्षितस्य शिष्येण विदुषा वरदराजेन मध्य-कौमुदी-लघुकौमुदी-पदमञ्जरीसमाख्याः ग्रन्थाः प्राणायिषत। सोऽयं भट्टोजिदीक्षितः किञ्जातीयः किंदेशीयश्चेत्यत्र तु मतानि बहुधा बेभिद्यन्ते। केचिदेनं महाराष्ट्रियं सारस्वतब्राह्मणमनुमन्यन्ते। अपरे पञ्चद्राविडान्तर्गतस्तैलङ्गब्राह्मणोऽयमिति व्यवतिष्ठन्ते। तत्तन्मतोपपत्त्यर्थं भूयांसो हेतवोऽपि तैः पुरस्क्रियन्ते। न तेऽत्र विस्तरभिया

प्रदर्श्यन्ते। तथापि तेषु तत्त्वतः पर्यालोच्यमानेषु निष्कृष्टतत्त्वमिदमेवाभाति यदसौ पञ्चद्राविडान्तर्गतस्तैलङ्गब्राह्मणः कालान्तरेण दाक्षिणात्यैः सहोपनतघनिष्ठवरिष्ठसम्पर्कविशेषात् कालकृतासन्निकृष्टगुरुपरम्परानुरोधेन सारस्वतत्वमुपलम्भितः। तथाहि समवलोक्यते भट्टोजिदीक्षितविरचितशब्दकौस्तुभभूमिकायाम्, "निखिलविद्यासम्भारभासुरः पदवाक्यप्रमाणपारावारपारीणः श्रीमान् भट्टोजिदीक्षितः कदा कतमं देशमध्युवासेत्यादिकं बहुभिर्निर्णीतम्। अथाऽपि तस्य द्राविडपञ्चकातिरिक्तत्वे न कमपि दृढतरं हेतुमुत्पश्यामः। प्रत्युत पृथ्वीमण्डलमौलिमण्डनमणेः काशीस्थमहाराष्ट्रजातिसमुद्भूतशेषोपाभिधस्य श्रीकृष्णपन्तस्यान्तेवासीति--

"निर्विशेषमहं शेषात् शेषकृष्णं गुरुं भजे।
यो मामशेषशेषोक्ति विशिष्यैवाध्यजीगपत्॥
वाग्देवी यस्य जिह्वाग्रे नरी ति सदा मुदा।
भट्टोजिदीक्षितमहं पितृव्यं नौमि सिद्धये॥"

इत्यनेन रङ्गोजिभट्टस्य भ्राता इति वैयाकरणभूषणे कौण्डभट्टेन स्पष्टं प्रतिपादितत्वात्, स्वरवैदिकोभयभागयोर्मध्ये विशेषेण ऋक्शाखोदाहरणदानाच्च तस्य द्राविडपञ्चकान्तर्भूततां दाक्षिणात्यताञ्च को नु खलु निह्नोतुमलङ्कर्मीणः।

सोऽयं दीक्षितः[1] षट्चत्वारिंशत्तमादधिकषोडशतमे वैक्रमेऽब्दे समभवत्। सोऽयं सिद्धान्तकौमुदीकारः आयुषः षट्पञ्चाशत्तमवर्षदेशीये वयसि भौतिकं शरीरं परित्यज्य सम्प्रति यशःशरीरेण विलसन् विराजते।

श्री भट्टोजिदीक्षितविरचिता सिद्धान्तकौमुदीयं सकलव्याकरणप्रपञ्चप्रसरे शेखरीभूता अखिलशब्दतन्त्ररत्नमालामध्यमणिरिवातीवरमणीयरश्मिराजिभिरद्यापि विलसति दिग्दिगन्तरालमुद्भासयन्ती। स्थान एवोक्तं किलाभियुक्तैः --

कौमुदी यदि कण्ठस्था वृथा भाष्ये परिश्रमः।
कौमुदी यद्यकण्ठस्था वृथा भाष्ये परिश्रमः॥ इति।

यद्यपि महामेधाविनो वैयाकरणालङ्कारभूतस्य भट्टोजिदीक्षितमहाभागस्य स्थानमतीव गौरवशालि व्याकृतिविद्वन्मण्डले, तथापि दोषज्ञाः स्वतन्त्रप्रज्ञास्तु समालोचकास्तत्कृतावपि विप्रतिपद्यमाना दोषानुद्भावयन्ति। तदपि विदुषां रञ्जनाय दिङ्मात्रमुदाह्रियते। तद्यथा--

ण्यन्तप्रकरण 'लियः सम्माननशालीनीकरणयो'श्चेति सूत्रस्योदाहरणेषु

---

१. भट्टोजिदीक्षितस्य समयः खृस्तं १६०० मितोऽवधेयः।

बालमुल्लापयते,--वञ्चयतीत्यर्थो विहितः। अत्र वञ्चयतीतिपदमव्याकृतम्--'गृधिवञ्च्योः प्रलम्भने' इत्यनेन तस्यात्मनेपदत्वानुशासनाद् 'वञ्चयते' इत्यस्यैव साधुत्वं न कर्हिचित् वञ्चयतीत्यस्य। नूनं दीक्षितेनात्र स्खलितमेव किलेति।

किञ्च--'राजन्' शब्दात्सौ--परत्वादुपधादीर्घः, हल्ङ्यादिलोपस्ततो नलोपः राजा च इति क्रममाह कौमुदीकारः। हलन्त नपुँसकप्रकरणे 'दीर्घाहन्' शब्दात्-सौ-इह हल्ङ्यादिलोपे प्रत्ययलक्षणेन असुसिति निषेधात् रत्वाभावे 'रुः' तस्यासिद्धत्वात् नान्तलक्षणोपधादीर्घः इति व्युत्क्रममाह। यतः--तत्र राजन् शब्दे परत्वादुपधादीर्घः पूर्वम्, इहच, हल्ङ्यादिलोपः पूर्वमाह तन्मिथोव्याहतत्वादव्याकृतम्। यद्यपि बालमनोरमाकृता वासुदेवदीक्षितेन एतदव्याकृतत्वदोषपरिजिहीर्षया 'अकृतव्यूह'परिभाषामालम्ब्य यत्किञ्चिदुक्तं तदपि न तोषकरम्, नागेशेनास्याः परिभाषाया निराकृतत्वात्। किञ्च 'रामा'दित्यत्र 'जश्त्वं वावसाने' इत्युक्तम्। तत्र तत्त्वबोधिनीकृता बाधित्वेतिशेष इत्युक्तम्। येन नाप्राप्तिन्यायेन अवसाने चर्त्वस्य जश्त्वापवादत्वात् इति समर्थितम्। तदपि न मनोज्ञम्। 'लिट् लिड्' इत्यादौ 'जश्त्व चर्त्वे' इत्युल्लेखात् दीक्षितस्य तदभिप्रायाऽभावात्। जश्त्व-चर्त्वइत्यभिप्रायान्तरं व्याख्यान्तरन्तु कुचोद्यमेव। इत्यलं कदर्थनया। एवंविधा भूयस्यो विप्रतिपत्तयो विभाव्यन्ते। तथापि ता मानवनिसर्गसुलभतयोपनता विदुषां ध्यानं नार्हन्ति सविशेषम्। एवंविधा विप्रतिपत्तयश्च न मात्रयापि दीक्षितस्य प्रकाण्डपाण्डित्य प्रकर्षमपकर्षयितुं प्रभवन्ति इत्यलं पल्लवितेन।

## भर्तृहरिः

व्याकरणधुरन्धरेषु विद्वत्पुरन्दरस्य श्री भर्तृहरिमहाभागस्य नामसंस्मरणं कस्य सचेतसश्चेतसि नोपजनयेदमन्दानन्दम्। अनेन परमतार्किकेन व्याकरणे सुवर्णे सौरभमिव दर्शनत्वं न्यधायि। यत्कृतिमाकलय्यैव महामहिमशालिभिः नागेशादिभिर्मञ्जूषादिग्रन्थरत्नानि व्यरचिषत। विदुषां मनः प्रीतये तदपि किञ्चिदिवात्रोदाह्रियते।

भर्तृहरिप्रतिपादितेषु नैकेषु सिद्धान्तेषु विवर्त्तवाद-स्फोटवादौ तु नितरां शेखरायमाणौ मुनेः प्रातिभं ज्योतिराविष्कुर्वाणौ विलसतः।

तत्र तावद्विवर्त्तवादः। विवर्त्तो हि नाम अतत्त्वतोऽन्यथा प्रथा। उक्तञ्च--
'अतत्त्वतोऽन्यथा प्रथा विवर्त्त इत्युदीरितः।' इति।

अस्य नयेन हि शब्दब्रह्मण एव रज्ज्वाः सर्परूपेणेव जगद्रूपेण विवर्त्तः। तदुक्तं तेन स्वकीये वाक्यपदीये माङ्गलिके पद्ये--

'अनादि निधनं ब्रह्म शब्दतत्वं यदक्षरम् ।
विवर्त्ततेर्थभावेन प्रक्रिया जगतो यतः ॥'

स्फोटवादश्चास्यापरो वादः । स्फुटत्यर्थो यस्मात् स स्फोटः । हृदयान्तर्निर्गतो नादो वर्णविशेषरहितः । वैखरी[1] रूपरूषितः स्वार्थं समर्पयति । स्फुटचतेऽसौ स्फोट इत्येवं व्युत्पद्यमाने वाच्योऽपि बौद्ध एव खलु ।

तदेवं वाच्यवाचकयोरुभयोरपि बौद्धत्वं सर्माथतं भवति । घटोऽस्ति घटो नास्तीत्यादयः प्रतीतयोऽप्यनुप्राणिता भवन्ति[2] । उक्तञ्च वाक्यपदीये—

स्फोटाख्यो निरवयवो नित्यशब्दो ब्रह्मैवेति ।

एवं सत्स्वपि अष्टसु स्फोटेषु वैय्याकरणानां वाक्यस्फोटस्यैव मुख्यत्वम् । तदुक्तं वैय्याकरणभूषणसारे—

"वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतिस्थितिः ।"

## व्याकरणान्तराणि

प्राचीननव्यभेदाद् व्याकरणमपि द्विविधम् । तत्राष्टाध्यायी-काशिका-महाभाष्यादीनि पाणिनीयसूत्रक्रमानुसारीणि व्याख्यापराणि ग्रन्थरत्नानि प्राचीनव्याकरणेऽन्तर्भवन्ति । नव्यव्याकरणे च भट्टोजिदीक्षितादारभ्य नागेशप्रभृतिभिः विरचिता व्याकरणसन्दर्भाः सङ्गृह्यन्ते । प्राचीनव्याकरणे 'काशिका' जयादित्यवामनाभ्यां खृस्ते ६०० तमेऽब्दे विरचिता । तस्या न्यासनाम्नी टीका च जिनेन्द्रबुद्धिना प्रणिबद्धा खृस्त ७०० तमेऽब्दे । तदुपरि पदमञ्जरी नाम्नी टीका च श्रीहरिदत्तेन खृस्ते ११०० तमेऽब्दे प्रणिबद्धा । नव्यव्याकरणविषये तु प्रागभिहितमेव ।

व्याकरणान्तरेषु—चन्द्रव्याकरणं बौद्धमतावलम्बिना चन्द्रगोस्वामिना पाणिनीयसूत्रेषु किञ्चिद्योगविभागादिना परिवर्तनं विधाय विरचितम् खृस्ते ५०० तमेऽब्दे । शाकटायनशब्दानुशासनञ्च खृस्ते ८०० तमेब्दे विरचितम् भगवता शाकटायनेन । हेमशब्दानुशासनञ्च भगवता हेमचन्द्रेण खृस्ते ११०० तमेऽब्दे विरचितं विभाव्यते ।

कातन्त्र-व्याकरणं खृस्ते १०० तमेऽब्दे शर्ववर्मणा विरचितम् । व्याकरण-

---

१. चतुर्विधा वै वाक्—परा-पश्यन्ती-मध्यमा-वैखरीति । तदुक्तम्—

परा वाङ् मूलचक्रस्था पश्यन्ती नाभिसंस्थिता ।
हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा ॥ इति ।

२. एवमेव एकमक्षरमेकं पदमेकं वाक्यमिति बुद्धयोऽपि स्फोटमङ्गीकृत्यैवोपपद्यन्ते, नान्यथेति ।

मिदं कलाप-नाम्नापि प्रसिद्धम्। सारस्वतव्याकरणं ख्रैस्ते १३००तमेऽब्दे अनुभूतिस्वरूपाचार्येण विरचितम्। मुग्धबोधव्याकरणमिदं श्रीवोपदेवेन ख्रैस्त १२५०तमेऽब्दे विरचितम्।

## अन्ये व्याकरणधुरन्धराः

कय्यट : नागोजिभट्टापरनामधेयोऽसौ शिवस्वामितनुजन्मा प्रकाण्डपण्डित आसीत्। अस्य व्याकरणानुबन्धिनः परिभाषेन्दुशेखर--लघुशब्देन्दुशेखर-बृहद्वैयाकरणसिद्धान्तमञ्जूषा-लघुवैयाकरणसिद्धान्तमञ्जूषा-परमलघुमञ्जूषा-महाभाष्यप्रदीपोद्योतश्चेति प्रसिद्धा लब्धप्रचाराश्च ग्रन्थाः। नागेशस्य समयः ख्रैस्ते १७००तमेऽब्दे निर्धार्यते।

कौण्डभट्टः--वैयाकरणभूषणस्य वैयाकरणभूषणसारस्य च प्रणेता। भट्टोजिदीक्षितस्य भ्रातृ रङ्गोजिदीक्षितस्य तनूजः।

अधुनाऽन्ते च व्याकरणप्रकरणमिदं पदमञ्जरीकारोक्तिभिरेवोपसंहरामः—

उपासनीयं यत्नेन शास्त्रं व्याकरणं महत्।
प्रदीपभूतः सर्वासां विद्यानां यदुपस्थितम्॥
रूपान्तरेण ते देवा विचरन्ति महीतले।
ये व्याकरणसंस्कारपवित्रितमुखा नराः॥

## निरुक्तम्

निरुक्तं हि नाम पदविभागमन्त्रार्थदेवतानिरूपकं शास्त्रम्। निरुच्यते निःशेषेणोपदिश्यते निर्वचनविधया तत्तदर्थविबोधनाय पदजातं येन यत्र वा तन्निरुक्तम्। यद्यपि निर्वचनमुखेन पदानामर्थविभासः व्याकरणेनापि गतार्थः, तथापि किञ्चिद्विशिष्टप्रयोजनवतो निरुक्तस्य व्याकरणात् पृथगुपन्यासः किल तर्कप्रसादकः।

## निरुक्तस्य वैशिष्ट्यम्

अस्मिन् हि निरुक्ते वैदिकानां शब्दानां नामाख्यातोपसर्गनिपातरूपेण प्रविभक्तानाञ्च निर्वचनरूपेणार्थादिकं निरूप्य निरूपितांश्च तान् उदाहरणेनोपपादयन् पूर्वाचार्याणाञ्च मतभेदं प्रदर्शयन् तदुपरि पूर्वपक्षमुद्भाव्य तञ्च क्वचित्खण्डयन् उपपन्नेषु क्वचिन्मण्डयन् यास्काचार्यः स्वकीयं निर्वचनप्रकारमवगमयति। एतदेव वैशिष्ट्यमभ्युपगम्य व्याकरणान्निरुक्तस्य पृथक्त्वेन वेदाङ्गत्वमङ्गीकृतमाचार्यैः। तथा च प्राह भगवान् यास्काचार्यः :—

"अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते। अर्थमप्रतियतो नात्यन्तं

स्वरसंस्कारोद्देशः, तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकञ्च । नहि निरुक्तार्थावित् कश्चिन्मन्त्रं निर्वक्तुमर्हति । इति वृद्धानुशासनम् । निरुक्तप्रक्रियानुरोधेनैव मन्त्रा निर्वक्तव्या नान्यथेति ।" इदमत्रावसेयम् । शिक्षा-व्याकरणाभ्यां वर्णोच्चारणे पदसाधुत्वे च ज्ञाते मन्त्रघटितपदानामर्थज्ञानाकांक्षायां तदर्थं भगवता यास्केन "समाम्नायः समाम्नातः स व्याख्यातव्यः ।" इत्यादि त्रयोदशाध्यायात्मकं निरुक्तं व्यरचि । तत्र नामाख्यातोपसर्गनिपातभेदेन चतुर्विधं पदजातं निरूप्य वैदिकमन्त्रपदानामर्थः प्रदर्शितः । मन्त्राणां यथार्थतयाऽर्थप्रतिपत्तये पदार्थज्ञानमावश्यकम् । पदार्थाधीनत्वात् वाक्यार्थज्ञानस्य । तदेवं मन्त्रोपनतपदानां यथार्थप्रतिपत्तये निरुक्तमवश्यमपेक्षितव्यं भवति । अन्यथा जर्भरी-तुर्फरी--इत्यादिदुरूहशब्दानां प्रकारान्तरेणार्थावबोधस्य दुःशकत्वात् । एतच्च निरुक्तं निघण्टुसंज्ञकस्य पञ्चाध्यायात्मकस्य ग्रन्थस्य भगवता यास्केन कृतं सोदाहरणव्याख्यानरूपं सन्दर्भरत्नम् निरुक्तमभिधीयते । तदेतत 'समाम्नायः समाम्नातः'-इत्यारभ्य 'तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवति' इत्यन्तं द्वादशभिरध्यायैर्गुम्फितं निर्वचनपरं शास्त्रम् । तच्चैतच्छास्त्रं प्रत्येकस्य पदस्यावयवार्थानां निःशेषतया उच्यमानत्वात् निरुक्तं परिभाष्यते । तच्च निरुक्तं पञ्चविधमुक्तं हरिकारिकायाम् :—

वर्णागमौ वर्णविपर्ययश्च, द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥

त इमे लोपागमवर्णविकारादयः 'अथ निर्वचन'मित्यारभ्य 'एकपदानि निर्ब्रूया'दित्यन्तम् (२१.१.४) सविशेषमनुसन्धेयम् ।

ननु निघण्टुसंज्ञकस्य सन्दर्भस्य वेदाङ्गत्वमथवा तद्व्याख्यानरूपस्येति जिज्ञासायामुच्यते—'छन्दोभ्यः पदानि समाहृत्य समाहृत्य यस्मिन् ग्रन्थे सङ्कलितानि स निघण्टुपदवाच्यप्रबन्धस्तु तावत् समाम्नायविशेष एव, कथं नाम तत्र वेदाङ्गत्वं घटेत । तस्मादस्यैव निघण्टुव्याख्यानरूपस्य निरुक्तस्यैव वेदाङ्गत्वं यौक्तिकम् ।

## कः खलु कालो यास्कस्य ?

यद्यपि यास्काचार्यस्य कालविषये बहुभिर्बहुधा प्रतिपादितम् । तथापि, इदमित्थन्तयाऽद्यापि किञ्चित् प्रतिपादयितुं न शक्यते । तथापि तत्त्वतः पर्यालोच्यमाने सिद्धमिदं भवति यदस्य महामहिमशालिनः समयः ख्रीस्तजन्मतः एकोनविंशच्छताब्दीतोऽपि प्रागेवास्ति इति कालविद्भिर्निर्धार्यते ।

## निरुक्तप्रतिपाद्यो विषयः

यतः सर्वेषामेव वेदाङ्गानां साक्षात्परम्परया वा वेदार्थसम्यग्ज्ञानसम्पादनार्थं तत्साधनसौकर्य्यपथनिर्देश एव प्रतिपाद्यो विषयः, तथापि निरुक्तेऽस्मिन्

वेदार्थज्ञानसौकर्यौपयिकाः प्रायः सर्व एव विषया निरूपिताः समासतो व्यासतो वेति।

तदेतस्य प्रथमाध्यायस्तु भूमिकारूपः। तत्र निघण्टुघटितशब्दार्थनिर्वचनानि पल्लवितानि। द्वितीयतृतीयाध्याययोर्निर्वचनपद्धतिप्रदर्शनपुरस्सरं नैघण्टुककाण्डव्याख्यानम्। ततश्चतुर्थाध्यायादारभ्य षडध्यायपर्यन्तं देवतातत्त्वावबोधपुरस्सरं दैवतकाण्डव्याख्यानम्। ततः परं प्रथमपरिशिष्टरूपे त्रयोदशाध्याये आत्मतत्त्वोपदेशपराणां वचनानां निर्वचनव्याख्यानानि। चतुर्दशाऽध्याये, द्वितीये परिशिष्टभागे पुनः परमपुरुषार्थसाधनानि निर्वचनव्याख्यानाभ्यां प्रपञ्चितानि। केषाञ्चिन्मतेन वास्तविकनिरुक्तन्तु किल द्वादशाध्यायात्मकमेव। अन्तिमौ द्वावध्यायौ तु पश्चात्केनापि संयोजितौ।

अस्य च निरुक्तस्य सत्यपि निघण्टुभाष्यरूपत्वे नात्र निघण्टुपठितानां सर्वेषामेव शब्दानां व्याख्यानं कृतमवलोक्यते। किन्तु निदर्शनदिशा अल्पीयसामेव शब्दानां व्याख्यानं कृतमवधार्यते, केवलं व्याख्यानसरणिप्रदर्शनार्थमेव। तद्यथा—नैघण्टुकप्रकरणे पृथिव्या एकविंशतिनामानि सन्ति। परन्तु तेषु गौरित्येकमेव शब्दमुद्दिश्य विवरणं विहितम् अन्येषां नामोल्लेखोऽपि न कृतः। एतावतावगतं भवति, यत्केवलं वेदव्याख्यानसरणिप्रदर्शनार्थमेव ग्रन्थममुं निबबन्ध आचार्य इति।

'अपि च अथापीदमन्तरेण पदविभागो न विद्यते। अथापि यज्ञैकदैवतेन बहवः प्रदेशा भवन्ति। तदेतेनोपेक्षितव्यम्।'''अथापि ज्ञानप्रशंसा भवति अज्ञाननिन्दा च। [नि० १.१७]।' एतावता प्रतिपत्तव्यम्भवति वेदार्थावगमाय निरुक्तस्यापरिहार्यत्वमिति।

निरुक्तसन्दर्भोऽयं न खलु यास्कोपज्ञः। यास्कात् प्रागपि बहवो निरुक्तकारा समभवन् येषु द्वादशानां तु नामग्राहमुल्लेखः कृतः स्वयं यास्केन। ते चामी—औपमन्यवः, औदुम्बरायणः, वार्ष्यायणिः, गार्ग्यः, आग्रायणः, शाकपूणिः, और्णवाभः, तैटीकः, गालवः, स्थौलौष्ठी, क्रौष्टुकः—कात्थक्यश्चेति। ये केचनात्र—'इमं ग्रन्थं समाम्नासिषुर्वेदञ्च वेदाङ्गानि च।' इत्यस्मिन्नुपरितने वाक्ये वेदं कृतवन्त इत्यर्थमवबुध्य यद् वेदानां पौरुषेयत्वं साधयन्ति, यास्काभिमतेन तन्न चारु। तद्वाक्यस्य वेदमभ्यस्तवन्त इत्यर्थपरत्वात्। अभ्यासार्थक—म्नाधातोस्तन्निष्पत्तेः। व्याख्यातञ्च तथैव निरुक्तवार्त्तिके—

> अशक्तास्तूपदेशेन गृहीतमपरं तथा।
> वेदमभ्यस्तवन्तस्ते वेदाङ्गानि च यत्नतः॥

इति यास्कनयेन वेदानामपौरुषेयत्वं प्रतिपन्नं भवति। 'तथा हि पुरुषविद्याऽनित्यत्वादिति' इत्यादि तद्वचोभङ्ग्या तस्य स्पष्टमङ्गीकृतत्वात्।

## मन्त्रद्रष्टार एव ऋषयो न कर्तारः

ऋषीणां मन्त्रकर्तृत्वमभ्युपगच्छन्तो बहवो विप्रतिपद्यन्ते तेषां मन्त्रद्रष्टृत्वमधिकृत्य। तद्यथा--'नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रकृद्भ्यः।' [तै० आ० ४।१]

'अङ्गिरसां मन्त्रकृतां मन्त्रकृदसीति'--[ताण्ड्य महाब्राह्मणम्]।

'यावन्तो मन्त्रकृतः।' [कात्यायन श्रौतसूत्रम् ३।२।८]

इत्यादीनि भूयांसि वचांसि प्रमाणत्वेन पुरस्क्रियन्ते। परं यास्कस्य तन्नाभिमतम्। यास्कस्तु मन्त्रकृत्त्वमेव मन्त्रद्रष्टृत्वमित्यभिनन्दति न जातु कर्त्तृत्वम्। मन्त्रकर्त्तृत्वाङ्गीकारे तु तत्रानृत-व्याघातादि-दोषापत्तिर्दुर्निवारा। अत आह भट्टभास्करः तैत्तिरीयाण्यकभाष्ये--सन्त्रकृद्भ्यो मन्त्राणां द्रष्टृभ्यो, दर्शनमेव कर्त्तृत्वम्' इति। एवमेव सायणाचार्योऽपि तैत्तिरीयारण्यके--'ऋषिरतीन्द्रियार्थद्रष्टा मन्त्रकृत्। करोतिधातुरत्र दर्शनार्थ एवे'ति प्रत्यपीपदत्।

## यास्कस्य वेदव्याख्यानप्रक्रिया

यास्काचार्येण प्रायशो मन्त्रपदान्येव निरुक्ते उदाहरणत्वेनोपात्तानि। मन्त्रगतानामेव पदानां निर्वचनानि व्याख्यानानि च तेन कृतानि। तत्सम्पर्काच्च क्वचित्, लौकिकानामपि शब्दानां व्याख्यानं प्रपञ्चितम्। तद्यथा गोशब्दव्याख्याप्रसङ्गे पयः शब्दस्य, तत्प्रसङ्गाच्च क्षीरशब्दस्यापि निर्वचनं कृतम्। निर्वचनशैल्यपि यास्कस्य विलक्षणा हृदयङ्गमा च। यथा--

नरकम्--न्यरकं-नीचैर्गमनम्-नास्मिन् रमणं स्थानमल्पमप्यस्तीति वा।

नाकम्--कमिति सुखनाम तत्प्रतिषिद्धम्।

सूर्यम्--सर्त्तेर्वा-स्वीर्यतेर्वा इति।

सक्तुः--सचतेर्दुर्धावो भवति कसतेर्वा विपरीतस्य विकसितो भवति।

भद्रम्--भजनीयं भूतानामभिद्रवणीयं भवद्रमयतीति।

जठरम्--जठरसुदरं भवति जग्धमस्मिन् धीयते। इति निर्वचनप्रकारः।

अथ व्याख्याप्रकारः--

निरुक्तस्य व्याख्याप्रकारोऽपि निभालनीयः--

हिरण्यगर्भः समवर्त्तताग्रे, भूतस्य जातः पतिरेक आसीत्।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥
[ऋ० १०।१२१।१]

हिरण्यगर्भः हिरण्मयो गर्भोऽस्येति। हिरण्यं कस्मात् ह्रियते आयम्यमानं वा, ह्रियते जनाज्जनमिति वा, हितरमणं भवतीति वा, हर्यतेर्वा स्यात्प्रेप्सा-

कर्मणः। अग्रे समभवत्। भूतस्य जात एक एव पतिः। स दाधार पृथिवीं दिवञ्च। सूर्य एव आकर्षणद्वारा पृथिवीं धारयति दिवञ्चेति भावः।

इयं हि यास्कीया वेदव्याख्यासरणिः सर्वैर्वेदविद्भिराद्रियमाणा सरण्यन्तरेषु शिखरायते। यद्यपि पुरातनेषु वेदव्याख्याकारेषु भूयांसो मतभेदा अभूवन् इति यास्काचार्यवचनादेव विज्ञायते, परन्तु कतमो वा मार्ग आश्रयणीयः कतमो वा निराकरणीय इति महती विप्रतिपत्तिरासीद् वेदार्थबुभुत्सूनां पुरस्तात्। तदेतस्मिन् विविधार्थे व्यामूढाः केचन तु इयद्यावदपि प्रधावन्तो निर्व्याजञ्च समुदघोषयन् यद् अविस्पष्टार्थत्वात्, अनर्थकत्वात्, विप्रतिषिद्धत्वाच्च वेदार्थप्रयास एव खल्वपार्थः नतरां करणीय इति। परन्तु यास्कोऽत्र प्रत्यवतिष्ठते—'नैष स्थाणोरपराधो यदेनमन्धो न पश्यति। पुरुषापराधः स भवति।' इति। पुरुषस्यैव स बुद्धिवैकल्यकृतो दोषो यत्तेनार्थो न बुध्यते, न कर्हिचित् श्रुतेरिति। तदेवंजातीयकान् अश्रद्दधानान् वेदार्थं प्रति विप्रतिपद्यमानान् जनान्, वेदार्थान् याथातथ्येन प्रत्याययितुं काममपि सत्सरणिमाविश्चिकीर्षुः परमकारुणिक आचार्यः इमां स्वोपज्ञां सरणिं निर्वचननिबन्धनामाविर्भावयामास। तत्र च सर्व एव वेदाभिरूपशिरोमणयः सुतरां श्रद्दधतेतराम्। सेयं निर्वचनात्मिका सरणिः सर्वैः शरणीकरणीयेत्यलं पल्लवितेनेति।

तदेतन्निघण्टुभाष्यभूतं निरुक्ताख्यम् वेदव्याख्यासरणिप्रदर्शकमिदं सन्दर्भरत्नम् तत्र भगवान् यास्क आविश्चकार। उक्तञ्च महाभारते मोक्षाध्याये—

स्तुत्वा मां शिपिविष्टेति यास्क ऋषिरुदारधीः।
मत्प्रसादादधो नष्टम् निरुक्तमधिजग्मिवान्॥

अस्य निरुक्तग्रन्थस्य समाप्तौ—'नमः पारस्कराय नमो यास्कायेति' लेखस्योपलम्भेन ज्ञायते यदसौ यास्कः पारस्करदेशीय इति। 'पारस्करप्रभृतीनि संज्ञाया' मिति सूत्रे पारस्करो देश इत्याह भाष्यकारः। वेदार्थमधिकृत्य एका व्यवस्था विहिता यास्केन सा तु निरतिशयमहत्त्वपूर्णा—

"श्रुतितोऽपि तर्कतोऽपि न तु पृथक्तया मन्त्रा निर्वक्तव्याः, प्रकरणत एव वक्तव्याः.........न ह्येषु प्रत्यक्षमनृषेरस्ति अतपसो वा। पौर्वापर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति।" सैषा व्यवस्था वेदतत्त्वबुभुत्सुभिरवश्यं परिपालनीयेति, नितरां ध्वनितमेतेनेति।

वस्तुतो वेदसत्यसिद्धान्तजिज्ञासुभिर्यास्कशैली सम्यगाश्रयणीया। तत्र निम्नाङ्किता नियमाः सविशेषमवधानमर्हन्ति।

१—वेदानुरोधेनैव मन्त्रा व्याख्यातव्या न कर्हिचिद् यदृच्छया।

२--यत्र खलु वेदे लङ-लुङ-लिटामन्यतमस्य प्रयोगः कृतस्तत्र सर्वत्रैव स सार्वकालिको बोद्धव्यः। एतदर्थमेव भगवता पाणिनिना 'व्यत्ययो बहुल' मित्यादि सूत्रजातमातन्वताऽपि 'छन्दसि लङ-लुङ-लिट' इति सूत्रितम्। तद्यथा--'यथापूर्व-मकल्पयत्' इत्यादौ अकल्पयदित्यस्य सदैव यथापूर्वं कल्पयतीत्याद्यर्थो वेदितव्यः।

३--यत्र क्वापि कथांशा, आख्यानानि वाऽनुश्रूयन्ते तान्यपि सर्वाणि किञ्चिद् विज्ञानार्थप्रतिपादकानि भवन्ति इति बुद्ध्वैव व्याख्येयानि।

४--पदपाठानुरोधेनैव पदपाठो विधेयः। वेदानां विकारोत्सादाभ्यां परिरक्षणार्थमेव महर्षिभिः पदपाठः प्रदर्शितः। ते च पदपाठकृतः प्रतिवेदं भिन्नाः। तेषां परिचयोऽपि संगृह्यात्र दीयते।

## ऋग्वेदीयाः पदपाठकाराः

ऋग्वेदीयपदपाठकारो महर्षिश्शाकल्यः। महर्षेः सत्यप्रियस्य देवमित्र-शाकल्य-शाकपूणिरथीतर-वाष्कलिभरद्वाजश्चेति त्रयो मुख्यशिष्या आसन्। त्रयोऽप्यमी शाखाप्रवर्त्तकाः। तेषु शाकल्यो मुख्यतमः। ऋक्प्रातिशाख्ये निरुक्ते चास्य चर्चा समुपलभ्यते। ऋषिरसौ राजर्षिजनकस्य सुप्रसिद्धं यज्ञमलञ्चकार। तत्रास्य जनकेन सह संवादोऽपि समजायत।

ऋग्वेदस्यापरः पदपाठकारो रावणोऽपि श्रूयते। परं तेन सह शाकल्यस्य यत्र-तत्र विसंवादोऽपि दृश्यते। ऋग्वेदस्य दशममण्डलघटितोर्नात्रिशदुत्तरशततमे सूक्ते प्रथममन्त्रे, कुहकस्येत्यत्र कुह--कस्येति पदद्वयं शाकल्येनाङ्गीकृतम्। रावणकृतपदपाठे तु कुहकस्येत्येकमेव पदमिति भेदः। परं स्वरमभिलक्ष्य तु शाकल्यस्य पदपाठ एव श्रद्धेय इति तद्विद आचक्षते।

## यजुर्वेदीयाः पदपाठकाराः

यजुर्वेदो हि माध्यन्दिनसंहिता-तैत्तिरीयसंहिता-कण्वसंहिताभेदेन वा त्रिविधः। तत्र माध्यन्दिनसंहिताया अपि पदपाठकारः शाकल्य एव। यद्यपि तद्भाष्य-कारयोर्महीधरनन्दबोधयोः शाकल्यकृतपदपाठतः खलु यत्र-तत्र भेदो दृग्गो-चरीभवति। स एष भेदः किमवष्टभ्य परिणत इति तु कारणालम्भाद् गिरा-मविषयः। कण्वसंहितायाः पदपाठस्तु विलुप्तप्रायः।

## सामवेदीयाः पदपाठकाराः

सामवेदोऽयं कौथुमसंहिताभिधानेनाऽपि प्रख्यायते। अस्य पदपाठा अतीव विलक्षणाः। अस्मिन् न केवलं पदच्छेदः पदेषु वर्णच्छेदोऽपि कृतः। तद्यथा--मित्रम्--मि-त्रम्, चन्द्रमसः, चन्द्र--मसः, इत्यादि।

## अथर्ववेदीयाः पदपाठकाराः

अथर्ववेदस्य पदपाठोऽपि भूम्ना ऋग्वेदपदपाठेन सह साजात्यं भजते। अत्र अवग्रहस्थाने शून्यमङ्कितम्भवति। यथा—(ऽ=०) इति।

## छन्दः

वेदाङ्गेषु छन्दःशास्त्रमतीव गौरवशालि। साङ्गोपाङ्गा हि भगवती श्रुतिः कामधुग्भवति। इदं हि किल छन्दःशास्त्रं नाम यदखिलकाव्यप्रपञ्चस्य प्रसवभूमिः। वेदस्याऽपि अमरकाव्यत्वं समाम्नातम्—'पश्य देवस्य काव्यं न ममार न जीर्यति।' इति। तावता श्रुतिरपि छन्दोनिबद्धा काव्यमयी वागित्यभिहितं भवति। काव्यन्तु गद्य-पद्य-तदुभयभेदात् त्रिविधम्। वेदाभिधं काव्यमपि गद्य-पद्य-तदुभयभेदात् त्रिविधमेव। तत्पद्यशालिनी ऋग्लक्षणा श्रुतिततिः छन्दोज्ञानमन्तरा सम्यक् परिशीलयितुं न शक्या। अतश्छन्दोज्ञानस्यावश्यकत्वम्। प्रतिपादितञ्च शिक्षायाम्—

'छन्दः पादौ तु वेदस्येति।'

इति हेतोरेव छन्दःशास्त्रस्य द्वैविध्यं सूत्रितं पिङ्गलाचार्यैः—लौकिकं वैदिकञ्चेति।

## छन्दःशास्त्रस्यावतरणम्

छन्दःशास्त्रस्यावतरणविषये यादवप्रकाशाभिधायां छन्दःसूत्रटीकायां समुपश्लोकितम्:—

छन्दोज्ञानमिदं भवाद् भगवतो लेभे सुराणां पतिः,
तस्माद् दुश्च्यवनस्ततः सुरगुरुर्माण्डव्यनामा ततः।
माण्डव्यादपि सूतवस्तत ऋषिर्यास्कस्ततः पिङ्गल-
स्तस्येदं यशसा गुरोर्भुवि धृतं प्राप्यास्मदाद्यैः कृतम्॥

यथा वेदवाणी पद्यात्मिका तथैव लोकवाण्यपि। तस्मात् तत्स्वारस्यपरिशीलनाय तदुभयविधच्छन्दोज्ञानमपरिहार्यतया सर्वेषां कृते समुपेक्षितव्यं भवति, इति विभाव्य छन्दोविशेषज्ञैर्बहवश्छन्दोग्रन्था विरचिताः। परं तेषु सर्वप्रथमतया पिङ्गलमुनिप्रणिबद्धं प्रसिद्धं सूत्रात्मकं, तन्नाम्नैव पिङ्गलसूत्रमिति निखिलविद्वत्समादृतं ग्रन्थरत्नम् मूर्द्धन्यत्वेन वरीवर्त्ति। तदवष्टम्भेनैवेतरे छन्दोग्रन्थाः प्रवृत्ताः।

यद्यपि पिङ्गलमुनिना तत्प्राक्तनच्छन्दःशास्त्रप्रणेतॄणां नामानि संस्मृतानि स्वीये छन्दःसन्दर्भे, परमद्यत्वे तेषां न कोऽपि सन्दर्भः सुलभोपलम्भः।

सम्प्रत्युपलभ्यमानेषु छन्दोग्रन्थेषु पिङ्गलाचार्यकृतं पिङ्गलसूत्रमेव प्राचीनतमं वेदाङ्गत्वेन स्वीकृतञ्च। न केवलमत्र वैदिकच्छन्दसामेव विवरण-

मपितु लौकिकच्छन्दसामपि विशदोपदेशः कृतोऽवलोक्यते । यद्यपि केचन पिङ्गलाचार्योऽयं पाणिनेरनुज इति प्रतिपादयन्ति, परं कालविदस्तु स्वयं पतञ्जलिरेवायं पिङ्गलाचार्य इति व्यवस्थापयन्ति । ग्रन्थस्यास्य सूत्ररूपत्वादयं सूत्रकाल एव निर्मित इति सम्भाव्यते । पिङ्गलसूत्रमिदं तावदष्टभिरध्यायैरुपनिबद्धम् । तत्र प्रथमाध्याये मात्रागणनोपदेशः, द्वितीयाध्याये तृतीये च वैदिकच्छन्दसां विवरणम्, आर्यावैतालीयादिविवृतिश्च । पञ्चमे षष्ठे च पुनर्विषमवृत्त-समवृत्तादिनिरूपणम् । सप्तमे च त्रयोदशाक्षरमितात्पादादारभ्य षड्विंशाक्षरमितपादानां छन्दसां परिचयः । अष्टमे च गाथाप्रस्तरादीनां विशदं वर्णनमुपगुम्फितम् । यद्यपि पिङ्गलसूत्रस्य चतुर्दश टीकाः श्रूयन्ते तथापि तासु हलायुधकृतमृतसञ्जीविनी नाम्नी टीका सुप्रसिद्धा प्रशस्ता च ।

## अन्ये छन्दोग्रन्थाः

अन्यः प्रसिद्धतमश्छन्दोग्रन्थः वृत्तरत्नाकरो नाम विद्वद्वरकेदारभट्टप्रणीतः । प्रसिद्धटीकाकारेण मल्लिनाथेन स्वटीकासु प्रायशो वृत्तरत्नाकरस्यैव लक्षणानि समुल्लिखितानि । अतोऽस्य निर्माणकालः खृस्तत्रयोदशशतकानन्तरमेव सम्भाव्यः । अस्य भट्टकेदारस्य जनकः शैवागमपारदृश्वा, काश्यपवंशावतंसो भट्टवरः श्री पेव्वको नाम महापण्डितः । वृत्तरत्नाकरोऽयं षडध्यायैर्निबद्धः छन्दःशास्त्रसन्दर्भो निखिलविषयालङ्कृतः । विलसन्ति चास्य पञ्चविंशतिटीकातोऽप्यधिकाष्टीकाः । तत्र नारायणभट्टकृता सर्वोत्कृष्टेति विदुषां सम्मतिः । नारायणभट्टोऽयं खृस्ते १५४५ तमेऽब्दे विराजते स्मेति विदुषामभ्युपगमः । सोऽयं वृत्तरत्नाकरोऽधुनाऽखिलेषु वृत्तसन्दर्भेषु प्राधान्येन समाद्रियमाणो लब्धप्रचुरप्रचारश्च सञ्चाकशीति ।

विद्वद्भिस्समादृतः एकोऽपरोऽपि छन्दोमञ्जरी नामा ग्रन्थो विद्वद्वरगङ्गादासप्रणीतो विलसति । अस्य निर्माणकालः अष्टादशशताब्द्या उत्तरार्द्धे क्वचिन्निर्धार्यते । ग्रन्थोऽयं षट्स्तवकैर्निबद्धः । ग्रन्थस्यास्याऽष्टौ टीकाः सन्ति । परन्तु तासु चन्द्रशेखरविरचिता शेखरायते ।

छन्दःशास्त्रस्यान्येऽपि बहवो[1] ग्रन्थाः समुपलभ्यन्ते । यथा कविराट्क्षेमेन्द्रकृतः सुवृत्ततिलकः, हेमचन्द्रकृतं छन्दोऽनुशासनम् इत्यादयः । परमेतेषु ग्रन्थेषु लौकिकच्छन्दसामेव निरूपणमस्ति न खलु वैदिकच्छन्दसाम् । पिङ्गलसूत्रे तु

---

१. एवमन्येऽपि बहवो ग्रन्थाः छन्दोविषयका अनुश्रूयन्ते । तद्यथा छन्दोर्णवः, विष्णुसूत्रं, छन्दोरहस्यं, छन्दःप्रभाकरः, छन्दःप्रदेशः, छन्दोरत्नाकरः, श्रुतबोधप्रभृतयः ।

पुनश्छान्दसच्छन्दसां गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीप्रभृतिसमाख्यानां विशदं विवरणं पल्लवितम् । चतुर्विंशत्यक्षरा गायत्री । अष्टाविंशत्यक्षरा उष्णिग् । एवमुत्तरोत्तराधिकाक्षरसंवलितानि, अनुष्टुबादीनि नैकानि छन्दांसि बोद्धव्यानि । इत्थमेतेभ्यः सप्तच्छन्दोभ्यः तदवान्तरभेदभिन्नानि भूयांसि--अति-जगती-शक्वरी-अतिशक्वरी-अष्टि-अत्यष्टि-धृति-अतिधृति-कृति - प्रकृति-विकृति-संस्कृति-अभिकृति-उत्कृति-प्रभृतिसमाख्यानि छन्दांसि सम्भवन्ति । वेदावबोधाधिजिगांसूनां छन्दोज्ञानं परमावश्यकम् । "नहि अविदितार्षेयच्छन्दोदैवतब्राह्मणो, वेदार्थं याथार्थ्येनावबोद्धुं कल्पते । अजानन् वा तान्येतानि याजयन् वा अध्यापयन् वा पापीयान् भवतीति ।" तद्विदामादेशः । तस्माद् वेदार्थावबोधे छन्दोज्ञानस्यापरिहार्यतया छन्दसो वेदाङ्गत्वमादिष्टं महर्षिभिरिति ।

अथेतर्हि छन्दसां किञ्चिद्विशदं वर्णनं प्रस्तूयते तेषां स्वरूपपरिज्ञानाय । छन्दःशब्दोऽयं वृत्त[1]पदेनाऽपि व्यपदिश्यते । तत्र ह्रस्व-दीर्घ-मात्राघटितो ऽष्टाक्षरैर्बद्धो वर्णसमूहः पाद उच्यते । एवंविधैस्त्रिभिः पादैर्घटितं छन्दो गायत्रीत्युच्यते । चतुर्भिः पादैर्घटितमनुष्टुबुच्यते । अस्यां प्राथमिकं पादद्वयं उत्तरेण पादद्वयेन सह साजात्यं भजते । इदमेव अनुष्टुप्छन्दः कालान्तरेण लौकिकछन्दस्सु लब्धादरम् । एवं क्वचिदस्य छन्दसः प्रथमतृतीयपादौ द्वितीयचतुर्थाभ्यां व्यावृत्तौ पक्षे न च्यवेते अनुष्टुप्वृत्ततः पाक्षिकीं वृत्तिमाकलयन्तौ । अन्यत्र च क्वचिद् अनुष्टुप्छन्दःसु अयमपि नियमो भवति शिथिलितः । प्रथमतृतीयपादगतोक्तनियमोऽपि च भवति क्वचित् समवहेलितः । क्वचिच्च पुनः पादचतुष्टयसंवलितं निरादृतपादक्रमह्रस्वदीर्घनियममिदं छन्दोऽनुष्टुप्त्वं न जहाति । तत्र दशाक्षरनिबद्धं, पादचतुष्टयसंवलितं छन्दो जगतीत्युच्यते । एकादशाक्षरात्मकं पादचतुष्टयप्रणिबद्धं छन्दस्त्रिष्टुबुच्यते । ऋग्वेदस्य प्रत्येकं सूक्तं भूयसा सजातीयैरेव छन्दोभिः प्रणिबद्धम् । किन्तु सूक्तानामन्ते सूक्तविरामावबोधनाय विजातीयान्यपि छन्दांसि प्रयुक्तानि दृश्यन्ते । एवंजातीयाश्छन्दोबद्धमन्त्राः कुलकादिरूपा अपि समुपलभ्यन्ते । ते च भूयसा गायत्रीछन्दोबद्धा एव । इति समासतश्छन्दोविवरणम् । प्रातिशाख्येषु वैदिकछन्दसामपि विशदय्य निरूपणम्प्रपञ्चितं द्रष्टव्यम् । ततो भगवता पिङ्गलाचार्येण छान्दसच्छन्दांसि सविशेषं प्रपञ्चितानि, तदेव तस्य छन्दसां ग्रन्थ-प्रसरप्रक्रमत्वे बीजम् । तदेवं सत्सु बहुविधेषु छन्दःस्वपि प्रमुखत्वन्तु निम्नाङ्कितानां द्वादशच्छन्दसामेव । तानि चेमानि--

---

१. अङ्घ्रयो यस्य चत्वारः तुल्यलक्षणलक्षिताः ।
तच्छन्दःशास्त्रतत्त्वज्ञाः समं वृत्तं प्रचक्षते ।। इति ।

गायत्री-उष्णिक्-पुर उष्णिक्-ककुभ्-अनुष्टुभ्-बृहती-पङ्क्ति-प्रस्तारपङ्क्ति-विराज्-त्रिष्टुभ्-जगतीत्याख्यानि। इति संक्षेपः।

## ज्यौतिषशास्त्रम्

वेदाङ्गेषु ज्यौतिषशास्त्रमपि नितरां महत्त्वमावहति। तदिदं ज्यौतिषं नाम कालविज्ञापकं[1] शास्त्रम्। सुमुहूर्त्तमनुरुध्य क्रियमाणा यज्ञयागादिक्रियाविशेषाः फलाय कल्पन्ते न तु यदृच्छया सम्पाद्यमानाः। तन्मुहूर्त्तज्ञानञ्च ज्यौतिषमन्तरा न सम्भवति, इति हेतोरेवास्य यज्ञाङ्गत्वं प्रक्लृप्तं महर्षिभिः। वेदचतुष्टयस्यापि प्रतिवेदं भिन्नं ज्यौतिषशास्त्रमुपलभ्यते। ऋग्ज्यौतिषम्, यजुर्ज्यौतिषम्, अथर्वज्यौतिषञ्चेति। तत्र ऋग्ज्यौतिषं षट्त्रिंशत्श्लोकैरुपनिबद्धम्, याजुषज्यौतिषमूनचत्वारिंशत्पद्यैरलङ्कृतम्, आथर्वणज्यौतिषञ्च पुनः द्विषष्ट्युत्तरशतमितपद्यसम्मितम्। त्रय एव ज्यौतिषग्रन्था उपलभ्यन्ते। सामज्यौतिषं तु लुप्तप्रायम्। एतेषां प्रणेतृत्वेन तु कश्चिन्महामुनिर्लगधाचार्यः प्रख्यायते। "वेदाङ्गज्यौतिषे शास्त्रे लगधज्ञानं प्रचक्षत" इति वचनात्। तत्र याजुषज्यौतिषस्य सोमाकरविरचिता टीका, महामहोपाध्याय श्री सुधाकरद्विवेदिविरचितञ्च प्रामाणिकभाष्यं तु साम्प्रतं सुलभोपलम्भम्।

## ज्यौतिषप्रवर्त्तका महर्षयः

अस्य ज्यौतिषशास्त्रस्य साहित्यमतीव विशदम्। सूर्यपितामहादिप्रोक्ताः सिद्धान्तग्रन्थाः, गौरीकालजातकादयो दैवग्रन्थाः, पाराशरीजैमिनिसूत्रादयः आर्षग्रन्था, आर्यभट्टकृतबृहज्जातकादयः पौरुषग्रन्थाः, वैदिकज्यौतिषसंहिताप्रभृतयश्चेति महीयान् साहित्यप्रसरोऽवलोक्यते। शास्त्रञ्चैतत्स्कन्धत्रयसमन्वितम्। उक्तञ्च—

सिद्धान्तसंहिताहोरारूपं स्कन्धत्रयात्मकम्।
वेदस्य निर्मलं चक्षुर्ज्योतिःशास्त्रमनुत्तमम्॥

अस्य वेदाङ्गज्यौतिषस्य प्रवर्त्तका अष्टादश महर्षयः। तद्यथा :—

"सूर्यः पितामहो व्यासो वशिष्ठोऽत्रिः पराशरः।
कश्यपो नारदो गर्गो मरीचिः मनुरङ्गिराः॥
लोमशः पोलिशश्चैव च्यवनोः यवनो भृगुः।
शौनकोऽष्टादशाश्चैते ज्यौतिषशास्त्रप्रवर्त्तकाः॥"

---

१ "वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वा विहिताश्च यज्ञाः।
तस्मादिदं कालविधानशास्त्रं यो ज्यौतषं वेद स वेद यज्ञान्॥"
(आर्यज्यौतिषम् श्लो० ६३)

## प्रसिद्धा आचार्याः

वराहमिहिरः--ज्यौतिषशास्त्रस्य प्रसिद्ध आचार्यो वराहमिहिरो नाम। तत्र भवता वराहमिहिरेण स्वबृहत्संहितायामुट्टङ्कितम्--

'ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितम्।
तत्कात्स्न्यौपनयस्य नाम मुनिभिः सङ्कीर्त्यते संहिता॥
स्कन्धेऽस्मिन् गणितेन या ग्रहगतिस्तन्त्राभिधानस्त्वसौ।
होराऽन्योऽङ्गविनिश्चयश्च कथितः स्कन्धस्तृतीयोऽपरः॥'

सोऽयं वराहमिहिरः खृस्त ६०० शतकसम्भवः आदित्यदासात्मजः अवन्तिवास्तव्यः प्रकाण्डज्योतिष्पण्डितः, प्रसिद्धान्तिका-विवाहपटल-बृहज्जातक-लघुजातक-बृहत्संहितादिग्रन्थानां प्रणेता।

आर्यभट्टस्तु वराहमिहिरात्प्राग्भवः खृस्तपञ्चमशतकसम्भवः, आर्य-सिद्धान्तप्रवर्त्तकः कुसुमपुरवास्तव्यः आर्यभट्टीयस्य प्रणेता। आर्यभट्टीयाख्यो ग्रन्थः सम्प्रति प्राप्तग्रन्थेषु प्राचीनतमः।

ब्रह्मगुप्तः--ब्राह्मस्फुटसिद्धान्तस्य खण्डखाद्यस्य ध्यानग्रहस्य च रचयिता, गुर्जरश्रीमालीब्राह्मणः, भिनमालनिवासी श्रीजिष्णुदेवतनूजः। सोऽयमाचार्यः चापोत्कटवंशीयव्याघ्रमुखराजकालिकश्च सम्भाव्यते।

लल्लाचार्यः--खृस्त ७०० तमाब्दसम्भवः भट्टत्रिविक्रमात्मजः रत्न-कोशस्य धीवृद्धितन्त्रस्य च प्रणेता।

उत्पलाचार्यः--खृस्त ९५० तमाब्दसम्भवः काश्मीरको वराहमिहिर-ग्रन्थानां प्रसिद्धष्टीकाकारः।

श्रीपतिः--खृस्त १०५० तमेऽब्दे लब्धजन्मा, सिद्धान्तशेखर-धीकोटि-करणयोः रत्नमाला-जातकपद्धत्योश्च प्रणेता, काश्यपगोत्रीयो नागदेवात्मजः।

भोजदेवः--खृस्त ११०० तमेऽब्दे धृतावतारः राजमृगाङ्ककरणस्य रचयिता, धाराधिपः, संस्कृतवाङ्मयप्रणयी संरक्षकश्च। परन्तु ग्रन्थोऽयं वस्तुतस्तु भास्करभट्टेन विरचित इति बहुभिरितरैः सम्भाव्यते।

भास्कराचार्यः--खृस्ते १११४-१४०० तमाब्दमध्यकालभवोऽयम्। सिद्धान्तशिरोमणि-करणकुतूहलकर्त्ता ग्रहगणितगोलाध्याययोश्च वासनाभाष्यस्य प्रणेता, शाण्डिल्यगोत्रीयो महेश्वरसूनुः। दक्षिणभारते खानदेशे बिज्जडविडग्राम-निवासी गणकाग्रसरः अतीवविद्वत्कुलसंभवः।

केशवः—ख्रीस्ते १५०० तमे अब्दे, ग्रहकौतुक-मुहूर्ततत्त्व-जातकपद्धति-गृहचालनप्रभृति-एकादशग्रन्थानां प्रणेता श्रीकमलाकरात्मजः वैद्यनाथशिष्यः ग्रहलाघवकारस्य गणेशदेवस्य च पिता कौशिकगोत्रभवः नन्दिग्रामवास्तव्यश्च।

गणेशदैवज्ञः—ख्रीस्ते १५५० तमे अब्दे ज्योतिर्वित्केशवदेवात्मजः ग्रहलाघवादित्रयोदशग्रन्थप्रणेता।

ज्ञानराजः—१५५० तमाऽब्दभवः पार्थपुरवास्तव्यः गणितमातृकूपिका-बीजभाष्यरचयितुः दैवज्ञस्य सूर्यदेवस्य जनकः विद्वत्कुलालंकारभूतः।

कमलाकरः—ख्रीस्ते १६५० तमे अब्दे लब्धजन्मा सिद्धान्ततत्त्वविवेकस्य रचयिता। गोलाग्रामनिवासी विद्वत्कुलावतंसः प्रगाढपण्डितो नृसिंहदेवात्मजः दिवाकर-गोपीनाथरंगनाथभ्राता च।

एतदतिरिक्ता अन्येऽपि लघुबृहत्पाराशरी-जैमिनिसूत्र-भृगुसंहिता-मीनराजजातक-नाड़ीग्रन्थप्रभृतयः ज्यौतिषविषयकाः आर्षग्रन्था अपि समुपलभ्यन्ते।

एवं वराहमिहिरप्रणीते लघुबृहज्जातके कल्याणवर्मणः सारावलिः, ढुण्ढिराजस्य जातकाभरणं, अनन्तस्य जातकपद्धतिः, नृहरेः जातकसारः, गणेशस्य जातकालंकारः, दिवाकरस्य पद्मजातकं, बलभद्रस्य होडारत्नं, गोविन्दस्य होराकौस्तुभम् इत्यादयः पौरुषग्रन्थाः प्रसिद्धाः।

एवमेव केरलमतप्रतिपादकाः ग्रन्थाः प्रश्नज्ञानसदृशाः ब्रह्मग्रन्थाः; रमलचिंतामणि-रमलामृतसदृशाः रमलग्रन्थाः; ताजिकभूषणपद्धतिः, ताजिकतन्त्रसारः, ताजिकपद्धतिः, ताजिकनीलकण्ठी इत्यादयो ग्रन्थाश्चापि अत्रैव लब्धावसराः।

तत्रभवतो वराहमिहिरस्य कालादनन्तरं संहितास्कन्धस्य संहिताग्रन्थानां विषयान्तरेषु मुहूर्तस्यैव भूयसा प्राधान्यं जातमिति हेतोरेव ततः परमवतीर्णानां मुहूर्तग्रन्थानां संहितास्कन्ध एवान्तर्भावः सञ्जातः। तत्र च लल्लाचार्यरचितः रत्नकोशः, श्रीपतिकृता रत्नमाला, केशवप्रणीतः विवाहवृन्दावनः, शार्ङ्गधरप्रणीतः विवाहपटलः, नारायणकृतो मुहूर्तमार्तण्डः, रामभट्टोट्टङ्कितो मुहूर्तचिन्तामणिः, विट्ठलदीक्षितनिबद्धः मुहूर्तमार्तण्ड इत्यादयो ग्रन्थाः सुप्रसिद्धाः।

शकुनशास्त्रमपि खलु संहिता-स्कन्धभूतमेव। तत्र आभ्रदेवात्मजेन जैननृपतिना नृपतिजयचर्यानामकः ग्रन्थो व्यरचि। ग्रन्थश्चायं स्वरोदयसारोद्गारसमाख्ययापि प्रख्यायते। सूर्यदासपुत्रेण च स्वरसारनामकः स्वरशास्त्रस्य अपरो ग्रन्थः प्राणायि।

ज्यौतिषेऽस्मिन् फलादेशे सामुद्रिकशास्त्रस्य अतीव महत्त्वम्। तत्र मेघ-

राजकृतं हस्तसंजीवनमतीव प्रसिद्धम्। एवमन्येऽपि एतद्विषयकाः भूयांसो ग्रन्था विलसन्ति। ग्रन्थभूयस्त्वभिया तेऽत्र न संगृह्यन्ते इति दिक्।

## गणितशास्त्रम्

गणितशास्त्रं ज्योतिर्ग्रहशास्त्रान्तर्गतमेव विभाव्यते। अङ्कगणितं बीजगणितञ्चेति द्वयमपि ग्रहविज्ञानास्याङ्गभूतं परिगण्यते। ग्रहतन्त्रस्य प्रसिद्धाः प्रणेतारः--आर्यभट्टो, ब्रह्मगुप्तो, भास्कराचार्यश्चेतीमे त्रयो विद्वांस एतच्छास्त्रमूर्द्धन्यत्वेन गृह्यन्ते। दशमलवपद्धतिः गणितस्य तदङ्गभूतैव भारतीयानामेवाविष्कृतिः। आर्यभट्टीय-गणिताध्याययोः प्रथमौ द्वौ भागौ अतीव महत्त्वमावहतः। ब्रह्मगुप्ताचार्यस्य ब्राह्मस्फुटसिद्धान्ते, कुट्टकाध्यायोऽपि निरतिशयं गौरवालङ्कृतोऽवाभाति। अङ्कगणितविषयको लीलावत्याख्यो ग्रन्थः, भास्कराचार्यस्य सिद्धान्तशिरोमण्याख्यसन्दर्भे बीजगणितप्रकरणमतीव प्राशस्त्यमुद्वहति। भास्कराचार्यब्रह्मगुप्तयोः ग्रन्थयोः अङ्कगणिततन्त्रमिदम् एतच्छास्त्रसम्पदः परां कोटिमाटीकमानमवधार्यते। भारतवर्षत एव शास्त्रमिदं सर्वत्र प्रसृतमिति तत्त्वविदोऽभिमन्यन्ते। गणिततन्त्रस्य चत्वारो धन-ऋण-गुण-भागाकाराख्याः विधयो, वर्ग-घन-वर्गमूल-घनमूलाख्याश्च पुनः विशेषविधयः ब्रह्मगुप्तभास्कराचार्ययोर्ग्रन्थेषु विशदय्य प्रतिपादिताः। किञ्च ततो भिन्नपद्धतिविषये, शून्यविषये, त्रैराशिकविषये च विधिविशेषः प्रदर्शितः। बीजगणितमपि अत्युन्नतां स्थितिमाविष्करोति। उभावप्येतौ आचार्यौ सरलसमीकरणसिद्धान्तमपि भूयसा विवृतवन्तौ। भारतीयबीजगणितस्य समृद्धेः बहुभिः वैदेशिकैरपि प्रशंसा कृता। बह्वचोऽतिक्लिष्टा दुरूहाश्च वर्गसमीकरणसमस्या अपि एषु सन्दर्भेषु प्रसाधिताः। ज्यामितितन्त्रमपि विशदमतिचमत्कारपूर्णपद्धत्या निरूपितम्। ज्यामितिशास्त्रमिदं यज्ञप्रक्रियासु बहुतरं साहाय्यमाचरति। तद्वर्णनञ्च शुल्वसूत्रेषु सम्यगुपक्रान्तम्। यज्ञवेदिनिर्माणप्रकारश्च भूयसा ज्यामितिमालम्ब्यैव प्रवर्त्तते। अधुनातनं पाइथेगोरससिद्धान्तनाम्ना प्रसिद्धं तत्त्वमपि एषु ग्रन्थेषु प्राक्तनकालादेव निष्पन्नमभूत्। एतत्त्वतीव कौतुकावहं यत् त्रिकोणमितितन्त्रमपि भारतीयानां परिचितचरमासीदिति। सोऽयं गणितशास्त्रप्रपञ्चः, वेदाङ्गभूतः वस्तुतो वेदादेव लब्धप्रसव इत्यत्र तु न सन्देहावसरः, तथापि वेदेषु बीजरूपेण गणितशास्त्रस्यापि प्रतिपादनं यद्दृष्टिसरणिमवतरति तन्न कस्य मनस आह्लादजनकम्। वस्तुतः यथाऽस्माभिरन्यत्र प्रदर्शितं गणितविज्ञानस्य मूलभूत एकादारभ्य परार्धपर्यन्तसंख्यापरिसंख्यानोपदेशः कियच्चारुतया कृत उपलभ्यते :--

"इमा मे अग्न इष्टका धेनवः सन्तुः...,
एका च दश च, दश च, शतञ्च शतञ्च,

सहस्रञ्च, सहस्रायुतञ्च नियुतञ्च
नियुतञ्च प्रयुतञ्चार्बुदञ्च समुद्रश्च मध्यञ्चान्तश्च परार्द्धश्च. . ."
[यजुर्वेद]

तदेष गणितशास्त्रस्य मूलभूतः सिद्धान्तः। एवं धन, ऋण, गुण-विभागादीनां परिज्ञानमपि वेदमन्त्रेषु सुस्पष्टमुपलभ्यते। सुधीभिस्तत्र-तत्रैव यथाप्रकरणमनुसन्धेयम्। अत्र तु दिङमात्रमुदाह्रियते--

"एका च मे तिस्रश्च मे तिस्रश्च मे पञ्च चमे पञ्च च मे सप्त च मे सप्त च मे नव च मे नव च मे..." इत्यादि यजुर्वेदीयाष्टादशतमाऽध्यायस्य चतुर्विंशतिपञ्चविंशतिमन्त्रयोः गणितसिद्धान्तोल्लेखो दृश्यते। यथा, एकस्मिन् एकयोगेन द्वौ भवतः (१+१=२), द्वयोरेकयोगेन त्रयः सम्पद्यन्ते (२+१=३)। एवमेव त्रिषु द्विसम्मेलनेन (३+२=५) पञ्च जायन्ते। एवमऽग्रे-ऽप्यूह्यम्। तदेवं मन्त्रमुखेनैतद् गणितसिद्धान्तमूलमुपदिष्टं वेदितव्यम्।

इत्थमेव रेखागणितस्य बीजम्--

'इयं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः।
अयं सोमो वृष्णो अश्वस्य रेतो ब्रह्मायं वाचः परमं व्योम ॥'
(यजु० अ० २३ मं० ६२)

इति संक्षेपः।

## वेदशाखाः

इदानीं वेदानां शाखाविषये किञ्चिदिव विविच्यते। शाखा हि नाम वेदव्याख्यानरूपा अशेषविशेषविवृत्तिस्वरूपा ग्रन्था विविधाचार्यैर्महर्षिभिश्च प्रणीताः। समुल्लसन्ति च शाखाविषये बहवो मतभेदाः। तत्रेदन्तया किञ्चिन् निर्धारयितुं तु साधनसामग्रीसौकर्याभावात् निरतिशयं दुष्करम्।

ऋग्वेदीयशाखा–विषयेऽपि स्थितिः समाना एव। महावैय्याकरणेन भर्तृहरिणा स्वविरचिते वाक्यपदीये ग्रन्थे पञ्चदश शाखाः स्वीकृताः, भगवता पतञ्जलिना महाभाष्ये एकविंशतिसंख्याकाः, अणुभाष्योद्धृतस्कन्दपुराणानुसारेण चतुर्विंशतिमिता अन्यैश्च सप्तविंशतिसंख्याकाः। परन्तु क्वचित्ततोऽप्यधिकाश्चतुस्त्रिंशत्संख्यासम्मिताः शाखा उपलभ्यन्ते। तेषां नामानि अधस्ताद्दीयन्ते :--

१--शाकल-मुद्गल - गालव - शालीय-पाराशर-वात्स्य-शैशिर-वाष्कल-बौध्य-अग्निमाठर-जातूकर्ण्य-आश्वलायन - शांख्यायन - कौषीतकि - महाकौषीतकि-शाम्बव्य - माण्डुकेय-बह्वृच - पैङग्य-उद्दालक-गौतम-शतवलाक्ष-होस्तिक-भारद्वाज-ऐतरेय - वशिष्ठ-सुलभ-शौनक-आश्मरथ्य - काश्यप-कार्मन्द-कर्शाश्व-क्रौड-काङकता-

ख्याः शाखा इतस्ततः प्रकीर्णा नाममात्रेणैव श्रुतिपथमवतरन्ति ननु नेत्रपथम् । येन ऋषिणा या शाखा प्रणीता तन्नाम्नैव प्रायशः सा शाखा प्रसिद्धिं गता । वैदिकसाहित्ये समुपलभ्यमानानामतिप्रसिद्धानां शाखानामेवोल्लेखोऽत्र कृतोऽस्माभिः । एतदधिका अपि सम्भवितुमर्हन्ति ताः । विषयोऽयं दुरूहतया किञ्चिदधिकतरमनुसन्धानमर्हति ।

यजुर्वेदीयशाखा—विषयेऽप्येवमेव मतानि बेभिद्यन्ते विदुषाम् । महाभाष्यकारमते एकोत्तरशतमिताः शाखाः । दिव्यावदानमतेन च पञ्चोत्तरशतसंख्याकाः । प्रपञ्चहृदयानुसारेण तु षट्त्रिंशदेव शाखाः मताः । परन्तु निम्नाङ्कितानि सप्तदशसंख्यामितानि नामानि प्रसिद्धतराणि बहुषु ग्रन्थेषु ग्रथितानि दृश्यन्ते । तद्यथाः—

माध्यन्दिन-जाबाल-बौधेय-कण्व-शापीय-स्थापायनीय - कापार - पौण्ड्रवत्सा-आवटिक-परमावटिक-पाराशर्य - वैधेय-वैनेय - औधेय-गालव-वैजव-कात्यायननामधेयाः सप्तदश शाखा नितरां विख्याताः । परन्तु सायणाचार्येण आसु पञ्चदशसंख्याका एवाभिमताः । वायुपुराण-ब्रह्माण्डपुराण-चरणव्यूहेषु अपि पञ्चदशसंख्यासम्मिता एव यजुर्वेद-शाखाः अङ्गीकृताः किञ्चिन्नाममात्रभेदेन । यथा—प्रतिज्ञापरिशिष्टे कण्वस्थाने काण्वः, शापीयस्थाने शापेयः, स्थापायनीयस्थाने तापायनीयः, कापारस्थाने कापेलः, पाराशर्यस्थाने पाराशरः, वैनेयस्थाने वैनतेयः, वैजवस्थाने वेजवाय इत्याद्याः । एतादृशः पाठभेदस्तु प्रायशः सर्वत्रैव दृष्टिगोचरः । भवेन्नाम एष लिपिकराणां मुद्राकराणां वा हस्तलाघवम्, अथवा मौलिको भेद एव वास्तविकः परन्तु वस्तुस्थितिरेवैषा । केषाञ्चिन्नयेन—कण्व-कठ-पिञ्जुलकठ-जृम्भकठ-औद्दलकठ-सपिच्छलकठ-मुद्गलकठ-शृगलकठ-सौभरकठ-मौरसकठ-चञ्चुकठ-योगकठ-हसलकठ-दौसलकठ-घोषकठ इति पञ्चदश शाखा एव यजुर्वेदीयाः । इति शाखापरम्परापाशः प्रसृतः अरण्यमिवागम्यो गीर्वाणवाणीवाङ्मये । एवमेव कृष्णयजुर्वेदस्य षडशीतिसंख्याकाः शाखाः संस्मृताः इति । विशेषतो जिज्ञासुभिः शाखाप्रपञ्चः तत्र-तत्रैवानुसन्धेयः ।

सामवेदीयशाखाः—'सहस्रवर्त्मा' सामवेद इति महामुनिपतञ्जलिभगवत्पादानां महाभाष्योक्तिरतिप्रसिद्धा । दिव्यावदानमतेनास्य अशीत्युत्तरशतसंख्याकाः शाखाः । आसु शाखासु केवलमधुना द्वादशशाखा एवावशिष्यन्ते इति पञ्चहृदयस्याभिमतम् । परन्तु सामशाखात्वेन प्रसिद्धानि सप्तविंशतिनामानि संगृह्यन्ते । ताश्च —

कौथुम - जैमिनीय - राणायनीय-सात्यमुग्र - नैगेय-शार्दूल - वार्षगण्य-गौतम-भाल्लविन - कालविन - शाट्यायनिन्-रौरुकिण-कापेय- मासशराव्य-करद्विष-

शाण्डिल्य - ताण्ड्य-गारकि - वातसक - वाल्मीक-शैत्यायक-कोहलीपुत्र-पौष्करसाद-प्लाक्ष-प्लाक्षायण-वाडभीकार-साङ्कृत्यनाम्न्यः।

अथर्ववेदीयाः शाखाः––नाम्ना प्रसिद्धाः शाखा यद्यपि अहिर्बुध्न्यसंहितानुसारेण पञ्च एव तथापि ग्रन्थान्तरेषु नवशाखानामुल्लेखः दृग्गोचरीक्रियते। परन्तु इतोऽप्यधिकाः शाखा अथर्ववेदस्य सन्तीति विद्वांसस्तद्विशेषज्ञाः, विंशतिसंख्याकाः ताः सन्ति इत्युदाहरन्ति। तासां नामानि निम्नाङ्कितानि––

पैप्पलाद - तौद-मोद-जाजल-जलद-ब्रह्मवेद-देवदर्श-चारणवैद्य-दामोदर-तोत्तायन - जाबाल-कुनखी-ब्रह्मपलाश-त्रिखर्व-ततिल-शैखण्ड-सौकरसदम्-शार्ङ्गरव-उश्वपेयसंज्ञकाः। वेदान्तरशाखावदथर्ववेदीय-शाखाविषयेऽपि विदुषां मतानि विभिन्नानि विभाव्यन्ते। आसां पाठभेदाश्च तादृशमतभेदस्य निदानत्वेनोन्नीयन्ते। तद्यथा क्वचित्तोदः क्वचिद्दामोदः, क्वचिद्दान्तः, क्वचित्पोदः, क्वचित् पिप्पलः क्वचित् पैप्पलादः, क्वचित् देवदर्शः, क्वचिद्वेददर्शः अन्यत्र देवर्षिः। इत्येवं बहवोऽमी पाठभेदा एव इदन्तया निर्णये सन्देहभूमयः सञ्जाताः।

इत्थं शाखाविषयोऽतीव जटिलतां गतः। अत्र निदाने विमृश्यमाने तु इदमेव प्रतिभाति यत्सुदूरदेशप्रदेशगतगुरुपारम्पर्यमेवाऽस्य मूलम्। मूलसंहितोपनतमन्त्रैस्सह बहोः कालात्प्रचलितगुरुपम्परापरिणताः पाठा एव तादवस्थ्यवैधुर्येण विकृतिं परिवृत्तिञ्च गताः तत्तच्छाखानुरोधेन च तथैव लब्धप्रचाराः तत्तद्गुरुनाम्नैव च प्रसिद्धाः सञ्जाताः। तावता संवृत्ता नूनमियं वेदवनी संशयकण्टकाकीर्णा विद्वांसश्च वास्तवावास्तवनिर्णये प्रतिपन्ना वाचंयमा महत्खल्विदं विषादस्थानम् इति।

## वेदानुक्रमणी

वेदार्थावबोधनेऽनुक्रमणीनामपि महनीयं पदमस्ति। वेदानां रक्षार्थमेव अनुक्रमणीनां प्रवृत्तिः। वेदमन्त्राणां द्रष्टारः के-के ऋषयोः बभूवुः, मन्त्राणां देवताश्च काः, छन्दोऽनुवाकवर्गसूक्तमन्त्राणां विवरणाद्या अनुक्रमणीनां प्रतिपाद्या विषयाः। भगवता शौनकाचार्येण एतद्विषयका बहवो ग्रन्था विरचिताः तथा च ऋक्सर्वानुक्रमणीवृत्तिभूमिकायां षड्गुरुशिष्यः प्राह :–

शौनकीया दशग्रन्थास्तदा ऋग्वेदगुप्तये।
आर्ष्यनुक्रमणीत्याद्याश्छान्दसी दैवती तथा॥
अनुवाकानुक्रमणी च सूक्तानुक्रमणी तथा।
ऋक्पादयोर्विधाने च बार्हद्दैवतमेव च॥
प्रातिशाख्यं शौनकीयं स्मार्त्तमतमुच्यते॥

शौनकर्षिणा ऋग्वेदरक्षार्थम् आर्षानुक्रमणी, छन्दोऽनुक्रमणी, देवतानुक्रमणी, अनुवाकानुक्रमणी, सूक्तानुक्रमणी, ऋग्विधानं, पादविधानं, बृहद्देवता, प्रातिशाख्यं, शौनकस्मृतिश्चेति दश ग्रन्थाः संग्रथिताः। इमे दश ग्रन्थाः सम्प्रति मुद्रिता उपलभ्यन्ते।

तत्रार्षानुक्रमणी--दशभिर्मण्डलैर्निबद्धा, ऋग्वेदीयमन्त्रद्रष्टृणां नामानि तेषां वंशावली च वर्णिता। छन्दोऽनुक्रमण्यामपि दशैव मण्डलानि सन्ति। अस्याम् ऋग्वेदीयच्छन्दसां विवरणमस्ति। देवतानुक्रमण्यां देवताविचारः---कस्य मन्त्रस्य का देवता। देवताशब्दोऽत्र मन्त्रप्रतिपाद्यविषयवचन इत्यवधेयम्। अनुवाकानुक्रमण्यां पुनः एकोनत्रिंशत् श्लोकाः सन्ति। एतदनुसारेण ऋचां संख्या १०५८०सम्मिताऽस्ति। ऋग्वेदस्य शाकलसंहितायां पञ्चाशीतिः अनुवाकाः, १०७० सूक्तानि, २००६ वर्गाः, १०४१७ संख्याका मन्त्राः सन्ति। एवं सूक्तानुक्रमण्यामृग्वेदसूक्तानां विवरणमस्ति।

ऋग्विधाने नवतिनवश्लोकाः, यजुर्विधाने चतुरशीतिश्लोकाः, सामविधाने चतुर्विंशतिश्लोकाः, अथर्वविधाने पञ्चविंशतिश्लोका विद्यन्ते। पादविधाने ऋग्वेदीयशब्दानां सूची। बृहद्देवतायाम् ऋग्वेदीयदेवतानां विशदं वर्णनमुपलभ्यते।

एतासु अनुक्रमणिकासु कात्यायनप्रणीता ऋक्सर्वानुक्रमणी उव्वटभाष्यालङ्कृता षड्गुरुशिष्यरचितया 'वेदार्थदीपिका' ख्यया वृत्या समेता खैस्ते १८९६ सम्वत्सरे विद्वद्वरमैकडानलमहोदयेन प्रकाशिता। अस्यां प्रायः समस्तानुक्रमणिकागतविषयाणां संक्षेपतः विवरणमस्ति। अथर्ववेदस्य 'बृहत्सर्वानुक्रमणी' अपि अति महत्त्वपूर्णो ग्रन्थः। अस्यामथर्ववेदस्य ऋषि-देवता-छन्दःप्रभृतीनाञ्च विशदं विवेचनमुपलभ्यते। विंशतितमस्य काण्डस्य विवरणं शौनकप्रणीतायां एकादशपटलालङ्कृतायामाश्वलायनीयानुक्रमण्यामतिपाटवेन कृतमवगम्यते। याज्ञिकानन्तदेवस्यातिमनोहरभाष्ययुतं कात्यायनप्रणीतं शुक्लयजुःसर्वानुक्रमसूत्रं पञ्चभिरध्यायैः निबद्धं वरीवर्त्ति। यास्कमुनिप्रणीता कृष्णयजुर्वेदीया याजुषसर्वानुक्रमणी अपि कात्यायनानुक्रमणीवत् प्राक् छन्दोविवरणं प्राधान्येन निर्दिशति।

इति अनुक्रमणीनां[1] विवेचनं समासतः कृतम्। सविशेषावबोधकुतूहलिभिस्तु तत्र-तत्रैव यथाप्रदेशमनुसन्धेयम् इति दिक्।

---

१. एवं यद्यपि काण्डानुक्रमणी तैत्तिरीयसंहितायां काण्डविवरणात्मिका, वेङ्कटमाधवप्रणीता माधवीयानुक्रमणिका, यस्याम् ऋग्वेदीयानुक्रमण्याः प्रधाना विषयाः सङ्कलिताः। एवमन्या अपि अनुक्रमण्यः उपलभ्यन्ते भूयस्यः परन्तु ता न महत्त्वपूर्णाः।

## प्रातिशाख्यानि

अथेदानीं वेदानां प्रातिशाख्यविषये किञ्चिद् विविच्यते। वैदिकं व्याकरणं हि प्रातिशाख्यमुच्यते। वैदिकशब्दानां व्युत्पत्तिव्याकृतिनिर्वचनस्वरोच्चारणादीनां विवेचनपरं शास्त्रमितिभावः। वेदानां रक्षार्थमेव प्रातिशाख्यानां प्रवृत्तिः। वेदानां प्रत्येकशाखामधिकृत्य प्रवृत्तत्वाद्धि शास्त्रमिदं प्रातिशाख्यपदेनाभिलप्यते, शाखां-शाखां प्रति प्रतिशाखं, प्रतिशाखमधिकृत्य प्रवृत्तम्प्रातिशाख्यमिति तद्व्युत्पत्तेः। परमेतद् व्युत्पत्तिबलादनुमीयते। यावत्यः शाखास्तावन्ति प्रातिशाख्यानि अपेक्षन्ते। शाखाः पुनः ११३० संख्यामिताः, परन्त्वेतावन्ति प्रातिशाख्यानि नोपलभ्यन्ते। सम्प्रति तेषु षट्संख्याकान्येव प्राप्यन्ते। अन्यानि लुप्तानि किलेत्यनुमीयते।

प्रातिशाख्यानां पर्यालोचनेन ज्ञायते यद्वैदिकशब्दानां व्याकरणप्रक्रिया-प्रदर्शनं हि तेषां मुख्यं प्रयोजनम्। प्रातिशाख्यानां प्रतिपाद्यविषयाः प्राचीनग्रन्था-नुसारेण निम्नाङ्किताः प्रतीयन्ते––वर्णसमाम्नायः, स्वरव्यञ्जनानां गणना, तदु-च्चारणविधयश्च, अज्झलविसर्गादिसन्धिप्रभृतयः, प्रगृह्यादिसंज्ञाः, पदविभागनियमा-स्तदपवादनियमाश्च, उदात्तानुदात्तस्वरितभेदा आख्यातस्वराः, पदपाठवर्णो-च्चारणनियमाः विविच्यन्ते। तैत्तिरीयप्रातिशाख्ये पदजटापाठादिभेदाः प्रदर्श्यन्ते। वस्तुतो विमृश्यमानेऽवगम्यते यत्प्रातिशाख्यं हि नाम वेदशब्दानां बाह्यपरिवर्त्तन-सन्धिस्वरध्वनिप्रतिपादकं शास्त्रम्।

ऋक्प्रातिशाख्यम्–इदं पार्षदसूत्रनाम्नापि प्रसिद्धम्। त्रिभिरध्यायैरुपनि-बद्धम् अष्टादशपटलैश्च संवलितम्। एतत्खलु ऋग्वेदस्य व्याकरणरूपम्। यजुः शुक्लप्रातिशाख्यञ्च अष्टभिरध्यायैर्गुम्फितम् उव्वटाचार्यस्य 'मातृमोद' भाष्य-विभूषितं कात्यायनमुनिप्रणीतञ्च। चतुर्भिरध्यायैरुपनिबद्धं त्रिरत्नभाष्यसंवलितं चतुर्विंशत्यध्यायैरुपनिबद्धं तैत्तिरीयप्रातिशाख्यम्। पुष्पर्षिप्रणीतमेकमन्यत् पुष्प-सूत्राख्यं सामप्रातिशाख्यं दशप्रपाठकैः एकादशकण्डिकाभिश्च प्रणिबद्धम् अधुना मुद्रितमुपलभ्यते। यत्र विशिष्य सामगानविवरणमस्ति। शौनकविरचिता स्मृति-रपि मुद्रितास्ति।

सामप्रतिशाख्ये साम्नो विविधगीतीनां प्रश्लेष-विश्लेष-वृद्ध-अवृद्धो-च्चावचक्रुष्टाक्रुष्टसंक्रुष्टादिस्वरोच्चारणकृतभेदानां विवेचनम्।

उपलभ्यमानेषु षट्प्रातिशाख्येषु ऋक्प्रातिशाख्यं हि प्रधानतमम्। तदेतत् विद्वद्वरमेक्समूलरेण महोदयेन संस्कृताक्षरैर्जर्मनटिप्पणीभिः समेतं १८६९ ख्रैस्ताब्दे मुद्रापितम्। फ्रेञ्चभाषायामपि ए० एग्नियरमहोदयेन १८५३ ख्रैस्तेऽब्दे प्रकाशितम्।

शुक्लयजुःप्रातिशाख्यम्—अष्टाध्यायैर्निबद्धम् भगवता कात्यायनेन प्रणीतम्। उव्वटभाष्यसमेतमिदं षट्खण्डेषु काश्यां प्रकाशितम्।

एवं प्रातिशाख्यसाहित्यप्रसरो बृहत्तरो विद्यते तेषां मुख्यप्रयोजनत्वेन विविच्यमाने वैदिकस्वराणां, छन्दसां, मन्त्रोच्चारणक्रमस्य शब्दसाधुत्वासाधुत्वावबोधस्य प्रक्रियावधारणनियमविवेचनमेव केवलं विभाव्यते। वेदार्थानां यथार्थतयावबोधनाय प्रातिशाख्यज्ञानं परमावश्यकम्।

## बृहद्देवता

वैदिकसाहित्यावलोकनेन यद्यपि अवगम्यते यद् वेदस्य प्रत्येकशाखामालम्ब्य विभिन्ना एव बृहद्देवताख्या ग्रन्था आसन् पुरा, परन्तु अधुना तु केवलमेक एवायं ग्रन्थः उपलभ्यते ग्रन्थान्तराणि तु विलीनानि महतोऽस्य करालकालचक्रस्य चङ्क्रमणवशंगतानि। ऋग्वेदीयेयं बृहद्देवता शाखाद्वयसम्भिन्ना विभाव्यते। इयञ्च शाकलशाखा-सम्बन्धिनी। यतः शाकलसंहिताया कतिपयसूक्तानामत्रोल्लेख एव नास्तीति कतिपयवेदज्ञानामवधारणा। एतादृशसप्तत्रिंशत्सूक्तानामुल्लेखोऽस्ति यानि शाकलसंहितायां न सन्ति। अस्यां बृहद्देवतायां ऋग्वेदीयदशममण्डलस्य त्र्युत्तरशतसूक्तानामनन्तरं 'ब्रह्मज्ञानं प्रथमं पुरस्तात्' इति मन्त्रादारभ्यमाणं 'नकुलसूक्तं' शाकलशाखायां नास्ति, नापि वाष्कलसंहिताया अनुक्रमण्यामुपलभ्यते। एवमेव बृहद्देवतायां (३।११८-११९) यदुल्लिखितं, 'ऋग्वेदीय १।७३ सूक्तेभ्योऽनन्तरं दशाश्विसूक्तानि सन्ति। येषां प्रथमा ऋक्—'शश्वद्धि वाम्' इत्याद्यस्ति, तदनन्तरं सौपर्णसूक्तम्।' इति। परन्त्वयं क्रमः न शाकलसंहितायां नापि बाष्कलसंहितायां दृश्यते। 'शश्वद्धि वाम्' एष मन्त्रो नोपलभ्यते, आश्वलायनश्रौतसूत्रेषु नापि शाङ्ख्यायनश्रौतसूत्रेषु। अत एवैतत्प्रतीयते यदियं बृहद्देवता ऋग्वेदीयमाण्डूक्यशाखासम्बन्धिता इति नैकवेदज्ञानामभिमतम्। एवं सति अपि शाकलसंहिताया अधिकांशतया देवताज्ञानं अनया बृहद्देवतया सम्पद्यत एवेत्यत्र न कोऽपि सन्देहलव इति।

अथेदानीं बृहद्देवताप्रतिपादितदेवतानां फलं प्रयोजनञ्च किञ्चिद्विचार्यते यथार्थस्वरूपावबोधनार्थम्। बृहद्देवता हि नाम मन्त्रदेवताप्रतिपादको बृहद्ग्रन्थः। देवता तु मन्त्रप्रतिपाद्यो विषयः, 'या तेनोच्यते सा देवते'ति तल्लक्षणात्। यद्यपि वेदे गणनातीता देवताः समुल्लसन्ति तथापि इन्द्राग्निसोमाख्यदेवतानां तत्र प्राचुर्यमपलभ्यते। तत्रापि इन्द्रः अग्निरित्येतयोस्त्वतीव बाहुल्यम्।

यावन्तो मन्त्राः इन्द्राग्निदेवताकाः तावन्त एव प्रायशः अन्य समस्तदेवताका मन्त्राः। वेदेषु इन्द्रदेवताकानां मन्त्राणां संख्या प्रायशः षट्सहस्रमिता। अग्निदेवता-

कानाञ्च सार्द्धद्विसहस्रमिता। इत्यनेन अनयोर्देवताद्वययोर्महत्त्वं सूच्यते। सामवेदस्य पूर्वार्द्धे प्रथमकाण्डे अग्निदेवताकाः मन्त्राः चतुर्दशोत्तरशत (११४) संख्याकाः। अत एवेदं 'आग्नेयपर्व' इति नाम्नाऽऽम्नायते। द्वितीये काण्डे इन्द्रदेवताका मन्त्राः शतत्रयाधिकद्विपञ्चाशत्संख्यामिताः। एतद् ऐन्द्रपर्वनाम्ना गीयते। तृतीये काण्डे च सोमदेवताका मन्त्रा एकोनविंशत्युत्तरशतमिताः इदञ्च पवमानपर्वनाम्ना स्मर्यते। ऋग्वेदस्य नवमं मण्डलं तु भूम्ना सोमदेवतात्मकमेव। मन्यामहे एषां त्रयाणां देवतानां स्वरूपविवेचनेन देवतान्तराणामपि स्वरूपप्रतिपत्तिः सुतरां सुकरा भवेदिति।

तत्र तावदग्निर्देवता—ऋग्वेदस्य प्रथममण्डलस्य प्रथमं सूक्तमग्निदेवताकत्वात् 'आग्नेय' सूक्तमुच्यते। अग्निः कस्मादग्रणीर्भवतीति। यः कोऽपि अग्रणीः स एव अग्निर्भवितुमर्हतीति तद्व्युत्पत्तिलभ्योऽर्थः। परमेश्वरः, नेता, राजा, गुरुः, अग्निः, सूर्यः, विद्युद्, आत्मा वेति भावः। सोऽयमग्निः वैश्वानरः, धनञ्जयः, जातवेदाः, तनूनपात्, रोहिताश्वः, हिरण्यरेताः, सप्तार्चिः, सप्तजिह्वः, सर्वदेवमुखः, वीतिहोत्रः, चित्रभानुः, सहस्रजिद्, इत्यादिभिर्विशेषणैर्विशिष्यते अग्नेर्विविधस्वरूपाणि द्योतयद्भिः। एवमेवाग्निः क्वचित् होता, दूतः, हव्यवाहनः, क्रान्तकर्मा, आदिपदैरपि व्यपदिष्टः। तानीमानि विशेषणानि यथाप्रकरणं तात्पर्यविषयीभूतार्थमनुसन्धीयमानानि इष्टार्थं सत्यार्थञ्चोद्वमन्ति। तदेवंविधा विमृश्यमानार्थका मन्त्राः क्वचित्तत्त्वज्ञानं, क्वचिद्विज्ञानं, अन्यत्र सामाजिकं, आर्थिकं, राजनीतिकं, भौतिकं, अपरत्राध्यात्मिकं, याज्ञिकं तत्त्वं प्रत्युपस्थापयन्तः सार्थकतां भजन्ते। 'निरर्थका मन्त्रा' इत्याद्याः कौत्सप्रभृतीनां भ्रमोपजृम्भिता उक्तयश्च स्वयमेव परिहृता भवन्ति इति।

इन्द्रो हि नाम वैदिकसाहित्यस्य अतितरां वैशिष्ट्यसम्पन्ना देवता। अस्मिन् खलु देवताप्रपञ्चे इन्द्र एव सर्वाधिकतया देवतात्वेन मन्त्रान् अधिकरोति। महान्, मनस्वान्, विभुः, विश्ववेदाः, देवतमः, पितृतमः, स्वरोचिः, अमर्त्यः, सप्तरश्मिः, धर्मकृत्, अनपच्युत्, वज्रबाहुः, इत्यादिभिर्विशेषणैर्विशिष्यते। तानीमानि विशेषणानि इन्द्रस्य कर्माणि प्रभावांश्च बहुशो वर्णयन्ति। उक्तञ्च बृहद्देवतायाम् :—

'संयुज्य तपसात्मान'मैन्द्रं बिभ्रन्महद्वपुः।
अदृश्यत मुहूर्त्तेन दिवि च व्योम्नि चेह च॥
तमिन्द्रमिति मत्वा तु दैत्यौ भीमपराक्रमौ।
धुनिश्च चुमुरिश्चोभावायुधावभिपेततुः।

विदित्वा स तयोर्भावमृषिः पापं चिकीर्षतोः।
'यो जात' इति सूक्तेन कर्माण्यैन्द्राण्यकीर्त्तयत्॥
बृहद्देवता ४।६६.६८

ऋग्वेदस्य द्वितीयानुवाके विलसन्ति एकादश सूक्तानि। तत्रेदं 'यो जात' इति पञ्चदशर्चं प्रथमं गार्त्समदं त्रैष्टुभञ्च 'ऐन्द्रं' सूक्तम्। तत्र इन्द्रस्यैव यत् स्वरूपं समाम्नातम्, तेनैतदनुमातुं सुतरां सुकरम् यदिन्द्र एवास्ति परमात्मा, आत्मा, राजा, विद्युत्, सर्वशक्तिसम्पन्नश्च। तथैव चैभिर्मन्त्रलिङ्गैर्ज्ञायते। तथाहि :—

यः इन्द्रः[1] प्रथमो मनस्वी क्रतुना कर्मणा देवान् दिव्यशक्तियुक्तान् पदार्थान् पर्यभूषयत्। शुष्मात् स्वबलात् द्यावापृथिव्यौ अभ्यसेताम् (भ्यस-भयवेपनयोः इति नैरुक्ताः) अवेपेतामिति यावत्। एतादृशस्य नृम्णस्य शक्तिपुञ्जस्य मह्ना महत्त्वेन यो युक्तः स इन्द्रः॥ १॥

यो व्यथमानां पृथिवीं दृढामकरोत्, यः प्रकुपितान् कोपाग्निप्रज्वलितान् पर्वतान् अरण्यान् नियमितानकरोत्, यश्चान्तरिक्षञ्च निर्ममे, स इन्द्रः नान्यः। इत्यादिवर्णनेन, अध्यात्मिकपक्षे इन्द्रः परमात्मा अत्मा वा, आधिभौतिकपक्षे इन्द्रो राजा राष्ट्रपतिर्वा, आधिदैविकपक्षे इन्द्रो विद्युत्, सूर्यो वाऽग्निर्वा इति गम्यते। एवंविधदृशाऽवलोकनेन यथाप्रकरणं तत्तत्तात्पर्येणैव यदि ते ते मन्त्रा व्याख्याताः स्युर्स्तर्हि सकलोऽपि प्रत्यूहव्यूहो विलयं गतो भवेत्।

अपि च आधिदैविकमप्यर्थं विज्ञापयति

'यः सप्तरश्मिः वृषभः तुविष्मान्' इत्यादिमन्त्रे—

यः सप्तरश्मिः सप्तसंख्याका रश्मयो यस्य (सूर्यं सङ्केतयति) तुविष्मान् बलवान् सर्तवे प्रसरणाय सप्त सिन्धून् अवसृष्टवान्, स इन्द्रः सूर्यः इति भावः। तदेष आधिभौतिकोऽर्थः।

एवमेवासौ इन्द्रः, असुरहा, सुवीरः, सजित्वानः, पुरन्दरः, वाजिनीवसुः, सेनानी, रथीतमः, अमितौजाः, सुवेदाः, विश्पतिः, वसुपतिः, गोपतिः, भद्रकृत् प्रभृतिभिः पदैरपि समाम्नातो वेदे, संस्तुतश्च। यदि एषां पदानां व्याकृतं निर्वचनोपनतं प्रकरणादिसमवधानपुरस्सरं व्याख्यानं भवेर्त्तर्हि वेदार्थरहस्यं प्रकटितं स्याद् इति वेदविदामाशयः।

अथापरा विशिष्टा देवता सोमः—इन्द्राग्निदेवताकान् मन्त्रान् विहाय सोमदेवाताका यावन्तो मन्त्रा उपलभ्यन्ते न तावन्तः अन्यदेवताकाः। सोऽयं सोमो

---

१. "इन्दति परमैश्वर्यवान् भवति यः स इन्द्रः समर्थः परमात्मा आत्मा वा।"

विविधरूपेण स्मर्यते। क्वचिद्वीरुधांपतिः, इन्दुः, पीयूषं, पवमानः, राजा, प्रजापतिः, विष्णुः, वायुः, वर्णः, यशः, हविः, वीर्यम्, दुग्धं, पुमान् वै सोमः, सुवर्णम्, इत्यादिपदैरिति। सर्वाणीमानि विशेषणानि सोमस्य गुणविशेषाववबोधकानि। सोमदेवताका मन्त्रा अपि तत्तद्गुणविशेषमनुसन्धायैव यथाप्रकरणं व्याख्याताः नूनं कौतूहलकराननर्थानुद्वमेयुरित्यत्र नास्त्येव सन्देहलवोऽपि।

सोमशब्दः क्वचित् सोमवल्लीमभिधत्ते, क्वचिदिन्दुं वीर्यञ्च। सोमलताविषये, सोमपानविषये, मतानि बहुतरं भिद्यन्ते। केचिल्लतां अपरे सुरां, सुरासवं, द्राक्षासवं, पौण्ड्रमासवं, आमलकीरसं, माध्वीकञ्च मन्यन्ते। तदिदन्तया तु कश्चिदपि वक्तुं न शक्नोति। पारसीकाः सोमं हउमा इति वदन्ति। अन्ये सोमं ओम्नामसहितं सोमं, ब्रह्मज्ञानं सोमं प्रख्यापयन्ति। आयुर्वेदावलोकनेन ज्ञायते सोमसंज्ञिका ओषधिरप्यासीत्। यथा सोमापरपर्यायः चन्द्रः प्रतिपक्षं वर्द्धते क्षयति द्वितीये तथैव सोमलताऽपि। चन्द्रकलानुसारं सोमलताऽपि क्रमेण उपचयं याति ततोऽपचयम्। सोमलतायाश्च भूयसी प्रशंसा श्रूयते। परन्तु सम्प्रति तत्स्वरूपनिर्धारणं प्रति सर्वेऽपि वाचंयमा इति महद्विषादस्थानम्।

## का नाम खलु देवता कथं वा तस्याः परिज्ञानम् ?

देवतायाः स्वरूपं किं, कस्य मन्त्रस्य का देवता ? इत्यस्य परिज्ञानं वा कथं स्यात् ? इत्यत्र बृहद्देवता प्राह :—

'अर्थमिच्छन्नृषिर्देवं यं यमाहायमस्त्विति।
प्राधान्येन स्तुवन् भक्त्या मन्त्रस्तद्देव एव सः॥ ६॥

अपि च—

प्रत्यक्षं देवता-नाम यस्मिन्मन्त्रेऽभिधीयते।
तामेव देवतां विद्यान्मन्त्रे लक्षणसम्पदा॥११॥

तस्मात्तु देवतां नाम्ना मन्त्रे मन्त्रे प्रयोगवित्।
बहुत्वमभिधानञ्च प्रयत्नेनोपलक्षयेत्॥१२॥ इति।

ये केचन पुनरनादिष्टदेवताका मन्त्राः तेऽपि लक्षणप्रकरणाभ्यामभ्यूह्याः, नतु कर्हिचित् स्वातन्त्र्येण प्रकल्पनीया। अव्यवस्थाप्रसङ्गात्। यजुर्वेदेऽपि देवतानां निर्देशः कृतः—

'अग्निर्देवता वातो देवता सूर्यो देवता चन्द्रमा देवता वसवो देवता रुद्रो देवतादित्यो देवता मरुतो देवता विश्वे देवा देवता बृहस्पति र्देवतेन्द्रो देवता वरुणो देवता। (यजु० २४।२०)॥

इति यद्यपि इमा विभिन्ना देवताः श्रूयन्ते तथापि सर्वा अमी एकं सर्वभूतेषु गूढं देवं परमेश्वरमेव सूचयन्ति । उक्तञ्च सायणेनाऽपि :—

"तस्मात्सर्वैरपि परमेश्वर एव हूयते।" इति। यद्यपि देवतास्वरूपमुद्दिश्य बहुभिर्बहुधा प्रपञ्चितम्, अनेके च एतद्विषयका ग्रन्था अपि विरचिताः; तथापि मुख्यत्वं यादृशमत्र बृहद्देवताया, निरुक्तघटितदैवतकाण्डस्य च, न तथाविधमन्यस्य कस्यचिद् ग्रन्थस्य । निरुक्तकारेण देवतानां त्रैविध्यं स्वीकृतम् पृथिव्यन्तरिक्षद्यौःस्थानीयत्वेन । तत्र पृथिवीस्थानीया देवता अग्निः, अन्तरिक्षस्थानीया इन्द्रो वायुश्च । द्युस्थानीया च सूर्यः । परन्तु बृहद्देवतायां तु एक एव महादेवता परमेश्वरः स्वीकृतः प्राधान्येन। यद्यपि ग्रन्थान्तरैः सह देवताविषये विद्यमानेऽपि भेदे, अन्ततो महादेवतालक्षणे परमेश्वर एव सर्वेषां पर्यवसानात् सर्वेऽपि तादृशा भेदाः खपुष्पायन्ते इति न कश्चिद्विरोधः।

सोऽयं बृहद्देवताख्यो ग्रन्थः शौनकर्षिविरचितः। इतिवृत्तविद्भिः अस्या निर्माणकालः ख्रैस्तपूर्वं ४०० वर्षमितो निर्धारितः। एष ग्रन्थोऽतीव प्राचीनः। प्राचीनेषु ग्रन्थेषु चास्योल्लेखो बहुत्र दृक्पथं याति। ऋग्वेदस्य (५।६।११) स्कन्दभाष्ये बृहद्देवतान्तर्गतमाख्यानमुद्धृतम् । एवं उद्गीथभाष्येऽपि (१०।७९।९) बृहद्देवतायाः (७।१०९) पाठः समुद्धृतोऽवलोक्यते । ऋग्वेदस्य (१०।१९.१) उद्गीथभाष्येऽपि बृहद्देवताया उल्लेखः। वेङ्कटमाधवेनापि स्वकीये ऋग्वेदभाष्ये बृहद्देवताया उद्धरणमनेकवारं कृतम् । दुर्गाचार्यमहाभागेनापि स्वकीयनिरुक्त-(१।१।) भाष्ये बृहद्देवता समुद्धृता। अपि च उव्वटाचार्येणापि स्वभाष्ये बृहद्देवता संस्मृता। तदेतत्सर्वं बृहद्देवतायाः प्राचीनत्वं सुतरां प्रमाणयति। यद्यपि प्रायशः विद्वद्वरमेकडानलमुद्रितप्रथमशाखाया एवोद्धरणानि भूरिशः विलोक्यन्ते तथापि उभयशाखायाः श्लोका अपि उद्धृताः सन्ति—तद्यथा :—

'महानाम्न्य ऋचो गुह्यास्ताश्चैन्द्र्याश्च वै वदेत्।
सहस्रयुगपर्यन्तं अहर्ब्राह्मं स राध्यते।। (८.१८)

बृहद्देवतायाम्, औपमन्यव-गार्ग्य-शाकपूणि-रथीतरादिबहूनामृषीणामाचार्याणाञ्च नामानि समुट्टङ्कितानि विलसन्ति।

बृहद्देवतायां न केवलं दैवतवादतत्त्वमेव विवेचितमपितु प्रसङ्गानुषङ्गतः बहवो महत्वपूर्णा विषया विवृताः। कतिपयानि मनोहराणि आख्यानान्यपि अङ्कितानि सन्ति।

बृहद्दवताया एष उद्घोषः "न प्रत्यक्षमनषेरस्ति मन्त्रम्" मन्यामहे, परिपूर्णसत्यतां बिभर्त्ति। ऋषि-छन्दो-देवताविनियोगमनभिज्ञाय मन्त्राध्यापकस्य पापीयस्त्वं प्रतिपादितम् :—

'अविदित्वा ऋषिं छन्दो देवत्वं योगमेव च।
योऽध्यापयेत् जपेद्वापि पापीयान् जायते तु सः॥'

चतुर्ष्वप्येतेषु देवतापरिज्ञानमत्यावश्यकम्।

'वेदितव्यं दैवतं हि मन्त्रे मन्त्रे प्रयत्नतः।
दैवतज्ञो हि मन्त्राणां तदर्थमवगच्छति॥
मन्त्रदृग्भ्यो नमस्कृत्वा तदर्थमवगच्छति।

मन्त्रदेवताविषये आचार्याणामस्ति भूयान् मतभेदः। एषा एव देवताऽस्य मन्त्रस्येति नेदन्तया निर्णेतुं शक्यते। एकैव देवता विविधरूपेण स्तूयते। बृहद्देवताया द्वितीयाध्याये--

'सरस्वतीति द्विविधं ऋक्षु सर्वासु सा स्तुता॥१३५॥
नदीव देवतावच्च तत्राचार्यस्तु शौनकः॥
नदीवन्निगमा षट् ते सप्तमो नेत्युवाच ह॥१३६॥

सर्वासु ऋक्षु सरस्वती द्विविधं स्तूयते नदीवत् देवतावच्च इति एकस्यैव वस्तुनः स्तुतेर्द्वैविध्यमुपोद्बलितं भवति। एकस्यैव वस्तुनः देवताद्वैविध्यमपि प्रणिभालनीयम्।

'इडस्पतिं शाकपूणिः पर्जन्याग्नी तु गालवः'। इति ऋग्वेदीय० (५।४२।१५) ऋचः देवताविषये, शाकपूणिगालवयोर्मतभेदः सुस्पष्टः। अपि च--

'सावित्रमेके मन्यन्ते महो अग्ने स्तवं परम्॥
आचार्याः शौनको यास्को गालवश्चोत्तमामृचाम्॥७.३६॥

'प्रौष्ठौ प्रेति प्रगाथौ द्वौ मन्यते शाकटायनः॥
ऐन्द्रमेवाथ पूर्वं तु गालवः पौष्णमुत्तरम्॥ (६।४३)

'पराश्चतस्रो यत्रेति इन्द्रोलूखलयोः स्तुतिः॥
मन्येते यास्ककात्थक्याविन्द्रस्येति तु भागुरिः॥ (३।१०)

वैदिकदेवता-स्वरूपमधिकृत्य बहुभिर्बहुविधो विचारो विहितः। यद्यपि सर्वेषां तात्पर्यविषयीभूतोऽर्थो साजात्यं नावगाहते। तथाऽपि सर्वा अप्यमी देवता गौणरूपा, मुख्यं देवत्वं तु भगवतः परमात्मन एव। निरुक्ते दैवतकाण्डस्य सप्तमाध्यायेऽपि प्रोक्तम् :--

"महाभाग्याद्देवताया एक एव बहुधा स्तूयते,
एकस्यात्मनो ऽन्ये देवाः प्रत्यङ्गानि भवन्ति॥"

एवमेव--"तस्या महाभाग्यादेकस्य अपि बहूनि नामधेयानि भवन्ति।" (निरुक्त द० १।५) उदाहृतञ्च तत्रैव 'नरराष्ट्रमिव' यथा संख्यातीतैर्नरैः

संवलितेऽपि राष्ट्रे एकनरवद्बुद्धित्वात् नरराष्ट्रमित्युच्यते तद्वत् अनेकरूपैः प्रकाशितेऽपि देवतासमुदाये एकरूप एवैव परमात्मा प्रकाशते। अत एव ऋग्वेदेऽपि 'एकं सद्विप्रा बहुधा वदन्ति'' इति विप्रा विद्वांस एकमपि सद् ब्रह्म बहुधा प्रस्तुवन्ति। 'तस्मात्सर्वैरपि परमेश्वर एव हूयते' इति सायणः।

यद्यपि अग्निः, वायुः, सविता, त्वष्टा, ऋभुः, अश्विनौ, पर्जन्यः, उषा, विष्णुः, रुद्रः, पूषा, इन्द्रः, वरुणः, मित्रावरुणौ, अदितिः, आदित्यः, बृहस्पतिः, ब्रह्मणस्पतिः, सोमः, आपः, इत्याद्याः प्रसिद्धा देवताः स्वबाह्यस्वरूपेण पृथग्भूता अपि, तथैव संस्तुता अपि भगवतः परमेश्वरस्य शक्तिरूपाः, सर्वाभिस्ताभिस्तत्तत्स्तवनादिभिः स परमेश्वर एव स्तूयते इति वैदिकानामाशयः चरमाभ्युपगमश्च। सति एवं देवतानां वैविध्यं प्रति, भेदं प्रति, नित्यत्वं प्रति, ऐच्छिकत्वमनैकिच्छकत्वं प्रति च न कोऽपि महीयान् विशेषः। यथा विभिन्नमार्गगामिनीनां सरितामेक एव प्राप्तिसमुद्देशः सागररूपः तथैवात्र दैवतविषयेऽप्यवगन्तव्यम्। तदेवं देवतानां सर्वोत्तमोनिर्णायक एष बृहद्देवता नाम ग्रन्थ एवैकोऽवशिष्ट इति।

यद्यपि नैतत्सम्भवति यद् यावत्यो देवता बृहद्देवतादिग्रन्थेषु निर्दिष्टास्तावत्य एव तास्ततोऽधिका अपि भवितुमर्हन्ति ता अनुसन्धातव्याः। मन्त्रवद् देवता अपि भगवता परमेश्वरेणैव सङ्केतिता अतस्ता अपि अपौरुषेयाः। देवता हि नाम मन्त्रप्रतिपाद्यो विषयः। मन्त्रप्रतिपाद्यं विषयमेव यदा देवतात्वेनोन्नयन्ति तदा तासामपि अपरिहार्यतया ईश्वरीयत्वात्, न ता यदृच्छोज्जृम्भिता भवितुमर्हन्ति। प्रायशस्तु ता मन्त्रादिष्टा एव। अनादिष्टमन्त्रास्तु देवताः प्रकरणादिना अन्वेष्टव्या न तु यदृच्छया परिकल्पनीयाः। यदृच्छया परिकल्पनायां तु, तत्र भ्रम-प्रमाद-विप्रलिप्सादिदोषाणां दुर्वारापत्तेः प्रामाण्यकोटितस्ताः प्रभ्रश्येरन्। अतः तासामैच्छिकत्वं प्रतिपादयतां मतन्तु तावत् हास्यास्पदमेव वैदिकानामिति बोद्धव्यम्। इत्यलं पल्लवितेन।

## ब्राह्मणानि

अथ किमिदं ब्राह्मणं नाम ? ब्राह्मणप्रतिपाद्यो विषयः––यागाः––ब्राह्मणानां त्रैविध्यम्––ब्राह्मणानां वेदत्वमौपचारिकम्––प्रतिवेदं ब्राह्मणानि भिद्यन्ते––आदर्शोपदेशाः––पुरुषायुस्तद्दीर्घायुष्ट्वहेतुश्च––ब्राह्मणानां वेदत्वम् न तात्त्विकम्––वेदार्थोपबृंहकाणि––यज्ञयागादिविधिप्रतिपादकानि च ब्राह्मणानि।

### अथ किमिदं ब्राह्मणं नाम ?

अथेदानीं वेदार्थोपबृंहकाणां यागादिविध्यनुस्यूतानां ब्राह्मणानां स्वरूपप्रतिपत्तये किञ्चित्प्रस्तूयते। किमिदं ब्राह्मणं नामेति। कथञ्च तन्निष्पत्तिः ? ब्राह्मणशब्दोऽयं किल ब्राह्मणशब्दात्प्रोक्तार्थेऽणि कृते निष्पद्यते। ब्राह्मणेन प्रोक्तं ब्राह्मणम् इति। न च ब्रह्मन् शब्दादपि कथन्न निष्पद्यते ग्रन्थपरो ब्राह्मणशब्द इति वाच्यम्। ब्राह्मोऽजाताविति सूत्रे सति जागरूके ब्रह्मन्शब्दात् तादृशग्रन्थपरस्य ब्राह्मणशब्दस्य निष्पत्त्यसम्भवात्। अतः ब्राह्मणप्रोक्तं यागविधिबोधानुस्यूतं वचनमेव ब्राह्मणमित्येव कल्पः साधीयान्। नपुँसकत्वन्त्वस्य वचनपरत्वादेव बोद्धव्यम्। यद्यपि मन्त्रार्थावबोधनौपयिकतया सार्थकत्वं ब्राह्मणानामुपपादितम्, तथाऽपि भूयसा यागविधय एवैषां प्रधानो विषयः। अतएव "कर्मचोदनानि ब्राह्मणानि" इति आपस्तम्बीयलक्षणमपि सङ्गच्छते।

किञ्च मन्त्रभागातिरिक्ते 'शेषे ब्राह्मणशब्द' इति भगवज्जैमिनिपादैः सूत्रमुखेन यत्प्रतिपादितं ब्राह्मणलक्षणम् तदपि न रोचिष्णु। न हि तल्लक्षणतः ब्राह्मणस्य स्वरूपप्रतिपत्तिर्भवति। अतः एव तु ब्राह्मणग्रन्थानां वेदत्वे विलसन्ति विप्रतिपत्तयः। एवम् अविस्पष्टलक्षणत्वादेव ब्राह्मणस्य वेदत्वं स्वीकुर्वताऽपि तत्रभवता सायणाचार्येण मुक्तकण्ठेनैव ब्राह्मणस्य मन्त्रव्याख्यानरूपत्वं प्रपञ्चितम्। एवं तैत्तिरीयसंहिता-भाष्यभूमिकायामपि "ब्राह्मणस्य मन्त्रव्याख्यानरूपत्वान्मन्त्रा एवादौ समाम्नाता" इति निरूपितम्। इत्येतावताऽपि ब्राह्मणस्य वेदव्यतिरिक्तत्वमुपपन्नं भवति न कर्हिचिद् वेदत्वमिति। विस्तरस्त्वन्यत्र द्रष्टव्यः।

### प्रतिपाद्यो विषयः

ब्रह्म वै वेदः, तद्व्याख्यानानि ब्राह्मणानि। अथवा ब्रह्मविद्भिर्ब्राह्मणैः प्रोक्तत्वादिमानि ब्राह्मणान्युच्यन्ते इत्युक्तं प्राक्। यज्ञयागादिरेव एषां प्रतिपाद्यो विषयः। सर्वेषां ब्राह्मणानां प्रायशस्तत्रैव प्रवृत्तेः। अत्र तावत्प्रकरणप्राप्तं यज्ञस्वरूपं किञ्चिन्निरूप्यते। श्रौतसूत्रे भगवता कात्यायनेनोक्तम्––"यज्ञं व्याख्या-

स्यामः, द्रव्यं देवतात्यागः" इति (श्रौ० सू० १.२.१,२) देवतामुद्दिश्य पुरोडाश-चरुसांनाय्यसोमादिद्रव्यस्य यस्त्यागः उत्सर्गः अग्निविष्णुसोमेन्द्रादिदेवताभ्यः वह्नौ यो द्रव्यप्रक्षेपः स यज्ञ इति भावः। स च यागः प्रधानाङ्गभेदाद् द्विविधः। ये यागा 'आग्नेयोऽष्टकपाल' इत्यादिवाक्यैः दर्शपूर्णमाससम्बन्धेन निर्वर्त्यन्ते ते दर्शपूर्णमासशब्दव्यपदेश्याः प्रधानाः। तदितरत्सर्वमग्न्याधानादि ब्राह्मणतर्पणान्तं तदङ्गभूतम्। उक्तञ्च आपस्तम्बीययज्ञपरिभाषायाम्––"आग्नेयोऽष्टकपालोऽग्नीषोमीय एकादशकपाल उपांशुयागश्च पौर्णमासादि प्रधानानि तदङ्गमितरे होमाः" इति।

## यागाः

ते यागाः पुनः इष्टि-हौत्र-सौमभेदात् त्रिविधाः। तत्र दर्शपौर्णमासादय इष्टयः, अग्न्याधेयाग्निहोत्रादयो हौत्राः, अग्निष्टोमात्यग्निष्टोमादयश्च सौमाः। तेऽपि सोमयागाः च पुनः सप्तहविःसप्तपाकसप्तसोमसंस्थाभेदात् त्रिसप्तकाः। तत्र अग्न्याधेयः, अग्निहोत्रम्, दर्शः, पौर्णमासः, आग्रायणम्, चातुर्मास्यम्, पशुबन्धश्चेति सप्त हविःसंस्थाः। सायंहोमः, प्रातर्होमः, स्थालीपाकः, नवयज्ञः वैश्वदेवः, पितृयज्ञः, अष्टकेति सप्त पाकसंस्थाः। अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, वाजपेयः, अतिरात्रः, आप्तोर्याम इति सप्त सोमसंस्थाः। ते च सोमयागाः पुनरेकाहाहीनसत्रभेदात् त्रिविधाः एतत्किञ्चिद्विकृतरूपाश्चाऽन्येऽपि बहवः सन्ति काम्ययागाः। तद्यथेष्टयः––आयुष्कामेष्टिः, पुत्रेष्टिः, पवित्रेष्टिः, वर्षकामेष्टिः, प्राजापत्येष्टिः, वैश्वानरेष्टिः, नवशस्येष्टिः, ऋक्षेष्टिः, गोष्पतीष्टिः इत्यादयः। गोमेधाश्वमेधादयस्तु पशुयागा व्यपदिश्यन्ते। तेऽपि सोमान्तर्गताः। सौत्रामणीयागोऽपि सोमाधिकार एव। इति दिङ्निर्देशः। विशेषतो जिज्ञासुभिस्तु तत्र-तत्रानुसन्धेयाः।

तदेवं यज्ञयागादिबोधकवेदार्थप्रतिपादकवचनानां संग्रहो ब्राह्मणमिति फलितोऽर्थः। अस्य च ब्राह्मणपदस्य व्याख्यानपरत्वादेव ब्राह्मणपदस्य क्लीबत्वम्। वेदव्याख्यानरूपाणि अपि ब्राह्मणानि इति तदेतत् तैत्तिरीयसंहिताभाष्यभूमिकायां सायणाचार्यस्याभिमतमुल्लिखितं दृश्यते––'ब्राह्मणस्य व्याख्यानरूपत्वात् मन्त्रा एवादौ समाम्नाताः" इति।

एषु ब्राह्मणग्रन्थेषु यागा विवृताः, बह्वचश्चाख्यायिकाः मन्त्ररहस्यार्थं विशदीकर्त्तुमुपकीर्त्तिता। एवं व्याख्यानान्यपि यत्र तत्र विहितानि वेदार्थमन्वाख्यातुम्। तदेतत्सर्वं सङ्कलय्य नेदं प्रतिपत्तुं दुष्करं यद्विध्यर्थवादाख्यानपुरस्सरं वेदभाष्यमेव ब्राह्मणम् इत्येव च ब्राह्मणलक्षणत्वेन पर्यवसीयते वेदविशेषज्ञैः।

तदेवं ब्राह्मणानि, वेदगूढार्थमवबोधयितुं, यज्ञयागादिकर्मकाण्डजातं परिमण्डयितुञ्च श्रुतितत्त्वार्थांश्च व्याख्यानादिभिः अनधिगतज्ञानविशेषाणां जन-

सामान्यानां बुद्धिदर्पणे सङ्क्रमयितुं प्रवृत्तानि इति प्राङ्निर्दिष्टम् । नच 'उरु प्रथस्वेति' मन्त्रेण पुरोडाशप्रथनमभिधीयते तदेव ब्राह्मणेनापि 'पुरोडाशं प्रथयति" अभिधीयते सत्येवं, मन्त्रेणैव प्रतीतत्वात्तदर्थावबोधनाय प्रवृत्तं ब्राह्मणं किन्नानर्थकं स्यादिति वाच्यम्; मन्त्रेणाविवक्षितार्थे विनियोगार्थादिप्रत्यायनाय तस्य सार्थकत्वात् । तदेवं ब्राह्मणानां वेदार्थावबोधने सौकर्यकारित्वाद् वेदव्याख्यानरूपत्वं सूपपन्नम् । ब्राह्मणानां वेदत्वन्तु खलु औपचारिकम् । यज्ञयागादिषु तेषां वेदवदुपयोगस्य सर्वसम्मतत्वाद् इति ।

## ब्राह्मणानां त्रैविध्यम्

एतच्च ब्राह्मणं त्रिविधं--विधिरूपमर्थवादरूपमुभयविधलक्षणञ्चेति । तत्र शब्दभावना विधिरिति भाट्टाः । नियोगो विधिरिति प्राभाकराः । इष्टसाधनता विधिरिति च तार्किकाः । सर्वोऽपि विधिः पुनः उत्पत्ति-अधिकार-विनियोग-प्रयोग-भेदाच्चतुर्विधः । तत्र देवतास्वरूपमात्रबोधको विधिः उत्पत्तिविधिः, यथा--'आग्नेयोऽष्टकपालो भवति' इत्यादि । सेतिकर्त्तव्यकादेः फलसम्बन्धबोधको विधिः अधिकारविधिः । यथा--'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादिः । अङ्गसम्बन्धबोधको विधिः विनियोगविधिः । 'व्रीहिभिर्यजेत, समिधा यजेत ।' इत्यादिः । साङ्गप्रधानकर्मप्रयोगैक्यबोधकः पूर्वविधित्रयमेलनरूपः प्रयोगविधिः । स च 'श्रौत' इत्येके 'कल्प' इत्यपरे । कर्मस्वरूपञ्चापि द्विविधम्--गुणकर्म अर्थकर्म च । क्रतुकारणकार्यमाश्रित्य निर्वृत्तं गुणकर्म । तच्च उत्पत्ति-आप्ति-विकृति-संस्कृतिभेदाच्चतुर्विधम् । "वसन्ते ब्राह्मणोऽग्नीनादधीत", "यूपं तक्षति" इत्यादावाधानतक्षणादिना संस्कारविशेषविशिष्टाग्नियूपादेः उत्पत्तिः । "स्वाध्यायोऽध्येतव्यः", "गाः पयो दोग्धि" इत्यादावध्ययनदोहनादिना विद्यमानस्यैव स्वाध्यायपयःप्रवृत्तेः प्राप्तिः । "सोममभिषुणोति" "व्रीहीनवहन्ति", "आज्यं विलापयति" इत्यादावभिषवावघातविलापनैः सोमादीनां विकृतिः । एवं "व्रीहीन् प्रोक्षति", "पत्न्यवेक्षते" इत्यादौ प्रोक्षणावेक्षणादिभिर्व्रीह्यादिद्रव्याणां संस्कृतिः । इत्येवमेव अर्थकर्मापि द्विविधम्--अङ्ग-प्रधानभेदात् । अन्यार्थमङ्गम्, अनन्यार्थञ्च पुनः प्रधानम् । तदङ्गमपि भूयो द्विविधम् । सन्निपत्योपकारकाऽऽरादुपकारकभेदात् । तत्र प्रधानस्वरूपनिर्वाहकं प्रथमम् । यथाऽवहननप्रोक्षणादि-फलोपकारि । द्वितीयं प्रयाजादि । एवं सम्पूर्णाङ्गसंयुक्तो विधिः प्रकृतिः । विकलाङ्गसंयुक्तश्च विधिः विकृतिः । तदुभयविलक्षणो विधिः दर्वीहोमः । एवमन्यदप्यूह्यम् । तदेवं संग्रहेण विधिर्निरुपितो बोद्धव्यः ।

प्राशस्त्यनिन्दान्यतरलक्षणं विधिशेषभूतं वाक्यम् अर्थवादः । स पुनस्त्रिविधः--गुणवादोऽनुवादो भूतार्थवादश्चेति । तत्र प्रमाणान्तरविरुद्धार्थ-

बोधको गुणवादः। यथा "आदित्यो यूप" इत्यादिः । प्रमाणान्तरप्राप्तार्थबोधकः अनुवादः। यथा "अग्निर्हिमस्य भेषजम्" इत्यादिः । प्रमाणान्तरविरोधतत्प्राप्तिरहितार्थबोधको भूतार्थवादः। यथा, "इन्द्रो वृत्राय वज्रमुदयच्छत् ।" इत्यादि। तदुक्तं वार्त्तिककृता :--

"विरोधे गुणवादः स्याऽनुवादोऽवधारिते।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः॥"

प्रामाण्यं हि नाम अबाधितार्थाज्ञातार्थज्ञापकत्वम्। तच्च बाधितविषयत्वाज्ज्ञातार्थज्ञापकत्वाच्च न गुणवादानुवादयोः सम्भवति । भूतार्थवादस्य पुनः स्वार्थे तात्पर्यरहितस्यापि औत्सर्गिकं प्रामाण्यं न विहन्यते। तदेवमर्थवादो निरूपितो वेदितव्यः। विध्यर्थवादोभयविलक्षणञ्च यथा वेदान्तवाक्यम्। तच्चाज्ञातज्ञापकत्वेऽनुष्ठानाप्रतिपादकत्वान्न विधिः । स्वतः पुरुषार्थब्रह्मानन्दज्ञानलक्षणब्रह्मणि स्वार्थे, उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गवत्तया स्वतः प्रमाणभूतान् सर्वानपि विधीन् अन्तःकरणशुद्धिद्वारा स्वशेषतामापादयदन्यशेषत्वाभावाच्च नार्थवादः। तस्मादुभयविलक्षणं वेदान्तवाक्यम् तच्च क्वचिदज्ञातज्ञापकत्वमात्रेण विधिरिति व्यपदिश्यते। विधिपदरहितप्रमाणवाक्यत्वेन च क्वचिद्भूतार्थवाद इति व्यवह्रियत इति न दोषः। तदेवं त्रिविधं ब्राह्मणमिति सूपपन्नम्।

शुक्लयजुर्वेदस्य ब्राह्मणं हि शतपथब्राह्मणम्। यजुर्वेदस्य माध्यन्दिन-कण्वाभिधे द्वे शाखे समुपलभ्येते । एतयोर्द्वयोरपि ब्राह्मणन्तु शतपथमेव। शताध्यायानुस्यूतत्वात् हीदं शतपथमुच्यते। माध्यन्दिनशाखीयं शतपथब्राह्मणं त्वतिबृहत्कायम्। ऋग्वेदं विहाय, शतपथब्राह्मणमिदं बृहत्कायत्वेनाखिलान् ग्रन्थानतिशेते। शतपथमिदं वाजसनेयब्राह्मणनाम्ना प्रसिद्धम्। चतुर्दशकाण्डनिबद्धेऽस्मिन् ब्राह्मणे, नवकाण्डेषु यज्ञविवरणम्, दशमेऽग्निरहस्यम्, दशमैकादशयोश्चाग्निचयनम्, द्वादशतमे प्रायश्चित्तविवेचनम् । त्रयोदशतमेऽश्वमेधनरमेधयोर्विवृतिः। दुष्यन्त-शकुन्तला-भरत-सत्राजिताख्यानां नरेशानां प्रतिद्वन्द्विनां काशीराजपरीक्षितपुत्रजनमेजयादीनामाख्यानोल्लेखश्च। चतुर्दशतमे काण्डे च आरण्यकोपदेशः। शतपथे त्रयस्त्रिंशद्देवतानामुल्लेखः--"अष्टौ वसवः, एकादश रुद्राः, द्वादशादित्या द्यावापृथिवी चेति" (११।२।१) भेदात्।

## ब्राह्मणानां वेदत्वस्यौपचारिकत्वम्

यद्यपि ब्राह्मणग्रन्थेषु वैदिकशब्दानां निर्वचनं आख्यानोपाख्यानभङ्ग्या वेदतत्त्वार्थावबोधनम् एवं यज्ञानां विधिक्रमोपदेशश्च भूम्ना अवगम्यते तथाऽपि प्राधान्येन यज्ञविवेचनमेव तत्प्रयोजनत्वेनावसीयते। यद्यपि आपस्तम्बेन "मन्त्र-

ब्राह्मणयोर्वेदनामधेयमिति" सूत्रेण, मन्त्रब्राह्मणयोर्वेदत्वं सूत्रितम् समर्थितं तच्च अन्यैरपि आचार्यैः तथापि मन्त्रब्राह्मणयोर्वेदत्वसाधनमतीव दुष्करम् । तत्तु परस्तादुपपादयिष्यामः । यद्यपि अत्र सन्देहो नास्ति यद् बहुभिः[1] सूत्रकारैरुभयोर्मन्त्रात्मकत्वं स्वीकृतम् तथापि वेदव्याख्यानरूपत्वात् ब्राह्मणानान्तु वेदत्वमौपचारिकमेव भवितुमर्हति, न तु वास्तविकम् । अथवा वैदिककर्मकाण्डे वेदवद्-ब्राह्मणानामपि तत्तत्कर्मविधौ प्रामाण्यं प्रत्याययितुमेवास्यापस्तम्बसूत्रस्य प्रवृत्तिः स्यादित्येव सुगमा संगतिः सम्भवति । अन्यथा रघुवंशकाव्यवन्मल्लिनाथीयव्याख्याया अपि काव्यत्वप्रसक्तेर्दुर्वारापत्ति इतिः ।

## प्रतिवेदं ब्राह्मणानि भिद्यन्ते

ऐतरेयं, शाङ्खायनापरनामधेयं कौषीतकिब्राह्मणञ्चेति ब्राह्मणद्वयं ऋग्वेदस्य । तत्रैतरेयमत्यन्तप्रसिद्धम् । ख्रैस्ते १८६२ सम्वत्सरे विद्वद्वर मार्टिनहाग महोदयेन, १८७९ सम्वत्सरे च थ्यूडोरआड्फरेस्ट महोदयेन, १८९३ मिते च काशीनाथ शास्त्रिणा १९२० तमे च ए. बी. कीथ महाशयेन ऐतरेयं आङ्ग्लभाषानुवादसहितं प्रकाशितम् । सायणीयभाष्यमपि अस्य लभ्यते । चत्वारिंशदध्यायसंवलितमिदं ब्राह्मणं, सोमयागविवरणेन परिपूर्णम् वरीवर्त्ति । अस्य प्रथमषोडशाध्यायेषु अग्निष्टोमाख्यसोमयागस्य एकदिवससम्पाद्यस्य, ततः सप्तदशाष्टादशाध्याययोः ३६०दिवसैः सम्पाद्यस्य गवामयनयागस्य तदनन्तरं षडध्यायेषु द्वादशाहस्य यागस्य विवेचनम् । तदग्रिमेषु कतिपयाध्यायेषु अग्निहोत्रचर्चा ततोऽन्तिमाष्टाध्यायेषु राज्याभिषेकः, अन्तिमेषु दशाध्यायेषु पुनः आख्यानोपाख्यानादिप्रपञ्चः । पञ्चाध्यायानामेका पञ्चिका भवति तदेतदष्टपञ्चिकाभिः पूर्णं भवति । सप्तमपञ्चिकायां इक्ष्वाकुवंशोद्भवस्य राज्ञो हरिश्चन्द्रस्योपाख्यानमत्र संदृब्धम् । तदस्माभिरत्रान्यत्र प्रदत्तम् । तदेतदाख्यानमपि यज्ञमहिमप्रदर्शनार्थमेवोपात्तं प्रतीयते ऐतरेयब्राह्मणे, सामाजिकोपयोगिनो बहवः आदर्शोपदेशाः सन्निविष्टाः । "सखा हि जाया" (७।३।१३) पत्नी सखी भवति । अग्रे सपत्नीकेन पुरुषेणाग्निहोत्रं यज्ञादिकं कर्त्तव्यम्, इत्युपदिष्टम् । योऽपत्नीकः सोऽपि यज्ञेऽधिकृतः । परन्तु तद्विधिरतीव हृदयङ्गमत्वेन प्रत्यपादि । तथा च :--

"अपत्नीकः कथमग्निहोत्रं जुहोति ? श्रद्धा पत्नी, सत्यं यजमानः, श्रद्धा-सत्यं तदित्युत्तमं मिथुनम् ।।" (७।९।१०) इति ।

---

१. आपस्तम्ब-श्रौत सूत्रम् (२४।१।३१), बौधायन गृह्यसूत्रम् (२।६।३), कौशिक सूत्रं (१।३), जैमिनीय मीमांसा सूत्रम् (मी० अ० ३४) इत्याद्यैः ।

ऋग्वेदस्य द्वितीयं ब्राह्मणं कौषीतकिब्राह्मणं त्रिंशदध्यायैर्निबद्धम् । अत्र क्रमेण अग्न्याधानं अग्निहोत्र-दर्शपौर्णमासादिवर्णनम् । अन्तिमेषु अध्यायेषु च पुनः चातुर्मास्यादिविवरणम् ।

सामवेदस्य बहवो ब्राह्मणग्रन्थाः सन्ति । तेषु षड्विंश-ब्राह्मणं, पञ्चविंश-ब्राह्मणं यद्धि ताण्ड्यब्राह्मणाभिधयेनापि प्रसिद्धम्, एतद् ब्राह्मणद्वयमतिप्रसिद्धम् ।

अथर्ववेदस्य च गोपथब्राह्मणम् । यत्र यज्ञयागादिविधिविधाननियमानां विशदविवरणं, आख्यानमुखेन च विविधोपदेशाः सम्भृताः सन्ति ।

अथर्ववेदस्य च ब्राह्मणं गोपथब्राह्मणम् काण्डद्वयोपेतम् । प्रथमकाण्डोऽध्यायपञ्चकानुस्यूतो द्वितीयश्चाध्यायषट्कसमन्वितः । प्रथमकाण्डे ब्रह्मेति पदालङ्कृतस्य वेधसः प्रशंसापरं वर्णनम् । द्वितीये च पुनः यागप्रक्रियादिप्रतिपादनम् । द्वितीये काण्डेऽस्मिन् भूयान् भागो ग्रन्थान्तरेभ्यः सङ्कलितोऽवगम्यते । तत्र भूयानंशस्तु ऐतरेयकौषीतकिब्राह्मणाभ्यां, स्वल्पीयाँस्तु मैत्रायण-तैत्तिरीयब्राह्मणाभ्यामुपात्तः । एवं शतपथब्राह्मणात् पञ्चविंशब्राह्मणाच्च कियाँश्चिदंशः समुपहृत्यात्र संयोजितः । ब्राह्मणानीमानि भूयसा गद्यमयानि । गद्यसरणिश्च एषां प्रायशः सरला किन्त्वपरिष्कृता विषमा च । न तत्र गद्यसुषमा सम्पन्ना । पद्यमपि च ब्राह्मणेषु किमपि प्रशंसार्हं सौष्ठवं न दधाति, तथापि तत्वार्थं समर्पयितुं तु तत् सर्वथा सक्षमम् ।

एतेषु किल ब्राह्मणग्रन्थेषु समुपवर्णितानि आख्यानानि अतीव रुचिराणि उपदेशपराणि उपादेयानि हृदयावर्जकानि च । तद्यथा ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायास्तृतीयेऽध्याये--शुनःशेपाख्यानमतीव रमणीयं सम्पन्नम् । तस्य संक्षेपोऽत्र दीयते । एवं किलानुश्रूयते--अपुत्रो हरिश्चन्द्रो नाम कश्चिद्राजा प्रतिजज्ञे चेत्पुत्रो मे जायेत वरुणं यक्ष्यामीति । निर्वृते यज्ञे ततो वरुणस्य प्रसादात् तस्य जज्ञे रोहितो नाम पुत्रः कालान्तरेण । परं स स्वप्रतिज्ञामप्रतिपालयन् कालमनैषीत् । यदा गच्छति काले, बालो यौवनमालिलिङ्ग तदा वरुणेन बद्धप्रतिज्ञो राजा यज्ञमारभत । रोहितस्तु परित्राणमिच्छन्नरण्ये पलायितः । तत्रैव षड्वर्षाणि निभृतं सञ्चचार । ततः प्रकुपितो वरुणः राजानं जलोदरव्याधिना पीडयामास । अत्रान्तरे क्षुत्क्षामकण्ठः कश्चिद् दरिद्रो ब्राह्मणः तत्रागत्य गवां शताय आत्मनः सुतं शुनःशेपनामानं रोहितप्रतिनिधित्वेन प्रदास्यामि बलीकर्त्तुमित्यवोचत् । वरुणोऽपि ततः प्रीतः "भूयान् वै ब्राह्मणः क्षत्रियादि" ति ब्राह्मणकुमारस्य प्रातिनिध्यमन्वमन्यत । तथा नीतः शुनःशेपश्च यूपे बद्धः । तथा बद्धश्च ब्राह्मणकुमारः प्रजापत्यादिदेवाँस्तुष्टाव । ततो भूयोभूयः संस्तुवति तस्मिन् बद्धाञ्जलौ, स्वयमेव वरुणपाशात्

संस्त्रस्तः । जलोदरश्चाप्युपशान्तः । एवं शुनःशेपोऽपि मोचितः । राजाऽपि अगदोऽभवद् इति ।

एवं शतपथब्राह्मणेऽपि भूयांसि आख्यानानि श्रूयन्ते। तेषु प्रलयविषयकमाख्यानमतीव रोचिष्णु । तद्यथा :—

"मनवे ह वै प्रातः अवनेग्यमुदकमाजह्रुर्यदेदं पाणिभ्यामवनेजनाय आहरन्त्येवं तस्यावनेनिजानस्य मत्स्यः पाणी आपेदे। स हास्मै वाचमुवाच—बिभृहि मां पारयिष्यामि त्वेति । कस्मान्मा पारयिष्यतीति। ओघ इमाः सर्वाः प्रजा निर्वोढा ततस्त्वा पारयितास्मीति। कथं ते बिभृतिरिति।" इत्यादि।

अस्याख्यानस्य च सारांशः—

एकदा मनुः मुखप्रक्षालनार्थमानीते जले मत्स्यमेकं ददर्श। स च मत्स्यो मनुमयाचत रक्षय मामिति। प्रतिजज्ञे च यदहं त्वां रक्षयिष्यामीति। कस्मान्मां रक्षयिष्यसीति संम्पृष्टो मत्स्य उवाच—भाविनो जलप्रलयादिति। मनुस्तथेत्युक्त्वाऽन्वमन्यत। मत्स्यञ्च यथावद् ररक्ष। अत्रान्तरे मत्स्याज्ञया मनुः पोतमेकं कारयामास। समारब्धे तु तस्मिन् जलमहाप्रलये, मनुः मत्स्यशृङ्गयोराबद्धे तस्मिन् पोते समारूढः। मत्स्यश्च सत्वरं तमुत्तरीयपर्वतशिखरमनैषीत्। तत्र सुरक्षितो मनुः पुनः अस्य जगतः जनयिता बभूव इति।

तदेवमाख्यानव्याजेन बह्वर्थसम्भृता उपदेशा ब्राह्मणग्रन्थेषु पल्लविताः समवलोक्यन्ते। ब्राह्मणेषु यथा आख्यानमुखेन ज्ञानामृतं पुरस्क्रियते तथैव व्याख्यानमुखेन वेदगतनिगूढार्थपथप्रदर्शनमप्युन्नीयते। तदपि प्रणिभालनीयम्। तद्यथा :—

'प्राणो वा अथर्वा' (शत० ६।४।२।१)।

'अयं वै पूषा योऽयं वातः पवते। (शत० १४।२।१।९)

ब्राह्मणवत् अनुब्राह्मणग्रन्था अपि बहवः सन्ति।

एवं ब्राह्मणसाहित्यमतिविस्तृतम्। सर्वेषां वर्णनार्थं तु एकोऽन्यः स्वतन्त्रो ग्रन्थोऽपेक्ष्यते।

## ब्राह्मणानाम् उपदेशाः

यज्ञो वै श्रेष्ठतमं कर्म । (शत० १।१।१।५)।

सर्वस्मात्पाप्मनो निर्मुच्यते य एवं विद्वानग्निहोत्रं जुहोति। (शत० २।३।१।६)।

सर्वां ह वै पापकृत्यां सर्वां ह वै ब्रह्महत्यामपहन्ति यो ऽश्वमेधेन यजते। (शत० १३।५।४।१)

अग्नेर्वै धूमो जायते, धूमादभ्रमभ्राद्वृष्टिः। (शत० ३।३।५।१७)
विद्युद्धीमां वृष्टिमन्नाद्यां सम्प्रयच्छति। (ऐत० ३.४१)।
मरुतो वै वर्षस्येशत। (शत० १८।३।१२)
तस्माद्यां दिशं वायुरेति तां दिशं वृष्टिरन्वेति। (शत० ८।२।३।५)।
देवा वै यज्ञेन श्रमेण तपसाऽऽहुतिभिः स्वर्गं लोकमायन्। (ऐतरेय ३.४२)
ये हि जनाः पुण्यकृतः स्वर्गं लोकं यान्ति। (शत० ६।५।४।८)
शतायु र्वै पुरुषः। (कौषी० ११.७)
अपि हि भूयांसि शरद्वर्षेभ्यः पुरुषो जीवति। (शत० ११।९।३।१९)
ऋतुसन्धिषु वै व्याधिर्जायते। (गोप० १।११)
अग्निर्हि रक्षसामपहन्ता। (शत० १।२।१।६)
नापुत्रस्य लोकोऽस्ति। (ऐत० ७.१३)
अमेध्यो वै पुरुषो योऽनृतं वदति। (शत० ३।१।३।१८)
एतद्वाचश्छिद्रं यदनृतम्। (ताण्डच ८।६।१३)
तस्य कनीयः कनीय एव तेजो भवति श्वः श्वः पापीयान् भवति तस्मादु सत्यमेव वदेत्। (शत० २।२।२।१९)
नानृतं वदेत्, न मांसमश्नीयात्, न स्त्रियमुपेयात्। (तै० २।५।५।३२)
तस्मान्नातिमन्येत पराभवस्य हैतन्मुखं यदतिमानः। (शत० ५।१।१।१)
तद्धचेव ब्राह्मणेन यष्टव्यं यद् ब्रह्मवर्चसी स्यात्। (शत० ११।९।३।१६)
ब्राह्मणो नैव गायेन्न नृत्येत्। (गोप० २।२१)
अथ हैते मनुष्यदेवा ये ब्राह्मणाः। (षड् विंश० १०१)
असौ वा आदित्यः शुक्रः। (शत० ९।४।२।२१)
प्रजापतिर्वै नृचक्षाः। (शत० ६।४।४।५)
ऋतवो वै पितरः। (शत० २।६।१।३२)
यज्ञो विष्णुः। (शत० १।९।३।९)
यो वै प्राणः स वातः। (शत० ५।२।४।९)
विशो हि मरुतः। (शत० ३।९।१।१७)
मरुतो हि वैश्यः। (तै० २।७।२।२)
ब्रह्म वै बृहस्पतिः। (ऐत० १।१३)
इन्द्रः क्षत्रम्। (शत० १०।४।१।५)
प्राणो वै वनस्पतिः। (कौषी० १२।७)
न ह वा अपुरोहितस्य राज्ञो देवा अन्नमदन्ति। तस्माद्यक्षमाणो ब्राह्मणं पुरोदधीत। (ऐत० ८।२४)

उपांशुः प्राण एव। (कौषी० १२।४)

पाप्मा वै नमुचिः। (शत० १२।७।३।४)

स एष आदित्यः सप्तरश्मिः वृषभः। (जै० १।२८।२)

प्राणो वा अङ्गिराः। (शत० ६।१।२।२८)

वाग्वा अग्निः। (शत० ६।४।१।५)

पयो हि रेतः। (शत० ९।५।१।५६)

त्वष्टा वै रूपाणामीष्टे। (शत० ५।४।५।८।)

अग्निर्हि रक्षसामपहन्ता। (शत० २।४।२१।१५)

एष वै वृषा हरिर्य एष सूर्यः। (शत० १४।३।१।२६)

पृथिवी वेदी। (ऐत० ५।२८)

ब्रह्म वै यज्ञः। (ऐ० ७।२२)

ब्रह्मक्षत्रे च इन्द्राग्नी। (कौ० १२।८)

यज्ञो वै गौः। (तै० ३।९।८।३)

अङ्गिरा उ ह्यग्निः। (शत० १।४।२५) (गो० १।१।७)

प्राणो वै जातवेदाः। (ऐत० २।३९)

पाप्मा वै वृत्रः। (शत० ११।१।५।७)

आदित्यो वै प्रजाः। (तै० १।८।८।१)

इत्याद्याः व्याख्यानविशेषाः।

अपि च :—

समस्तमपि जगन्मण्डलमेकराट्। स्वस्ति साम्राज्यं, भौज्यं, स्वाराज्यं, वैराज्यं, पारमेष्ठ्यं, राज्यं, महाराज्यं, आधिपत्यमयं, समन्तपर्यायी स्यात्। सार्वभौमः सर्वायुषः आन्तादापरार्द्धात्,- पृथिव्यै समुद्रपर्यन्ताया एकराडिति। (एतरेय ब्रा० ८ अध्याय)

इत्येतेन अखिलजगत एक एव सम्राड् भवेदित्युपदिष्टम्भवति।

"अपहतपाप्मा वै स्वाध्यायः। देवपवित्रं वा एतत्......तस्मात्स्वाध्यायोऽध्येतव्यः।" इति तैत्तिरीयारण्यके। शतपथब्राह्मणेऽपि :—

"स्वाध्यायो वै ब्रह्मयज्ञः। प्रिये स्वाध्यायप्रवचने भवतः, युक्तमना भवति, अपराधीनः, अहरहरर्थान् साधयते। सुखं स्वपिति परमचिकित्सक आत्मनो भवति इन्द्रियसंयमश्च। एकात्मता च प्रज्ञा बुद्धिः ............ प्रज्ञा, वर्धमाना चतुरो धर्मान् ब्राह्मण्यमभिनिष्पादयति।" (शत० ११।५।६।३)

अपि चः—
'सूर्यो हि रक्षसामपहन्ता' । (शत० १।३।१।४)
'अयज्ञो वा एष योऽपत्नीकः ।' (तै० २।२।२।३)
"श्रिया वा एतद्रूपं यत्पत्न्याः ।" (तै० २९।४।७)

तदेवं ब्राह्मणानि साक्षात्परम्परया वा वेदार्थोपबृंहकाणि इत्यत्र नास्ति कश्चन संशयः। तत्र ऐतरेयकौषीतकीति ब्राह्मणद्वयं सम्प्रत्युपलभ्यते। कृष्णयजुर्वेदस्य तैत्तिरीयब्राह्मणम् । शुक्लयजुर्वेदस्य च शतपथब्राह्मणम् । साम्नस्त्वनेके ब्राह्मणग्रन्थाः । मन्त्र-दैवत-आर्षेय—सामविधान-संहितोपनिषद्-वंश- जैमिनीय-प्रभृतयः। परं पञ्चविंशापरनामधेयं ताण्ड्यब्राह्मणं, षड्विंशब्राह्मणञ्चाति प्रसिद्धम्। अथर्ववेदस्य पुनः गोपथब्राह्मणम् ख्रैस्त १९१९ संवत्सरे पाश्चात्यैः प्रकाशितमुपलभ्यते। इति दिक्।

यद्यपि ब्राह्मणानामपि वेदत्वमेकेऽङ्गीकुर्वन्ति । परन्तु अपरे तत्र विप्रतिपद्यन्ते। ब्रह्म वेदः तस्य व्याख्यानानि ब्राह्मणानि, ब्राह्मणैः प्रोक्तानि वा ब्राह्मणानीत्यभ्युपगच्छतां तु ब्राह्मणानां वेदत्वं न सम्भवति। मन्त्रवत् ब्राह्मणानामपि वेदत्वाभ्युपगमे, तेषामपि अपौरुषेयत्वनित्यत्वे प्रसज्येताम् । न तेषामपौरुषेयत्वनित्यत्वे, केनापि समुपलालिते। इत्यादि। तत्रापि किञ्चिदिव विमृश्यते प्रसङ्गानुषङ्गतया ।

वस्तुतोऽस्य विवादस्य बीजं आपस्तम्बीयपरिभाषासूत्रे—'मन्त्रब्राह्मणयोर्वेदनामधेय' मित्याकारके प्रतीयते। तत्र तु ब्राह्मणस्य वेद इति संज्ञा पारिभाषिकी न जातु वास्तविकी। यज्ञप्रसङ्गे ब्राह्मणवचनान्यपि मन्त्रववदभिमन्तव्यानीत्याशयादेव तस्य तत्र पारिभाषिकी संज्ञा कृताऽवगम्यते, न खलु सार्वत्रिकी । न च सायणेनापि 'मन्त्रब्राह्मणात्मकः शब्दराशिर्वेदः' इति कथमभिलक्षितमिति वाच्यम्। अन्यत्र सायणेनापि 'ब्राह्मणानां मन्त्रव्याख्यानत्व'मिति तैत्तिरीयसंहितायां प्रतिपादितत्वात्। अन्यथा वदतोव्याघातस्य तत्र दुर्वारापत्तिः सम्भवेत् । इति न तच्छ्रद्धेयम्।

किञ्चाशेषवित्पाणिनिप्रोक्त 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' (४।३।१०५) इति सूत्रव्याख्याने भट्टोजिदीक्षितैः 'पुराणेन चिरन्तनेन मुनिना प्रोक्ताः पुराणप्रोक्ताः' तेषु 'ब्राह्मणकल्पेषु' इति पदस्य विशेषणरूपेण पुराणप्रोक्तमिति प्रयुक्तम्। इत्यादिनापि ब्राह्मणानां वेदत्वं प्रतिषिद्धं भवति। किञ्च मुनिवरेण पाणिनिना तु सुस्पष्टमेव ब्राह्मणानामवेदत्वं ध्वनितम् 'द्वितीया ब्राह्मणे' (अ० २।३।६२) 'चतुर्थ्यर्थे बहुलं छन्दसि' (अ०२।३।६) इति सूत्रद्वयं निबध्नता। पाणिनीये हि छन्दः शब्दोऽयं वेदवचनः। चेन्नाम पाणिनेरपि ब्राह्मणस्य छन्दस्त्वमभिप्रेतं स्यात्

तर्हि 'चतुर्थ्यर्थे' इति सूत्रे ब्राह्मणपदस्यानुवृत्त्यैव तत्कार्यस्य सिद्धत्वात् छन्दः-शब्दस्य, वैयर्थ्यापत्त्या वृथैव मुनिरलाघवदोषभाक्त्वं नोरीकुर्यात्। तस्मात् छन्दः-पदग्रहणात् मुनिः प्रव्यक्तं विज्ञापयति यद् ब्राह्मणानां छन्दस्त्वं नास्त्येवेति।

किञ्च पाणिनिमुनिना 'छन्दोब्राह्मणानि च तद्विषयाणि' (अ० ४।२।६६) इति सूत्रयता सुतरां छन्दोब्राह्मणयोरैकात्म्यं खण्डितम्। एवंविधास्तर्काः ब्राह्मणानामवेदत्वं स्वीकुर्वतामुल्लसन्ति। तत्त्वतो विचार्यमाणे ब्राह्मणानां वेदव्याख्यानरूपताकल्पः एव रोचिष्णुरिति संक्षेपः।

## आरण्यकानि

ब्राह्मणभागस्य परिशिष्टभागरूपाणि आरण्यकानि हि नाम गद्यपद्यमयानि, आरण्यकानां वानप्रस्थानामध्ययनाध्यापनस्वाध्यायपराणि यज्ञयागादिविधिविधायकानि शास्त्राणि। अरण्येऽध्ययनादेवेमानि आरण्यकानीति व्याख्यायन्ते। "अरण्य एव पाठ्यत्वादारण्यकमितीर्यते" इत्युक्तेः। एषु वर्णाश्रमधर्माचाराः याज्ञिकरहस्यानाञ्च मीमांसा सन्दृब्धाः।आरण्यकानां दृशा निखिलं विश्वमेतद् यज्ञमयम्। केवलं, देवतामुद्दिश्य द्रव्यत्यागमेव यज्ञत्वेन आरण्यकानि नाभिनन्दन्ति। एषां नयेन, यज्ञादिकर्मकाण्डोपनतस्वर्गादिफलस्य क्षयिष्णुतया न तदात्यन्तिकसुखस्य जनकम्। न च कश्चिद् ज्ञानमार्गेणैवात्यन्तिकसुखमवाप्तुमर्हति केवलेन, नापि केवलेन कर्ममार्गेण। तेषां नयेन ज्ञानकर्मसमुच्चय एव आत्यन्तिकसुखं समुच्चिनोति इति। सोऽयं ज्ञानकर्मसमुच्चयसिद्धान्तः आरण्यकेष्वेव प्रागङ्कुरितः, पश्चाद् वेदान्तेषु पुष्पितः फलितश्चावगम्यते। ब्राह्मणग्रन्थसपृहवदारण्यकानामपि बहवो ग्रन्थाः। परन्तु तेषु सर्वातिशायितया प्रसिद्धमृग्वेदीयं 'ऐतरेयारण्यकम्'। यच्च खृस्ते १८७६ अब्दे, विद्वद्धौरेयेण श्रीमता सत्यव्रतसामश्रमिणा सायणभाष्यसहितं मुद्रण नीतम्। ततः १९०९ सम्वत्सरे ए० बी० कीथमहाभागेन आङ्गलानुवादोपेतं सम्पाद्य प्रकाशितम्। षड्गुरुशिष्येणापि, अस्मिन् ग्रन्थे मोक्षप्रदानाम्नी टीका उट्टङ्किता याऽद्यावधि न प्रकाशं गतेति विदुषां प्रवादः। ऐतरेयारण्यकमेतत्पञ्चविभागैर्निबद्धम्। तत्र प्रथमे भागे पञ्चाध्याया, द्वितीयाध्याये सप्त, तृतीये द्वौ, चतुर्थे च एकः, पञ्चमे त्रयः। सर्वे सम्भूय अष्टादशाध्यायाः। अध्यायाश्च पुनः खण्डैरनुस्यूताः। प्रथमाध्याये (आरण्यके) गवामयन-महाव्रतयोः प्रातर्माध्यन्दिन-सायंसवनानाञ्च वर्णनम्। द्वितीयारण्यके चतुरध्यायादारभ्य षडध्यायपर्यन्तं ऐतरेयोपनिषद्। अवशिष्टारण्यकेषु उक्थादिविवेचनम्। तृतीयारण्यके निर्भुजप्रतृण-संहितायाश्च भेदविवेचनम्। स्वर-स्पर्श-ऊष्म-वर्णानां चर्चा। चतुर्थे महानाम्न्यृचां सङ्कलनम्। पञ्चमे महाव्रतसवनानाञ्च विवरणपुरस्सरं नैष्कैवल्यविवेचनम्।

त्रयाणामारण्यकानां प्रचारकः इतरापुत्रः ऐतरेयो महीदासः, चतुर्थस्य चाश्वलायनः पञ्चमस्य शौनकाचार्यश्च ।

ऋग्वेदस्यापरमारण्यकं शाङ्खायनं नाम । यत्कौषीतकिनाम्नाऽप्याख्यायते । आरण्यकमेतत्पञ्चदशाध्यायैर्निबद्धम् सप्तत्रिंशदुत्तरशतखण्डात्मकम् । अस्मिन् आरण्यके शुनःशेप-अहिल्या-खाण्डव-कुरुक्षेत्र-मत्स्य-उशीर-काशी-पञ्चाल-विदेहादीनामुल्लेखोऽपि दृश्यते ।

कृष्णयजुर्वेदीयतैत्तिरीयशाखाया तैत्तिरीयकम् दशप्रपाठकैर्निबद्धं शतोत्तरसप्ततिमितैरनुवाकैरनुस्यूतम् । अस्यानुवाकसंख्यासु भूयान् मतभेदः । दशमे प्रपाठके द्रविडभाषाग्रथिते चतुःषष्टिः, आन्ध्रपाठे अशीतिः, कर्णाटकपाठे चतुःसप्ततिः, अन्येषु कतिपयेषु एकोननवतिः अनुवाकाः सन्ति इति । सायणाचार्यमहाभागेन आन्ध्रपाठं स्वीकृत्य तस्यैव व्याख्या कृता । आरण्यकान्तरसमाना एव विषयाः प्रायशोऽत्रापि प्रतिपादिताः ।

सामवेदस्य जैमिनीयशाखाया, जैमिनीयोपनिषद्ब्राह्मणमेव 'तवलकारारण्यक'नाम्ना प्रसिद्धम् । अस्मिन् ब्राह्मणे ब्राह्मणारण्यकोपनिषदिति त्रयोऽपि अनुस्यूताः सन्ति । अस्मिन् साममन्त्राणां व्याख्या अत्यन्तशोभना कृताऽवलोक्यते । खीस्त १८७८ मितेऽब्दे श्रीसत्यव्रतसामश्रमिणा, बङ्गानुवादसहिता सायणभाष्यसमेता च सामवेदारण्यकसंहिता मुद्रापिता ।

अथर्ववेदस्य नाद्यावधि एकमपि आरण्यकमुपलब्धम् । वेदार्थबोधे ब्राह्मणानिवदारण्यकान्यपि अतीव सहायभूतानि इत्यत्र नास्ति संशयः । अत एव आरण्यकानि 'रहस्य' ग्रन्था इति नाम्नापि स्मर्यन्ते ।

शुक्लयजुर्वेदस्योभयोः शाखयोर्माध्यन्दिनकाण्वाभिधयोः आरण्यकमपि माध्यन्दिनारण्यकं, काण्वबृहदारण्यकमिति आरण्यकद्वयं प्रसिद्धम् । एतयोः प्राधान्येन यज्ञरहस्यवर्णनपुरस्सरं आत्मतत्त्वज्ञानस्याप्युपदेशोऽतीव मार्मिकः उपलभ्यते । अनयोर्द्वयोरपि बृहदारण्यकयोः भूयान् भेदो नास्ति । महर्षियाज्ञवल्क्यस्य राज्ञो जनकस्य च गाथा उभयत्र गुम्फिता । गार्गी-मैत्रेयीनाम्नोर्ब्रह्मवादिन्योर्विवरणमतीव मनोहरं सम्पन्नमत्रेति । संन्यासाश्रमविधानमतिचारुतया प्रतिपादितम् :

"एतमेव विदित्वा मुनिर्भवति । एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति । एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते । किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति । ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यां चरन्ति" (४।४।२२) इति ।

तदेवं, यथा गृहस्थाश्रमिणां यज्ञयागादिविवरणं ब्राह्मणग्रन्थेषु तथा वानप्रस्थाश्रमिणां यज्ञादिमहाव्रतानां होत्राणाञ्च विवरणं आरण्यकग्रन्थेषु सम्पन्नम् ब्राह्मणग्रन्थानामिवारण्यकानामपि भाषाशैली अतीव सरला, मधुरा, संक्षिप्ता, क्रियाबहुला चास्ति। भारतीयसंस्कृतिपरम्परा-प्रसरे आरण्यकानि अतीव महनीयं पदमलङ्कुर्वन्ति इत्यत्र कः संशयीत ?

## उपनिषदः

अस्ति खलु विदितमेवैतद्विदुषां यच्चतुर्वर्गफलप्राप्त्यर्थं हि मानवं जन्म। चतुर्वर्गस्तु वेदादिसच्छास्त्रविश्रुतो धर्मार्थकाममोक्षलक्षणः। विद्यैकसचिवकर्मपरिशीलनफलकवैराग्यवैशद्यनिष्पाद्यश्च तदधिगम इति सर्वेऽप्यागमिनः स्वीकुर्वन्ति। विद्या च पुनर्द्विविधा, अपरा परा चेति, यत्रेदमुदाहृतं भवति :—

"तत्रापरा ऋग्वेदो यजुर्वेदस्सामवेदोऽथर्वाङ्गिरस,....परा च सा यया तदक्षरमधिगम्यते। [मुण्डकोप०]

ऐहिकधर्मार्थकामसाधनार्थपरत्वेनर्ग्वेदादयोऽप्रधानवृत्त्या 'अपरे'ति पदेन, मुख्यवृत्त्या मोक्षैकसाधनीभूतब्रह्मविद्याधिगमहेतुत्वेन च पुनरुपनिषदः 'परे'ति पदेन व्यपदिश्यन्तेतरामिति व्यक्तमेव विदुषाम्। संजेगीयते च ब्रह्मविद्येत्यपरसंज्ञयापीयमुपनिषद्विद्या। उप-नि-पूर्वकस्य विशरणगत्यवसादनार्थकस्य षद्लृधातोः क्विबन्तस्य रूपमिदमुपनिषत्। उप-उपगम्य गुरुमाचार्यमुपलभ्य वा ब्रह्मोपदेशं, तन्निष्ठतया परिशीलयतां दृष्टानुश्रविकविषयवितृष्णानां मुमुक्षूणामविद्यादेः संसारबीजस्य, नि—नितरां निश्शेषेण वा सद्-अवसादयित्री विशरणकर्त्री तद्द्वारा ब्रह्मोपगमयित्री या सोपनिषदिति तद्व्युत्पत्त्यर्थनिबन्धना सती ब्रह्मविद्यापि सा, इति वचोऽपि नितरां रोचिष्णु खलु। न चोपनिषदामेव पराविद्यात्वं कथं ? वेदेष्वपि बहुत्र तदुपदेशश्रवणात्तेषामपि पराविद्यात्वं किन्न खलु सोपपत्तिकमिति वाच्यम्, वेदेष्वप्राधान्येन उपनिषत्सु च पुनः प्राधान्येन मुख्यवृत्त्या च तदुपनिबन्धनात्। वेदेषु प्राधान्येनाभ्युदयफलकस्य, कर्मोपासनाविज्ञानसाधनस्य, भगवत्परब्रह्मप्रभाप्रत्यायकस्य, धर्मार्थकामरूपत्रिवर्गस्यैवोपदेशः। उपनिषत्सु तु मुख्यवृत्त्या ब्रह्मविद्यैकसाधनस्य त्रिविधदुःखविप्रमोक्षस्य मोक्षस्यैवोपदेश इति उपनिषदामेव परा विद्येति पदेन प्राधान्येन व्यपदेशो यौक्तिको न वेदानाम्। एतावता उपनिषदां वैशिष्ट्येन ब्रह्मविद्यात्वं संसाध्यते, न जातु वेदानां तद्वत्त्वं तावता परिबाध्यत इत्यवधेयम्।

## उपनिषदां वेदान्तत्वम्

इमाः खलु दशोपनिषदो वेदान्तपदेनापि संज्ञायन्ते। वेदान्तत्वं त्वासां वेदप्रतिपाद्येषु कर्मोपासनाज्ञानलक्षणेषु त्रिविधकाण्डेषु मुख्यत्वेनान्तिमस्य ज्ञानकाण्डस्य प्रतिपादयित्रीत्वाद्वा यजुर्वेदस्यान्तिमाध्यायात्मकेशावास्येत्यादिमन्त्रेणोपनिषदामुपक्रान्तत्वाद्वा। न चेशावास्याद्युपनिषद एव स्यान्नाम वेदान्तत्वं न पुनरन्यासामिति वक्तव्यम्। गौणत्वेनेशावास्यादिमूलकतयाऽन्यासामपि वेदान्तत्वव्यपदेशस्य सुयौक्तिकत्वात्।

## उपनिषदां प्रतिपाद्यो विषयः

केचन केवलाऽद्वैतप्रतिपादिका उपनिषद इति स्थापयन्ति। एके विशिष्टाद्वैतविधायिका इमा इत्यभ्युपगच्छन्ति। अपरे शुद्धाद्वैतपरा इति व्याहरन्ति। अन्ये शुद्धद्वैतोपदेशिका इति मन्यन्ते। परं वैदिकास्तु त्रैतवादसाधिका एव ता इतिसिद्धान्तयन्ति। तर्कयन्ति च सञ्जाघटीति तासां त्रैतवादपरत्वं वेदमूलकत्वात्। वेदमूलकत्वे त्वासां न केऽपि वादिनः प्रतिवादिनो वा संशेरते। सन्ति खलु उपनिषदो वेदमूला इति सर्वेषामेव निर्विवादमभिमतम्। एवं सति, उपनिषद्भिरपि प्रस्फुटं तद्वादपराभिरेव भवितव्यं यद्वादपरा सन्ति वेदाः। वेदाश्च त्रैतवादपरा एव। त्रैतवादं हि ते बलवत्पुष्णन्ति, यत्रेदमाम्नातं भवति :—

"उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम्।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्॥ [ऋ० १।५०।१०]

(वयं) मोक्षाभिलाषिणः (तमसः) तमःप्रधानायाः प्रकृतेः, चित्प्रकाशवैधुर्येण तमःपदमत्र प्रकृतिमभिधत्ते। (परि) उपरि (उत्तरं) उत्कृष्टतरं प्रकृत्यपेक्षयेति भावः। (ज्योतिः) चिद्रूपमात्मानं (उत्पश्यन्तः) उत्कर्षेण ज्ञानदृग्गोचरीकुर्वन्तः। आत्मानं याथात्म्यरूपेण साक्षादनुभवन्तः। (देवत्रा) दिव्यपदार्थेषु (उत्तमं) सर्वोत्कृष्टं श्रेष्ठं (सूर्यं) प्रकाशात्मक (देवं) दिव्यं ज्योतिः ज्योतिःस्वरूपं शुद्धबुद्धात्मकं परं ब्रह्मेति यावत् (अगन्म) अधिगच्छेम प्राप्नुयामेति यावत्। अत्र स्पष्टं, तमःपदेनाचेतना प्रकृतिः, तदुत्कृष्टतरत्वेन चिदात्मको जीवः, प्रकृत्यपेक्षया यदुत्कृष्टतरत्वं च तरपा द्योत्यते, तदनन्तरं, प्रकृतिजीवेत्युभयापेक्षयोत्कृष्टतमत्वम् 'उत्तमं ज्योतिः' इति तमब्विधानेन ब्रह्मणः श्रेष्ठत्वं व्यावृण्वता तत्सद्भावोऽपि ध्वनितो वेदितव्यः। तावतैव त्रैतवादपरत्वमपि वेदानां सुतरां प्रस्फुटमिति। तथाहि :—

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥"
[ऋ० १।१६४।२०]

तदेवं सति वेदानां त्रैतवादपरत्वे, नूनमुपनिषद्भिरपि त्रैतवादपराभिरेव भवितव्यं वेदमूलकत्वाभ्युपगमात्तासाम्। तच्चोपनिषल्ललामभूताया ईशोपनिषद आद्येन 'ईशावास्य'मित्यादिवचनेन सुभृशं ध्वन्यते। तत्र ईशेतिपदेनेश्वरस्य, जगदिति पदेन जडजङ्गमार्थकेन भोग्यायाः प्रकृतेः, 'भुञ्जीथा' इति क्रियापदेन, कर्त्तुर्भोक्तुर्जीवस्य च सङ्केतेनेश्वरो जीवः प्रकृतिरिति पदार्थत्रयस्य सुतरां सद्भावः प्रबोधितो भवति। एवं दरीदृश्यते तास्वन्यत्रापि भूयस्सु स्थलेषु त्रैतवाद एव समादृतः इतित्रैतवादिनो व्यवस्थापयन्ति।

परन्त्वद्वैतवादिनस्तु नैतन्मतमभिनन्दन्ति। उदाहरन्ति च स्वस्वमतप्रतिष्ठापनार्थं भूयांसि औपनिषदवचांसि—'सर्वं खल्विदं ब्रह्म नेह नानास्ति किञ्चन' इत्यादीनि। अस्ति च तेषां वाचोयुक्तिरप्यतिबलीयसी। तद्भवतु नाम यथा तथा वेत्यत्र तु तार्किका एव प्रमाणम्। उभयविधान्येव वचनानि समुपलभ्यन्ते उभयविधया च तानि सङ्गच्छन्ते। भिन्नरुचिर्हि लोकः भिन्नमतिश्च। यदेकस्य स्वदते न तदन्यस्य। यदेकस्मै रोचते न तदन्यस्मै। सत्यपि एवंभूते व्यतिकरे, वास्तविकेन यथार्थभूतेन चार्थेन त्वेकेनैव भवितव्यम् न खल्वनेकेन। तच्चात्र न ग्रन्थभूयस्त्वभिया प्रतिपादयितुमलङ्कर्मीणो वयमित्युदास्महे। उपनिषदां ब्रह्मविद्योपदेशपरत्वं तु न केऽपि संशेरते इति तु निश्चितप्रायम्।

सेयं ब्रह्मविद्यारहस्योद्घाटनकरी, विवेकवैराग्यवैशद्येनाऽविद्याध्वान्तविध्वंसनकरी, अखिलभवभयाधिव्याधिनीरुजकरी, प्रकृतिपरमात्मयथार्थस्वरूपप्रकटनकरी, त्रिविधदुःखात्यन्तप्रशमनकरी, अमन्दब्रह्मानन्दमकरन्दनिस्यन्दनकरी, विश्वशङ्करी भगवती उपनिषत्तरिरेव अलक्ष्यतीरे, निरतिशयगम्भीरेऽस्मिन् भवाब्धिनीरे निमज्जतो जनाननायासेन तत्पारं नेतुमीश्वरीति तु निर्विवादम्। अतः सा सर्वैर्मुमुक्षुभिः सुतरां सर्वात्मना संसेव्येति सर्वमवदातम्।

तदासु सर्वासु वेदान्तापरनामधेयासु, 'ईशोपनिषद्' हि खलु मूलभूता। तस्या इदमादिमं वचनम् :—

'ईशावास्यमिद ँ सर्वं यत्किञ्च जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम्॥ १॥

(इदं) परितो दृश्यमानं (यत्किञ्च) यत्किमपि प्रत्यक्षं परोक्षं वा नानाप्रत्ययगोचरं (जगत्यां) जगतीतले सततगमनशीले निखिलब्रह्माण्डभाण्डोदरे

(जगत्) चराचरात्मकं भोक्तृभोग्यलक्षमस्ति (तसर्वं) तदखिलं (ईशा) परमेश्वरेण (आवास्यम्) समन्तादन्तर्बहिश्च आच्छाद्यं व्याप्यमिति यावत् । अनेनेश्वरस्य सर्वगतत्वं सर्वव्यापकत्वञ्च ध्वन्यते। (तेन) तेन हेतुना (त्यक्तेन) स्व-स्व-पुरुषार्थानुकूलम्, ईशप्रदत्तमेव, त्यागभावेन वा (भुञ्जीथाः) उपभुङ्क्ष्व। (कस्यस्वित्) कस्यापि, स्विदिति बलवदवधारणाधायको निपातः। स्वसम्बन्धानवच्छिन्नस्यान्यस्येति भावः (धनं) उपलक्षणमेतद्, धनधान्यसाम्राज्यसमृद्धिजातवैभवं (मा गृधः) माऽभिकाङ्क्षीः दुर्वृत्त्याऽन्यायेन वा परकीयवस्तुषु लोलुपो मा भूरिति भावः। एतेन ईशितृ-भोक्तृ-भोग्य-रूपेणेश्वर-जीव-प्रकृतिरिति तत्त्वत्रयमपि प्रपञ्चितं वेदितव्यम् । तत्रेश्वरो ब्रह्मापरपर्य्यायो विभुर्निराकारः सर्वज्ञः सर्वशक्तिमान् सनातनः जगदुत्पत्तिस्थितिलयनिमित्तः । अल्पज्ञोऽल्पशक्तिकोऽणुरिच्छादिलिङ्गकः कर्मणि स्वतन्त्रो भोगे परतन्त्रो नित्यश्च जीवः । अचेतना, नित्या किन्त्वस्वतन्त्रा परिणामिनी जगतामुपादानकारणञ्च प्रकृतिरिति फलितोऽर्थः ।

अत्र 'इदमा' निर्दिष्टं यत्प्रत्यक्षं परोक्षं वा यावज्जगज्जालं वर्त्तते तत्सर्वं समन्ताद्व्याप्य परेशः ईशितृभावेनाधितिष्ठति प्रशास्ति च स एव सर्वमेतच्चराचरम्। यत्रेदं श्रुतं भवति :—

"यो विश्वस्य जगतः प्राणतस्पतिः" [ऋ० १।७।१२।५]

'तमीशानं जगतस्तस्थुषस्पतिम् ।" [यजु० २५।१८] इति ।

इति परब्रह्मण ईशितृत्वं प्रत्यक्षमेव। स एव परमकृपालुर्जगदीश्वरोऽस्य संसारचक्राभिनयस्योत्पत्तिस्थितिलयानां सूत्रधारः। जीवात्मना तु यावदायुषं शैलूषवद्रङ्गभूमावुपस्थाय स्व-स्वकर्मानुरूपफलोपभोगस्वरूपोऽभिनय एव भवति केवलमभिनेयः। तच्चानवलिप्तचेतसा न जात्ववलिप्तेनेति 'त्यक्तेने'ति पदेन संसूच्यते । सावलेपस्त्वयमभिनयन्नूनं प्रणिबध्यते पुनः पुनर्जन्ममरणबन्धपरम्परापाशेन । हीयते परमपदाद् । कुतः ? उच्यते निरीहं हि कर्मकदम्बकं फलेहाराहित्यमहिम्ना बन्धोच्छित्तये प्रकल्पते न जातु काम्यं नाम। काम्यस्तु कर्मकलापः फलेहाऽवलेपबलेन तद्बन्धकूटं सुतरां द्रढयतितरां, न तु मनाक् श्लथयति । आसक्तिवासनावागुराबद्धस्तु जीवकुरङ्गमो भुक्तय एव नियुक्तो भवति न पुनर्मुक्तय इति। तस्मान्मुमुक्षुणा स्वपुरुषार्थानुकूलं परेशप्रदत्तं सपरितोषमुपभोक्तव्यम् त्यागभावेन, न कदापि परकीयवित्तेषु मात्रयापि गृधिर्विधेयेति 'मा गृधः' इति पदेन बलवन्निषिध्यते। एतदुक्तं भवति, इयं हि नूनं पराधिकृतेषु वस्तुषु गृधिर्नाम यया समजनि समस्तोऽयं संसारो विपदामागारः ।

यदि नाम परकीयार्थेषु साम्राज्यप्रतिष्ठास्पदेषु धनधान्यादिवैभवेषु स्यादेष जीवलोको गृधिविधुरः न्यायादनपेतेषु, स्व-स्व-सत्त्वसंवलितेष्वेवार्थेषु भवेच्च निबद्धादरस्तर्हि परस्परविजिगीषा-जिहीर्षादिदुर्भावनासमुत्थविभीषिकया विजृम्भमाणो यः प्रलयोपद्रवसहोदरो विश्वव्याप्युपप्लवः स द्रागेव विलयं व्रजेत् । प्रसरेच्च समन्तात्प्राज्यमनन्तशान्तिसुखसाम्राज्यम् विन्देच्च किमप्यवर्णनीयमाभ्युदयिकं सुखमैहिकं नैःश्रेयसिकं सुखञ्च पारत्रिकम् ।

## उपनिषदां ब्रह्मविद्यात्वम्

उपनिषत्साहित्यं संस्कृतवाङ्मयेऽतीव गौरवास्पदम् । ब्रह्मविद्याऽध्यात्मविद्या पराविद्या चेति नाम्नेमाः कीर्त्यन्ते । उक्तञ्च 'द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च । तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा, कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषमिति । अथ परा या तदक्षरमधिगम्यते ।' तत्र प्रधानतः कर्मकाण्डपराणां धर्मज्ञानसाधनीभूतानां षडङ्गोपेतानां वेदानामपराविद्यात्वम् । परमपुरुषार्थसाधनीभूतानां ब्रह्मज्ञानकाण्डपराणामुपनिषदाञ्च पराविद्यात्वमिति विवेकः ।

उपनिषदः खलु वेदान्तसंज्ञयाऽपि प्रसिद्धाः । सेयं संज्ञा तासां वेदस्य अन्तं वेदान्तमित्यर्थमवष्टभ्येति प्रतीयते । सा च यजुर्वेदस्य चतुर्विंशतितमादन्तिमादध्यायादुपनताया 'ईशावास्योपनिषद' एवोपनिषदामारम्भणहेतुत्वादुपपद्यते । उपनिषच्छब्दोऽयं विशरणगत्यवसादनार्थात् सदेर्धातोः क्विप्प्रत्ययान्तान्निष्पन्न इत्युक्तपूर्वम् । सेयमविद्यादिसंसारबीजविशरणपटीयसी ब्रह्मविद्यापदवाच्या उपनिषद् विद्या वेदमूलकत्वाद् वैदिकानेव राद्धान्तान् प्रतिपादयन्ती न खलु कथञ्चिदंशतोऽपि ततः प्रस्खलन्ती विलसति । परन्तु शब्दमात्रतो न जात्वर्थतोऽवभासमानं, यन्मतद्वैविध्यं श्रुतिमूलके ग्रन्थे न प्रयत्नसहस्रेणापि तच्छक्यं सम्भावयितुम् । वस्तुतो यथार्थमर्थमनवगच्छतामेव किञ्चिद्विभ्रमपिहितचेतसामेवोपनिषत्सु विरुद्धा विभिन्नाश्च पन्थानः सन्तीति मतमभिमतं सम्भवेन्न कदाचित्प्रज्ञानोन्मीलितचक्षुषाम् सचेतसाम् । यतो ज्ञानं हि खलु तत्त्वनिष्ठं न कर्हिचिद् बुद्धिनिष्ठम् । बुद्धिभेदात् तत्त्वभेदमुन्मत्तं विना को नामोररीकुर्यात् ?

## उपनिषदां वेदमूलकत्वम् न जात्वपौरुषेयत्वम्

तत्रैतरेयोपनिषदनुबध्नाति ऋग्वेदम् । केनोपनिषच्छान्दोग्योपनिषच्च सामवेदम् । ईश-तैत्तिरीय-बृहदारण्यकोपनिषदो यजुर्वेदम् । प्रश्न-मुण्डकोपनिषच्चा-

थर्ववेदम् । एवं सति श्रुतिमूलकत्वे उपनिषदां, कथङ्कारमिव तद्विप्रतिपन्नानां विषयाणां सन्निवेशस्तत्र शक्यसम्भवः । मूलभूतानां वेदानां गूढार्थान् तात्पर्यपर्यालोचनपुरस्सरं वैशद्येनावगमयितुमेव उपनिषदां प्रवृत्तिः । तत्कथमिव तास्तात्पर्यांशे तन्मूलभूतेभ्यो वेदेभ्यो भिद्येरन् । भिद्यमानाश्च प्रज्ञावतां वेदविदां श्रद्धामाराधयितुं कथं कल्पेरन् यथार्थतत्त्वप्रतिपत्तये । अनादिनिधना अपौरुषेयाश्च वेदगिरः । उपनिषदश्च पुनः पौरुषेयाः । सत्यं ता अपौरुषेयगीर्मूलकाः न खलु तावता अपौरुषेयपदव्यपदेश्या भवितुमर्हन्तीति ।

वस्तुतः उपनिषत्सु द्वैताद्वैतावुभावपि पक्षौ प्रतिपादितौ दृश्येते । उपनिषत्सु श्रीशङ्कराचार्योऽद्वैतमेव पल्लवितमाकलयति, रामानुजाचार्यो विशिष्टाद्वैतवादम्, निम्बार्काचार्यो द्वैताद्वैतवादं, वल्लभाचार्यो विशुद्धाद्वैतवादं, मध्वाचार्यश्च पुनर्द्वैतवादमेवेति । तदेवमेकान्ततो विलक्षणमेव प्रतिभाति, यद्विविधैः आचार्यैस्तासु कथङ्कारमिव ते ते मिथोविलक्षणाः सिद्धान्ताः समुद्भाविता उपपादिताश्च । सति एवंविधे व्यतिकरे को नामात्र न मुह्येत्, कतमं वा सिद्धान्तमुपनिषदां प्रतिपाद्यविषयत्वेनोन्नयेद् इति । तथापि द्वैतवादप्रणयिनो भूम्ना व्यवतिष्ठन्ते यदुपनिषदां वेदमूलकत्वाद् वेदेषु द्वैतवादस्य प्रव्यक्तं प्रतिपादितत्वाच्च कः खलु वेदान्नितरां प्रतीपमद्वैतवादं तद्विषयत्वेन सिद्धान्तयितुमुत्सहेत इति ।

तस्माद् आपाततः क्वचिदवभासमानोऽपि तासु खलु अद्वैतवादो न वास्तविकत्वेनोन्नेयः । वेदे च द्वैतवादसिद्धान्तः

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ।। इति ।।
[ऋ० १।१६४।१६]

इत्याद्यनेकमन्त्रलिङ्गैश्च प्रस्फुट एव लक्षितः । परमत्राद्वैतवादिनो विप्रतिपद्यन्ते । सति एवंविधे महति विरोधे समुपस्थिते यथामति यथाश्रुति च विद्वांस एव कमपि मध्यस्थितं समन्वितं पन्थानमाविष्कर्त्तुं प्रभविष्णवः । नूनं तयोः कतरः पक्षो गरीयानिति व्यवस्थापयितुमतीव दुष्करम् । वस्तुतस्तु उपनिषदां विषये, विभेदविशेषमवगाहमानं तत्त्वद्वयमेव प्राधान्येन बुद्धिपद्धतिमवतरति । तत्रैके, इमाः अद्वैतपरा इति परामृशन्ति । अपरे द्वैतपरा इत्येकम् । द्वितीयन्तु एके ज्ञानकाण्डपरा इमा इति प्रतिपादयन्ति । इतरे ज्ञानकर्मसमुच्चितं कर्ममार्गमिमा निर्दिशन्तीत्यभ्युपयन्तीति । परं तात्त्विकदृशा विमृश्यमाने तु प्रतिभाति यदुक्तावुभावपि कल्पौ न बुद्धिसहौ कुतश्चेदुच्यते :—

कर्ममार्गप्रतिपन्थिज्ञानकाण्डमेव उपनिषदां विषय इतिवादिनोऽनुयोक्तव्याः कर्मान्तरेण केवलं तत्त्वज्ञानं पङ्गु, तत्वज्ञानविक्लवश्च कर्मकलापोऽप्यन्ध एव। तदुभे इमे इतरेतरविधुरे मानवजीवनस्य उपनिषद्भिश्चरमोद्देश्यत्वेन व्यवस्थापिते मोक्षाधिगमेऽक्षमतां गते उपनिषन्निर्दिष्टोद्देशात्प्रच्यवमाने कथमिव तत्सिद्धान्तमुपपादयितुं परिवृढे स्याताम्। न कथमपि। अतः ज्ञानकर्मसमुच्चयसिद्धान्त एव वरीयान्। स एव केवलमुपनिषदां चरमप्रयोजनं साधयितुं यथा क्षमः, न तथा केवलं कर्म, नाऽपि केवलं ज्ञानमेवेति, अपितु ज्ञानसहकृतकर्मैव तत्साधकम् इति विवेकः। उक्तञ्च :—

विद्याञ्चाविद्याञ्च यस्तद्वेदोभय ँ सह।
अविद्यया मत्युं तीर्त्वा विद्ययाऽमृतमश्नुते॥

ये पुनरुपनिषत्सु एकात्मवादिनो जीवात्मपरमात्मनोरद्वैतं प्राधान्येन सिद्धान्तयितुमुद्दिशन्ति ते प्रायः छान्दोग्योपनिषदः षष्ठाध्यायगतैर्नवभिः खण्डैर्विशदीकृतानि वचनानि समुदाहरन्ति स्वमतोपोद्वलकरूपेण। तद्यथा :—

"ऐतदात्म्यमिदं सर्वं तत्सत्यम् स आत्मा तत्त्वमसि श्वेतकेतो इति।" 'तत्त्वमसी' त्यत्रैव सर्वेषामुपनिषद्वचनानामन्वयः। इत्थमेव बृहदारण्यकोपनिषद्यपि अयमेव विषयो भङ्ग्यन्तरेण प्रतिपादितः। तद्यथा "य एवं वेद अहं ब्रह्मास्मीति स इदं सर्वं भवति तस्य ह न देवाश्च न भूत्या ईशते। आत्मा ह्येषां भवतीति।" अपिच प्राज्ञो याज्ञवल्क्यः सर्वसङ्गपरित्यागेनारण्यं प्रतितिष्ठासुः स्वपत्न्या मैत्र्या पृष्टः प्रत्याह :—

"यथा सैन्धवः खलु उदके प्रास्तः उदकमेव अनुविलीयते, न अस्य उद्ग्रहणाय इव स्यात् यतो यतस्त्वाददीत लवणमेव वैवं वा अरे इदं महद्भूतं अनन्तपारं विज्ञान एव एतेभ्यो भतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्तीति।" किञ्च 'यथोर्णनाभिस्तन्तुनोच्चरेत्।' एवं बृहदारण्यकेऽपि "य एवमेतद्विदः ये च श्रद्धामुपासते ते देवलोकं सूर्यञ्च प्रविश्य पश्चात् ब्रह्मलोकं प्रपद्यन्ते यतस्ते न पुनरावर्त्तन्ते।" अथ ये यज्ञेन दानादिसत्कर्मणा वा सुकृतिनो भवन्ति ते पितृलोकं प्रविश्य पश्चात् चन्द्रमसं प्राप्नुवन्ति। क्षीणे पुण्ये च पुनरावर्त्तन्ते। ये खलु पृथिव्यादिषु नानायोनिषु जनुः प्रपद्य अन्ते मनुष्यजातौ जायन्ते अकर्माणस्तु कीटाः पतङ्गा दन्दशका वा भवन्ति।" इति।

परमद्वैतवादिनो मतमिदं बलवन्निराकुर्वन्ति निम्नाङ्कितं माण्डूक्योपनिषद्वचनमालम्ब्य। तद्यथा :—

"ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति। सर्वमोङ्कार एव। यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव ॥ १ ॥

अत्र शाङ्करञ्च भाष्यं प्रमाणत्वेन पुरस्कुर्वन्ति :—

"अभिधानाभिधेययोरेकत्वेऽपि अभिधानप्राधान्येन निर्देशः कृतः। ओमित्येतदक्षरमिदं सर्वमिति। अभिधानप्राधान्येन निर्दिष्टस्य पुनरभिधेयप्राधान्येन निर्देशः। अभिधानाभिधेययोरेकत्वप्रतिपत्त्यर्थः" इति।

तदेवमेतेषु वैविध्येनावभासमानेषु मिथः प्रतीपभावेषु को वा एषां सिद्धान्तः याथार्थ्यसंवलितः इति निर्णेतुं प्रवृत्तानां मतिमतामपि मतिवैक्लव्यं कियद्यावन्नापद्येत। स्थान एव केचन व्यवस्थापयन्ति यद् विवरणनिरपेक्षतात्पर्याशयस्तु दुरधिगमः। निसर्गतोऽप्रतिपत्तिर्विप्रतिपत्तिरन्यथाप्रतिपत्तिर्वा सम्भवेदेव यत्र तत्र। यथा 'आयुर्वै घृतम्" इति वाक्यं वाच्यार्थे बाधितं लक्ष्यार्थे प्रवर्त्तते। एवं 'आदित्यो यूपः', "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" एवमन्यान्यपि वचनानि मुख्यार्थे बाधितानि गौणेऽर्थे प्रवर्त्तन्ते। प्रकरणविद् हि अर्थज्ञश्चक्षुष्मान् एतज्ज्ञातुं शक्नोति यदत्रेदमभिधेयमिति न जातु शब्दमात्रधिषणः। तस्मात् प्रकरणविद् भगवान् बादरायणः सकलार्थं प्रातिभेन चक्षुषा प्रत्यक्षीकुर्वाणः औपनिषदमर्थमवगमयितुं विप्रतिपत्तीश्चोपपत्तिभिर्निरसयितुं सूत्राणि निर्ममे इति।

किञ्च :—

"यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवा. सर्वाणि भूतानि व्युच्चरन्तीति।"

मुण्डकोपनिषद्यपि :

'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नाम रूपे विहाय।

तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्।

एवमन्यत्रापि आत्मैकमूलकत्ववादीन्यौपनिषदानि वचनानि उदाह्रियन्ते :—

'आत्मैवेदमग्र आसीत्पुरुषविधः।'

"आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत्।"

'स ऐक्षत लोकान्नु सृजा इति।"

"तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद् वायुः वायोरग्निः अग्नेरापोऽद्भ्यः पृथिवी।" इत्यादीनि

'सत्यं ज्ञानमनन्तं ब्रह्मे'ति यदुपक्रमे प्रस्तुतं ब्रह्म तदेव 'तस्माद्वा एतस्मादात्मन' इत्यत्रात्मशब्देन निर्दिश्यते। एतावता सिद्धं यः सर्वस्य कारणमात्मा सोऽयमानन्दमयः परमब्रह्मेति। यद्यपि एषु वचनेषु अद्वैतवादः एकान्ततः आपातरम्यरूपे-

णाभिलक्ष्यते, तथापि सूक्ष्मेक्षिकया निरीक्षणेन एषु वचनेषु द्वैतवादोऽपि दुरपह्नव इवाभाति। द्वैतवादिनोऽपि उपनिषदर्णवादेव स्वमतोपपादकानि भूयांसि वचांसि समुद्धृत्य पुरस्कुर्वन्ति, समुदाहरन्ति च :—

"ईशावास्यमिदं सर्वं यत्किञ्चिज्जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्य स्विद्धनम्।" (ईशोपनिषत्)

अत्र सुस्पष्टमीश्वरो जीवः प्रकृतिश्चेति त्रित्वमुद्दिश्य त्रैतवादस्समुट्टङ्कितो बाभाति।

एताः सर्वा अपि उपनिषदः नैव लौकिकपदार्थानां तत्त्वार्थं मुख्यतया विचारयन्ति, प्राधान्येन त्वाख्यानरूपेण वाद-प्रतिवादरूपेण वा अलौकिकमात्मतत्त्वमेव ताः समर्पयन्ति। तत्र प्रकीर्णतया अव्यवस्थमुपवर्णिता विषया एव पश्चात्काले वेदान्तसन्दर्भेषु यथायथं सूपपत्तिपुरस्सरं व्यवस्थापिताः।

## उपनिषदामाविर्भावकालः

उपनिषदामाविर्भावकालः इदमित्थन्तया निर्धारयितुं दुःशकः तथाप्येता विभिन्नकालविरचिता इति तासां भाषासरणिमभिलक्ष्य वक्तुं शक्यते। तत्र प्रथमकालसम्भवाः क्रमेण ईश-केन-कठ-प्रश्न-मुण्डक-माण्डूक्याभिधानाः। ततो बृहदारण्यक-छान्दोग्य-तैत्तिरीय-ऐतरेय-आद्याः गद्यपद्यमय्य उदयमासेदुः। ब्राह्मणग्रन्थभाषासरणिमवलम्ब्य निबद्धास्ताः सारल्येन सौन्दर्येण च सचेतसां चेतांसि हठादावर्जयन्त्यो विलसन्ति।

ऐतरेयोपनिषद् : 'ऐतरेयोपनिषत्' केवलमध्यायत्रयोपनिबद्धा। तत्र प्रथमाध्याये ब्रह्मणः सृष्टिकर्त्तृत्वं प्रतिपादितं, द्वितीयाध्याये आत्मनो जन्मादिप्रतिपादनपुरस्सरं जन्मविच्छित्तिरूप एव मोक्षो निरूपितः, तृतीयाध्याये च पुनः आत्मनः स्वरूपं विविच्य अन्ते प्रज्ञाया ब्रह्मत्वं सिद्धान्तरूपेण व्यवस्थापितम्। सर्वासूपनिषत्सु अल्पिष्ठा तु मांडूक्योपनिषद्। आसां बृहत्तमोपनिषद् बृहदारण्यकाख्या। ततः किञ्चदिव लघीयसी च छान्दोग्योपनिषद्। यद्यपि बहूनां नयेन उपनिषदां प्राधान्येन सिद्धान्तयितुमिष्टोऽर्थः जीवब्रह्मणोरद्वैतरूपः, तथाप्यन्येऽत्र त्रैतवादमपि जिघ्रन्ति। उपपत्तिरूपेण च ते 'ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्। तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यचिद्धन'मित्येवमादिमन्त्रान् पुरस्कुर्वन्ति। परमद्वैतवादिनः इतोऽपि बलवत्तरं छान्दोग्योपनिषदः षष्ठाध्यायगतं प्रकरणमवष्टभ्य द्वैतवादमेव मुख्यविषयत्वेनोपनिषदामुपोद्बलयन्ति। यथा हि :—

"ऐतदात्म्यमिदं सर्वं तत्सत्यम् स आत्मा तत्त्वमसि श्वेतकेतो।" इति 'तत्त्वमसीत्यत्रैव सर्वासामुपनिषदामन्वय इति प्रतिपादयन्ति। अयमेवार्थो बृहदारण्यकोपनिषद्यपि भङ्ग्यन्तरेण प्रतिपादितः—'य एवं वेदाहं ब्रह्मास्मीति, स इदं सर्वं भवति। तस्य ह न देवाश्च नाभूत्या ईशते आत्मा ह्येषां भवतीति।"

अस्य विश्वात्मकस्य ब्रह्मणः स्वरूपविशेषस्य विशदीकरणाय उपनिषत्सु उच्चावचा दृष्टान्ता अपि प्रदिष्टाः। बृहदारण्यकोपनिषदि हि महर्षिः याज्ञवल्क्यः सर्वसङ्गपरित्यागेन वनं प्रतितिष्ठासुः स्वपत्न्या मैत्रेया पृष्टः प्रत्युवाचः—

"यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयते। न हास्योद्ग्रहणाय वा स्यात्। यतो यतस्त्वाददीत लवणमेवैव वा अर इदं महद्भूतमनन्तमपारं विज्ञान एव। एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविशति न प्रेत्य संज्ञास्तीति।" [बृह० २।१।१०]।

एवमन्यत्रापि तस्यामेवोपनिषदि श्रूयते:—

'यथोर्णनाभिस्तन्तुनोच्चरेत्। यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि च भूतानि व्युच्चरन्ति' इति। (२-१-१०)।

बृहदारण्यकोपनिषदस्तृतीयाध्यायस्य षष्ठतमब्राह्मणे गार्गी-याज्ञवल्क्ययोः प्रश्नोत्तराणि अतीव रुचिराणिः:—

"अथ हैनं गार्गी वाचक्नवी पप्रच्छ। याज्ञवल्येति होवाच यदिदं सर्वमप्स्वोतञ्च प्रोतञ्च कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति। वायौ गार्गीति।
कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेति। अन्तरिक्षलोके गार्गीति।
कस्मिन्नु खल्वन्तरिक्षलोका ओताश्च प्रोताश्चेति। गन्धर्वलोके गार्गीति॥
कस्मिन्नु खलु गन्धर्वलोका ओताश्च प्रोताश्चेति। आदित्यलोके गार्गीति।
कस्मिन्नु खलु आदित्यलोका ओताश्च प्रोताश्चेति। चन्द्रलोके गार्गीति॥
कस्मिन्नु खलु चन्द्रलोका ओताश्च प्रोताश्चेति। नक्षत्रलोके गार्गीति॥
कस्मिन्नु खलु नक्षत्रलोका ओताश्च प्रोताश्चेति। देवलोके गार्गीति।
कस्मिन्नु खलु देवलोका ओताश्च प्रोताश्चेति। इन्द्रलोके गार्गीति॥
कस्मिन्नु खलु इन्द्रलोका ओताश्च प्रोताश्चेति। प्रजापतिलोके गार्गीति।
कस्मिन्नु खलु प्रजापतिलोका ओताश्च प्रोताश्चेति। ब्रह्मलोके गार्गीति॥
कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति। स होवाच गार्गि मा अति प्राक्षीर्मा ते मूर्द्धा व्यपप्तदनतिप्रश्न्यां वै देवतां पृच्छसि गार्गीति। ततो ह गार्गी वाचक्नव्युपरराम॥"

एवमेतस्य प्रश्नजातस्यायमेवाशयः, यत्सर्वमप्येतत्प्रपञ्चजातं भगवतो ब्रह्मण एव रूपमिति ।

## उपनिषदामुपदेशाः

उपनिषत्सु आख्यानरूपेण बहवो दिव्या उपदेशाः समुपलभ्यन्ते ये तेऽपि दिङ्मात्रमत्र प्रणिभालनीयाः । तथा च कठोपनिषदि प्रेत्यभावविषयकं तत्त्वमाख्यानरूपेण प्रतिपादितम् । यच्च नाचिकेतमुपाख्याननाम्ना प्रसिद्धम् । तद्यथा नचिकेता नाम कश्चिदृषिकुमारः कदाचित् यमलोकं गतः । तत्र यमेनाभ्यर्थितः स यमाद्वरत्रयमवृणोत् । तेषु वरेषु तृतीयो वरः मरणानन्तरं मनुष्योऽस्ति न वेत्येतज्जिज्ञासात्मकः[1] । तन्निशम्य यमस्तं प्रत्याह :—

'दैवेरत्रापि विचिकित्सितं पुरा, नाणुरेष धर्मः, तस्मादन्यं वरं नचिकेतो वृणीष्वेति ।" इत्थं विवृण्वन् नानाविधैः रमणीयरूपैः स्पृहणीयभोग्यवस्तुभिः प्रलोभयन्नपि यमो यदा नचिकेतसो दृढ़तरं चेतो विचालयितुमशक्नुवन् तस्य च तत्त्ववि ानासक्त्या भक्त्या च सन्तुष्टस्तस्मै जननमरणे केवलं विकृतिरूपे, ब्रह्मज्ञानेनैव ते तीर्त्वा पुरुषः मोक्षपदमुपैतीत्येवमादिलक्षणां ब्रह्मविद्यामुपदिदेश :—

यदा सर्वे प्रमुच्यन्ते, कामा येऽस्य हृदि स्थिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ।। [कठ० ६-१४]

इत्येवमादि ।

यथा द्वैतवादिनः स्वपक्षे कठोपनिषदः —

'ऋतं पिबन्तौ सुकृतस्य लोके, गुहां प्रविष्टौ परमे परार्द्धे ।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ।।

इत्युदाहरन्ति, तथा द्वैतवादविरोधिनोऽपि स्वपक्ष उपनिषदामन्यानि वचांसि पुरस्कुर्वन्ति । द्वैतवादं शब्दतः खण्डयन्त आहुः —

मनसैवेदमाप्तव्यं नेह नानाऽस्ति किञ्चन ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ।। [२।१।११]

केनोपनिषद् :—सामवेदीयतवलकारशाखासम्बन्धिनी 'केने' ति तदारम्भकशब्दमालम्ब्य केनोपनिषत्तवलकारेत्यपरनामधेया खण्डद्वयात्मिका विविधविषयमण्डिता विलसति । तस्याः पद्यमये प्रथमखण्डे सगुण निर्गुणब्रह्मणोरुपास्यानुपास्ययोः भेदः प्रदर्शितः । तत्र ब्रह्मणो दुर्ज्ञेयताविषये प्राह :—

---

१. 'येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके ।
एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः ।।

'न तत्रचक्षुर्गच्छति न वाग्गच्छति नो मनः।
न विद्मो न विजानीमो, यथैतदनुशिष्यात्॥'[1] इति

द्वितीयखण्डे च अग्न्यादिदेवानां सर्वथैव ब्रह्मायत्तत्वं तेषां शक्तेः ब्रह्मसम्भूतत्वञ्च प्रतिपादितम्। सेयं तवलकारशाखेदानीं प्रचारवैरल्यं गता।

कठोपनिषद् :—कठोपनिषदियंय जुर्वेदीयकठशाखान्तर्गता। केनापि कठनाम्ना ऋषिणा प्रोक्ता शाखा कठा, तदन्तर्गतोपनिषदपि कठा एव। 'कठचरकाल्लुगि'ति तद्धितप्रत्ययस्य लुक्। कठशाखा त्विदानीं नोपलभ्यते, तदन्तर्गतोपनिषन्मात्रमेवोपलभ्यते। उपनिषदन्तरवदस्यामपि ब्रह्मविद्योपदेश उपाख्यानरूपेण मुमुक्षुकल्याणाय कृतः। वाजश्रवोनामा कश्चिदृषिः स्वात्मजाय नचिकेतसे ब्रह्मविद्योपदेशञ्चकार। तद्दिङ्मात्रमिहोपदिश्यते। हे नचिकेतः

स त्वं प्रियान् प्रियरूपांश्च कामानभिध्यायन्नचिकेतोऽत्यस्राक्षीः।
नैतां सृङ्कां वित्तमयीमवाप्तो, यस्यां मज्जन्ति बहवो मनुष्याः।
[कठ० १।२।३]

तदनु श्रेयसः प्रेयसश्च फलं विवृण्वन्नाह यमाचार्यः

दूरमेते विपरीते विषूची, अविद्या या च विद्येति ज्ञाता।
विद्याभीप्सिनं नचिकेतसं मन्ये, न त्वा कामा बहवोऽलोलुपन्त।
[कठ० १।२।४

किञ्च :—

अविद्यायामन्तरे वर्त्तमानाः स्वयं धीराः पण्डितं मन्यमानाः।
दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः॥
[कठ० १।२।५]

---

१. यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपम्।
यदस्य त्वं यदस्य देवेष्वथ नु मीमांस्यमेव ते मन्ये विदितम्॥
[केन० २।१]

"नाहं मन्ये सुवेदेति नो न वेदेति वेद च।
यो नस्तद्वेद तद्वेद नो न वेदेति वेद च॥ [केन० २।२]
यस्यामतं तस्य मतं मतं यस्य न वेद सः।
अविज्ञातं विजानतां विज्ञातमविजानताम्॥ [केन० २।३]
प्रतिबोधविदितं मतममृतत्वं हि विन्दते।
आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम्॥ इत्यादि
[केन० २।४]

न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् ।
अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥
[कठ० १।२।६]

ततो ब्रह्मनिष्ठो यमाचार्यो व्याजहार :—
'विवृतं सद्म नचिकेतसं मन्ये ।' [कठ० १।२।१३]

ततो नचिकेताः प्राहः—भगवन् यदि भवन्तः प्रसीदन्ति तर्हि :—
अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् ।
अन्यद् भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥
[कठ० १।२।१४]

इति नचिकेतसाऽभ्यर्थितो यम आह प्रणवमहिमानं विवृण्वन् :—
सर्वे वेदा यत्पदमामनन्ति, तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति, तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत् ॥
[कठ० १।२।१५]

'ओमिति' ब्रह्मणः प्रतीकम् । प्रणवमुपदिश्यात्मनः स्वरूपमुपवर्णयति :—
न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतोऽयं पुराणो, न हन्यते हन्यमाने शरीरे ॥
[कठ० १।२।१८]

पुनरात्मस्वरूपं विशदयति :—
हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥
[कठ० १।२।१९]

पुनः परमात्मस्वरूपमुपदर्शयन्नाह :—
अणोरणीयान् महतो महीयान्,
आत्मास्य जन्तोर्निहितो गुहायाम् ॥ [कठ० १।२।२०]

ततस्तद्ब्रह्मावाप्तिविधिं बोधयति :—
'नायमात्मा प्रवचनेन लभ्यो, न मेधया न बहुना श्रुतेन ।
यमैवेष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥
[कठ० १।२।२३]

ब्रह्मज्ञानमन्तरा शाश्वती शान्तिर्नाप्यते :—

'नित्यो नित्यानां चेतनश्चेतनानाम्,
एको बहूनां यो विदधाति कामान्।
तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां शान्तिः शाश्वती नेतरेषाम्।। [कठ० २।२।१३]

किञ्च 'अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुते ।। [कठ० २।३।१४]
अस्या उपनिषद 'एतावदनुशासनम्' इति ।

प्रश्नोपनिषद् :—प्रश्नोपनिषदियं अथर्ववेदीयपिप्पलादशाखान्तर्गता । प्रश्नोपनिषदिति च नामधेयं तत्प्रतिपाद्यविषयजातं प्रश्नोत्तरप्रधानमितिकृत्वा-वधेयम् । तत्राद्यकण्डिकायां षड्षयः वेदान्तविषयकान् षट् प्रश्नानवातारयन् । तेषामुत्तराणि च पिप्पलादर्षिणा प्रतिपादितानि । ते च षट् प्रश्नाः यथाक्रमं प्रजापतेः सकाशात् प्रकृतिप्राणयोः सृष्टिम्, इन्द्रियान्तरापेक्षया प्राणानां प्राधान्यं, प्राणादीनां स्वरूपविभागौ, स्वप्नसुषुप्ती, ओङ्कारस्य ध्यानं, मनुष्यस्य षोडशकलाश्चाधिकृत्य प्रवृत्ताः । अस्यां प्रश्नोपनिषदि प्रत्यगात्मलक्षणप्राणादिसूक्ष्मतत्त्वनिरूपणपुरस्सरं क्रमशोऽध्यात्मविद्या समुपदिष्टा । तत्र षट्सु प्रश्नेषु आदिमः प्रश्नः जगतः कारण-विज्ञानार्थमवतारितः । विज्ञाते हि कारणे कार्यं सुतरां विज्ञातं भवति । साधनेषु सत्स्वेव सिद्धिः सम्भवति, न तेष्वसत्सु । साधनत्वेन चान्तःकरणशुद्धिपुरस्सरं प्रकृतिपुरुषयोः स्वरूपज्ञानमुपदिष्टम् । कबन्धिकात्यायनस्य 'कुतो ह वा इमाः प्रजाः प्रजायन्ते' इति प्रश्नोत्तरे प्राह :—

'प्रजापतिः स तपोऽतप्यत स तपस्तप्त्वा मिथुनमुत्पादयते रयिञ्च प्राणञ्चे-त्येतौ मे बहुधा प्रजाः करिष्यत इति' ।। (प्रश्न ८)

पुरुषं निरूपयन्नाह पिप्पलादः—

"एष हि द्रष्टा, स्प्रष्टा, श्रोता, घ्राता, रसयिता, मन्ता, बोद्धा, कर्त्ता, विज्ञानात्मा पुरुषः।" (प्रश्न० ९-४) ।

स एव विजिज्ञासितव्यत्वेनोपदिष्टः ।

य इमं परमपुरुषं प्रतिपद्यते स 'सर्वज्ञः सर्वो भवति" तथा चाहुर्भगवच्छ-ङ्कराचार्यचरणाः—

"यः शान्तं सबाह्याभ्यन्तरमजं विजानाति स सर्वज्ञो भवति नाम। तेना-विदितं न किञ्चित्सम्भवति।" इति तदैकात्म्यविदः फलम् इति। एवंविधा अन्ये प्रश्नास्तत्रैवाऽनुसन्धेयाः इत्यास्तां विस्तरः।

# उपनिषत् परिशिष्टम्

उपनिषत्सु संवादरूपेणातीव मनोहरा उपदेशाः समुल्लसन्ति। तेषां केचनात्रोदाह्रियन्ते। ऐतरेयोपनिषदः पञ्चमाध्यायस्य द्वितीये ब्राह्मणे देवमनुष्यासुरान् स्वपुत्रान् प्रति प्रजापतेरुपदेशः--

तत्र त्रयः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्या असुराश्च। उषित्वा ब्रह्मचर्यं देवा ऊचुः। ब्रवीतु नो भवानिति तेभ्यो हैतदक्षरमुवाच द इति। व्यज्ञासिष्टा ३ इति। व्यज्ञासिष्मेति होचुर्दाम्यतेति आत्थेत्योमिति होवाच व्यज्ञासिष्टेति। इत्यादि।

अस्य सन्दर्भस्यायमाशयः--त्रिसङ्ख्याकाः प्राजापत्याः (प्रजापतेरपत्यानि) देवा मनुष्या असुराश्च, प्रजापतिसमभ्यरणे ब्रह्मचर्यमूषुः। ब्रह्मचर्यमुषित्वा तेषु प्रथमं देवा ऊचुः प्रजापतिं, यद् ब्रवीतु भवान् अस्मभ्यं यदनुशासनं भवतामिति। स वर्णमात्रमुवाच 'द' इति। ततः पप्रच्छ च तान् ममोपदेशार्थमुपदिष्टस्याक्षरस्यार्थं विज्ञातवन्तो न वा? देवा ऊचुः विज्ञातवन्तो वयम्। यद्येवमुच्यतां कोऽर्थ इति। ते ऊचुः 'दाम्यत' इत्यभिप्रायार्थः 'दकार' इति। अदान्ता वयं निसर्गतः अतो दान्ता भवतेति भवतामुपदेशः। स आह ओमिति सम्यग्विज्ञातवन्तः। ततः मनुष्यास्तथैव कृतवन्तः ते 'द' इत्युत्तरं लब्ध्वा ऊचुः, स्वभावतो लुब्धा वयं, 'दत्त' इत्युपदेशः। एवमेव असुरा अपि 'द' इत्युत्तरमवाप्य ऊचुः वयं सहजगत्या क्रूराः, हिंसादिपरा अतो 'दयध्वं' दकारार्थः प्राणिषु दयां कुरुतेत्यभिप्रायपरः। ततः प्रजापतिरुवाच 'तदेतदेव दैवी वागनुवदति स्तनयित्नुर्द-द द इति दाम्यत, दत्त, दयध्वमिति। तदेतत्त्रयं शिक्षेत दमं दानं दयामिति। तदेतत्त्रयं हितमभीप्सुना जनेनावश्यमेवानुष्ठेयम् इत्युपदेशनिष्कर्ष इति।

वस्तुतस्तु मनुष्या एव उत्तमैर्गुणैस्सम्पन्ना देवाः। त एव हिंसादिपरा असुराः, लोभप्रधाना मनुष्याः। मनुष्या एवादान्तत्वादिदोषत्रयमपेक्ष्य देवादिसंज्ञां लभन्ते। एवं सत्वरजस्तमांस्यनुसन्धाय ते तत्तत्पदभाजो भवन्ति। तस्मान्मनुष्यैः पूर्वोक्ततत्त्वत्रयं दकारोपलक्षणमनुष्ठेयमिति भावः।

तात्त्विकदृशा विचार्यमाणे, विज्ञातं भवति यदुपनिषद्ग्रन्था अध्यात्मविद्याप्रधानाः। तासु संवादरूपेणाख्यानरूपेण च विविधा विद्याः समुपदिष्टाः। सर्वेषां संवादानां तात्पर्यविषयीभूतोऽर्थः आत्मानमधिकृत्यैव प्रस्तुतः। छान्दोग्योपनिषद् बृहदारण्यकोपनिषच्चेति उपनिषद्द्वयम् अतीव बृहदाकारकम्। तत्र छान्दोग्यं हि सामवेदस्य तवलकारशाखाया उपनिषद् अष्टाध्यायप्रणिबद्धा। तत्र प्रथमे द्वितीये च भागे--

'ओमित्येतदक्षरमुद्गीथमुपासीत ।
ओमिति ह्यु द्गायति तस्योपव्याख्यानम् ।

इत्यादिवचोभिः ओङ्कारोद्गीथसाम्नां विस्तृता व्याख्या समुपासना चोद्दिष्टा, तृतीये मधुनाडी अमृतोपासना ब्रह्मणश्च वर्णनम् विवृतम् । अत्रैव घोराङ्गिरसनाम्नो महर्षेः श्रीकृष्णेन ब्रह्मविद्या उपार्जितेत्यपि वर्णितम् । चतुर्थे च सत्यकाम-जाबालयोः प्रख्याता कथाऽङ्किता । जनश्रुति-रैक्वकथा विविधाग्नीनाञ्च विवरणम् । पञ्चमे श्वेतकेतु-आरुणेयेन प्रवाहण-जैबलि-अश्वपति-केकय-नामकेभ्यः ब्रह्मविद्याप्राप्ति-वर्णनम् । षष्ठे च उद्दालकारुणेयात् तदात्मजेन श्वेतकेतु-आरुणेयेन ब्रह्मज्ञानावाप्ति-विवेचनम् । सप्तमे च नारदमुनेः सनत्कुमारात् सत्य-मति-श्रद्धा-निष्ठा-कृति-भूमा-दीनां ज्ञानग्रहणचर्चा । ततश्चाष्टमे आत्मब्रह्मप्रजापतिविषयको गंभीरविचारः । इन्द्रविरोचनयोरपि प्रख्याताख्यायिकाया अपि अस्मिन्नेव वर्णनम् ।

तदेतदुपनिषच्चक्रे--श्वेताश्वतरोपनिषदपि अतिमहत्वशालिनी ब्रह्मविद्या-त्वेन समाद्रियते । श्वेताश्वतराभिधकृष्णयजुर्वेदसम्बन्धादियं श्वेताश्वतरनाम्ना जेगीयते इति केचित् साम्प्रदायिकाः, परमत्रान्ये विप्रतिपद्यमाना समाचक्षते यदियं श्वेताश्वतरनाम्ना केनापि ऋषिणा प्रोक्तत्वात् तन्नाम्ना व्यवह्रियते । उपनिषदियं कठोपनिषदोऽर्वाचीना सम्भाव्यते । यतोऽस्यां काठकीया बहवः सन्दर्भाः क्वचित्कि-ञ्चिद्विकृताः क्वचिदविकृताश्चोपलभ्यन्ते । अस्याः प्रसिद्धो मन्त्रो द्वैतसिद्धान्त-प्रतिपादको निम्नाङ्कितः--

'अजामेकां लोहितशुक्लकृष्णां
बह्वीः प्रजाः सृजमानां स्वरूपाः ।
अजो ह्येको जुषमाणो ऽनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः ॥

अपिच--

'द्वा सुपर्णा सयुजा सखाया' इत्यादि ।

तथा निम्नाङ्किते मन्त्रे कपिलाचार्यप्राचीनतां संसाध्य सांख्यसिद्धान्तानां सम्पुष्टिर्विहिता :--

यो योनिं योनिमधितिष्ठत्येको
विश्वानि रूपाणि योनिश्च सर्वाः ।
ऋषिं प्रसूतं कपिलं यस्तमग्रे
ज्ञानैर्बिभर्ति जायमानञ्च पश्येत् इति ।

एवमुपनिषदियं बहुविधानां सिद्धान्तानामाकर इव प्रतिभाति। समादरेण, प्रामाण्येन च नेयं, उक्तदशोपनिषदां तुलामधिरोहति इति।

## उपनिषदां महत्त्वम्

प्रायः सर्वेषामेव सम्प्रदायाचार्याणां उपनिषत्सु टीका दृश्यन्ते। यस्य सम्प्रदायस्योपनिषत्सु टीका नास्ति स सम्प्रदायोऽबद्धमूल इत्यवधार्यते। न जना भूयसा तत्र बद्धश्रद्धाका भवन्ति इति। उपनिषत्साहित्यमेव समेषां सम्प्रदायानां मूलभित्तिरित्युक्तावपि न काममपि अत्युक्तिं विभावयामः। उपनिषत्साहित्यमतीव ज्ञानप्रकाशकं, शान्तिप्रदं, मानवसंस्कृतेरादिजननी चेति बहुभिः पाश्चात्यविद्वद्भिरुद्घोषितम्। दिल्लीपतेः शाहजहानस्यात्मजः दारा शिकोहनामा यवनोऽपि सन् उपनिषत्साहित्ये मुग्ध आसीत्। कतिचनोपनिषदामनुवादोऽपि पारसीकभाषाया सम्पादितः। इदं पारसीकभाषान्तरस्य फ्रेंचानुवादमवलोक्य शार्मण्यदेशीयेन विदुषा शोपनहारेणोल्लिखितं यदुपनिषद्विद्यया जीवनकाले यथा शान्तिः प्रदत्ता मह्यं तथैव मरणोत्तरकालेऽपि शान्तिं प्रदास्यतीति सदीयो विश्वासः। यदुपज्ञयं उपनिषद्विद्या तेषां मनुष्यपदेनाभिधानं न युक्तम्। विश्वतत्त्वज्ञानस्य आदिमं स्रोतः उपनिषन्महासरित्त एव प्रवाहितं प्रतीयते। सत्यमेवैतत्। 'उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत' इति उपनिषदां सदातन-सत्येन प्रेरणप्रदं वचनामृतम् सातिशयलोकहितकरञ्चेति।

तदेवमुपनिषन्नाम अध्यात्मविद्यापरमतीवोज्ज्वलं, मनस आत्मनश्च निरतिशयशान्तिप्रदं ब्रह्मविद्यातन्त्रम्। सुधीभिर्मुमुक्षुभिः नितरामध्येयम्। अन्ते च औपनिषदवचोभिरेवोपसंहराम :—

'सर्वं ब्राह्मौपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोद्" इति।

इति सर्वतन्त्रस्वतन्त्रैः पदवाक्यप्रमाणपारावारपारीणैः सिद्धान्त-
शिरोमणिपदालङ्कृतैः श्रीमदाचार्यद्विजेन्द्रनाथशास्त्रिभिः
प्रणीते संस्कृतसाहित्यविमर्शे वैदिकप्रकरणाख्यो
द्वितीयः परिच्छेदः समाप्तः।

## तृतीयः परिच्छेदः

# दर्शन-प्रकरणम्

## वैदिकदर्शनानि

१. दर्शनानां प्रवृत्तिः २. न्यायदर्शनम्, ३. वैशेषिकदर्शनम्, ४. सांख्य-दर्शनम्, ५. योगदर्शनम्, ६. पूर्वमीमांसादर्शनम्, ७. वेदान्तदर्शनम्, ८. षड्-दर्शनसमन्वयः ।

## दर्शनानाम् प्रवृत्तिः

संस्कृतसाहित्ये दर्शनानि खल्वतीव महनीयं पदमलङ्कुर्वन्ति। तत्र भवतां दिव्यचक्षुषामखिलपदार्थजातं करतलामलकवत्प्रत्यक्षीकुर्वाणानां महर्षीणां जगतो जटिलान् सम्प्रश्नान् सरलयितुं प्राणभृतां कल्याणकाम्यया दर्शनशास्त्रमिदं सत्या-सत्यनिकषलक्षणं किमपि महार्घमुपायनम् । त एव महाभागा जगदुद्दिधीर्षवः तपः-सम्पूतया धिषणया समस्तान् ताँस्ताञ्जागतिकानर्थान् मूलङ्कषमालोच्य दर्शनमुखे-नाविर्भावयामासुः करुणार्द्रहृदयाः सहृदया हृदयालवो दयालव इति को नाम नाङ्गी-कुर्यादनूचानः ।

अस्य सरहस्यस्य निगूढतमस्य प्रपञ्चस्य समाधानपथदर्शकं शास्त्रमिदं किल दर्शनमित्यभिधीयते, दृश्यतेऽनेन तद्दर्शनमिति तद्व्युत्पत्तेः।

इदं तावदवसेयम्––मनुष्यः खलु निसर्गत एव मननशीलः, मत्वा कर्माणि सीव्यतीति तन्निरुक्तेः । यदा स भवति चिन्तान्तरविमुक्तचित्तस्तदा विचिन्तयति निरतिशयजटिलामिमां विश्वसमस्याम्––कोऽहं ? कुतोऽहं ? कस्मादहम् ? इत्येवंजातीयकाम् । तादृशचिन्तन-मननपरिणतिभूतमेवेदं दर्शन-शास्त्रम् । उक्तञ्च––

आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति ।
आत्मनो वारे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विज्ञातम्भवति ।
[बृ० उ० २।४।५]

महर्षियाज्ञवल्क्यस्यायमुपदेश एव भारतीयदर्शनस्याधारभित्तिरवधार्यते । आत्मसाक्षात्कार एव मनुष्यजीवनस्य चरमोद्देश्यम् । स च श्रवण-मनन-निदिध्यासनेनैव सम्भवति नान्यथा । तानीमानि श्रवण-मनन-निदिध्यासनादीनि हि मनीषिभिः दर्शनहेतुत्वेनोपात्तानि । एतदभिप्रायेणैवोक्तम्--

श्रोतव्यः श्रुतिवाक्येभ्यो, मन्तव्यश्चोपपत्तिभिः ।
मत्वा तु सततं ध्येयः, एते दर्शनहेतवः ।।

अस्यायमभिप्रायः--पूर्वं श्रुतिवाक्येभ्यः श्रोतव्य इति । श्रुत्या श्रुतस्य बुबोधिषया मनने प्रवृत्तिः । मननद्वारा च पक्ष-प्रतिपक्षोपपत्तिभिर्निर्णीतेऽर्थ आत्मादिसत्त्वरूपे निदिध्यासनं प्रवर्तते । निदिध्यासनाद्धि आत्मसाक्षात्कारः । ततोऽपवर्गः । श्रवणव्यतिरेके तु मननाभावः, मननाभावे निदिध्यासनाभावः, निदिध्यासनाभावे साक्षात्काराभावः, तदभावे च पुनर्नापवर्गसिद्धिरिति । वस्तुतस्तत्त्वतो विमृश्यमाने तदिदं दर्शनशास्त्रमेकमेव--

'एकमेव दर्शनं ख्यातिरेव दर्शन'मित्युक्तेः ।

अस्य च समस्तस्य चिदचिदात्मकभेदभिन्नस्य द्विविधस्यास्य प्रपञ्चस्य प्रकृति-पुरुषयोरन्यथाख्यातिरूपं ज्ञानं दर्शनशास्त्रेणैव भवितुं सम्भवति नान्यथा, तदर्थमेव च दर्शनशास्त्रस्य प्रवृत्तिः ।

तच्च सदप्येकं द्वेधा भिद्यते दृष्टादृष्टवादिभेदात् । तत्र दृष्टवादि खलु दृष्टप्रपञ्चे एवास्तित्वबुद्धिमत्, अदृष्टप्रपञ्चे च नास्तित्वबुद्धिस्वीकारात् नास्तिकदर्शननाम्ना प्रसिध्यति । अपरञ्च अदृष्टवादि पुनः दृष्टात्परयोरात्म-परमात्मनोरस्तित्वाङ्गीकारात् आस्तिकदर्शनत्वेन जेगीयते । आस्तिकदर्शनेषु किल न्यायादीनि षड्[1] दर्शनानि सङ्कलितानि भवन्ति, नास्तिकदर्शनेषु च पुनः चार्वाकादीनि । तदत्र तेषां वर्णनं समासतः प्रपञ्चितं द्रष्टव्यम् । तत्र आस्तिकदर्शनानि वैदिकानि,[2] नास्तिकदर्शनानि च अवैदिकानीति तेषां पारिभाषिकी संज्ञा ।

---

१. न्याय-वैशेषिक-सांख्य-योग-मीमांसा-वेदान्तसंज्ञकानि षट् ।

२. अथवा वेदराद्धान्तानवष्टभ्य प्रवर्त्तमानत्वाद् वैदिकानि,ताननालम्ब्य प्रवर्त्तमानत्वादवैदिकानि इमान्याख्यायन्ते । उक्तञ्च--

'अवैदिकप्रमाणानां सिद्धान्तानाम्प्रदर्शकाः ।
चार्वाकाद्याः षड्विधास्ते ख्याता लोकेषु नास्तिकाः ।।
वेदप्रमाणकानीह प्रोचुर्ये दर्शनानि षट् ।
न्यायवैशेषिकादीनि स्मृतास्त आस्तिकाभिधाः ।।

## न्यायदर्शनम्

न्यायशास्त्रम्—शास्त्रप्रयोजनं तदुपयोगश्च—न्यायप्रतिपाद्या विषयाः—प्रमाणानि—प्रमेयानि—संशयादीनि—न्यायदर्शनस्य प्रणेता—तन्निर्माणकालः—प्रसिद्धा आचार्याः—न्यायपरिशिष्टम्—नव्यन्यायाविर्भावकालः—नव्यन्यायस्य प्रमुखा ग्रन्थाः—न्यायदर्शनस्य विशिष्टा वादाः—न्यायपरिशिष्टम् ।

अथ षड्दर्शनानामलङ्कारभूतं 'प्रमाणप्रमेय' इत्यारभ्य 'हेत्वाभासाश्च यथोक्ताः' इत्यन्तं पञ्चाध्यायात्मकं महर्षिगोतममुनिपादैः प्रणीतं शास्त्रं न्यायदर्शनमित्युच्यते । दृश्यतेऽनेनेति दर्शनम्, न्यायस्य दर्शनम् न्यायदर्शनम् । न्यायश्च पुनः प्रमाणैरर्थपरीक्षणम् । न्याय एव आन्वीक्षिकीत्याख्ययाऽपि समाख्यायते । प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा तया प्रवर्त्तते इत्यान्वीक्षिकी[1] न्यायविद्या । सेयं हि विद्या सर्वविद्याप्रदीपत्वेन प्रशंसिता :—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता ।।—चाणक्यः

अत एवास्य शास्त्रस्य सर्वशास्त्रोपकारकत्वमङ्गीकृतं विवेचकैः । तथा च प्राह तत्रभवान् जयन्तभट्टो न्यायमञ्जर्याम् :—

'न्यायविस्तरस्तु मूलस्तम्भभूतः सर्वविद्यानां वेदप्रामाण्यहेतुत्वात् । तस्मादशेषतार्किकोपमर्दद्वारकं दृढतरवेदप्रामाण्यप्रत्ययाध्यायि न्यायोपदेशक्षममक्षपादोपदिष्टमिदं न्यायविस्तराख्यं शास्त्रं प्रतिष्ठाननिबन्धनमिति परमविद्यास्थानम्' इति ।

## न्यायशास्त्रस्य प्रयोजनम्

तदिदं वेदार्थविरोधितर्कनिरसनौपयिकं वैदिकसिद्धान्तरक्षणोपयोगि प्रमाणादिप्रतिपादनमेव न्यायशास्त्रस्य प्रयोजनम् । अत एवेदं शास्त्रं प्रमाणशास्त्रं तर्कशास्त्रञ्चाप्युच्यते । तर्क्यन्ते यथार्थज्ञानविषयीक्रियन्तेऽर्था यैस्ते तर्काः तेषां शास्त्रं तर्कशास्त्रम् । अतएव भगवता मनुनाऽपि स्मृतम् :—

---

१. 'समस्तप्रमाणव्यापारादर्थाधिगतिर्न्यायः' इति वार्त्तिककारः ।
नीयते प्राप्यते यथार्थपदार्थज्ञानं येन स न्यायः । अथवा 'साधनीयार्थस्य यावति शब्दसमूहे सिद्धिः परिसमाप्यते स पञ्चावयवोपपत्त्यात्मको न्यायः' इति वात्स्यायनः ।

एवं यद्यपि विविधप्रकारेण न्यायशब्दो व्युत्पाद्यते तार्किकैः तथापि सर्वेषां न्यायतात्पर्यविषयीभूतोऽर्थः प्रमाणादिभिः यथार्थतया पदार्थनिर्णय एव पर्यवसीयते इति विवेकः ।

'आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥
[मनु० अ० १२, श्लो० १०७]

यदि कश्चिदाचक्षीत यदीश्वरप्रभवत्वेन, निरस्तसमस्तालीकभ्रमविप्रलिप्सादिपुंदूषणतया वेदानां स्वतःप्रामाण्यमव्याहतं सत् सर्वेषामास्तिकानां स्वयमभिमतमेव तत्क्वास्ति तर्कशास्त्रप्रयोगस्यावकाशः इति। तत्र ब्रूमः, सत्यमेतत्तथापि निरीश्वरवादिनां चार्वाकप्रभृतीनां वेदप्रामाण्यविप्लावनतत्पराणां कुतर्ककुठारकुण्ठीकरणाय शास्त्रस्यास्य परमसुपयोगं मन्यन्त आगमिनः। न खलु तर्कशास्त्रमन्तरेण दुर्दान्तचार्वाकादिनास्तिकानां प्रखरतर्कनिरसनमनायासेन कर्तुं सुकरम्। तन्निरसनार्थमेवास्य शास्त्रस्यावतारः। उक्तञ्च स्वयमाचार्यमहाभागैः—

'तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्।' [न्याय० ४।२।४८]।

उट्टङ्कितञ्च सिद्धान्तसंग्रहकारैरपि :—

'नैय्यायिकस्य पक्षोऽयं संक्षेपात्प्रतिपाद्यते।
यत्तर्करक्षितो वेदो ग्रस्तः पाखण्डदुर्जनैः॥'

## न्यायप्रतिपाद्यो विषयः

षोडशपदार्थानां तत्त्वज्ञानान्निःश्रेयसाधिगम एवास्य शास्त्रस्य प्रतिपाद्यो विषयः। निःश्रेयसो मोक्षः। न स प्रमाणादीनां तत्त्वज्ञानमन्तरा शक्योपगमः। प्रमाणादीनाञ्च तत्त्वज्ञानं न तावत्संभवति यावत्तेषामुद्देश-लक्षण-परीक्षा न स्युः। त्रिविधा खल्वस्य शास्त्रस्य प्रवृत्तिः—उद्देशः, लक्षणं, परीक्षा चेति। तत्र नामधेयेन पदार्थमात्राभिधानमुद्देशः। स च प्रथमसूत्रे[1] निर्दिष्टः। उद्दिष्टस्य तत्त्वव्यवच्छेदकोऽसाधारणो धर्मो लक्षणम् यथा गोः सास्नादिमत्त्वम्। लक्षितस्य च लक्षणं तत्र घटते न वेति प्रमाणैरर्थावधारणं परीक्षा। इति।

तत्र तावत् क्रमप्राप्तं प्रमाणं लक्षितम्—प्रमाकरणं प्रमाणमिति। प्रमा हि नाम यथार्थज्ञानं, तदतिशयसाधकं साधकतमं करणं प्रमाणमुच्यते। न हि प्रमाणज्ञानमन्तरा प्रमेयादीनां ज्ञानं भवितुं शक्यम्। प्रमीयते यथार्थतया ज्ञायतेऽनेनेति प्रमाणम्, ज्ञानसाधनमित्यर्थः।

ननु 'प्रमाणादीनां[1] तत्त्वज्ञानान्निःश्रेयसाधिगम' इत्युक्तं तत्खलु कथं सङ्गच्छते? तन्निरासाय—

१. 'प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्त-अवयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-छल-जाति-निग्रहस्थानानां तत्त्वज्ञानान्निश्रेयसाधिगमः।' [न्याय० १।१।१]

'दुःख-जन्म-प्रवृत्ति-दोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' इति सूत्रयामास आचार्यः। अस्यायमाशयः—यद् दुःखादीनाम् उत्तरोत्तरापाये यद्यदुत्तरं तस्य तस्यापाये विनाशे सति तदनन्तरापायाद् अपवर्गः। तत्र तावत् तत्त्वज्ञानान्मिथ्याज्ञानापाये दोषः खल्वपैति, दोषापाये च प्रवृत्तिरपैति, प्रवृत्त्यपाये जन्मापैति (निमित्ताभावात्), जन्मापाये पुनर्दुःखमपैति—'निमित्तापाये नैमित्तिकस्याऽप्यपायः' इति न्यायात्। दुःखात्यन्ततापायो हि नाम मोक्षः। तदेवं तत्त्वज्ञानात् मिथ्याज्ञानादिनिवृत्तौ सत्यां सुतरां निःश्रेयसाधिगमः सम्भवत्येव सुलभोपलम्भ इति तत्र का नाम विचिकित्सा। एवं सति प्रमाणादीनां षोडशपदार्थानां सम्यग्ज्ञान एव यत्न आस्थेयः सर्वैर्निःश्रेयसमधिजिगांसुभिः सर्वात्मनेति।

## प्रमाणचातुर्विध्यम्

तच्च प्रमाणं प्रत्यक्षानुमानोपमान शब्दभेदाच्चतुर्विधम्। यत्र च सूत्रितं भवति :—

'प्रत्यक्ष-अनुमान-उपमान-शब्दाः प्रमाणानि।' [न्याय० १।१।३]

## प्रत्यक्षम्

'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यम्, अव्यभिचारि, व्यवसायात्मकं प्रत्यक्षम्।' आत्मा मनसा सन्निकृष्यते, मन इन्द्रियैः, इन्द्रियाणि अर्थैः, ततः तद्वति तत्प्रकारकमवधारणात्मकं यज्ज्ञानमुपजायते तदेव प्रत्यक्षं प्रमाणमित्याख्यायते। तच्च ज्ञानम् अव्यपदेश्यम्, अव्यभिचारि, व्यवसायात्मकञ्च भवेत्। इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं यदा गन्धज्ञानं, रसज्ञानमिति स्वनामधेयेन शब्देन व्यपदिश्यते तदा तत् प्रमाणतां विजहाति समुपैति च प्रमेयत्वम्। शब्दप्रमाणविषयत्वात् तथा चासम्भवो दोषः, स मा भूदित्युक्तम् 'अव्यपदेश्य' मिति। इन्द्रियार्थसन्निकर्षोत्पन्नमव्यपदेश्यं सदपि भवति तदभाववति तत्प्रकारकं किञ्चिज्ज्ञानम्, तद्यथा ग्रीष्मे भीष्मेणोष्मणा संसृज्य स्पन्दमानासु तिग्मरश्मिरश्मिषु दूरतोऽवलोकयतः 'उदक'-मिति, मन्दतमसि वा रज्ज्वां 'सर्प' इति यच्चाक्षुषज्ञानं तत्र माऽतिप्रसाङ्क्षीदित्युक्तमव्यभिचारीति। यदतस्मिंस्तदिति तद् व्यभिचारि, यत्तु तस्मिंस्तदिति तदव्यभिचारि। तद्वति तत्प्रकारकं ज्ञानमिति भावः। किञ्च इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि सदपि भवति अनवधारणात्मकं संशयात्मकम्। यथा दूरात्पश्यतः 'स्थाणुर्वा पुरुषो वा' इति चाक्षुषज्ञानं तत्रातिव्याप्तिर्मा भूदित्युक्तं 'व्यवसायात्मक'[1] मिति।

---

१ व्यवसायोऽवधारणं निश्चय इत्यनर्थान्तरम्। इदमित्थमेवेति निश्चयः। स एव आत्मा रूपं यस्य ज्ञानस्य तद् व्यवसायात्मकं निश्चयात्मकमित्यर्थः।

इन्द्रियार्थसन्निकर्ष इत्युक्तम्। स एष सन्निकर्षः खलु षड्विधः——संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेष्य-विशेषभावश्चेति।

तत्र यदा चक्षुषा घटविषयकं ज्ञानमुपजायते तदा चक्षुरिन्द्रियं, घटोऽर्थः, अनयोः सन्निकर्षः संयोग एव। एवं यदा इन्द्रियान्तरेण मनसाऽऽत्मविषयकं ज्ञानं जन्यतेऽहमित्याकारकं तदा मन इन्द्रियम्, आत्माऽर्थः अनयोः सन्निकर्षः संयोग एव।

तथा यदा चक्षुषा घटगतरूपादिकं गृह्यते 'श्यामो घट' इति तदा चक्षुरिन्द्रियं, घटरूपमर्थः, अनयोः सन्निकर्षः संयुक्तसमवाय एव चक्षुःसंयुक्ते घटे रूपस्य समवायात्। एवं मनसाऽऽत्मसमवेते सुखादौ गृह्यमाणेऽपि अयमेव संयुक्तसमवाय एव सन्निकर्षः।

यदा तु चक्षुषा घटरूपसमवेतं रूपत्वादि सामान्यं गृह्यते तदा चक्षुरिन्द्रियं, रूपत्वादि सामान्यमर्थः, अनयोः सन्निकर्षः संयुक्तसमवेतसमवाय एव। कुतः? यतश्चक्षुःसंयुक्ते घटे रूपं समवेतं तत्र रूपत्वस्य समवायात्।

यदा पुनः श्रोत्रेन्द्रियेण शब्दो गृह्यते तदा श्रोत्रमिन्द्रियं, शब्दोऽर्थः, अनयोः सन्निकर्षः समवाय एव। श्रोत्रं हि कर्णशष्कुल्यवच्छिन्नं नभः, श्रोत्रस्याकाशात्मकत्वाच्छब्दस्य चाकाशगुणत्वाद् गुणगुणिनोश्च समवायात्।

यदा शब्दसमवेतं शब्दत्वादि सामान्यं श्रोत्रेन्द्रियेण गृह्यते तदा श्रोत्रमिन्द्रियं, शब्दत्वादि सामान्यमर्थः, अनयोः सन्निकर्षः समवेतसमवाय एव, श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात्।

यदा चक्षुषा संयुक्ते भूतले घटाभावो गृह्यते 'इह भूतले घटो नास्ती'ति तदा विशेषण-विशेष्यभावः सन्निकर्षः। तदा चक्षुःसंयुक्तस्य भूतलस्य घटाद्यभावो विशेषणं, भूतलञ्च विशेष्यम्।

एवमन्यत्राऽप्यूह्यम्। तदेवं षड्विधः सन्निकर्षो निरूपितो वेदितव्यः।

तदिदं प्रत्यक्षं द्विविधं——सविकल्पं, निर्विकल्पञ्च। तत्र नामजात्यादियोजनाहीनं वस्तुमात्रावगाहि यज्ज्ञानं जन्यते तन्निर्विकल्पम्। यदा खलु निर्विकल्पानन्तरं नामजात्यादियोजनात्मकं 'ब्राह्मणोऽयं, श्यामोऽय' मिति विशेषणविशेष्यावगाहि ज्ञानमुत्पद्यते तदा तत्सविकल्पमिति।

## अनुमानम्

'अथ तत्पूर्वकं त्रिविधमनुमानं——पूर्ववत्, शेषवत्, सामान्यतो दृष्टञ्चे' ति।
[न्याय० १।२।५]

तदिति प्रत्यक्षं परामृशति, तत्प्रत्यक्षं गृहीतव्याप्तिकस्य लिङ्गस्य पक्षे दर्शनं तत्पूर्वकारणं यस्य तत्पूर्वकं लिङ्गं प्रत्यक्षकारणकं ज्ञानं परोक्षलिङ्गगोचरं ज्ञानं येन जायते तदनुमानम्। अयमाशयः, यदा प्रमाता पक्षे लिङ्गं प्रतिपद्यते 'धूम एवायं न वाष्पादिक' मित्यसन्दिग्धं धूमादिलिङ्गदर्शनमुपैति तदैकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकत्वात्, 'यत्र-यत्र धूमः तत्र-तत्र वह्नि' रिति महानसादौ सपक्षे गृहीतपूर्वां व्याप्तिं स्मरति। लिङ्गदर्शनेन तां व्याप्तिं स्मरतश्चास्य तदनु नून-'मेष वह्निमान्' इत्याकारकं परोक्षलिङ्गगोचरं ज्ञानं येनोत्पद्यते तदेवानुमानं प्रमाणम्। तच्च त्रिविधं--पूर्ववत्, शेषवत्, सामान्यतोदृष्टञ्चेति।

तत्र, यादृशस्य लिङ्गस्य यादृशेन लिङ्गेनापूर्वा व्याप्तिर्गृहीता तादृशलिङ्गदर्शनात् तादृशलिङ्गगोचरं यदनुमानं तत् पूर्ववत् यथा धूमेन वह्नेरनुमानम्।

यत्रानुमानेन शेषेण तुल्यं साध्यं वर्तते तत् शेषवत् यथा गन्धवत्त्वेन हेतुना पृथिव्यामितरभेदानुमानम्। इदमेव परिशेषानुमानमप्याख्यायते।

यत्र पुनरनुमानेन सामान्यतोदृष्टव्याप्तिकं साध्यं वर्तते तत्सामान्यतोदृष्टमनुमानम्।

तथा चाह भाष्यकारः,--'यत्र कारणेन कार्यमनुमीयते तत्पूर्ववत्, यथा मेघोन्नत्या भविष्यति वृष्टिरिति। शेषवत्--यत्र कार्येण कार्यमनुमीयते, पूर्वोदकविपरीतमुदकं, नद्याः पूर्णत्वं, शीघ्रत्वञ्च दृष्ट्वा वने वा स्रोतसोऽनुमीयते भूता वृष्टिरिति। सामान्यतोदृष्टम्--व्रज्यापूर्वकमन्यत्र दृष्टस्यान्यत्र दर्शनमिति, यथा आदित्यस्येति।''

इदमत्र बोध्यम्--व्याप्तिग्रहाधीनजन्म ह्यनुमानम्। यावल्लिङ्गस्य लिङ्गिना सह व्याप्तिर्न गृह्यते न तावदनुमानमुदेति। व्याप्तिश्च पुनस्त्रिविधा--विशेषव्याप्तिः, सामान्यव्याप्तिः, व्यतिरेकव्याप्तिश्चेति। धूमेन वह्नौ साध्ये 'यत्र-यत्र धूमस्तत्र-तत्र वह्नि' रिति हेतुतावच्छेदक-साध्यतावच्छेदक धूमत्व-वह्नित्वरूपविशेषमुखेन प्रवृत्ता या व्याप्तिः सा विशेषव्याप्तिः। शब्दादिना आकाशादौ साध्ये 'यो गुणः स द्रव्याश्रयः' इति हेतुतावच्छेदक-साध्यतावच्छेदकशब्दत्वाकाशत्वादिव्यापकगुणत्व-द्रव्यत्वरूपसामान्यमुखेन प्रवृत्ता या व्याप्तिः सा सामान्यव्याप्तिः। अपि च गन्धवत्त्वेन पृथिव्यामितरभेदे साध्ये 'यत्रेतरभेदाभावस्तत्र गन्धवत्त्वाभावः' इति साध्याभाव-साधनाभावरूपव्यतिरेकमुखेन प्रवृत्ता या व्याप्तिः सा व्यतिरेकव्याप्तिः। तत्र विशेषव्याप्तिकमनुमानं पूर्ववत्, व्यतिरेकव्याप्तिकं शेषवत्, सामान्यव्याप्तिकं पुनः समान्यतोदृष्टमिति विवेकः। उक्तञ्च--

'पञ्चलक्षणकाल्लिङ्गाद् गृहीतान्नियमस्मृतेः।
परोक्षे लिङ्गिनि ज्ञानमनुमानं प्रचक्षते॥'

तच्च त्रिविधमनुमानं पुनर्द्विविधं--स्वार्थं, परार्थञ्चेति।

स्वार्थं स्वप्रतिपत्तिहेतु। तथाहि महानसादौ स्वयमेव विशिष्टेन प्रत्यक्षेण धूमाग्न्योर्व्याप्तिं गृहीत्वा पर्वतसमीपे गतः तद्गते चाग्नौ सन्दिहानः पर्वतवर्तिनीमविच्छिन्नमूलामभ्रंलिहां धूम्रलेखां प्रपश्यन् धूमदर्शनाच्चोद्बुद्धसंस्कारो व्याप्तिं स्मरति 'यत्र-यत्र धूमस्तत्र-तत्र वह्नि' रिति। ततश्चात्रापि धूमोऽस्ति इति प्रतिपद्यते। यतो 'ऽत्र पर्वते वह्निरस्ती' ति स्वयमेव प्रतिपद्यते अतः इदं स्वार्थानुमानम्।

यस्तु कश्चित्स्वयं धूमादग्निमनुमाय परं बोधयितुं पञ्चावयवमनुमानवाक्यं प्रयुङ्क्ते तत्परार्थानुमानम्। तद्यथा--१. पर्वतो वह्निमान्, २. धूमवत्त्वात्, ३. यो-यो धूमवान् स-स वह्निमान्, ४. यथा महानसः, ५. तथा चायं तस्मात्तथा इति। अनेन प्रतिज्ञादिमता वाक्येन प्रतिपादितात् पञ्चावयवख्यापनलिङ्गात् परोऽपि 'पर्वतो वह्निमान्' इति प्रतिपद्यते। तेनैतत्परार्थानुमानम् इत्याख्यायते इति दिक्।

## उपमानम्

'प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्'। [न्याय० १।१।६]

प्रसिद्धस्य पूर्वं प्रमितस्य गवादेः साधर्म्यात् सादृश्याद् यत्साध्यसाधनं तदुपमानं प्रमाणम्। 'यथा गौस्तथा गवयः' इति वाक्यमाकर्ण्य वनं गतस्य पुरुषस्य पुरोऽवस्थिते प्राणिपिण्डे गोसादृश्यदर्शनाद् यदुक्तवाक्यार्थस्मरणपूर्वकं 'नूनमयं गवयः' इति संज्ञा-संज्ञिसम्बन्धज्ञानमुत्पद्यते तदेवोपमानं प्रमाणमिति। अपि च 'उष्ट्रविसदृशः नासाग्रे लसदेकशृङ्गः गेंडाख्यमृगविशेषः' इति कुतश्चिदारण्यकपुरुषादाकर्ण्य दैवादरण्यगतस्य कस्यचिन्नागरिकस्य दर्शनपथं गते प्राणिपिण्डे यदुष्ट्रवैधर्म्यदर्शनेन वाक्यार्थस्मरणपूर्वकं नूनमयं 'गेंडामृग' इति यत्संज्ञा-संज्ञिसम्बन्धज्ञानमुत्पद्यते तदप्युपमानमेव। साधार्म्यज्ञानस्येव वैधर्म्यज्ञानस्यापि तद्धेतुत्वाभ्युपगमादिति भावः।

तत्र गौणपक्षे गोसादृश्यज्ञानानुमितिकरणत्वादुपमानम्। वाक्यार्थस्मरणं व्यापारः। संज्ञा-संज्ञिज्ञानञ्चोपमितिफलम्। मुख्यपक्षे तु संज्ञासंज्ञिसम्बन्धज्ञानमुपमानम्। हानोपादानोपेक्षाबुद्धिरूपमितिफलमिति विवेकः।

## शब्दप्रमाणम्

'आप्तोपदेशः शब्दः।' [न्याय० १।१।७]

आप्तः खलु साक्षात्कृतधर्मा। यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्तः शब्द उपदेशः। अर्थसाक्षात्कारवान् आप्तः। स यथादृष्टार्थविबुबोधयिषया शब्दं

प्रयुङ्क्ते। साक्षात्करणमाप्तिः, तया यः प्रवर्तते स आप्तः, तस्योपदेशः आप्तोपदेशः। आप्तोपदेश एव शब्दप्रमाणम्।

स प्रमाणभूतः शब्दो द्विविधः, दृष्टादृष्टभेदात्।

'स द्विविधो दृष्टादृष्टभेदाद्।' [न्याय० १।१।८]

दृष्टोऽर्थो येन प्रवक्त्रा स दृष्टार्थ ईश्वरः। दृष्टस्तु न, किन्त्वनुमितोऽर्थो येन प्रवक्त्रा सोऽदृष्टार्थः ऋषिमुनिजनः। तत्रेश्वरोक्तः वेदचतुष्टयरूपो दिव्यः शब्दराशिस्तु सर्वदा सर्वत्र स्वतःप्रमाणम्। यथाऽऽहुर्भगवन्तो दर्शनाचार्याः

'शास्त्रयोनित्वात्।' [ब्रह्मसूत्र १।१।३]

महतः ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य प्रदीपवत् सर्वार्थद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म। नहीदृशस्य शास्त्रस्य वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतः सम्भवोऽस्ति।

एवमेव भगवत्कपिलमुनिपादा अपि :—

'निजशक्त्यभिव्यक्तेः स्वतःप्रामाण्यम्।' [सांख्य० ५।५१]

निजया शक्त्या अभिव्यक्तेः वेदानां स्वतः प्रामाण्यम् रूपविषये रवेरिवेति सांख्याः।

'तद्वचनादाम्नायस्य प्रामाण्यम्'। [वैशेषिक० १०।२।१०]

'तत्प्रमाणं बादरायणस्याऽनपेक्षत्वात्।' [पूर्वमीमांसा० १।१।५]

इत्यादि वचोभिः वेदानामेव स्वतःप्रामाण्यम्। अन्येषाञ्च ऋषिमुनिप्रोक्तवचसां परतः प्रामाण्यम्। यः शब्दः स्वप्रतिपाद्यमर्थं प्रमाणीकर्तुं प्रमाणान्तरं नापेक्षते तत्स्वतःप्रमाणम् यश्चापेक्षते तत्परतःप्रमाणम् इति।

तदेवं शब्दप्रमाणं स्वीकुर्वता गोतमेन ईश्वरसत्ताऽङ्गीकारोऽपि ध्वनितः।

## प्रमेयाणि

'आत्म-शरीर-इन्द्रिय-अर्थ-बुद्धि-मनः-प्रवृत्ति-दोष-प्रेत्यभाव-फल-दुःख-अपवर्गास्तु प्रमेयम्।' [न्याय० १।१।९]

तत्र आत्मादि अपवर्गपर्यन्तं द्वादशविधमेव प्रमेयम्। एषां सम्यग्ज्ञानमेव निःश्रेयसायात्यन्तमावश्यकम्।

तत्र सुख-दुःखयोर्भोक्ता जीवात्मा। भोगायतनं शरीरम्। भोगसाधनानि इन्द्रियाणि। भोक्तव्या इन्द्रियार्था अर्थाः। भोगो बुद्धिः। सर्वविषयमन्तःकरणं मनः। धर्माधर्मौ प्रवृत्तिः। प्रवृत्तिहेतवो रागादयो दोषाः। पुनःपुनर्जन्म प्रेत्य-

भावः। सुखदुःखोपभोगः फलम्। प्रतिकूलवेदनीयं वेदनात्मकं दुःखम्। दुःखनिवृत्तिपूर्वकं परमानन्दोपभोगः अपवर्गः।

तदेषां प्रमेयादीनां सम्यगवबोधः पञ्चावयवप्रयोगमन्तरा भवितुं न सुशकः। यतः स्वयमधिगतस्यार्थस्य परत्र संक्रान्तये प्रतिज्ञादीनां पञ्चावयवानामपरिहार्यत्वमामनन्ति। अतस्तेऽपि ज्ञातव्याः। ते च पञ्चावयवाः—

'प्रतिज्ञा-हेतु-उदाहरण-उपनयन-निगमनान्यवयवाः।'

[न्याय० १।१।३२]

इमे हि प्रतिज्ञादयोऽवयवाः पञ्च। तत्र साध्यधर्मविशिष्टपक्षप्रतिपादकं वचनं प्रतिज्ञा, यथा—पर्वतो वह्निमानिति। पञ्चम्यन्तं लिङ्गप्रतिपादकं वचनं हेतुः, यथा—धूमवत्त्वात्। सव्याप्तिकं दृष्टान्तवचनम् उदाहरणम्, यथा—यत्र-यत्र धूमस्तत्र-तत्र वह्निः यथा महानसे। पक्षे लिङ्गोपसंहारवचनम् उपनयः, यथा—वह्निव्याप्यधूमवाँश्चायमिति। पक्षे साध्योपसंहारवचनम् निगमनम्, यथा—तस्माद् वह्निमानयं पर्वतः। एतेऽनुमानवाक्यस्यैकदेशत्वाद् अवयवा इत्याख्यायन्ते। तत्रैके त्रय एवावयवा इत्यामनन्ति। उदाहरणमुपनयश्चेति द्वावेवावयवा इति बौद्धाः। प्रतिज्ञा-हेतूदाहरणानीति त्रय एवावयवा इति कापिलाः, यौगाः, पूर्वोत्तरमीमांसे चेति।

अथेदानीं प्रमाण-प्रमेयविवर्जितानां संशयादि-निग्रहस्थानान्तानां द्वादश पदार्थानां वादाहवे वादि-प्रतिवादिभ्यां तत्त्वनिर्णिनीषया प्रयुक्तानां तन्निर्णये च परमोपकारकाणां पक्ष-प्रतिपक्षयोः विजय-पराजयपरमसाधकानामपि विवेचनं महर्षिगोतमोपज्ञं किंचिदिव विविच्यते, यत्र हि न्यायार्थः साफल्येन पर्यवसीयते।

संशयः—एकस्मिन् धर्मिणि विरुद्धनानाधर्मावगाहि ज्ञानं संशयः। स च त्रिविधः—समानधर्मदर्शनजः, विप्रतिपत्तिजः, साधारणधर्मजश्चेति। तत्र विशेषादर्शने सति समानधर्मजः, यथा—स्थाणुर्वा पुरुषो वेति। एकस्मिन्नेव पुरोवर्त्तिनि वस्तुनि स्थाणुत्वनिश्चायकं वक्रकोटरादिकं पुरुषत्वनिश्चायकञ्च शिरःपाण्यादिकं विशेषमपश्यतः स्थाणु-पुरुषयोः समानधर्ममूर्द्धत्वादिकञ्च पश्यतः पुरुषस्य संशयो जायते—किमयं स्थाणुर्वा पुरुषो वेति। द्वितीयस्तु संशयो विशेषादर्शने सति विप्रतिपत्तिजः, यथा—शब्दो नित्य उतानित्यो वेति। कश्चिद् ब्रूते नित्य, अन्यश्च ब्रूतेऽनित्यः। तयोरुभयोर्विप्रतिपत्त्या मध्यस्थस्य पुंसो विशेषमपश्यतः संशयो जायते किं शब्दो नित्य उतानित्य इति। तृतीयः साधारणधर्मजः, यथा—नित्यानित्याद्। भूमात्रासाधारणेन गन्धवत्त्वेन विशेषमपश्यतो जायते भुवि नित्यानित्यसंशयः। किमुच्यते? शृणु, सकलनित्यव्यावृत्तेन गन्धवत्त्वेन

योगाद् भूः किमनित्या, उत सकलानित्यव्यावृत्तेन तेनैव योगान्नित्या इति यः संशयः[1] उत्पद्यते स साधारणधर्मज इति।

प्रयोजनम्——येन प्रयुक्तः पुरुषः प्रवर्तते तत्प्रयोजनमुच्यते। नान्तरेण प्रयोजनं कश्चित्प्रवर्त्तते निवर्तते वा। प्रयोजनाश्रया हि प्राणभृतां प्रवृत्तिर्निवृत्तिश्च।

'यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम्।' (न्याय० १।४।२४)

यत्प्राणिभिः प्राप्यते सोऽर्थः। यमर्थमधिकृत्य——उद्दिश्य——प्रवर्तते तत्सर्वं प्रयोजनपदवाच्यम्। तच्च प्रयोजनं द्विविधं——मुख्यं, गौणञ्च। तत्र मुख्यं सुख-दुःखाऽवाप्ति-हानिलक्षणम्। गौणञ्च पुनस्तत्साधनस्वरूपम्। साध्यावाप्तिर्हि मुख्यं प्रयोजनं, साध्यावाप्त्यर्थं साधनावाप्तिः पुनर्गौणमिति भावः।

दृष्टान्तः——वादिप्रतिवादिनोः सम्प्रतिपत्तिविषयार्थो दृष्टान्तः। स च साधर्म्य-वैधर्म्यभेदाद् द्विविधः। साधर्म्यदृष्टान्तो यथा धूमवत्त्वस्य हेतोः महानसम्। वैधर्म्यदृष्टान्तश्च धूमवत्त्वस्यैव हेतोः महाह्रद इति। इदमत्र बोध्यम्, प्रतिवादिधीरपि साध्यसाधर्म्यात् तद्धर्मभावित्वं, साध्यवैधर्म्याद् अतद्धर्मभावित्वं वा विषयीकरोति स दृष्टान्त इति। स द्विविधोऽपि दृष्टान्तो यत्नतोऽधिगन्तव्यः। स हि किल न्यायमहातरोः स्कन्धः। उक्तञ्च——

'लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः।'
[न्याय० १।१।२५]

सिद्धान्तः——प्रामाणिकत्वेन अभ्युपेतोऽर्थः सिद्धान्तः। स च सर्वतन्त्र-प्रतितन्त्र-अधिकरण-अभ्युपगमभेदाच्चतुर्विधः। तत्र सर्वतन्त्रसिद्धान्तो यथा——'सकारणं जगत्।' जगतः सकारणत्वे न कस्यापि विप्रतिपत्तिः। प्रतितन्त्रसिद्धान्तो यथा नैय्यायिकमते मनस इन्द्रियत्वं तत्समानतन्त्रे वैशेषिकेऽपि सिद्धम्। अधिकरणसिद्धान्तो यथा क्षित्यादिकर्तृसिद्धौ कर्तुः सर्वज्ञत्वम्। अभ्युपगमसिद्धान्तश्च

---

१. 'समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः।' [न्याय० १.२३]। इति,

सोऽयं संशयः पंच प्रकारेण प्रवर्तते :——

१. समानधर्मोपपत्तेः विशेषापेक्षो विमर्शः संशयः।
२. अनेकधर्मोपपत्तेः विशेषापेक्षो विमर्शः संशयः।
३. विप्रतिपत्तेश्च विशेषापेक्षो विमर्श संशयः।
४. उपलब्ध्यव्यवस्थातः विमर्शः संशयः।
५. अनुपलब्ध्यव्यवस्थातः विमर्शः संशयः।

यथा जैमिनीयस्य नित्यानित्यत्वविचारो यथा भवतु तावच्छब्दो गुण इति । तथा चाचार्याः प्राहुः--

'सर्वतन्त्र-प्रतितन्त्र-अधिकरण-अभ्युपगम संस्थित्यर्थान्तरभावात् ।'

[न्याय० १।१।२७]

अत्र सम्यक् स्थितिः संस्थितिः । सा च प्रतितन्त्रं भिन्ना, न खलु सा सर्वेषां तन्त्राणां समाना । सा सर्वतन्त्र-प्रतितन्त्र-अधिकरण-अभ्युपगम-संस्थितिभेदाच्चतुष्प्रकारा । तन्निबन्धनाच्च सिद्धान्तोऽपि चतुष्प्रकार एव--सर्वतन्त्रसिद्धान्तः, प्रतितन्त्रसिद्धान्तः, अधिकरणसिद्धान्तः, अभ्युपगमसिद्धान्तश्चेति । तत्र यमर्थं वादिप्रतिवादिनावुभावपि प्रामाणिकतया समानमभ्युपगच्छतः स सर्वतन्त्रसिद्धान्तः, यथा वैशेषिकाः, गौतमाः, कापिला, पातञ्जला, वैदान्तिकाः, मीमांसकाश्च सर्वे वैदिका वादिनः। बौद्ध-जैन-चार्वाक-प्रभृतयः सर्वे अवैदिकाः प्रतिवादिनः । तत्र वैदिकानाञ्च सर्वेषाम् ईश्वरीयो वेदः, तद्व्याख्यानानि ब्राह्मणानि, वेदप्रणिहितो धर्मः, तद्विपरीतोऽधर्मः, वेदः स्वतः प्रमाणम्, तदितरत् सर्वं ब्राह्मणप्रभृतिशास्त्रम् परतः प्रमाणम्, ईश्वरो निमित्तकारणम्, प्रकृतिरुपादानकारणम्, कार्यं च निखिलं दृश्यञ्जगत्, सर्वद्रव्यसंयोगित्वं विभुत्वम्, विभुरीश्वरः, विभ्वी च प्रकृतिः, ईश्वरः निरपेक्षो जगतः कर्त्ता, जीवात्मा भोक्ता, स च कर्मसु स्वतन्त्रः, कर्मफलभोगे परतन्त्रः, ईश्वरः प्रकृतिवत् स्वरूपतोऽनाद्यनन्तः, न कदाचिदुत्पद्यते न वा कदाचिद् विनश्यति, तत्रापि सत्स्वरूपा प्रकृतिः, सच्चित्स्वरूपो जीवात्मा, सच्चिदानन्दस्वरूपो जगदीश्वरः, तत्त्वज्ञानान्मोक्षः । इतीमे समानसम्प्रतिपत्तिनिबन्धनाद् वैदिकानां सर्वतन्त्रसिद्धान्ता इति विवेकः।

प्रतितन्त्रसिद्धान्तः--यस्तावत्स्वतन्त्रेषु स्वसमानतन्त्रेषु च अधिक्रियमाणोऽपि परतन्त्रेषु नाधिक्रियते, यथा बौद्धानां क्षणभंगुरवादः, वैदिकानाञ्च जीवेश्वरप्रकृतिवादः। स हि प्रतितन्त्रसिद्धान्तः स्वप्रतिकूलस्य तन्त्रस्य सिद्धान्त इति प्रतितन्त्रसिद्धान्तः । उक्तञ्च---

'समानतन्त्रसिद्धः परतन्त्रासिद्धः प्रतितन्त्रसिद्धान्तः ।'

[न्याय० १।१।२९]

अधिकरणसिद्धान्तः--यस्मिन्नर्थे प्रमाणेन सिद्धे सति तदनुषङ्गिणोऽर्थाः तदन्तर्भाविनैव सिद्धिमुपयान्ति तेऽधिकरणसिद्धान्ताः । यथा, जगत्कर्तृत्वेनैव ईश्वरसिद्धौ सर्वज्ञत्वादयः, जीवात्मनित्यत्वसिद्धौ वा क्षणभंगुरवादनिरासः, वेदानामीश्वरीयत्वसिद्धौ वा स्वतःप्रामाण्यम्, ईश्वरस्य व्यापकत्वसिद्धौ वा निराकारत्वम् इत्यादयः । तथा च सूत्रितम् --

'यत्सिद्धौ अन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः ।'

[न्याय० १।१।३०]

अभ्युपगमसिद्धान्तः––यस्तावत् परीक्षित एवार्थः कस्यचिद् धर्मविशेषस्य परीक्षणाय केवलमापरीक्षाकालं प्रामाणिकत्वेनाभ्युपगम्यते सोऽभ्युपगमसिद्धान्तः। यथा––अस्तु जन्यो जीवात्मा, स किं सकारणः स्यादाहोस्विदकारणः; यथा वा भवेज्जगतः कारणं ब्रह्म, तत्किमसहायं विवर्तते ससहायं वा; भवतु वाऽविद्या सहायं ब्रह्मणः, सा किं ब्रह्मणोऽव्यतिरिक्ता स्याद् आहोस्विद् व्यतिरिक्ता इति अभ्युपगममात्रेण सिद्धान्त इत्यभ्युपगमसिद्धान्तः।

'इमाश्च सिद्धान्तभिदाश्चतस्रो, न्यायप्रवृत्तेः प्रथमं निमित्तम्।
प्रवर्तते नैव परीक्षकाणाम्, अनाश्रया न्यायकथा कदाचित् ॥'

तर्कः––सामान्यतो ज्ञाते धर्म्मिणि विशेषतो ज्ञानाय प्रमाणोपपत्तिमपेक्षमाणा संशयप्रवृत्तितः परस्तात् प्रमाणप्रवृत्तितश्च पुरस्ताद् उभयोर्मध्यवर्त्तिनी प्रमाणविषयविवेचनेन प्रमाणमनुगृह्णन्ती या काचन 'भवेदिदमेवम्' इति स्वहृदयसाक्षिका सम्भावनाप्रतीतिरुपजायते स तर्कः। अथवा सिद्धव्याप्तिकयोर्धर्मयोः व्याप्त्यङ्गीकारेण समष्टिव्यापकप्रसञ्जनरूपः तर्कः। यथा––यद्यत्र घटोऽभविष्यत्तर्हि भूतलमिवाऽद्रक्ष्यद् इति। स चायं तर्कः प्रमाणानां परमोऽनुग्राहकः। तथा पर्वतोऽयं वह्निमान् अवह्निमान् वेति सन्देहानन्तरं यदि कश्चिन्मन्येताऽवह्निमानयमिति तदा तम्प्रति 'यद्ययमवह्निमानभविष्यत्तर्हि अवह्निमत्त्वाद् अधूमोऽप्यभविष्यद्' इत्यधूमवत्त्वप्रसञ्जनं क्रियते स एष प्रसङ्गस्तर्क उच्यते। अत्र कश्चिद् व्यवतिष्ठते, तर्कस्य संशयान्तर्भावान्निष्फलं तत्पृथगुपादानमिति, तन्न, एककोटिनिश्चितविषयत्वात् तर्कस्य, स उभयकोटिनिष्ठात्संशयान्नितरां भिद्यत इति। तथा च सूत्रितमाचार्यैः––

'अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितः तत्त्वज्ञानार्थमूहस्तर्कः।'

[न्याय० १।१।४०]

स च तर्कः आत्माश्रयः, अन्योऽन्याश्रयः, चक्रकः, अनवस्था, प्रमाणविघातार्थ इति भेदात् पञ्चविधः।

निर्णयः––'स्थाणुरयं, पुरुषोवाऽयम्' इत्यत्र संशयानन्तरं संशयधर्मिणि वादि-प्रतिवादिभ्यां साध्यत्वेन युगपत् परिगृहीतयोः प्रतिद्वन्द्विधर्मयोः प्रवृत्ताभ्यां साधनोपलम्भाभ्यामेकस्य निवृत्तेः अपरस्य चावस्थितेरवश्यम्भावाद् यत्तावद् अवशिष्टधर्मविशिष्टे धर्मिणि 'स्थाणुरयम' इत्याकारकमवधारणात्मकं यथार्थज्ञानम्

तदभावाप्रकारकत्वे सति तत्प्रकारकं यज्ज्ञानमुपजायते स निर्णय इति। तथा च सूत्रितम्भवतिः—

'विमृश्य पक्षप्रतिपक्षाभ्याम् अर्थावधारणं निर्णयः।'

[न्याय० १।५०]

वाद:—नानाप्रवक्तृकविचारगोचरो वाक्यसन्दर्भः कथा। सा च वादः, जल्पः, वितण्डा चेति भेदात् त्रिधा। तत्र यस्मिन् कथाविशेषे पक्ष-प्रतिपक्ष-परिग्रहपूर्वकौ प्रमाणैस्तर्कैश्च तत्तत्साधनोपालम्भौ सम्प्रवर्तेते, तर्काश्च यस्मिन् सिद्धान्तार्थप्रतिपादकतया अभ्युपगताः शास्त्रेणाविरुद्धाः प्रयोगाश्च पञ्चावयव-सम्पन्नाः प्रयुज्यन्ते स वादः। सूत्रितमाचार्यैः—

'प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्ष-प्रतिपक्षपरिग्रहो वादः।' [याय० १।२।१]

अत्र वाद इतिलक्ष्यनिर्देशः, अवशिष्टं तस्य लक्षणम्।

वितण्डायां पक्ष-प्रतिपक्षपरिग्रहसत्त्वेऽपि प्रतिपक्षसाधनाद्यभावात्, जल्पे च पक्ष-प्रतिपक्षपरिग्रहपूर्वकपक्ष-प्रतिपक्षोभयसाधनसत्त्वेऽपि सिद्धान्तार्थप्रतिपादकतया अभ्युपगतशास्त्राविरुद्धैरेव तर्कैरनुगृहीतैः प्रमाणैस्तदुभयसाधनं विधातव्यं न जातु छल-जात्यादिभिरिति नियमाभावान्नातिव्याप्तिरिति समाकलनाय 'प्रमाण-तर्क-साधनोपालम्भः' इति पदम्। स्वपक्षस्य साधनाय प्रतिपक्षस्य च खण्डनाय तर्का अभ्युपगतशास्त्रविरुद्धाः पञ्चावयवैरनुपपन्नाः न प्रयोक्तव्याः, किन्तु अभ्युपगत-शास्त्राविरुद्धाः पञ्चावयवोपपन्ना एव तर्काः प्रयोक्तव्या इत्यावेदनायैव 'सिद्धान्ताऽविरुद्धः, पञ्चावयवोपपन्नः' इति च पदद्वयम्।

जल्पः—यत्र वादि-प्रतिवादिनौ उभावपि स्वं स्वं पक्षं साधयतः प्रतिपक्षञ्च खण्डयतः साधनोपालम्भेषु च प्रमाण-तर्क-छल-जाति-निग्रहस्थानानि यथासम्भवं प्रयुञ्जाते स वाक्यसमूहो जल्पः। लक्षितञ्चाचार्यैरपिः—

'यथोक्तोपपन्नः छल-जाति-निग्रहस्थानोपालम्भो जल्पः।

[न्याय० १।२।२]

वितण्डा—स एव जल्पः स्वपक्षस्थापनाहीनो वितण्डेत्याख्यायते। अर्थात् यत्र प्रतिवादी स्वकीयम्पक्षन्तु न स्थापयति, केवलं वादिपक्षं प्रमाणैस्तर्कैश्च खण्डय-तीति विजिगीषोः कथाविशेषो वितण्डापदेन व्यपदिश्यते। सा च स्वपक्षहीना परपक्षखण्डनमात्रावसाना एव सम्भवति। तथा च—'ननु ईश्वरास्तित्वे किम्प्रमा-णम्' इति नास्तिकेनाक्षिप्तः आस्तिकः वितण्डया प्रत्यवतिष्ठते—किम्प्रमाणमित्यत्र

किंशब्द आक्षेपार्थो वा, कुत्सितार्थो वा, वितर्कार्थो वा, प्रश्नार्थो वा ? चेदाक्षेपार्थः, तदेश्वरसद्भावे नास्ति प्रमाणमित्युक्तं स्यात्, तच्च प्रतिज्ञामात्रम्, न तेन साध्यं सिध्यति। यावत्तत्साधकं किञ्चिल्लिङ्गं नाभिधीयेत। तच्च नोदीरितमिति निगृहीतो भवान्, न्यूनाभिधानात्। न्यूनाभिधानस्य निग्रहस्थानत्वे तु को नाम विप्रतिपद्येत ? चेत्कुत्सितार्थः, तदेश्वरसद्भावे कुत्सितम्प्रमाणमिति समापत्तिः। तथा च स एव दोषः। तस्यापि प्रतिज्ञामात्रत्वात् न प्रतिज्ञामात्रेणार्थस्य सिद्धिरिति सर्वविदितम्। चेद् वितर्कार्थस्तदा वितर्कस्य संशयात्मकत्वेन ईश्वर सद्भावे किमेतत्प्रमाणं स्यादुतान्यदिति प्रश्नस्य वितर्ककोट्यधिरूढतया स एव न्यूनत्वं दोषः। प्रश्नार्थश्चेत् तदा वक्तव्यं किं ज्ञातविषयोऽयं प्रश्नः आहोस्विदज्ञातविषयो वेति। ज्ञातविषयश्चेत्तदा व्यर्थः प्रश्नः, पूर्वमेव ज्ञातत्वात्। अज्ञातविषयश्चेत्तदाऽनुपपन्नः प्रश्नः, अज्ञाते विषये प्रश्नानुत्थानात्। अथ सामान्यतो ज्ञाते विशेषतश्चाज्ञाते तस्मिन् प्रश्न इति चेत्, तदाद्येन प्रमाणेन तद्विषयं सामान्यतो ज्ञानमभिप्रेतं तेनैव विशेषतोऽपि तत्सेत्स्यतीति कृतमाक्षेपेणेति। उपश्लोकितश्च वितण्डोपयोगः केनचिदभियुक्तेन :--

वैतण्डिकः प्रयतते निजपक्षसिद्ध्यै ताञ्चैष वेद परपक्षनिषेधलभ्याम्।
तस्मादियं स्वमतसाधनवर्जिताऽपि, युक्ता प्रयोजनवती भवितुं वितण्डा॥

वितण्डा हि खलु परपक्षदूषणमात्रावसाना इति वैतण्डिकस्य न कश्चित्पक्षः स्थापनीयो भवति। वस्तुतस्तु 'तत्त्वबुभुत्सया वादः, विजिगीषया जल्पः, चिखण्डयिषया च वितण्डा प्रवर्त्तते' इति विवेकः।

हेत्वाभासः--अहेतुः सन्नपि हेतुवदाभासमानः हेत्वाभासः। यः परमार्थतो हेतुर्न भवति केवलं पञ्चम्यादिनिर्देशाद् हेतुवदाभासते स हेत्वाभास इति भावः। स च अनैकान्तिकः, विरुद्धः, प्रकरणसमः, साध्यसमः, कालातीतः इति भेदात् पञ्चविधः।

छलम्--अभिप्रायान्तरेण प्रयुक्तस्य शब्दस्यार्थान्तरं परिकल्प्य दूषणाभिधानं छलम्। यथा--'नवकम्बलोऽयं माणवकः' इत्यस्मिन् वाक्ये प्रयुक्तस्य नूतनार्थकस्य 'नव' शब्दस्य अभिप्रायान्तरमाशङ्क्य नाऽस्य नव कम्बलाः सन्ति निर्धनत्वात् कुतो नव इति, अस्य तु कम्बलद्वयमपि न सम्भाव्यते, इति यः कश्चिद् दूषयति स वादी छलवादितया गृह्यते। लक्षितञ्च भगवताऽऽचार्येणाऽपि :

'वचनविघातोऽर्थविकल्पोपपत्त्या छलम्।' [न्याय० १।२।१०]

यमर्थमभिप्रेत्य वादी वाक्यं प्रयुङ्क्ते, ततो भिन्नार्थकल्पनया यत्तस्मिन् वाक्ये दोषोद्भावनं तच्छलम्। तच्च त्रिविधं--वाक्छलम्, सामान्यछलम्, उपचार-

छलञ्चेति। ये केचन वाक्छलोपचारछलयोरभेदं परिकल्प्य उपचारछलस्यापि वाक्छलेऽन्तर्भावात् छलद्वैविध्यं प्रतिपादयन्ति, तन्न युक्तम्, तदन्तर्भावाभावात्। यद्यपि वाक्छलोपचारछलयोः परिकल्पनं प्रतिषेधनञ्चोभयं समानम् तथापि नैतावता साधर्म्येण तद्भेदो निह्नोतुं शक्यते। वाक्छले हि शक्त्या प्रयुक्तः शब्दः शक्त्यैवाऽर्थान्तरं परिकल्प्य प्रतिषिध्यते, ततोऽपरस्मिन् उपचारछले तु लक्षणया प्रयुक्तः शक्त्याऽर्थान्तिरं परिकल्प्य, शक्त्या वा प्रयुक्तः शब्दो लक्षणयाऽर्थान्तरं परिकल्प्य प्रतिषिध्यते। सोऽयमनयोर्भूयान्भेदः तस्मात्त्रेधैव छलं न द्वेधेति निष्पन्नम्।

जातिः––व्याप्तिनिरपेक्षाभ्यां साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थापनं जातिः। प्रत्यवस्थापनं––खंडनम्। यथा––शब्दोऽनित्यः कृतकत्वाद् घटवत्। अत्र घटगतकृतकत्वसाधर्म्याद् यदि शब्दस्य अनित्यत्वं र्ताह घटे श्रोत्रग्राह्यत्वाभाववैधर्म्यात् शब्दे च तत्सद्भावात्, तत्र च श्रोत्रग्राह्यतद्वत्त्वस्य च नित्यत्वात् शब्दस्यापि नित्यत्वं कथन्न स्यात्। एवम्प्रकारेण, व्याप्तेर्निरपेक्षात् साधर्म्यवैधर्म्यबलात् खण्डनं जातिपदव्यपदेश्यम्। तथा च सूत्रयामास आचार्य्यः –

'साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थापनं जातिः।' [न्याय० १।२।१८]

एवं साधर्म्यवैधर्म्याभ्यां कृतस्य प्रत्यवस्थापनस्य बहुविधत्वाज्जातयोऽपि चतुर्विंशतिधाः। सर्वञ्चैतत्पञ्चमाध्यायेऽनुसन्धेयम्।

निग्रहस्थानम्––पराजयो निग्रहस्तस्य स्थानमाश्रयो निग्रहस्थानपदेन व्यपदिश्यते। पराजयहेतुर्वा निग्रहस्थानम्। तथा चोक्तम्:––

'विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्।' [न्याय० १।२।१९]

विपरीता प्रतिपत्तिः विप्रतिपत्तिः विरुद्धज्ञानम्। अदूषणे दूषणबुद्धिरिति। अप्रतिपत्तिः आरम्भविषयेऽनारम्भः। एतद्द्वयमपि पराजयहेतुत्वान्निग्रहस्थानमुच्यते। विप्रतिपत्त्यप्रतिपत्त्योश्च बहुत्वान्निग्रहस्थानान्यपि बहूनि। तान्यपि पञ्चमाध्याये प्रपञ्चितानि।

तानीमानि छल-जाति-निग्रहस्थानानि यथार्हं प्रयुञ्जाना वैतण्डिका वादाहवेषु विजयकौतुकमातन्वते।

## न्यायदर्शनस्य प्रणेता तत्कालनिर्णयश्च

न्यायसूत्राणां प्रणेतारः श्रीभगवद्गोतममुनिपादाः 'अक्षपाद' इति नाम्नाऽपि प्रसिद्धाः। कतमं जनपदमिमे स्वजनुषा भूषयामासुरिति त्वनिर्णीतमेव। केचन मिथिलामण्डलवासिन इमे इत्यवधारयन्ति।। परमन्ये तत्र विप्रतिपद्यन्ते। सूत्रनिर्माणकालविषयेऽपि मतानि बहुशो भिद्यन्ते। एतत्सूत्रेषु खण्डनवादमवलोक्य

केचन रचनैषा तृतीयशतके प्रतिपन्नेति मन्यन्ते, अपरे द्वितीयशतकेऽस्य निर्माण-कालं स्वीकुर्वन्ति। इतरे विक्रमस्य षष्ठशताब्द्याः पूर्वमस्योदयमभ्युपयन्ति। भवतु तद्यथा-तथा वा परन्त्वेतत्तु निश्चितं यत्सन्तीमानि न्यायसूत्राणि नितरां प्राचीनतमानि। न्यायदर्शनस्य चतुर्थाध्याये निरूपितो वादः बुद्धप्रादुर्भावादपि पूर्वतन इति विद्वद्भिरवधार्यते। अतः गौतमस्य समयः विक्रमपूर्वचतुर्थशताब्दी-देशीय इत्यङ्गीकारे न काऽपि विप्रतिपत्तिः। यद्यपि तर्कस्तु निसर्गतः मानवसृष्टि-समकालएवोपात्तजन्मा बुद्धिजन्यत्वाद्धि तर्कस्य; तथापि यत्र-तत्र प्रकीर्णं तर्क-तत्त्वं प्रमाणसंवलितं नियमशृङ्खलायां सर्वतः प्राक् यैः प्रणिबद्धं ते तु महामहिम-शालिनः तर्कपारावारपारीणाः महर्षिगोतममहाभागा एव।

केचित्त्वत्र रामायणीयगौतमाख्यानमनुसंधाय रामायणकाल एव गौतमस्य स्थितिकाल इत्यूहन्ते। आख्यानञ्चैकमुदाहरन्ति––यद्वनं प्रति जिगमिषू रामो ब्रह्मर्षिणा वशिष्ठेन मुहुर्मुहुर्बोध्यमानोऽपि यदा न बुबुधे, स्वनिश्चयाच्च न विरतो-ऽभवत्, तदा वशिष्ठः तर्कतत्त्वाम्भोनिधिपारदृश्वानं गौतममाजुहाव। तदा स तत्रागत्य विदिताखिलवृत्तान्तो रामम्प्रति तर्कालङ्कृतं वचनमिदमब्रवीत्––'प्रेष्ठ रघुनन्दन! किं वनवासमिच्छसि? तद्वद, सर्वेषु वनेषु वासमिच्छसि, यस्मिन्क-स्मिन्वा वनोद्देशे? चेत्पूर्वः पक्षः तर्हि चतुर्दशवर्षमितः कालो न पर्य्याप्तः सर्वाणि वनान्यधिवस्तुम्। यदि कस्मिंश्चिदेकस्मिन् वने तव निवासेच्छा तर्हि निकषा अयोध्यामेव कस्मिन्नपि वने निवस।' इति महर्षेः तर्कसंवलितां गिरमिमामाकर्ण्य रुद्धवाक्सन् रामः किञ्चिद्विचिन्त्य सस्मितमुदाजहार––

यः पठेद् गौतमीं वाचं न स शान्तिमवाप्नुयात्॥

[वाल्मीकि रामायणम्]

परमेतादृशान्युपाख्यानानि कस्यचित्कालनिर्णये प्रमाणत्वेनोपात्तुं न पर्य्याप्तानि नापि युक्तानि।

## न्यायदर्शनस्य प्रसिद्धा आचार्याः

न्यायदर्शनस्य प्रादुर्भावः प्रायशो वर्षाणां सहस्रद्वयीमत्येति। विक्रमस्य पञ्चमशतकादारभ्याद्यपर्यन्तं न्यायदर्शनस्य विमला धाराऽनवच्छिन्नप्रवाहेण प्रव-हन्ती आस्ते। कालान्तरेण सा धारा द्वेधा विभक्ता। महर्षिगौतमोपज्ञा प्राचीन-न्यायपदेन व्यपदिश्यते, अपरा श्रीमद्गङ्गेशोपाध्यायप्रवर्त्तिता नव्यन्यायपदेन विभूष्यते। प्राचीनन्यायस्यारम्भकालः बुद्धकालात्प्राग्भवः परं क्रमबद्धा न्यायपद्धतिस्तु बौद्धधर्मोदयकाले प्रादुर्भूता। मौलिकाः सिद्धान्तास्तु प्राक्क्रीस्तीयतृतीयशताब्द्यां समीचीनतया प्रतिष्ठामधिगताः। नव्यन्यायस्य प्रारम्भः त्रयोदशशतके सम्भाव्यते।

वात्स्यायनः—न्यायदर्शनस्य सर्वप्रथमो भाष्यकारः श्रीवात्स्यायनो नाम मुनिः न्यायसिद्धान्तानां गूढं रहस्यमुद्‌घाटयितुं महोच्चपदमधिकरोति ।

उद्योतकरः—अयमतीव प्रतिभाशाली, मेधावी, कुशाग्रबुद्धिः, तार्किकशिरोमणिश्चासीत् । दिङ्नागस्य कुतर्कान् खण्डयितुं, न्यायशास्त्रस्य च निर्दुष्टतां मण्डयितुं न्यायवार्त्तिकाख्यं बृहत्प्रबन्धमुपबबन्ध । सुप्रसिद्धः संस्कृतगद्यकविः सुबन्धुः स्वरचितवासवदत्तायां 'न्यायसङ्गतिमिव उद्योतकरस्वरूपा' मित्युल्लिख्य नूनमुद्योतकरस्य समस्ते न्यायसंसारे विमलां कीर्त्तिम्प्रख्यापयामास । यद्यपि धर्मकीर्त्तिनाम्ना महाविदुषा दिङ्नागीयसूत्रेषु प्रत्यक्षलक्षणे 'प्रत्यक्षं कल्पनापोढ' मित्यत्र 'अभ्रान्त' मिति पदमायोज्य प्रबलखण्डननिर्स्त्रिशात्परिरक्षणं कृतम्, तथापि न शशाक स सर्वतोभावेन दिङ्नागं परित्रातुम् । एतेन षष्ठशतकस्य मध्यभागसम्भूतस्य सुबन्धोः सप्तमशताब्द्याः द्वितीयभागस्थितिजुषो धर्मकीर्त्तेश्च उद्योतकरस्य पूर्वतनत्वसुपपादितम्भवति । वस्तुतो दिङ्नागीयप्रबलाक्रमोपप्लवैः निष्प्रभीकृताया न्यायविद्यायाः पुनरप्युद्योतकरत्वादसौ उद्योतकरः सञ्जातोऽन्वर्थनामा । न्यायवार्त्तिकाख्योऽयं ग्रन्थः प्रणेतुः प्रौढपाण्डित्यं प्रकाशयति । न्यायवार्त्तिकस्य प्रखरा तर्कप्रणाली तर्कविदां समाजे कामप्यपूर्वां प्रतिष्ठामवगाहते ।

वाचस्पतिमिश्रः—महामेधावी किलायं तार्किकाग्रणीर्वाचस्पतिमिश्रः स्वजन्मना मिथिलामलञ्चकार । श्रीमिश्रप्रणीतेन न्यायसूचीनिबन्धेनावगम्यते विक्रमस्य ८९८ तमेऽब्दे सञ्जातः, यथा चायं स्वयमाह—

'न्यायसूचीनिबन्धोऽसौ, अकारि विदुषां मुदे ।
श्रीवाचस्पतिमिश्रेण, वस्वङ्कवसु (८९८) वत्सरे ॥'

अनेन खलु महाविदुषा वैशेषिकदर्शनं विहाय सर्वेष्वेव दर्शनेषु अतिपाण्डित्यपूर्णाः प्रमाणभूताः सुविस्तृताः टीका आटीकिताः । प्रगाढपाण्डित्यगुणगरिम्णैवासौ 'सर्वतन्त्रस्वतन्त्रे' ति पदेन संस्मियते । उद्योतकरकृतन्यायवार्त्तिकस्य तात्पर्यटीकामालिख्य तार्किकलोकस्य महान्तमुपकारं चकार । जटिलतर्कतमसि निगूढान्पदार्थान् अमिताभयाऽप्रतिमप्रतिभाप्रभया समुद्‌भावयामास । पदे-पदे प्रकीर्णमस्य प्रातिभज्योतिःस्फुलिङ्गजातं कस्य तार्किकस्य चेतो न चमत्करोति । तात्पर्यटीकाया औज्ज्वल्यमालोक्य तार्किका अमुं 'तात्पर्याचार्य' इति पदेनाभिनन्दयामासुः । न्यायमञ्जरीकारो जयन्तभट्टो न्यायमञ्जर्य्याम् 'आचार्यास्तु' इत्यनेन पदेन वाचस्पतिमेवानुस्मरति । अतो जयन्तभट्टात्पूर्वकालभवोऽयमिति सुतरामनुमातुं पार्यते । एतेन जयन्तभट्टसदृशा विद्वांसोऽपि वाचस्पतिमिश्रप्रकाण्डपाण्डित्ये श्रद्दधते स्म इत्यपि सुतरां ध्वन्यते । वस्तुतः तार्किकमण्डलाखण्डलानां वाचस्पति-

मिश्रमहोदयानां वैदुषीवैभवं नापेक्षते किमपि वर्णनम्। यैः खलु चक्षुष्मद्भिः वाचस्पतिलेखिन्युद्गताः न्यायकणिका–तत्त्वसमीक्षा–तत्त्वबिन्दु–सांख्यतत्त्वकौमुदी-भामती–योगतत्त्ववैशारदी–न्यायवार्त्तिकतात्पर्यटीकाप्रभृतयः सुप्रसिद्धा ग्रन्था नयन-सरणिमवतारितास्त एवात्र प्रमाणम्।

जयन्तभट्टः—न्यायमञ्जरीप्रणेता पदवाक्यप्रमाणपारावारपारीणः श्रीचन्द्रपण्डितस्य तनूजन्माऽयं किल जयन्तभट्टो नाम परमपण्डितः। न्याय-मञ्जर्याः पर्यवसाने भट्टः स्वयमुपश्लोकयति :—

'वादेष्वाप्तजयो जयन्त इति यः ख्यातः सतामग्रणी–
रन्वर्थो नववृत्तिकार इति यं शंसन्ति नाम्ना बुधाः।
सूनुर्व्याप्तदिगन्तरस्य यशसा चन्द्रस्य चन्द्रत्विषा,
चक्रे चन्द्रकलावचूडचरणाध्यायी स धन्यां कृतिम्॥

न्यायमञ्जर्यां वाचस्पतिमिश्रानन्दवर्द्धनाचार्ययोर्नामोल्लेखेन सुतरामिद-मनुमातुं शक्यते यन्नवमशताब्द्या उत्तरार्धभाग एवाऽस्य स्थितिकालः। अनेन गौतमसूत्रेषु तत्तद्गूढरहस्यमुद्घाटयितुं विरोधिनां मतव्रातं निराकर्तुं विशेषतः चार्वाक-बौद्ध-मीमांसा-वेदान्तप्रभृतीनां सिद्धान्तान् खण्डयितुमेषा प्रमेयबहुला वृत्तिरारचिता। यद्यपि सर्वाणि गौतमसूत्राणि तु नामग्राहं न व्याख्यातानि, तथापि तात्पर्यतः सर्वाणि समुद्भासितरहस्यानि सुनिपुणं निष्पादितानि। वादिनां विप्रति-पत्तिनिरासो यादृशोऽत्र विहितः न तादृशः क्वचिदन्यत्रोपलभ्यते। श्रीजयन्तभट्टेन न्यायकलिकानामाऽन्योऽपि न्यायपदार्थनिरूपणपर एको ग्रन्थः प्रणीतः, स च काश्यां मुद्रितः सम्प्रत्युपलभ्यते।

उदयनाचार्यः—अस्य तर्कधुरन्धरस्य उदयकालो दशमशतकोत्तरार्ध-भागः। तथा हि :—

तर्काम्बराङ्कप्रमितेष्वतीतेषु शकान्ततः।
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम्॥

९८४ खीस्ताब्द एवाऽस्य लक्षणावल्या निर्माणकालः। उदयनाचार्य-विरचितौ द्वौ सन्दर्भावतीव प्रसिद्धौ—१. बौद्धधिक्कारापरनामा 'आत्मतत्त्व-विवेकः', २. 'न्यायकुसुमाञ्जलि' श्चेति। तत्रापि प्रथमे क्षणभंग-शून्यवादयोः प्रखरं खण्डनं विधाय न्यायसम्मतस्यात्मतत्त्वस्य यथार्थनिरूपणं विहितम्। कुसुमाञ्जलिस्तु अस्य ग्रन्थस्रजि मध्यमणिरिवाऽवभासमाना विलसति। अस्या-मनीश्वरवादिसिद्धान्तानां प्रखरतरखण्डनं विधाय ईश्वरवादमण्डनमतीव मार्मिक-

तया यत्कृतं तत्तस्य कामपि अलौकिकीं प्रतिभामाविष्करोति। ईश्वरसिद्धिविषये कुसुमाञ्जलिसदृशं तर्कप्रमाणसम्वलितं नान्यद् ग्रन्थरत्नं न्यायसाहित्ये सुलभम्।

गङ्गेशभट्टः—अत्रभवतः श्री उदयनाचार्यस्य किञ्चित्कालानन्तरमेकोऽन्यो नैय्यायिकचूडामणिः गङ्गेशोपाध्यायो नाम स्वजनुषा मिथिलां विभूषयामास। गङ्गेशोपाध्याय एव नव्यन्यायस्य प्रवर्त्तकः। 'तत्त्वचिन्तामणि' रस्याभिनवयुगप्रवर्त्तको ग्रन्थः। अनेन नव्यदर्शनधुरन्धरेण विचारपरिष्कारार्थं भाषायाम् अवच्छेदक-अवच्छेद्य—निरूपक-निरूप्य—अनुयोगि-प्रतियोगिपदावलीं सन्निवेश्य यश्चमत्कारपूर्णः परिष्कारः प्रदर्शितः स कस्य तार्किकस्य कौतूहलं नातनोति। गङ्गेशोपाध्यायेनैव स्वग्रन्थे खण्डनखण्डखाद्यकृतः श्रीहर्षस्य द्वादशतमशतकोद्भवस्य सिद्धान्तखण्डनं विहितम्। त्रयोदशतमशतकान्तिमभागसम्भवस्य श्रीपक्षधरमिश्रस्य 'आलोका'ख्यया 'तत्त्वचिन्तामणि' टीकया सुतरां शक्यते प्रतिपत्तुं यत् श्रीहर्षपक्षधरमिश्रयोर्मध्यगत एव त्रयोदशशताब्द्या आरम्भकाल एवास्य प्रादुर्भावकालः। जयदेवापरनामधेयस्य पक्षधरमिश्रस्य विषये तदानीन्तनविद्वन्मण्डलीषु प्रवाद एष प्रचलति स्म यन्न पक्षधरप्रतिस्पर्द्धी कश्चिद् विद्यते :—

'शङ्कर-वाचस्पत्योः शङ्कर-वाचस्पती उभौ।
पक्षधरप्रतिपक्षी लक्ष्यीभूतो न भूतले क्वापि॥

एवं प्रायशः शतकद्वयवर्षपर्य्यन्तं मिथिलाभूमण्डलं न्यायविद्यायाः केन्द्रीभूतं व्यराजत। तदनु पञ्चदशतमशताब्द्या बङ्गप्रदेशे नवद्वीपे नव्यन्यायस्य विद्यापीठः स्थापितः। षोडशतमा सप्तदशतमा च शताब्दी नव्यन्यायस्य स्वर्णयुगत्वेनाख्यायेते। खल्वस्मिन्नेव स्वर्णयुगे बङ्गदेशसमुद्भवैः नव्यनैय्यायिकैः तादृशाः प्रौढाः ग्रन्था विरचिता यैर्नवद्वीपं प्रतिष्ठायाः परां कोटिमवाप। सा खलु अद्यापि अनवच्छिन्नरूपेण वरीवर्त्ति।

वासुदेव सार्वभौमः—एषु नैय्यायिकप्रवरेषु सर्वप्रथमः खलु वासुदेवसार्वभौमः। अस्य स्थितिकालः पञ्चदशतमशताब्द्याः अन्तिमः षोडशतमशताब्द्याश्चारम्भकालः। रघुनाथशिरोमणिभट्टाचार्यसदृशः बङ्गदेशीयतार्किकधुरन्धरः वासुदेवसार्वभौमस्य शिष्यश्रेण्यां स्थितः प्रमुखः शिष्य आसीत्।

रघुनाथतर्कशिरोमणिः—बङ्गदेशीयनैय्यायिककुलललामभूतेषु विद्वत्सु नव्यन्यायधुरन्धरस्य श्रीरघुनाथतर्कशिरोमणेः कोऽपि प्रतिस्पर्द्धी नासीत्। अस्याऽनन्यसाधारणां तर्कचातुरीमवलोक्यैव तु 'तर्कशिरोमणि' रिति पदेनासौ विभूषितः। अस्य श्रेष्ठतमा कृतिः गङ्गेशोपाध्यायस्य तत्त्वचिन्तामणौ काऽपि विवरणात्मिका विवेचनात्मिका च 'विलक्षणदीधि'त्याख्या प्रगाढपाण्डित्यपूर्णा टीका, या काला-

न्तरे मूलग्रन्थवत् पाण्डित्यस्य निकषग्रावतां गता । नूनं रघुनाथतर्कशिरोमणेः 'दीधितिः' नव्यन्यायनभोमण्डले सहस्रदीधितिरिवाद्य विराजते ।

मथुरानाथः—रघुनाथतर्कशिरोमणिःशिष्यपरम्परायां तर्कवागीशो मथुरानाथः सर्वश्रेष्ठः । स एष तर्कशिरोमणिः आलोक-चिन्तामणि-दीधितिप्रभृतिषु ग्रन्थेषु गूढार्थप्रकाशिनीं रहस्याख्यां टीकामुट्टङ्कच महतीं प्रतिष्ठां प्राप ।

जगदीश भट्टाचार्यः—तदनन्तरं नवद्वीपस्य सर्वश्रेष्ठेन नैय्यायिकेशेन जगदीशभट्टाचार्येण दीधिति-सन्दर्भे एका प्रामाणिकी टीकाऽऽटीकिता या खलु जागदीशीति नाम्ना विख्याता । शब्दशक्तिप्रकाशिकाख्योऽस्यापरो महान् सन्दर्भः । अयं खलु विद्वन्मण्डले महीयसीं प्रतिष्ठामाप । यत्रेदमुपश्लोकितम्भवति :—

'जगदीशस्य सर्वस्वं शब्दशक्तिप्रकाशिका ।' इति

गदाधर भट्टाचार्यः—नव्यन्यायप्रसरे मथुरानाथः, जगदीशः, गदाधर इति रत्नत्रयस्वरूपा बङ्गीयनैय्यायिकत्रयी अतीव प्रथिता । गदाधरस्य प्रादुर्भाव-कालः सप्तदशतमशताब्द्यां क्वचिदन्तरभूत् । अस्य सुप्रसिद्धा बृहत्काया रचना गादाधरी नाम । अनेन तार्किकमूर्धन्येन प्रायशः द्विपञ्चाशत् (५२) संख्याका मौलिका ग्रन्था रचिताः । येषु व्युत्पत्तिवाद-शक्तिवादौ परमप्रसिद्धौ । एषु सर्वेषु विद्वत्समाजोऽद्यापि बद्धादरो दृश्यते ।

नूनं तत्त्वचिन्तामणिः, दीधितिः, जागदीशी, गादाधरी चेति चत्वारि ग्रन्थरत्नानि नव्यन्यायप्रसरे महोज्ज्वलानि रत्नानीवाभान्ति ।

## नव्यन्यायः

इदञ्च न्यायदर्शनं प्राचीन-नव्यभेदेन द्वेधा विभक्तम् । तत्र प्राचीनन्यायविषये किञ्चिदिव समासतः तत्स्वरूपप्रतिपत्त्यर्थं प्राङ्निर्दिष्टम् । अधुना नव्यन्यायविषये किञ्चिद्विविच्यते । प्राचीनन्यायप्रतिपादितानां षोडश-पदार्थानां द्रव्यादिसप्तपदार्थेष्वेवान्तर्भावं विभाव्य प्रमाणान्येव विशेषतः परिष्कृता-नि । प्राचीनन्यायाङ्गीकृतानां प्रत्यक्षादिप्रमाणानामेवाऽत्र मूलङ्कषं विवेचनम् । चेत्प्राचीनन्यायः प्रमेयशास्त्रं नव्यन्यायश्च प्रमाणशास्त्रमित्यप्युच्येत तर्हि न कापि विप्रतिपत्तिः । नव्यन्याये परिष्कृतस्याप्यतिपरिष्कृतित्वसम्पादनाय, अवच्छेदकावच्छिन्नादिप्रयोगो बाहुल्येनोपलालितः । नव्यन्यायप्रवर्त्तका बहव आचार्याः अभूवन् । परन्तु तेषु गङ्गेशोपाध्यायः सर्वमूर्द्धाभिषिक्तः ख्रीस्त १२०० शतकसम्भवः । एतद्विरचित 'स्तत्त्वचिन्तामणि' समाख्यो ग्रन्थः निखिलनव्यन्याय-साहित्ये शेखरायते । गङ्गेशोपाध्यायो मिथिलायां लब्धजन्मा द्विजन्मा प्रकाण्डपाण्डि-

त्यमण्डितः परमतर्कपण्डित आसीत्। यद्यमुमेव नव्यन्यायप्रसरस्यादिजनकत्वेन विभावयेम तर्हि न काप्यत्युक्तिः। तदनु, षोडश (१६) तमशताब्द्यां श्रीपक्षधर-मिश्रस्य मैथिलविदुषः शिष्येण वासुदेवसार्वभौमेन बङ्गदेशीयप्रधानविद्यापीठे नवद्वीपे 'तत्त्वचिन्तामणि' ग्रन्थस्य तत्रत्याध्ययनाध्यापनसरणौ निवेश्य प्रचुरः प्रसारो व्यधायि। एवं मिथिला नवद्वीपश्चैतद्द्वयं नव्यन्यायस्य प्रधानं केन्द्रं समपद्यत, तदनु जले तैलबिन्दुन्यायेन नव्यन्यायः सर्वत्र महाराष्ट्रे मद्रजे, काश्मीरे शनैः शनैः प्रसृतिमवाप्य समस्ते भारते वर्षे प्रसिद्धिं गतः। एष 'तत्वचिन्तामणि' ग्रन्थः त्रिशतपृष्ठैर्निबद्धः मूलरूपेण। विश्वसाहित्ये अस्य ग्रन्थस्य यावत्संख्याकाष्टीकाः उट्टङ्किता, न तावत्सङख्याकाः कस्यापि ग्रन्थस्योल्लिखिता दृश्यन्ते। एतावतैवास्य लोकप्रियत्वं, जटिलत्वं, रहस्यमयत्वं गम्भीरत्वञ्चोपोद्बलितं भवति।

ताः सर्वाष्टीकाः सम्मिलिताः परिगणिताश्च लक्षावधिपृष्ठसंख्यां संस्पृशन्ति, इति कस्य कौतूहलं नोपजनयेत्।

तदेष प्राचीन-नव्यन्याययोर्भेदो न केवलं कालकृतः पौर्वापर्यसंवलितः किन्तु पद्धतिकृतोऽपि स भेदः। प्राचीनन्यायत्वेन, भगवद्गोतममुनिपादैर्विरचितं सूत्रात्मकं न्यायशास्त्रम् एवं सूत्रपद्धतिमपेक्ष्य प्रवृत्तानि वात्स्यायनभाष्यवृत्तिपराणि च व्याख्यानानि सङगृह्यन्ते। नव्यन्यायत्वेन च पुनः सूत्रपद्धतिमुपेक्ष्य स्वतन्त्ररूपेण न्यायप्रोक्ताशयमादाय विशदीकृताः सन्दर्भा नव्यन्यायपदेन व्यपदिश्यन्ते। यथा व्याकरणे, पाणिनिमुनिकृताष्टाध्याय्याः सूत्रक्रममपेक्ष्य ये वृत्तिरूपाः काशिकादि-सन्दर्भाः पतञ्जलिमुनिकृतञ्च महाभाष्यादिकं तत्सर्वं प्राचीननाम्ना प्रसिद्धम्। पाणिनीयसूत्रनिरपेक्षाणि तद्विषयवैशद्यविधायकानि भट्टोजिदीक्षितादिविरचितानि कौमुद्यादीनि च यानि ग्रन्थरत्नानि तानि नव्यव्याकरणरूपेणैव परिगृह्यन्ते।

## नव्यन्यायाविर्भावकालः

अस्य नव्यन्यायस्याविर्भावकालः ख्रैस्तदशमशताब्द्या आरभ्य त्रयोदश-तमशताब्दीपर्यन्तमेव विभाव्यते। अस्मिन् काले एव नव्यन्यायस्य प्रचारः मिथि-लायां नवद्वीपे च सञ्जातः। नव्यन्यायबलादेव चार्वाक-बौद्ध-जैनसिद्धान्तानां परिपूर्णो निरासः सम्पन्नः इति निर्विशङ्कम्।

नव्यन्यायसाहित्यम्—नव्यन्यायस्य प्रमुखा 'ग्रन्थाः—व्युत्पत्तिवादः, शक्तिवादः, गादाधरी, जागदीशी, मुक्तावलिः, दिनकरी, रामरुद्री, अवच्छेद-कत्वनिरुक्तिः, सव्यभिचारपरिष्कार इत्याद्या अनेके ग्रन्थाः दर्शनसाहित्ये समुल्लसन्ति।

अथैर्तांह न्यायदर्शनस्य विशिष्टा वादाः संग्रहेण प्रदर्श्यन्ते । न्यायनयेन जीवात्म-परात्मनोर्भेदः जीवात्मनां नानात्वम् । मनस इन्द्रियत्वमभौतिकत्वं स्वतन्त्रसत्ताकत्वं ज्ञानयौगपद्यव्यवच्छेदहेतुकाणुत्वं सुखदुःखाद्युपलब्धिसाधनत्वम् । दुःखात्यन्तनिवृत्तिर्मोक्षः । तदुपायस्तु मिथ्याज्ञानापायः । सृष्ट्यारम्भकाः परमाणवः । तत्रेश्वरस्य निमित्तकारणत्वम् । ईश्वरेच्छयैव परमाणुषु क्रियोत्पत्तिः । तया क्रियया यथावसरं संयोगविभागाभ्यां सृष्टेरुत्पत्तिप्रलयौ । असत्कार्यवादः । असदुत्पद्यते, उत्पन्नं विनश्यतीति सिद्धान्तात् प्रागभावप्रतियोगित्वरूपकार्यलक्षणाच्च । उत्पत्तेः पूर्वं कार्यस्य प्रागभावः इत्ययमसत्कार्यवाद इति निष्कर्षः । शब्दानाञ्च नित्यत्वमिति दिक् ।

## नैय्यायिकप्रशंसा

मोहं रुणद्धि विमलीकुरुते च बुद्धि,
सूते च संस्कृतपदव्यवहारशक्तिम् ।
शास्त्रान्तराऽभ्यसनयोग्यतया युनक्ति,
तर्कश्रमो न तनुते किमिहोपकारम् ॥

प्रायः काव्यैर्गमितवयसः पाणिनीयाम्बुराशेः,
सारज्ञस्याप्यपरिकलितन्यायशास्त्रस्य पुंसः ।
वादारम्भे वदितुमनसो वाक्यमेकं सभायां,
प्रह्वा जिह्वा भवति कियती पश्य कष्टामवस्थाम् ॥

अपरीक्षितलक्षणप्रमाणै-रपरामृष्टपदार्थसार्थतत्त्वैः ।
अवशीकृतजैत्रयुक्तिजालै रलमेतै रनधीततर्कविद्यैः ॥
ज्ञानाब्धिरक्षिचरणः कणभक्षकश्च,
श्री पक्षिलोप्युदयनः स च वर्धमानः ।
गङ्गेश्वरः शशधरो बहवश्च नव्या,
ग्रन्थैर्व्यरुन्धत इमे हृदयान्धकारम् ॥

## नैय्यायिकानां निन्दा च

प्रशंसावन्नैयायिकानां निन्दाऽपि विनोदावहा । साऽपि रसिकैरास्वाद्यताम् :

कर्मब्रह्मविचारणां विजहतो भोगापवर्गप्रदां,
घोषं कञ्चन कण्ठशोषफलकं कुर्वन्त्यमी तार्किकाः ।
प्रत्यक्षं न पुनाति नापहरते पापानि पीलुच्छटा-
व्याप्ति र्नावति नैव पात्यनुमितिर्नो पक्षता रक्षति ॥

हेतुः कोऽपि विशिष्टधीरनुमितौ न ज्ञानयुग्मं मरु--
द्वाचो नेति च मोघवादमुखरा नैय्यायिकाश्चेद् बुधाः।
मेषस्याण्डसियत्फलं बलिभुजो दन्ताः कियन्तस्तथे-
त्येवं सन्ततचिन्तनैः श्रमभुजो न स्युः कथं पण्डिताः॥

न जिघ्रत्याम्नायं स्पृशति न तदङ्गान्यपि सकृत्।
पुराणं नादत्ते न गणयति किं च स्मृतिगणम्॥
पठन् शुष्कं तर्कं परपरिभवार्थोक्तिभिरसौ-
नयत्यायुः सर्वं निहतपरलोकार्थयतनः॥

प्रयत्नैरस्तोकैः परिचितकुतर्कप्रकरणाः
परं वाचो वश्यान् कतिपयपदौघान् विदधतः।
सभायां वाचाटाः श्रुतिकटु रटन्तो घटपटान्
न लज्जन्ते मन्दाः स्वयमपि तु जिह्रेति विबुधः॥

अहो! कीदृशोऽयं हृदयङ्गमो वाग्विलासः? इति दिक्।

---------

## अथ वैशेषिकदर्शनम्

वैशेषिकदर्शनस्य प्रणेता तत् प्राचीनता च—न्यायवैशेषिकयो र्वैशेषिकस्यैव प्राचीनत्वम्—वैशेषिकमिति संज्ञायां हेतुः—वैशेषिकसाहित्यम्—प्रतिपाद्या विषयाः—निःश्रेयसम्—अभावः—द्रव्याणि—तमसो न द्रव्यान्तरत्वम्—शक्ति-सादृश्ययोरपि न द्रव्यान्तरत्वम्—गुणाः—कर्माणि—सामान्यम्—विशेषः—समवायः वैशेषिकपरिशिष्टम् ।

## वैशेषिकदर्शनस्य प्राचीनत्वम्

वैशेषिकदर्शनमिदं भागवन्महर्षिकणादमुनिपादैः प्रणीतम् । स किलायं महर्षिः कश्यपगोत्रोत्पन्नत्वात् काश्यपनाम्नाऽपि जेगीयते—'विरुद्धासिद्ध-सन्दिग्ध-मलिङ्गं काश्यपोऽब्रवीत् ।' इति । अयमेव मुनिः औलूकः, उलूकश्चाप्याख्यायते । सर्वदर्शनसंग्रहकारैस्तु वैशेषिकदर्शनस्योल्लेखः औलूक्यदर्शननाम्नैव कृतः । अमुमेव महर्षि केचन कणभुक्-कणभक्षनाम्नाऽप्यामनन्ति । तदेवं सोऽयं महर्षिः अतीव प्राचीनः प्रतीयते । किञ्च, महाभारतेऽपि भीष्मपर्वणि तावदुलूकनाम्नो महर्षे-र्वर्णनमवलोक्यते । 'न वयं षट्पदार्थवादिनो वैशेषिकवत्' इति सांख्यसूत्रादपि अस्य पूर्वकालभवत्वमवगम्यते । एवं 'महद्दीर्घकालाद् वा ह्रस्वपरिमण्डलाभ्याम्' इत्यादि ब्रह्मसूत्रपर्यालोचनाद् व्याससूत्रेभ्योऽपि पूर्वमेतद् दर्शनं प्रणीतमनुमीयते । किञ्चास्मिन् दर्शने न्यायदर्शनवत् शब्दानामुत्पत्तिविनाशवत्त्वं सिद्धान्तितम् । सोऽयं सिद्धान्तो जैमिनिमुनिपादैरध्वरमीमांसायां 'कर्मैके तत्र दर्शनाद्' इत्यादिसूत्रै-र्महता समारम्भेण निराकृतः । एतेनापि पूर्वमीमांसादर्शनादस्य प्राचीनत्वं सम्भव-त्युपोद्वलितुम् ।

## न्यायवैशेषिकयोः वैशेषिकस्यैव प्राचीनत्वम्

अपि च समानतन्त्रयोरनयोः न्यायवैशेषिकयोः वैशेषिकस्यैव प्राचीनतरत्व-मुद्भाव्यते । वैशेषिके याऽनुमानप्रणाली संक्षेपेण प्रदर्शिता सैव न्याये महता विस्तरेणोपदिष्टा । अपिच, हेत्वाभासा अपि वैशेषिकेण त्रय एव निरूपिताः । न्याये च पुनः पञ्चैव ते सप्रपञ्चमुदञ्चिताः । चेदिदं वैशेषिकं भवेन्न्यायदर्शनतः उत्तरकालभवं, तर्ह्यवश्यं हेत्वाभासानां पञ्चत्वं निराकृत्य त्रित्वमेव तेषा-मनेन सोपपत्तिकं व्यवस्थापितं स्यात् । न च तथाऽस्ति, तस्मान्न्यायदर्शनतोऽपि प्राग्भवत्वमेवास्योपपद्यते । अतः महर्षिणा गोतमेन भगवत्कणादमुनिपादक्षुण्णां प्रणालीमेवोत्तरकाले सम्यक् संशोध्य विशदीकृत्य च न्यायरूपेण सा पुनरुपनिबद्धा इति निर्विशङ्कं शक्यते समुपपादयितुमिति कालविद आकलयन्ति ।

## 'वैशेषिक' संज्ञायां हेतुः

दर्शनान्तरैः विसदृशतया 'विशेष' नामानं पदार्थमङ्गीकृत्य प्रवर्त्तमानत्वाद् वैशेषिकमित्यभिधानमस्य चारितार्थ्यमश्नुते। विशेषत्वञ्च नाम नित्यद्रव्यवृत्तित्वे सति व्यावर्त्तकत्वम्। घटादीनां द्व्यणुकपर्य्यन्तानां तत्तदवयवभेदात् परस्परं भेदः परमाणूनां च परस्परभेदको विशेष एव। स तु स्वत एव व्यावृत्तः। तत्र विशेषान्तरापेक्षा नास्ति। विशेषस्तु नित्यद्रव्यवृत्तिकः अतएव स नित्य इति। परमेष विशेषपदार्थः दर्शनान्तरैर्न स्वीकृतः। तदेतस्य 'विशेष'पदार्थस्य प्रतिपादनादेवाऽस्य 'वैशेषिकमि'ति संज्ञा।

सप्तत्युत्तरत्रिशत (३७०) सूत्रैर्निबद्धं दशाध्यायात्मकमिदं दर्शनम्। प्रत्यध्यायञ्च द्वे-द्वे आह्निकेऽनुस्यूते। तत्र प्रथमेऽध्याये समवेताऽशेषपदार्थकथनम्। द्वितीयाऽध्याये द्रव्यनिरूपणम्। तृतीयेऽध्याये चात्माऽन्तःकरणयोर्निरूपणम्। चतुर्थेऽध्याये शरीरतत्प्रभेदविवेचनम्। पञ्चमाध्याये कर्मनिरूपणम्। षष्ठेऽध्याये श्रौतधर्मविवेचनम्। सप्तमेऽध्याये गुण-समवाययोः प्रतिपादनम्। अष्टमेऽध्याये ज्ञानोत्पत्तितन्निदानादिनिरूपणम्। नवमेऽध्याये प्रागभावादिप्रतिपादनपूर्वकं लैङ्गिकादिज्ञानप्रतिपादनम्। दशमाऽध्याये च पुनः आत्मगुणभेदप्रतिपादनम्।

दर्शनमिदं सर्वदर्शनोपकारकत्वात् प्रधानं पदं जुषतेऽखिलेऽपि दर्शनप्रपञ्चे। नूनमस्य काणादशास्त्रस्य सर्वशास्त्रोपकारकत्वमभ्युपगतवतां सूक्तिरियं सर्वथा सामञ्जस्यमश्नुते यत् :—

'काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्।'

शब्दस्य याथार्थ्यनिर्णये यथा पाणिनीयं परमं प्रामाण्यं भजते तथैव पदार्थस्वरूपनिर्णये काणादशास्त्रमित्यत्र न सन्देहलवः।

## वैशेषिक-साहित्यम्

द्विविधा हि वैशेषिकस्य व्याख्यानसरणिः। एका सूत्रव्याख्यान रूपा, अपरा पदार्थव्याख्यानरूपा। तत्र प्रथमां श्रेणीमवलम्ब्य तु रावणप्रणीतं भाष्यं, भारद्वाजीया वृत्तिश्चेति द्वे प्राचीनतरे। शङ्करमिश्रकृत उपस्कारोऽपि प्राचीनः। जयनारायणभट्टाचार्यविरचिता कणादसूत्रवृत्तिः, चन्द्रकान्तभट्टाचार्यप्रणीतं वैशेषिकभाष्यञ्चाधुनिके। कणादसंग्रहाख्योऽपि वैशेषिकदर्शने कश्चिन्निबन्धोऽनुश्रूयते, स खलु भाष्यव्याख्यानरूप उत सूत्रव्याख्यानरूप इति तदनुपलम्भान्न निर्धारयितुं पार्यते।

द्वितीयश्रेण्यास्पुनः प्रशस्तपादभाष्यस्य व्याख्यानानि। व्योमशिखाचार्यविरचिता व्योमवती, श्रीधराचार्यविरचिता न्यायकन्दली, उदयनाचार्यकृता किरणावली, श्रीवत्साचार्यप्रणीता लीलावती, जगदीशभट्टाचार्यकृता भाष्यसूक्तिः, शङ्करमिश्रविरचितं कणादरहस्यम्, पद्मनाभमिश्रकृतः सेतुः, मल्लिनाथसूरिकृतः भाष्यनिकषः।

अपराणि च भूयांसि व्याख्यानानि आसां टीकानामपि सन्ति। तद्यथा—उदयनाचार्यप्रणीतायाः किरणावल्याः १. वर्द्धनोपाध्यायकृतः प्रकाशः, २. पद्मनाभमिश्रकृतः किरणावलीभास्करः।

एवमेव किरणावली प्रकाशस्य व्याख्याः—१. भागीरथठक्कुरविरचिता प्रकाशिका, २. रुचिदत्तकृता विवृतिः, ३. रघुनाथशिरोमणिकृता किरणावलीप्रकाशविवृतिः, ४. मथुरानाथकृतं किरणावलीप्रकाशविवृतिरहस्यम्, ५. रुद्रन्यायवाचस्पतिभट्टाचार्यविरचिता किरणावलीप्रकाशविवृति-भावप्रकाशिका। रामकृष्णकृता, जयरामभट्टाचार्यप्रणीता च केचिदपरे टीके।

न्यायकन्दल्याश्च—१. राजशेखरजैनाचार्यविरचिता पञ्जिका, २. पद्मनाभविरचिता कन्दलीसाराख्या।

इत्यादीन्यनेकानि ग्रन्थरत्नानि वैशेषिकसाहित्यमलङ्कुर्वन्ति। तदेवं वैशेषिकदर्शनस्य महीयान् विस्तरः। संक्षेपतोऽत्राधस्तान्निर्दिश्यते :—

प्रशस्तपादाख्यं ह्यस्य सुप्रसिद्धं भाष्यम्। वैशेषिकसिद्धान्तनिरूपकेषु सन्दर्भेषु प्रशस्तपादाख्यं भाष्यं सर्वमूर्द्धन्यत्वेन वरीवर्त्ति। वस्तुतस्तु नेदं भाष्यपदेन व्यपदेश्यम्, यतः अस्मिन् ग्रन्थे ग्रन्थकृता स्वातन्त्र्येण वैशेषिकसिद्धान्तानाधारीकृत्य तदुपपत्तयः प्रामाणिकतया प्रदर्शिताः न तु भाष्य[1]रूपेण। तत्रापि सविशेषं परमाणुवादः, जगत उत्पत्ति-प्रलयौ, प्रमाणानां गुणानाञ्च विशदं विवेचनमुट्टङ्कितम्। विद्वद्वरवसुबन्धुकृतेनास्य खण्डनोपलम्भेन, न्यायदर्शनभाष्ये चास्य सिद्धान्तोपपादनेन वसुबन्धु-वात्स्यायनयोरस्य प्राक्तनत्वं न कस्य कालविदो बुद्धिपथमवतरेदिति।

एतत्प्रशस्तपादमाधारीकृत्य केनापि चन्द्राचार्यनाम्ना महाविदुषा 'दशपदार्थी' त्याख्यो बृहत्सन्दर्भो व्यरचि। यस्मिन् हि तेन द्रव्यं, गुणः, कर्म, सामान्यं,

१. ये केचन प्रशस्तपादाभिधं स्वतन्त्रं व्याख्यानमस्य भाष्यतया व्यवहरन्ति तन्न पेशलम्—"सूत्रार्थो वर्ण्यते येन, पदैः सूत्रानुसारिभिः। स्वपदानि च वर्ण्यन्ते, भाष्यं भाष्यविदो विदुः।" इति भाष्यलक्षणस्य तत्रासङ्गमनात्।

समवायो, विशेषश्चेति षट्पदार्थानतिरिच्य शक्तिः, अशक्तिः, सामान्यविशेषः, अभावश्चेति नवीना अन्येऽपि चत्वारः पदार्थाः स्वीकृताः। चन्द्राचार्योऽयं सप्तमशताब्द्याः पूर्वकालभवः प्रतीयते, यतोऽस्यानुवादः ६४८ तमे ख्रीस्तसम्वत्सरे चीनीभाषायां सम्पादित उपलभ्यते।

अस्मिन् प्रशस्तपादभाष्ये अधस्तादुट्टङ्कितानां प्रसिद्धविदुषां टीकाः समुपलभ्यन्ते :—

व्योमशिखाचार्यः—व्योमशिखाचार्येति नाम्ना सम्भाव्यते यदसौ महाभागः कश्चन दाक्षिणात्यः शैवधर्माचार्य्यः। एतद्विरचिता 'व्योमवती'—नाम्नी प्रशस्तपादभाष्यस्य सर्वप्राचीना टीका। श्रीउदयनाचार्य्येण किरणावल्याम् 'आचार्य्याः' इति पदेन व्योमशिखाचार्य्यस्यैव नाम परामृष्टम् एवं राजशेखरेण च 'न्यायकन्दल्यां' टीकायां टीकाकृत्सु अस्यैव नाम सर्वप्राथम्येन संस्मृतम्। अतोऽस्य दशमशतकात्पूर्वतन एव स्थितिकालः सम्भाव्यते।

उदयनाचार्यः—उदयनाचार्येण भाष्यस्य रहस्योद्घाटनार्थं 'किरणावली' व्याख्या व्यरचि। श्रीधराचार्येण च 'न्यायकन्दल्याम्' उदयनस्य किरणावल्याः पदे-पदे समालोचना कृता। किरणावल्याः टीकान्तरेषु वरदराज-वारीन्द्र-वर्द्धनोपाध्याय-पद्मनाभमिश्रमहाभागानामाटीकिताष्टीका अतिप्रसिद्धा वर्त्तन्ते।

अन्ये चापि बहवो निबन्धा वैशेषिकविशेषज्ञैः प्राणायिषत, तेषां नामग्राहं वर्णनमत्र ग्रन्थविस्तरभिया नोपन्यस्तम्। जिज्ञासुभिः तत्र-तत्रैवानुसन्धेयम्।

## वैशेषिकस्य प्रतिपाद्या विषयाः

निःश्रेयसम्—निःश्रेयसमेवास्य शास्त्रस्य प्रमुखो विषयः। तच्च तत्तत्पदार्थस्य विविक्ततत्त्वज्ञानमन्तरा न सम्भवति। शरीरेन्द्रियाद्यखिलाऽनात्मपदार्थविविक्ताऽऽत्मतत्त्वस्य ज्ञानं हि तत्तन्मिथ्याज्ञानस्य प्रतिद्वन्द्वितया निःश्रेयसस्याऽसाधारणहेतुत्वेन सिद्धान्तितमाचार्येण। ते च पदार्था अवान्तरभेदेन बहवः सन्तोऽपि मुख्यतः षडेव। तत्रापि मुख्यास्तु त्रय एव—द्रव्यं, गुणाः, कर्म चेति। सामान्य-विशेष-समवाया इति त्रयस्तु गौणा एव। एतेष्वेव षट्पदार्थेषु सर्वेषां पदार्थान्तराणामन्तर्भावः। तस्माद् एषां षण्णां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वस्य ज्ञानात् निःश्रेयसाधिगमः। तथा च सूत्रयत्याचार्यः—

'धर्मविशेषप्रसूताद् द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायानां पदार्थानां साधर्म्य-वैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसाधिगमः।' (वै० १-१-४)

ये केचनात्र विप्रतिपद्यन्ते यदीश्वरसाक्षात्कार एव मोक्षस्यासाधारणो हेतुः, न तु विविक्तात्मतत्त्वज्ञानमिति, तन्न पेशलम्। विविक्तात्मतत्त्वज्ञानाऽभावे हि ईश्वरसाक्षात्कारस्याऽसम्भवात्, तद्भावे चावश्यम्भावात्, अतः आत्मतत्त्वज्ञानमेव मोक्षस्याऽसाधारणहेतुत्वेनोन्नेयम्। अतएव सांख्य-योग-न्याय-वैशेषिक-मीमांसाख्येषु पञ्चदर्शनेषु महता समारम्भेण तत्तत्पदार्थज्ञानपुरस्सरं सम्यगात्मतत्त्वज्ञानं समर्प्य तदनु उत्तरज्ञानमीमांसायां ब्रह्मजिज्ञासा प्रवृत्ता। षट्पदार्थज्ञानसचिवात्मतत्त्वज्ञानस्य हि फलस्वरूपया मिथ्याज्ञाननिवृत्त्या त्रिविधदुःखनिवृत्तौ ब्रह्मसाक्षात्कारात् शाश्वतसुखावाप्तिलक्षणः मोक्षः समवाप्यते इति विवेकः।

अभावः—यच्च केचनात्र प्रत्यवष्ठिन्ते कथं कणादेन षडेव पदार्थाः सूत्रिताः? कथं न अभावस्यापि सप्तमपदार्थत्वेन संग्रहः कृत? इति तन्न चारु। कुतः? अभावस्य भावतन्त्रत्वाद् आचार्येण तस्य पृथगुपदेशो न कृतः। नैतावता अभावपदार्थ आचार्यस्य न सम्मत इति वक्तुं पार्यते। यदि अभावः सम्मतो न स्यात् तर्हि तेन नवमाध्यायस्य प्रथमाह्निके 'क्रिया गुणं व्यपदेशाभावात्प्रागस'-दित्यादिसूत्रेषु अभावस्योल्लेखो विहितो न स्यात्। एतस्मात् स्पष्टमेतद् ध्वन्यते यदाचार्यस्य अभाव-सद्भावोऽपि सम्मत आसीदिति। तत्रभवान् उदयनाचार्य्योऽपि किरणावल्यामेतदाशयेनैवाह :—

"एतेन भावपदार्था एव प्राधान्येनोपदिष्टा वेदितव्याः। अभावस्तु स्वरूपवानपि पृथङ्नोपदिष्टः प्रतियोगिनिरूपणाधीनत्वात् न तु तुच्छत्वादिति।"

परन्त्वन्ये नैय्यायिकाः अभावपदार्थं पृथक्तया सप्तमपदार्थत्वेनैव स्वीकुर्वन्ति।

सोऽयमभावः चतुर्विधः—प्रागभावः, प्रध्वंसाभावः, अत्यन्ताभावः, अन्योऽन्याभावश्चेति।

तत्र तावत्प्रागभावः[1]। कार्यस्योत्पत्तेः पूर्वो योऽभावः स प्रागभावः। स चानादिः सन्नपि विनाशशाली। विनाशश्च वस्तूत्पादरूप एव न कश्चन तदतिरिक्तः। न च वस्तुनि विलुप्ते पुनः प्रागभावोत्पत्तिप्रसङ्गः शङ्क्यः। प्रागभावस्य वस्तूत्पाद-

१. 'प्रागसत्'—प्रागुत्पत्तेः पूर्वमिति प्रागभावः। वस्तुतोऽसत्कार्यवादिनो वैशेषिका इति ख्यातेरिदमेव सूत्रं मूलम्। नव्या अपि कदाचिदेतेनैव भ्रान्तिपदमारूढाः सत्कार्यवादतः असत्कार्यवादे विशेषातिशयं कल्पयन्तो वैदिकदर्शनानां मिथो विरोधमाहुः। वस्तुतः नायं ततो विशिष्यते, संज्ञातो भेदेऽपि अर्थतो भेदाभावादिति दिक्।

समकालावच्छेदेनैव विनाशात् तत्पुनरुपलब्धेरसम्भावाच्च । तस्माद्विनाश्यभावत्वं प्रागभावत्वमिति फलितोऽर्थः।

उत्पन्नस्य विनाशाद् योऽभावः स प्रध्वंसाभावः। स चोत्पत्तिमानप्यनन्तो न कदाचित्प्रध्वंसमेति। अतो जन्याभावत्वं प्रध्वंसाभावत्वमिति निष्कर्षः।

यस्तु एकत्र सतोऽर्थस्यान्यत्र त्रैकालिकोऽभावः सोऽत्यन्ताभावः। स चानादिरनन्तः। न कदाचिदुत्पद्यते न वा कदाचिद्विनश्यति, नित्यवात् तस्मान्नित्यसंसर्गाभावत्वमत्यन्ताभावत्वमिति तत्प्रतिफलितं लक्षणम्।

त्रयोऽप्यमी अभावाः तद्वादिनां संसर्गाभावनाम्नाऽपि संकीर्त्यन्ते।

अन्योऽन्याभावश्च पुनः, घटः पटो न, पटश्च घटो न इत्याकारको य एकस्याभावस्याऽन्यभावात्मनाऽभावः सोऽन्योऽन्याभावः। तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाऽभाव इत्यर्थः। केचित्तूपजनापायशालिनं कालविशेषे प्रतीयमानमन्यमेकं सामयिकाऽभावमप्यभ्युपगच्छन्ति। स चोदयनाचार्यस्यात्यन्ताभावान्नातिरिच्यते। वैशेषिकाणां चेमे चत्वरोऽपि अभावाः पृथक्त्वभेदविशेषत्वाद् गुण एवान्तर्भवन्ति। तस्माद् वैशेषिकाचार्यैरेषोऽभावपदार्थः पृथङ्नोपदिष्ट इति।

तदित्थं द्रव्यादीनां सप्तपदार्थानां साधर्म्य-वैधर्म्याभ्यां तत्त्वज्ञानस्य हेतुता पतिपादिता निःश्रेयसम्प्रति आचार्येण।

## द्रव्याणि

वैशेषिकाणां द्रव्याणि च नवैव :—

'पृथिव्यापस्तेजोवायुराकाशं कालो दिगात्मा मन इति द्रव्याणि।'

[वै० १।१।५]

इति शब्दोऽत्रावधारणार्थः। तेन नवैव द्रव्याणि, नाधिकानि, नापि न्यूनानि सूत्रेऽसमासकरणञ्च सर्वेषां प्राधान्यमवबोधयितुम्। 'आत्म'शब्देन च परमात्मनोऽपि ग्रहणम्। स्वर्णस्यापि तैजसत्वात्तेजस्यन्तर्भावः।

## तमसो न द्रव्यान्तरत्वम्

ननु मीमांसकैरङ्गीकृतस्य तमसो दशमद्रव्यत्वेनाचार्यैः संग्रहः कथन्न कृत इति। नीलं तमश्चलतीति गुण-क्रियाप्रत्ययस्य तत्र सर्वत्र प्रत्यक्षस्य सर्वजनीनत्वात्। तच्च तमो न पृथिवी निर्गन्धत्वात्, नाऽप्यस्य जलेऽन्तर्भावः नीलरूपवत्त्वात्। एवमन्येभ्योऽपि द्रव्येभ्यो वैधर्म्याद् भिद्यते। तत्प्रत्यक्षे चालोकनिरपेक्षं चक्षुः कारणम्। उच्यते, आवश्यकतेजोऽभावेनोपपत्तौ द्रव्यान्तरकल्पनाया अन्याय्यत्वात्। रूप-

वत्ताप्रतीतिस्तु तत्र भ्रमरूपा, कर्मवत्ताप्रतीतिरपि आलोकाऽपसरणौपाधिकी भ्रान्तिरेव । किञ्च तमसोऽतिरिक्तद्रव्यत्वस्वीकारे अनन्तावयवादिकल्पना-गौरवञ्चापद्येत इति।

## शक्तिसादृश्ययोरपि न पदार्थान्तरत्वम्

शक्ति-सादृश्ययोरतिरिक्तपदार्थत्वं मन्यमानाः प्राभाकराः यद् व्यवतिष्ठन्ते--कथमेते एव पदार्थाः, शक्ति-सादृश्यादीनामपि अतिरिक्तपदार्थत्वस्वीकारात्। तथाच, मण्यादिसमवहितेन वह्निना दाहो न जन्यते तच्छून्येन तु जन्यते। तत्र मण्यादिना वह्नौ दाहानुकूला शक्तिर्नाश्यते, उत्तेजकेन मण्याद्यपसारणेन च जन्यत इत्यनुमीयते । तत्राऽनुमानप्रकारश्च---वह्निः मणिनाश्यदाहानुकूलशक्तिमान्, मणिसमवधाने दाहाऽजनकत्वात्, यन्नैवं तन्नैवं, यथा व्यतिरेकी घटः । किञ्च शक्तिर्न गुणात्मिका वा कर्मात्मिका वा सामान्यान्यतमरूपा वा, उत्पत्तिमत्त्वे सति विनाशित्वात्, पटवत्। तदेवं शक्तेरतिरिक्तपदार्थत्वसिद्धिः।

एवं सादृश्यमपि सप्तपदार्थातिरिक्तः पदार्थः । तद्धि न षट्सु भावेषु अन्तर्भवति, सामान्येऽपि सत्त्वात् । यथा गोत्वं नित्यं तथाऽश्वत्वमपि इति । सादृश्यप्रतीतिः सार्वजनीना । एवं सादृश्यस्यापि शक्तिवत् अतिरिक्तपदार्थत्वमुपपन्नमेवेति।

तन्न पेशलम् । मण्याद्यसमवहितवह्न्यादेः स्वातन्त्र्येण मण्यभावादेव दाहादिकम्प्रति हेतुताकल्पनेनैव सामञ्जस्ये अनन्तशक्ति-तत्प्रागभाव-तद्ध्वंस-कल्पनाऽनौचित्यात्। न च उत्तेजकसमवहितमणिसत्त्वेऽपि कथं दाह इति वाच्यम्। उत्तेजकाऽसमवहितमणिसामान्याभावस्यैव तथात्वकल्पनात् । एवं सादृश्यमपि न पदार्थान्तरं किन्तु तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्। यथा चन्द्रभिन्नत्वे सति चन्द्रगताह्लादकादिकत्वादिमत्त्वं मुखे चन्द्रसादृश्यमिति संक्षेपः । वस्तुतस्तु । शक्तेर्यथायथं क्वचित्कारणे क्वचिच्च कार्येऽन्तर्भावात् कार्यकारणभावरूपत्वमेव, नालीकत्वमिति सर्वमनवद्यम्।

वस्तुतो नवैव द्रव्याणि। तत्र पृथिवी-आपः-तेज इति त्रीणि अनित्यानि। वायुः, आकाशं, कालः, दिग्, आत्मा, मनः इति षण् नित्यानि। तत्रापि आत्मा द्विविधो--जीवात्मा, परमात्मा चेति। तौ द्वौ, पृथिव्यादीनां मूलकारणं प्रकृतिश्चेति त्रीणि परमार्थतो नित्यानि। नित्यत्वञ्च पुनः उत्पत्तिविनाशशून्यत्वम्। प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वमिति यावत् । वायुः, आकाशं, कालः, दिक्, मन इति च पञ्च चिरस्थायित्वाद् व्यवहारभूमौ नित्यानि। तत्र चाऽऽमोक्षस्थायि मनः तदितरचतुष्टयञ्च आमहाप्रलयम् । तत्र पृथिव्यादीनां यन्मूल-

कारणं तत्सांख्य-योग-वेदान्तेषु प्रकृतिनाम्ना, वैशेषिक, न्याय-मीमांसासु च तदवस्थाऽविशेषत्वात् परमाणुनाम्ना व्यपदिश्यते। त्रिगुणत्वञ्च उभयत्रोभयोः समानमेवेति निष्कर्षः।

द्रव्य-लक्षणञ्चाचार्यः स्वयमेव ग्रथ्नाति :—

'क्रिया-गुणवत् समवायिकारणमिति द्रव्यलक्षणम् ॥' [वै० १।२।१५]

क्रियावत्त्वं, गुणवत्त्वं, समवायिकारणत्वमिति त्रयं द्रव्यलक्षणम्।

पुनरत्र केचन व्यवतिष्ठन्ते, तत्राऽपां पृथग्वचनं न कर्त्तव्यम्, वायुसन्निपातात्तदुत्पत्तेः। विशिष्टवाय्वोः सन्निपातात्सम्मेलात् खल्वापः समुत्पद्यन्ते इति। कृत्रिमोत्पत्तेः तात्त्विकप्रतिषेधाऽनुपपत्तेरप्रतिषेधः। वाय्वोर्योगात् सन्निपातात् खल्वापः कृत्रिमा उत्पद्यन्ते, कृत्रिमानां चाऽपामुत्पत्तेर्न तात्त्विक्य आपः शक्याः प्रतिषेद्धुम्, प्रसिद्धचभावात्। तस्मान्नायं प्रतिषेधः। अतः पृथग्वचनं न कर्त्तव्यमिति। उत्पत्तेश्चार्थान्तरभावात्—उत्पत्तेरर्थान्तरभावाच्चापि प्रतिषेधः। याः खल्वापो वाय्वोः सन्निपातादुत्पद्यन्ते ता इमा वायोरर्थान्तर्भूता भवन्ति। तस्मादप्रतिषेधः। तत्राऽपि सद्भावाच्च ययोर्वाय्वोः सन्निपाताद् आपः उत्पद्यन्ते तत्रापि वाय्वोः सूक्ष्माणामपां सद्भावोऽस्ति। प्रक्रियाविशेषात्तु तासामभिव्यक्तिरिति। ता इमा वायोरर्थान्तरभूताः पृथग्वक्तव्या इति भाष्यकृत्।

## गुणाः

वैशेषिकाणां नये चतुर्विंशतिसंख्याकाः गुणाः कणादेन कण्ठतः चकारेण च समुच्चिताः। तद्यथा :—

'रूप-रस-गन्ध-स्पर्शाः, संख्याः, परिमाणानि, पृथक्त्वं, संयोग-विभागौ, परत्व-अपरत्वे, बुद्धयः, सुख-दुःखे, इच्छा-द्वेषौ, प्रयत्नाः च गुणाः।'

[वै० १।१।६]

इति सप्तदश गुणाः सूत्रेण निर्दिष्टाः। चकारेण च गुरुत्व-द्रवत्व-स्नेह-संस्कार-धर्म-अधर्म-शब्दाः समुच्चिताः। ते च सर्वे सङ्कलनया चतुर्विंशतिः भवन्ति। गुणस्य सामान्यलक्षणन्तु द्रव्य-कर्मभिन्नत्वे सति सामान्यवत्त्वम् इति। गुणत्व-जातिस्तु द्रव्यकर्मभिन्नसामान्यवती या कारणता सा किञ्चिद्धर्मावच्छिन्ना कारणत्वात् इत्यनुमानं गुणत्वजातिसाधकम् इत्यादि। विशेषस्तु यथाप्रकरणं तत्र-तत्रानुसन्धेयम्।

## कर्माणि

'उत्क्षेपणम्, अवक्षेपणम्, आकुञ्चनम्, प्रसारणम्, गमनमिति कर्माणि।'

येन कर्मणा वस्तु ऊर्ध्वमुत्क्षिप्यते तदुत्क्षेपणम्, ऊर्ध्वदेशसंयोगानुकूलो व्यापारः। येनावाचीनमवक्षिप्यते तदवक्षेपणम्, अधोदेशसंयोगानुकूलो व्यापारः।

उत्क्षेपणावक्षेपणे हि संयोगविशेषे। सत्यारम्भके संयोगे येनाऽपरोऽवयवानां संयोगः तदाकुञ्चनम्। येन तत्प्रतिद्वन्द्वी विभागस्तत् प्रसारणम्। यच्चान्यत् किञ्चित्कर्म तत्सर्वं गमनमिति। तथा च "गमनग्रहणाद् भ्रमण-रेचन-ऊर्ध्वज्वलन-स्पन्दन-तिर्यक्पतन-उन्नमनादयो गमनविशेषा एव न जात्यन्तराणि" इति प्रशस्तपादभाष्यम्।

न च उत्क्षेपणादीनामपि गमनेऽन्तर्भावाद् गमनमेव कर्म कथं न स्यात्, व्यर्थ एवोत्क्षेपणादीनां पृथगुपदेश इति वाच्यम्। स्वतन्त्रस्य मुनेः नियोग-पर्यनुयोगानर्हत्वात्। अतिगभीरार्थस्य शास्त्रस्य विबोधार्यं सरलोपायेन मुनिप्रवृत्तिस्वातन्त्र्यमेवात्र प्रमाणम् इति वैशेषिका मन्यन्ते।

वैशेषिकाः कर्मणो मूर्त्तद्रव्येष्वेव वृत्ति मन्यन्ते, नाऽमूर्त्तेषु। मूर्त्तत्वञ्च तेषां नयेन इयत्ताऽवच्छिन्नपरिमाणयोगित्वम्। विभुत्वञ्च पुनः सकलमूर्त्तसंयोगित्वम्। तथा च पृथिवी-अप्-तेजः-वायु-मनःस्वेव पञ्चसु द्रव्येषु कर्मणो वृत्तिः न तु विभुषु आकाश-काल-दिग्-आत्मसु। वैशेषिकाणाञ्च क्रियावत्त्वं मूर्त्तत्वम्। तथा च पृथिवी-अप्-तेजः-वायु-आकाशेति पञ्चकं भूतपदेनाऽपि व्यपदिश्यते। मूर्त्तत्वञ्च बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् बहिरिन्द्रियैः ग्राह्या ये विशेषगुणाः रूप-रस-गन्ध-स्पर्श-शब्दाः तद्वत्त्वमित्यर्थः। पञ्चभूतेभ्यो निर्मितत्वाद् जगदपि पाञ्चभौतिकमित्याख्यायते।

## सामान्यम्

सामान्यं हि नाम नित्यत्वे सति अनेकसमवेतत्वम्। अनेकसमवेतत्वं संयोगादीनामप्यस्ति, अतः 'नित्यत्वे सती' ति पदम्। नित्यत्वे सति समवेतत्वं गगनपरिमाणस्याऽप्यस्ति, अतः उक्तमनेकेति। नित्यत्वे सति अनेकवृत्तित्वमत्यन्ताभावस्याप्यस्ति, अतः वृत्तित्वसामान्यं विहाय समवेतत्वमुक्तम्। एकमात्रवृत्तिस्तु न जातिः। तथा चोक्तम् :—

'व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथाऽनवस्थितिः।
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः॥' इति॥

अस्याऽयम्भावः—यत्र खलु षण्णां व्यक्तेरभेदादीनामुपलम्भो भवति तत्र सामान्यस्य जातेर्वाऽनुपलम्भः। अस्य विस्तरस्तु अन्यत्रोह्यः।

## विशेषः

विशेषपदार्थोऽयं दार्शनिकैः सामान्यसत्ताप्रतीपतया प्रयुज्यते।

अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः। घटादीनां द्व्यणुकपर्यन्तानां तत्तदवयव-

भेदात् परस्परं भेदः। परमाणूनान्तु परस्परभेदको विशेष एव। स तु स्वत एव व्यावृत्तः। तेन तत्र विशेषान्तरापेक्षा नास्तीति। तथा चाचार्योऽप्याहः --

'अन्यत्रान्त्येभ्यो विशेषः।' [वै० १।२।३]

नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः। ते खलु अन्त्यद्रव्यवृत्तित्वाद् विशेषा एव। अयमाशयः, सावयवपदार्थानान्तु अवयवभेदाद् भेदः प्रकल्पयितुं शक्यः। निरवयवानां परमाण्वादीनां भेदकः कोऽन्यो विशेषमन्तरा ? अतः परमाणुषु यो व्यावृत्तबुद्धिजननगोचरो धर्मस्तमेव वैशेषिका विशेषं परिभाषन्ते। अन्त्यद्रव्यवृत्तित्वे सति व्यावर्त्तकत्वं विशेषत्वमिति फलितोऽर्थः। तद्भेदानुमितिप्रकारश्चेत्थम्-- अयं पार्थिवः परमाणुः परमाण्वन्तरेभ्यो भिन्नः विशेषात्। विशेषस्य विशेषान्तरेभ्यो भेदसाधनन्तु न युक्तम् तस्य स्वतो व्यावृत्तरूपत्वात्।

## समवायः

अयुतसिद्धानां कार्य-कारणादीनामिहेति प्रत्ययहेतुः संबंधः समवाय उच्यते। युतसिद्धिर्हि असम्बद्धयोर्विद्यमानत्वम्। सोऽयमयुतसिद्धानामुपश्लेषः समवायः, युतसिद्धानान्तु पुनः संयोगः परिभाष्यते। इदमत्रावधेयम्--अवयवाऽवयविनोः, गुण-गुणिनोः, क्रिया-क्रियावतोः, जाति-जातिमतोः, नित्यद्रव्य-विशेषयोश्च सम्बन्धः समवायः। स च एक एव। अनन्तस्वरूपाणां सम्बन्धत्वकल्पने गौरवाल्लाघवादेक एव। स च समवायः विशेषणतासम्बन्धेन द्रव्यादिपञ्चके तिष्ठति। स चातीन्द्रियः। नित्यत्वे सति चेतनान्यभावत्वात् कालादिवद् इति वैशेषिकाः। सूत्रयति चाचार्यः--

'निष्क्रियाणां समवायः कर्मभ्यो निषिद्धः।' [वै० ५।२।२४]

वैशेषिकदर्शनमिदं पदार्थतत्त्वविवेचकं शास्त्रम्। दर्शनान्तरैरस्वीकृतस्य विशेषपदार्थस्य स्वीकारात् शास्त्रमिदं वैशेषिकमित्यन्वर्थसंज्ञया प्रसिध्यति। षट्पदार्थवाद एव कणादस्य प्रमुखो वादः। अस्य नयेन द्रव्यादयः षडेव पदार्थाः, एतेष्वेव सर्वेषां पदार्थानामन्तर्भावः। प्रशस्तपादादीनां वैशेषिकाचार्याणां मते तु सप्त पदार्थाः; कणभुजा भावपदार्थाभिप्रायेण षट्पदार्थानां स्वीकारात्। अभावोऽपि सप्तमो मुनेरभिप्रेत इति तेषामभ्युपगमः। वैशेषिकाचार्याणाम् आत्मन एव चैतन्यं न शरीरस्य, शरीरकारणेषु परमाणुषु चैतन्यमानाभावात्। एतेन ऐन्द्रियं चैतन्यमपि प्रत्युक्तं भवति। तथैव मनसोऽपि। एषां मते मनसश्च आत्मातिरिक्तत्वं, सुख-दुःखादिप्रत्ययकरणत्वं, तदयौगपद्यनियामकत्वञ्चाङ्गीकृतम्। तमसः तेजोऽभावान्न द्रव्यान्तरत्वम्। तस्य गत्युपलब्धिस्तु आलोकाऽपसरणौपाधिकी, नैल्योपलब्धिः पुनः आश्रयौपाधिकीति न तद् द्रव्यान्तरम्।

काणादानां हि षट्पदार्थानां साधर्म्य-वैधर्म्याभ्यां तत्त्वज्ञानस्य निःश्रेयसाधिगमं प्रति हेतुता प्रपञ्चिता। द्रव्येषु परिगणितादात्मशब्दात् परमात्माऽपि संगृह्यते। दर्शनान्तरवद् वैशेषिकाणामपि जीवात्मा ज्ञानस्वरूप एव न जातु ज्ञानगुणकः। तथात्वेऽपि तस्य मनःसंयोगात् तत्तदर्थानुभावकं 'गन्धमनुभवामि, रसमनुभवामि' इत्याकारकं व्यवहारप्रयोजकमुत्पाद-विनाशशीलं यद्ज्ञानं तदपि गुणरूपेण तस्मिन्नभ्युपगम्यते। ज्ञानस्वरूपस्य तस्य ज्ञानगुणाश्रयत्वं प्रकाशात्मनः सवितुः प्रभाश्रयत्ववन्न दोषाय कल्पते। ज्ञानगुणलिङ्गेन तत्सिद्धौ न कश्चिद् दोष इति भावः।

अस्यायमाशयः, यथा हि सांख्य-योग-वेदान्तसिद्धान्ते प्रकाशात्मकत्वेऽपि प्रत्यगात्मनः व्यवहारोपपत्त्यर्थं तत्र वृत्तिज्ञानमङ्गीकुर्वन्ति तथैव वैशेषिका, गौतमाः, मीमांसका अपि आत्मन्येव ज्ञानगुणमभ्युपयन्ति। विशेषस्त्वियानेव यत् कापिलाः प्रत्यगात्मसन्निधानाच्चेतनायमनायां बुद्धौ स्फटिकमणौ जपा-कुसुमलौहित्यवद् ज्ञानोत्पत्तिं स्वीकृत्य आत्मनि तदुपचारं ब्रुवते। काणादाः पुनः आत्मसन्निधाने सत्यपि मनसस्तदाकारापत्तिमनङ्गीकृत्य तत्र तदुत्पत्तेरसम्भवात् तद्योगविशिष्टे प्रत्यगात्मनि एव तदुत्पत्तिं स्वीकुर्वन्ति। मुक्तावस्थायान्तु पुनः मनसोऽभावात् तत्संयोगजसमस्तगुण-दोषानुत्पत्तौ दुःखात्यन्तनिवृत्त्या शुद्धः स्वेनात्मना निःश्रेयसमधिगच्छति ब्रह्मानन्दमुपभुञ्जानः।

परमात्मा तु ईश्वरापरसंज्ञो जीवात्मनः सर्वथा भिद्यते। परमात्मा हि सर्वज्ञः, विभुः, नित्यशुद्ध-बुद्ध-मुक्तस्वभावश्च। जीवात्मा च पुनः संसारदशायां कायव्यूहादिबद्धः सुखदुःखानुभवोपेतो जन्म-मरणादिजटिलजालपतितः। परमार्थतस्तु आत्मा एक एव। सोयऽमात्मा अनादिमिथ्याज्ञानवासनया शरीरादिकमेवाऽऽत्मानं मन्यमानस्तदनुकूले रज्यति, द्वेष्टि च तत्प्रतिकूलम्। रज्यन् प्रवर्त्तते, प्रवर्त्तमानश्च शुभाऽशुभानि कर्माणि सञ्चिनोति सुखं दुःखञ्चानुभवति। परन्तु यदा श्रवण-मनन-निदिध्यासनादिभिः दृढ़भूमिं गतो भवति तदा तत्त्वज्ञानवासनया मिथ्याज्ञानवासना उपमृद्यते, उपमर्दितायां तस्यां तत्त्वज्ञानेन मिथ्याज्ञानापाये रागद्वेषाद्यपायः, तदपाये च प्रवृत्तिरप्यपैति, ततः प्रवृत्त्यपायाज्जन्माऽपाये दुःखमपैति। स एव मोक्ष इति। एतत्तत्त्वज्ञानोपदेशार्थमेव मननाद्यर्थञ्चास्य शास्त्रस्यारम्भ इति विवेकः।

तदिदं न्यायशास्त्रादप्यतीव प्राचीनम्। बौद्ध-जैनदर्शनादपि प्राक्कालीनम्। बौद्धानां निर्वाणसिद्धान्तो जैनानाञ्च पुनरस्तिकायवादः वैशेषिकस्याऽसत्कार्यवादं भूयसा परामृशतः। गोतमसूत्रेषु वात्स्यायनभाष्येऽपि च कणादस्य

प्रभावः प्रागुण्येन प्रतिभाति। जैनदर्शनस्य ललित-विस्तारादिग्रन्थेषु काणादीयपरमाणुवादस्य गन्धः सुतरामभिव्यज्यते। परमाणुवादमाश्रित्य केचन जैनविद्वांसः वैशेषिकस्य यज्जैन-दर्शनोपजनत्वमवधारयन्ति तन्न बुद्धिसहम्। नामतः सामान्येऽवभासमानेऽपि काणादीयपरमाणुवादो जैनीयपरमाणुवादतः नितरां भिन्नः। जैनमते परमाणवः समानगुणशालिनः रूप-रस-गन्ध-स्पर्शवत् शब्दोऽपि तेषा गुणः। वैशेषिकाणां परमाणवस्तु गुणधर्मतो भिन्नाः सन्तस्ते न शब्दगुणवन्तः इति भूयान् भेदः। सत्येवञ्जातीयके भेदे तयोर्मिथः एकतोऽपरसम्भवत्वं वा कथमिव सामञ्जस्यं भजेत? तदेतेन सुभृशमुपोद्वलितं भवति यद्वैशेषिकदर्शनप्रादुर्भावसमयः बुद्ध-महावीरदर्शनोदयसमकाल एव। पञ्चमे-षष्ठे वा शतके प्राक्क्रैस्तेऽभवदिति।

वस्तुतस्तु परमाणुवादस्याऽऽद्यप्रवर्त्तका महर्षिकणादमुनिभगवत्पादा एव। स च परमाणुवादकल्पः वैशेषिकदर्शनस्य प्रमाणभूतभाष्यकारैः मुनिवर-प्रशस्तपादाचार्यैः स्वभाष्ये निरतिशयसौन्दर्येण प्रतिष्ठापितः। तद्विशेषाववबोधकुतूहलिभिस्तु तत्र-तत्रैवानुसन्धेयमित्यलं पल्लवितेन।

———oo———

# अथ सांख्यदर्शनम्

किमिदं सांख्यदर्शनं नाम ?—कोऽस्य प्रणेता—सांख्य-साहित्यम्—सांख्यसिद्धान्ताः—पञ्चविंशति तत्त्वानि—त्रिविधं प्रमाणम्—कालः—मोक्षः—पुरुषः—जीवन्मुक्तिः, विदेहमुक्तिः—ईश्वरः—सत्कार्यवादः—वास्तववादः—किमर्था शास्त्रस्य प्रवृत्तिः—पुरुषबहुत्वम्—सदसत्ख्यातिवादः ।

## किमिदं सांख्यदर्शनं नाम

संख्यायन्ते सम्यग्ज्ञायन्ते येन तत्सांख्यम् । 'संख्या' शब्दोऽयं 'संख्या, ख्यातिः' इत्युभयवचनः । तत्र तावद्—एका मूलप्रकृतिः, प्रकृतिविकृतयश्च सप्त, केवला विकृतयः षोडश, प्रकृति-विकृतिभिन्नोऽनुभयात्मकः पुरुषश्चैक इति सम्भूय सर्वाणि पञ्चविंशति (२५) तत्त्वानि संख्यायन्ते गण्यन्ते येन तत्सांख्यम् इत्युच्यते । अथवा प्रकृतिपुरुषान्यताख्यातिरूपोऽवबोधो संख्यायते सम्यग्ज्ञाप्यते येनेति वा तत्सांख्यम् । इति द्विविधोऽप्यर्थः सांख्यपदेन समर्प्यते । उक्तञ्च महाभारते :

'संख्यां प्रकुर्वते चैव, प्रकृतिञ्च प्रचक्षते ।
तत्त्वानि च चतुर्विंशत्, तेन सांख्यम्प्रकीर्त्तितम् ॥'

सांख्यसारेऽपि च :—

'शुद्धात्मतत्त्वविज्ञानं सांख्यमित्यभिधीयते ।'

## कोऽस्य प्रणेता

अस्य दर्शनस्य प्रवक्तारः तत्रभवन्तो भगवत्कपिलमुनिपादाः । जननी चास्य परमविदुषी 'देवहूति' रितिनाम्नी देवी । जनकश्च कश्चन कर्दमाख्यो महामुनिरिति श्रूयते । देवहूतिरियं आदिराजमनुभगवत्पादानां कन्या । यद्यपि आदिराजमनोरपत्यतयैव समग्रोऽपि मनुष्यसमाजो मानवपदेन व्यपदिश्यते तथाऽपि प्राक्शतरूपानाम्नी तेषां राज्ञी, उत्तानपाद-प्रियव्रतनामानौ च द्वौ सूनू, देवहूतिनाम्नी चैका कन्या—इति सर्वे सम्भूय पञ्च प्राणिन आसन् । तेषु कर्दमः सरस्वत्यधिष्ठिते कस्मिश्चित् पुण्याश्रमपदे ब्रह्मचर्यव्रतमनुपालयन् व्यराजत । महाराजो मनुश्च भगवतो ब्रह्मणः परामर्शेन तदाश्रमसुपेत्य स्वकन्यायाः पाणिग्रहणसंस्कारं कर्दमेन सह निर्वर्त्तयामास । तदनु कर्दमाद्देवहूतिगर्भाच्च नवकन्यकाः सञ्जाताः । दशमश्च पुनरेष तत्रभवान् महामुनिः कपिलदेवः[1] ।

सोऽयं महामुनिः जन्मत एव कुशाग्रधीः, महामेधावी, प्रदीप्तप्रतिभाशाली, ऊहवान्, तार्किकसार्वभौमश्चासीत् । बाल्यकाल एव सांख्यदर्शनस्य महान् सिद्धान्तः

---

१. इति जनश्रुतिः नह्येतस्याः क्षोदक्षमं तत्त्वं प्रकाशयितुं कल्पामहे ।

प्रकृति-पुरुषाऽन्यताख्यातिरूपोऽस्यैव मस्तिष्के स्फुरितः। आरम्भतः एव जन्मनैव अलौकिकवैदुष्यवैभवापन्नोऽयम् 'आदिविद्वान्' इति विरुदेनालङ्कृतोऽवगम्यते। एवमुक्तसिद्धान्तश्च सांख्यसिद्धान्तनाम्नैव प्रसिद्धिं गतः।

कपिलमुनेः प्राचीनतमत्वं प्रतिपादयन्ती भणितिरेषाऽनुश्रूयते :—

'सांख्यस्य वक्ता कपिलः, परमर्षिः पुरातनः।
हिरण्यगर्भो योगस्य, वक्ता नान्यः पुरातनः॥'

इत्यनेनापि एतदेवावगतं भवति सत्सांख्यमतीव प्राचीनमिति।

श्रीमत्कपिलमुनिविरचितं सांख्यदर्शनमिदमतीव प्राचीनमिति प्राङ् निर्दिष्टम्। अत्र सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, वैषम्यावस्था च तेषां सृष्टिहेतुत्वेनाङ्गीकृता। प्रधानपुरुषयोरन्यताख्यातिग्रहादेव मोक्षः। स च सांख्यानां त्रिविधदुःखात्यन्तनिवृत्तिरूपः। प्रत्यक्षानुमानागमनामधेयानि त्रीण्येव प्रमाणानि सांख्यस्याभिमतानि। केचन सांख्यस्य निरीश्वरवादित्वम्, अपरे सेश्वरवादित्व-म्मन्यन्ते। पुरुषबहुत्वं तदसङ्गत्वञ्च सिद्धान्तत्वेनोन्नयन्ति। प्रकृति-पुरुषयोरन्य-ताख्यातिनिबन्धनो मोक्षः, अविद्यया बन्धः, जीवेश्वरयोर्भेदश्चेति प्राधान्येन तेषामभ्युपगमः।

सत्त्वबहुलाभ्यां रजस्तमोभ्यां महत्तत्त्वमुत्पद्यते, रजोगुणबाहुल्यादहं तत्त्वम्, एवं तमोगुणबाहुल्यात् पञ्चतन्मात्राः, अगोचरतन्मात्रोद्भूतानि पञ्च महाभूतानि, एकादशेन्द्रियाणि इत्यादि क्रमेण सृष्टिरुत्पद्यते।

वेदानामपौरुषेयत्वम्, प्रकृतिप्रतिबिम्बितस्य पुरुषस्य तदाकारापत्त्या बन्ध-बुद्धिः, अधिगताऽन्यताख्यात्या च मोक्ष-बुद्धिः, इत्याद्या विषयाः कापिलानां प्रमुख-सिद्धान्तत्वेनाऽभ्युपेताः।

## सांख्य-साहित्यम्

सांख्यदर्शनस्य साहित्यं विशदं वर्त्तते। सम्प्रति 'तत्त्व-समासः', 'सांख्य-प्रवचन'ञ्चेति सूत्रद्वयमुपलभ्यते। पञ्चशिखाचार्यविरचितं 'षष्टितन्त्र'न्तु न सुलभम्। समुपलब्धेषु सांख्यसन्दर्भेषु ईश्वरकृष्णविरचिता 'सांख्यकारिका'[1] अतीव प्रसिद्धा सर्वत्र लब्धप्रचारा च।' 'माठरवृत्ति'समाह्वा माठरविरचिता वृत्तिरप्यस्याः सुप्रथिता। अपरं 'युक्तिपाद'संज्ञकं भाष्यमपि श्रीगौडपादाचार्य-विरचितं समुल्लसति। 'सांख्यतत्त्वकौमुदी'तिनाम्नी कारिकाटीकाऽपि

१. सांख्यकारिकायाः लेटिनभाषायां कृतोऽनुवादः विद्वत्प्रवर 'लसन' द्वारा, जर्मनभाषायाञ्च सेन्ट हिलेयर द्वारा पेण्टियर द्वारा च, आंग्लभाषायाञ्च कोलब्रुक-विलसन-डेवीज़ द्वारा अतिप्रशस्ततया सम्पन्नोऽद्यापि विलसति।

श्रीवाचस्पतिमिश्रविरचिताऽतीव प्रसिद्धा। तथा च अनिरुद्धेन ख्रैस्त १४५० सम्भवेन 'सांख्यसूत्रवृत्तिः', महादेवेन ख्रैस्त १६०० शतके लब्धजन्मना 'सांख्यसूत्रवृत्तिसारः', ख्रैस्त १७०० शतकसम्भवेन नागेशेन 'लघुसांख्यसूत्रवृत्तिः', ख्रैस्त १६०० शतकजातेन विज्ञानभिक्षुणा 'सांख्यप्रवचनभाष्यम्', 'सांख्यसार' प्रभृतयश्च नैके प्रबन्धा निबद्धाः। ख्रैस्त १६५० तमेऽब्देऽवाप्तजनुषा विज्ञानभिक्षु-शिष्येण भावगणेशेन 'सांख्यतत्त्वयाथार्थ्यदीपना'ऽख्यं प्रबन्धमुपनिबध्य सांख्य-सिद्धान्ता वैशद्येन प्रपञ्चिताः। नारायणतीर्थश्च (१७०० ई०) अतिप्रसिद्धां 'सांख्यचन्द्रिकां' प्रणिनाय।

परमर्षिः कपिलो मुनिरयमतीव प्राचीन इति प्रागवोचाम। कपिलवस्तु-निवासिनोऽस्य मुनेः स्थितिकालः कालकोविदैः ख्रैस्तसम्वत्सरात्प्राक् षष्ठ शताब्द्याः प्रथमार्द्धे क्वचिन्निर्धारितः। भवतु नाम, अस्य पुरातनत्वे तु मतद्वैविध्यं नास्त्येव। दर्शनमिदं सर्वेभ्यो भारतीयदर्शनेभ्यः प्राचीनतमम्। सांख्यं योगश्चेति समानतन्त्रे। तत्र सांख्यापरनामा 'तत्त्वसमासः' कपिलेनोपदिष्टः। तदिदं सांख्यशास्त्रं तत्त्वसमास-रूपं प्रथमं, षडध्यायीरूपञ्च न्यायवैशेषिकदर्शनाभ्यां पश्चात्प्रणीतमिति 'न वयं षट्पदार्थवादिनो वैशेषिकादिवत्' (१.२५), 'न षट्पदार्थ नियमः तद्बोधान्मुक्तिः' (५.८५), 'षोडशादिष्वप्येवम्' (५.८६) इति सूत्रलिङ्गैरनुमीयते। तत्र 'तत्त्व-समासे' तु द्वाविंशतिः (२२) सूत्राणि, तान्येव च मौलिकानीति विभाव्यते तद्वि-शेषज्ञैः। षडध्याय्यान्तु षड्विंशत्युत्तरपञ्चशत (५२६) संख्याकानि सूत्राणि। तत्र प्रथमेऽध्यायेऽत्यन्तपुरुषार्थादिविवेचनम्। द्वितीये प्रधान-कार्यनिरूपणम्, प्रधानस्येश्वराधीनत्वं पुरुषाय प्रवर्त्तनञ्च, ततोऽष्टादशतत्त्वानि च सम्यगुपपादि-तानि। तृतीये स्थूलं लिङ्गं, नानासृष्टिः, वैराग्यसाधनं, विवेकश्च निरूपितः। चतुर्थे च आत्मतत्त्वादिविवेकज्ञानसाधनञ्च सम्यगितिहासपुरस्सरं प्रतिपादितम्। पञ्चमे परपक्षनिरासः। षष्ठे च संग्रहेण स्थूणानिखनन-न्यायेन सांख्यसिद्धान्त-परिचयः सङ्कलितः।

तत्त्वसमासः—सांख्यशास्त्रस्य प्राचीनतमो ग्रन्थोऽवधार्यते। अस्या-नेकाष्टीका उपलभ्यन्ते। तासु शिवानन्दकृतं 'सांख्यविवेचनम्', भावगणेश (१६ शताब्दीभवः) कृतं 'सांख्यतत्त्वयाथार्थ्यदीपनम्', 'सर्वोपकारिणी टीका', 'सांख्य-सूत्रविवरणम्' इत्येता मुख्याः। सांख्यसूत्रेषु 'अनिरुद्धवृत्तिः' अतिप्रामाणिकी प्रकाण्डपाण्डित्यमण्डिता च।

तत्त्वसमासस्य रचनाकालविषये मतानि बहुशो बेभिद्यन्ते। विद्वद्वरकीथमहो-दयः ख्रैस्त १३८० सम्वत्सरादनन्तरमस्य कालं स्वीकरोति। तथा स्वीकारे

सर्वदर्शनसंग्रहेऽस्य वर्णनानुपलब्धिमेव हेतुत्वेन पुरस्करोति। परं मोक्षमूलरमहोदयो ग्रन्थमनुमतिप्राचीनं मौलिकञ्चावधारयति। वैक्रमे सप्ततमे शतके कविना बोधायनेन प्रणीते महेन्द्राख्ये नाटके तत्त्वसमासीयाऽष्टसूत्राणामुल्लेखः कृतः। तत्र च सूत्राणीमानि 'सांख्यसमय' इति नाम्ना स्मृतानि। तस्मादेषां सूत्राणां रचना-कालः सप्तमशतक एवेति न दुष्करमनुमातुम्। यद्यपि सर्वदर्शनसंग्रहे सांख्यसूत्राणा-मपि कीर्त्तनं न कृतम् न तावताऽस्यार्वाचीनत्वमुपपन्नम्। यतः तत्समकालभवेन माधवमन्त्रिणा 'सूतसंहितायाः' विवृतौ 'सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः' (सां० १.६१) इत्यादि सूत्रस्योल्लेखः कृतः। अतः सांख्यसूत्राणां कैस्तपूर्वचतुर्दश-शतकात्प्राचीनत्वं न मनाक्सन्देहास्पदम्।

आसुरिः—सांख्यदर्शनस्याऽपरः सुप्रसिद्ध आचार्य आसुरिर्नाम कपिलमुनेः साक्षात् शिष्यः। अस्य प्रमुखसिद्धान्तानां वर्णनं प्राचीनेषु ग्रन्थेषु बहुधोपलभ्यते। 'स्याद्वादमञ्जर्यां' पञ्चदशतमे श्लोके आसुरेर्नामोल्लेखः सन्दृश्यते। अतोऽसावपि नार्वाचीनः, प्राचीन एव खलु सः।

पञ्चशिखाचार्यः—'षष्टितन्त्र'स्य प्रणेता, आसुरेः प्रमुखः शिष्योऽयं पञ्च-शिखाचार्यः। सांख्यसिद्धान्तप्रतिष्ठातृषु प्रथमोऽयमाचार्यः। व्यासभाष्येऽस्य हि कतिपयानि सिद्धान्तसूत्राणि समुद्धृतानि। वाचस्पतिमिश्रेण राजवार्त्तिकाख्याद् ग्रन्थादुद्धृत्य षष्टिसंख्याकानां प्रधानविषयाणां व्याख्यानादस्य षष्टितन्त्रग्रन्थस्य संज्ञासार्थकत्वमुपोद्बलितम्भवति। चीनग्रन्थलेखानुसारेण षष्टिसहस्रात्मकस्य षष्टिपरिच्छेदगुम्फितस्याऽस्य रचना तत्रभवता पञ्चशिखाचार्येणैव कृता विभा-व्यते।

सांख्यकारिका—सांख्यसिद्धान्तपारदर्शिनां श्रीईश्वरकृष्णमहाभागाना-ममरकृतिः सांख्यकारिकेयं परमप्रामाणिकत्वं लोकप्रियत्वञ्चोद्वहति। भगवता शङ्कराचार्येण शारीरिकभाष्ये सांख्यसिद्धान्तं व्याचक्षाणेन सांख्यसूत्राणां निर्देश-मविधाय सांख्यकारिकाया एवोद्धरणं कृतमित्यनेनाऽपि अस्याः सांख्यकारिकायाः प्राचीनत्वं परमप्रामाणिकत्वञ्च ध्वन्यते। चीनीभाषायामस्या अनुवादः षष्ठ-शताब्द्यां सम्पन्नः। चीनीभाषायां कारिकेयं 'हिरण्यसप्ततिः'—'स्वर्णसप्ततिः' चेति नाम्ना प्रसिद्धा।

तदस्येश्वरकृष्णस्याविर्भावकालः सामान्येन चतुर्थशतके निर्धार्यते। परं वस्तुतोऽसौ चतुर्थशतकादतीव प्राचीनः। जैनग्रन्थे 'अनुयोगद्वारसूत्रे' (खैस्ते १००तमे) 'काविलं, सट्ठितन्त्रं, माठरं' इत्यादिभिस्सह 'कणगसत्तरी' ग्रन्थस्यापि समुल्लेखो दृश्यते। सन्दर्भानुरोधेन 'कणगसत्तरी' ग्रन्थः सांख्यसिद्धान्तप्रतिपादक

एव प्रतीयते। कदाचित् 'कणगसत्तरी' ग्रन्थोऽयं 'सुवर्णसप्तति' ग्रन्थस्यैवाऽपरं 'कनकसप्तति' रिति नामान्तरं भजते। तदेवं विमृश्यमाने तु ईश्वरकृष्णस्य समयः ख्रीस्तप्रथमाब्द्याः अर्वाचीनो न सम्भवति।

अस्याः खलु सांख्यकारिकायाः अनेका वृत्तयो दृश्यन्ते। तासु माठरवृत्तिरतीव प्राचीना। मठराचार्योऽयं महामहिमशालिनो नृपतेः कनिष्कस्य समसामयिकः।

सांख्यशास्त्रस्य भाष्यकारेषु अनन्यसाधारण आचार्यो विज्ञानभिक्षुः। षोडशतमशतकस्य प्रथमार्धेऽसौ काश्यां विराजते स्म। भिक्षुरित्युपनाम्ना प्रख्यातोऽपि नायं बौद्धः संन्यासी वेति। अनेन त्रिषु दर्शनेषु भाष्याणि विरचितानि। सांख्यसूत्रेषु 'सांख्यप्रवचन' भाष्यम्, 'योगवार्त्तिक' नाम्ना व्यासभाष्यविवृतिः, ब्रह्मसूत्रेषु 'विज्ञानामृतभाष्य'ञ्चेति।

विज्ञानभिक्षोः काले सांख्यस्याऽध्ययनाऽध्यापनप्रणाली शैथिल्यमापन्ना। अतः 'कालार्कभक्षित' मिति संज्ञया सांख्यं व्यपदिश्यते स्म। विद्वत्तापूर्णमद्भुतं भाष्यं विरच्य विज्ञानभिक्षुरेवाऽयं दर्शनमिदं पुनस्सञ्जीवयामास इत्यत्र नास्ति कस्याऽपि वैमत्यम्।

## सांख्यसिद्धान्ताः

सांख्यसिद्धान्तान्नुद्दिश्य सम्प्रति किञ्चिदिव विशदय्योच्यते।

सांख्यनये सृष्टिनिर्वहणार्थं भोगाऽपवर्गार्थञ्च पञ्चविंशतितत्त्वानि निर्दिष्टानि। तेषां वर्गीकरणन्तु चतुर्विधम्—प्रकृतिः, विकृतिः, प्रकृति-विकृतिः, न प्रकृतिर्न विकृतिः पुरुषः[1] इति। कश्चिदर्थः प्रकृतिरेव, कश्चिच्च विकृतिरेव, कश्चिच्च पुनः प्रकृति-विकृतिः, कश्चिदनुभयरूपः। तत्र प्रकृतिः प्रधानम्, सत्त्वरजस्तमसां साम्यावस्था; सा हि अविकृतिः—न कस्याऽपि विकारः प्रकृतिरेव स्वयं सती महदादिविकृतीनां जननी। विश्वप्रपञ्चस्य सा हि मूलरूपा न तन्मूलान्तरमनवस्थाप्रसङ्गात्। प्रकृतिविकृतयश्च सप्त—महत्तत्त्वम्, अहङ्कारः, पञ्च तन्मात्राः। पञ्च महाभूतानि, एकादशेन्द्रियाणि च षोडशको विकारः। प्रकृतिविकृतिभिन्नश्च पुरुषः। सोऽयं पञ्चविंशतिर्गणः। पुरुषशब्दोऽत्र आत्मानं परमात्मानञ्चैतद् द्वयमप्यभिधत्ते।

---

१. मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृति-विकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः॥
[सां० का० ३]

## त्रिविधं प्रमाणम्

सांख्याचार्यैः दृष्ट-अनुमान-आप्तवचनान्येव त्रीणि प्रमाणत्वेनाऽङ्गीकृतानि। एतेष्वेव प्रमाणान्तराणामन्तर्भावात्। एतानि च लोकप्रमाणाभिप्रायाणि लोकव्युत्पादनार्थत्वाद्धि शास्त्रस्य। आर्षं तु विज्ञानं लोकव्युत्पत्तये नालमिति न संगृहीतम्।

## कालः

यद्यपि कापिलैः कालो न स्वीकृतस्तत्त्वान्तरत्वेन तथापि कालं स्वीकृतवतामपि एकस्याऽखण्डस्य कालस्य अतीताऽनागतादिजनकत्वासम्भवादुपाधिभेदेनैव स उपपादनीयः सम्भवति। एवं सांख्यनयेऽपि व्यवहारस्याऽप्रत्याख्यानात्तज्जनकत्वस्य क्लृप्तोपाधीनामेवोरीकरणान्निर्वाहः इति न कोऽपि बाधः।

## पुरुषः

न च 'सांख्याचार्याणां पुरुषबहुत्वं तदसङ्गत्वञ्चाभिप्रेतम्। असङ्गोऽयं पुरुषः साक्षिमात्रः दृष्टरूपः कथं सृष्टिप्रपञ्चे निपतति ? प्रकृतिश्चाऽचेतना सती पुरुषस्य भोगाऽपवर्गार्थं कथं प्रवर्त्तते ? अवाप्तसकलेप्सितस्य भगवतो जगदीश्वरस्यापि जगतः सिसृक्षायां किमभिलक्षितम्भवेदिति सृष्टिवृत्तिरेव तावन्नोपपद्यते।' इति वाच्यम्। पुरुषोऽपि व्यासङ्गाद् जपाकुसुमव्यासङ्गात् तद्रागरञ्जितस्फटिकमणिवद् रञ्जितः सृष्टिनिबन्धे निपतति प्रकृतिश्च पुनरचेतनाऽपि पुरुषार्थं प्रवर्त्तते। यथा वत्सविवृद्धयर्थम् अचेतनमपि क्षीरं प्रवर्त्तमानं दृष्टचरम्। एवं पारार्थ्यमात्रमचेतनायाः प्रकृतेः प्रयोजकत्वमुपपद्यते। उक्तञ्च :—

'वत्सविवृद्धिनिमित्तं क्षीरस्य या प्रवृत्तिरज्ञस्य।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य॥' [सांख्यकारिका]

## मोक्षः

एवं सति प्रपञ्चोच्छेदरूपस्य त्रिविधदुःखात्यन्तनिवृत्तिलक्षणस्य का गतिर्भविष्यति। किमुक्तम् ? यथा नर्त्तकी परिषद्भ्यो नृत्यं दर्शयित्वा निवृत्ताऽपि पुनस्तद्द्रष्टृकौतूहलात्प्रवर्त्तते, तद्वत्प्रकृतिरपि निवृत्ता सती प्रवर्त्स्यते, इति का खलु वराकस्य मोक्षस्य गतिरिति भावः इत्यपि नाशङ्कनीयम्। कुतः ? दृष्टान्तवैषम्यात्। नहि नटीवत्प्रकृतिप्रवृत्तिः, किन्तु कुलवधूवत्। यथा हि असूर्यम्पश्या राजदाराः प्रमादाद्धि गलितशिरोऽञ्चलाश्चेदालोकिताः परपुरुषेण, तदाऽमी तथा प्रयतन्ते यथैतान्सप्रमादानपि पुरुषान्तराणि पुनर्न पश्येयुरिति। एवं प्रकृतिरपि विवेकेन दृष्टाऽपि न पुनः कश्चिदेनां पश्येदिति। उक्तञ्च :—

'प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति।
या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य॥' [सांख्यकारिका]

तदित्थं सांख्यदर्शनस्य समासतो दिङ्निर्देशमात्रमिदं विवरणम्। महामुनि-कपिलाचार्याणां प्रदीप्तप्रतिभाप्रभाप्रदर्शकं सांख्यदर्शनमिदं तत्प्रज्ञाप्रकर्षस्य सडिण्डिमनादं पराकाष्ठामुद्घोषयतीत्यसंशयम्।

## जीवन्मुक्तिः, विदेहमुक्तिश्च

किञ्च, क्लेश-कर्म-विपाकादिसलिलावसिक्तायां बुद्धिभूमावेव कर्मबीजान्यङ्कुरं प्रसुवते। तत्त्वज्ञान-निदाघनिपीतसकलक्लेशसलिलायामूषरायान्तु कुतः कर्मबीजाङ्कुरप्रसव इति। तावत् पुरुषः तथावस्थितः चक्रभ्रमिवद् धृतशरीरो जीवन्मुक्तः सन् परिभ्रमति संसारचक्रे। सति शरीरोच्छेदे स विवेकमुक्तो भवति। इयमेव वास्तविकी मुक्तिर्नाम सांख्यानामिति।

## ईश्वरः

केचन सांख्यमनीश्वरवादिदर्शनमाकलयन्ति, प्रमाणयन्ति च :—

'ईश्वराऽसिद्धेः।' [सां० १।९२]
'प्रमाणाभावान्न तत्सिद्धिः' [सां० ५।१०]
सम्बन्धाभावान्नाऽनुमानम्।' [सां० ५।११] इति।

प्रमाणैरीश्वरो न सिद्धयति। नाऽपि परिपूर्णकामस्य सर्वशक्तिमतो भगवतः परमेश्वरस्य जगद्रचनायां किमपि प्रयोजनमवगतम्भवति। इत्यतोऽपि न जगत्कर्तृत्वं परमेश्वरस्य सङ्गच्छते। चेतनस्याऽखिलाः प्रवृत्तयः स्वार्थमूलाः। न च भगवतस्तस्य कोऽपि स्वार्थः। न च पारार्थ्यं कारुण्यञ्च तस्य निस्सङ्गस्य निरीहस्य जगत्प्रवृत्तिप्रयोजनत्वेनाऽङ्गीकरणीयमिति तर्क्यम्, तस्य कारुण्यादिदोषप्रसङ्गावतारात्। जगत्प्रवृत्त्यर्थमीश्वरसत्तास्वीकरणवचस्तु नितरामपार्थमिति सांख्यानामीश्वराऽस्तित्वमस्त्येवाभिमतम्।

श्रीमान् तत्रभवान् भाष्यकारो विज्ञानभिक्षुरप्यत्रातिमात्रमुपक्रमते। स सांख्यस्य सेश्वरवादित्वमेवोपपादयति। तन्मते कर्तृत्वशक्तिसम्पन्नस्य सान्निध्यमात्रादेव जगत उत्पत्तिस्सम्भवति, नाऽन्यथा। द्रष्टव्यञ्चात्र 'तत्सन्निधानादधिष्ठातृत्वं मणिवत्।' [सां० १।९६] इति सूत्रस्य भाष्यमुपोद्बलकत्वेनेति।

## सत्कार्यवादः

सांख्यदर्शनस्य सत्कार्यवादः प्रसिद्धः सिद्धान्तोऽखिलदर्शनान्तरविलक्षणः। कार्यनियतपूर्ववर्त्तित्वं कारणत्वम् यथा बीजम्। तद्भावभावि तदभावाभावि च

कार्यम्। यथाऽङ्कुरम्। न तु कार्याऽभावे कारणाऽभावः। कुतः ? उच्यते— व्यापकं हि कारणं, व्याप्यञ्च कार्यम्। न च व्यापकाभावाद् व्याप्याभावो युज्यते, तस्मात्कारणसत्त्वे कार्यसत्त्वम्। कारणाभावे च कार्याऽभाव इति ध्रुवो नियमः। सत्कार्यवादिनां हि खलु उत्पादात्प्रागपि कार्यस्य कारणेऽव्यक्तरूपेण विद्यमानत्वाऽङ्गीकारात्। उत्पत्त्यनन्तरं तदेव कारणं व्यक्तरूपमुद्गृह्णत् कार्यत्वेन परिणमति। तदेवम् अव्यक्ताऽवस्था हि कारणं, तद्व्यक्ताऽवस्था च कार्यमित्युपपन्नम्। तयोरभेदस्तात्त्विकः, भेदस्तु व्यावहारिकः। भेदाऽभेदव्यवस्थायाः किञ्चिन्निबन्धनत्वात्। यथाऽह :—

'कार्यरूपेण नानात्वम्, अभेदः कारणात्मना।
हेमात्मना यथाऽभेदः, कुण्डलाद्यात्मना भिदा॥'

तथा च वाचस्पतिमिश्राः —

"न हि कारणाद् भिन्नं कार्यम्। कारणञ्च सदिति कथं तदभिन्नं कार्यमसद् भवेत्। न पटस्तन्तुभ्यो भिद्यते तन्तुधर्मत्वात्। इह यद् यतो भिद्यते तत्तस्य धर्मो न भवति यथा गौरश्वस्य। धर्मश्च पटः तन्तूनां, तस्मान्नार्थान्तरम्। ययोरर्थान्तरत्वं न तयोरुपादानोपादेयभावः।....यथा कूर्मः स्वावयवेभ्यः सङ्कोचविकासिभ्यो-न भिन्नः एवं घट-मुकुटादयोऽपि मृत्सुवर्णादिभ्यो न भिन्नाः।"

स एष सत्कार्यवादः कापिलानां प्रमुखः सिद्धान्तः। तस्यैतस्य सिद्धान्तस्य परिपोषार्थम् असदकारणात्, उपादानाग्रहणात्, सर्वसम्भवाभावात्, शक्यस्य शक्यकरणादिति युक्तिचतुष्टयञ्च हेतुत्वेन पुरस्कृतम्। तथा हि :—

'असदकारणादुपादानाग्रहणात् सर्वसम्भवाभावात्।
शक्यस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्॥' [सांख्यकारिका]

## वास्तववादः

कापिलानां प्रकृतिपुरुषौ स्वतन्त्रसत्ताकौ जगतो मूलकारणभूतौ। शास्त्रमिदं वास्तववादपरं द्वैतप्रतिपादकं वा। अस्य नये प्रकृति-पुरुषौ सृष्टिचक्रक्रमं निर्वाहयतः। त्रिविधदुःखात्यन्तनिवृत्तिर्हि मोक्षोऽत्यन्तपुरुषार्थाऽपरनामधेयः। सोऽयमत्यन्तपुरुषार्थः प्रकृति-पुरुषाऽन्यताख्यातिमन्तरा न सम्भवति। विवेकाऽख्यातिलक्षणादज्ञानादेव बन्धः। एतदज्ञानमेव त्रिविधदुःखस्य हेतुः। त्रिविधं दुःखञ्च तद्—आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकञ्च। तत्राध्यात्मिकं शारीरं मानसञ्चेति। शरीरमधिकृत्य प्रवृत्तं शारीरं, मनोऽधिकृत्य प्रवृत्तं मानसम्। व्याधिसमुत्थं शारीरम्। काम-क्रोधादिसमुत्थञ्च मानसम्। भूतानि प्राणिनः

तान् हिंस्त्रादिजन्तूनधिकृत्य प्रवृत्तमाधिभौतिकम्। देवान् विद्युदादीनधिकृत्य प्रवृत्तमाधिदैविकमिति तत्त्वम्।

## किमर्था शास्त्रस्य प्रवृत्तिः

सांख्यानां प्रकृतिर्भोग्या, भोक्ता च पुरुषः। वस्तुतोऽन्तःकरणं भोक्तृ न तु पुरुषः, पुरुषस्यासङ्गत्वात्। इदमवधेयमत्र--यथा जपाकुसुमसान्निध्येन स्वच्छोऽपि स्फटिकमणिः लौहित्यच्छायापत्त्या लोहितः प्रतिभासते, एवं निस्सङ्गोऽपि पुरुषः अन्तःकरणप्रतिबिम्बितः[1] आत्मानं सुखिनं दुःखिनञ्चाऽऽकलयति। विगलितैद्भ्रमः पुरुषः पुनः त्रिविधदुःखातीततया अत्यन्तपुरुषार्थस्वरूपं निःश्रेयसं साधयति। तस्यैतस्य विभ्रमविलासस्य निरासार्थं शास्त्रस्य प्रवृत्तिः। प्रकृतिपुरुषाऽन्यताख्यात्यैव विभ्रमनिरासः। तन्निरासादेव त्रिविधदुःखात्यन्तनिवृत्तिः। अत्यन्तनिवृत्तिश्चेयं नाऽभाववचना सांख्यानाम्। सत्कार्यवादित्वेनाऽभावस्य तैरनङ्गीकारात्। ध्वंसप्रागभावरूपत्वे कापिलैरनागतातीताऽवस्थयोरेव स्वीकारात्। तदेवं दुःखात्यन्तनिवृत्तित्वं हि तेषां दुःखाऽनागताऽवस्थया सह वृत्तित्वमेवेति विवेकः।

तत्रातीतं दुःखमतीतमव, वर्त्तमानञ्च भोगारूढतया स्वयमेवात्येष्यति। अवशिष्टमनागतम्। तदनागतदुःखनिवृत्त्यर्थमेव चास्य शास्त्रस्य प्रवृत्तिः।

इदमत्रावसेयम्--सत्कार्यवादः खलु मौलिको राद्धान्तः कापिलानाम्। तेषां नये सदेव व्यक्तीभवत्कार्यत्वेन परिणमति, न कर्हिचिदसतः सदुत्पद्यते, सतो वाऽसत्। इति हेतोरेव तेषां कारण-कार्ययोरभेदः, उपादानोपादेययोर्वा तादात्म्यसम्बन्धः। सत्कार्यवादे सत एव कारणभूताद् दुग्धादुत्पादेन दध्यादिपरिणामो जायते। असतः सदुत्पत्तिं कापिला नाभिनन्दन्तीति भावः।

यथा शून्यवादिनः असतः सदुत्पत्तिमभिमन्यन्ते। तेषां मते बीजमृत्पिण्डध्वंसानन्तरम् अङ्कुरघटाद्युत्पत्तिदर्शनाद् असतोऽभावादेव भावोत्पत्तिर्जायते। जगदुत्पत्तेः प्राक् कारणं कार्यं वा न किमप्यासीत्। शून्यमेव केवलमासीदभावरूपम्। शून्यादेव जगदुत्पत्तिः।

---

१. यद्यपि कापिलानां सर्वोऽपि सुखदुःखादिपरिणामो बुद्धेरन्तःकरणस्य वा न कर्हिचित्पुरुषस्य तस्य कूटस्थनित्यत्वेन तदसम्भवात् तथाऽपि दुःखादिमन्तःकरणवशात् पुरुषस्यात्मनस्तत्र प्रतिबिम्बिततया सुखदुःखादिछायापत्त्या विवेकग्रहाभाववशात् सूर्यविम्बे सलिलोत्थकम्पादिवदौपाधिकम्। पुरुषे सर्वमेतदतात्त्विकमपि सुखदुःखादिकं प्रतिभासते एव। तस्याऽविवेकमूलकतया विवेकप्रत्यय एव तदुच्छेदोपायः तत्प्रदर्शनार्थमेवाऽस्य दर्शनस्योपक्रम इति निष्कर्षः।

यथाऽन्ये वेदान्तिनः एकस्य सतो विवर्त्तकार्यजातं सद्वस्तु, तेषां नये उपादानोपादेययोस्तादात्म्यं न वास्तवं किन्तु कल्पितम्, कार्यस्य जगतः रज्जौ सर्पस्येव कल्पितत्वात्। सद्रूपस्य ब्रह्मणोऽज्ञानेन परिकल्पितं दृश्यमिदं न सत् नाऽप्यसत्, नाऽपि च सदसद् विरोधात् किन्तु मिथ्याकल्पितमेव, सतो ब्रह्मणः तदवस्थाविशेषरूपेणैव तद्विवर्त्तत्वादिति।

यथा वा कारण-कार्ययोर्भेदमङ्गीकुर्वाणा नैय्यायिका रूपादिविशिष्टात्परमाणोः सकाशादुत्पत्तेः प्रागविद्यमानं द्वयणुकादिलक्षणं रूपादिसमन्वितं कार्यरूपं जगदुत्पद्यते इत्यभ्युपयन्ति।

न तथा सत्कार्यवादिनः कापिलाः। ते तु सत एव सज्जायते न जात्वसतः सदित्येव राद्धान्तत्वेन समुन्नयन्ति। सत्कार्यवादे तु पुनः सतः कारणादेव कार्यस्याऽसतोऽभिव्यक्तिः सञ्जायते नोत्पत्तिः। सतश्चैवाऽभिव्यक्तिरुपपद्यते नासतः। यथोत्पीडनेन तैलं तिलेषु, मन्थनेन च सर्पिर्दध्नि। इत्येव सत्कार्यवादस्य निष्कृष्टोऽर्थः। उक्तञ्च वृद्धैरपि :—

'असत्त्वे नास्ति सम्बन्धः कारणैः सत्त्वसङ्गिभिः।
असम्बन्धसमुत्पत्तिमिच्छतो न व्यवस्थितिः॥' इति।

## पुरुषबहुत्वम्

असङ्गोऽयम्पुरुष इत्युक्तम्। सोऽयं पुरुषोऽव्यक्तात्प्रधानाद् व्यतिरिक्तः। यद्यपि अहम्प्रत्ययविषयतया पुरुषः सिद्ध एव न पृथक् तत्साधनमावश्यकं, तथाऽपि तस्य देहादिव्यतिरिक्तसाधनस्यावश्यकत्वात् किञ्चिदिव प्रस्तूयते।

सांख्यानां दृश्याः खलु बुद्धयादयो हि भोग्याः। न च भोक्तारमन्तरेण भोग्यानां भोग्यतोपपद्यते। भोक्ता च भोग्यबुद्धयादिव्यतिरिक्तः आत्मा, भोक्तृभावात्। भोग्याश्च सुखदुःखात्मका बुद्धयादयः पृथिव्यादिवदिति अनुमितिगम्यम्। भोग्येन किल भोक्तुरनुमेयतया आत्मनोऽस्तित्वं सूपपन्नं भवतीति। उक्तञ्च :—

'संघातात्परार्थत्वात् त्रिगुणादिविपर्य्ययादधिष्ठानात्।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च॥' [सांख्यकारिका]

स च पुरुष आत्मा वा चेतनोऽनेकश्च। सूत्रितञ्च भवति :—

'पुरुषबहुत्वं व्यवस्थातः।' (सां० ६.४५)

अपि च :—

'जनन-मरणकारणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च।
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्य्ययाच्च॥' [सांख्यकारिका १८]

## असंगस्याऽपि पुरुषस्य कथमुपरागः ?

ननु पद्मपत्रमिवाम्भसा निस्सङ्गस्याऽपि पुरुषस्य कथमुपराग इत्यत्राह आचार्यः –

'निस्सङ्गोऽपि उपरागोऽविवेकात्।' [सां० २६.६]

क्लेशकर्मादिविविधवासनावासितबुद्धिसत्त्वसंसर्गविरहेऽपि पुरुषे अविवेक-हेतोरुपरागो जायते यथा कुसुमस्फटिकयोः संसर्गात् स्फटिके जपाकुसुमोपरागः, न तथा बुद्धिसत्त्व-पुरुषयोः किन्तु बुद्धिसत्त्वस्य तादात्म्यादात्मनस्तद्वासनाभिमानः। तथा च सूत्रितम् :—

'जपास्फटिकयोरिव नोपरागः किन्त्वभिमानः।' [सां०२६.७]

इति सर्वं स्पष्टम्।

## सृष्टिक्रमः

सांख्यनये पञ्चविंशतितत्त्वानि सृष्ट्युत्पत्तिसाधनत्वेनाभिमतानि। तत्र प्रकृतिः कर्त्री, पुरुषस्तु जले पद्मपलाशवद् असङ्गः। पुरुषः चेतनः, प्रकृतिस्त्व-चेतना। सा च सत्त्वरजस्तमसां[1] साम्याऽवस्थारूपा। ततो महान्——महत्तत्त्वं बुद्धितत्त्वमिति यावत्। तत्परिणामोऽहङ्कारतत्त्वम्। अहङ्कारतत्त्वस्य परिणामः पञ्चतन्मात्राणि, एकादशेन्द्रियाणि च। तन्मात्राणां परिणामाः पञ्च महाभूतानि। पञ्चविंशश्च पुरुषः। तत्र पूर्वे चतुर्विंशतितत्त्वानि अचेतनानि पुरुषश्च चेतनः।

प्रकरोति या सा प्रकृतिः प्रधानापरपर्य्याया। सा हि किलास्य दृश्यजगतः कार्यसङ्घातस्य मूलभूता। न त्वस्या मूलान्तरम् अनवस्थाप्रसङ्गात्। तदनयोः प्रधान-पुरुषयोः संयोगेनैतद् दृश्यं जगदुत्पद्यते। न च सत्त्वरजस्तमसां परस्पर-विरोधशीलानां गुणानां मिथः सुन्दोपसुन्दन्यायेन ध्वंसापत्तेः कथं तेभ्यः कार्योत्पाद इति शङ्क्यम्। मिथो विरुद्धानामपि वर्त्ति-तैलानलानां सम्भूय प्रकाश-लक्षणकार्योत्पादसम्भवात्। यथा वा वात-पित्त-श्लेष्मणां संघातेन परस्परविरुद्धानां

---

१. सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान्, महतोऽहङ्कारः, इत्यादि। [सां० १-११]

तत्र यत्सुखहेतु तत्सुखात्मकं सत्त्वम्। यद् दुःखहेतु तद् दुःखात्मकं रजः। यन्मोहहेतु तन्मोहात्मकं तम इति विवेकः।

धातूनां शरीरादिकार्यकारित्वसम्भवात् । इत्थं मिथो विरुद्धान्यपि सत्त्व-रजस्तमांसि जगदुत्पादरूपं कार्यं साधयन्तीति न कश्चिद् दोषः।[1]

## सदसत्ख्यातिः

कापिलानां सदसत्ख्यातिवादोऽपि नितरां रोचिष्णुः । माध्यमिकानां, प्राभाकराणां, वेदान्तिनां, नैय्यायिकानां वा ख्यातिवादः एभ्यो न रोचते। यदा शुक्तौ रजतप्रतीतिः 'इदं रजतम्' इत्याकारकं ज्ञानम्भवति, तदा 'इद'मिति ज्ञानं सत्, 'रजत'मिति ज्ञानञ्चाऽसत् । तत्र इदमिति सद् ज्ञानं चाक्षुषप्रत्यक्षं विषयीकरोति। अतः सद् 'रजत'मिति ज्ञानञ्च इन्द्रियागोचरतया उत्तरकाले नेदं रजतमिति बाधितत्वादसत् । तदिदं सदसदिति उभयकोटिमवगाहमानं यद् भ्रान्तिज्ञानं तदेव सांख्यानां सदसत्ख्यातिवादपदवाच्यम् इत्यनिरुद्धः । विज्ञानभिक्षुस्तु पुनः वस्तुमात्रस्य नित्यत्वात् स्वरूपतोऽबाधः, परन्तु चैतन्ये आरोपितत्वात् संसर्गतो बाधः— 'स्वरूपेणाऽबाधः सर्ववस्तूनां नित्यत्वात्, संसर्गतस्तु बाधः सर्ववस्तूनां चैतन्येऽस्तीति । एवञ्च जगदिदं स्वरूपतः सत् सदपि चैतन्येऽध्यस्तञ्च पुनरसदिति', इत्येवञ्जातीयकं ज्ञानमेव सदसत्ख्यातिपदेन व्यवहरतीति विवेकः।

सांख्याचार्यो भगवान् कपिलो[2] मुनिरतीव प्राचीनः इत्यत्र प्रमाणान्तराणि :—

सांख्यचर्चा महाभारतेऽपि वर्त्तते इति कं न कुतूहलयति । तद्यथा—

'संख्यां प्रकुर्वते चैव प्रकृतिञ्च प्रचक्षते।
तत्त्वानि च चतुर्विंशत् तेन सांख्याः प्रकीर्त्तिताः ॥
दोषाणां गुणानाञ्च प्रमाणं प्रविभागतः ।
कञ्चिदर्थमभिप्रेत्य सा संख्येत्युपधार्यताम् ॥' इति

---

१. 'सत्त्वं लघु प्रकाशकमिष्टम्, उपष्टम्भकं चलञ्च रजः ।
गुरु वरणमेकमेव तमः, प्रदीपवच्चार्थतो वृत्तिः ॥ [सांख्य कारिका]
अत्र सत्त्वतमसी स्वयमक्रियतया स्वकार्यप्रवृत्तिं प्रति अवसीदन्ती रजसा गम्यते। अवसादात्प्रच्याव्य स्वकार्ये उत्साहं प्रयत्नं कारयेते' इति वाचस्पतिमिश्राः ।

२. अत्र श्री 'सत्यव्रतसामश्रमिकृतं निरुक्तालोचनमनुसन्धेयम् । पण्डितप्रवरोऽयं मुक्तकण्ठमाह :—
'सिद्धमित्थं सांख्यदर्शनाविष्कर्तुः कपिलस्यैव दर्शनकारेष प्राचीनतमत्वमिति ।'

महाभारतस्यैव खण्डभूतायां श्रीमद्भगवद्गीतायां पुनः सांख्ययोगयोः बहुशो बहुधा विवेचनं सांख्यदर्शनस्य आध्यात्मिकपक्षे प्राचीनतरत्वं विशदां ख्यातिञ्च विशदय्य निर्दिशति।

एवमुपनिषत्सु सांख्यदर्शनस्योत्कीर्तनमुपलभ्यते :—

'तत्कारणं सांख्ययोगादिगम्यम्। [श्वेता० उप० ६।१३]

किञ्च—

'शुद्धात्मतत्त्वविज्ञानं सांख्यमित्यभिधीयते।' [शाङ्करभाष्ये]

श्वेताश्वतरोपनिषदि च सृष्ट्युत्पत्तेः मूलकारणम् 'अजा' सांख्यमेवानुवदति। तथा हि :—

'अजामेकां लोहित-शुक्ल-कृष्णां बह्वीः प्रजाः सृजमानां सरूपाः।'
[श्वेताश्व० ६।४]

अस्य सांख्य-विज्ञानस्य निरुपमस्याविर्भावकत्वं सर्वार्थजातं दिव्यचक्षुषा हस्तामलकवत्प्रत्यक्षीकुर्वाणस्य भगवतः कपिलमुनेरेवेति सर्वैः स्वीकृतम्। अतः सुगृहीतनामधेयाः कपिलाचार्याः कस्य वा न स्युर्नमस्याः। अतएव

'कपिलाय नमस्तस्मै येनाऽविद्योदधौ जगति निमग्ने।
कारुण्यात्सांख्यमयी नौरिह विहिताऽवतरणाय॥'

इति सत्योक्तिरेव तद्विषये।

---०○---

# अथ योगदर्शनम्

योग-प्रयोजनम्—योगविषय-निरूपणम्—कोऽयं योगो नाम—योगाङ्गानि—योगो द्विविधः—योगसिद्ध्युपायाः—योगस्य त्रैतवादः—ईश्वरः—कोऽस्य प्रवक्ता—योगसाहित्यम्—कोऽयं पतञ्जलिर्नाम—तत्कालनिर्णयः।

## योग-प्रयोजनम्

इह खलु जगतीतले सर्वेऽपि प्राणभृतः कामं सुखं कामयमानाः, तल्लाभाय सुखसाधनानि प्रतिपित्सवः, दुःखहानाय निरन्तरं यतमानाः, दुःखकारणानि जिहासवश्चावलोक्यन्ते। दुःखानि च प्राधान्येन आध्यामिक-आधिदैविक-आधिभौतिकभेदेन त्रिविधान्येव। तत्र कायिकानि ज्वरादीनि मानसानि च शोक-सन्तापादीन्याध्यात्मिकानि, उल्कापात-भूकम्प-झञ्झावातप्रभृतीन्याधिदैविकानि, सरीसृपव्याघ्रादिहिंस्रभूतेभ्य आगतानि आधिभौतिकानि व्यपदिश्यन्ते। तदेतत्त्रिविधदुःखनिरसनाय प्राणिनां सन्तताऽविरता च प्रवृत्तिः। परमेषां त्रिविधदुःखानां क्षणिका निवृत्तिः न चरमपुमर्थसाधिका, दुःखनिवृत्तावपि पुनस्तदुत्पत्तिदर्शनात्। एवं मानसिकक्लेशनिवृत्तावपि सम्भवन्त्येव ते-ते क्लेशाः पौनःपुन्येन। किञ्च यावन्ति सांसारिकाणि सुखानि तान्यपि प्रायशः इन्द्रियजन्यत्वात् क्षणमात्रावस्थायीनि। तथा चैकविधसुखोपभोगानन्तरं भूय एव तानि हविषा कृष्णवर्त्मेव प्रगुणतयाऽभिवर्द्धमानानि अनुभूयन्ते, तदितरभोगाभिलाषो वा तदनु सुतरां समुज्जृम्भते। अतोऽचिरस्थायित्वात् सुखान्यपि सांसारिकाणि नोपादेयपक्षे निक्षिपन्ति प्रेक्षावन्तः। अतो दुःखानां याऽऽत्यन्तिकी निवृत्तिस्तामेव परमपुरुषार्थत्वेनोन्नयन्ति तात्त्विकाः। तदेव कैवल्यमभिधीयते। तत्कैवल्यपथ-प्रदर्शनमेव परमं प्रयोजनं योगशास्त्रस्येति पर्यवसितम्।

तदिदं योगशास्त्रं सांख्यप्रवचनाऽपरनामधेयं सेश्वरसांख्यपदाङ्कितम् यद्यपि प्राग् हिरण्यगर्भादिभिः समुपदिष्टं, तथापि मुमुक्षूणां कल्याणाय सौकर्येणावबोधनाय चेदं समाधि-साधन-विभूति-कैवल्याभिधेन पादचतुष्टयेनोपनिबद्धं भगवत्पतञ्जलिमुनिपादैरेवाविष्कृतम्। पतञ्जलिमुनिप्रणीतत्वादेवेदं पातञ्जलदर्शननाम्नाऽपि व्यपदिश्यते।

## योगविषयनिरूपणम्

तत्र प्रथमे पादे 'अथ योगानुशासन' मिति शास्त्रारम्भं प्रतिजानानः 'योगश्चित्तवृत्ति-निरोध' इति योगलक्षणमभिधाय योगे—वृत्तिनिरोधकाले—चितः स्वरूपावस्थानं व्युत्थानकाले च वृत्तिसारूप्यं निरूप्य, वृत्तीनां पञ्चसंख्याकत्वं

क्लिष्टाऽक्लिष्टकथनपूर्वकं तदुद्देशप्रमाणविभागलक्षणानि विधाय, निरोधोपाययोरभ्यास-वैराग्ययोः लक्षणाऽवान्तरभेदप्रतिपादनपुरस्सरं सम्प्रज्ञाताऽसम्प्रज्ञातयोः समाधिविशेषयोः स्वरूपं तदधिकार्यधिकारानुगुणफललाभसमयतारतम्यञ्च प्रतिपाद्य, प्रसङ्गोपनतमीश्वरमभिलक्ष्य, तदनु निरूप्य, तद्वाचकप्रणवजपोपासनध्यानविधिं तदन्तरायान् तन्निरासोपायाँश्च निर्दिशन्, पुनः सवितर्का-निर्वितर्का-सविचारा–निर्विचाराः समापत्तीरुपपाद्य तासां सबीजत्वं तन्निरोधतश्च निर्बीजसमाधिं व्याख्याय एकपञ्चाशत्सूत्रगुम्फितं समाधिसंज्ञितं पादममुं पर्य्यवासाययन्महर्षिः गोनर्दीयः।

द्वितीये—'तपः स्वाध्यायेश्वरप्रणिधाने' त्यादिना क्रियायोगं तत्प्रयोजनञ्च प्रदर्श्य क्लेशानामुद्देशविभागलक्षणानि संलक्ष्य तन्निरसनोपायञ्च प्रणिगद्य तदनु हेयादिव्यूहचतुष्टयं निरूप्य, समुपवर्ण्य च योगाङ्गानि सविशेषं पञ्चपञ्चाशत्सूत्रात्मकं द्वितीयं पादं साधनासंज्ञकमाचार्यो निरदिक्षद्।

तृतीये—विभूतिनामके पादे 'देशबन्धश्चित्तस्य धारणा' इति सूत्रेण ध्यान-धारणा-समाधित्रयान्तरङ्गमवगमय्य संयमपदव्यपदेश्यं तदवान्तरफलविशेषसूचकं विभूतिजातं सम्यक्संस्थाप्याऽन्ते सत्त्व-पुरुषयोः बुद्धिसाम्येन कैवल्यप्राप्तिमाचक्षाणः सूत्रकारः समपूरयत् पादममुं पञ्चपञ्चाशत्सूत्रनिबद्धम्।

तुरीये चान्तिमे 'जन्मौषधि-मन्त्र-तपःसमाधिजाः सिद्धयः' इत्यादिना सिद्धिपञ्चकं सप्रपञ्चं निरूप्य, शास्त्रस्य मुख्यमभिधेयं परमपुरुषार्थं कैवल्यं वर्णयित्वा चतुस्त्रिंशत्सूत्रगुम्फितं कैवल्याभिधानं पादं सम्प्रपूर्य महर्षिरुपसमहार्षीद् योगशास्त्रमिति।

## अथ कोऽयं योगो नाम

समाध्यर्थकाद् 'युज्' धातोर्निष्पन्नोऽयं योगशब्दः व्युत्पत्तिलभ्यं समाधिमेवाऽभिधत्ते। तथा च लक्षयति भगवान् सूत्रकारः—

'योगश्चित्तवृत्तिनिरोधः।' इति [योग० १।२]

चित्तवृत्तिनिरोध एव योगः, समाधिरित्यर्थः।

इदञ्च योगशास्त्रं चिकित्साशास्त्रवच्चतुर्व्यूहम्। यथा चिकित्साशास्त्रे रोगो, रोगहेतुः, आरोग्यम्, भैषज्यमिति चत्वारो व्यूहाः प्रतिपाद्यन्ते, एवमस्मिन् योगशास्त्रेऽपि संसारः, संसारहेतुः, मोक्षो, मोक्षहेतुश्चेति चत्वारो व्यूहा भवन्ति। तत्र दुःखबहुलत्वात्संसारो हेयः द्रष्टृ-दृश्ययोः पुरुष-प्रधानयोः संयोगो हेयहेतुः उक्तसंयोगस्यात्यन्तिकी निवृत्तिर्हानम्, हानोपायश्च सम्यग्दर्शनमिति चतुर्व्यूहसम्पन्नत्वादेव शास्त्रमिदं चतुर्व्यूहमुच्यते। तत्राऽतीतं व्यतिक्रान्तं दुःखं न हेयकोटिमव-

गाहते। नाऽपि वर्त्तमानं भोगारूढतया क्षणान्तरेऽतीतपक्षे निपतत्। अनागतदुःखमेव केवलं हेयपक्षमालम्बते। तच्च क्लिश्नातितरां पुरुषम्। तस्याऽऽत्यन्तिकनिवृत्त्यर्थमेव योगः प्रवर्त्तते। तथा च सूत्रयत्याचार्यः, 'हेयं दुःखमनागतम्।' [योग] इति। सम्यग्दर्शनमेव तन्निवृत्तौ कारणत्वेनोपदिशन्ति। सम्यग्दर्शनं हि नाम यत्प्रधान-पुरुषयोरन्यताख्यातिः। सा तु योगाङ्गानुष्ठानादेव सिद्ध्यति, नाऽन्यथा। उक्तञ्च—

'योगाङ्गानुष्ठानादशुद्धि-क्षये ज्ञानदीप्तिराविवेकख्यातेः।' [योग० २।२८]

यथा-यथा योगाङ्गान्यनुष्ठीयन्ते, तथा-तथा अशुद्धिरज्ञानमलावरणं तनुतामापद्यते। तत्क्षयक्रमाऽनुरोधेनोत्तरोत्तरमाविवेकख्यातेः ज्ञान-दीप्तिरभिवर्द्धते।

## योगाङ्गानि

तानि च योगाङ्गानि अष्टौ।

'यम-नियम-आसन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयोऽष्टावङ्गानि।' [योग० २।२९]

इमानि सम्यगनुष्ठीयमानानि मुमुक्षूणां बहुतरमुपकुर्वन्ति। तत्र तावत् :—

### यमाः

'अहिंसा-सत्य-अस्तेय-ब्रह्मचर्य-अपरिग्रहाः यमाः।' [योग० २।३०]

हिंसा—हिंसा हि नाम कायेन, वाचा, मनसा वा प्राणिपीडनम्। तद्राहित्यमहिंसा सर्वथा सर्वदा सर्वप्राणिनामनभिद्रोह इति। सा मुमुक्षुणाऽवश्यमेवाऽनुष्ठेया। मनसा, वाचा, कर्मणा वा हिंसा कदाऽपि न विधेया इति सर्वप्रधानं व्रतम्। यतः इतराणि सत्यादीनि अहिंसायाः निष्पत्तय एव परिपाल्यन्ते। अहिंसा-व्रतस्य निर्मलीकरणायैव तानि उपादीयन्ते। यतः अहिंसायामेवाखिलानि व्रतान्तराणि अन्तर्हितानि भवन्ति इति विवेकः।

'अहिंसा-प्रतिष्ठायां तत्सन्निधौ वैरत्यागः।' [योग० २।३५] इति। अहिंसाव्रतचारिणः सविधे अजा-व्याघ्र गो-सिंह मूषक-मार्जार अहि-नकुलादिशाश्वतविरोधिनोऽपि जन्तवः किल परस्परं वैरभावं त्यजन्ति।

सत्यम्—'सत्यप्रतिष्ठायाममोघा वाक्।' सत्यप्रतिष्ठायां योगी अमोघां सफलां वाचं विन्दति। स यदि अनायासं वाचोद्गिरति—'धार्मिको भूयाः' इति भवति धार्मिकः।' श्रीमान् भूयाः' इति भवति धनाढ्यः। तद्वचनाभिभूतोऽधार्मिकोऽपि धार्मिको भवति, निर्धनोऽकिञ्चनोऽपि भवति धनाढ्यः। यथादृष्टं यथाश्रुतं तथा वाङ्मनश्चेति यथार्थवाङ्मनसे। प्रयुक्ता हि वाग् यदि न वञ्चिता, प्रवञ्चनाय न प्रयुक्ता, न च प्रतिपत्तिबन्ध्या, नाऽपि स्वबोधजननाऽक्षमा स्यात्

तदा सा सत्या भवेन्नाऽन्यथा। यदि एवमभिधीयमानाऽपि वाग् भूतोपघातपरैव स्यात्तदा तु न सासत्या भवेत्। तस्मात् सम्यक् समीक्ष्य परीक्ष्य च सर्वभूतहितार्थं प्रयुक्ता वाग् हि सत्यत्वेनोन्नेया।

अस्तेयम्--न केवलं चौर्यविरतिमात्रमपि तु सर्वथा परकीयद्रव्याऽस्पृहा अस्तेयम्।

ब्रह्मचर्यम्--संयतसर्वेन्द्रियस्य विषयस्मरणकीर्त्तनादिरहितस्य यमिनः उपस्थन्द्रियसंयम एव ब्रह्मचर्यम्।

अपरिग्रहः--देहयात्राऽतिरिक्तानां भोगसाधनानामस्वीकरणम्।

इतीमानि पञ्च महाव्रतानि। एते पञ्च यमाः। यम्यन्ते नियन्त्रणविषयी-क्रियन्ते, उपरम्यन्ते समनस्केन्द्रियाणि स्व-स्वविषयेभ्यो यैस्ते यमाः। मोक्षाऽध्वनीनामिमे आधारशिलाभूताः परमोपकारकाः।

त इमे अहिंसादयो यमा देश-काल-जाति-समयानवच्छिन्नाः सार्वभौमाः सर्वावस्थास्वनुगतं महाव्रतमित्याख्यायन्ते। तत्र तावद्देशाऽवच्छिन्ना यथा, तीर्थे न हनिष्यति। कालाऽवच्छिन्ना यथा, चतुर्दश्यां पुण्येऽहनि वा न हनिष्यति। जात्यवच्छिन्ना यथा, मत्स्यवधकस्य मत्स्येष्वेव हिंसाप्रवृत्तिर्नान्यत्र। समयाऽवच्छिन्ना यथा, क्षत्रियाणां युद्ध एव हिंसा नाऽन्यत्रेति। तैः सर्वैरनवच्छिन्ना सार्वभौमा अहिंसा अनुष्ठेयैव मुमुक्षुभिः सर्वात्मनेति।

## नियमाः

नियमाश्चापि पुनः पञ्चैव--शौच-सन्तोष-तपः-स्वाध्याय-ईश्वरप्रणिधानानीति। तत्र

शौचं शुद्धिः। तच्च बाह्याभ्यन्तरभेदेन द्विविधम्। बाह्यं शारीरं मृज्जलादि-जनितं मेध्याभ्यवहारादिनोदरस्य च। अभ्यन्तरञ्च मानसं चित्तमलानां मद-मान-मात्सर्य-ईर्ष्या-असूया-राग-द्वेषादीनां कात्स्न्येन प्रक्षालनम्।

सन्तोषः--सन्निहितसाधनाधिकस्याऽनुपादित्सा।

तपः--द्वन्द्व-सहनम्। द्वन्द्वाश्च पुनः जिघित्सा-पिपासे, शीतोष्णे, स्नाना-शने इत्येवंजातीयकाः, तेषां द्वन्द्वानां सहिष्णुतारूपं तपः।

स्वाध्यायः--मोक्षशास्त्राणां वेदोपनिषद्दर्शनानां नियमेनाध्ययनम्।

ईश्वरप्रणिधानम्--ईश्वरे जगदीश्वरे परमगुरौ अखिलकर्मणां समर्पणम्, तत्फलसंन्यासश्च।

## आसनम्

'स्थिरसुखमासनम्' [योग० २।४६] आस्यते आस्ते वाऽनेनेत्यासनम्।

पद्मासन-भद्रासन-स्वस्तिकासनादीनि अनेकप्रभेदानि यथासुखमनुष्ठेयानि। आचार्यस्य तु स्थिरसुखमासनमित्येवाभिमतम्। येन आसनेनाऽवस्थितस्य स्थैर्यं सुखञ्च सिद्ध्यति तदासनं स्थिरसुखासनम्। आसनानां प्रभेदास्तु तत्र-तत्र यथाप्रकरणमनुसन्धेयाः।

## प्राणायामः

नासापुटेन वायोरन्तःप्रवेशः श्वासः तद्बहिर्निर्गमश्च निःश्वासः प्रश्वासो वा। तयोः श्वास-प्रश्वासयोर्या स्वाभाविकी गतिस्तस्या निरोधः प्राणायाम उच्यते। प्राणायामेन विवेकाज्ञानावरणमिन्द्रियाणां तनूक्रियते। अत एवोक्तम्, 'तपो न परमं प्राणायामाद्' इति। अथ च :--

'दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात्॥' [मनु०]

अपिच--

'नाभिस्थः प्राणपवनः स्पृष्ट्वा हृत्कमलान्तरम्।
कण्ठाद् बहिर्विनिर्याति पातुं विष्णुपदामृतम्॥
पीत्वा सोऽम्बरपीयूषं पुनरायाति वर्गतः।
प्रीणयन् देहमखिलं जीवयन् जठरानलम्॥' इति

प्राण-विज्ञानविशेषज्ञाः पुनः प्रतिपादयन्ति, यत्प्राणवाहिन्यस्तिस्रो नाड्यो भवन्ति, पिङ्गला, इडा, सुषुम्णा चेति। तासु दक्षिणा पिङ्गला, वामा त्विडा, मध्ये सुषुम्णा। स च प्राणवायोः सञ्चारः सार्द्धद्वयघटिकापर्यन्तं पिङ्गलया, ततः सार्द्धद्वयघटिकापर्यन्तमिडया, पुनस्तावत्कालपर्यन्तमेव पिङ्गलया, पुनरिडया इत्येवमहर्निशं घटीयन्त्रचक्रवन्नाडीद्वयेनैव वायुः सञ्चरति। एकस्यां घटिकायां षष्टिः पलानि, एकस्मिन्पले च षट् श्वास-प्रश्वासाः। एवमेकस्यां घटिकायां षष्ट्युत्तरशतत्रयम्। (३६०)। सार्धघटिकाद्वये समस्ताः श्वास-प्रश्वासाः नवशतानि। सूर्योदयादारभ्य पुनः सूर्योदयपर्य्यन्तं सर्वे श्वास-प्रश्वासाः षट्शतोत्तरैकविंशति (२१,६००) संख्याकाः सम्भवन्ति। तेषां यथाविधि प्रच्छर्दन-विधारणाभ्यां शरीरमनसोः सम्यक्शुद्धिद्वारा प्रज्ञाबलमुद्दीप्यते, क्षीयते च सर्वथा मलावरणम्। प्राणायामद्वारा नियन्त्रितं निरुद्धं चित्तं शब्दादिविषयैर्न संयुज्यते श्रोत्रादीनीन्द्रियाण्यपि विषयैर्न संयुज्यन्ते। भवन्ति च तानि तदा चित्तस्वरूपानुकारीणि, एष एव प्रत्याहारः।

ध्यानम्--वृत्त्यन्तराऽव्यवहितो ध्येयाकारो मनसः प्रवाहः। इदमेव ध्यानं यदा ध्येयमात्राकारं ध्यानध्यातृदृष्टिविधुरं भवति तदा समाधिरित्यभिधीयते।

**धारणा**--या तु हृत्पुण्डरीकादिदेशविशेषे चित्तस्य बन्धः एकाग्रता सैव धारणेत्युच्यते।

तदेतद्योगाङ्गानुष्ठानादेव विवेकख्यातिः सञ्जायते। विवेको हि नाम प्रकृतिपुरुषयोरन्यताख्यातिः, चेतनाऽचेतनभेदज्ञानमिति। विवेकख्यातिनिष्पत्तावेव मुक्तिः कैवल्यं वा सम्भवति न तु तदृते। अयमभिसन्धिः, प्रकृति-पुरुषान्यता-प्रत्ययोत्पत्तौ पुरुषस्याऽविद्या निवर्त्तते। अविद्या-निवृत्तौ रागादयः क्लेशा विनिवर्त्तन्ते। रागाद्यभावे कर्माभावः। कर्माभावे जन्माभावः। सति जन्माभाव एव दुःख्यात्यन्तनिवृत्तिः। सैव मुक्तिः कैवल्यं केवलीभाव इति। इदमेव योगशास्त्रस्य परमं प्रयोजनम्। इति संक्षेपतः, विस्तरस्तु तत्रैव प्रकरणेऽनुसन्धेयः।

सोऽयं योगो द्विविधः। सम्प्रज्ञातोऽसम्प्रज्ञातश्चेति। यस्त्वेकाग्रे चेतसि प्रद्योतयति पारमार्थिकं तत्वं, क्षिणोति चाविद्यादीन् क्लेशान्, श्लथयति कर्मबन्धनानि, निरोधाभिमुखञ्च करोति चित्तम् स सम्प्रज्ञात इत्याख्यायते। सम्यक् प्रज्ञायते साक्षात्क्रियते ध्येयं यस्मिन् निरोधविशेषरूपे योगे स सम्प्रज्ञात इति भावः। सम्प्रज्ञाते तत्वज्ञानरूपा वृत्तिर्न निरुद्धा भवति। तदितरास्तु भवन्ति निरुद्धाः निखिला अपि। निवृत्तसमस्तवृत्तिको योगः असम्प्रज्ञातः। संसारबीजभूतानां क्लेशकर्माशयानाञ्चात्राभावादेष एव निर्बीजसमाधिरपि भण्यते। सम्भवति चात्रैवात्मनः स्वरूपावस्थितिरात्यन्तिकी। कैवल्यफलकत्वादेष मुमुक्षुभिः साधनीयः। सिद्धसम्प्रज्ञातसमाधिरेव योगी कैवल्याय कल्पते। कैवल्यमेव परमपुमर्थत्वेनानुग्राह्यम्। तत्साधनायोपदेश एव योगशास्त्रस्य निष्कर्षः।

## योग-सिद्धेः उपायाः

अभ्यासवैराग्ययोः योगसिद्ध्युपायत्वं सूत्रितम्। तावपि न द्राक्सिध्यतः। तदर्थमाचार्यः क्रियायोगमनुशास्ति। तपः स्वाध्यायेश्वरप्रणिधानानीति। नान्तरेण तपश्चित्तनैर्मल्यम् अतस्तावत्तपोऽनुष्ठेयम् नातपस्विनो योगसिद्धिः। तत्र स्वाध्यायः परमावश्यकः। स्वाध्यायो हि नाम वेदशास्त्राणामध्ययनं व। ईश्वरप्रणिधानञ्च सर्वकर्मणां परमेश्वरेऽर्पणम् तत्फलानभिसन्धानञ्च। स एष क्रियायोगः किंफलकः इत्यत्रोच्यते :--

'समाधिभावनार्थः क्लेशतनूकरणार्थश्च' [योग० २।२]

आसेव्यमानः क्रियायोगः समाधिं भावयति क्लेशांश्च तनूकरोति। तनूकृतांश्च तान् प्रसङ्ख्यानवह्निना दग्धबीजकल्पानप्रसवधर्मिणः करिष्यतीति भावः। तदेष क्रियायोगः योगसिद्ध्यर्थमवश्यानुष्ठेयत्वेन प्रदिष्टः इति॥

क्लेशास्तु अविद्याऽस्मितारागद्वेषाभिनिवेशा इति पञ्चसंख्याकाः। त इमे

समाधिविपर्यया सर्वथा समुच्छेत्तव्याः समाधिसाधकैः। क्रियायोगेन तनूकृताः क्लेशाः ध्यानेन दग्धबीजकल्पाः कर्त्तव्याः। यतस्ते पुनः प्रसवाय न कर्हिचित् कल्पेरन् इत्याशयः।

## योगस्य त्रैतवादः

ईश्वरो जीवः प्रकृतिश्चेति तत्त्वत्रयवादमनुगृह्णाति दर्शनमिदम्। इति-हेलोरेव सेश्वरसांख्यमिति संज्ञयापि समाख्यायते। प्रकृतिपुरुषयोरभ्युपगमः यथा कापिले तथा पातञ्जलेऽपि इत्यनयोः समानतन्त्रत्वम्। "सांख्ययोगौ पृथग्बाला प्रवदन्ति न पण्डिताः॥" इति। कापिलं दर्शनन्तु नेश्वरवादीति निरीश्वरसांख्येति-नाम्ना प्रसिद्धम् इति एके अपरे तु नैतत्सहन्ते। कापिलं सांख्यमपि न निरीश्वर-वादीति तेषामभ्युपगमः। तेषां नयेन तद्भ्रमविलसितमेव, यत् सांख्यस्य निरीश्वर-वादित्वन्नाम्। 'ईश्वरासिद्धे'रिति सूत्रे सुतरामाचार्येणेश्वराङ्गीकारात्। सविस्तरः प्रपञ्चस्तु सांख्यप्रकरणे एवानुसन्धेयः। तत्रैव विस्तरेण प्रत्यपीपदाम विषयमसु-मिति नाऽत्र स पुनरुक्तिमपेक्षते।

## ईश्वरः

"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' [योग० १।२४]

पुरुषो जीवः, पुरुषविशेषश्चेश्वरः। स जीवान्नितरां भिन्नः। क्लेशकर्म-विपाकाशयैः सर्वथा असंस्पृष्टः जीवस्तु पुनः तत्संस्पृष्ट इति जीवेश्वरयोर्भेदः सङ्के-तितः। आह च योगभाष्ये महामुनिर्व्यासः—

"यथा मुक्तस्य पूर्वा बन्धकोटिः प्रज्ञायते नैवमीश्वरस्य। यथा वा प्रकृतिलीनस्योत्तरा बन्धकोटिः सम्भाव्यते नैवमीश्वरस्य। स तु सदैव मुक्तः सदैवेश्वर इति। स च ईश्वरः 'सर्वेषामपि गुरुः कालेनानवच्छेदात्" इतीश्वरस्वरूपम् स्फुटं जीवभिन्नत्वेन प्रपञ्चितम्।

## कोऽस्य प्रवक्ता

अस्य शास्त्रस्य प्रवक्ता भगवान् पतञ्जलिः इति सर्वसम्मतम्। यद्यपि केचनाभिमन्यन्ते यदाद्यः प्रवक्ता तु योगदर्शनस्यापि भगवान् कपिल एव सांख्यप्रवक्ता। पुरस्कुर्वन्ति पद्यमिदं स्वमतोपपत्तये :—

'कपिलं' प्राहुराचार्या सांख्यनिश्चितिनिश्चिताः।
हिरण्यगर्भो भगवानेत्र छन्दसि संस्तुतः॥ इति॥

अभ्युपगच्छन्ति ते यत्कपिलप्रोक्तां योगविद्यां कालक्रमेण दुरधिगतां विस्मृतप्रायां करुणावरुणालयो भगवान् पतञ्जलिमहाभागः पुनरुज्जीवयामास। परन्तत्रान्ये

विप्रतिपद्यन्ते। ते श्रुतिमूलकमेव योगशास्त्रमाकलयन्ति। दृश्यते च श्रुतौ बहुत्र[1] योगविद्याया उपदेशः।

## योग-साहित्यम्

तदनु योगशास्त्रस्य दुरूहविषयतामाकलय्य तत्रभगवान् श्रीव्यास महाभागो भाष्यं प्रणिनाय। तदुपरि सकलशास्त्रपारङ्गतो विद्वन्मूर्धन्यः श्रीवाचस्पतिमिश्रमहाभागः व्यासभाष्ये तद्गूढरहस्यविवृतिपरां तत्त्ववैशारदी-नाम्नीं वृत्तिं रचयामास। विज्ञानभिक्षुश्च तत्ववार्त्तिकं प्रणिनाय[2]।

## कोऽस्य प्रणेता ?

किमयं योगदर्शन-व्याकरणमहाभाष्यायुर्वेदग्रन्थानां प्रणेता एक एव अथवा भिन्नः इति विचार्यमाणे पक्षद्वयमुज्जृम्भते। एके व्यवतिष्ठन्ते एक एव। अपरेऽत्र कलहायन्ते। तदेकत्ववादिनः प्रतिपादयन्ति :—

योगेन चित्तस्य पदेन वाचां, मलं शरीरस्य च वैद्यकेन।
योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि।

इति लोकप्रसिद्धेन पद्येन योगशास्त्रव्याकरणभाष्यवैद्यकग्रन्थप्रणेता पतञ्जलिरेक एवेति सुतरां ध्वन्यते। एवं खीस्ताब्दीयद्वादशशतकस्थितिजुषा चरकव्याख्याकृता चक्रपाणिना चरकटीकायामुक्तम् :—

पातञ्जल-महाभाष्य-चरकप्रतिसंस्कृतैः।
मनोवाक्कायदोषाणां हन्त्रेऽहिपतये नमः॥

इत्यनेनापि पतञ्जलेर्महाभाष्य-चरकसंस्कर्तुश्च अभिन्नत्वमेवावगम्यते। किञ्च—

शब्दानामनुशासनं विदधता पातञ्जलं कुर्वता,
भाष्यं राजमृगाङ्कसंज्ञकमिति व्यातन्वता वैद्यके।
वाक्चेतोवपुषां मलाः फणिभृता भर्त्रेव येनोद्धृता-
स्तस्य श्रीरणरङ्गमल्लनृपतेर्वाचो जयन्त्युज्ज्वलाः॥

---

१. 'युञ्जते मन उत युञ्जते धियः'। इत्यादि

२. योगसूत्राणां बह्व्यष्टीका उल्लसन्ति। भोजकृता राजमार्त्तण्डाख्या भोजवृत्तिनाम्ना प्रसिद्धा। भावगणेशस्य योगवृत्तिः। रामानन्दस्य मणिप्रभा। अनन्त-पण्डितस्य योगचन्द्रिका। सदाशिवेन्द्रसरस्वतीमहाभागस्य योगसुधा-करः। नागोजीभट्टस्य लघुबृहद्वृत्तयश्च। एवं पातञ्जलयोगमाश्रित्य सुविशदं साहित्यमुपलभ्यते।

इत्यनेनापि––वृत्तिकृता श्रीभोजदेवेनापि, पतञ्जलिमुपमानीकृत्य तत्तु-ल्यत्वेनात्मवर्णनं वितन्वता, योगव्याकरणवैद्यप्रणेतुः पतञ्जलेरेकत्वमभिप्रेतम्। बलवदुक्तविवेचनेन, सोऽयं योगव्याकरणवैद्यकप्रणेता पतञ्जलिरेक एवेत्युप-पद्यतेतरां सुतराम्। परन्त्वेतदितरे न सहन्ते। ते व्यवतिष्ठन्ते पातञ्जलसूत्रोपरि व्यासकृतभाष्योपलब्धेः 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः [अष्टा० ४।३।११०] इत्यस्मिन् पाणिनीयसूत्रे पाराशर्यापरपर्यायव्यासशब्दोल्लेखात् पाणिनेर्व्यासस्य प्राचीनत्वं निष्पद्यते। यस्य पतञ्जलेः सूत्राणामुपरि व्यासभाष्यं स पतञ्जलिरपि पाणिनेः प्राचीन इत्यपि व्यक्तीभवति। महाभाष्यरचयिता पतञ्जलिस्तु पाणिने-रर्वाचीनः इति सर्वसम्मतम्। अतो भाष्यकृत्पतञ्जले र्योगसूत्रकर्त्ता पतञ्जलिः सर्व्व ा भिन्न इति स्फुटम्। योगसूत्रकारस्तु खल्वतितरां प्राचीनः महाभाष्यकृत्तु तदपेक्षयाऽर्वाचीनः। अतो द्वयोर्भिन्नत्वं न जात्वेकत्वम्। इति एवमेके पतञ्जलिबहुत्वं अपरे तु तदभिन्नत्वं संसाधयन्ति। तत्त्वन्तु विवेचका एव विभावयन्तु। प्रसिद्धि-परम्परानुरोधेन तु तत्पार्थक्यमेव आकलयामो वयं रोचिष्णु इत्यलमति पल्लवितेन।

## कतमोऽयं पतञ्जलिर्नाम

अत्र भारतभूमिमलङ्कुर्वाणाः पतञ्जलिनामधेया बहवो विद्वांसोऽभूवन्। तेषु कतमोऽयं योगसूत्रकारः पतञ्जलिरिति इदन्तया निर्णेतुं तु दुःशकम्। अत्र बहवो बहुधा प्रतिपादयन्ति। तथापि किञ्चिदिवात्र विविच्यते विद्वन्मनोविनो-दाय। पतञ्जलिप्रणेतृत्वेन प्रसिद्धाः सन्दर्भा अधोऽङ्किताः समुपलभ्यन्ते। तेषां सर्वेषां कर्त्ता एक एव पतञ्जलिरथवा विभिन्नास्ते इति जिज्ञासा सुतरामुज्जृ-म्भतेः––तद्यथा––

(१) योगसूत्रकारः, (२) व्याकरण महाभाष्यप्रणेता,
(३) चरकसंहिता प्रतिसंस्कर्त्ता (४) निदानसूत्रनिर्माता,
(५) परमार्थसूत्रप्रवक्ता, (६) कोषकारः इति।

तत्रकोषकारोऽपि कश्चन पतञ्जलिरासीदिति तु हेमचन्द्राचार्यविरचितात् 'अभिधानचिन्तामणिकोषे संस्मृतात् श्लोकादवगम्यते––

'प्रामाण्यं वासुकेर्व्याडेः व्युत्पत्तिर्धनपालतः।
प्रपञ्चो वाचस्पतिप्रभृतेरिह लक्ष्यताम्॥

अत्र वासुकिपदेन पतञ्जलिरेवाभिलक्षितोऽवगम्यते। एक एव स पतञ्जलि-रेतेषां ग्रन्थानां प्रणेता इत्येके। न हि सर्वशास्त्रावगाहिशेमुषीकस्य भगवतः 'शेष' इत्यपरनामधेयस्य पतञ्जलेः उक्तसर्वशास्त्रप्रणेतृत्वे किमप्यपरिहार्यं बाधक-मुत्पश्यामः। "योगेन चित्तस्य पदेन वाचाम्'––इतिसुप्रसिद्धलोकोक्त्या च तस्य

तत्तच्छास्त्रनिष्णातत्वं सूपपन्नमेव । तत्प्रतीपत्वेनाद्यावधि न काऽपि बलीयसी हृदयङ्गमा वाचोयुक्ति र्बुद्धिपद्धतिमारोहति इत्यलं काकदन्तपरीक्षयेति । विशिष्य तु अत्रानुसन्धित्सवो विद्वांसः एवाविष्करिष्यन्ति किमपि निर्णीतं तत्त्वमित्याशास्यते। इति संक्षेपः।

## तत्कालनिर्णयः

यद्यपि पतञ्जलेः कालनिर्णयोऽपि इदमित्थन्तया वक्तुं न शक्यते। तथाऽपि सोऽतीव प्राचीनः। वैयाकरणपतञ्जलेः कालः प्राक्ख्रीस्तद्वितीयशतकघटितमध्यकाले क्वचिन्निर्धार्यते कालकोविदैः। योगप्रणेता पतञ्जलिस्तु ततो नितरां भिन्नः। इदमप्यत्रावधेयं यद् योगशास्त्रस्यास्य न खलु पतञ्जल्युपज्ञता, हिरण्यगर्भादिभिः प्राक्तनाचार्यैः पुराकालेऽपि तदुपदेशदर्शनात्। स्वयं भगवति वेदेऽपि च तन्मूलस्याम्नानात्— तथा हि—

'युञ्जते मन उत युञ्जते धियो,
विप्रा विप्रस्य बृहतो विपश्चितः।
वि होत्रा दधे वयुनाविदेक इन्मही
देवस्य सवितुः परिष्टुतिः॥ [ऋग्० ५।८१।१]

एवमुपनिषदारण्यकादिष्वपि तच्चर्चार्चनाद् इति प्रदर्शितपूर्वम्।

——०○——

# अथ मीमांसा दर्शनम्

केयं मीमांसा नाम—मीमांसाविषयनिर्देशः—मीमांसासिद्धान्ताः—षट् प्रमाणानि—मीमांसाया आचार्याः—प्रामाण्यवादः—भ्रमज्ञानम्—तत्त्वमीमांसा—मीमांसाप्रयोजनम्—केयं भावना नाम—कर्मणां चातुर्विध्यम्—अपूर्वत्वं नाम किम् ? —मीमांसकानामीश्वरः—मोक्षः—मीमांसासाहित्यम्—मीमांसातत्त्वनिष्कर्षः—तत्सार्थकत्वञ्च ।

मीमांसाशास्त्रमिदं किल धर्मव्याख्यानपरं शास्त्रम् । धर्मश्चाऽत्र वेदविध्यात्मकः क्रियाविशेषः । आह च आचार्यः धर्मं लिलक्षयिषुः—'चोदनालक्षणो धर्मः' (मी० १।१।२) चोदना हि नाम क्रियाप्रवर्त्तकवचनविशेषः । स च वेदविधिरूप एव । उक्तञ्च शबरस्वामिना "चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुम् नान्यत् किञ्चनेन्द्रियम् ।" इति ।

मीमांसकानां नये विधिः श्रुतिविहितक्रियाकलापमेवाभिधत्ते । तदस्मिन् क्रियाकलाप एव विधिलक्षणानां वेदवचनानां प्रधानं तात्पर्यम् । सूत्रितञ्चाचार्यैः

"आम्नायस्य क्रियार्थत्वात्" [मी० १।२।१]

तदेवं तादृशविधिवचनानुष्ठानेनैव जनः निःश्रेयसं लभते । "स्वर्गकामो यजेत" इत्यत्र यजेतेत्यादिविधिविशेषं द्वारीकृत्य यत्तादृशकर्मानुष्ठानं प्रति या प्रेरणा उत्पद्यते सा च तु मीमांसकानां भावनेति[1] पदेन व्यपदिश्यते । सा च भावना द्विविधा, शाब्दी आर्थी चेति भेदात् । तत्र लिङ्लकारजन्या भावना शाब्दी, आख्यातजन्या च आर्थी । तया खलु भावनया प्रेरितः पुरुषः कर्मकलापे प्रवर्त्तते, प्रवर्त्तमानश्च यथाश्रद्धं फलमश्नुते निःश्रेयसादिकम् । यथा, पदपदार्थज्ञाने व्याकरणस्य प्राधान्यं, प्रामाण्यावबोधे च न्यायस्य, तद्वद् विधिगम्यज्ञाने मीमांसायाः प्राधान्यम् । तथा चोक्तं शाबरे "एवं वेदवाक्यान्येव एभिः व्याख्यायन्ते मीमांसासूत्रैरित्यर्थः ।

तदेतन्मीमांसा[2]दर्शनं किल भगवज्जैमिनिमुनिपादैः प्रणीतं द्वादशभि-

---

१. भवितुर्भावनानुकूलः भावकव्यापारविशेषः । [न्यायमीमांसाप्रकाशः]

२. मीमांसा जिज्ञासेत्यर्थः । 'मीमांसते' इत्यादयः प्रयोगा बहुत्र प्राचीनसाहित्येऽपि उपलभ्यन्ते । यथा 'उत्सृज्यां नोत्सृज्यामिति मीमांसन्ते ब्रह्मवादिनः ।' [तैतिरीय संहितायां ७।५।७।१] । 'ब्राह्मणं पात्रे न मीमांसन्ते' इत्यादि [ताण्डच ब्राह्मणे [६।५।९] । 'उदिते होतव्यमनुदिते होतव्यमिति मीमांसन्ते ।" [कौषीतिकीब्राह्मणे २।९] इत्येवमादयः ।

रध्यायैः प्रणिबद्धं शास्त्रम् । तत्र प्रत्यध्यायञ्च चत्वारः पादा अनुस्यूताः, तृतीयषष्ठदशतमाध्यायवर्जम् । तदेषु अष्ट पादा अध्यायान्तरापवादरूपेण गुम्फिताः । एवं तत्र सर्वे सम्भूय षष्टिसंख्याकाः पादा भवन्ति । पुनश्च तत्र प्रतिपादे कतिपयानि अधिकरणानि[1] समुल्लसन्ति तानि सर्वाणि सम्मिलितानि प्रायशः सहस्रसम्मितानि भवन्ति । मीमांसासाधनत्वादिदं मीमांसाशास्त्रमभिधीयते । 'मान्-बध्-दान्-शान्भ्यो दीर्घश्चाभ्यासस्य' इति सूत्रे 'मानेर्जिज्ञासायाम्'मिति वार्त्तिकादस्य शब्दस्य निष्पत्तिः । मीमांसेयं पूर्वमीमांसेति, कर्ममीमांसेति पदेनाऽप्याख्यायते । वेदान्तापरनामधेयाया उत्तरमीमांसायाः पूर्वभवत्वात् पूर्वमीमांसा, कर्मकाण्डविषयविशेषप्रतिपादनाच्च कर्ममीमांसेत्यपि परिभाष्यते ।

## केयं मीमांसा नाम

क्वचिच्च न्यायकणिका-न्यायमाला-विस्तरादिमीमांसाविषयकग्रन्थेषु बहुशो मीमांसेति पदं न्यायपदेनापि व्यवहृतं सन्दृश्यते । मीमांसा हि नाम कर्मकाण्डप्रतिपादकः श्रुतीनां मिथो विरोधपरिहारकारको ग्रन्थः । यत्र क्वचित् कर्मकाण्डपरे श्रुतिप्रतिपादितेऽर्थे विरोधोऽवभासते, तं शास्त्रमिदं सुतरां परिहरतितराम् तत्तत्पूर्वपक्षान् उत्तरत्वेन, युक्तिप्रयुक्तिपुरस्सरं निरस्य तास्ता आशङ्का निराकृत्य परिष्कृतार्थं समर्थयति च ।

तद्यथा—यागादिषु मनुष्यस्यैवाधिकाराधिकरणे[1] पूर्वपक्षत्वेन सूत्रयति :—

'फलार्थत्वात्कर्मणः शास्त्रं सर्वाधिकारं स्यात् ।'

इदमामनन्ति दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेत इत्येवमादि । तत्र संदेहः—किं यावत् किञ्चित्सत्त्वं तत्सर्वमधिकृत्य एतदुच्यते उत समर्थमधिकृत्य । किं प्राप्तं सर्वाधिकारः । अविशेषात् ननु वृक्षादयो न किञ्चित्कामयन्ते । कथं तेषामधिकारः । उच्यते । माभूदचेतनानामधिकारः तिर्यञ्चमधिकृत्य यजेत इति ब्रूयात् ननु तिर्यञ्चोऽपि न किञ्चित्फलं कामयन्ते । न इति ब्रूमः । कामयन्ते सुखम् । एवं हि दृश्यते घर्मोपतप्ताश्छायामुपसर्पन्ति शीतेन पीडिता आतपम् । आह । ननु तिर्यञ्च आसन्नं फलं चेतयन्ते न कालान्तरफलं प्रार्थयन्ते । कालान्तरफलानि च वैदिकानि कर्माणि । इत्यादिकं वचनप्रतिवचनाभ्यां संस्कृत्योपसंहृतं पूर्वपक्षत्वेन यद् मनुष्याणामपि शक्नुवतामधिकार इति । ततः सिद्धान्तत्वेन सूत्रितम् :—

'कर्त्तुर्वा विधिसंयोगाद्विधिः कार्त्स्न्येन गम्यते । [मीमांसा]

१. अधिकरणपदञ्चात्र पारिभाषिकम् तथा चोक्तम्—
विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः ।
निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् ॥

यागादिषु न तिर्यगादीनामधिकारः। कर्माणि निर्वर्त्तयितुं शक्तानामेवाधिकारः। न तिर्यञ्चः शक्नुवन्ति कर्माणि निर्वर्तयितुम् । इत्यादिकं सतर्कवितर्कमुपपाद्यान्ते सिद्धान्तयन्ति तस्मात् मनुष्याणामेव शक्नुवतामधिकार इति।

अपिच, यागादिषु स्त्रीपुरुषयोरधिकाराधिकरणे :—

लिङ्गविशेषात्पुरुषस्यैव तत्राधिकार इति पूर्वपक्षीकृत्य सूत्रयति :—

'लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशयानः"। [मी० ६]

दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादि समाम्नातम्। अत्र पुंलिङ्गविशेषणादवगम्यते यद्यागेषु पुंसामेवाधिकारो न स्त्रीणामित्यादि शङ्कानिरसनपूर्वकमन्ते सिद्धान्तयति :—

जातिं तु बादरायणोऽविशेषात् ।
तस्मात् स्त्र्यपि प्रतीयते जात्यर्थस्याऽविशिष्टत्वात् ॥
[मी०......]

अत्र 'तु' शब्दः पक्षं व्यावर्त्तयति। नैतदस्ति पुंसोऽधिकारः। जातिं तु बादरायणोऽधिकृतां मन्यते स्म। आह। किमयं स्वर्गकामः इति जातिशब्दः समधिगतः। नेत्याह। कथं तर्हि। यौगिकः स्वर्गेच्छायोगेन वर्त्तते। केन तर्हि शब्देन जातिरुक्ता या अधिकृता गम्यते नैव च वयं ब्रूमो जातिवचनः इह शब्दोऽधिकारकः इति। किं तर्हि? स्वर्गकामशब्देनोभावपि स्त्रीपुंसावधिक्रियेते इति। अतो न विवक्षितं पुंल्लिङ्गमिति। कुतः। अविशेषात्। नहि शक्नोति एषा विभक्तिः स्वर्गकामलिङ्गेन विशेष्टुम्। कथं। लक्षणत्वेन श्रवणात्। स्वर्गं कामो यस्य तमेव लक्षयति शब्दः। तेन लक्षणेनाधिकृतो यजेतेति शब्देनोच्यते। तत्र लक्षणमविशिष्टं स्त्रियां पुंसि च। तस्माच्छब्देनोभावपि स्त्रीपुंसावधिकृतौ गम्येते। तत्र केनाधिकारः स्त्रिया निवर्त्यते। विभक्त्या इति चेत्। तन्न। कस्मात्। पुंवचनात् स्त्रीनिवृत्तावशक्तिः पुंसो विभक्त्या पुनर्वचनमनर्थकमिति चेन्न। आनर्थक्येऽपि स्त्रीनिवृत्तेरभावः। परिसंख्यायां[1] स्वार्थहानिः। परार्थकल्पना प्राप्तबाधश्च न चानर्थक्यम् निर्देशार्थत्वात्। तस्मात् स्त्र्यपि प्रतीयते जात्यर्थस्याऽविशिष्टत्वात्, इत्येवमादिकम्।

---

१. परिसंख्या हि नाम तत्र चान्यत्र च प्राप्तौ नियमः। पञ्च पञ्चनखा भक्ष्या इति रागतः पञ्चनखानामितरेषाञ्च भक्षणे प्राप्ते पञ्चनखा एवेति इतरनिवृत्तिर्यथा बोध्यते तथाऽत्र न, परिसंख्यायां मूलोक्तदोषत्रयापातप्रसङ्गात् इति भावः।

## मीमांसाया विषयनिर्देशः

दर्शनमिदं द्वादशाध्यायोपनतमिति प्राङ्निर्दिष्टम्। तदेषु द्वादशाध्यायेषु प्रथमेऽध्याये विध्यादेः प्रामाण्यं निरूपितम् धर्मलक्षणभेदश्च। द्वितीये तद्विधेय-कर्मभेदो निरूपितः। तृतीये विहितानां यागादिकर्मणां शेषशेषिभावः। चतुर्थे क्रतुप्रयुक्तानुष्ठेयानुष्ठेयानां पुरुषार्थप्रयुक्तानुष्ठेयानां च पदार्थानां परिमाणं प्रप-ञ्चितम्। पञ्चमे अनुष्ठेयपदार्थानामनुष्ठानक्रमः प्रदर्शितः। षष्ठे नु विहितकर्म-फलभोक्तृस्वरूपाधिकारप्रतिपादनम्। सप्तमे प्रकृतावुपदिष्टानामङ्गानां विकृतौ सामान्यातिदेशो निरूपितः। अष्टमे आग्नेयोऽष्टकपाल इत्यादि प्रकृत्यङ्गानां, सौर्यं चरुं निर्वपेदेत्यादिविकृतौ सप्तदश द्रव्यदेवतादिद्वारेण विशेषातिदेशः। नवमे प्रकृतावुपदिष्टानां मन्त्रसामसंस्कारकर्मणां विकृतावतिदेशप्राप्तानां प्रकृति-विकृत्योरग्निसूर्यादिदेवतादिभेदे प्रकृतिविकृतिगतं देवतादिवाचकं पदं विहाय विकृतौ देवतादिवाचकस्य पदस्याध्याहार ऊहो निदर्शितः। यथाऽग्नये जुष्टमिति-मन्त्रे, प्रकृत्युपदिष्टे विकृतावतिदेशे प्राप्तेऽग्निपदपरित्यागेन सूर्यपदाध्याहारः। यथा च "गिरा गिरा दृक्षसे" इत्यत्र साम्नि गिरा पदस्य परित्यागेनेरापदस्याध्याहारः साम्नामूहः। व्रीह्यादिद्रव्यान्तरसम्बन्धिनश्चावघातादेर्नीवारादिद्रव्याऽन्तरसम्बन्धः संस्कारकर्मणामूहश्च। दशमे विकृतौ चोदकप्राप्तानां प्राकृताङ्गानां प्रकृताङ्गनाञ्च प्रकृतौ सावकाशानां विकृतौ ह्यु पदिष्टविशेषाऽङ्गादीनां बाधो निरूपितः। यथा—प्रकृतेः सकाशाद्विकृतावतिदिष्टानां बर्हिषां शरमयं बर्हिरित्युपदिष्टेन शरमयबर्हिषा विकृतौ बाधः। एकादशे चानेकाङ्गिविधिप्रयुक्तानामङ्गानां सकृदनुष्ठानात् सर्वा-ऽङ्गिनामुपकारसाम्यं निरूपितम्। यथाः—'आग्नेयोऽष्टाकपालः' उपांशुयाजमन्तरा यजत्यग्निषोमीयमेकादशकपालमित्यादि पौर्णमासादिकर्मप्रयुक्तानां प्रयाजाद्यङ्गानां सकृदनुष्ठानात् [सर्वा]ङ्गयुपकारः।

द्वादशे च पुनरेकाङ्गिप्रयुक्ताङ्गानुष्ठानस्य तत्प्रयोजकसामर्थ्यरहितेऽङ्गच-न्तरेऽप्युपकार इत्यादि प्रपञ्चितम्।

## मीमांसाया इयत्ता

द्वादशभिरध्यायैः सन्दृब्धत्वादियं द्वादशलक्षणीति नाम्नाऽपि प्रसेषिद्ध्यते। परन्तु कालान्तरे पुनरन्येऽपि चत्वारोऽध्याया ये संकर्षणकाण्डनाम्ना देवताकाण्ड-नाम्ना वा प्रख्याताः अत्र संयोजिताः। तत्सन्निवेशादेव षोडशाध्यायसंवलिता मीमांसेति ख्यातिं गता सा। परन्तु अन्ये केचन आलोचका अत्र विप्रतिपद्यन्ते, ते अध्यायानिमान् परस्तात्सन्निविष्टान् जैमिनिविरचितान्नाङ्गीकुर्वन्ति। मीमांसायां सूत्राणि २६४४ संख्याकानि, अधिकरणानि ९०९ मितानि। अस्यैकस्यैव दर्शनस्य

सूत्रसंख्या, सर्वेतरदर्शनसूत्रसंख्यातोऽत्यधिकत्वात् बृहत्तमत्वमस्य दर्शनस्य ख्यापयति।

## मीमांसासिद्धान्ताः

आपातत ईश्वराऽनङ्गीकारः। देवता मन्त्रमयी न विग्रहवती। क्रियापरः सर्वो वेदः। वटबीजवत्संसारोऽनादिः। अतीन्द्रियसुखाभावः। स्वर्गः सुखप्राप्तिरेव। कर्मणा मोक्षः। क्रियान्विते शब्दशक्तिः। अख्यातिवादः। सर्वं ज्ञानं प्रमैव। स्थूल-शरीराद् भिन्न आत्मा परमार्थनित्यः। धर्मस्य परमेश्वरबुद्धया निष्कामतया आच-रणे अन्तःकरणशुद्धया क्रमेण ब्रह्मात्मैक्यज्ञानेन कैवल्यं मुक्तिरिति जैमिनिगुरुचर-णानां महर्षिव्यासमहाभागानाञ्चाभिमतम्। फलदातृत्वञ्चापूर्वस्येति। तदेतत् सिद्धान्तजातं जैमिनिमहर्षिणा, मीमांसाशास्त्रे सूत्रितम् भाष्यकारेण शबरस्वामिना चाऽऽभाष्य प्रकाशितम्, वार्त्तिककारेण कुमारिलभट्टमहोदयेन उक्तानुक्तदुरुक्त-विवेचनपुरस्सरं सोदाहरणमुपपादितम्। न तद्ग्रन्थभूयस्त्वभियाऽत्र प्रपञ्च्यते।

मीमांसानयेन अज्ञाततत्त्वार्थज्ञानं हि प्रमा[1] उच्यते प्रमाकरणञ्च प्रमाणम्। तल्लक्षणन्तु 'करणदोषबाधकज्ञानरहितमगृहीतसग्राहि ज्ञानं' प्रमाणम्। (शा०दी०)

भाट्टास्तु वेदान्तवत् षडेव प्रमाणानि स्वीकुर्वन्ति, प्रत्यक्षानुमानोपमान-शब्दार्थापत्त्यनुपलब्धय इति। परं प्रभाकरोऽनुपलब्धिं नाभिनन्दति।

प्रत्यक्षानुमाने तु न्यायवन्मीमांसाप्यङ्गीकरोति परमन्यत्र ततो भिद्यते। शास्त्रमिदं वास्तववादपोषकम्। एतन्नये, जगदिदं वास्तविकं न खल्वाभासमात्रम्। न्यायाभिमतान् षड्विधान् सन्निकर्षांस्तु मीमांसका न सहन्ते। संयुक्तं संयुक्त-तादात्म्यरूपञ्चेति सन्निकर्षद्वयमेव ते मन्यन्ते। भाट्टास्तु समवायं प्रति विप्रति-पद्यन्ते। तेषां नये जातिगुणकर्मणां द्रव्यैः सह तादात्म्यसम्बन्धः। अतस्तेषां घटत्वस्य, घटरूपस्य, घटकर्मणश्च प्रत्ययं प्रति संयुक्ततादात्म्यसम्बन्धः सन्निकर्षः। प्राभाकरास्तु पुनः संयोगः संयुक्तसमवायः समवाय इति सन्निकर्षत्रयमेव व्यवस्थापयन्ति। नैयायिकानामनुमानं प्रक्रियातः भाट्टानामनुमानतः किञ्चिद् भिद्यते, विशिष्य तु हेत्वाभासे। पञ्चावयवस्थाने मीमांसकाः प्रतिज्ञा हेतुर्दृष्टान्त इत्यवयवत्रयमेव प्रशंसन्ति।

## उपमानम्

सादृश्यज्ञानं हि उपमितित्वेनोन्नीयते मीमांसकानाम्। उपमितिर्हि प्रत्यक्षतो

---

१. अज्ञातपदं स्मृत्यनुवादयोर्व्यवच्छेदार्थम्। तयोर्ज्ञातपदार्थस्य विषयता-सत्त्वात् संशयभ्रमौ तु न प्रमान्तर्गतौ।

भिद्यते सादृश्यवतोऽर्थस्य तदानीं दृष्टिगोचराभावात् । नैवं स्मृत्यन्तर्गताऽप्युपमितिः सम्भवति । तादृशार्थावबोधसमकालावच्छेदेन वस्त्वन्तरस्य मानाऽभावात् । व्याप्तिदूषणतया चेयमुपमितिः अनुमानशब्दप्रमाणयोरपि नान्तःपतति । अतः स्वतन्त्रप्रमाणत्वेनैवोपमितिरभिमता मीमांसकानाम् । उपमानं हि सादृश्य-ज्ञानम् असन्निकृष्टेऽर्थे बुद्धिमुत्पादयति यथा गवयदर्शनं गोः स्मरणस्य ।

## शब्दप्रमाणम्

शाब्दी प्रमाऽपि मीमांसकानां विशिष्टपदमधिकरोति । शब्दप्रमाणं हि द्विविधं--पौरुषेयमपौरुषेयञ्च । आप्तपुरुषप्रयुक्तमेव पौरुषेयं प्रामाण्यकोटिमधिरोहति नानाप्तप्रयुक्तम् । अपौरुषेयन्तु पुनः अपुरुषेण परमात्मनोक्तत्वात् वेद एव । प्राधान्येन धर्म[1]प्रतिपादनमेव मीमांसादर्शनस्योद्देश्यम् । धर्मस्वरूपनिरूपणाय च चरमप्रमाणभूतो वेद एव । अतो मुख्यत्वेन धर्मतत्त्वनिर्णयार्थं वेदमाधारीकृत्यैव मीमांसा प्रवर्त्तते । अपौरुषेयत्वादेव वेदस्य नित्यता । जैमिनिनयेन शब्दो नित्यः । शब्दनित्यत्वं हि खलु वेदनित्यत्वम् तच्चैतत् प्रमुखप्रामाण्यमवगाहते । तथा चाह महर्षिः--

'नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ॥ [१।१।१८]

दर्शनपदमुच्चारणपरं परार्थं, परमर्थं प्रत्याययितुम् उच्चरितमात्रे हि विनष्टे शब्दे नान्योऽन्यमर्थं प्रत्याययितुं शक्नुयात् । स्वाभिप्रायं परत्र प्रत्याययितुमेव शब्दः प्रवर्त्तते । परत्रार्थप्रत्यायनार्थमेव शब्दप्रवृत्तिरितिभावः । स च नित्यत्वे सत्येव शब्दस्य सम्भवति नाऽनित्यत्वे । तस्मात् दर्शनस्य परार्थत्वान्नित्यः शब्द इति सुवचम् । न च शब्दः एव नित्यः प्रत्युत तदर्थोऽपि नित्यः तयोः सम्बन्धश्चापि नित्य एव । तथा च सूत्रयति आचार्यः--

'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः । [मीमांसा १।१।५]

औत्पत्तिको नित्यः । तदिदं शब्दार्थसम्बन्धस्य नित्यत्वमपौरुषेयवाक्येषु एव घटते न पुनः पौरुषेयेषु । न केवलमिदनेव अपितु मन्त्रगतपदपाठक्रमोऽपि नियतानुपूर्वीकः । मीमांसकानां[2] मते 'अग्निर्मूर्द्धा दिवः ककुत्पतिः' [ऋ० ८।४४।१६] इत्यत्रोक्तक्रमेण वाक्यं पठितव्यम् । मन्त्रगतानुपूर्वीकपाठक्रमोच्चारणमेवापौरुषे-

---

१. धर्मो धारणात् व्युत्पद्यमानो हि धर्मशब्दः जगद्धारणकारणत्वमर्थं समर्पयति, 'धर्मेण धार्यते प्रजा' इति स्मरणात् ।

२. अर्थप्रत्यायनाविशेषेऽपि नियतानुपूर्व्येव यथा इष्टार्थसमर्पणक्षमा न तथा व्युत्क्रमपाठ इति मीमांसकानां हृदयम् ।

यत्वात् साफल्याय कल्पते न पुनः भिन्नक्रमोच्चारणम्। 'मूर्द्धाग्नि' रित्येवं व्युत्क्रमपाठो यद्यप्यर्थप्रत्यायनं करोति न तु मन्त्रोद्दिष्टादृष्टं प्रयोजनं साधयति वेदत्वाच्च्यवमानत्वापत्तेः। तस्मात् नियतक्रम एव साधीयान्। सूत्रितञ्चात्र भवति—

"अविशिष्टस्तु वाक्यार्थः।" [जै० १।२।४०]

तु शब्दोऽत्र मन्त्राणामदृष्टोच्चारणव्यवच्छेदकः। क्रियाकारकसम्बन्धेन प्रतीयमाने वाक्यार्थे लोकवेदयोरविशेषः। तथा सति लोकवदर्थप्रत्यायनार्थमेव वेदेऽपि वाक्योच्चारणं समानमेव द्रष्टव्यम्। तथा सति मन्त्रप्रकाशितमेवार्थमनुष्ठातुं प्रभवति जनः नाप्रकाशितमर्थम्। तस्मात् मन्त्रोच्चारणस्यार्थप्रत्यायनं हि प्रयोजनम्। अतः मीमांसकानां क्रमोऽपि नित्य एव। पौरुषेये वाक्ये तु नैवं सम्भवति। अतः अपौरुषेयः शब्दराशिर्वेद एव नित्यत्वेनोन्नेयः नाऽन्य इति सिद्धान्तः। उक्तञ्च संग्रहे:—

"पौरुषेयं न वा वेदवाक्यं स्यात्पौरुषेयता।
काठकादिसमाख्यानाद् वाक्यत्वाच्चान्यवाक्यवत्॥
समाख्यानां प्रवचनाद् वाक्यत्वन्तु पराहतम्।
तत्र कर्त्रनुपलम्भेन स्यात्ततोऽपौरुषेयता॥
[जै० न्या० मा० १।२।१८]

श्रुतिरपि चात्र प्रभवति—

'वाचा विरूपनित्यया।' [ऋ० ८।७५।६]

न च भगवता बादरायणाचार्येण वेदस्य "शास्त्रयोनित्वादिति" [वे० १।१।३] ब्रह्मकार्यत्वं सूत्रयता पौरुषेयत्वमुपपादितम्, इति वाच्यम्। मनुष्यकर्तृत्वानुपलम्भात् न हि वेदानां मनुष्यकर्तृता क्वचिदुपलभ्यते। तादृशमपौरुषेयत्वमभिप्रेत्यैव बादरायणेन देवताधिकरणे 'अत एव च नित्यत्वम्'। [वे० सू० १।२।२९] इति नित्यत्वं सूत्रितम्। ब्रह्मकर्मत्वहेतोरेव वेदस्य नित्यत्वमिति समभिप्रेत्यैव तथोक्तमिति भावः।

## अर्थापत्तिः

अर्थादापद्यते या साऽर्थापत्तिः। दृष्टः श्रुतोऽन्यथा नोपपद्यते इत्यर्थकल्पना वाऽर्थापत्तिः। यथा जीवति विष्णुमित्रे गृहाभावदर्शनेन दृष्ट्यगोचरस्य बहिर्भावस्य कल्पना।

## अनुपलब्धिः

अनुपलब्धिरभावः । नास्तिरूपः अभावोऽपि प्रमाणत्वेन संगृहीतः । तदिमानि षट्[1] प्रमाणानि मीमांसकानामभिमतानीति दिक् ।

## मीमांसायाः प्रमुखा आचार्याः

जैमिनिः—(विक्रमपूर्व ३०० शतके) मीमांसादर्शनसूत्रकारैर्भगवज्जैमिनिमुनिपादैः आत्रेय, आश्मरथ्य, कार्ष्णाजिनि, बादरि, ऐतिशायन, कामुकायन, लाबुकायन, आलेखनेत्यष्टावन्ये मीमांसाचार्याः संस्मृता । परमेतेषां कृतिः सम्प्रति नोपलभ्यते । एताननतिरिच्य काशकृत्स्ननाम्नैकोऽन्योऽप्याचार्यः आसीत् । यस्य नामनिर्देशः पतञ्जलिना स्वकीयमहाभाष्ये कृतः । 'काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी । काशकृत्स्नीमधीते काशकृत्स्ना ब्राह्मणी ।' इति [महा० ४।१।१४]

उपवर्षाचार्यः—मीमांसादर्शनस्य प्राचीनतमो वृत्तिकारः तत्रभवान् उपवर्षाचार्यः । मीमांसायाः प्रसिद्धभाष्यकारेण श्रीशबरस्वामिनाऽपि [१।१।१५] मिते सूत्रभाष्येऽस्य नामोदलेखि । एवं भगवता शङ्कराचार्येणापि शारीरिकभाष्ये—[३।३।५३]ऽप्यसौ संस्मृतः । श्रूयते किल यदनेन पूर्वोत्तरोभययोर्मीमांसाशास्त्रयोर्वृत्तिग्रन्थाः सम्पादिताः । अस्याचार्यस्य समयः खीस्तपूर्वशतमिते वर्षे विभाव्यते ।

भवदासः—अपरैका वृत्तिर्भवदासाचार्येणापि लिखिता यस्य नामाङ्कनं कुमारिलभट्टेन स्वकीये श्लोकवार्त्तिके, प्रतिज्ञासूत्रस्य त्रिषष्टितमे श्लोके संस्मृतमुपलभ्यते । भवदासेन मीमांसाया षोडशाध्यायोपरि वृत्तिरारचितेति पञ्चहृदयलेखैरवगच्छामः । परन्त्वस्य वृत्तिरद्यत्वे नोपलभ्यते ।

शबरस्वामी—शबरस्वामिना मीमांसाया भाष्यमतीव प्रामाणिकं पाण्डित्यपूर्णञ्च व्यरचि । अस्य मूलङ्कषमालोचनपुरस्सरं भाष्यं पतञ्जलिकृतमहाभाष्यस्य शाङ्करभाष्यस्य च तुलामधिरोहति । शबरस्वामिनोऽस्य पूर्वम् 'आदित्यसेन' इति नामासीत् । परमनन्तरं जैनानामुत्पीडनादात्मानं रिरक्षिषुरयं अरण्यचारी भूत्वा शबरस्वामीति नामभाक् सञ्जात इत्यनुश्रूयते ।

भर्तृमित्रेणाऽपि 'तत्वशुद्धि'नाम्नी वृत्तिर्लिखिता । परन्तु कुमारिलभट्टेन नेयं वृत्तिर्मीमांसासिद्धान्तसंवादिनीति कृत्वा निराकृता । तथा च भट्टः प्राह :—

---

१. इदमत्रावसेयम्, 'प्रत्यक्षानुमानशब्दा' इति प्रमाणत्रयं जैमिनिमतेन, उपमानमर्थापत्तिः इति प्रमाणद्वयमधिकं प्रभाकरमतेन, कुमारिलेन अनुपलब्धिरपि स्वीकृता, ऐतिह्यन्तु न मीमांसकानामादरास्पदम् तस्य प्रामाण्ये विनिगमनविरहादिति विवेकः ।

"प्रायेणैव मीमांसा लोके लोकायतीकृता ।
तमास्तिकपथे कर्त्तुमयं यत्नः कृतो मया ॥ [श्लोकवार्त्तिक १०]

एवं च मीमांसा हि भर्तृमित्रादिभिरलोकायतैरेव लोकायतीकृता इति न्यायरत्नाकरे ।

कुमारिलभट्टः—मीमांसादर्शनप्रसरे कुमारिलभट्टस्य स्थानमतीव विशिष्टं महत्त्वपूर्णञ्च । कुमारिलभट्टैस्तच्छिष्यप्रवरैश्च प्रामाणिकान् व्याख्याग्रन्थान् विलिख्य मीमांसाराद्धान्ता बौद्धानां तर्ककर्कशनिर्स्त्रिशैरतिपाटवेन संरक्षिताः । एवं सिद्धान्तान् सुबोधवृत्तिभिराभूष्य लोकप्रियानकार्षुः । प्रकाण्डपाण्डित्ये हि कुमारिलभट्टोऽयमात्मतुल्यतां नामन्त्रयते । शङ्कराचार्यसहयोगिनाऽमुना बौद्धान् पराजित्य वैदिकसिद्धान्ता नितरां गोपायिताः । अनेन महामेधाविना शाबरभाष्यमुद्दिश्य त्रयो ग्रन्थाः रचिताः, ये मीमांसाया आधारस्तम्भा इवाद्रियन्ते । तत्र मीमांसायाः प्रथमपादस्य व्याख्यानरूपः कारिकाबद्ध एको विपुलकायः श्लोकवार्त्तिकनामा, द्वितीयो गद्यमयः प्रथमाध्यायस्य द्वितीयपादादारभ्य तृतीयाध्यायपर्यन्तस्य व्याख्यानरूपस्तन्त्रवार्त्तिकः, अन्तिमस्तृतीयो ग्रन्थोऽन्तिमनवाध्यायस्य टिप्पणीरूपा टुपटीकाख्या व्याख्या । पाण्डित्यप्रकर्षेण तन्त्रवार्तिकोऽस्य प्रचण्डो ग्रन्थः यत्र बौद्धसिद्धान्तानां विशिष्य तु दिङ्नागस्य प्रमाणसमुच्चयस्य प्रखरा समीक्षा कृता । मीमांसादर्शनस्य मुख्यतमाः सिद्धान्ताश्चातिवैदुष्यपाटवेन विशदीकृताः । अन्यावपि बृहट्टीका-मध्यमटीकानामकौ बृहद्ग्रन्थौ विरचिताविति श्रूयते परन्तु नेमौ लभ्येते अधुनेति विषादस्थानम् ।

कुमारिलभट्टोऽयं जन्मना द्रविडदेशमलमकार्षीत् । समयश्चास्य खृस्ताब्द्या विंशत्युत्तरषष्ठशतकादारभ्य सप्तशतकपर्यन्त- (६२०–७००) सम्मितः । मीमांसासम्प्रदाये समभिहितानां भट्ट-गुरु-मुरारि-मतानां मध्ये भट्टमतस्यादिप्रवर्त्तकोऽयं मीमांसाचार्यो निरतिशयतया लब्धादरः परमप्रतिष्ठो मीमांसकमूर्द्धन्यत्वेनाद्रियते ।

भट्टमताचार्येषु 'पार्थसारथि मिश्रः, माधवाचार्यः, खण्डदेवमिश्रश्च प्रधाना आसन् । तत्र पार्थसारथि मिश्रः द्वादशशतकभवो (१२ शत०) मिथिलानिवासी प्रकाण्डपण्डितश्च । अनेन टुपटीकाया व्याख्यारूपेण 'तर्करत्नम्', श्लोकवार्त्तिकस्य न्यायरत्नाकराख्या च व्याख्या व्यरचि । अस्य मौलिको ग्रन्थः 'शास्त्रदीपिका' भट्टमतस्य प्रामाणिकः सन्दर्भः ।

माधवाचार्यश्च विजयनगरसाम्राज्यस्य मुख्यसचिवः सायणाचार्यस्य च ज्येष्ठो भ्राता । अस्य विख्याता कृतिः 'न्यायमालाविस्तरा'ख्या मीमांसासूत्रा-

धिकरणानां विशदा व्याख्या । अस्य पाण्डित्यप्रकर्षः सर्वोत्कर्षत्वेन वरीवर्त्ति । वैदिकधुरन्धरोऽसौ पण्डितमण्डलाखण्डल इव विराजते स्म ।

खण्डदेवश्च पुनः वैक्रमाष्टादशशतमाब्द्यां काशीविद्वन्मण्डलस्रजो मध्यम-मणिरिव विलसति । अधिकरणप्रस्थानमुद्दिश्य विरचिताऽस्य भाट्टदीपिका भाट्ट-सिद्धान्तानां वस्तुतः दीपिकेव सिद्धा । अस्य गुरुदेवो विश्वेश्वरभट्टो गंगा-भट्टनाम्नाऽपि यः प्रसिद्धः, येन च छत्रपतिशिवाजीमहाभागस्य राज्याभिषेकः निर्वर्त्तितः महता सम्भारेण । एतद्विरचिता 'भाट्टचिन्तामणिः' मीमांसा-सूत्राणां सरला व्याख्या । अस्य समकालीनेन अप्पयदीक्षितमहाभागेन 'विधि-रसायनम्', उपक्रमपराक्रमादिग्रन्थान् विरच्य मीमांसासिद्धान्तानां श्रीवृद्धिः सम्पादिता । एतदतिरिक्तं आपोदेवस्य 'मीमांसान्यायप्रकाशो'ऽपि अतीव लोक-प्रियोऽभवत् । यस्य भट्टालङ्कारनाम्नी व्याख्याऽस्य तनूजेन अनन्तदेवेन कृता । स एष अनन्तदेवः खण्डदेवस्य समकालीन एवासीत् । गुरुमताचार्येषु सर्वप्रधानः प्रभाकराचार्यो गुरुमतस्याद्यप्रवर्त्तकः । स खलु कुमारिलभट्टस्य च शिष्य इति अनुश्रूयते । कुमारिलेनास्मै 'गुरु'रित्युपाधिः पुरस्कृतः अस्याऽलौकिकप्रतिभा-शालित्वात् । तदितरे न सहन्ते । अनेन शाबर-प्रतिपादिता राद्धान्ताः स्वबृहती-टीकाख्यव्याख्यायां सविस्तरं विशदीकृताः । प्रभाकरस्य स्थितिकालस्तु वैक्रम-सप्तमशतकमवधार्यते ।

आचार्यशालिनाथेन गुरुग्रन्थेषु प्रामाणिकीं व्याख्यां विलिख्य तत्सि-द्धान्तानाम् अतितरां प्रचारः कृतः । अनेन बृहती ग्रन्थे 'ऋजुमालिका', लघ्वीसन्दर्भे 'दीपशिखा'ऽख्या व्याख्या समुद्ग्रथिता परन्तु अस्य श्रेष्ठो ग्रन्थस्तु 'प्रकरणपञ्चिका' । उदयनाचार्यस्य पूर्ववर्त्तिन इम इति विभाव्यते । तृतीयसम्प्रदायस्य प्रवर्त्तकाः श्रीमन्तो मुरारिमिश्राः । इमे मध्ययुगस्य प्रसिद्धा मीमांसका आसन् । भट्ट-गुरु-सम्मतमतादेषां भिन्न एव सिद्धान्त आसीत् । 'मुरारेस्तृतीयः पन्थाः' इति लोकोक्ति-रपि एतदुद्दिश्यैव प्रवृत्ता । एषां समयो विक्रमीयद्वादशशतकमवधार्यते ।

तदेषां मीमांसाधुरन्धराणामविश्रान्तश्रमेण बुद्धिवैभवेन च मीमांसा-साहित्यं नितरां समृद्धं संवृत्तम् ।

## प्रामाण्यवादः

प्रामाण्यवादो हि नाम मीमांसामूर्धाभिषिक्तः सिद्धान्तः । एषां नयेन स्वतः प्रमाणमेव प्रामाण्यकोटिमारोहति न परतःप्रमाणम्, तस्य त्वप्रामाण्यमेव तेषाम् । तदत्र तेषां परतः प्रामाण्यवादिभिर्नैयायिकैः सह प्रवर्त्तते कोऽपि बलवान् संघर्षः ।

इन्द्रियार्थसन्निकर्षोत्पन्नं घटोऽयं पटोऽयमित्याकारकं व्यवसायात्मकं ज्ञानमु-

त्पद्यते। ततो घटमहं जानामि पटमहं ज नामीत्यनुव्यवसायात्मनो ज्ञास्नयोत्पत्तिः। तदनन्तरं सत्यां सन्देहादिनिवृत्तौ चरितार्थायाञ्च प्रवृत्तौ तज्ज्ञानं प्रामाणिकत्वमुपैति। अतः अनुमितिं द्वारीकृत्यैव तत्प्रामाण्योपपत्त्या, तस्य परतः प्रामाण्यम् नैय्यायिकानाम्। परन्तु मीमांसकास्तु स्वतःप्रामाण्यवादमेवाऽभिनन्दन्ति। तमिमं स्वतःप्रामाण्यवादविषयमालम्ब्य मीमांसका अपि मिथो भिद्यन्ते। तत्र प्राभाकराणां ज्ञानस्य स्वतःप्रकाशत्वम्। यथा हि दीपप्रकाशस्तावद्घटपटादीन् पदार्थान् ततश्चात्मानं, तदनन्तरञ्च भूयो तैलवर्त्तिकादीन् प्रकाशयति तद्वज्ज्ञानमपि प्राग् इन्द्रियसन्निहितं पदार्थजातं, तत स्वस्वरूपं तदननन्तरं ज्ञानाधिकरणमात्मानमभिव्यञ्जयति। इदमत्राववधेयम्। प्रत्यक्षे हि तावत्पदार्थज्ञानं, ततो ज्ञानस्वरूपज्ञानं, तदनन्तरं आत्मनोऽभिव्यक्तिरिति। तदिदं प्रत्यक्षं त्रिपुटीप्रत्यक्षनाम्नाऽप्यभिलप्यते। स्वतश्चास्य स्वज्ञानजनकसामग्रीतः इति भावः। अतः ज्ञानसामग्रीतो यज्ज्ञानमुत्पद्यते, तत एव तत्प्रामाण्यमपि जन्यते।

कुमारिलभट्टश्च किञ्चिदतो विलक्षणमभिमनुते सिद्धान्तम्। तन्नयेन घटज्ञाने सति ज्ञातो घट इति ज्ञानमुत्पद्यते। यतः प्रत्यक्षविषयीभूतेऽर्थे ज्ञातताधर्म उदेति। तत्र ज्ञानस्य न स्वयं प्रत्यक्षत्वमपितु ज्ञानधर्मविशेषस्य ज्ञाततालक्षणस्यैव प्रत्यक्षत्वम्। एतज्ज्ञातताधर्मं द्वारीकृत्यैव ज्ञानस्य तत्प्रामाण्यस्य चोदयः सम्भवति इति।

मुरारिमिश्रमतस्य च न न्यायाभिमतेन सह कश्चिद् विशिष्टो विसंवादः। तन्मते ज्ञानस्यैव प्रत्यक्षत्वम्। इन्द्रियार्थसन्निकर्षे सति, व्यवसायात्मकज्ञानोत्तरं घटमहं जानामीत्याकारकमनुव्यवसायलक्षणं यज्ज्ञानमुत्पद्यते, तदेवानुव्यवसायात्मकं ज्ञानं प्रामाण्यापादकमिति मुरारेरभिमतम्। तदेवास्य आचार्यान्तरेभ्यश्च वैशिष्ट्यम्। न च तत् सर्वांशतयाऽन्यैः सह ज्ञान-प्रणाल्यां संवदति।

तदेषां त्रयाणामप्याचार्याणामभिमतस्य तारतम्यपरीक्षया मथुरानाथतर्कवागीशेन चिन्तामणिरहस्ये प्रकाशितम् यदेषु सर्वेषु मतेषु प्रभाकरमतमेव वास्तविकं सुदृढञ्च तदेव स्वतःप्रामाण्यवादत्वेनोन्नेयम्। उक्तञ्च चिन्ताणिरहस्ये :—
'स्वतः स्वाश्रयजनकसामग्रीतः स्वप्रमात्वम्। एतच्च गुरुमते। परतः तदन्यसामग्रीतः एतच्च मिश्रमतभट्टमतन्यायमतेषु इति दिक्।

## भ्रमज्ञानम्

भ्रमज्ञानविषयेऽपि मीमांसाकानां वैलक्षण्यम्। प्राभाकराणां ज्ञानमात्रस्य यथार्थत्वम् शुक्तौ रजतप्रतीतिः रज्ज्वां वा भुजङ्गभ्रमः सुप्रसिद्ध एव। प्राभाकरास्त्वत्र मीमांसन्ते। शुक्तौ रजतमिदम् एतद्भ्रान्त्युपलब्धौ केवलमिदमंश एव प्रत्यक्षविषयो भवति। चक्षुस्तु इदम्पदार्थस्यास्तित्वं प्रत्याय्य विरमति। रजतां-

शस्तु न प्रत्यक्षविषयः। तत्पदार्थस्य तत्राविद्यमानत्वात्। अन्यत्र दर्शनेन केवलं स्मृतिमात्रम्। उभयोरपि स्वस्वविषये सत्यस्वरूपत्वम्। परं स्मृतिप्रमोषात्, उपलभ्यमानमिदं पदार्थस्य स्मर्यमाण'रजतपदार्थस्य' च विवेकग्रहाभावादेवास्य भ्रमस्योत्पत्तिः। ज्ञानयोर्विषययोश्च भेदाग्रहाद् भ्रमः संजायते।

शुक्तौ शुक्तित्वं, रजते च रजतत्वं एतदुभयात्मकं ज्ञानं स्वस्वाधिकरणे यथार्थमेव। प्राभाकराः शुक्तौ रजतज्ञानम् विवेकाग्रहणनिमित्तमिति भाषन्ते। इदमेव 'अख्याति' रित्यप्याख्यायते। तथा चोक्तं प्रकरणपञ्चिकायाम्—

"रजतमिति नैकं ज्ञानं किन्तु द्वे एते विज्ञाने। तत्र रजतमिति स्मरणं तस्यानुभवरूपत्वाभावान्न प्रामाण्यप्रसङ्गः। इदमिति विज्ञानमनुभवरूपं प्रमाणमिष्यत एव। भ्रान्तिरूपता चात्र रजतज्ञानस्य स्मरणरूपस्यैव ग्रहणव्यवहाराप्रवर्त्तकतया व्यवहारकाले विसंवादकत्वादिति।"

कुमारिलभट्टः मुरारिमिश्रश्च उभावपि न्यायमतं समर्थयतः। तौ प्रतिपादयतः—शुक्तिविषयकं ज्ञानं शुक्तित्वप्रकारकं, रजतविषयकं ज्ञानञ्च रजतत्वप्रकारकम्। तच्छुक्तित्व-रजतत्व-लक्षणो धर्मविशेषः समवायसम्बन्धेन शुक्तौ रजते चास्ते। यतः तस्य पार्थक्यं न कथमपि सम्भवति। परन्तु शुक्तौ रजतत्व-प्रतीति-वेलायां शुक्तौ रजतत्व-प्रकारकं ज्ञानं सम्भवति, तच्चान्यस्मिन्नन्यप्रकारकं ज्ञानम्। शुक्तौ रजतत्वज्ञानम् अन्यथारूपेण भिन्नरूपेण सम्भवादिदम् अन्यथाख्यातिरप्युच्यते। भाट्टमीमांसकैरिदमेव ज्ञानं विपरीतख्यातिनाम्नाऽपि व्यपदिश्यते। अकार्यस्य कार्यरूपतया भानाद् इति।

## तत्त्वमीमांसा

तत्त्वज्ञानदृशा मीमांसकानामस्य दृश्यप्रपञ्चस्य नित्यत्वम्। परं पदार्थव्यवस्थायां प्रभाकर-कुमारिल-मुरारिषु मिथो भूयान् मतभेदः। प्राभाकरास्तु द्रव्य, गुण, कर्म, सामान्य, परतन्त्रता, शक्ति, सादृश्य, संख्या चेति अष्टौ पदार्था इति स्वीकुर्वन्ति। तत्र द्रव्यगुणकर्मणां स्वरूपं वैशेषिकसदृशमेव। सामान्यस्यास्तित्वन्न व्यक्तितः पृथक्, अपि तु व्यक्तिष्वेव तदस्तित्वमिति मन्यन्ते।

यो हि वैशेषिकाणां समवायः स एव मीमांसकानां परतन्त्रता। सेयं जातिव्यक्त्योः विद्यमानः सम्बन्धरूपः। नायं नित्यः, अनित्यपदार्थेष्वपि तस्य सद्भावात्। कार्यजनकत्वं हि न केवलं द्रव्यगुणकर्मणाम्। शक्तिसमुत्पादे सत्येव एषु कार्यजनकत्वमुत्पद्यते। अतः शक्त्याख्यो नूतन एव पदार्थः एभिः कल्पितः। न्यायनये शक्तिः खलु प्रतिबन्धकाभावरूपा, सादृश्यसंख्ये तु गुणान्तर्भूते इति।

कुमारिलः पञ्च एव पदार्था इत्यभ्युपैति। पदार्थश्च भावाभावात्मकभेदाद्

द्विविधः। अभावश्च पुनः वैशेषिकवत् चतुष्प्रकारकः। भावपदार्था अपि--द्रव्य-गुण-कर्म-सामान्यभेदेन चतुर्विधाः। वैशेषिकाणां नव एव द्रव्याणि। भाट्ट-मतेनान्धकारः शब्दश्च द्वावधिकौ संगृहीतौ। नीलं तमश्चलति इत्यत्रान्धकारे नील-गुणारोपं चलनात्मककर्मारोपञ्चावलम्ब्य तस्य द्रव्यत्वमुपपादितम्। किन्तु प्राभा-करा वैशेषिकाश्च तमसः प्रकाशाभावत्वं तत्र गुणत्वं कर्मत्वञ्चोपाधिजन्यं न जातु वास्तविकम् इत्यभ्युपयन्ति। अन्यत्सर्वम् वैशेषिकवद् बोध्यम्। मुरारिमिश्रस्य पुनः पदार्थकल्पना उभाभ्यामपि भिन्ना। ब्रह्मैव केवलं परमार्थभूत एकः पदार्थः। लोकव्यवहारोपपत्त्यर्थमन्यत्पदार्थचतुष्टयम्। धर्मिविशेषः, धर्मविशेषः, आधार-विशेषः, प्रदेशविशेषश्चेति भेदादनुगृहीतम्। तथा चोक्तं न्यायमालायाम् :--

"ब्रह्मैकं व्यवहारे तु धर्मिधर्माधारप्रदेशविशेषाः पञ्च पदार्थाः इति।"

## जगत्

अस्मिन् खलु दृश्ये जगति दृष्टिगोचरीभवन्ति त्रयः पदार्थाः--भोगायतनं, भोगसाधनानि, भोगविषयाश्चेति। तत्र भोगायतनं शरीरं यत्र निवसन्नात्मा सुखदुःखात्मकं भोगमनुभवति। भोगसाधनानीन्द्रियाणि यैः साधनीभूतैरात्मना भोगा भुज्यन्ते। भोगविषयाश्च यावद्भोग्यपदार्थाः। तदेतत्त्रिविधतत्त्वसंवलितं जगदिदं नित्यमनन्तञ्च। मीमांसानये जगदुत्पत्तिस्तदात्यन्तिकप्रलयश्च पदं न धत्ते। पदार्था उत्पद्यन्ते च्यवन्ते च कालमनुरुध्य प्रवाहरूपेण। उक्तञ्च--

तस्माद्यद् गृह्यते वस्तु येन रूपेण सर्वदा।
तत्तथैवाभ्युपेतव्यं सामान्यमथवेतरत्॥ [श्लोकवार्त्तिके]

मीमांसाकानां कतिपये अणुवादमभ्युपयन्ति। तेषां मतेन कर्मणां सति फलोन्मुखत्वे, अणुसंयोगोपक्रमक्रमेण सृष्टिरारभ्यते। विरते च कर्मफले विच्छेदप्रसक्तिः एवं अवान्तरपरिवर्त्तनानि सम्भवन्ति। यद्यपि न्यायवैशेषिका-भ्यामपि परमाणुवादो अङ्गीकृतः तथापि मीमांसाणुवादः किञ्चिदंशतस्ततो भिद्यते। न्यायदृशा परमाणवोऽतिसूक्ष्मत्वात् अदृश्या योगिप्रत्यक्षगम्याश्च। मीमां-सका योगिप्रत्यक्षस्यास्मदादिप्रत्यक्षतो वैलक्षण्यं नाभिमन्यन्ते। तेषां तु अस्मदादि-प्रत्यक्षगोचराः परमाणवः। उक्तञ्च :--

'जालरन्ध्रविसरद्रवितेजो जालभासुरपदार्थविशेषान्।
अल्पकानिह पुनः परमाणून् कल्पयन्ति हि कुमारिलशिष्याः॥ इति।

इत्येव जगत्स्वरूपं समासतो मीमांसकानाम्।

## आत्मस्वरूपम्

मीमांसाकानाम् आत्मनः कर्तृत्वं भोक्तृत्वञ्च कुमारिलमतेन सोऽय-मात्मा न चैतन्यस्वरूपः किन्तु चैतन्यविशिष्टः। शरीरार्थसम्बन्धेनात्मनि चैतन्य-

मुदेति परं स्वप्नावस्थायां विषयसम्पर्कवैधुर्येण आत्मनश्चैतन्यं प्रच्यवते । तदेवमेषां आत्मनश्चैतन्यं जडत्वञ्चेत्युभयधर्मकत्वम् । प्राभाकराणां तु आत्मनो न क्रियावत्त्वम् । कुमारिलनयेन त्वात्मा मानसप्रत्यक्षगम्यः । 'आत्मानमहं जानामि' इत्यस्मिन् प्रत्यक्षे कर्त्तुर्निजास्तित्वबोधकत्वम् । आत्मप्रत्ययविषय एव आत्मा । एवं कुमारिलभट्टस्य आत्मनो ज्ञानकर्त्तृत्वं तद्विषयत्वञ्चेत्युभयमेवाभिमतम् । परन्तु प्राभाकराणामात्मनोऽहंप्रत्ययबोधकत्वम् । 'घटमहं जानामि' इत्यत्र घटप्रत्ययस्य कर्त्तृत्वमात्मन्येव । अतः मीमांसकानां प्रतिप्रत्ययमात्मनोऽस्तित्वावबोधो ह्यपरिहार्यः । प्रत्ययश्च चैतन्यनिबन्धनः । चैतन्यस्यात्माधिकरणत्वम् आत्मनोऽधिकरणतया चैतन्यस्य, आत्मास्तित्वं दुर्वारमेव ।

## मीमांसायाः प्रयोजनम्

मीमांसाशास्त्रस्य प्रधानं प्रयोजनं खलु धर्मविवेचना । धर्मं लिलक्षयिषुभिः भगवज्जैमिनिपादैः सूत्रितम्--'चोदनालक्षणोऽर्थो धर्मः [मी० १।१।२] चोदना हि विधिवचनमभिधत्ते । विधिर्हि वेदः । वेदविधेरेव क्रियाप्रवर्त्तकत्वमेषामभिमतम् । तस्माद् वेदविधानमनुसन्धाय यो वै कर्मकलापः स एव धर्मपदवाच्यः वेदप्रतिपादित एव धर्म इति भावः । वस्तुतो वेद एव सकलार्थजातं भूतं भवद् भविष्यञ्चावगमयितुं यथा क्षमस्तथा नान्यत्किञ्चित् । उक्तञ्च--भाष्यकृता शबरमुनिना :--

"चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुं, नान्यत्किञ्चित् ।"

वस्तुतः विधिप्रतिपादने एव वेदस्य मुख्यतात्पर्यं पर्यवसितमवगम्यते । 'आम्नायस्य क्रियार्थत्वात्' [मीमा० १।२।१] ।

केयं भावना नाम ? तदासां विधिविहितक्रियाणामनुष्ठानेन निःश्रेयसोपलब्धिः । मीमांसकानां 'स्वर्गकामो यजेत' इत्यत्र 'यजेत' इति क्रियापदं भावनोत्पादकम् ।

भावना च 'भवितुर्भवनानुकूलः व्यापारविशेषः' [मीमांसा न्यायमाला] । विधिवाक्यैर्या क्रियानुष्ठानार्थं प्रेरणोत्पद्यते सैव प्रेरणा मीमांसकानां भावनापदवाच्या । धात्वर्थस्य[1] फलमात्रत्वाद्, सोऽयं लिङर्थः भावनापदार्थः मैमांसिकसिद्धान्तप्रपञ्चे विशिष्टपदमलङ्करोति ।

---

१. मीमांसकानां मते फलमेव धात्वर्थः भावना च लिङर्थः । प्रकृति-प्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानम् इति व्युत्पत्तेः, प्रत्ययार्थत्वेनैव भावनायाः प्राधान्यं ख्यापितं स्यात् नान्यथा एवञ्च भावप्रधानमाख्यातमिति यास्कोक्तिरपि चारितार्थ्यमुपयातीति विस्पष्टः पन्थाः ।

**कर्मणां चातुर्विध्यम्**—प्राङ्निर्दिष्टानां वेदविहितकर्मणाञ्चातुर्विध्यं तैः स्वीक्रियते काम्य-प्रतिषिद्ध-नित्य-नैमित्तिकभेदात् । तत्र काम्यं, कामनाविशेषमुद्दिश्य क्रियमाणं कर्म । तद्यथा 'स्वर्गकामो यजेते'ति । प्रतिषिद्धं हि निषिद्धं यथा 'कलञ्जं न भक्षयेत्' । नित्यं तु कर्म सन्ध्यावन्दनादिकम् । निमित्त-विशेषमुद्दिश्य क्रियमाणं हि नैमित्तिकम् । न च फलकाले कर्मणोऽभावात् तस्य फलोत्पादकत्वं कथमित्याशङ्क्यम् । अपूर्वद्वारा तत्सिद्धित्वात् ।

अपूर्वत्वं नाम किम् ? अपूर्वत्वञ्च मीमांसकानां कर्मजन्यं पुण्यापुण्यत्वम्[1] । तस्यैव तादृशफलस्योपजनकत्वम् । यथा चोक्तं भगवता शङ्कराचार्येणापि—"नचाप्यनुत्पाद्य किमपि अपूर्वं कर्म विनश्यत् कालान्तरितं फलं दातुं शक्नोति अतः कर्मणां वा सूक्ष्मा काचिदुत्तरावस्था फलस्य वा पूर्वावस्थाऽपूर्वं नामास्ति इति तर्क्यते ।" [शा० भा० ३।२।४०] सैषाऽपूर्वकल्पना मीमांसकानां मौलिकं तत्त्वमुद्भाव्यते । इति दिक् ।

## मीमांसकानामीश्वरः

मीमांसकाचार्यैरीश्वरस्य कर्मफलप्रदातृत्वमङ्गीकृतम् । नहि जडं सत्कर्म स्वयं फलं दातुं परिवृढमिति । ईश्वर एव कर्मानुगुण्येन फलं ददाति । पूर्वं तेषां यज्ञपतिरेवेश्वरः । ईश्वरार्पणबुद्ध्या क्रियमाणं कर्म निःश्रेयसाय प्रकल्पते अत ईश्वरस्तैर्न निराकृतः । उक्तञ्च प्राभाकरैः—'एवञ्चानुमानिकत्वमीश्वरस्य निराकृतं, नेश्वरो निराकृतः ।' अत एव न प्रभाकरगुरुभिरीश्वरनिरासः कृतः इति । अतो मीमांसका न निरीश्वरवादिनः । श्रुतिप्रमाणवेद्यस्य श्रुतिमूलकस्येश्वरस्याऽस्तित्वं प्राभाकराणामभिमतम् । परं प्राचीनमीमांसकानां नये तु ईश्वरसत्ताऽङ्गीकृता नाऽऽसीदित्यपि स्पष्टं प्रतीयते इति ।

## मोक्षः

मीमांसकानां मोक्षो हि प्रपञ्चसम्बन्धविलयः । सम्बन्धश्च त्रिविधः, शरीरजः, इन्द्रियजः, भोग्यपदार्थजश्चेति भेदात् । उक्तं हि शास्त्रदीपिकायाम् :—

'त्रेधा हि प्रपञ्चः पुरुषं बध्नाति—भोगायतनं शरीरम्, भोगसाधनानि इन्द्रियाणि, भोग्याः शब्दादयो विषयाः । भोग इति सुखदुःखविषयोऽपरोक्षानुभव उच्यते । तदस्य त्रिविधस्यापि बन्धस्य आत्यन्तिको विलयो मोक्षः ।' [शा० दी० पृ० ३५८] । मोक्षविषये मीमांसावेदान्तयोर्भेदः प्रव्यक्तः । मीमांसकानां मोक्षः प्रपञ्चसम्बन्धविलयः । वेदान्तिनाञ्च पुनः प्रपञ्चविलय एव मोक्षः । उक्तञ्च

---

१. यागादेव फलं तद्धि शक्तिद्वारेण सिद्धचति ।
सूक्ष्मशक्त्यात्मकं वा तत् फलमेवोपजायते ॥ [तन्त्रवार्त्तिके]

शास्त्रदीपिकायाम्––"अविद्याजन्यो हि प्रपञ्चः स्वप्नप्रपञ्चवत् प्रबोधनेनैव ब्रह्मविद्यया अविद्यायां विलीनायां स्वयमेव विलीयते इति ।" परन्त्वत्र वास्तववादिनो मीमांसका विप्रतिपद्यन्ते । ते मुक्तावस्थायामपि अभिमन्यन्ते प्रपञ्चसत्ताम् अविद्यावस्थायामिवेति । केवलं सम्बन्धविलय एव निष्पद्यते इत्येव तयोर्भेदः । प्रभाकरमतेन मोक्षः भट्टमतात्किञ्चिद्भिद्यते । तन्मतेन 'नियोगसिद्धिरेव मोक्षः' । कर्त्तव्यमात्रबुद्ध्याऽनुष्ठीयमानानां कर्मणां फलमेव मोक्षः । न तु फलकाम्यया क्रियमाणानाम् ।

मीमांसकानां मोक्षावस्थास्वरूपनिरूपणेऽपि मिथो भूयान् मतभेदः । गुरुमतेन––आत्मज्ञानपुरस्सरविहितकर्मानुष्ठानात् प्रपन्ने सति धर्माधर्मविलये, यो देहेन्द्रियादिसम्बन्धस्यात्यन्तसमुच्छेदः स एव मोक्षः । भाट्टानां पुनर्मतद्वैविध्यम् । सत्यां मुक्तावस्थायां नित्यसुखाभिव्यक्तिर्मोक्ष इत्येकः पक्षः । बाह्यपदार्थैः सह सम्बन्धविच्छेदेन, मुक्तावस्थायां बाह्यसुखानुभूतिर्नावश्यकत्वेन साध्यते । किन्तु उदिते हि विशुद्धे ह्यात्मस्वरूपे विशुद्धानन्दाविर्भावस्तु दुर्वारः । उक्तञ्च––

'दुःखात्यन्तसमुच्छेदे सति प्रागात्मवर्त्तिनः ।
सुखस्य मनसा मुक्तिर्मुक्तिरुक्ता कुमारिलैः ॥

स एव एषां मोक्ष इति विवेकः । इत्येष द्वितीयः पक्षः । परं पार्थसारथिस्तु द्वितीयपक्षमेवाभिनन्दति मुक्तात्मनः सुखदुःखयोरत्यन्तसमुच्छेदस्वरूपम् । 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत' इति ।

तदेवंविधस्य मोक्षस्य साधनानि कानीति विमृश्यमाने काम्यप्रतिषिद्धकर्मणोर्बन्धनहेतुत्वमुक्तपूर्वम् । केवलं नित्यनैमित्तिकानि कर्माणि हि बन्धनदोषाद्विनिर्मुक्तानि । कामनाविशेषेणानुष्ठीयमानानि कर्माणि अवश्यम्भावितया फलैरभिसम्बध्यन्ते । प्रतिषिद्धैश्चाप्यनुष्ठितैः कर्मभिरपि नियतवृत्त्या अशुभफलानि जन्यन्ते । अत उभे अपि ते मोक्षपरिपन्थिनी । अत एव त्याज्यानि च मुमुक्षुभिः । तस्मात् काम्यनिषिद्धकर्मभ्यो निवृत्तिः, प्रवृत्तिश्च नित्यकर्मसु मोक्षप्रतिपत्त्यर्थम् अवश्यानुष्ठेयतयोन्नेया । मोक्षश्च न कर्ममात्रेण, अपितु ज्ञानसचिवकर्मणैव इति मीमांसकानामभ्युपगमः इति निष्कर्षः । अतः विरोधिवाक्यानामेकवाक्यतानिष्पादनम्, धर्मविषयस्य विशदीकरणं हि मीमांसायाः परमं प्रयोजनम् ।
उक्तञ्च श्लोकवार्त्तिके :––

'धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम् ।'

सोऽयं मीमांसाप्रतिपाद्यो विषयः संक्षेपेणोपन्यस्तः अशेष-विशेष-प्रतिपत्तिकुतूहलिभिस्तु तत्र-तत्रैव शास्त्रे यथाप्रकरणमनुसन्धेयम् । इति दिक् ।

## मीमांसा-साहित्यम्

मीमांसादर्शनमिदं ख्रीस्ताब्द्याः पञ्चशतकपूर्वविरचितं विभाव्यते। मीमांसासम्बन्धिसाहित्यञ्च बृहत्तरम्। महामुनिबौधायनप्रणीतमस्य भाष्यमति विशदम् परं तस्याधुनाऽनुपलब्धिः कस्य मानसं न दुनोति। उपवर्षेण भवदासेन चास्य मीमांसासूत्रवृत्तिरारचिता। उभौ महाभागाविमौ ख्रीस्ताब्दात् शतवर्ष-पूर्वमनुमीयेते। ततः शबरस्वामिमहाभागेन मीमांसासूत्रभाष्यं प्रणीतम् ख्रीस्ते द्विशतके यदधुनाऽपि लभ्यते।

कुमारिलभट्टः —ख्रीस्ताब्द्याः विंशत्युत्तरषष्ठशतकादारभ्य सप्तशतक-पर्यन्ते (६२०–७००) क्वचिन् मीमांसावार्त्तिककारः सञ्जातः। स एष भट्टः शाबरभाष्यस्य व्याख्यात्मकानां श्लोकवार्त्तिकतन्त्रवार्त्तिकानां टीकाकारः जन्मना द्रविडदेशमलमकार्षीत्। मीमांसासम्प्रदाये विद्यमानानां भाट्टमुरारिमतानां प्रसरे, भाट्टमतस्यादिप्रवर्त्तकोऽप्येष एव।

प्रभाकरः— मीमांसामूर्द्धन्यः प्रभाकराचार्योऽयं मीमांसासम्प्रदाये गुरुमतस्य संस्थापकः। अयं हि कुमारिलभट्टस्य प्रधानः शिष्यः। अनेनैव शाबरभाष्यस्य लघ्वी बृहती चेति टीकाद्वयी रचिता। कुमारिलभट्टाद्विसदृशोऽयं षट्प्रमाणस्थाने पञ्च-प्रमाणस्यैव प्रामाण्यमङ्गीकरोति।[1]

## मीमांसातत्त्वज्ञाननिष्कर्षः

तदेवं सहजगत्याऽऽलोच्यमाने, समस्तमीमांसातत्त्वज्ञानं निम्नाङ्कितदिशा निष्कृष्टं सम्भवति। यद् वैदिकदर्शनेषु मीमांसादर्शनस्य स्थानं अतिमहत्त्वास्पदम्। वेदाः खलु कर्मकाण्ड-ज्ञानकाण्ड-उपासनाकाण्ड-विज्ञानकाण्डभेदेन चतुर्धा विभक्ताः। तत्र कर्मकाण्डस्य सविशेषं तत्वार्थ-मीमांसनार्थमेव अस्य दर्शनस्य प्रवृत्तिः। अत एव कर्म-मीमांसानाम्नापीदमभिलप्यते। अध्वरमीमांसा, धर्ममीमांसा, पूर्वमीमांसा, इत्याद्या अप्यस्यैवापराः संज्ञाः। धर्मनिर्णयः तदनुष्ठानविधिपथप्रदर्शनञ्चास्य प्रधानो विषयः। वैदिककर्मकाण्डप्रयुक्तमन्त्रविशेषाणां विषयमभिलक्ष्य यः संशयः विरोधो वा तन्निरसनमेवास्य प्रमुखप्रयोजनत्वेनोन्नीयते। मीमांसा-मतेन, 'अथातो धर्मजिज्ञासा" इति प्रथमे सूत्रे को नाम धर्म इति जिज्ञासायां 'चोदनालक्षणोऽर्थो धर्मः" अर्थात् विधिवाक्यानुगुण्येन यः श्रेयस्करः क्रियाकलापः, यज्ञ-दान-होमादि-लक्षणः स एव धर्मपदवाच्यः। मीमांसकानां शब्दो नित्यः, शब्दार्थसम्बन्धोऽपि नित्यः, शब्दाः खलू-च्चारणात्पूर्वमव्यक्ता भवन्ति उच्चारणानन्तरं हि व्यक्ततामुपयन्ति। शब्दस्य नित्यत्वान्न स विकारमश्नुते, ध्वनिरेव विकृतिमुपयाति। न च यदा शब्दं कुरु इत्यादि

---

१. प्रभाकरसमयः (ख्रीस्त ६५०–७२०)। मण्डनमिश्रसमयः (ख्रीस्त ८००)। शालिकानाथस्य (खैस्त ६९०–७६०)।

प्रयोगाः 'कटं कुरु' इति वत् शब्दस्य कृतकत्वं विज्ञापयन्ति ततः कथं तस्य नित्यत्वं सम्भवतीति वाच्यम् । 'कुरु' शब्दस्यात्र व्यक्तीकरणार्थतात्पर्यकत्वात् । शब्दं कुरु उच्चारयेति तद्भावः । एतन्मतेन शब्दः संज्ञा, अर्थश्च संज्ञी । शब्दो बोधः, अर्थश्च बोध्यः । ध्वन्यारूढवर्णपदवाक्यश्रवणानन्तरं श्रोतुरन्तःकरणे यानि अर्थप्रत्यायकानि ज्ञानमयानि वर्ण-पद-वाक्यानि उदयमासादयन्ति, प्रस्फुरन्ति च तान्येव, प्रस्फुरितामूर्त्तपदार्थः स्फोटशब्देन व्यपदिश्यते । सोऽयं स्फोटोऽपि नित्यः अनादिनिधनश्च । मीमांसकैः वेदानां स्वतः प्रामाण्यम् । स च स्वतःप्रमाणो वेदः चतुर्षु विधि-अर्थवाद-मन्त्र-नामधेयाख्यविभागेषु विभक्तः । तत्र विधिः––कर्त्तव्यकर्मानुष्ठानार्थं यद्विधानं स विधिः । यथा––'स्वर्गकामो यजेत' इति । स च द्विविधः नियम-परिसंख्या-भेदात् । तत्र नियमो यथा एकादशीव्रतानन्तरं द्वादश्यां पारणां कुर्यात् । विधिवाक्येषु प्राप्तं प्रमाणान्तरेषु चाऽप्राप्तं सा परिसंख्या उच्यते यथा 'पञ्च पञ्चनखा भक्ष्या अन्ये जीवा अभक्ष्या इति गम्यते इत्यत्र 'पञ्चपञ्चनखभक्षणं इच्छाशास्त्रोभयाभ्यामेवाधिगम्यते[1] ।

तस्य विधेरन्येऽपि चत्वारो भेदाः, उत्पत्तिविनियोगाधिकारप्रयोगलक्षणाः । तत्र कर्त्तव्याकर्त्तव्यबोधक उत्पत्तिविधिः । यथा 'अग्निहोत्रं जुहोति' केवलमग्निहोत्रविधानमेवावेदयति, न किञ्चिदन्यत् । एवं अङ्गकर्मविधायकः विनियोगविधिः । यथा 'दध्ना जुहोति'' अत्रदधिहोमोऽग्निहोत्रस्याङ्गभूतः । फलावबोधको विधिरेव अधिकारविधिः । यथा 'स्वर्गकामो यजेत' त्रयाणामपि विधीनां संसृष्टिर्यस्मिन् स प्रयोगविधिरुच्यते । 'विहितकार्ये प्ररोचना निषिद्धकार्ये च निवर्त्तना', अर्थवादः । सोऽयमर्थवादो गुणवादानुवादभूतार्थवादभेदेन त्रिविधः । तत्र प्रमाणविरुद्धमर्थमाचक्षाणो वादो गुणवादः । यथा 'आदित्यो यूपः' इत्यत्र गुणधर्मविशिष्टे यूपे आदित्यारोपः । प्रमाणसिद्धार्थानुकथनमात्रं अनुवादः । यथा 'वायुर्वै क्षेपिष्ठा देवता ।' वायोः क्षिप्रगामिता प्रक्षेपकारिता प्रत्यक्षसिद्धा इति अनुवादमात्रमनुवादः । प्रत्यक्षार्थाविरुद्धं अज्ञाताप्राप्तार्थावबोधकः भूतार्थवादः । यथा 'इन्द्रो वृत्राय, वज्रमुदयच्छत्' इति यथार्थकथनं महाभारतादिषु प्रसिद्धं प्रमाणाविरुद्धं सत् अप्रत्यक्षार्थावबोधकत्वमपि अत्र घटते । एतेषु त्रिष्वपि भूतार्थवादस्यैव प्रामाण्यम् । अर्थवादात्मकानां वाक्यानामक्षरोत्थार्थस्य न ग्राह्यता । एवं गुणवादानुवादयोरपि अक्षरार्थः प्रामाण्यं नार्हति । यथार्थत्वाद् भूतार्थवाद एव केवलं प्रामाण्यकोटिमाटीकते । कर्मकाण्डोपनतवेदार्थतत्वार्थावबोधनेन एव मीमांसादर्शनस्य सार्थकत्वम् । इति ।

---

१. "यत्कर्त्तव्यं, वाक्यान्तरेषु च न प्राप्यते स विधिः ।"

सर्वे एव विधयो भवन्ति यत्र कुर्यात्, क्रियते, कर्त्तव्यं, यजेत, जुहुयादित्याद्याः सर्व एव विधयः कर्त्तव्यकर्मसु प्रवृत्तिं जनयन्ति । इति विधिविबेकः ।

# वेदान्तदर्शनम्

वेदान्तस्य प्रतिपाद्या विषयाः—निर्माणकालः—भाष्यकाराः—वेदान्त-सिद्धान्ताः—आत्मनोऽद्वैतत्वम्—ब्रह्मस्वरूपम्—केयं माया नाम ?—ईश्वरस्व-रूपम्—जीवस्वरूपम्—विवर्त्तवादः—कोऽयमध्यासः—वेदान्तस्य प्रधानाचार्याः—अद्वैतवादस्याऽचार्याः ।

## वेदान्तशास्त्रस्य प्रतिपाद्या विषयाः

अथेदानीं सर्वदर्शनमूर्द्धन्यं वेदान्तदर्शनमुद्दिश्य किञ्चित्प्रस्तूयते । वेदान्त-शास्त्रमिदं शारीरिकमीमांसेत्यपरया समाख्ययाऽपि प्रथते । तच्चेदं 'अथातो ब्रह्म-जिज्ञासा' इत्यादि 'अनावृत्तिशब्दादनावृत्तिशब्दादि'त्यन्तं भगवता बादरायणेन मर्हषिणा प्रणीतम् । तत्र सर्वेषामपि वेदान्तवाक्यानां साक्षात्परम्परया वा प्रत्यगा-त्माभिन्नेऽद्वितीये ब्रह्मणि तात्पर्यमिति समन्वयः प्रथमाध्यायेन प्रदर्शितः । तत्प्रथमे पादे स्पष्टब्रह्मलिङ्गयुक्तानि वाक्यानि विचारितानि । द्वितीयपादे तु अस्पष्ट-ब्रह्मलिङ्गयुक्तानि उपास्यब्रह्मविषयाणि । तृतीयपादे स्पष्टब्रह्मयुक्तानि प्रायशो ज्ञेय-ब्रह्मविषयाणि । एवं पादत्रयेण तादृशवाक्यविचारं समाप्य चतुर्थपादे तु प्रधानविषय-त्वेन सन्दिह्यमानानि अव्यक्ताजादिपदानि चिन्तितानि । तथा द्वितीयाध्याये वेदान्तानामद्वये ब्रह्मणि समन्वये समुपपन्ने, तत्र सम्भावितस्मृतितर्कादिविरोध-माशङ्क्य तत्परिहारपुरस्सरं तदविरोधः प्रदर्शितः । तत्राद्यपादे साङ्ख्ययोग-काणादादिस्मृतिभिः साङ्ख्यादिप्रयुक्तैस्तर्कैश्च विरोधो वेदान्तसमन्वयस्य परिहृतः । द्वितीयपादे सांख्यादिमतानां दुष्टत्वं प्रतिपादितम् स्वपक्षस्थापनपरपक्षनिराकरण-पुरस्सरम् । तृतीये तु महाभूतसृष्टयादिश्रुतीनां परस्पविरोधः परिहृतः पूर्वभागेन, उत्तरभागेन च जीवविषयाणाम् । तृतीयेऽध्याये तु साधननिरूपणम् । तत्र प्रथमपादे जीवस्य परलोकगमनेन वैराग्यं निरूपितम् । द्वितीयपूर्वभागेन त्वं पदार्थः शोधितः उत्तरभागेन च तत्पदार्थः । तृतीये निर्गुणे ब्रह्मणि नानाशाखापठितः पुनरुक्तपदो-पसंहारः कृतः । प्रसङ्गाच्च सगुणविद्यासु शाखान्तरीयगुणोपसंहारानुपसंहारौ निरूपितौ । चतुर्थपादे च पुनः निर्गुणब्रह्मविद्याया बहिरङ्गसाधनानि आश्रम-यज्ञादीनि, अन्तरङ्गसाधनानि च शमदमनिदिध्यासनादीनि निरूपितानि । चतुर्थे-ऽध्याये गुणनिर्गुणविद्ययोः फलविशेषनिर्णयः कृतः । तत्र प्रथमे पादे श्रवणाद्यावृत्त्या निर्गुणं ब्रह्म, उपासनावृत्त्या सगुणं ब्रह्म, साक्षात्कृत्य जीवतः पापपुण्यालेपलक्षणा जीवन्मुक्तिरभिहिता । द्वितीये पादे—म्रियमाणस्योत्क्रान्तिप्रकारश्चिन्तितः । तृतीये पादे सगुणब्रह्मविदो मृतस्योत्तरमार्गोऽभिहितः । चतुर्थपादे च पुनः पूर्वभागेन निर्गुणब्रह्मविदो विदेहकैवल्यप्राप्तिरुक्ता उत्तरभागन च पुनः सगुणब्रह्मविदो

ब्रह्मलोके स्थितिरुक्ता । नूनं वेदान्तशास्त्रमिदं सर्वेतरशास्त्राणां मूर्द्धन्यत्वेन समाद्रियते विद्वद्भिरिति।

एते चत्वारोऽध्यायाः समन्वयाध्यायः, अविरोधाध्यायः, साधनाध्यायः, फलाध्यायश्चेति नाम्नाऽपि क्रमेणाम्नायन्ते।

दर्शनान्तरवदस्यापि उपजीव्या उपनिषद एव । वेदस्य अन्तिमभागनिरूपित्वादुपनिषदामिवास्यापि वेदान्तसंज्ञा अन्वर्था । औपनिषदानां वचसां मिथो विरोधेनाऽवभासमानानां सिद्धान्तानां विरोधपरिहाराय भगवता बादरायणेन ब्रह्मसूत्रापरनामधेयं दर्शनमिदं प्राणायि । तदेतत् सार्द्धपञ्चशतैः सूत्रैः प्रणिबद्धं स्वल्पकलेवरात्मकं दर्शनं अखिलवेदान्तसिद्धान्तानामाकरग्रन्थ इवाद्रियते । भिक्षूणामादरास्पदत्वादुपादेयत्वाच्चेदं शास्त्रम् भिक्षुसूत्रेति संज्ञयाऽपि प्रथितम् । भगवता पाणिनिमुनिना कृते 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः ।" [पा० ४।३।११०] अस्मिन् सूत्रे पाराशर्यपदं पराशरसुतं व्यासमेवाभिधत्ते । तद्रचितानि भिक्षुसूत्राणि इति पदं सुतरां ब्रह्मसूत्रमेव निर्दिशति।

## निर्माणकालः

एवमस्य दर्शनस्य निर्माणकालः विक्रमपूर्वषट्शतकपर्यन्तमितः सम्भवति। न च सर्वास्तित्वविज्ञानवादयोरस्मिन्नुपलम्भात् कथं तादृशकालनिर्णयः सुघट इति वाच्यम्। उक्तसिद्धान्तानां सौगतादपि पूर्वकालिकत्वनिष्पत्तेः ।

## भाष्यकाराः

भगवतो बादरायणस्यैतत्सूत्रप्रणयने को वा तात्पर्यविषयीभूतो मुख्योऽर्थः इति निर्णेतुं न खलु सुकरम्। शङ्कराचार्यप्रभृतिभिराचार्यैः स्वस्वाभिमतप्रतिपिपादयिषया, ब्रह्मसूत्राणां योगविभागादिकं विधाय यथारुचि प्रणीतैः भाष्यैरतितरामुपक्रान्तम् । तदन्यै रामानुज-निम्बार्क-मध्व-वल्लभाचार्यादिभिः स्वस्वसिद्धान्तपराणि भाष्याणि विरचितानि । तानि चात्र यथाप्रकरणं निरूपितानि । तत्र-तत्रैव चानुसन्धेयानि।

## वेदान्तसिद्धान्ताः

वेदान्तशास्त्रं भूम्ना अद्वैतवादप्रतिपादकत्वेनैव गृह्यते । एतद्वादप्रतिपादकं तु श्रीमद्भगवच्छङ्कराचार्यविरचितं शारीरिकं नाम भाष्यम् । अद्वैतमते, ब्रह्मैव केवलमस्य चराचरप्रपञ्चस्य कारणत्वेनोन्नीयते । आश्रीयते च तदुपोद्वलकत्वेन 'यतो वा इमानि भूतानि जायन्त' इत्यादिका भगवती श्रुतिः । तत्र ब्रह्मातिरिक्तं न किञ्चिदन्यद्दूरीक्रियते। 'सर्वं खल्विदं ब्रह्म नेह नानास्ति किञ्चने'ति श्रुतेः । 'ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापर" इति च । 'इन्द्रो मायाभिः

पुरुरूप ईयते' इत्यादि श्रुतयश्च अद्वैतसिद्धान्तस्योपोद्वलकत्वेन अवष्टभ्यन्ते। एवां नये नित्यशुद्धबुद्धमुक्तस्वभावस्य स्वयंप्रकाशस्य चिद्रूपस्य ब्रह्मणः मायाऽविद्याद्युपाधिना कुण्ठितप्रकाशत्वम्, असङ्गस्य च तस्य आकाशादिप्रपञ्चजनकत्वञ्च स्वीकृतम्। न च कथमेतस्य ब्रह्मणोऽस्य प्रपञ्चस्यैतन्निमित्तोपादानोभयकारणत्वं सम्भवति। अचेतनस्य जडात्मकस्य जगतश्चैतन्योपादानत्वासम्भवात्, स्वकार्यव्यापित्वेन च ब्रह्मणो एकदेशिदण्डादिवन्निमित्तकारणत्वस्य दुरुपपादादिति वाच्यम्। मायोपाध्यवच्छिन्नत्वेन ब्रह्मणस्तदुपपत्तेः। माया, अविद्या, अज्ञानमित्यनर्थान्तरम्।[1] अविद्योपहिते ब्रह्मणि नामरूपे संसार-स्वरूपे सम्भवतः। एकमपि सद्ब्रह्म कूटस्थनित्यं मायया मायाविवदनेकधा विभाव्यते। द्विरूपं हि ब्रह्म। एकं नामरूपविकारभेदोपाधिविशिष्टम्। तद्विपरीतञ्च सर्वोपाधिविवर्जितम्। तदविद्याकृतनामरूपगुणैर्विशिष्टं सगुणमुच्यते। तैः विवर्जितं निरस्तसमस्तोपाधिसम्बन्धञ्च निर्गुणम्। तदेव ब्रह्म पराऽपरनाम्नाप्यभिलप्यते। न च ब्रह्मणश्चेतनत्वात् कारणकार्ययोरभेदेन प्रपञ्चस्य चेतनत्वप्रसङ्गो दुर्वार इति शङ्क्यम्। जडप्रपञ्चं प्रति ब्रह्मणश्चैतन्यप्राधान्येन निमित्तत्वं स्वाज्ञानप्राधान्येन चोपादानत्वमित्यङ्गीकारात्। शक्तिद्वयवत् यथा अयस्कान्तमणिसन्निधानेन जडमपि लौहं चेष्टते तथा चैतन्यसन्निधानेन जड़मयमज्ञानं चेष्टते इत्यज्ञानविकारं प्रति चैतन्यस्य निमित्तत्वम्। एवं जडाकाशादिकार्यं प्रति मायायाः साक्षादुपादानत्वेन मायाविनो ब्रह्मणोऽपि पारम्पर्योपचारादुपादानत्वं न विरुध्यते। यद्युच्यते नित्यस्य ब्रह्मणश्चेतनस्य उपादानत्वे प्रपञ्चस्यापि चेतनत्वं नित्यत्वञ्च प्रसज्येत। तन्न, प्रपञ्चस्यास्य ब्रह्मविवर्त्तत्वात्। विवर्त्तत्वं नाम स्वस्वरूपापरित्यागेन स्वरूपान्तरप्रदर्शकत्वम्। तच्चेह सुतरां घटतेतरामिति न कश्चिद्दोषः।

यथा रज्ज्ववच्छिन्नचैतन्यनिष्ठाऽज्ञानस्य रज्जुस्वरूपापरित्यागेन सर्पादिस्वरूपान्तरप्रदर्शकत्वम्, तथैवेश्वरचैतन्यनिष्ठाज्ञानशक्तेरपि चैतन्यस्वरूपापरित्यागेनाऽऽकाशादिस्वरूपान्तररूपेण प्रदर्शकत्वमुपपन्नम्। एवमाकाशादिप्रपञ्चस्य नित्यत्वं न सम्भवति। कुतः ? अज्ञानस्य मिथ्यारूपत्वेन तज्जन्यप्रपञ्चस्यापि मिथ्यात्वात्। अथ च तत्रैकस्यैव ब्रह्मणो निमित्तोपादानकारणत्वे लूतादृष्टान्तस्तैः पुरस्क्रियते---यथा लूता स्वोत्पद्यमानं तन्तुलक्षणकार्यं प्रति स्वचैतन्यप्रधानतया निमित्तं चैतन्यसन्निधानव्यतिरेकिणो जडस्य देहस्य मृतशरीरवत्तन्तुजनकत्वाऽसम्भवाच्छरीरस्य साक्षात्तन्तूत्पादनत्वेन तदवच्छिन्नचैतन्यस्यापि उपादानत्वेनोप-

---

१. तेषां मायादिष्वपि मिथो नाममात्रभेद उदीर्यते भूयस्त्वाल्पीयस्त्वोन्नीतः तथापि न स वास्तविकः तत्त्वाविशेषात्।

चारात् । एवमीश्वरस्यापि स्वचैतन्यप्रधानतया निमित्तत्वं, स्वोपाधिप्रधानतया चोपादानत्वमित्यवसेयम् ।

तदित्थमेष अद्वैतवादो हि नाम वेदान्तस्य मौलिकः राद्धान्तः । तदुपपत्तये आत्मप्रत्ययस्य स्वयंसिद्धता अपरिहार्या । इदमत्रावधेयम् । प्रपञ्चस्यास्य समस्ता अपि व्यवहारा अनुभवाधीनाः । अनुभूतिश्चात्मसत्तानिबन्धना । आत्मसत्तामन्तरेण तदुपलब्धेः दुरुपपादात् । अनुभूतिप्रक्रियायायामनुभवकर्त्तुरात्मनः स्वसत्तानुभूते-रपरिहार्यत्वेन भानाच्च । आह च स्वयमाचार्यः शारीरिके (२।३।४)––"आत्मा तु प्रमाणादिव्यवहाराश्रयत्वात् प्रागेव प्रमाणादिव्यवहारात् सिद्ध्यति । न चेदृशस्य निराकरणं सम्भवति, आगन्तुकं हि वस्तु निराक्रियते न स्वरूपम् । न हि अग्नेरौ-ष्ण्यमग्निना निराक्रियते ।" इति । किञ्चेतरत्रापि आचार्यः अमुमेवार्थं समर्थयति भङ्ग्यन्तरेण तद्यथा––"सर्वो हि आत्मास्तित्वं प्रत्येति, न नाहमस्मीति । यदि हि नात्मत्वप्रसिद्धिः स्यात् सर्वो लोको नाहमस्मीति प्रतीयात् ।" इति । [ब्रह्मसूत्र भा० १।१।१] वस्तुत एषां नये आत्मनो ज्ञानस्वरूपत्वं ज्ञातृरूपत्वञ्चेत्येतदुभयमपि अभिमतम् । अन्यथा कथमिव बधिरतां गतस्य, स्वप्नेषु श्रुतपूर्वज्ञानश्रवणं, अथवा उद्धृतचक्षुषो वा दृष्टपूर्वरूपदर्शनमुपपद्यते । तथाहि प्राह आचार्य ऐतरेयभाष्ये–– "द्वे दृष्टी, चक्षुषोऽनित्या दृष्टिर्नित्या चात्मनः ।. . . . आत्मदृष्ट्यादीनां नित्यत्वं प्रसिद्धमेव लोके । वदति हि उद्धृतचक्षुः स्वप्नेऽद्य मया भ्राता दृष्ट इति ।"

## आत्मनोऽद्वैतत्वम्

तत्वतः पर्यालोच्यमाने जगति स्फुटं प्रतीयते यत् सर्वो हि विषयावभासः ज्ञातृज्ञेयेति तत्त्वद्वयनिबन्धनः । ज्ञाता ह्यात्मा ज्ञेयश्च विषयभूतः पदार्थसमूहः प्रपञ्चाख्यः । वास्तववादिनां नये ज्ञातृज्ञेयमेतदुभयं स्वतन्त्रसत्ताकम् । वेदान्तिनाञ्च तयोरैक्यमैकात्म्यं वा । प्रपञ्चस्य सत्ता तु तेषां केवलं व्यावहारिकी, न जातु पारमार्थिकी । एतत्सर्वं व्यवहारेऽवभासमानं जगत् न चैतन्यव्यतिरेकेण स्थिति-विषयतामश्नुते । तत्सत्तासत्ताकत्वाज्जगतः । तत्सत्तयैवेदं स्थितिमालम्बते इत्यर्थः, उक्तञ्च––"चैतन्याव्यतिरेकेणैव हि किल जायमानास्तिष्ठन्त्यः प्रतीयमानाश्च सर्वदा लक्ष्यन्ते" 'नहि आत्मनोऽन्यत्. . . . .तत्प्रविभक्तदेशकालं भूतं भवत् भविष्यद्वा वस्तु विद्यते ।" (शारी० भाष्यम्) । यदा नामरूपे व्याक्रियेते, तदा नाम-रूपे आत्मस्वरूपापरित्यागेनैव ब्रह्मणाऽप्रविभक्तदेशकालेन सर्वासु अवस्थासु व्याक्रियेते इति । तस्मात् विषयविषयिणोर्भेदो व्यावहारिक एव न पारमार्थिकः इति । सर्वं ह्येतत् अवभासमानं जगत् केवलं मायाकल्पित-देशकालकलनावैचित्र्य-चित्रीकृतम् न खलु वास्तविकम् । कार्यसत्तायां हि कारणसत्ताया अनुस्यूतत्वं सर्व-

वादिप्रतिवादिसम्मतम् । नहि कार्यरूपो घटः कारणभूतां मृत्तिकामन्तरेण क्षणमपि स्थातुं प्रभुः । आह चाचार्यस्तैत्तिरीये भाष्ये--"विषयाकारेण परिणामिन्या बुद्धेर्ये शब्दाद्याकारावभासाः त आत्मविज्ञानस्य विषयभूता उत्पद्यमाना एवात्मविज्ञानेन व्याप्ता उत्पद्यन्ते।" (तैत्ति० भा० २।१)।

यथा भूतभवद्भविष्यदाद्युपाध्यवच्छिन्नस्यापि कालस्यैक्यं, प्राचीप्रतीच्याद्युपध्यवच्छिन्नाया दिशो वा ऐकात्म्यं सर्वदा अव्याहतम् न तर्कशतेनापि निराकर्त्तुं सुशकम् । तथैवास्य दृश्यप्रपञ्चस्यानेकभेदभिन्नस्य सत्तास्वीकारेऽपि न कर्हिचिदात्मन ऐक्यमद्वैतत्वं वापह्नोतुं सुकरमिति आत्माद्वैतत्वं सूपपन्नमेवेति तेषामाशयः । तथा च कठोपनिषदि--

'यदेवेह तदमुत्र यदमुत्र तदन्विह ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ।' [२।१।२०]

## ब्रह्मस्वरूपम्

तदेवमुक्तदिशा निर्दिश्यमानः आत्मैव निर्विकल्पकः, निरुपाधिः, निर्विकारसत्ताकः, ब्रह्मपदेनोच्यते तेषां नये । तच्च ब्रह्म निर्गुणसगुणरूपेण द्विविधमिति प्रागवोचाम । तादृशब्रह्मस्वरूपं लिलक्षयिषुः, स्वयमाचार्यः स्वरूपलक्षणं, तटस्थलक्षणञ्चेति लक्षणद्वयं तनुते । 'स्वरूपं सद् व्यावर्त्तकं' इति स्वरूपलक्षणम् । 'कादाचित्कत्वे सति व्यावर्त्तकञ्च' इति च तटस्थलक्षणम् । तद्यथा 'सत्यं ज्ञानमनन्तं ब्रह्म' [तैत्ति० २।१।१] एवं 'विज्ञानमानन्दं ब्रह्म' [बृह० अ० ३।९।२८] इति ब्रह्मणः स्वरूपलक्षणम्, 'जगदुत्पत्तिस्थितिलयकारणं ब्रह्म' इति तटस्थलक्षणम् । अविद्योपाध्यवच्छिन्नस्य ब्रह्मण एव जगदुत्पत्त्यादिकारणत्वं सम्भवति न खलु विशुद्धस्येत्येतत्तटस्थलक्षणम् । यत्रेदमुदाहृतं भवति। यत् :--

कश्चिद्ब्राह्मणः, कस्यचित्क्षत्रियनरेशस्याभिनयमुन्नाटयन् रंगमञ्चेऽवतीर्णः । यत्र स रिपुदलं विजित्य विजयवैजयन्तीमुद्धुनोति, प्रजानुरञ्जनादिकञ्च बहुश आरचयति । किमेतावता, स्वरूपनिर्णयवेलायामात्मानं क्षत्रियमवगमयति ? नैव । नाटकावसाने सत्येव स स्वकीयं ब्राह्मणस्वरूपं धारयति । अभिनयवेलायां तस्य क्षत्रियनरेशाभिनिवेशस्तत्तटस्थलक्षणमावेदयति, ब्राह्मणस्वरूपावेदनञ्च स्वरूपलक्षणमिति । तथैव ब्रह्मणो विषयेऽप्यत्रानुसन्धेयम् । न च ब्रह्मणः सत्यं ज्ञानमनन्तमिति विशेषणानि प्रतीयन्ते एकविभक्तिकत्वात् । तच्चात्र न संगच्छते कुतः ? उच्यते समानजातीयेषु अनेकद्रव्येषु अनेकानि विशेषणानि फलाधायकानि भवन्ति । नह्येकस्याद्वितीयस्य ब्रह्मणः तानि

समुपपद्यन्ते, इति वाच्यम्। लक्षणार्थप्रधानानि हि विशेषणानीमानि न, विशेषण-पराणि। सम्भवति च लक्षणविशेषणयोश्च भूयान् भेदः। विशेषणानि तु समानजातीयेभ्य एव विशेष्यं निवर्त्तयन्ति। लक्षणानि पुनः सर्वेभ्य एव पदार्थान्तरेभ्य इति। उक्तञ्च तैत्तिरीयभाष्ये [२।१] आचार्येण—

'समानजातीयेभ्य एव निवर्त्तकानि विशेषणानि विशेष्यस्य।
लक्षणन्तु सर्वत एव यथाऽवकाशप्रदातृ आकाशमिति।"

अतः 'सत्यं ज्ञानमनन्तम्' इत्येतद् ब्रह्मणो लक्षणम् न विशेषणम्। तत्र 'यद्रूपेण यन्निश्चितं तद्रूपं न व्यभिचरति तत्सत्यम्', 'ज्ञानं चिदात्मकं', 'यद्धि न कुतश्चित्प्रविभज्यते तदनन्त'मिति। अतः सच्चिदानन्दस्वरूपमित्येव ब्रह्म-लक्षणं तत्स्वरूपञ्चेति चतुरस्रम्।

तदुक्तलक्षणं ब्रह्म यदा मायोपाध्यवच्छिन्नं तदा सगुणं ब्रह्म, अपरं ब्रह्म, ईश्वरो वेत्यादि पदैर्व्यपदिश्यते। तदेव सगुणं ब्रह्म अस्य प्रपञ्चस्योत्पत्तिस्थिति-लयकारणत्वेनोन्नीयते शाङ्करैः।

शाङ्करनयन ब्रह्मणः सजातीयविजातीयस्वगतभेदशून्यत्वम्। परं रामानु-जीयनये, स्वीकृते सत्यपि सजातीयविजातीयभेदवैधुर्ये ब्रह्मणः स्वगतभेदशून्यत्वं नास्त्येव चिदचिद्विशिष्टे ब्रह्मणि चिदंशस्याचिदंशान्नितरां भिन्नत्वात्। अतएव एतद्द्वयभिन्न-विरोधि-तत्त्वसद्भावादेव रामानुजीयदर्शने ब्रह्मणः स्वगतभेदसम्पन्न-त्वमङ्गीकृतमवगम्यते।

## केयं मायेति

वस्तुतः अद्वैतवादसिद्धान्तोऽयमतीव जटिलः। जटिलत्वञ्चास्य भूयसा मायामवष्टभ्य वरीवर्त्ति। माया एव तत्त्वतोऽस्य वादस्याधारभित्तिः। मायारूपाव-बोधमन्तरेणाद्वैतवादः बुद्धिविषयीकर्त्तुमतीव दुष्करः। मायाशब्दोऽयं यद्यपि न शाङ्करोपज्ञः। ततः प्रागपि तदुपलब्धेः। 'इन्द्रो मायाभिः पुरुरूप ईयते', 'मा मर्त्यस्य मायिनः' इत्यादि श्रुतिषु। तथाऽपि मायास्वरूपन्तु नूनं तदुपज्ञमेवेति निर्विशङ्कम्। मायाशब्दः वैदिकसाहित्ये प्रकृतिवचनः। "मायान्तु प्रकृतिं विद्यात् मायि-नन्तु महेश्वर" मिति वचनात्। परन्तु शङ्करनये, माया नाम सदसद्विलक्षणा काऽ-प्यनिर्वचनीया ब्रह्मणः शक्तिः। सदसदुभयभिन्नस्य वस्तुनोऽनिर्वचनीयत्वमिति शास्त्रीया परिभाषा। माया तु सत्-शब्देन प्रतिपादयितुमनर्हा, ब्रह्मावबोधेन तद्बाधात्। सद्वस्तुनश्च त्रिकालाबाध्यत्वात्। सा च ब्रह्मज्ञानेन बाध्यते। असत्पदे-नाऽपि सा न शक्या व्यपदेष्टुम्। असद्वस्तुनः प्रतीतेरभावात्। सच्चेन्न बाध्येत, अस-च्चेन्न प्रतीयेत इति। मायायां तु खलूभयविधबाधाप्रतीत्योः सद्भावात् सा अनिर्व-

चनीयपदेनैव परिभाषितुं शक्यते। शङ्करनये मायाऽविद्याशब्दौ हि समानार्थकौ। मायोपहितं ब्रह्म जगद् व्यापारे प्रवर्त्तते, न तद्विरहितम्। अविद्या हि ब्रह्मणः बीजशक्तिरूपा, तामवष्टम्भीकृत्यैव प्रपञ्चः प्रवर्त्तते। उक्तं हि शारीरिकभाष्ये—

"अविद्यात्मिका हि बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुप्तिः, यस्यां स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवाः।"
[शा. भा. १।४।३]।

यथा सूर्योदयकाले तमःस्थितिरसम्भवा तथैव ज्ञानोदयकाले मायास्थितिः। यथाऽन्धकारः सूर्यासहिष्णुः तथैव मायाऽपि न ज्ञानोदयं सहते। उक्तञ्च :—

सेयं भ्रान्तिर्निरालम्बा सर्वन्यायविरोधिनी।
सहते न विचारं सा तमो यद्वद्दिवाकरम्॥ [नैष्कर्म्य सि० २।६६]

अतः वेदान्तिनां सा माया न सद्रूपा नाप्यसद्रूपा नाप्युभयरूपा। सा न भिन्ना, नाप्यभिन्ना, नापि च भिन्नाभिन्नोभयरूपा। न चाङ्गसहिता, न वाङ्गरहिता, नाप्युभयात्मिका। सा निरतिशयविलक्षणा, अद्भुता, अनिर्वचनीया चेति सूपपन्नमेव। उक्तञ्च :—

सत्याप्यसत्याप्युभयात्मिका नो
भिन्नाऽप्यभिन्नाप्युभयात्मिका नो।
साङ्गाऽप्यनङ्गाऽप्युभयात्मिका नो,
मायाद्भुताऽनिर्वचनीयरूपा॥ (प्रबोधसुधाकरे ८५–१०९)।

सेयमव्यक्ता, अनिर्वचनीया, मायाख्या ब्रह्मशक्तिरेव निखिलं जगत् प्रसूते। तदुक्तं विवेकचूडामणौ ११०तमे श्लोके—

"अव्यक्तनाम्नी परमेशशक्तिरनाद्यविद्या त्रिगुणात्मिका या।
कार्यानुमेया सुधियैव माया यया जगत्सर्वमिदं प्रसूयते॥" इति दिक्।

## ईश्वरस्वरूपम्

शाङ्करनये निर्विशेषं ब्रह्म मायोपाध्यवच्छिन्नं सद्यदा सविशेषब्रह्मत्वमुपैति तदा स ईश्वर उच्यते। अविद्योपाध्यवच्छिन्नं हि ब्रह्मैव ईश्वरपदभाग्भवतीत्यर्थः। एष एवेश्वरो जगतः सृष्टि-स्थिति-लय-कारणत्वेनावधार्यते। स च सृष्टिव्यापार ईश्वरस्य लीलाविलासमात्रः। न किञ्चिद्विशेषप्रयोजनकः। स एव जगतो निमित्तकारणं, स एव चोपादानकारणम्। न चैकस्मिन् ब्रह्मणि निमित्तोपादानोभयकारणत्वं कथं घटते इत्याशङ्कनीयम्। चैतन्यपक्षालम्बनेन हि ब्रह्मणि जगतो निमित्तकारणत्वं, मायोपाधिकपक्षालम्बनेन तस्मिन् उपादाकारणत्वञ्चेति प्राङ्निर्दिष्टदिशा सुतरां सुघटम्। यथैकेन मृत्पिण्डज्ञानेन सर्वे मृण्मयाः पदार्था ज्ञाता

भवन्ति तथैवैकस्मिन् ब्रह्मणि विज्ञाते सर्वं ज्ञातम्भवति । (छान्दो० ६।१।२) मुण्डकोपनिषदि च योनिपदेन ब्रह्मणोऽभिधानात्––"कर्त्तारमीशं पुरुषं ब्रह्म योनिम्" इति ब्रह्मण एव उपादानकारणत्वमपि जगतः प्रतिपद्यते । न च सुखदुःखात्मकस्याचेतनजगतः कारणत्वं चैतन्यमये आनन्दात्मके ब्रह्मणि कथं सङ्गच्छते ? ब्रह्मोपादानकेन जगताऽपि चैतन्यमयेनानन्दमयेन च भवितव्यमिति वाच्यम् । अचैतन्याद् गोमयपिण्डाच्चेतनवृश्चिकोत्पत्तिवत्तदुत्पत्तेः । मायया चेतनात्तज्जडोत्पत्तिरपि नाऽसम्भवेति दिक् ।

## जीवस्वरूपम्

अद्वैतवादिनां नयेन अन्तःकरणावच्छिन्नं चैतन्यं हि जीवः । तथा हि शाङ्करभाष्यम्––'अस्ति आत्मा जीवाख्यः शरीरेन्द्रियपञ्जराध्यक्षः कर्मफलसम्बन्धी (२।३।१७) ।' तत्त्वतो ब्रह्मैवोपाधिसम्पर्काज्जुषते जीवभावम् । यदा खलु ब्रह्म बिम्बाकारेण भासते तदा ईश्वर इत्युच्यते । यदा स प्रतिबिम्बेनाच्छादितः तदा जीव इति संज्ञां लभते । यथा आकाशस्थितं सूर्यबिम्बं जले निपतति तदन्यत्र संक्रमितं प्रतिबिम्बतां भजते । एषु बिम्बप्रतिबिम्बेषु भेदः पार्थक्यं वा सर्वानुभविकम् तथैव जीवेश्वरयोरपि सुतरां पार्थक्यं सूपपन्नम् । एष एव भेदो जीवेश्वरयोः स्वरूपेऽपि बहुशः प्रपञ्चितः ।

## विवर्तवादः

अथेदानीं विवर्त्तवादविषये किञ्चिदिव विविच्यते तत्स्वरूपप्रतिपत्त्यर्थम् । जगदिदं मायाजन्यं, ब्रह्मणश्च विवर्त्तस्वरूपम् । विवर्त्तो हि नाम कार्यानिर्वचनीयवादस्य पारिभाषिकी संज्ञा । उपादानस्य समानधर्मी अन्यथाभावः परिणामः । उपादानाद्विलक्षणोऽन्यथाभावश्च विवर्त्तः । उक्तञ्च अप्पयदीक्षितमहाभागेन––

'कारणसलक्षणोऽन्यथाभावः परिमाणः, तद्विलक्षणो विवर्त्तः इति ।'

(सिद्धान्तलेशे प्रथमपरिच्छेदे) ।

अयमाशयः––यथास्वरूपेणावस्थितस्य वस्तुनोऽन्यथाभावो द्विधा भवति । परिणामभावो, विवर्त्तभावश्चेति । तत्र वस्तुनो यथार्थस्वरूपं परित्यज्य स्वरूपान्तरप्राप्तिः परिणामः । यथा दुग्धं स्वस्वरूपं परित्यज्य दधिरूपेण परिणमते । विवर्त्तभावस्तु पुनः स्वस्वरूपमपरित्यज्य स्वरूपान्तरेण मिथ्या प्रतीतिर्नाम । यथा रज्जुः स्वरूपमपरित्यज्यापि सर्पाकारेण मिथ्यारूपेण प्रतिभासते । वेदान्तिभिरिदं प्रपञ्चभानस्य ब्रह्मणि परिणामभावो न स्वीक्रियते दुग्धादिवद् ब्रह्मणो विकारित्वप्रसङ्गादनित्यत्वदोषापत्तेश्च । विवर्त्तभावे तु नायं दोषः । प्रपञ्चभानस्य

ब्रह्मणि मिथ्यात्वेन विकारित्वाभावात्। विवर्त्तवादमेव तेऽभिनन्दन्ति। उक्तञ्च वेदान्तसारे :—

"सतत्त्वतोऽन्यथाप्रथा विकार इत्युदीरितः।
अतत्त्वतोऽन्यथाप्रथा विवर्त्त इत्युदीरितः॥"[1] इति।

तदेवं तात्त्विकं परिवर्त्तनं विकारः। अतात्त्विकं परिवर्त्तनं विवर्त्त इत्येव निष्कृष्टोऽर्थोऽवसेयः।

## कोऽयमध्यासः ?

ननु नित्यशुद्धबुद्धमुक्तानन्दस्वभावं हि ब्रह्म दुःखनिर्लेपमस्मिन् संसार-प्रपञ्चे किमिति निपतति इति प्रश्नः समुज्जृम्भते, वदान्तिनः समादधति—अविद्या-विजृम्भिताध्यासवशादिति। अध्यासो हि नाम अतस्मिन् तद्बुद्धिः। तत्पदार्थे अतत्पदार्थस्यारोप इत्यर्थः। सोऽयमध्यासः[2] अध्यारोपपदेनापि व्यपदिश्यते। वस्तुनि अवस्त्वारोप अध्यारोपः। न च जगति द्विविधावेव पदार्थौ अनुभूयमानाववलो-क्येते विषयः विषयी चेति। तत्र युष्मत्प्रत्ययो विषयत्वेनास्मत्प्रत्ययश्च विषयित्वेन गोचरीक्रियते। तत्र प्रत्यक्षगोचरे विषय विषयान्तरारोपोऽध्यासे घटते। विषयिणि अस्मत्प्रत्ययगोचरे आत्मनि स न सङ्गच्छते, इत्याशङ्क्यम्। सत्यपि विषयित्वे आत्मनः अस्मत्प्रत्ययस्य विषयीभूतत्वात्तस्य विषयत्वमपि न दुरुपपादम्। पुरोऽव-वस्थितविषयव्यतिरेकेणापि अप्रत्यक्षे आकाशे, तलमलिनत्वाद्यारोपः क्रियमाणोऽव-लोक्यत एव। इति न कोऽपि दोषः।

स पुनरध्यास अनादिरनन्तश्च। आहुश्चाचार्यपादाः —

"एवमयमनादिरनन्तो नैसर्गिकोऽध्यासः मिथ्याप्रत्ययरूपः कर्त्तृत्वभोक्तृत्व-प्रवर्त्तकः सर्वलोकप्रत्यक्षः।" इति।

तदेतन्निवारणार्थमध्यात्मविद्योपदेश एव वेदान्तशास्त्रस्य प्रधानोद्देश्यम्।

शङ्करपरवर्त्तिनो ह्याचार्या नव्यवेदान्तिपदेन स्मिर्यन्ते। तेषां मतान्यपि दिङ्मात्रदिशाऽत्र विचार्यन्ते। नव्यवेदान्तिभिः वेदान्त-सिद्धान्ताः कयापि विशिष्ट-विधया व्याख्याताः विभाव्यन्ते। परमविदुषा अप्पयदीक्षितेन एषां सङ्ग्रहः

---

१. इदमत्र प्रतिपत्तव्यम्—यथा मुखमेकमनेकेषु मणिदर्पणादिषु सद्भूतेषु विवर्तमानं तच्छायापत्त्या विभिन्नवर्णपरिणामतया चकास्ति, न तत्र तत्त्वतो विभिन्नवर्णपरमाणुसंवलितानि मुखानि भवन्ति। तदेते वर्णपरिणामविवर्ताः उच्यन्ते।

२. स्वच्छधवले स्फटिकमणौ, लाक्षारसावसेकतिरस्कृतधवलिम्नि, लाक्षारसगुणारोपेण अरुणोऽयं स्फटिकमणिरिति यदवभासते सोऽयमध्यासो नामेति विवेकः।

'सिद्धान्तलेशसंग्रहे' कृतः । अविद्यामाययोः पार्थक्यम्, जीवेश्वरयोः स्वरूपं, जगत उपादानकारणत्वमित्यादि विषयानवलम्ब्य नव्यवेदान्तिभिर्बोधगम्या युक्तयः समुद्भाविताः। भगवता शङ्कराचार्येण ब्रह्मणो जगदुपादानकारणत्वं प्रत्यपादि। संक्षेपशारीरिककारेण विशुद्धब्रह्मण एवोपादानकारणत्वं, विवरणकारनयेन च माया-शबलितं ब्रह्मैव जगदुपादानकारणमित्युपपादितम्। तत्त्वनिर्णयकारमते ब्रह्म माया चैतदुभयम्, सिद्धान्तमुक्तावलीकारमते केवलं मायाशक्तिरेव तदुपादानकारणत्वेनो-न्नीता, पञ्चदशीमतानुसारेण माया खलु शुद्धशक्तिमयी, अविद्या च रजस्तमो-बहुला। मायास्वरूपविषये मतानि बेभिद्यन्ते। यथा खलु मृत्तिकायाः श्लक्ष्णता घटोत्पत्तिम्प्रति द्वारकारणतामभिनन्दति, तथैव शुद्धब्रह्मण उपादानत्वेऽश्नुते माया द्वारकरणतामिति। परं वाचस्पतिमिश्रास्तु जीवाश्रितमायया विषयीकृतं ब्रह्मैव प्रपञ्चरूपेण परिणतं भवतीति स्वीकुर्वन्ति। अतोऽस्य प्रपञ्चस्य ब्रह्मैवो-पादानकारणं माया तु सहकारिकारणम्। उक्तञ्च कल्पतरौ—

स्वशक्त्या नटवद् ब्रह्म कारणं शङ्करोऽब्रवीत्।
जीवभ्रान्तिनिमित्तं तत् बभाषे भामतीपतिः॥
अज्ञातं नटवद् ब्रह्म कारणं शङ्करोऽब्रवीत्।
जीवाज्ञानं जगद्बीजं जगौ वाचस्पतिस्तथा॥ इति।

जीवेश्वरयोः स्वरूपं हि वैमत्यस्य प्रधानविषयतामालम्बते। तत्र विशेषतः आभासवादः, प्रतिबिम्बवाद, अवच्छेदवादः, जीवैक्यवाद आद्याः प्रधानवादाः बहुशः प्रस्फुरन्ति। तत्र वाचस्पतिमिश्रास्तु अवच्छेदवादमेवाभिनन्दन्ति। तेषां नयेन एकमेव चैतन्यं अज्ञानाश्रयेण, विषयभेदेन च द्विविधः अज्ञानविषयीभूतचैतन्य-मय ईश्वरः, अज्ञानाश्रयभूतश्चैतन्यमयश्च जीवः। अथ अन्तःकरणावच्छिन्नो जीवः, अविद्यावच्छिन्नश्चैतन्यमय ईश्वरः। इति विवेकः।

तदिदमद्वैतवादस्य संग्रहेण विवेचनम्। एतदनुशीलनं हि भगवतः शङ्क-राचार्यस्य प्रखरतर्कपाटवम्, अलौकिकीं प्रदीप्तप्रतिभां, प्रकाण्डं पाण्डित्यं, तत्वपार-दर्शिनीं प्रज्ञाञ्च परिचाययति। विश्वप्रहेलिकामवबुबोधयिषोः शङ्करोपज्ञस्य अद्वैतवेदान्तस्य तुलामारोढुं न कश्चिदन्यो वादः समुत्सहते। नूनमद्वैतसिद्धान्तोऽयं वश्यवाच सम्यग्ज्ञानरश्मेः आचार्यस्य गौरवगरिम्णः परां कोटिमाटीकमानो विश्वेषां हृदयपटले श्रद्धाङ्कितो बद्धमूलः सञ्जातः।

तथा चेयं प्रसिद्धा भणितिः—

तावद् गर्जन्ति शास्त्राणि जम्बुका विपिने यथा।
न गर्जति महाशक्तिर्यावद्वेदान्तकेसरी॥

इत्यलमतिप्रसङ्गेन।

## वेदान्तशास्त्रस्य प्रधानाचार्याः

वेदान्तसिद्धान्ता न खलु ऐदम्प्राथम्येन भगवता बादरायणेनैवोपक्रान्ताः अपितु तदतिरिक्ता अन्येऽपि तत्प्राक्कालीना बहव आचार्या एतत्सिद्धान्तप्रतिपादका आसन्निति बादरायणीयसूत्रैरेवावसीयते । बहुत्र सूत्रेषु तत्तन्नामधेयस्मरणात् । तद्यथा--

**आत्रेयः**--'स्वामिनः फलश्रुतेरित्यात्रेयः [ब्र० सू० ३।३।५५] इत्यस्मिन् सूत्र यज्ञाङ्गाश्रितोपासना, यजमानद्वारा ऋत्विग्द्वारा च सम्पद्यते। तत्फलविषये सन्देहः, यजमानस्तत्फलं लभते ऋत्विग्वेति। आत्रेयमतेन तत्कर्मफलं यजमान एव लभते न ऋत्विगिति निर्णयः।

**आश्मरथ्यः**--एतन्नामनिर्देशः केवलं 'अभिव्यक्तेरित्याश्मरथ्यः' [ब्र० सू० १।२।२९] इत्यस्मिन् सूत्रे उपलभ्यते। अस्य नयेन विज्ञानात्मपरमात्मनोः भेदाभेदसम्बन्धः। इमे भेदाभेदवादिनः। श्रुतिप्रकाशिकायाः कर्तुः सुदर्शनाचार्यनयेनास्यैव नयः पूर्वकालवर्त्तिना यादवप्रकाशेन समर्थितः। सर्वव्यापकोऽपि सन् परमेश्वरः क्वचिदुपनिषत्सु प्रदेशमात्रिकत्वेनोपवर्णितः। एषामुपपत्तिरत्र यदनन्तोऽपि परेशः भक्तानामनुग्रहायैकेदशित्वेनाविर्भवति। कात्स्न्र्येन तदुपलब्ध्यनुपपत्तेः, हृदयादिप्रदेशमात्रे उपलब्धत्वादेव स प्रदेशमात्र इत्युच्यते।

**औडुलोमिः**--त्रिषु सूत्रेषु एतन्नामनिर्देश उपलभ्यते वेदान्ते 'आर्त्विज्यमित्यौडुलोमिः...[३।४।४५]। इत्यादिषु। एषां भिन्नावस्थाकारणको हि भेदाभेदः। संसृत्यवस्थायां हि जीवब्रह्मणोः भेदः। मुक्तावस्थायान्तु तयोरभेद एव। एतन्मतञ्च वाचस्पतिमहाभागैरपि भामत्यां सम्यगुपपादितम्।

**कार्ष्णाजिनिः**--"चरणादितिचेन्नोपलक्षणार्थेति कार्ष्णाजिनिः" [ब्र० सू० ३।१।९] इत्यस्मिन् सूत्रे एषां नाम स्मृतमेकवारं किन्तु मीमांसायामनेकवारमित्येतेषां प्रसिद्धिमाख्यापयति।

**काशकृत्स्नः**--अयमपर आचार्यः। 'अवस्थितेरिति काशकृत्स्नः' [ब्र० सू० १।४।२२] इत्यस्मिन् सूत्रे ह्यस्य नामनिर्देशः। अस्य नयेन परमेश्वर एव जीवरूपेणास्मिन् संसारेऽवस्थितः। तदाह शङ्करः--"काशकृत्स्नस्याचार्यस्य आविष्कृतः 'परमेश्वरो जीवो नान्यः' इति मतम्।" शङ्करनयेनाऽपि चैतत् श्रुतिसम्मतम् मतम्।

**जैमिनिः**--मीमांसाशास्त्रप्रणेतुरस्य आचार्यस्य नामस्मरणं वेदान्ते बहुशःकृतमवलोक्यते। आचार्योऽसौ बादरायणस्य प्रधानः शिष्यः। इत्यादि।

एवं शङ्करोत्तरकालीना अपि वेदान्तसिद्धान्तप्रतिपादका बहवो विद्वांसोऽभवन्। तद्यथा--

मण्डनमिश्रः—शङ्कराचार्यसमकालीनः अद्वैतप्रतिपादकः मीमांसकमूर्द्धन्यः। अस्य प्रसिद्धो ग्रन्थः 'स्फोटसिद्धि'र्नाम। अन्यश्च 'ब्रह्मसिद्धि'र्नाम शङ्खपाणिकृतटीकासंवलितः।

श्रीशङ्कराचार्यस्य शिष्येण सुरेश्वराचार्येण, तैत्तिरीयबृहदारण्यकभाष्ये च वार्त्तिकमारचय्य वार्त्तिककार इत्युपाधिरुपालम्भितः। तदप्यस्य शिष्येण पद्मपादाचार्येण ब्रह्मसूत्रस्य चतुःसूत्रीमधिकृत्य पञ्चपादिका नाम्नी पाण्डित्यपूर्णा प्रामाणिकी टीका रचिता। तदुपरि च प्रकाशात्मयतिमहाभागेन विवरणाख्या व्याख्या व्यलेखि। सुरेश्वराचार्यस्य शिष्यप्रवरेण सर्वज्ञात्ममुनिना, ब्रह्मसूत्राणां संक्षेपशारीरिकाख्या पद्यात्मिका व्याख्या च रचिता। नवमशतकसम्भवेन वाचस्पतिमिश्रमहाभागेन शङ्करभाष्ये भामती नाम्नी भव्या प्रामाणिकी च टीका आटीकिता। यया सर्वतः प्राक् सर्वोत्कर्षतया ब्रह्मसूत्रभाष्यस्य गूढतमरहस्यमुद्घाटितं विभाव्यते। द्वादशशतकसम्भवेन श्रीहर्षमहाकविना विरचितः खण्डनखण्डखाद्याख्यो ग्रन्थः पाण्डित्यस्य निकषग्रावभूतोऽद्यापि विलसति। त्रयोदशशतकजातेन चित्सुखाचार्येण तत्त्वदीपिकाख्या व्याख्याऽपि शेखरीभूता प्रख्यायते। चतुर्दशशतकलब्धजनुषो विद्यारण्यस्वामिनः पञ्चदशी वेदान्तप्रपञ्चे निरतिशयख्यातिमुपालभत। परमसूरिणा आनन्दगिरिणा शाङ्करभाष्यस्य व्याख्यामालिख्य महदुपकृतं वेदान्ततत्त्वमधिजिगांसूनाम्। मधुसूदनसरस्वतीमहाभागेन अद्वैततत्त्वरहस्योद्घाटनकरीं अद्वैतसिद्धिनाम्ना प्रसिद्धां टीकां विरच्य वेदान्तकेसरित्वमुपालम्भि। सप्तदशशतकोपात्तजन्मना विदुषा अप्पयदीक्षितेन कल्पतरुपरिमलमालिख्य भामतीनिगूढार्थः प्रकाशितः। इत्थं वेदान्तसाहित्यमतीव बृहत्कलेवरं सम्पन्नम्।

## अद्वैतवादस्याऽऽचार्याः

श्रीगौडपादाचार्यः—अद्वैतवादस्य प्रथमः प्रवर्त्तकः श्रीगौडपादाचार्यः। माण्डूक्यकारिकाऽस्य मौलिको ग्रन्थः। 'ब्रह्म सत्यं जगन्मिथ्ये'ति अस्य वादस्य प्रधानो राद्धान्तः। गौडपादाचार्यस्य समयः ख्रैस्तपूर्व ६०० मितः।

श्रीशङ्कराचार्यः—श्रीशिवगुरुसुतस्तैत्तिरीयशाखाध्यायी, स्वजन्मना मालावारप्रान्ते केरलप्रदेशे नम्बूद्रीब्राह्मणकुलमलञ्चकार। बाल्यकालादेवातीव तेजस्वी, अलौकिकमेधासम्पन्नः। अस्याखिलातिशायिनीं प्रतिभां अनन्यसाधारिणीञ्च तर्कपटुतां क्रान्तदर्शितां स्थितप्रज्ञतां समन्वयात्मिकां शेमुषीं, ऋषिकल्पां तपः साधनाञ्चाकलय्य को नाम कोविदो मनीषी सहसा प्रणतमस्तकस्सन्नोदीरयेन्नमोवचांसि भूयांसि तस्मा इति। अस्य प्रातराराध्यस्य साक्षात्सरस्वत्यवतारस्य जन्मसमयः ख्रैस्त ७८८ मितः निर्वाणकालश्च ख्रैस्त ८२० मितो विभाव्यते। अस्मिन् द्वात्रिंश-

द्रघीयसि स्वल्पीयसि वयसि खलु महदद्भुतं वेदधर्मोद्धाररूपं यच्चमत्कृतिकारकं कार्यं कृतं तदेवास्याद्य विश्वव्यापियशोराशिं प्रकाशयद्विलसति। अतएवैष महनीय-कीर्त्तिर्जगद्गुरुर्भगवतः शङ्करस्यावतारत्वेनोररीक्रियते महामनस्विभिः। आसीद-सौ श्रीगौडपादाचार्यशिष्यस्य भगवत्पादश्रीगोविन्ददेवस्यान्तेवासी। एनमुद्दिश्य—

'अष्टवर्षे चतुर्वेदो द्वादशे सर्वशास्त्रवित्।

षोडशे कृतवान् भाष्यं द्वात्रिंशे मुनिरभ्यगाद्॥

इति कस्यचिदभियुक्तस्योक्तिः सुतरां सञ्जाघटीति। प्रस्थानत्रय्या आद्या भाष्यकारा इमे एव महाभागाः। उपनिषद्भाष्यं, गीताभाष्यं, ब्रह्मसूत्रभाष्यं, माण्डूक्यकारिकाभाष्यं, विष्णुसहस्रनामभाष्यं, सनत्सुजीवभाष्यं, सौन्दर्यलहरी, उपदेशसाहस्री चेत्येवमाद्या अस्य विशिष्टरचनाः समुल्लसन्ति महापुरुषस्य अस्य सर्वतोमुखीं प्रभासुरां प्रतिभां प्रख्यापयन्त्यः। एषां रचनाशैली रोचिष्णुतरा गम्भीरा-णामर्थानां सारल्येनाभिव्यक्तीकर्त्तुमनन्यसाधारणी। प्रसन्नगम्भीररचनावचना-वलिरेषां साहित्यसदृशाऽपि संस्कृतसाहित्यस्य शेवधिरेवास्ति निरुपमः।

वाचस्पतिमिश्राः—अद्वैतसिद्धान्ताचार्याणां गणे तत्रभवन्तो विद्वन्मूर्द्धन्या भामतीकारा आचार्यवाचस्पतिमिश्रमहाभागाः शेखरायन्ते। एषां स्थितिकालम-धिकृत्य बहवो बहुधा व्यवतिष्ठन्ते। केचनास्य जन्मपरिग्रहं ११५७ शतके विभाव-यन्ति। अपरे द्वादशशताब्द्या अन्तिमचरणेऽस्याविर्भावमङ्गीकुर्वन्ति। इतरे अमुं श्रीहर्षसमसामयिकं स्वीकुर्वन्ति। स्वयमनेन स्वकीयन्यायसूचीनिबन्धे यदुल्लिखितं तेनावगम्यते यदेष सन्दर्भो वैक्रमे ८९८ शतके लब्धावतार इति। एतावता नैतद-नुमातुं दुष्करं यदसौ नवमदशमशताब्दीमध्यघटिते काले गृहीतजन्मेति। किञ्च भामतीटीकायां धर्मकीर्त्तिनाम्नो बौद्धदार्शनिकस्योल्लेखो लभ्यते। तदुत्तरकालभवस्य कस्यापि दार्शनिकस्य नामकीर्त्तनं न दृश्यते। धर्मकीर्त्तिश्च पञ्चमषष्ठशतकयो-र्मध्यकालभवो निर्धार्यते। तदेतावताऽप्यस्य कालो नवमशताब्द्यामेव संघटितो भवति। विद्वन्मणिना वाचस्पतिमहाभागेन जन्मना मिथिलामण्डलमलमकारि।

अनेन महामेधाविना बहवो ग्रन्था विरचिताः। ये खलु विद्वत्समाजेन बहुतरं समाद्रियमाणा अद्यापि संस्कृतदार्शनिकसाहित्यरत्नाकरे कयापि प्रोज्वलयाऽऽभया जाज्वल्यमानास्समवभासन्ते। तेषु च परमप्रसिद्धाः ब्रह्मसूत्रभाष्ये 'भामती', सुरेश्व-राचार्यकृतब्रह्मसिद्धिमधिकृत्य 'ब्रह्मतत्त्वसमीक्षा', सांख्यकारिकोपरि 'तत्त्वकौमुदी', पातञ्जलदर्शने तत्त्ववैशारदी, न्यायदर्शने 'न्यायवार्त्तिकतात्पर्यम्', पूर्वमीमांसा-दर्शने 'न्यायसूचीनिबन्धः', भट्टमतमुद्दिश्य 'तत्त्वबिन्दुः', एवं मण्डनमिश्रविरचितविधि-विवेके 'न्यायकणिका' प्रभृतयोऽन्येऽपि नैके ग्रन्थाः तर्कबद्धा निबद्धाः।

यद्यपि वाचस्पतिमिश्रेण बह्वस्वपि दर्शनेषु प्रामाणभूताष्टीका आटीकिताः तत्तत्सिद्धान्तजातमुज्ज्वलयन्त्यः, तथाप्यस्य शाङ्करमतमतितरां स्वदतेऽस्मै इति तत्तद्विवृतिभङ्ग्या नितरां बाभासतेतराम्। सोयं वाचस्पतिमिश्रः कृतदारपरिग्रहोऽपि किल नैष्ठिकब्रह्मचारी एव आसीदित्यनुश्रूयते। ग्रन्थलेखनलीनमनस्कतया समाधिनिरूढचेतसस्तस्य, विषयान्तरनिवृत्तान्तःकरणवृत्त्या तादवस्थ्यमित्यनुमीयते। तद्विषये एका किंवदन्ती प्रचलति। यदेकदाऽसौ ग्रन्थलेखनव्यग्रमानसः आसीत्। तदाऽस्य प्रदीपस्तैलाभावान्निर्वाणमभजत। तदाऽविलम्बं तस्य सुगृहिण्या भामतीति सुगृहीतनामधेयया स दीपस्तथा प्रज्वलनं नीतः यथा क्षणमपि अस्य व्यर्थतां नायासीत्। तदिदं हस्तलाघवं विलोक्य मिश्रमहाभागा अतीव प्रसन्नाः सन्तः, ताञ्च तत्रैवोपस्थितां दृष्ट्वा प्रपच्छुः, 'किमपि वक्तुकामासि चेत् वद किन्ते प्रियं करोमि।' प्रेयसी प्राह, 'देव! तथा कुरु यथा ते वंशतन्तुर्न भवेद्व्यवच्छिन्न इति'। 'तथास्तु' इति कृत्वा मिश्रमहोदयो बभाषे। अक्षय्यां सन्तति ते दास्यामि। तदनु शाङ्करभाष्योपरि 'भामती'ति प्रख्यातां व्याख्यां तन्नाम्नैव व्यतनोत्। तदद्यापि स किल वाचस्पतिमिश्रः सा च तदीया भार्या पुण्यशीला भामती अजरामररूपेण यशःशरीरेण उभावपि विश्वव्योम्नि विलसन्तौ विराजेते इति।

—०—

## अथ षड्दर्शन-समन्वयः

इह खलु संसारचक्रे सञ्चङ्क्रम्यमाणानां तनुभृतां साध्यत्वेन चत्वारः पुरुषार्था धर्मार्थकाममोक्षाख्याः सकलश्रुतिस्मृतिपुराणेतिहासानुमोदिताः जनैः सेव्यत्वेन वर्णिताः। तत्र निरतिशयानन्दत्वेन, आत्यन्तिकदुःखनिवृत्तिलक्षणस्य मोक्षस्यैव पुरुषमात्रेणार्थ्यमानत्वात् परमपुरुषार्थत्वम्, अत्यन्तपुरुषार्थत्वं वा प्रतिपादितम्। अत्यन्तपुरुषार्थः परमपुरुषार्थः मोक्षः मुक्तिः कैवल्यम् अपवर्गः इत्यनर्थान्तरम्। यद्यपि मोक्षस्वरूपमभिलक्ष्य मतानि बहुशो भिद्यन्ते शब्दमात्रतः, तथापि तत्त्वतः पर्यालोच्यमाने तेषां सर्वेषां तात्पर्यविषयीभूतोऽर्थः नूनमेकवाक्यतायामेव घटते इत्यत्र न कापि संशीतिः।

किञ्च वेदमूलकान्येव निखिलानि दर्शनानि, वेदोपबृंहणार्थमेव च तेषां प्रवृत्तिः, तत्कुतस्तेषु विसंवादावकाशः ? नहि समानप्रसवप्रयोजनेषु पदार्थेषु कलहः शक्यतेऽनुमातुम्। लब्धप्रसवानि च सर्वाणि दर्शनानि श्रुतित एवेत्यत्र न कस्यापि वैमत्यम्। सर्वेषां दर्शनानां प्रयोजनत्वेन, चरमोद्देश्यत्वेन वा यदुत्कीर्त्तितं परीक्षकैस्तत्तु प्राणिनामेतद्दृश्य-प्रपञ्चावबोधोदञ्चनपुरस्सरं निःश्रेयसाधिगमं प्रत्युन्मुखीकरणमेव। वस्तुतः——

तत्तद्दर्शनतत्त्वार्थेषु परामृश्यमानेषु खलु तत्तत्तत्त्वज्ञानपुरस्सरं मोक्षमार्गप्रदर्शनं सर्वेषां दर्शनानां प्रयोजनत्वेनोपन्यस्तमवगम्यते, इत्यत्र तु को नाम चक्षुष्मान् विप्रतिपद्येत। एवं सति यदि नाम दार्शनिका एव स्व-स्वदर्शनं निमित्तीकृत्य रागद्वेषादिपरिग्रहवन्तः सन्तः परस्परं कलहायेरन् तर्हि ततः परं किं वा सम्भवेल्लोके हास्यास्पदम्। अतः तात्त्विकदृशा विमृश्यमाने त्ववगतं भवति यदापाततोऽवभासमाना अपि ते ते विसंवादा न तत्त्वतः स्थितिं लभन्ते। सर्वेषामन्ततः समानाकारेणैव मोक्षलक्षणचरमसिद्धान्तप्रतिपादन एव पर्यवसानात्। तथा चोक्तं माण्डूक्यकारिकयां भगवद्गौडपादाचार्यैः ——

स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम्।
परस्परं विरुध्यन्ते तैरयन्न विरुध्यते ॥ इति।

आहुश्चात्र श्रीमन्तो भगवच्छङ्कराचार्या अपि भाष्यमातन्वानाः——"एवं रागद्वेषोपेताः स्व-स्व-दर्शनसिद्धान्तनिमित्तमेव परस्परं विरुध्यन्ते। तैरन्यान्याविरोधिभिरस्मदीयोऽयं वैदिकः सर्वानन्यत्ववादात्मैक्यपक्षः न विरुध्यते। यथा स्वहस्तपादादिभिरभिघाते जातेऽपि यथैक्यज्ञानेन न क्रुध्यति एवं अस्मिन् दर्शनादिनिमित्तं द्वेषादिर्नास्ति इत्यभिप्रायः" इति। समुपश्लोकयाञ्चक्रे च श्रीगन्धर्वराजः

पुष्पदन्ताचार्यस्तांस्तान् प्रत्यवभासमानान् विसंवादान् निराचिकीर्षुः। तेषामेक-वाक्यताञ्चोपपादयन् :—

त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति,
प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च ।
रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां,
नृणामको गम्यस्त्वमसि पयसामर्णव इव ।। इति।

तदेवं सर्वेषां दर्शनानां शब्दतो अर्थतो वा प्रत्यवभासमाने विसंवादेऽपि तत्तात्पर्यविषयीभूतेऽर्थे समानाकारत्व एव तानि पर्यवसन्ति इति । तथा च न तेषु कश्चन तात्त्विको विरोधः। तदेवम्——ईश्वरो जीवः प्रकृतिश्चेत्यात्मके त्रैतवादे व्यवहारदशायां तु सर्वाण्येव दर्शनानि श्रद्दधते कात्स्न्येन। निःश्रेयसाधिगमेऽपि तानि सर्वाणि विश्वसन्ति। सम्भवेयुर्नाम तत्तद्दर्शनप्रणेतॄणां दृष्टयो विभिन्नाः तत्तद्विषयप्रसरमधिकृत्य, परन्त्वन्ततः ते तत्त्वदर्शिनो महर्षयः प्रतिकूलतया वेदनीयं दुःखपदवाच्यं कण्टकं निराचिकीर्षवः अनुकूलतया च वेदनीयं कुसुमस्तबक-ञ्च संचिकीर्षवः तत्तदुपायविशेषं मृग्यमाणाः परिणतौ साम्यमेव प्रतिपालयन्ति। अतोऽन्ते सर्वाणि दर्शनान्यपि त्रिविधदुःखात्यन्तनिवृत्तिलक्षणे अत्यन्तपुरुषार्थे एव समन्वियन्ति लक्ष्यन्ते न तानि मात्रयाऽपि विरुध्यन्ते इति विवेकः ।

ये त्वत्र केचन विप्रतिपद्यमाना वदन्ति——यदि नाम एतेषु षड्दर्शनेषु समन्वय एव भवेदभिप्रेतस्तर्हि सर्वदर्शनचरमोद्देश्यत्वेन प्रतिपाद्ये निःश्रेयसस्वरूपे तानि न भिद्येरन्। प्रव्यक्तञ्च तानि बेभिद्यन्ते तत्र——तद्यथा न्यायवैशेषिकसांख्य-मते तु अत्यन्तदुःखनिवृत्तिरेव निःश्रेयसम्। त्रिदण्डिमते पुनः जीवात्मनो ब्रह्मणि लय एव मोक्षः। वेदान्ते च अविद्यानिवृत्तिरेव। भाट्टास्तु पुनः नित्यसुखसाक्षात्कार-मेव मोक्षत्वेनोन्नयन्ति। इति कियान् महीयान् विसंवादः ! एवं प्राप्ते ब्रूमः, एव-ञ्जातीयकेषु लक्षणेषु यद्यपि आपाततो भासमानास्ते ते विसंवादाः प्रतीतिविषय-मवतरन्ति——तथापि ते न वास्तविकाः। कुतः, निःश्रेयसावस्थायामात्यन्तिकदुःख-निवृत्तेस्तु सर्वेषामैकमत्येनाङ्गीकारात्। एवं स्थिते विसंवादस्यावकाश एव कुतः। इदमत्रावधेयम्——वेदप्रतिपादितसिद्धान्तान् विशदयितुमेव दर्शनानां प्रवृत्तिः। सर्वैरपि दार्शनिकैः प्रकृति-पुरुष-ईश्वराश्चेति पदार्थत्रयमस्य संसारचक्रस्य निर्वह-णार्थम् प्राधान्येनाङ्गीकृतम्। तत्तत्सिद्धान्ताङ्गीकार एव सर्वेषामेकवाक्यता। तत्प्रतिपादनप्रक्रियायां ते भिद्यन्तां नाम तत्र न कापि हानिः। सिद्धान्ततः एक-वाक्यतापन्नेषु तेषु प्रक्रियांशे किञ्चिद् भिद्यमानेष्वपि न कश्चन विसंवादः सम्भवति चेन्नाम तत्तत्प्रधानसिद्धान्तेषु एकवाक्यता घटेत, घटत एव हि खलु सा ? स्फुटम्। अतः तेषु किलाविरोध एव न कर्हिचिद्विरोधः।

तत्र वैशेषिकन्याययोः समानतन्त्रता प्रसिद्धा । जीव-जगतोः यथार्थस्वरूप-प्रतिपत्त्यर्थं हि चिदचिद्भेदनिर्णयार्थञ्च वैशेषिकदर्शनस्याविर्भावः । परन्तु तादृशज्ञानं न कर्हिचित् तर्कपरिष्कृतपद्धतिमन्तरा भवितुं शक्यम् । एतदर्थं न्याय-दर्शनस्य प्रवृत्तिः । तदेतदुभयोः समानतन्त्रत्वान्न कदापि कलहावकाशः । किञ्च द्रव्यादिपदार्थानां साधर्म्यवैधर्म्याभ्यां जायमानस्य तत्त्वज्ञानस्य निःश्रेयसाधिगमं प्रति हेतुत्वमाचक्षाणैरक्षपादमुनिभिः वेदप्रामाण्यञ्चाङ्गीकुर्वाणैः सह प्रमाणादिपदार्थानां तत्त्वज्ञानस्य साधनतामुपपादयतां वेदप्रामाण्यञ्चापि तथैव स्वीकुर्वतां नैय्या-यिकानां, कथमिव मिथो विरोधः सम्भवेत् शक्यसङ्कल्पः । नचानयोः तन्त्रयोः समानविषयत्वात् एकेनैव गतार्थत्वात् तयोरेकतरस्यापार्थताऽऽशङ्कनीया । तयो-रेकेन द्रव्यादिपदार्थानां विशदय्य व्युत्पादनाद्, अपरेण च प्रमाणादिहेत्वाभासा-न्तानां व्याख्यानादुभयोरपि आवश्यकतया नैकेनापरस्य गतार्थत्वं सम्भवति ।

नन्वयं न्यायवैशेषिकयोर्विरोधस्तु कथञ्चित् परिहृतः । परन्तु वेदेश्वर-वादिभ्यां ताभ्यां सह सांख्यदर्शनन्तु सामञ्जस्यं नाश्नुते । तस्य निरीश्वरवादित्वात् । दर्शनमिदं निरीश्वरवादीति पदेन जेगीयते । 'ईश्वरासिद्धे'रित्यादिसूत्रेषु कपिला-चार्येण प्रस्फुटम् ईश्वरो निराकृतो दृश्यते । तत्कथमिव ताभ्यां तस्याविरोधः सम्भवेदिति प्राप्ते ब्रूमः । नहि ईश्वरनिराचिकीर्षया सांख्यप्रवृत्तिः । किन्तु अन्तः-करणादिधर्माणां शोकमोहादीनाम् असङ्गे पुरुषे असद्भावं व्युत्पादयितुम् । इदमत्र बोध्यम् । कापिलानां नये––प्रकृत्या महदादौ जनयितव्ये ईश्वरो नापेक्ष्यते । स्वतन्त्रतयैव जञ्जन्यते । इति चिख्यापयिषायामेव तेषां प्रधानं तात्पर्यं न जातु तादृशे, आपाततः प्रत्यवभासमाने ईश्वरास्तित्वनिराकरणे । इति ।

न च 'ईश्वरासिद्धे'रिति सूत्रेण तु प्रव्यक्तमीश्वरो निराकृतः कथं तदन्य-तात्पर्यविषयतयोन्नीयत इति वाच्यम् । उक्तसूत्रस्य प्राधान्येन ईश्वरनिराकरणे तात्पर्याभावात् । तथा हि सांख्योपनीतप्रत्यक्षलक्षणस्य ईश्वरप्रत्यक्षेऽव्याप्ति-माशङ्क्य तन्निरासायैवोक्तसूत्रस्यावतारः । तत्र तावदेतत्प्रकरणमनुसन्धेयम् । प्रकरणानुरोधेनैव व्याख्यातानि च सूत्राणि यथार्थमर्थं समर्पयन्ति, नान्यथा । प्रकरणञ्चात्र प्रमाणलक्षणस्यैव । प्रत्यक्षं लिलक्षयिषुराचार्यः प्राह––

'यत्सम्बन्धं सत्तदाकारोल्लेखि विज्ञानं प्रत्यक्षम् ।' (सां० १।८९)

अस्यायमाशयः––यत् अर्थसन्निकर्षजन्यार्थाकारेण परिणता या चित्त-वृत्तिः तदेव प्रत्यक्षम् । एतल्लक्षणानुरोधेन प्रत्यक्षस्य सन्निकर्षजन्यत्वम् । ईश्वर-प्रत्यक्षन्तु न सन्निकर्षजन्यम्, तस्मात् तादृशलक्षणस्य दुष्टत्वात् न तल्लक्षणं श्रद्धेयं भवति । इति पूर्वपक्षं निराचिकीर्षुणैवाचार्येण––'ईश्वरासिद्धे'रिति सूत्रमुपनिबद्धम् ।

यमीश्वरमभिलक्ष्य भवता लक्षणस्यैतस्य तत्रभवता अव्याप्तिराशङ्क्यते तस्येश्वरस्यैवासिद्धेः। न तत्र अव्याप्तिलक्षणो दोषो न घटते इति भावः। अत्र अदोष इति पूर्वसूत्रादनुवर्त्तनीयम्। तादृशस्येश्वरस्य सिद्ध्यभावादित्यत इमे निरीश्वरवादिनः कपिलाचार्यस्य निरीश्वरवादित्वे सूत्रमिदं प्रथमोपपत्तिरूपेण प्रत्युपस्थापयन्ति। किञ्चान्यान्यपि त्रीणि सूत्राणि समुदाहरन्ति कपिलाचार्यस्य निरीश्वरत्वोद्वलकानि। तद्यथा--

प्रमाणाभावान्न तत्सिद्धिः। [सां० ५।१०]

प्रत्यक्षप्रमाणाभावान्नेश्वरस्य सिद्धिरित्यर्थः।

सम्बन्धाभावान्नानुमानम्। [सां० ५।११]

ईश्वरसाधकम्। एवञ्च--

श्रुतिरपि प्रधानकार्यत्वस्य। [सां० ११।२]

श्रुतिः शब्दप्रमाणमपि प्रधानकार्यत्वस्य प्रबोधिका न जात्वीश्वरस्य। ईश्वरसत्तायां प्रमाणजातन्न घटते। अतः ईश्वरवादमेव नाभिनन्दत्याचार्यः। इत्येष सांख्यस्यानीश्वरवादिनामभ्युपगमः। परन्तु सांख्यसेश्वरवादित्वमभ्युपयन्तो विद्वांसो व्यवस्थापयन्ति यन्नेमानि सूत्राणि ईश्वरास्तित्वनिरसनप्रयोजनानि। अपितु आचार्यकृतप्रत्यक्षलक्षणस्य प्रवृत्तिमियत्तयाऽवच्छेत्तुकामानि। ईदृशस्य प्रत्यक्षलक्षणस्याङ्गीकारे ईश्वर एव न सिद्ध्येद् इत्याशयः। भूयस्तर्कयन्ति ते यदि नाम कपिलाचार्यस्य निरीश्वरवाद एव स्यादभिप्रेतस्तर्हि कुत्रापि शास्त्रे ईश्वरस्य नामापि तस्य नावतरेत्स्मरणपदवीम्। न च केवलं ईश्वरनामैव तेन स्मृतमपितु जगतस्तदधिष्ठातृत्वमपि स्पष्टमङ्गीकृतमाचार्येण। तथाहि--

तत्सन्निधानादधिष्ठातृत्वं मणिवत्। [सां० ११।९]

अयमाशयः--नित्य-शुद्ध-मुक्त-स्वभाववतोऽपि जगदीश्वरस्य तत्सन्निधानात्[1] प्रतिपुरुषसन्निधानाद् अधिष्ठातृत्वं--प्रकृति-पुरुष-नियन्तृत्वमित्यर्थः। मणिवत्। यथा खल्वयस्कान्तमणेः सन्निधानमात्रेण शल्यादिनिष्कर्षणाय लौहप्रेरकत्वं सम्भवति तद्वदीश्वरस्यापि तज्ज्ञानक्रियायोगात् प्रकृतिपुरुषाधिष्ठातृत्वमुपपद्यते। अत्र सुस्पष्टमीश्वरस्य प्रकृतिपुरुषात्मकस्य जगतोऽधिष्ठातृत्वं सूत्रयताचार्येण ईश्वरसत्ता स्वीकृताऽवगम्यते तथा सति आचार्यस्य निरीश्वरवादिता यत्नशतेनापि बुद्धिपद्धतिं नाधिरोहति। तदित्थमीश्वरमधिकृत्य कापिलानां दर्शनान्तरैः सह न मनागपि विसंवादः सम्भवति। अतः दर्शनसमन्वय एवोत्तमः कल्पः,

१. सन्निधानञ्चाऽत्र प्रकृतिपुरुषाभ्यामीश्वरस्य साक्षात्सम्बन्धविशेषः। स च नापि समवायः नापि संयोगविशेषः। अपितु स्वस्वामिभाव इति विवेकः।

न तेषु कश्चन विरोधः । न च वाच्यं सांख्यानां दर्शनान्तरविलक्षणेन सत्कार्यवादेन सह असत्कार्यवादिनां दर्शनानां कथमिव समन्वयः सम्भवेदिति । प्रक्रिया-भेदेऽपि तयोः सत्कार्यासत्कार्यवादयोः परिणामसाम्यात् । इदमत्र बोध्यम्, सत्कार्यवादिनां मते हि उत्पादात्प्रागपि कार्यस्य कारणे विद्यमानता । उत्पत्त्यनन्तरं तदेव कारणं व्यक्तरूपेण कार्यत्वेन परिणमति । तदेवं सुतरां प्रतिपन्नं भवति यदव्यक्तावस्था हि कारणं तद्व्यक्तावस्था च पुनः कार्यम् । तयोरभेदस्तात्त्विकः भेदस्तु पुनर्व्यावहारिकः । भेदाभेदव्यवस्थायाः किञ्चिन्निबन्धनत्वात् । उक्तञ्च--

कार्यरूपेण नानात्वम् अभेदः कारणात्मना ।
हेमात्मना यथाऽभेदः कुण्डलात्मना यथा भिदा ।। इति ।

यथा कर्मः स्वावयवेभ्यः संकोचविकासिभ्यो न भिन्नः एवं घट-मुकुटादयो मृत्सुवर्णादिभ्यो न भिन्नाः ।

सोऽयं सिद्धान्तः सत्कार्यवादनाम्ना प्रसिद्धः । वाचस्पतिमिश्राश्चाप्याहुः-- नहि कारणं विना कार्यम् । कारणञ्च सदिति कथं नु तदभिन्नं कार्यमसद् भवेत् । पटस्तन्तुभ्यो भिद्यते तन्तुधर्मत्वात् इह यद्यतो भिद्यते तत्तस्य धर्मो न भवति । यथा गौरश्वस्य । धर्मश्च पटः तन्तूनां, तस्मान्नार्थान्तरम् एवम् उपादानोपादेयभावाच्च नार्थान्तरत्वं तन्तुपटयोः । ययोरर्थान्तरत्वं न तयोरुपादानोपादेयभावः । यथा घटपटयोः । उपादानोपादेयभावश्च तन्तुपटयोः । तस्मान्नार्थान्तरत्वम् । यथा कूर्मः स्वावयवेभ्यः संकोचविकासिभ्यः न भिन्नः एवं घटमुकुटादयोऽपि सृत्सुवर्णादिभ्यो न भिन्नाः । सोऽयं सत्कार्यवादः सांख्यानां मुख्यो राद्धान्तः । नैय्यायिकानामसत्कार्यवाद एव मुख्यः । तथाहि द्वयणुकादिब्रह्माण्डपर्यन्तं यावत्कार्यजातं स्वोत्पत्तेः प्राक् सर्वथाऽविद्यमानमपि स्वकारणादेव सल्लक्षणान्नोत्पद्यते इत्येष सिद्धान्तः असत्कार्यवादनाम्ना प्रसिद्धः । इदमत्रावधेयम्--यथा बीजे वटरूपमविद्यमानमपि व्यक्तरूपेण, अव्यक्तरूपेण तु तदस्तित्वन्तु सम्भवत्येव तत्रेत्येष सत्कार्यवादिनामभ्युपगमः । असत्कार्यवादिनां तु बीजे वटरूपस्य सर्वथाऽविद्यमानत्वादपि कारणसत्त्वादेव वट उत्पद्यते । यथा परमाणुसंघाताद्विश्वम् इति । एवमनयोरसत्कार्यसत्कार्यवादयोः समन्वयस्तु दुरुपपाद एव इति । एवं प्राप्ते ब्रूमः--सत्यमेतत् । तथा सत्यपि परिणतिरूपा उत्पत्तिस्तु उभयोरपि समानाकारैव । तत्र कारणे कार्यसद्भाववादः कापिलानां, कारणे कार्यासद्भावश्च तार्किकाणां परन्तु कार्यम्प्रति कारणस्य नियतपूर्ववर्त्तित्वन्तु तयोरुभयोरपि समानमेवेत्यविरोधः ।

ननु स्थितेऽप्येवं तादृशसमन्वयोऽयमेकदेशीय एव, न कर्हिचित्सर्वसिद्धान्ता-

वगाही। कथमिति चेदुच्यते––यद्यपि सिद्धान्ते कथञ्चित्तादृशो विरोधः परिह्रियेतापि परन्तु विधिविषयेषु दर्शनानि खल्वतितरां बेभिद्यन्ते। तत्र तु दर्शनानामन्योन्यविरोधः सुस्पष्टमेव प्रतिभाति। न केवलमिदमेव अपि तु तत्तद्दर्शनाचार्याणामपि मिथो विरोधः प्रव्यक्तं प्रतीयते। तद्यथा––नैय्यायिकेषु–इष्टसाधनत्वं, बलवदनिष्टजनकत्वं, कृतिसाध्यत्वञ्चेति त्रितयमपि विध्यर्थत्वेनोन्नीयते। तत्र त्रिष्वप्येतेषु विशेषणभावापन्नेषु एकैव शक्तिरिति प्राञ्चः। पृथक् पृथगेवेत्यर्वाञ्चः। कृतिसाध्यत्वमेव विध्यर्थ इति रत्नकोशकृत्। लिङ्घटितवाक्योच्चारयितुः अहमेनं प्रेरयामीत्याशयविशेषे लिङर्थ इत्युदयनाचार्यः।

एवमेव वेदान्तिषु––वेदाज्ञैव लिङर्थः इति श्रीभाष्यकृतः। तथैव तदनुयायिनस्सेश्वरमीमांसाकृदादयश्च। इष्टसाधनत्वमेवेति सुरेश्वराचार्यस्तदनुयायिनश्च, चित्सुखाचार्यप्रभृतयश्च। इष्टसाधनत्वं कृतिसाध्यत्वञ्चेति वाचस्पतिमिश्राः। मीमांसकेषु भाट्टेषु तत्त्वतः इष्टसाधनत्वमेव लिङर्थ इति मण्डनमिश्राः। इष्टसाधनत्वमेव प्रवर्त्तनात्वरूपेण लिङर्थ इति पार्थसारथिमिश्रप्रभृतयः। इष्टसाधनत्वाद्यतिरिक्तः प्रवर्तनाख्यः कश्चिद्धर्मविशेषः एवेति भट्टसोमेश्वरः खण्डदेवादयश्च।

प्राभाकरेषु पुनः––अपूर्वापरपर्यायः कार्यात्मनियोग इति लिङर्थः इति प्रभाकरः। एभ्योऽन्येऽपि केचन पक्षा विलसन्ति मिथ इमे विसंवादमालम्बमानाः, न ते विस्तरभियात्रोदाह्रियन्ते। तद्विद्यमाने सति तादृशि भूयसि विसंवादे तत्र समन्वयगाथा तु नूनं वह्निना सिञ्चतीत्यादिवत् सर्वथानुपपन्ना एवेति चेन्न। कुतः ? यत आपाततो वैरुध्येनावभासमानानामपि एषां पक्षाणां तात्पर्यविषयीभूतस्यार्थस्य समानाकारत्वे न कस्यापि वैमत्यम्।

अयमाशयः––प्रवर्त्तना हि नाम शब्दनिष्ठः कश्चिदलौकिको धर्मविशेषः। स एव लिङर्थत्वेनाभ्युपेयः। एष एवार्थो न्यायसुधाकृद्भिरभ्युपगतः, खण्डदेवादिभिश्च सुतरामनुसृतः इति न तत्र कश्चित्तात्विको विरोधः इति दिक्।

प्राहुश्च मण्डनमिश्रमहाभागाः––

अस्ति प्रवर्त्तनारूपमनुस्यूतं चतुर्ष्वपि।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया॥ इति।

अतएव––'विधिनिमन्त्रणामन्त्रणाधीष्टे'त्यादि सूत्रयता भगवता पाणिनिना प्रवर्त्तनारूप एव विध्यर्थो विहितः। दीक्षितेनापि प्रवर्त्तनायामेव लिङ इत्येव सुवचमित्युक्तम्। इत्थं न दर्शनेषु कोऽपि विसंवादः सम्भवति।

दर्शनानामेकवाक्यतामालम्ब्य भूयोऽपि विभावनीयम्भवति यदस्य नानाभेदभिन्नस्य दृश्यजगतः समस्तमौलिकसमस्यानां समाधानपथदर्शकं हि शास्त्रं

दर्शनमुच्यते। दृश्यते येन तद्दर्शनमिति तद्व्युत्पत्तेः। पुरुषश्च मननशीलत्वादेव मनुष्य उच्यते। चिन्तान्तरविमुक्तः स विश्वसमस्यामेव चिन्तयति, विविध-दृष्टिकोणमाश्रित्य। उक्तञ्च--

'आत्मा वाऽरे द्रष्टव्यः, श्रोतव्यः, मन्तव्यः, निदिध्यासितव्यः। आत्मनो वाऽरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विज्ञातम्भवति।' [बृ० उ० २।४।५] महर्षियाज्ञवल्कस्यायमुपदेशः भारतीयदर्शनस्याधारभित्तित्वेन सर्वैः मुक्तकण्ठेन स्वीक्रियते। मनुष्यजीवनस्य च चरमलक्ष्यरूप आत्मसाक्षात्कार एवेति सर्वसम्मतः कल्पः। सोऽयमात्मसाक्षात्कारः श्रवणमनननिदिध्यासनमन्तरेण न सम्भवतीति आत्मसाक्षात्कार एव च दर्शनहेतुत्वेन निर्दिष्टः--

श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा तु सततं ध्येय एते दर्शनहेतवः॥ इति।

अयमभिसन्धिः--

श्रुतिद्वारा श्रुतस्यात्मनो बुभुत्सया मननं प्रवर्त्तते मननद्वारा पक्षप्रतिपक्षोप-पत्तिभिर्निर्णीते आत्मादिसत्वे निदिध्यासनं प्रवर्त्तते निदिध्यासनादेवात्मसाक्षात्कारः। ततोऽपवर्गः। श्रवणव्यतिरेके, मननाभावात्, निदिध्यासनाऽसम्भवे साक्षात्कारा-भावः। साक्षात्काराभावे चापवर्गानुपपत्तिः। यदा सर्वाणि दर्शनानि, आत्मसाक्षा-त्कारौपयिकं मोक्षमेव परमावश्यकत्वेनामनन्ति ततो विसंवादावकाशः कुतः। सोऽय-मात्मसाक्षात्कारः श्रवण-मनन-निदिध्यासननिबन्धनः। तत्र वेदान्तमीमांसे श्रवणम्, न्याय-वैशेषिके मननम्, सांख्ययोगौ च निदिध्यासनमाशंसन्ति। एवं षण्णामप्येषां वैदिकदर्शनानां तुल्यरूपेण परमपुरुषार्थ इत्यपराभिधानोऽपवर्ग एव प्रतिपाद्यो विषयः। अतः समन्वय एव दर्शनेषु सुतरां जागर्ति न मनाग् विसंवादः।

किं बहुना, प्रायः सर्वेषामेव विपश्चिदपश्चिमानां भारतीयानां, दर्शनानां मिथः समन्वय एव तात्पर्यमवलोक्यते न विरोधे। तथा चाह अभिनवगुप्ताचार्यः –

तीर्थक्रियाव्यसनिनां, स्वमनीषिकाभि-
रुत्प्रेक्ष्य तत्त्वमिति यद्यदमी वदन्ति।
तत्तत्त्वमेव, भवतोऽस्ति न किञ्चिदन्यत्
संज्ञासु केवलमयं विदुषां विवादः॥

सिद्धसेनदिवाकरोऽपि व्याजहार--

उदधाविव सर्वसिन्धवः समुदीर्णास्त्वयि नाथ दृष्टयः।
न च तासु भवान् प्रदृश्यते प्रविभक्तासु सरित्स्विवोदधिः॥

महाकविः कालिदासश्चापि—

बहुधाप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः।
त्वय्येव निपतन्त्योघा जान्हवीया यथार्णवे॥

यथोक्तविषये आपाततो प्रत्यवभासमानोऽपि तादृशविरोधोऽन्ततः पर्यवस्यति ब्रह्मैक्यवादे तद्वदेव सर्वा अपि दार्शनिकविचारधाराः, आपाततो भिन्नत्वेनाभासमाना अपि परिणतौ मानवजीवनस्य चरमोद्देश्यत्वेनाऽङ्गीकृते मोक्ष एव पर्यवस्यन्ति। तत्को नु खल्वत्र विसंवादस्यावकाशः। तस्मात् सत्स्वपि प्रभूतभेदभिन्नेषु तेषु तेषु प्रस्थानेषु प्राधान्येन तत्तत्सिद्धान्तानामन्येषामन्यत्रान्तर्भावेन चरमोद्देश्यस्यानतिपार्थक्याद् भूयसा समानाकारतया तेषामेकवाक्यतैव। अतो नूनं समन्वय एव तेषु पम्फुल्यते न मात्रयाऽपि विसंवादः। इति दिक्।

इति सर्वतन्त्रस्वतन्त्रैः पदवाक्यप्रमाणपारावारीणः श्रीमदाचार्यपण्डितद्विजेन्द्रनाथशास्त्रि-सिद्धान्तशिरोमणिभिः विरचिते संस्कृतसाहित्यविमर्शाख्ये ग्रन्थे तृतीयः परिच्छेदः।



श्री रामानुजाचार्य

## चतुर्थः परिच्छेदः

# अथ साम्प्रदायिकदर्शनप्रकरणम्

श्रीरामानुजदर्शनम्—निम्बार्कदर्शनम्—मध्वदर्शनम्—वल्लभदर्शनम् । चार्वाकदर्शनम्—जैनदर्शनम्—बौद्धदर्शनम् ।

## रामानुजदर्शनम्

श्रीरामानुजाचार्यः—विशिष्टाद्वैतमतसाहित्यम्—सुदर्शनसूरिः—श्रीवेङ्कटनाथः—रामानुजीयसिद्धान्ताः—ईश्वरः— जीवब्रह्मणोः सम्बन्धः—मोक्षः ।

### श्रीरामानुजाचार्यः

प्रायशः षट्त्रिंशदुत्तरनवशतवर्षात्प्राक् (९७६) षट्सप्तत्युत्तरदशशतमिताब्दा (१०७६) मवततार स कोऽपि युगपुरुषो रामानुजो नाम धर्मधुरन्धरः । अनेन महात्मना स्वायुषोऽन्तिमानि दर्शवर्षाणि केषाञ्चित् महामहिमशालिनां श्रीरंगनाथस्वामिनां चरणेषु यापितानि । आयुषो द्वाविंशत्युत्तरशततमे वर्षे पूर्णायुः सुखमनुभूयाऽसौ भौतिकं वपुस्तत्याज । वैष्णवदर्शनस्य च आसेतुहिमाचलं कमपि बलवत्तरं प्रचारं विधाय तस्य प्रतिष्ठापनं कृतम् । सर्वत्र भारते भक्तिज्ञानमार्गस्य चाऽजस्रधारा प्रवाहिता । श्रीमच्छङ्करमुनिपादानन्तरं, वैदुष्यदृशा तर्कपाटवेन च द्वितीयस्थानमेष एव महर्षिरलङ्करोति । तत्र भवतो रामानुजाचार्यस्य दिव्यं जीवनमद्यापि भव्यं भारतं कामपि प्रोज्ज्वलां प्रेरणां प्रददाति यया मानवसंसृतिः प्रचुरमालोकिता भवति समनुप्राणिता च ।

सोऽयं रामानुजाचार्यः जन्मना श्रीपेरुम्बुटूरं नगरमलमकार्षीः क्रैस्ते १०२७तमे शतके । बाल्यावस्थायामेवास्य जनकः पञ्चत्वं गतोऽनुश्रूयते । बालशिक्षानन्तरं स वेदान्ताध्ययनार्थं काञ्जीवरं गतः । तत्र विद्वत्प्रवरश्रीयादवप्रकाशसकाशाद् वेदान्तशास्त्रमध्यैष्ट । परन्तु स न तुतोष, विवादास्पदेषु विषयेषु वेदान्तशास्त्राध्ययनेन । रामानुजाचार्यस्य प्रकाण्डपाण्डित्येनातितरां प्रसन्नो आलवेन्द्यनामा मठाधीशः निश्चिकाय तं श्रीनगरमठाधीशं विधातुम् । प्रतिष्ठापयामास च तत्र तम् । यावदायुषमनेन महानुभावेन विशिष्टाद्वैतस्य प्रचारः कृतः । विशिष्टाद्वैतवादस्यायमेव प्रतिष्ठापक आचार्यः ।

उत्तरमीमांसामालम्ब्य शाङ्करभाष्यमतिरिच्य रामानुजनिम्बार्क-मध्व-वल्लभाचार्याणां स्व-स्व-सम्प्रदायमुद्दिश्यान्यान्यपि भाष्याणि विलसन्ति । तेषामपि संक्षेपतोऽत्र निरूपणं न विदुषां वैरस्यमाधास्यतीति मन्यामहे । तत्र तावद् विशिष्टाद्वैतप्रतिपादकं भाष्यं श्रीरामानुजाचार्येण विरचितम् । श्रीरामानुजाचार्यः श्रीयामुनाचार्यपौत्रस्य श्रीशैलपूर्वाचार्यस्य भागिनेयः । अनेन वेदान्तशास्त्रस्याध्ययनं श्रीयादवप्रकाशसकाशात्कृतम् । परमद्वैतवादो नेमं सुसन्तोषयमास । अद्वैतमतं दोषबहुलमवलोक्यासौ ततो विमुखो बभूव । तदनु अन्यत्र बहुत्र च वैष्णवशास्त्राण्युन्मथ्य परमवैदुष्यं प्राप । यामुनाचार्यादनु रामानुजाचार्य एव प्रधानाचार्यतां लेभे इत्यवोचाम । शैवमतावलम्बि-चोलनरेशकृतात्याचारप्रपीडितोऽसौ मैसूर-पत्तनं गतः । गृहकलहादुद्वेजितः पुनः त्यक्तसर्वपरिग्रहो गृहीतसंन्यासः मेलकोटमण्डले प्रायशः द्वादशवर्षपर्यन्तमध्युवास । तत्रैव विष्णुवर्द्धनश्च वैष्णवधर्मे दीक्षितः । तदनु ख्रैस्ते ११०० मितेऽब्दे च ब्रह्मसूत्रेषु विशिष्टाद्वैतप्रतिपादकं श्रीभाष्याख्यां विख्यातां व्याख्यां व्यरीरचत् । श्रीभाष्यं हि रामानुजाचार्यस्य प्रकाण्डपाण्डित्यस्य परमप्रदर्शकं विशिष्टाद्वैतसिद्धान्तस्य सुविस्तृतं प्रमाणभूतं विवेचनम् । रामानुजाचार्येण प्राक्तनानां, महर्षिबोधायनादारभ्य टक-द्रमिड-गुहदेव-कपर्दि-भारुचि-प्रभृत्याचार्याणां व्याख्यानान्याधारीकृत्य भाष्यमिदं विरचितमिति निर्दिष्टम् । वेदान्तसंग्रहोऽस्य शाङ्करभास्करमतखण्डनात्मकः प्रसिद्धो ग्रन्थः । वेदान्तसारः, वेदान्तदीपः, गद्यत्रयम्, गीताभाष्यम् श्रीभाष्यञ्चेति प्रख्याता ग्रन्थाः । श्रीभाष्यस्य गूढार्थप्रकाशनाय आचार्यैरनेके सन्दर्भाः प्रणिबद्धाः ।

## विशिष्टाद्वैतमतस्य साहित्यम्

विशिष्टाद्वैतप्रतिपादकं साहित्यमपि शाङ्करसाहित्यवदतिविस्तृतं किन्तु न सर्वं मुद्रितमुपलभ्यते । करलिपिबद्धमेवैतत् प्रायशोऽद्यापि । तत्र सुप्रख्यातानां ग्रन्थकृतां विवरणमत्र प्रसङ्गसङ्गतं प्रतिभाति ।

**सुदर्शनसूरिः**—एषां स्थितिकालः (१२००—१२७५) । प्रसिद्धविदुषो वरदाचार्यस्य शिष्यः । श्रुतिप्रकाशिकाख्याऽस्य श्रीभाष्योपरि प्रख्याता व्याख्या । श्रुतिदीपिका, वेदार्थसंग्रहः, उपनिषद्व्याख्या, तात्पर्यदीपिका, आद्या अन्ये सन्दर्भाः सुदर्शनसूरिकृतित्वेन विलसन्ति ।

**श्रीवेङ्कटनाथः**—वेदान्ताचार्योपाधिप्रसिद्धः वैष्णवसम्प्रदाये अद्वितीयो विशेषज्ञो विद्वान्, कवितार्किकः सर्वतन्त्रस्वतन्त्रः इत्यादि विरुदभूषितः । अस्य काव्यप्रपञ्चे हंसदूत-रामाभ्युदय-यादवाभ्युदयादिकाव्यानि सुप्रसिद्धानि । दर्शन-ग्रन्थेषु च श्रीभाष्योपरि 'तत्त्वटीका', ब्रह्मसूत्राधिकरणेषु च 'अधिकरणसारावलि-

नाम्नी' पद्यमयी विवेचना, तत्त्वमुक्ताकलापः, न्यायपरिशुद्धिः, न्यायसिद्धाञ्जनम्, गीतार्थतात्पर्यचन्द्रिका आद्या अतिशयमहत्वशालिनो ग्रन्थाः विलसन्ति। अस्य समयः ख्रीस्त १२६९--१३६९ शतके विभाव्यते।

आत्रेयरामानुजः, लोकाचार्यः (अनयोः स्थितिकालः १३२७ तमे ख्रीस्ताब्दे), वरवरमुनिः (पञ्चादशतमे ख्रीस्तशतके), श्रीनिवासाचार्यः (षोडशतमे शतके), रंगरामानुजश्च इमे खलु वैष्णवसिद्धान्तानाम् अन्ये प्रसिद्धाः आचार्याः।

## रामानुजीयसिद्धान्ताः

श्रीमद्रामानुजनयेन त्रय एव पदार्थाः। चिदचिदीश्वरश्चेति।[1] तत्र चित् भोक्ता जीवः, अचित् भोग्या प्रकृतिः, ईश्वरश्च सर्वव्यापी, सर्वज्ञः, सर्वान्तिर्यामी, चेति। एतत्त्रित्वकल्पना चास्य 'भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म एतत्।" इति श्वेताश्वतरीयश्रुतिमालम्ब्य प्रवृत्तेति समवधार्यते। एषां त्रयाणां नित्यत्वेऽपि भोक्तृभोग्ययोरीश्वरस्याधीनत्वमन्तर्यामितया चेश्वरस्य च नियन्तृत्वञ्चेति अभिमतम्। उक्तञ्च :—

"परमेश्वरस्यैव भोक्तृत्वभोग्ययोरुभयोरन्तर्यामिरूपेणावस्थानम्"।

[स० द० सं० पृ० ४०]

## ईश्वरः

तत्रापि, ईश्वरस्य प्राकृतगुणराहित्यं, निखिलहेयप्रत्यनीकत्वम्, अनन्तज्ञानानन्दस्वरूपत्वं, सकलसृष्टिस्थितिसंहारकर्त्तृत्वं श्रीरामानुजाचार्याणामभिप्रेतम्। अतः सगुणत्वमेवेश्वरस्य न निर्गुणत्वम्। निर्गुणवस्तुनो जगति कल्पनाऽसम्भवात्। तथाहि—

"सर्वप्रमाणस्य सविशेषविषयतया निर्विशेषवस्तुनि न किमपि प्रमाणं समस्ति। निर्विकल्पप्रत्यक्षेऽपि सविशेषमेव वस्तु प्रतीयत इति।" [स० द० सं० पृ० ४३] न निर्विशेषमिति भावः।

श्रीरामानुजीयानामीश्वरस्य, जगतोऽभिन्ननिमित्तोपादानकारणत्वं, न चैतत्कारणत्वमविद्यानिबन्धनं नापि परनियोगायत्तम्, अपितु यादृच्छिकम्। लीलामात्रमेव सृष्टिप्रयोजनम् न किञ्चित्प्रयोजनान्तरम्। यथा सृष्टेः प्रवृत्तिः

---

१. ईश्वरश्चिदचिच्चेति पदार्थत्रितयं हरिः।
ईश्वरश्चिदिति प्रोक्तो जीवो दृश्यमचित्पुनः॥
[स० द० सं० पृ० ३८]

लीलार्थम् तथैव प्रलयस्यापि। प्रलयो हि एषां नयेन लीलामात्रप्रयोजन एव। प्रलयो हि नैषां नयेन ध्वंसः। किन्तु स्थूलजगतः सूक्ष्मरूपेण परिणतिरूप एव। "स्थूलसूक्ष्मचिदचित्प्रकारकं ब्रह्मैव कार्यं कारणं चेति ब्रह्मोपादानं जगत्। सूक्ष्मचिदचितोः सर्वावस्थावस्थितयोः परमपुरुषशरीरत्वेन तत्प्रकारतया पदार्थत्वात् तत्प्रकारकः परमपुरुषः सर्वदा सर्वशब्दवाच्य इति विशेषः।" [श्रीभाष्य पृ० ८२]।

अयं भावः--प्रलयकाले, चिदचितोः सूक्ष्मरूपापन्नतायां चिदचिद्विशिष्ट ईश्वरः कारणावस्थब्रह्मपदेनोच्यते, सृष्टयवस्थायाञ्च पुनः कार्यावस्थब्रह्मेति। न निर्विशेषस्य ब्रह्मणो कस्यामपि अवस्थायां स्थितिरुपलभ्यते। अद्वैतपरासु श्रुतिषु कारणावस्थब्रह्मण एव वर्णनमुपलभ्यते। ईश्वरः समस्तहेयगुणैर्हीनत्वान्निर्गुणः, तथा च निर्गुणवादश्च परस्य ब्रह्मणो हेयगुणसम्बन्धत्वादुपपद्यते। [श्रीभाष्य पृ० ८३] विशिष्टाद्वैतवादिनां 'एकमेवाद्वितीयम्' इत्यादिवचनानामपि तात्पर्यम् अव्याकृतब्रह्मण्येवावसीयते। तथाहि--वस्त्वन्तरविशिष्टस्यैवाद्वितीयत्वश्रुत्यभिप्रायः। सूक्ष्मचिदचिद्विशिष्टस्य ब्रह्मणः तदानीं सिद्धत्वात् विशिष्टस्यैव अद्वितीयत्वं सिद्धम्।' इति वेदान्तसारे। अतएव वादोऽयं विशिष्टाद्वैतनाम्ना प्रख्यातः। रामानुजीयैरीश्वरेण सह चिदचितोः अपृथक्सिद्धिसम्बन्धोऽङ्गीकृतः। स च न्यायवैशेषिकाभिमतसमवायसम्बन्धानुरूपतामवगाहमानोऽपि किञ्चिदिव ततो भिद्यते। समवायो हि नाम बाह्यः सम्बन्धः। अपृथक्सिद्धिस्तु पुनरान्तरः। चिदचितोरीश्वरेण सह यः सम्बन्धः शरीरेणात्मनस्तदनुरूप एवेति तेषामभ्युपगमः। उक्तञ्च श्रीभाष्ये--

'सर्वं हि परमपुरुषरूपेण सर्वात्मना स्वार्थे नियम्य धार्यं तच्छेषतैकस्वरूपमिति सर्वं चेतनाचेतनं तस्य शरीरम्। [श्रीभाष्यम् २।२।९]।

अयं भावः--यथा आत्मना शरीरं धार्यते, नियम्यते, तत्कार्यनिर्वृत्त्यर्थं प्रवर्त्यते च तथैव परमेश्वरेण चिदचिदात्मकं तत्त्वं धार्यते सृष्टयर्थं प्रवर्त्यते च प्रधानस्य नियन्तृत्वमप्रधानस्य च नियम्यत्वम्। यथा च प्रधानस्य विशेष्यत्वमप्रधानस्य पुनः विशेषणत्वम् सर्वसम्मतम्, तथैवात्रापि नियामकतया प्रधानभूतस्य परमेश्वरस्य विशेष्यत्वम्। नियम्यत्वेनाप्रधानभूतस्य चिदचितोर्जीवजगतो विशेषणत्वम्। एवं सति विशेष्यनिघ्नतया च विशेषणस्य सर्वकालावच्छेदेन तद्विशेष्यसहचारित्वं को नामाऽपह्नोतुं पारयेत। तस्मात् विशेषणविशिष्टयोरेकत्वकल्पनायां न किमप्यसामञ्जस्यम्। युक्तियुक्तैव खलु सा। अतः ब्रह्मणो विशिष्टाद्वैतत्वं सूपपन्नमेवेति तेषामभ्युपगमः। शाङ्करनये तु ब्रह्मैव मायोपाध्यवच्छिन्नमीश्वरत्वेन, अविद्योपाध्यवच्छिन्नञ्च पुनस्तदेव जीवत्वेनोन्नीयते, दृश्यं जगच्चेदं

प्रातिभासिकं मिथ्येति यावत्, न कर्हिचिद्वास्तवम्। अत एव अद्वैतवाद एकत्ववादो वेति शाङ्करनये यथा न तथा रामानुजमते, तत्र तु चिदचिदित्युभयात्मकमीश्वरस्य शरीरभूतम् नित्यञ्च। ब्रह्मैवेश्वरः। तदेषां त्रैतवाद एवाभिमतः। बलीयांश्चाभ्युपगमः। तदित्थं जीवजगद्रूपस्य चिदचिदात्मकस्य तत्त्वस्य ब्रह्मभिन्नत्वं नित्यत्वञ्च सिद्धान्तिततया त्रैतवादमेवोपोद्वलयति एष सम्प्रदायः।

## चित्

ईश्वरस्वरूपं निरूप्याधुना चित्तत्त्वं विचार्यते। चित् जीवः, स च देहेन्द्रियमनोविलक्षणो निरवयवः निर्विकारः, ज्ञानाश्रयः, अजडः, अणुः, सर्वतोभावेनेश्वरालम्बितः। ईश्वरानुग्रहेण स इष्टं सम्पादयति न कर्हिचिदन्यथा।

अद्वैतवादिनां जीवस्य विभुत्वं विशिष्टाद्वैतवादिनाञ्च पुनरणुत्वम्। अद्वैतवादिनां निसर्गतः जीवस्यैकत्वं विशिष्टाद्वैतवादिनाञ्च पुनरनेकत्वम्, प्रतिव्यक्ति भिन्नत्वञ्चेति।

## जीवब्रह्मणोः सम्बन्धः

जीवब्रह्मणोः सम्बन्धो विशेषणविशेष्यभावरूपः, अंशांशिभावसम्बन्धो वा।[1] तथा च भगवती श्रुतिः 'तत्त्वमसि श्वेतकेतो' इति तत्पदं हि सर्वज्ञं सत्यसङ्कल्पं जगत्कारणं ब्रह्म परामृशति। 'तदैक्षत बहु स्याम्' [छा० ६।२।३] इत्यादिषु तस्यैव प्रकृतत्वात्। तत्समानाधिकरणं त्वं पदं च अचिद्विशिष्टजीवशरीरकं ब्रह्म प्रतिपादयति। प्रकारद्वयावस्थितैकवस्तुपरत्वात् सामानाधिकरण्यस्य। [श्रीभाष्यम्० पृ० ८०]। यत्तु अन्ये 'त्वं' पदमत्र जीवप्रतीकं मन्यन्ते, तद्रामानुजसम्प्रदायिनः न सहन्ते। ते 'त्वं' पदेन अचिद्विशिष्टजीवशरीरकं ब्रह्मैव परामृशन्ति। तेषां नयेन च अन्तर्यामिणः विश्वनिर्मातुरीश्वरस्य च तात्त्विकमैक्यम्। तदेव विशिष्टाद्वैतपदेन परिभाष्यते।

## अचित्

अचित्खलु ज्ञानशून्यं विकारास्पदं तत्त्वम्। नित्यञ्चैतत्। इदञ्चाचित् तत्त्वं त्रिविधम्——शुद्धसत्वं, मिश्रसत्वं, सत्वशून्यञ्चेति। नित्यविभूत्यपरनामधेयं

---

१. वस्तुतः देहदेहिवत् जीवब्रह्मणोपि भेदः। जीवो दुःखत्रयप्रपीडितः न तथेश्वरः। तर्हि विरुद्धस्वभावयोस्तयोर्न कथमपि अभेदः शक्यसंकल्पः। तथा भेदप्रतिपादिका श्रुतिः "स कारणं करणाधिपाधिपः" [श्वेता० उप० ६।९]; "आत्मानमन्तरो यमयति स त आत्मा अन्तर्याम्यमृतः" [बृह० उप० ३।६।३] इत्याद्या भेदप्रतिपादिन्यः श्रुतय एव उभयोर्भेदं प्रतिपादयन्ति, नाऽभेदम्।

शुद्धसत्वमिदं हि रामानुजदर्शनस्य वैशिष्टचम् । मिश्रसत्वं तमोरजोमिश्रितं तत्त्वम् । तदिदं हि प्राकृतसृष्टेरुपादानकारणत्वेनोन्नीयते । इदमेव माया, अविद्या, प्रकृतिः इत्याद्यभिधानान्तरैरपि परिभाष्यते । सत्वशून्यञ्च पुनस्तत्त्वं कालोऽभिधीयते । शुद्धतत्त्वं तु तमोरजोगुणसंसर्गहीनं, नित्यं, ज्ञानानन्दजनकं निरवधिकतेजोमयद्रव्यविशेषः। भगवतः परमेश्वरस्य व्यूहविभवादिरूपम् अनेनैव शुद्धसत्वेन उपादानभूतन निर्मीयते। रामानुजमतेन जीवात्मा शरीरमन्तरा नावतिष्ठते। मुक्तावस्थायामपि स सशरीर एव । शरीरन्तु पुनः शुद्धसत्त्वनिर्मितमेव, न कर्हिचित् प्राकृतिकम् इति दिक् ।

## मोक्षः

रामानुजसिद्धान्तेन भगवतः परमेश्वरस्यानुग्रहादेव जीवः संसारजालकाद्विमुच्य मुक्त्यै कल्पते। मुक्तिं प्रति कर्मसचिवो भगवदनुग्रहः एकहेतुः । वेदविहितकर्मानुष्ठानाच्चित्तशुद्धिः, चित्तशुद्धौ सत्यां ब्रह्मजिज्ञासा, ब्रह्मजिज्ञासायां भक्त्युदयः, भक्त्युद्रेकादेव ब्रह्मावाप्तिः स एव मोक्ष इति विवेकः । उक्तञ्च, "उभयपरिकर्मितस्वान्तस्यैकान्तिकात्यन्तिकभक्तियोगलभ्यः ।" इति । उभयपदमत्र ज्ञानकर्मसमुच्चयं परामृशति । एष च भगवदनुग्रहः यदृच्छाफलकः न कारणान्तरजन्यः । भगवच्चरणशरणमेव सर्वात्मना तदनुग्रहोपोद्बलकः[1] । आह च भगवान् यामुनाचार्यः आत्मबन्दारस्तोत्रे--

'न धर्मनिष्ठोऽस्मि न चात्मवेदी, न भक्तिमाँस्त्वच्चरणारविन्दे।
अकिञ्चनो नाऽन्यगतिः शरण्यं त्वत्पादमूलं शरणं प्रपद्ये ॥' इति दिक् ।

अद्वैतवादिनो यथा मुक्तावस्थायां जीवस्य ब्रह्मणि लयं स्वीकुर्वन्ति न तथा विशिष्टाद्वैतवादिनः। ते तु ब्रह्मसाम्यमेवाभिनन्दन्ति, न ब्रह्मभूयत्वम् । यद्यपि तेषा नये ब्रह्मणः सर्वज्ञत्वं, सत्यसङ्कल्पत्वञ्च मुक्तजीवः समधिगच्छति परं न सर्वकर्त्तृत्वम्। सर्वकर्त्तृत्वन्तु केवलमीश्वरस्यैव। तथा च सर्वदर्शनसंग्रहेः --

एवं गुणाः समानाः स्युर्मुक्तानामीश्वरस्य तु।
सर्वकर्त्तृत्वमेवैकं तेभ्यो देवे विशिष्यते ॥ [स० द० सं०]

ब्रह्मैक्यं जीवस्य विशिष्टाद्वैतवादिनो न सहन्ते । परिच्छिन्नस्य परिमितस्वतन्त्रसत्ताकस्य जीवस्य सर्वशक्तिमता विभुना ब्रह्मणा सहैकीभावस्य सर्वथाऽ-

---

१. एवं संसृतिचक्रस्थे, मृग्यमाणे स्वकर्मभिः ।
जीवे दुःखाकुले विष्णोः, कृपा काप्युपजायते ॥ [अहि संहिता]।

सम्भवात् । उक्तञ्च श्रीभाष्ये, नापि साधनानुष्ठानेन निरस्ताविद्यस्य परेण स्वरूपैक्यसम्भवः अविद्याश्रयत्वयोग्यस्य तदनन्यत्वासम्भवात् । [श्रीभा० १।१।११]

इदमत्रावधेयम्—विशिष्टाद्वैतवादिनां, जीवात्मनः मुक्त्यवस्थायां ब्रह्मसारूप्यं, न तु ब्रह्मभावः। नित्यस्य सतो जीवात्मनो विनाशापत्तेः। न च स्वतन्त्रसत्ताकस्य अजस्य तस्य विनाशः शक्यसम्भवः। ब्रह्मैकत्ववादिनां अद्वैतवादिनां तु अविद्योपाध्यवच्छिन्नजीवस्य ब्रह्मांशभूतस्य कदाचिद् ब्रह्मणि लयः सम्भवेत् नास्माकं नित्यस्य जीवस्य स्वतन्त्रसत्तामङ्गीकुर्वतां विशिष्टाद्वैतवादिनाम् इति तेषामाशयः। 'निरञ्जनः परमं साम्यमुपैति'' इत्यादि श्रुतयोऽपि साम्यमुपदिशन्ति न तु तद्रूपताम् इति । 'अपि च स्वेन रूपेणाभिसम्पद्यते' [छा० ८।१२] स्वेन विशुद्धेनात्मरूपेण अभिसम्पद्यते। आत्मनो ब्रह्मत्वापत्तेरसम्भवात् इति भावः । इति संक्षेपः।

—०—

# अथ निम्बार्कदर्शनम्

१—श्रीनिम्बार्काचार्यः २—श्रीनिवासाचार्यः ३—काश्मीरकः केशवभट्टः ४—पुरुषोत्तमाचार्यः—भेदाभेदसिद्धान्तः ६—भास्कराचार्यः ७—यादवाचार्यः—८—ईश्वरः ।

निम्बार्कदर्शनस्य आद्याचार्यः श्री हंसनारायणाभिधानः, यः खलु राधाकृष्णयोर्युगलमूत्तः प्रतीकः। तेन सनत्कुमारायैतन्मतस्य दीक्षा प्रदत्ता। यः सनन्दादिचतुर्व्यूहात्मरूपेण प्रसिद्धिं गतः। सनत्कुमारस्य त्रेतायुगे परमशिष्यः प्रेमभक्तः प्रचारकः नारदमुनिरासीत्। नारदमुनिश्च तत्त्वमिदं तत्रभवन्निम्बार्काचार्याय ददौ इति कालविदां परम्परानुगुणमितिवृत्तवर्णनम् ॥

निम्बार्काचार्यः—निम्बार्काचार्योऽयं किल तैलङ्गब्राह्मणः नियमानन्दोऽस्य वास्तविकं नाम। सोऽयं निम्बादित्यनाम्नाप्याख्यायते। निम्बार्काभिधाने चास्य निम्नाख्यानं निमित्तीकुर्वन्ति यदसौ निशीथसमये एकदा निम्बोपरि अर्कं सूर्यं दर्शयामास। एषां प्रसिद्धा ग्रन्थाः वेदान्तपारिजातसौरभम्, दशश्लोकी, श्रीकृष्णस्तवराजः, निम्बार्कतत्त्वप्रकाशकः श्रुत्यन्तसुरद्रुमः, श्रुतिसिद्धान्तमञ्जरी, श्रुत्यन्तकल्पवल्ली प्रभृतयो व्याख्यानसन्दर्भाः मुद्रिताः। अप्रकाशितेषु ग्रन्थेषु च मध्वमुख-मर्दनम्, वेदान्ततत्त्वबोधः, वेदान्तसिद्धान्तप्रदीपश्च अतिमहत्वशालिनः।

श्रीनिवासाचार्यः—निम्बार्काचार्याणां प्रमुखशिष्यः श्रीनिवासाचार्यः अतीव विद्वान् महामतिश्चासीत्। पारिजातसौरभोपरि वेदान्तकौस्तुभनाम्नी विशदा व्याख्याऽनेन विरचिता।

काश्मीरकः केशवभट्टः—केशवभट्टः निम्बार्कदर्शनस्य महापण्डितः व्याख्याकारो ग्रन्थकारश्च। कौस्तुभप्रभाऽभिधा वेदान्तकौस्तुभस्य पाण्डित्यपूर्णा व्याख्या। तत्त्वप्रकाशिका गीताया निम्बार्कमतानुसारिणी टीका, वेदस्तुतिः, भागवतीयदशमस्कन्धस्य विशदा व्याख्या। क्रमदीपिका च पूजापद्धतिप्रतिपादको ग्रन्थः। कौस्तुभप्रभा हि अस्य प्रगाढपाण्डित्यं प्रकटयति।

चैतन्यचरितामृते तेन सह यत्केशवभट्टस्य शास्त्रार्थचर्चा कृता, किल स एष एव केशवभट्टः प्रतीयते।

श्री पुरुषोतमाचार्यः—

निम्बर्कमतावलम्बिषु विद्वत्सु हरिव्यासदेवाचायस्य शिष्योऽयं श्रीपुरुषोत्तमाचार्यः सर्वश्रेष्ठो लब्धप्रतिष्ठश्च विद्वान्। अस्य रचनासु ग्रन्थद्वयमतीव प्रख्यातं—वेदान्तरत्नमंजूषा दशश्लोकीसन्दर्भस्य सिद्धान्तप्रतिपादिका विशदा व्याख्या। अपरा श्रुत्यंतसुरद्रुमः श्रीकृष्णस्तवस्य पाण्डित्यपूर्णा टीका। देवाचार्यस्य "सिद्धान्त

जाह्नवी" निबंधे वेदान्तरत्नमंजूषायाः उल्लेखः समुपलभ्यते। अतः देवाचार्यात् प्राक्तनः एव एषां समयः इत्यनुमीयते। कृपाचार्यशिष्यदेवाचार्यस्य सर्वश्रेष्ठरचना सिद्धान्तजाह्नवी ब्रह्मसूत्रस्य च चतुःसूत्रीमवलम्ब्य सुविशदा व्याख्या। अनन्तराम-विरचितस्य वेदान्ततत्त्वावबोधः पुरुषोतमप्रसादस्य च श्रीकृष्णस्तवराजस्य "श्रुत्यं-तकल्पवल्ली" व्याख्या निम्बार्कसिद्धान्तव्याख्यानेषु अतीव महत्त्वपूर्णपदवीमव-गाहते। माधवमुकुन्दस्य परपक्षगौरवजारको ग्रन्थः वेदान्तस्याद्वैतमण्डनात्मकः तर्कयुक्तिप्रमाणसंवलितो ग्रन्थः।

भर्तृप्रपञ्चः—श्रीशङ्कराचार्यात्प्राक् वेदान्तचार्येषु अयं भर्तृप्रपञ्चाचार्य आसीद् भेदाभेदसिद्धान्तवादी। अस्य मते परमार्थस्यैकत्वं नानात्वञ्चापि। जीवा-अनेका परमात्मन एकदेशमात्राः। कामवासनादयः जीवस्य धर्माः। धर्मदृष्टिभेदेन जीवानां नानात्वं नौपाधिकमपितु वास्तविकम्। ब्रह्मण एकत्वेपि समुद्रतरङ्गन्यायेन द्वैताद्वैतत्वम्। यथा समुद्रस्यैकत्वेऽपि तरङ्गबुद्बुदादिभेदेन नानात्वं तथैव जीव-ब्रह्मणोरप्यभ्युपेयम्। ब्रह्मणश्च परिणामित्वमप्येषामभिमतम्। स च परिणामः त्रिविधः—अन्तर्यामिजीवरूपे, अव्याकृतदेवतारूपे, जातिपिण्डरूपे चेति। असौ ज्ञानकर्मसमुच्चये श्रद्धधाति। कर्मजन्यफलस्यानित्यत्वम्, ज्ञानजन्यस्य च नित्यत्वम्। ज्ञानद्वारा विमलीकृतकर्मणा च निःश्रेयसत्वमेषां पक्षः। मोक्षोऽपि द्विविधः—ब्रह्म-साक्षात्कारेणापवर्गरूपः अपरमोक्षः जीवन्मुक्तोपमः। अपरो ब्रह्मभावापत्तिरूपः परो मोक्षः। भर्तृप्रपञ्चमतेन, परमात्मजीवात्मनोंऽशि-अंशभावः। एकदेश्येकदेश-भावश्च। बादरायणात्प्राग्भवानां भेदाभेदवादिनामाचार्याणामुल्लेखोऽनेन स्वग्रन्थेषु बहुतरं प्रपञ्चितः।

भास्कराचार्यः—वेदान्ताचार्येषु शङ्करोत्तरयुगे, भास्कराचार्योऽयमतीव प्रसिद्धः। वेदार्थसंग्रहे रामानुजेन, न्यायकुसुमाञ्जलौ उदयनाचार्येण, भामतीसन्दर्भे च वाचस्पतिमिश्रेण भास्कराभिमतसिद्धान्तस्य खण्डनं कृतम्। अतोऽस्य स्थितिकालः अष्टमशतक एवोन्नीयते। अस्य नयेन, ब्रह्मणः सगुणत्वं, सल्लक्षणत्वं, बोधलक्षणत्वं, सत्यज्ञानानन्तलक्षणत्वं चेतनत्वं रूपान्तररहितत्वमद्वितीयत्वञ्चाऽमितम्।

भास्करः—भास्करोऽयं ब्रह्मणो नैसर्गिकत्वं मन्यते। ब्रह्म स्वत एव परिण-मते तत्स्वाभाव्यात्। यथा क्षीरं दधिभावाय अम्भो हिमभावायेति [ २।१।२४ भा० भा० ]। यथा सूर्यः रश्मीनभितः प्रक्षिपति तथैव ब्रह्मापि अनन्ताचिन्त्यशक्ति-प्रसरं वितनुते। भास्करस्य नये निरवयवस्यैव परिणामः न जातु सावयवस्य। यथा अच्युतस्वभावात्तन्तुभ्यः पटः तथैवाच्युतस्वभावाद् ब्रह्मणो जगदिदमुत्पद्यते। तथाहि :—

'अप्रच्युतस्वरूपस्य शक्तिविक्षेपलक्षणः ।
परिणामो यथा तन्तुनाभस्य पटतन्तुवत् ॥ [ भा० भा० पृ० ९६ ]

किञ्च 'चेतनस्य सर्वज्ञस्य सर्वशक्तेः स्वतन्त्रस्य शास्त्रैकसमधिगम्यस्य ब्रह्मणः परिणामो व्यवस्थाप्यते । स हि स्वेच्छया स्वात्मानं लोकहितार्थं परिणमयन् स्वशक्त्यनुसारेण परिणमयति ।' [ भा० भा० २।१।१४ ] ।

अस्य मते जीवोऽणुः अग्निस्फुलिंगवद् ब्रह्मणोंऽशश्च । जीवब्रह्मणोः भेदोऽभेदश्च । अभेदः स्वाभाविको भेदस्तौपाधिकः । "स चाभिन्नभिन्नस्वरूपः अभिन्नरूपं स्वाभाविकम्" [ भा० भा० २।३।४३ ] ।

औपाधिके रूपे निवृत्ते, भेदभावो लीयते । लीने च तस्मिन् जीवो ब्रह्मण्यवस्थितः मुक्ति प्रपद्यते । कार्यकारणयोर्यथा भेदाभेदः, तथैव जीवेश्वरयोः । समुद्ररूपेण समुद्रतरङ्गयोरेकत्वं तरङ्गरूपेण नानात्वम् यथा तद्वत् । तथाहि :—

कार्यरूपेण नानात्वमभेदः कारणात्मना ।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा । [ १।१।४ ]

ज्ञानकर्मसमुच्चयेन मुक्तिः । न केवलेन ज्ञानेन मुक्त्युदयः अपि तु कर्मसंवलितेनैव । अपरोक्षज्ञानं प्रति योगाभ्यासस्य कारणता । भास्करस्य सद्योमुक्तित्वं क्रममुक्तित्वञ्चेति द्वयमपि सम्मतम् ।

यादवाचार्यः--यादवाचार्योऽपि भेदाभेदवादमङ्गीकरोति । चेदयं रामानुजस्य गुरोः यादवादभिनवः तदा एकादशशताब्दी एवास्य स्थितिकालः । रामानुजस्य वेदार्थसंग्रहे, वेदान्तदेशिकेन परमतभंगे, व्यासतीर्थेन च तात्पर्यचन्द्रिकायामेतन्मतस्योल्लेखो व्यधायि ।

अनेन ब्रह्मसूत्रेषु भेदाभेदप्रतिपादकं भाष्यमकारि । निर्गुणब्रह्मवादो मायावादश्च न सम्मतः । मोक्षं प्रति च ज्ञानकर्मसमुच्चयस्यैव कारणता । भास्करो भेदमौपाधिकं मन्यते यादवस्तु उपाधिवादे न श्रद्दधते । असौ परिणामवादी । जीवन्मुक्तिश्चास्यानभिमता । यादवाचार्यात्पश्चात् प्रायशः शतवर्षानन्तरं निम्बार्कः उदियाय । निम्बार्केण भेदाभेदसिद्धान्तः पुनः प्रतिष्ठापितः ।

## भेदाभेदसिद्धान्तः

निम्बार्कदर्शने ब्रह्मजीवयोर्भेदाभेदत्वं द्वैताद्वैतत्वं वा स्वीक्रियते । तेषां नयेन अवस्थाभेदेन जीवः ब्रह्मणोऽभिन्नः भिन्नोऽपि । एष भेदाभेदसिद्धान्तः भारतीयदर्शने अतीव प्राचीनः । न केवलं शंकराचार्यादपितु बादरायणादपि प्राग् भेदाभेदसिद्धान्तपोषकाः आचार्याः आसन् । आचार्यः औडुलोमिः आश्मरथ्यश्च भेदाभेदा-

वादिनौ एवास्ताम्। औडुलोमिमते[1] व्यवस्थाविशेषमधिकृत्य जीवब्रह्मणोः भिन्नत्वाऽभिन्नत्वेत्युभयविधकल्पनायाः सामंजस्यं संसारदशायां नानात्मकस्य जीवस्य एकात्मकब्रह्मणश्च नितान्तभेदेऽपि मुक्तदशायां चैतन्यात्मकतया जीवब्रह्मणोः अभेद एव। एवं आश्मरथ्योऽपि[2] कारणात्मना जीवब्रह्मणोरैक्यमभिनन्दति। परं कार्यात्मना उभयोर्भेदस्––यथा कार्यरूपेषु कटककुंडलादिषु कारणरूपस्य स्वर्णस्यैकात्मतायामपि कार्यरूपे भेदं को नाम निवारयितुमीष्टे ? अस्यैव आश्मरथ्यस्य भेदाभेदत्वं यादवप्रकाशेनापि अंगीकृतं परिपोषितञ्च। श्रीनिवासाचार्योऽपि स्वकीये वेदान्तकौस्तुभसंदर्भे भेदाभेदसिद्धान्तम् उपदर्शितवान्। "तदेवं मुनित्रयमतद्वारा प्रसंगाद् भेदाभेदप्रकारो दर्शितः। परन्तु भगवच्छङ्कराचार्यपादाः एनमद्वैतवादिनमुररीकुर्वन्ति। तथाहि "तत्र काशकृत्स्नीयं मतं श्रुत्यनुसारमिति गम्यते" [ १।४।२ शां० भा० ] इति।

## जीवेश्वरयोः स्वरूपम्

निम्बार्कनये चिदचिदीश्वरस्वरूपो रामानुजमतेन सह संवदति, चिल्लक्षणो जीवः ज्ञानस्वरूपः ज्ञानमयो वा। इन्द्रियनिरपेक्ष एव स तत्तज्ज्ञानाधिगमे शक्तः। एतदर्थमेव जीवोऽसौ प्रज्ञानघनः, स्वयंज्योतिरित्यादिपदैर्व्यपदिश्यते। यथाहि सूर्यः प्रकाशमयः प्रकाशाश्रयश्च तथैव जीवो ज्ञानाश्रयो ज्ञातापि च। यद्यपि जीवस्य स्वरूपभतं गुणभूतञ्च ज्ञानं ज्ञानाकारतया अभिन्नं तथापि धर्म्मार्धर्मिभावेनाऽनयोः ज्ञातृज्ञानयोः भेद एवेति निश्चितम्। उक्तञ्च दशश्लोक्याम् :––

'ज्ञानस्वरूपञ्च हरेरधीनं, शरीरसंयोगवियोगयोग्यम्।
अणुं हि जीवं प्रतिदेहभिन्नं, ज्ञातृत्ववन्तं यदनन्तमाहुः॥

जीवः कर्त्तृत्वे स्वतन्त्रः भोगे च परतन्त्रः ईश्वराधीन इति भावः। अतः चेतनत्वेन ज्ञानाश्रयत्वेन वा साम्येऽपि नियम्यत्वेन स ब्रह्मणो भिद्यते। जीवो नियम्यः, ब्रह्म च नियन्तृ। मुक्त्यवस्थायामपि जीव ईश्वराश्रित एव, न तल्लीन इति।

---

१. उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः।

उत्क्रमिष्यतः=शरीरं परित्यज्य मोक्षपदं प्रविशतो जीवात्मन एवम्भावात्=परब्रह्मणि परमेश्वरेऽविभागेनावस्थानात् तेन तस्य शरीरान्तःप्रवेश उपदिश्यत इत्यौडुलोमिः।

२. प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः।

प्रतिज्ञासिद्धेः एकातमप्रतिज्ञोपपत्तेर्लिङ्गं=ज्ञापकं परब्रह्मणः परमेश्वरस्य स्वाविभक्तेन जीवात्मना शरीरान्तःप्रवेशवचनमित्याश्मरथ्यः।

जीवश्चाणुः नानाभेदभिन्नश्च। यद्यपि स ब्रह्मणोंऽश एव तथापि अंशो नात्र विभागपरः किन्तु शक्तिरूपः "अंशो हि शक्तिरूपो ग्राह्यः" [ २।३।४२ कौस्तुभे ] इति। भगवत्प्रसादेन जीवस्य सत्यरूपावभासः। ततो मुक्तिः[1]। बद्धजीवो द्विविधः—मुमुक्षुर्बुभुक्षुश्चेति।

अचित् जडात्मिका प्रकृतिः। सा च प्रकृताऽप्रकृतकालभेदेन त्रिविधा। तत्र प्राकृतिकं महत्तत्वादारभ्य महाभूतपर्यन्तम्। अप्राकृतिकं निखिलचैतन्यात्मकं जगत्। कालश्च जगतः समस्तपरिणामजनकः। अखिलजगन्नियामकः सन्नपि स ब्रह्मणस्तु नियम्य एव। स च कालोऽखण्डरूपः स्वरूपेण नित्योऽपि कार्यरूपेणाऽनित्य एव। तस्य कार्यन्तु औपाधिकमेव।

## ईश्वरः

निम्बार्कनये ब्रह्म च समस्ताविद्यास्मितादिदोषशून्यम् अशेषज्ञानबलादि-कल्याणगुणविशेषनिधानम्।

स्वभावतोऽपास्तसमस्तदोषमशेषकल्याणगुणैकराशिम्।
व्यूहाङ्गिनं ब्रह्म परं वरेण्यं ध्यायेम कृष्णं कमलेक्षणं हरिम्॥
[दशश्लोकी]

यत्किञ्चिज्जगति दृष्टिगोचरं तत्सर्वं ब्रह्मव्याप्यम्। ईश्वरस्तु तेषां नये परब्रह्म-नारायण-भगवत्-परुषोत्तम-कृष्णादिनामभिः जेगीयते।

एषां नयेन प्रतिपत्तिद्वारा हि भगवदनुग्रह[1] उदेति नान्यथा। ततः साक्षात्कारस्तदनन्तरं मुक्तिरिति संक्षेपः।

---

१. 'अनादिमायापरियुक्तरूपं त्वेनं, विदुर्वै भगवत्प्रसादम्। [दशश्लोकी]

# अथ मध्वदर्शनम्

१—श्रीमध्वाचार्यः २—अन्ये आचार्याः ३—माध्वसिद्धान्तमीमांसा ४—ईश्वरः ५—लक्ष्मीः ६—जीवः ७—आकाशः ८—साधनासरणिः ।

## श्रीमध्वाचार्यः

माध्वसम्प्रदायस्य आदिम आचार्यस्तत्रभवान् आनन्दतीर्थमहाभागः । एष एव मध्वः, पूर्णबोधः पूर्णप्रज्ञः इत्येतैर्नामभिः प्रसिद्धः । दक्षिणप्रदेशे उडपीनामकनगरोपान्तेऽस्य जन्माऽभूत् ख्रीस्ते ११९९ शतके । निधनञ्च १३०३ तमेऽब्दे । द्वैतसिद्धान्तस्याऽयं प्रकाण्डपण्डितः । समस्ते भारते, नगरान्नगरान्तरं ग्रामाद् ग्रामान्तरञ्च पर्यटन्नसौ द्वैतमतस्य प्रचुरं प्रचारं कृतवान् । सप्तत्रिंशन्मितांश्च प्रबन्धान् न्यभान्त्सीत् । तेषु प्रसिद्धास्तु ब्रह्मसूत्रेषु अणुभाष्यम्, ऐतरेय-छान्दोग्य-केन-कठ-बृहदारण्यकादिषूपनिषत्सु भाष्यं, गीताभाष्यं, भागवतनिर्णयप्रभृतयः ग्रन्थाश्च विरचिताः ।

## अन्ये आचार्याः

जयतीर्थः—जयतीर्थोऽसौ प्रकाण्डपण्डितः द्वैतमताचार्यः माध्वभाष्ये विद्वत्तापूर्णां प्रामाणिकीं व्याख्यां लिलेख द्वैतपरिपोषिणीम् । माध्वसम्प्रदायेऽस्यालौकिकशेमुषीसम्पन्नस्य पाण्डित्यमनन्यसाधारणतया प्रसिद्धम् । तथा चास्य प्रशस्तिरूपं पद्यमिदम् :—

"चित्रैः पदैश्च गम्भीरैर्वाक्यैर्मानैरखण्डितैः ।
गुरुभावं व्यञ्जयन्ती भाति श्रीजयतीर्थवाक् ॥

न केवलं, जयतीर्थेन माध्वभाष्योपरि तत्त्वप्रकाशिका, तत्त्वोद्योतः, तत्त्वविवेकः, तत्त्वसंख्यानं, प्रमाणलक्षणाद्याः टीकाः उट्टङ्किताः प्रत्युत प्रमाणपद्धति-वादावलि-सदृशमौलिकग्रन्था अपि विरचिता द्वैतसिद्धान्तमण्डनार्थमद्वैतखण्डनार्थञ्च । प्रमाणपद्धतिमालम्ब्य विरचिता अष्टौ टीका एवात्र प्रमाणभूताः ।

व्यासतीर्थः—व्यासतीर्थोऽयं मध्वसम्प्रदास्यापर उद्भटो विद्वान् । अस्य सर्वश्रेष्ठो मौलिको ग्रन्थो न्यायामृताख्यः । यस्य वर्णनं मधुसूदनसरस्वतीमहाभागेन अद्वैतसिद्धौ कृतम् । न्यायामृतग्रन्थेनामुना द्वैताद्वैतसम्प्रदाये महतो वाक्कलहस्यावतारणा व्यधायि याऽद्यापि न शमसेति । व्यासतीर्थस्यान्ये प्रामाणिका ग्रन्थाः तर्कताण्डवः, तात्पर्यचन्द्रिका, मन्दारमञ्जरीभेदो, जीवनमायावादखण्डनादयः । अस्य न्यायामृतमुद्दिश्य प्रायशो दश टीकाग्रन्था उपलभ्यन्ते येषु रामाचार्यस्य तरङ्गिणी, विजयीन्द्रतीर्थस्य कण्टकोद्धारः, अद्वैतसिद्धेः खण्डनात्मकत्वादतीव प्रसिद्धाः । पञ्चदशशतक एवास्य स्थितिकालः सम्भाव्यते ।

रघूत्तमतीर्थः--माध्वमतग्रन्थकारेषु रघूत्तमतीर्थोऽयं, भावबोधकार इति नाम्ना भावबोधाचार्य इति नाम्ना च प्रसिद्धः। अनेन विष्णुतत्त्वनिर्णयः, जयतीर्थस्य तत्त्वप्रकाशिकोपरि भावबोधाख्या व्याख्या च व्यलेखि। अस्यातिप्रसिद्धो ग्रन्थः मध्वाचार्यकृतबृहदारण्यकोपनिषद्भाष्योपरि ब्रह्मप्रकाशिका व्याख्या। अस्य शिष्येषु तरंगिणीकारो रामाचार्यो वेदेशभिक्षुश्च मुख्यः। वेदेशः खलु माध्वमतव्याख्यातृषु मुख्यतमः। अस्य रचनासु तत्त्वोद्योगपञ्चिका, ऐतरेय-छान्दोग्य-केनोपनिषत्सु माध्वभाष्यस्योपरि अतीव भावगम्भीरा व्याख्याः। इमाः सुप्रख्याताः व्याख्या विरच्यासौ कीर्त्तिवैपुल्यमवाप। १५५७–१५९६ अस्य स्थितिकालः।

विजयीन्द्रः--न्यायामृते आमोदतात्पर्यचन्द्रिकयोष्टीकाकृद् विजयीन्द्र-महाभागेन गीताया मधुसूदनी-टीकायाः समालोचनात्मिका 'गूढार्थदीपिका-युक्तिमल्लिका' विरचिता। एष महाभागः रामानुजाचार्यस्य समकालीन एव।

वनमालीमिश्रः--वनमालीमिश्रः मथुरोपान्त-निवासी द्वैतसाहित्ये अतीव प्रसिद्धो विद्वान्। अस्य रचनासु नयनामृतसौगन्ध्यं तरंगिणीसौरभञ्चेति ग्रन्थद्वयं, माध्वमुखालङ्कारः अप्पयदीक्षित-विरचितस्य माध्वमुखमर्दनस्य खण्डनरूपः अद्वैत-सिद्धेः पाण्डित्यपूर्णः खण्डनात्मको निबन्धः। अस्य स्थितिकालः [ १७ शतके ]

सत्यनाथो यतिः, वेणीदत्तः, पूर्णानन्दचक्रवर्त्ती च माध्वसम्प्रदायस्यान्ये ग्रन्थकृतो व्याख्यातारः अभूवन् प्रख्याताः।

## माध्वसिद्धान्तमीमांसा

माध्वमते तु द्रव्य-गुण-कर्म-सामान्य-विशेष-विशिष्ट-अंशी-शक्ति-सादृश्य-अभावा इति दश पदार्थाः अभिमताः। इमे पदार्था वैशेषिकपदार्थैः सह बहुत्र साम्यमाविष्कुर्वन्तोऽपि नितरां माध्वमतस्य वैशिष्ट्यं द्योतयन्ति। द्रव्यं हि नाम एवां नयेन विंशतिधा, परमात्मा-लक्ष्मी-जीव-अव्याकृताकाश-प्रकृति-गुणत्रय-महत्तत्त्व-अहङ्कारतत्त्व--बुद्धि-मन-इन्द्रिय-मात्रा-भूत--ब्रह्माण्ड-अविद्या--वर्ण-अन्धकार-वासना-काल-प्रतिबिम्बाः इति। गुणेषु अपि वैशेषिकगुणातिरिक्तानां शमदमकृपातितिक्षा-सौन्दर्यादीनामपि गणना कृता। कर्मापि त्रिविधम्--विहितनिषिद्धोदासीनात्मकम्। तत्रोदासीनकर्मणः परिस्पन्दात्मकत्वं, तदन्तर्भूतानि चोत्क्षेपणावक्षेपणादीनि भवन्ति विविधानि कर्माणि। नित्यानित्यभेदेन, जात्युपाधिभेदेन च सामान्यं द्विविधम्। विशेषाश्चानन्ताः। 'भेदाभावेऽपि भेदव्यवहारनिर्वाहका अनन्ता एव विशेषाः।' [सि० सा० पृ० ७]। विशेषसद्भाव एषां परमात्मन्यप्यभिमतः, विज्ञानानन्दस्वरूपे परब्रह्मण्यपि यो भेदावभासः स खल्वेतद्भेदनिबन्धन एव। विशेषस्य च सकल-पदार्थव्यापित्वादनन्तत्वम्। सादृश्याभावयोः कल्पना तु कणादवदेव। शक्तिस्तु

एषां चतुर्विधा—अचिन्त्यशक्तिः, आधेयशक्तिः, सहजशक्तिः, पदशक्तिश्चेति। तत्राचिन्त्यशक्तेराश्रयः भगवान् विष्णुरेव। तत्र भगवति विष्णावेव विचित्रपदार्थ-सम्पादनशक्तिः। आधेयशक्तिस्तु अन्याहितशक्तिः। प्रतिमादिषु प्राणप्रतिष्ठापनादिना यद्देवतासान्निध्यमुत्पद्यते तदेवाधेयशक्तित्वेनोन्नीयते। कार्यमात्रानुकूल्येन स्वभावजा शक्तिरेव सहजशक्तिरुच्यते। आसां पदार्थनिष्ठत्वात् नित्यानित्यत्वम् तदनुसारेणैव। पदशक्तिश्च पुनः पदपदार्थयोः सम्बन्धः। सा मुख्या-परममुख्याभेदेन द्विविधा। इन्द्रशब्दो मुख्यवृत्त्या पुरन्दरवचनः परममुख्यया वृत्या तु परमात्म-वचन इति।

## ईश्वरः

साक्षाद्विष्णुरेवेश्वरः। स अनन्तगुणवान्। तद्गुणाश्च निरतिशया, निरवधिकाश्च। आनन्त्यं तस्मिन् सजातीयविजातीयोभयविधम्। उत्पत्ति-स्थिति-विनाश-नियमन-ज्ञानावरण-बन्ध-मोक्षाणां कर्त्ता विधाता भगवान् विष्णुरेव। सर्वज्ञश्च। जीवाज्जडप्रकृतेश्च स सर्वथा भिन्नः विलक्षणश्च। ज्ञानानन्दकल्याणगुणादयस्तस्य शरीरत्वेनोन्नीयन्ते। मुख्यया वृत्या स समस्तपदवाच्यः। अतः सशरीरत्वे सत्यपि तस्य नित्यता स्वतन्त्रता च न विहन्यते। एकः सन्नपि स नानारूप-धरः। समस्तरूपेण च परिपूर्णः। अतः मत्स्याद्यवताररूपेणापि तस्य पूर्णता कथमपि न व्याकुलीभवति। उक्तञ्च माध्वबृहद्भाष्ये :—

अवतारादयो विष्णोः सर्वे पूर्णाः प्रकीर्त्तिताः।
पूर्णं च तत्परं पूर्णं पूर्णात्पूर्णाः समुद्गताः॥

## लक्ष्मीः

माध्वानां परमात्मशक्तिरेव लक्ष्मीः। सा च सर्वथा परमात्मनोऽधीना सत्यपि ततो भिन्ना। "परमात्मभिन्ना तन्मात्राधीना लक्ष्मीः" [म० सि० सा० पृ० २६]। तदेवं माध्वनये, शक्तिशक्तिमतोर्नाभेदः। लक्ष्मीश्चेयं भगवतो विष्णोः किञ्चिन्न्यूना सत्यपि नित्यमुक्ता नानारूपधारिणी भगवतो वधूरिव विलसति। यथा भगवान् विष्णुः दिव्यशरीरसम्पन्नः तथैव भगवती लक्ष्मीरपि अप्राकृतविग्रहवती। अतएव अक्षरा। उक्तञ्च माध्वभाष्ये :—

"लक्ष्मीरक्षराऽदेहत्वात् अक्षरस्तत्परो हरिः" [ऐतरेयभाष्ये]

अपि च :—

द्वाविमौ नित्यमुक्तौ तु परमः प्रकृतिस्तथा।
देशतः कालतश्चैव समव्याप्तावुभावजौ॥

[भागवततात्पर्यनिर्णये]

## जीवः

जीवो माध्वमते संसारी, कर्मानुगुण्येन सुखदुःखोपभोक्ता, जन्ममरणशीलश्च। स च त्रिविधः——मुक्तियोग्यः, नित्यसंसारी, तमोयोग्यश्चेति। तत्र मुक्तियोग्या जीवा देव-ऋषि-पितृ-चक्रवर्त्ति-उत्तमभेदात् पञ्चविधाः। नित्यसंसारी, सर्वकालावच्छदेन जन्मबन्धसरणिपतितः संसरणशीलः। एतत्कोटिगता जीवाः मध्यमाः उच्यन्ते—"मध्यमा मानुषा ये तु संसृतियोग्याः सदैव हि" [भा० ता० निर्णये] ते च न कदापि मुक्तिं प्रपद्यन्ते। तमोयोग्यानां जीवानां चातुर्विध्यम्——दैत्य-राक्षस-पिशाच-अधमा इति। सर्वेऽप्यमी जीवा व्यक्तितो भिन्नाः। सर्वज्ञपरमात्मनस्तु सर्वथा भिन्नाः। न चेदं जीवानां तारतम्यं संसृत्यवस्थायामेव, अपितु मुक्त्यवस्थायामपि तत् सम्भवति। "मानुषादि विरञ्चिपर्यन्तं तारतम्यं विमुक्तिगतम्। [मध्व०] आनन्दानुभूतितारतम्यभेदश्च तेषां ज्ञानतारतम्यभेदात्।[1] "निरञ्जनः परमं साम्यमुपैति।' [मुण्ड० ३।१।३]।

इत्यत्र साम्यपदं प्राचुर्यवचनं माध्वानाम्। ब्रह्मणः चिदंशमादायैव, ब्रह्मणो जीवस्यैक्यमभिमतम्, परं तदैक्यं न वास्तवम्। जीवब्रह्मणोरभेद एवैषामभ्युपगमः। तथा च माध्वाचार्यः——

जीवस्य तादृशत्वं च चित्त्वमात्रं न चापरम्।
तावन्मात्रेण चाभासो, रूपमेषां चिदात्मनाम्॥

[म० सि० सार, पृ० ३२]

## आकाशः

माध्वानां व्याकृताकाशः न्यायवैशेषिकयोर्दिक्सदृशः सृष्टिप्रलययोरविकृतरूपेणावतिष्ठते। भूताकाशादयं सर्वथा भिद्यते। उत्पत्तिमत्वाद् भूताकाशस्यानित्यत्वम्, अविकृततत्त्वादस्य तु नित्यत्वं व्यापकत्वञ्चेति। लक्ष्मीः खल्वस्याभिमानिनी देवता। प्रकृतिर्हि जडरूपा नित्या व्यापिनी सर्वजीवलिङ्गशरीररूपा। एवं द्वैतवादि-माध्वनये, परमात्मा केवलं जगतो निमित्तकारणम् उपादानन्तु प्रकृतिरेव। वैष्णवान्तरवत् शुद्ध सत्त्वस्य सत्ता नानेन स्वीक्रियते। अस्मात् शुद्धसत्त्वादेव जीवानां

---

१. मुक्ताः प्राप्य परं विष्णुं तद्देहं संश्रिता अपि।
तारतम्येन तिष्ठन्ति गुणैरानन्दपूर्वकैः॥ [गीताभाष्ये]
दुःखाभावो परानन्दो लिङ्गभेदः समः मतः।
तथापि परमानन्दो ज्ञानभेदात्तु भिद्यते॥ [म० सि० सा० पृ० ३२]

लीलामयो विग्रहो निर्मीयते। तत्र सत्त्वाभिमानिनी श्रीः, रजोभिमानिनी भूः, तथा तमोऽभिमानिनी च दुर्गा।

महत्तत्त्वादिद्रव्यान्तराणां कल्पना तु सांख्यादिमतानुसारिणी एवेति दिक्।

## साधनासरणिः

श्रवणमनननिदिध्यासनतारतम्यस्य प्रपञ्चभेदस्य च ज्ञानमावश्यकम्। सकलेषु पदार्थेषु जगतस्तारतम्यभेदो लब्धसत्ताकः स च पञ्चप्रकारकः। ईश्वरस्य जीवाद् भेदः, ईश्वरस्य जडाद् भेदः, जीवस्य जडाद्, जीवस्य जीवान्तराद्, जडस्य जडान्तराच्चेति। एतस्य पञ्चविधस्य भेदस्य सम्यग्ज्ञानं माध्वानां मुक्ति-साधकम्। उपासना च द्विविधा, सन्ततशास्त्राभ्यासरूपा, ध्यानरूपा च। साऽपि भिद्यते अधिकारिभेदेन। ध्यानं हि एषां नये, विषयान्तरतिरस्कारपूर्वकभगवद्वि-षयिकाऽखण्डस्मृतिः।" [ म० सि० सा० पृ० १३९ ] परमेश्वरानुग्रहमन्तरा जीवः साधारणमपि कर्म कर्त्तुं नेष्टे। मुक्तेर्गाथा तु दूरे आस्ताम्। अनुग्रहविशेषेण मुक्ति प्रतिपद्यते जीवः। स चानुग्रहः परमभक्तिलभ्यः। परमा भक्तिस्तु ज्ञानानन्तरमेव शक्यसम्भवा। तदेवं क्रमेण जायते ज्ञानोदयः, तदनन्तरं परमभक्तिसमुत्पत्तिः, ततो ब्रह्मानुग्रहः, ततश्च मोक्षसमुद्भवः। स च मोक्षश्चतुर्विधः—कर्मक्षयः, उत्क्रान्तिः, अचिरादिमार्गो, भोगश्चेति। भोगश्चापि चतुर्विधः सालोक्य-सामीप्य-सारूप्य-सायुज्यभेदात्। तत्र सायुज्यं नाम भगवन्तं प्रविश्य तच्छरीरेण भोगः।

सोऽयं संक्षेपतो माध्वदर्शनपरिचयः। केनापि कविना मध्वसिद्धान्ताः पद्य-बद्धाः कृताः विलसन्ति :—

"श्रीमन्मध्वमते हरिः परतमः सत्यं जगत् तत्त्वतो,
भेदो जीवगणा हरेरनुचरा नीचोच्चभावं गताः।
मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधनम्,
अक्षादित्रितयं प्रमाणमखिलाम्नायैकवेद्यो हरिः॥ इति

——०——

# अथ वल्लभदर्शनम्

१--श्रीवल्लभाचार्यः २--अन्ये आचार्याः ३--वल्लभसिद्धान्ताः ४--ब्रह्म ५--जीवः ६--जगत् ७--पुष्टिमार्गः ८--भक्तिः ९--प्रस्थानचतुष्टयी ।

## श्री वल्लभाचार्यः

वल्लभाचार्यस्य जन्म खै स्ते १४७९ शतके अभूदिति कालज्ञाः स्थापयन्ति । अस्य जीवनघटना काशी-प्रयाग-वृन्दावन-प्रभृतिषु तीर्थेषु अघटत । विजयनगराधीशस्य श्रीकृष्णरावस्य राजसभायामनेन आचार्यव्यासतीर्थस्याध्यक्षतायां अद्वैतवादिनः पराजित्य लोकोत्तरविद्वत्तायाः परिचयोऽदायि । एषां सिद्धान्तग्रन्थाः--ब्रह्मसूत्रष्वणुभाष्यम्, तत्त्वप्रदीपनिबन्धः, पूर्वमीमांसाभाष्यम्, सिद्धान्तमुक्तावली प्रभृतयः प्रख्याताः ।

## अन्ये आचार्याः

विट्ठलनाथः--विट्ठलनाथोऽयं वल्लभाचार्यस्य द्वितीयः पुत्रः । विद्वद्धौरेयेणामुना आचार्यग्रन्थेषु टीकामुट्टङ्क्य पुष्टिमार्गस्य प्रतिष्ठा प्रतिष्ठापिता । निबन्धप्रकाशः, विद्वन्मण्डनम्, शृङ्गाररसमण्डनम्, सुबोधिनीटिप्पणी, प्रभृतयोऽस्य प्रसिद्धाः सन्दर्भाः । ब्रह्मसूत्रस्यान्तिमसार्द्धैकाध्यायोपरि अणुभाष्यस्य पूर्त्तिरनेनैव कृता ।

कृष्णचन्द्रः--कृष्णचन्द्रेण विदुषा अणुभाष्यस्योपरि भावप्रकाशिकाख्या व्याख्या कृता । अस्य शिष्येण पुरुषोत्तमेन वल्लभसम्प्रदायस्य विशिष्टविदुषा भाष्यप्रकाशिकानाम्नीं टीकां विधाय अणुभाष्यस्य गूढतमरहस्यमुद्घाटितम् । अस्यान्यग्रन्थेषु सुबोधिनीप्रकाशः, उपनिषद्दीपिका, आवरणभङ्गः, प्रस्थानरत्नाकरः, सुवर्णसूत्रम्, गीताया अमृततरङ्गिणी टीका, षोडशग्रन्थविवृतिः प्रभृतयः प्रसिद्धा ग्रन्था विलसन्ति ।

श्रीगिरिधराचार्यः —श्रीविट्ठलनाथाचार्याणां तनूजोऽयं सुप्रसिद्धो ग्रन्थकारः । गिरिधराचार्यविरचितः 'शुद्धाद्वैतमार्तण्ड'नामा ग्रन्थः वल्लभसम्प्रदायस्य प्रख्यातः तत्त्वविवेचको निबन्धः ।

हरिदासाचार्यः—हरिदासाचार्योऽपि प्रौढ़ो ग्रन्थकारः । ब्रह्मवादः, भक्तिरसवादः, आद्या निबन्धा प्रख्याताः ।

व्रजनाथ भट्टः बालकृष्ण भट्टश्च--द्वावपीमौ अतिप्रौढ़ौ विद्वांसौ । व्रजनाथभट्टस्य ब्रह्मसूत्रेषु मरीचिकाख्या ब्रह्मसूत्रानुसारिणी व्याख्या विख्याता ।

लालूभट्टनाम्ना प्रसिद्धस्य श्री बालकृष्णभट्टस्य 'प्रमेयरत्नार्णव'नामा ग्रन्थोऽतीव प्रौढ़ः।

विज्ञानभिक्षुः—विज्ञानभिक्षुरपि वल्लभसमकालीन एव विभाव्यते। विज्ञानामृतं भाष्यमस्यातीव प्रसिद्धम्। अनेनापि अविभागद्वैतमेव प्रत्यपादि। जगदविभक्तब्रह्मणोऽद्वैतमेवास्याभिमतम्। विज्ञानभिक्षोः प्रकाण्डपाण्डित्यं सार्वजनीनम्। इति संक्षेपः।

## वल्लभसिद्धान्ताः

श्रीवल्लभाचार्याणां दार्शनिकाः सिद्धान्ताः 'शुद्धाद्वैत'नाम्ना प्रसिद्धाः। एषां नयेन ब्रह्म माययाऽलिप्ततया नितान्तशुद्धं पदमालम्बते। इदञ्च मायासम्बन्धरहितं ब्रह्माद्वैतम्। अतः मतमेषां शुद्धाद्वैतमिति संज्ञया प्रख्यातम्। उक्तञ्च :—

शुद्धाद्वैतपदे ज्ञेयः समासः कर्मधारयः।
अद्वैतं शुद्धयोः प्राहुः षष्ठीतत्पुरुषं बुधाः ॥२७॥
मायासम्बन्धरहितं शुद्धमित्युच्यते बुधैः।
कार्यकारणरूपं हि ब्रह्म शुद्धममायिकम् ॥२८॥

[ शुद्धाद्वैतमार्तण्डः ]

## ब्रह्म

वल्लभनयेन ब्रह्मणः सर्वधर्मविशिष्टत्वमङ्गीकृतम्। अतएव तस्य विरुद्धधर्माश्रयत्वम्। अद्वैतवादिनां निर्गुणं, निर्विशेषनिर्धर्मकञ्च ब्रह्म, मायासम्पर्कात् यत् सगुणत्वादिमद्वदाभासते, तद्वाल्लभा न सहन्ते। यतः अहिकुण्डलवद् ब्रह्मणि उभयरूपता श्रुतिसिद्धा एव।

'उभयव्यपदेशात् त्वहिकुण्डलवत्' [ ब्र० सू० ३।२।२७ ]

ब्रह्मणि विरुद्धधर्माणामस्तित्वं न मायौपाधिकम् अपितु नैसर्गिकमेव। भगवतो ब्रह्मणो हि अनवगाह्यो महिमा, तत्खलु अणोरणीयः, महतश्च महीय इति सुस्पष्टं श्रुतिर्निरूपयति। ब्रह्म सदपि अनेकरूपम् अद्वितीयत्वञ्च जहाति, स्वतन्त्रं सदपि भक्ताधीनम्। अखिलं जगदिदं भगवल्लीलामयमिति वाल्लभो नयः। वाल्लभाचार्याणां मते ब्रह्मणस्त्रैविध्यम्—आधिदैविकं परं ब्रह्म, आध्यात्मिकं अक्षरं ब्रह्म, आधिभौतिकं च पुनः जगदात्मकं ब्रह्म। अतः जगदपि ब्रह्मरूपमेव। कारणकार्ययोरभेदात्। आविर्भावदशायां ब्रह्मणो जगद्रूपत्वम् तिरोभावदशायां ब्रह्मरूपत्वमिति। आविर्भावः सृष्टिप्रसरो वा ब्रह्मणो लीलामात्रम्। अत एव

नित्यमिति । परब्रह्म चैषां नये अखिलरसामृतमूर्त्तिर्निखिललीलाधाम भगवान् श्रीकृष्ण एव । स च पुरुषोत्तमपदेनापि व्यपदिश्यते । ब्रह्मप्राप्तिस्तु केवलमनन्यया भक्त्या एव ।

"पुरुषः स परः पार्थ ! भक्त्या लभ्यस्त्वनन्यया ।"

इति गीतावचनमालम्ब्य आचार्या अप्याहुः —

'तेन ज्ञानमार्गिणां न पुरुषोत्तमप्राप्तिरिति सिद्धम् ।' 'यस्यान्तःस्थानी'त्यनेन परस्य लक्षणमुक्तम् । तच्च भक्त्यादिप्रसङ्गे श्रीगोकुलेश्वरे स्पष्टमुच्यते । एतदप्युक्ततत्त्वमेवानुगृह्णाति । [ ब्रह्मसूत्र-अणुभाष्यम् ३।३।३३ ]

## जीवः

जीवश्च वल्लभाचार्याणां तिरोहितानन्दादिगुणः स्वयमीश्वर एव । स केवलं लीलाविलुलितमना एव तथात्वं प्रतिपद्यते यदृच्छया न जातु माययोद्वेल्लितः । तादृशे जीवे ऐश्वर्यतिरोधानेनैव दैन्यं, यशस्तिरोधानेनैव हीनता, श्रीतिरोधानेनैव निरस्तसमस्तसम्पदास्पदत्वम् । ज्ञानतिरोधानेनैव स अनात्मरूपेषु देहादिपदार्थेषु आत्मबुद्धिं वितनोति । आनन्दतिरोधानेन च दुःखक्लेशादिकमनुभवति [ "पराभिध्यानात्तु" ब्र० सू० २।५ अणुभाष्यम् ] । ब्रह्मण आविर्भूतस्याऽपि जीवस्य अग्निस्फुलिङ्गवद्भेदसद्भावेन तद्रूपत्वं नित्यत्वञ्च न विहन्यते । एतद्धि खलु व्युच्चरणं, नोत्पत्तिः, अतः तन्नित्यत्वहानेर्न कश्चन प्रश्नः । वल्लभसम्प्रदायेऽपि जीवस्याणुत्वं ज्ञातृत्वम् । ब्रह्मणोऽविकृतचिदंशतो जीवस्य, अविकृतसदंशतो अचित्प्रकृतेर्निर्गतिः । जडनिर्गमनकाले च, उभयोः चिदानन्दांशयोस्तिरोधानं, जीवनिर्गमनकाले च केवलमानन्दांशयोरेव इति 'प्रमेयरत्नार्णवे' । स च जीवस्त्रिविधः—शुद्धो मुक्तः संसारी चेति । वह्निस्फुलिंगवद् व्युच्चरणकाले, अविद्योपहितत्वेन तिरोहितानन्दांशः संसारी । तिरोहितानन्दांशः अविद्यासम्पर्कात्पूर्वं शुद्धः । संसारी च पुनर्दैवासुरभेदेन द्विविधः । तत्र दैवजीवोऽपि मर्यादामार्गीयपुष्टिमार्गीयभेदेन द्विविधः । मुक्तजीवेष्वपि मुक्ता जीवनमुक्ताश्चेति द्विविधा जीवाः ।

मुक्तजीवस्य भगवतः सच्चिदानन्दान्नितान्तोऽभेदः । संसारी जीवः पुष्टिमार्गावलम्बनेनोपलब्धभगवदनुग्रहः पुनः तिरोहितानन्दांशं प्रतिपद्यमानः सच्चिदानन्दतामवगाहते । 'तत्त्वमसि श्वेतकेतो !' इति 'महावाक्यम्' एषां नयेनामुमेवार्थमनुगृह्णाति । यथा सुवर्णकटककुण्डलादीनां सुवर्णादभेदः तद्वद्ब्रह्मणो जीवस्याप्यभेदः [ शुद्धाद्वैतमार्त्तण्डः ] ।

## जगत्

जगद्विषये च वाल्लभानां अविकृतपरिणामवाद एव अभ्युपगमः । कनककामधेनुकल्पवृक्षचिन्तामणिवत् सच्चिदानन्दात्मकं निर्गुणं ब्रह्मैव जगद्रूपेण परिणमति । यथा कुण्डलादिषु परिणतमपि सुवर्णं विकृतिभावं न प्रतिपद्यते, तद्वज्जगद्रूपेण परिणम्यमानमपि ब्रह्म न किञ्चिदपि परिणतिमुपास्ते । श्रीमद्-भागवतस्य दशमस्कन्धेऽस्यैव निपुणं निरूपणं कृतमुपलभ्यते ।

"यथा सुवर्णं सुकृतं पुरस्तात् पश्चाच्च सर्वस्य हिरण्मयस्य ।
तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्वत् ॥"

वाल्लभानां न जगत उत्पत्तिविनाशौ प्रत्युताविर्भावतिरोभावौ । आविर्भावश्चैषाम् अनुभवविषयत्वयोग्यता तदविषयत्वं तिरोभावः [विद्वन्मण्डन पृ० ७]। वल्लभनये, जगत्संसारयोरपि भेदः । ईश्वरेच्छाविलासविशेषसमुद्भूतपदार्थो जगत्, किन्त्वविद्योपहितजीवद्वाराकल्पितममतारूपपदार्थश्च संसारः । अविद्यायाः स्वरूपाज्ञान-देहाध्यास-इन्द्रियाध्यास-अन्तःकरणाध्यासलक्षणानि पञ्चपर्वाणि । अविद्यासत्त्वे संसारः, सति ज्ञानोदये तद्विनाशः । जगतो ब्रह्मरूपत्वान्न कदापि विनाशापत्तिः । तत्तु नित्यमेवेति विवेकः ।

## पुष्टिमार्गः

आचार्याणामाचारमार्ग एव पुष्टिमार्ग उच्यते । पुष्टिशब्दश्चानुग्रहवचनः । 'पोषणं तदनुग्रहः' । मुक्तिम्प्रति प्रमुखकारणता चानुग्रहस्यैवेति [भा० २।१०] कृत्वैव वल्लभसम्प्रदायोऽयं पुष्टिमार्ग इति पदव्यपदेशभाक् । वाल्लभा मन्यन्ते यदस्ति मर्यादामार्ग-पुष्टिमार्गयोः नितरां भेदः । अक्षरब्रह्मणो वाणीतो निःसृतत्वात् मर्यादामार्गोऽयं वैदिकः खलु । परं पुष्टिमार्गस्तु भगवतः पुरुषोत्तमस्य वपुषो निर्गतत्वात् सुतरां तद्विलक्षणः । मर्यादामार्गे ज्ञान-श्रवणादि-साधन-द्वारा सायुज्यमुपलभ्यते । परन्तु पुष्टिमार्गे सर्वात्मनात्मसमर्पणेन विप्र-योगरसात्मकप्रीतिसाचिव्येन साक्षात् आनन्दधाम्नो भगवतो ब्रह्मणोऽमृतत्व-प्राप्तिः । तथा च प्राह आचार्योपि अणुभाष्ये 'पुष्टिमार्गेऽङ्गीकृतस्य ज्ञानादि-नैरपेक्ष्यमर्यादायामङ्गीकृतस्य तु तदपेक्षितत्वं तु युक्तमेव" [अणुभाष्य ३।३।२९], 'पुष्टिमार्गोऽनुभवैकसाध्यः प्रमाणमार्गाद्विलक्षणः" इति [अणु० ४।४।९]।

भक्तिः—वल्लभसम्प्रदाये भक्तिरपि द्विविधा मर्यादाभक्तिः पुष्टिभक्तिश्च । एतयोरपि वैलक्षण्यमेवाङ्गीकृतम् । भगवच्चरणारविन्दभक्तिरेव मर्यादाभक्तिः । भगवतो मुखारविन्दभक्तिस्तु पुष्टिभक्तिः । मर्यादाभक्तिः फलं कामयते, पुष्टिभक्ति-

स्तु फलं नतरामाकाङ्क्षते। मर्यादाभक्तिद्वारा सायुज्यमेव केवलम्, परं पुष्टिभक्ति-द्वारा ब्रह्माभेदावबोधः। अतः दुःखक्लेशादिसंवलिताज्जगत उद्धाराय यदि कश्चित् श्रेयस्तरो मार्गस्तर्हि स पुष्टिमार्ग एवेति तेषां द्रढीयान् विश्वासः। स एव मुमुक्षुभिः सर्वात्मना उपादेयत्वेनाङ्गीकार्यः। श्रीमद्भगवद्वल्लभाचार्येण श्रीमद्भागवतस्या-ध्यात्मतत्त्वमाधारीकृत्यैव एष पुष्टिमार्गः प्रतिष्ठापितः।

## प्रस्थानचतुष्टयी

उपनिषद्, गीता, ब्रह्मसूत्रं, श्रीमद्भागवतं (व्यासस्य समाधिभाषा) इति प्रस्थानचतुष्टयी एषामाधारभूता। अस्मिन् सम्प्रदाये भागवतस्य निरतिशया प्रतिष्ठा, अणुभाष्यमप्यतिशेते 'सुबोधिनी' ख्यात्या। श्रीहरिरायस्य वचनमिदं सुतरां घटतेतराम्:—

"नाश्रितो वल्लभाधीशो न च दृष्टा सुबोधिनी।
नाराधि राधिकानाथो वृथा तज्जन्म भूतले॥"

इति सर्वतन्त्रस्वतन्त्रैः पदवाक्यप्रमाणपारावारीणैः श्रीमदाचार्यपण्डित-
द्विजेन्द्रनाथशास्त्रिसिद्धान्तशिरोमणिभिः विरचिते
संस्कृतसाहित्यविमर्शाख्ये ग्रन्थे
चतुर्थः परिच्छेदः।

## पञ्चमः परिच्छेदः

# नास्तिकदर्शनप्रकरणम्

१—चार्वाकदर्शनम् २—जैनदर्शनम् ३—बौद्धदर्शनम् ।

## चार्वाकदर्शनम्

अथेदानीं नास्तिकदर्शनेति[1] संज्ञया प्रसिद्धानां चार्वाक-जैन-बौद्धदर्शनानां संस्कृतसाहित्ये सविशेषं सन्निविष्टानाम् आस्तिकदर्शनभिन्नानाम् विवेचनमप्यत्यावश्यकमिति तेषामपि समासेन निरूपणमत्र प्रसङ्गसङ्गत्या वितन्यते ।

नास्तिकदर्शनेषु चार्वाकदर्शनस्य प्राचीनतया सर्वप्राथम्यम् । एषां नये शरीरस्यैवात्मत्वम् । शरीराद् भिन्नमात्मनोऽस्तित्वं न स्वीकुर्वन्ति । तेषाम् इदं दृश्यं जगदात्मलीलास्थलत्वेनाभिमतम् । परलोकास्तित्वेऽमी न श्रद्दधते । मरणमेव मुक्ति मन्यन्ते । प्रत्यक्षवाद एव विश्वसन्ति ते । परोक्षमवहेलयन्ति । मानवजीवनस्य काममेव पुरुषार्थत्वेनाभ्युपगच्छन्ति नादृष्टधर्मादिकं किमप्यन्यत् । निसर्गत एव जगदुत्पद्यते विनश्यति च इत्याद्याश्चार्वाकराद्धान्ता अमी अतिप्राचीनकालत एव भारतेऽवलोक्यन्ते प्रस्फुरन्तः । उपनिषत्साहित्येऽपि प्रश्नरूपेण निरूपिता तादृशी विचारधारा दृश्यते यामालम्ब्यैव चार्वाकसिद्धान्ताः सञ्जाता लब्धोदया इति सुतरां कल्पयितुं शक्यते । मरणानन्तरं, अयमात्माऽस्ति नवेति प्रश्नावसरे केचिदात्मनोऽस्तित्वं स्वीकुर्वन्ति केचिन्न, इति संशयः उपनिषत्सूपोद्बलितः । तथा च :–

"येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके ।"

[कठ० १।१।२०]

एवञ्च "न प्रेत्य संज्ञास्ति ।" [बृहदारण्यक ४।५।१३]

इत्यादिवचोभिर्गम्यते यच्चार्वाकात्प्राक्तनेऽपि काले तादृशी संशयात्मिका प्रवहति स्म काऽपि विचारधारा । एवमेव बौद्धग्रन्थेषु जैनग्रन्थेष्वपि च चार्वाकविचारबिन्दव उपलभ्यन्ते यत्र-तत्र प्रकीर्णाः । उच्छेदवादप्रतिपादका अजितकेशकम्बल्यसिद्धान्ताः लोकायतसिद्धान्तैः सह संवदन्ति । अतः चार्वाकसिद्धान्ता इमे अतिप्राचीनकालतः

१.—नास्तिकदर्शनमिति चैषामवैदिकदर्शनानां पारिभाषिकी संज्ञा । परलोके नास्ति मतिर्येषामिति तद्व्युत्पत्तिलभ्यमर्थमवष्टभ्येति विवेकः ।

दार्शनिकानां मस्तिष्कजातं भूम्ना समुद्वेल्लयन्ति स्म । श्रौतकाले, अहर्निशं यज्ञयागादिचिन्ताचान्तमनस्कानां परोक्ष-परलोकसमर्पितबुद्धिवैभवानां तदानीन्तनानां यायजूकानां कठोरशासननिपीडितानां तार्किकपण्डितानां तादृशप्रकाण्ड-कर्मकाण्डशृंखलाबन्धनमुच्छेत्तुकामानां प्रतिक्रियारूपेणोदियायेदं चार्वाकदर्शनमिति बहव आशेरते।

## लोकायतमस्यापरं नाम

इदमेव चार्वाकदर्शनं लोकायतदर्शननाम्नाऽपि प्रसिद्धम्। बुद्धिवाद एव एषां परमः सिद्धान्तः। वादेषु वैतण्डिकत्वमेवैते खल्वभिनन्दन्ति। स्वपक्षस्थापना तेभ्यो न रोचते। अतः लोकायतिका वैतण्डिका इत्यपि व्यपदिश्यन्ते। उक्तञ्च :—

"नहि लोकायते किञ्चित्कर्त्तव्यमुपदिश्यते ।
वैतण्डिककथैवासौ न पुनः कश्चिदागमः ।। [न्यायमञ्जरी]

लोकायतो हि नाम स्वभाववादः । स्वाभाविकपरिणामवादापरपर्य्यायोऽयमेव बार्हस्पत्य-चार्वाकादिपदैरपि जेगीयते। लोकायतशास्त्रे प्रत्यक्षमेव प्रमाणम्। अर्थकामौ च पुरुषार्थौ । नास्ति परलोकः। मृत्युरेवापवर्गः। एतदर्थप्रतिपादकानि बार्हस्पत्यसूत्राणि भास्करभाष्ये समुदाहृतानि। तथा च :—

"अथ लोकायतम् । पृथिव्यप्तेजोवायुरिति तत्त्वानि । तत्समुदाये शरीरेन्द्रियविषयसंज्ञा । तेभ्यश्चैतन्यं किण्वादिभ्यो मदशक्तिवद् विज्ञानम् ।" इति ।

चार्वाका इमे तर्कातिरिक्तं न कस्यापि शास्त्रान्तरस्य प्रामाण्यमङ्गीकुर्वन्ति सिद्धान्तान्तराणि सर्वाणि खण्डयन्ति, मण्डयन्ति केवलं बुद्धिवादं तर्कवादं वितण्डावादं वेति ।

## चार्वाकसंज्ञाकरणे प्रतिपत्तिः

केचन बृहस्पतिशिष्यचार्वाकद्वाराप्रचारितत्वादिदं चार्वाकदर्शनमिति मन्यन्ते । अपरे 'चर्व भक्षणे' इति धातोर्निष्पन्नत्वात् भक्षणशीलः चार्वाकः तत्सम्बन्धाद्दर्शनमपि चार्वाकपदेन प्रसिद्धिं गतमिति उपपादयन्ति। "नयते चार्वी। लोकायते चार्वी बुद्धिः, तत्सम्बन्धत्वादाचार्योऽपि चार्वाकः स लोकायते शास्त्रे पदार्थान् नयते" इति काशिकावृत्तिः [ १।३।३६ सूत्र ] । अपरे चारुवाक् पदस्याऽपभ्रंश एव चार्वाकशब्द इत्यप्युद्घोषयन्ति। भवतु नाम यद्वा तद्वा। सम्प्रति तु सर्वेऽपि नास्तिकाः परलोकेऽश्रद्दधानाश्चार्वाकपदेन परिभाष्यन्ते । चार्वाकदर्शनमिदं 'बार्हस्पत्य'दर्शननाम्नापि व्यवह्रियते ।

## आद्यसंस्थापको बृहस्पतिः

आचार्यो बृहस्पतिरस्य चार्वाकदर्शनस्य संस्थापकत्वेनोन्नीयते। बृहस्पतिरचितसूत्राणामुल्लेखः प्राचीनेषु दर्शनग्रन्थेषु समुपलभ्यते। 'एक आत्मनः शरीरेऽभावात्'[1] [ब्र० सू० ३।३।५३] इति सूत्रे, भास्करभाष्ये श्रीमच्छङ्कराचार्यभाष्येऽपि च। इमानि निम्नाङ्कितानि सूत्राणि नीलकण्ठी-श्रीधरी-मधुसूदनीटीकासु अद्वैतब्रह्मसिद्धौ च उद्धरणरूपेणावलोक्यन्ते।

(१) पृथिव्यप्तेजोवायुरिति तत्त्वानि। (२) तत्समुदाये शरीरेन्द्रियविषयसंज्ञा। (३) तेभ्यश्चैतन्यम्। (४) किण्वादिभ्यो मदशक्तिवद् विज्ञानम्, (५) मदशक्तिवद् विज्ञानम्। (६) चैतन्यविशिष्टः कायः पुरुषः। (७) काम एवैकः पुरुषार्थः। (८) मरणमेव अपवर्गः। इमानि बार्हस्पत्यसूत्राणि बृहस्पतेरैतिहासिकत्वं प्रख्यापयन्ति।

असंशयमेष बृहस्पतिराचार्यः महामेधावी सर्वशास्त्रेष्वप्रतिहतगतिश्चासीत्। न केवलं, महान् तार्किक एव अपितु महान् राजनीतिज्ञोऽपि। महाकविना भासमहाभागेन अस्यार्थशास्त्रस्योल्लेखः प्रतिमानाटके कृतः। एवं कौटिल्येनाऽपि स्वकीयेऽर्थशास्त्रे बृहस्पतेर्निर्देशः कृतः। बार्हस्पत्यानां नये अर्थशास्त्रं राजनीतिशास्त्रञ्चेति शास्त्रद्वयमेव ऐहिकसुखसाधनाय मुख्यत्वेन निर्दिष्टम्। 'वार्त्ता दण्डनीतिश्चेति बार्हस्पत्याः।' वार्ता अर्थशास्त्रं दण्डनीतिश्च राजनीतिः। चार्वाकमतसंस्थापको बृहस्पतिः, अर्थशास्त्रप्रणेता च बृहस्पतिरेक एव इति संशयास्पदं केषाञ्चिन्मते। किन्तु तत्त्वप्रतिपादनसरणिस्तु एकत्वमेवानयोः पुष्णाति।

## पदार्थमीमांसा

चार्वाकानां नये प्रत्यक्षमेव केवलं प्रमाणत्वेनानुगृहीतम्। प्रमाणान्तराणि ते न मन्यन्ते। इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं हि तेषां प्रत्यक्षम्। चक्षुरिन्द्रियद्वारा गृहीतं ज्ञानं चाक्षुषम्। रसनयोत्पन्नं रासनिकम्। श्रवणेन्द्रिये-

---

१. अत्रैके देहमात्रात्मदर्शिनो लोकायतिका देहव्यतिरिक्तस्यात्मनोऽभावं मन्यमानाः समस्तव्यस्तेषु बाह्येषु पृथिव्यादिषु अदृष्टमपि चैतन्यं शरीराकारपरिणतेषु भूतेषु स्यादिति सम्भावयन्तस्तेभ्यश्चैतन्यं मदशक्तिवद्विज्ञानं चैतन्यविशिष्टः कायः पुरुष इति चाहुः। न स्वर्गगमनायापवर्गगमनाय वा समर्थो देहव्यतिरिक्त आत्मास्ति यत्कृतं चैतन्यं देहे स्यात्। देह एव तु चेतनश्चात्मा चेति प्रतिजानते। [शाङ्करभाष्यम्]

णाधिगतं श्रावणम् । घ्राणेन्द्रियोत्थं घ्राणिकं, त्वगिन्द्रियेणोत्पन्नं त्वाचं ज्ञानम् । नैतदतिरिक्तं ज्ञानान्तरमेभिः स्वीक्रियते । अदृष्टाऽनास्वादिताऽश्रुताऽनाघ्राताऽस्पृष्ट-पदार्थेषु नैषामास्था। अनुमानस्य प्रमाणत्वमेव ते नाशंसन्ति। लोकव्यवहारं प्रति न निश्चयस्य कारणता, अपितु सम्भावनायाः। दूरतः दधिसंभृतपात्रमवलोक्य बालस्तदादातुं प्रवर्त्तते । न तु निश्चयात्मकत्वेन दध्येवैतदिति मत्वा । तत् प्रवृत्ति-मात्रस्य सम्भावनाजन्यत्वात् अनुभूतेरावश्यकतैव कुतः । अनुमानं हि खलु व्याप्तिमाश्रित्यैव प्रमाणकोटिमारोहति। व्याप्तिरेव तु नाश्नुते सामञ्जस्यम्। कुत उच्यते । व्याप्तिर्हि नाम साहचर्यनियमः । स न सार्वत्रिकः। न सार्वभौमिक-त्वेन प्रत्यक्षविषयीभवति। यत्र यत्र धूमस्तत्र तत्र वह्निरिति व्याप्तिरेव तावन्न घटते। इत्येकदेशितया वर्त्तमानकालिकं प्रत्यक्षमवगाहते न सार्वकालिकम्। अतः हेयपक्षे निक्षेपणीयत्वाद् अनुमितिरपि निराधारा न तार्किकानामादरमर्हति।

अत एवैषां प्रत्यक्षमेव प्रमाणम् बुद्धिगम्यं न प्रमाणान्तरम् । यद्युच्येत व्याप्तिः, विशेषे माभूत् सामान्ये तु सा भवत्येवेति । तदापि न 'यो यो मनुष्यः स स मरणशीलः' इति व्याप्तिः एतत्साहचर्यावलम्बिनी, मनुष्यत्वं मरणशीलत्वञ्च साहचर्यविषयीभूतं तत्तद्धर्मवतां समस्तपदार्थानां ज्ञानं स्वयमेव समुदेति एव, पुनः मनुष्यत्वं मरणशीलत्वञ्चेति साहचर्यमालम्ब्य देवदत्तस्य, मनुष्यत्वहेतोः मरणधर्मत्वानुमतेरावश्यकतैव कुतः ? तादृशानुमतेर्व्याप्तिवाक्यादेव गतार्थत्वात् सिद्धसाधनदोषापत्तेश्च। उक्तञ्च :—

'विशेषेऽनुगमाभावः सामान्ये सिद्धसाध्यता ।
अनुमानभङ्गपङ्केऽस्मिन् निमग्ना वादिदन्तिनः ।। इति ।

अतः अनुमानं नार्हति बुद्धिमतामादरमिति तेषां द्रढीयसी धारणा।

## स्वभाववादः

यदि नाम अनुमानवादिनः वह्निधूमयोः कार्यकारणभावमाश्रित्य तयोः साहचर्यं न्याय्यं मन्येरन् तदापि न चार्वाका व्याप्तिमङ्गीकर्त्तुमुद्यताः । यतः निसर्गसिद्धत्वाज्जगतो वैलक्षण्यस्य न तत् कार्यकारणभावमपेक्षते । सुखिन-मवलोक्य धर्मस्य कल्पना, दुःखिनं दृष्ट्वा चाधर्मस्येति न बुद्धिसङ्गतम् । सुखं दुःखं वा न धर्माधर्मजन्यमपितु निसर्गोत्थम्। सुखं दुःखञ्च स्वभावत एव प्रवर्त्तते निवर्त्तते चापि स्वभावत एव, नैतत्कारणजातमन्विष्यति । वह्नौ दाह-कत्वं जले च शैत्यं निसर्गसिद्धम्। जगति यत्किमपि दृश्यते तत्सर्वमेव स्वाभाविकम्, न किञ्चित्कारणकलापसमुत्थम् । उक्तञ्च :—

'शिखिनं चित्रयेत् को वा कोकिलांश्च प्रकूजयेत् ।
स्वभावव्यतिरेकेण विद्यते नात्र कारणम् ॥ [स० सि० सं० २१५]

तदेतदखिलं दृश्यं जगत्स्वभावत एव प्रवर्त्तते, निवर्त्तते चापि स्वभावत एवेति । उक्तञ्च :—

"अपरे लोकायतिकाः स्वभावं जगतः कारणमाहुः । स्वभावादेव जगद् विचित्रमुत्पद्यते, स्वभावतो विलयं याति ।" इति । [भट्टोत्पल-बृहत्संहिता १।७]

## शब्दादिप्रमाणासिद्धिः

चार्वाकाः शब्दप्रमाणमपि नाङ्गीकुर्वन्ति । कस्यचिदाप्तपुरुषस्य शब्दाद्योऽवबोधो जायते स प्रत्यक्षविषयीभूतत्वात् प्रत्यक्षेणैव सिद्धः । तदर्थमतिरिक्तप्रमाणकल्पनागौरवं को नाम सहेत । अपि च आप्तपुरुषस्य शब्दस्य प्रामाणिकत्वेन तत्राऽऽस्थास्थिरीकरणं अनुमानान्नातिरिच्यते । अनुमानेन तु प्रागेव निरस्तेन आकाशपुष्पायितम् । आप्तोपदेशा अपि प्रत्यक्षदृष्टविषयकाः श्रद्धामामन्त्रयन्ते, नादृष्टपरलोकादिविषयाः । अत एव लोकायतिकानां, वेदस्यापि, परस्परविरोधात्, निरर्थकशब्दप्रयोगात् परोक्षार्थप्रतिपादकत्वाच्च न प्रामाण्यम् । वेदविहितयज्ञयागादिषु च पशुवधविधानात्, तदामिषादिभक्षणाच्च प्रमाणपदवीं नाधिरोहति वेदोऽपीति तेषां डिण्डिमः । उक्तञ्च :—

त्रयो वेदस्य कर्त्तारो भाण्डधूर्त्तनिशाचराः ।
जर्भरी[1] तुर्फरीत्यादि पण्डितानां वचः स्मृतम् ॥
[स० द० सं० पृ० ४]

एवं तैः सर्वेऽपि श्रौतविधयः कर्मकलापाश्च निराकृताः । तेषां नये प्रत्यक्षस्यैवैकस्य प्रामाण्याङ्गीकारबलादखिलानि प्रमाणान्तराणि अपास्तानि विभाव्यन्ते इति ।

## जगत्

पृथिव्यप्तेजोवायुरिति तत्त्वचतुष्टयं तेषामभिमतम् । आकाशस्य शून्यत्वात् सद्भावं सत्तात्मकतां ते नोरीकुर्वन्ति । पृथिव्यादिभूतचतुष्टयमेव आण्विकीमवस्थां गतं जगतो मूलकारणत्वेनोन्नीयते तैः । परमेतद् भूतचतुष्टयोत्पत्ति-

---

१. सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका ।
उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु ॥
[ऋग् १०।१०६।६]

विषये ते सर्वथा वाचंयमत्वमेव शरणीकुर्वन्ति। आकस्मिक एव एष भूतनिचयः, आकस्मिकी च तस्माज्जगदुत्पत्तिरिति तेषामभ्युगमः।

## जीवः

जीवश्च न तेषां नये शरीरतो व्यतिरिच्यते। जडे शरीरे कुतश्चैतन्योत्पाद इति चेदुच्यते। चैतन्यादयो हि शरीरधर्माः शरीरे सति तेषां सद्भावात्तस्मिन्नसति चासद्भावात्। यथा ज्वलनस्य दाहप्रकाशौ। न च पृथिव्यादिषु भूतेषु प्रत्येकमनुपलभ्यमानाश्चैतन्यादयः कथं शरीरस्य धर्म्माः उपपद्येरन्निति शङ्क्यम्। अनुद्भूतत्वेन तत्रानुपलम्भात्। पृथिव्यादिषु चैतन्यादयः सन्तोऽप्यनुद्भूतत्वेन नोपलभ्यन्ते। सति शरीरसङ्घाते तेषां समुद्भवसम्भवात्। यथा किण्वादयः समस्ता व्यस्ताः मदकारिणः सन्तोऽपि, मदशक्तेरनुद्भवान्न मदयन्ति, तच्छक्तेरुद्भवात्तु मदयन्ति, तथैव समस्तानि व्यस्तानि च भूतानि चेतनानि सन्त्यपि चैतन्यशक्तेरनुद्भवान्न चैतन्यप्रसवाय प्रकल्पन्ते। सति तदुद्भवे च चैतन्यमनुगृह्णन्ति। तस्मात् शरीराश्रयत्वं चैतन्यस्य न जातु तद्व्यतिरिक्तकिञ्चिदन्याश्रयत्वम्। तस्मात् शरीरात्मनोरभेद एव वेदितव्यः। एष एव चार्वाकाणां भूतचैतन्यवादः। श्यामोऽहं गौरोऽहं स्थूलोऽहं कृशोऽहमित्यादिप्रत्यया अपि शरीरगोचरा एव प्रत्यक्षाः। न तद्व्यतिरिक्तात्मगोचराः इति शरीरमेव जीवः, जीवश्च शरीरम्। तेषां नये जीवशरीरयोर्व्यतिरेको नाऽस्त्येव खलु। यद्यप्यात्मतत्वविषये मतानि भिद्यन्ते चार्वाकेषु केचन इन्द्रियाण्येवात्मा, अपरे प्राण एवात्मा, अन्ये मन एवात्मेति मन्यन्ते, तथाप्येवं परस्परभिन्नमतयोऽपि ते आत्मनः शरीराव्यतिरिक्तत्वे मतिभेदन्नाभिवाञ्छन्ति।

## ईश्वरः

चार्वाकाणां मते ईश्वरस्य काऽपि सत्ता नास्ति। ईश्वरवादिनः ईश्वरसत्तामनुमानप्रमाणेनोपपादयन्ति। ईश्वरोऽनुमानगम्यो न प्रत्यक्षगोचरः, शब्दप्रमाणनिर्देश्यश्च।

परन्तु चार्वाकानां केवलं प्रत्यक्षमेव प्रमाणम्। प्रत्यक्षवर्जं सर्वाण्यपि प्रमाणान्तराणि उच्छिन्नमूलानीति तदितरसाधितस्येश्वरस्य सत्तायां कथमिव ते विश्वसेयुः। अत एव ईश्वरस्य परोक्षविषयत्वान्न किमपि स्थानं चार्वाकदर्शने। स्वर्गापवर्गपरलोकाद्यदृष्टकल्पितपदार्थेषु न ते बुद्धिसाङ्गत्यमवलोकयन्ति। यदा

---

१. जडभूतविकारेषु चैतन्यं यत्तु दृश्यते।
ताम्बूलपूगचूर्णानां योगराग इवोत्थितम्॥ [स० सि० सं० २१७]

मोक्ष एव तेषां शरीरलयः। सर्वं सुखदुःखादिकञ्च शरीरपर्यवसायि । पुरुषार्थौ द्वावर्थकामौ । धर्ममोक्षौ हि भ्रान्तिविलसितौ । निर्बुद्धिजनकल्पितात्वाद्धेयौ । यावज्जीवञ्च मनुष्येण सुखं जीवितव्यं, ऋणं कृत्वाऽपि घृतं पेयम्। भस्मीभूतस्य देहस्य प्रत्यागमनाशा तु दुराशामात्रमेव। इदमेव मनुष्यजीवनस्य चरममुद्देश्यम्।

'यावज्जीवेत्सुखं जीवेद् ऋणं कृत्वा घृतं पिबेत् ।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ॥ इति।

समुपहसन्ति च ते परलोके श्रद्दधानान्—यद् दुःखभयाद् दुःखसंभिन्नस्य सुखस्य परित्यागः । अहो कीदृशोऽयं मतिविभ्रमाभिनिवेशोऽनभिज्ञानात् । भिक्षुकाः सन्तीति किं स्थाल्यो नाधिश्रीयन्ते । मृगाः सन्तीति किं शालयो वा नोप्यन्ते ? अरे वराकाः स्वर्गापवर्गौ तु इहैव जगति स्तः। किं वृथा परलोककथाविजृम्भणेन। उक्तञ्चाभियुक्तैः —

'त्याज्यं सुखं विषयसङ्गमजन्म पुंसाम्,
दुःखोपसृष्टमिति मूर्ख-विचारणैषा।
व्रीहीन् जिहासति सितोत्तमतण्डुलाढ्यान्
को नाम भोस्तुषकणोपहितान् हितार्थी॥ [स० द० सं० पृ० ४]

## समाजव्यवस्था

नैतावता चार्वाकाणां जीवनव्यवस्थौच्छृङ्खल्यमनुमेयम् । लोक-सुखोपलब्ध्यर्थं समाजव्यवस्थया सर्वाङ्गपूर्णया भवितव्यमिति तेषा-मभिमतम् । अतः आचार्यबृहस्पतिमहाभागैरर्थशास्त्रं विरचितम्। यत्र मनुष्यैः संयतजीवनैर्भवितव्यम्। नियमाश्च निर्दिष्टाः। निग्रहानुग्रहकर्त्ता राजा एव ईश्वरत्वेनाङ्गीकृतः। अतोऽमी चार्वाका उच्छृङ्खलजीवनस्य पक्षपातिनो नासन्। नियमितमेव जीवनन्ते प्रशंसन्ति स्म। भौतिकवादमभिनन्दन्तोऽपि विशृङ्खलजीवनं निन्दन्ति । इदं प्रत्यक्षं जगदेव, सत्यं, शिवं, सुन्दरं यथा भवेत् तथाऽऽचरणीयम् जनैरिति तेषामुपदेशः। अदृष्टे परलोके आस्था मा कृथा इत्यादेशः। अर्थकामौ सुखसमृद्ध्यर्थं सम्पादनीयौ इति तेषां निर्देशः परलोके बुद्धिमन्तो न विश्वसन्ति इति दिक्।

## ग्रन्थाः

यद्यपि चार्वाकग्रन्था विलुप्तप्रायाः । चार्वाकदर्शनम्प्रति, लोका श्रद्दधाना नासन् । आस्तिकदर्शनकारैरस्य बलवत्तरं खण्डनं कृतम् । वैदिककर्मकाण्ड-ण्डितैरपि चार्वाकसिद्धान्तानां प्रखरतरं निराकरणं विहितम् । 'नास्तिको

वेदनिन्दकः' इति उक्तिरपि विशेषतः चार्वाकान् लक्ष्यीकृत्यैव प्रवृत्तेति प्रतीयते। वैदिकपण्डितमण्डलेनेव जनसाधारणेनापि अवहेल्यमाना ग्रन्था अपि शनैःशनैः सर्वघस्मरेण कालेन कवलीकृताः प्रतीयन्ते। भगवत्पतञ्जलिपादानां कालं यावत् भागुरीनामकाष्टीकाग्रन्था उपलभ्यन्ते स्म। महाभाष्ये (३।३।५३-५४) सूत्रे 'वर्णिका भागुरी लोकायतस्य।' वर्णिका व्याख्यात्री, भागुरी टीकाविशेषः इति कय्यटेनोपन्यस्तम्। भट्टजयराशिविरचिते तत्त्वोपप्लवनाम्नि ग्रन्थे, चार्वाकीय-सिद्धान्तानां तर्कबहुलं यौक्तिकं विवरणं कृतमवलोक्यते। ग्रन्थोऽयम् दशमशताब्दीं निकषा क्वचिन्निर्मित इति कालविदां निर्णयः। सामान्यः परिचयस्तु चार्वाकीयराद्धान्तानां यत्र–तत्र सर्वदर्शन–संग्रहग्रन्थेषु न्यायवैशेषिकवेदान्तादिदर्शनेषु प्रायेण पूर्वपक्षरूपेण संस्मृतो दृश्यते। न्यायमञ्जरी, प्रमेयसंग्रहः, सर्वमतसंग्रहः, षड्दर्शनसम्मुच्चयः अस्य गुणरत्नकृता टीका, सर्वदर्शनसंग्रहः, कमलशीलकृततत्त्व-संग्रहस्य पञ्जिका इत्याद्याः ग्रन्थाः। एतेषु, नैषधकाव्यस्य सप्तदशे सर्गे, प्रबोध-चन्द्रोदयनाटकस्य द्वितीयाङ्के च, चार्वाकसिद्धान्तानामुल्लेखः समुपलभ्यते। तत्रापि सर्वदर्शनसंग्रहस्य प्रारम्भिकाध्याये चार्वाकवर्णनं किञ्चिद्वैशद्येन कृतम्। एतन्मात्रमेव सम्प्रत्युपलभ्यमानं साहित्यं चार्वाकदर्शनस्य। विशेषस्तु तत्रतत्रैवानसन्धेयम्। इति संक्षेपः।

---

# अथ जैनदर्शनम्

## जैनदर्शनस्य प्रादुर्भावः

जैनदर्शनस्य प्रादुर्भावः बौद्धदर्शनात्पूर्वतनः। जैनधर्मस्य खल्वतिप्राचीनं नामधेयन्तु 'निगण्ठ' इति निर्ग्रन्थशब्दस्य पालीभाषायाः रूपान्तरितोऽपभ्रंशः प्रतीयते भवबन्धस्य ग्रन्थिनिर्गतत्वात् निर्ग्रन्थ इति व्यपदिश्यते, महावीरस्य चोपाधित्वेनोन्नीयते। तत्र रागद्वेषविजयिनः सर्वज्ञकल्पास्त्रैलोक्यपूजिता यथास्थितार्थवादिनः सिद्धपुरुषां 'अर्हत्' पदेन संज्ञायन्ते[1]। तत्प्रचारितत्वाद्दर्शनमप्येतदार्हतमुच्यते। जैनधर्मस्यान्तिमतीर्थङ्करस्य वर्द्धमानाधिपस्य रागद्वेषादिरिपूणां विजयात् 'जिन' इत्युपाधिः। जिनेन प्रचारितत्वादिदं जैनदर्शनमुच्यते। जैनसिद्धान्तप्रचारकास्तीर्थङ्करा उच्यन्ते। तीर्थङ्करेष्वाद्यः खलु 'ऋषभदेवः। पार्श्वनाथमहावीरौ चान्तिमौ। तदितरदेर्कावशतितीर्थङ्कराणां यथार्थवर्णनं नोपलभ्यते पूर्णतया। सर्वङ्कषकालचक्रवशाद्विलुप्तप्रायं जैनधर्मं तत्रभवान् ऋषभदेव एव पुनरुज्जीवयामास।

पार्श्वनाथः—एष किल काशीनृपतेः अश्वसेनस्यात्मजः। महाराज्ञी वामादेवी चास्य जननी। अस्य जन्मनः पूर्वमस्य जनन्या स्वपार्श्वे कृष्णसर्पो विसर्पन्नवलोकितः। अतः एवासौ पार्श्वनाथनाम्ना तया अलङ्कृतः। त्रिंशद्वर्षपर्यन्तमसौ गार्हस्थ्यधर्ममनुपालयन् वैराग्यसम्पन्नः सकलान् भोगविलासान् विपुलवैभवसमुद्भवान् परित्यज्य भिक्षुजीवनं स्वीचकार। सप्ततिवर्षपर्यन्तञ्च जैनधर्मप्रचारं कुर्वन्नन्ते समेतशिखरे निर्वाणं प्राप्तवान्। अत्रभवान् पार्श्वनाथः पञ्चमहाव्रतेषु चतुर एवाहिंसासत्यास्तेयापरिग्रहान् बलवदुपदिदेश। तत्रभवान् महावीरस्तु ब्रह्मचर्यमपि परमावश्यकत्वेन निर्दिदेशेति। पार्श्वनाथः वस्त्रपरिधानपक्षपाती, महावीरस्तु नग्नत्वमेव तपश्चर्यायै अपरिहार्यं मेने। दिगम्बरश्वेताम्बरप्रभेदस्यैतदेव प्रमुखकारणत्वेनोन्नीयते।

जैनधर्मस्यान्तिमस्तीर्थङ्करो वर्धमानाभिधानः पार्श्वनाथस्य सार्द्धशतकद्वयान्ते वैशालीग्रामे जन्मपरिग्रहञ्चकार।

## जैनसाहित्यम्

जैनसाहित्यं हि अतीव विशदं वर्त्तते। आचारग्रन्थापेक्षया प्रमाणग्रन्थानां बाहुल्यम्। एते च दर्शनग्रन्थाः, आगमकाल, आरम्भकाल, मध्ययुग,

---

१. सर्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजितः।
यथास्थितार्थवादी च देवोऽर्हन् परमेश्वरः॥ [स० द० सं० पृ० ६]

अवान्तरयुगभेदाच्चतुर्षु कालविभागेषु विभक्ताः । तत्र आगमग्रन्थानां रचनाकाले भूयान् मतभेदः । दिगम्बरा व्यवतिष्ठन्ते यत् मूलभूता आगमग्रन्था विलुप्ताः । अद्यतनोपलब्धा ये केचन ते श्वेताम्बरैरेव संरक्षिता विभाव्यन्ते । यद्यपि आद्यरचनायाः कालस्तु संदिग्धः तथापि तेषामन्तिमसंशोधनं षष्ठशतके वल्लभीसमितेः आचार्यदेवर्धिगणिमहाभागैः कृतमिति कालविदामाघोषः । ततः भद्रबाहुर्यदा कर्नाटके गतः तदा स्थूलभद्राध्यक्षतायां पाटलिपुत्रे कतिपयैः जैनमुनिभिर्जैनागमानां स्थिरीकरणं कृतम् । परं दिगम्बराचार्याणां सम्प्रदायः एषु न श्रद्दधते । तेषां नये सर्वे एव आगमग्रन्थाः विलुप्तप्राया एव ।

**आरम्भकालः**––वस्तुतः जैनदर्शनोपक्रमः प्रथमशताब्द्यामेव लब्धावसरः । अस्मिन् काले उमास्वाति-कुन्दकुन्दाचार्य-सामन्तभद्रनामकैः त्रिभिः प्रकाण्डपण्डितैः सुदृढः शिलाधारः आरोपितः जैनदर्शनस्य । दिगम्बराचार्यैः एष उमास्वातिरेव उमास्वामीति नाम्नाऽपि व्यवह्रियन्ते । इमे महानुभावाः मगधदेशनिवासिनो विक्रमसंवदारम्भकाले कुसुमपुरे स्वप्रख्याततमं 'तत्त्वार्थसूत्र'नामग्रन्थं 'तत्त्वार्थाधिगमा'-परनामधेयं विरचयामासुः । ग्रन्थोऽयं जैनदर्शने प्रतिष्ठायाः पराकाष्ठामवगाहते । अस्योपरि विविधैः जैनसिद्धान्तविशेषज्ञैः पंडितपुरन्दरैः विविधानि भाष्याणि, वृत्तयष्टीकाश्च समुट्टङ्किताः । पूज्यपरमश्रद्धेयस्य देवनन्दिमहाभागस्य 'सर्वार्थसिद्धिः', दिगम्बराचार्याभिसम्मतस्य समन्तभद्रस्य सिद्धसेनदिवाकरस्य च गन्धहस्तीभाष्यं, भट्टाऽकलङ्कस्य 'राजवार्तिकं', विद्यानन्दीमहोदयस्य 'श्लोकवार्तिक'-मित्येवमादीनि अनेकानि प्रधानानि भाष्याणि वृत्तयश्च समुल्लसन्ति । तत्र कुन्दकुन्दाचार्यः द्रविडदेशालङ्कारभूतः सुविख्यातः दिगम्बरजैनाचार्यः । यद्यपि अस्य स्थितिकालविषये महान्भेदः तथापि ऐतिह्यविदः विक्रमप्रथमशताब्द्यामेवास्य विद्यमानतां निर्दिशन्ति । एवम् उमास्वातिसमसामयिक एव एष प्रतीयते । जैनदर्शनस्य असौ प्रकाण्ड आचार्यः । अस्य द्राविडं नाम कोण्डकुण्डाचार्यः । कुन्दकुन्द इति नामधेयं तु संस्कृतरूपान्तरम् । एभिः जैनसिद्धान्तप्रतिपादकाः बहवो ग्रन्थाः विरचिताः । तेषु चतुरशीतिः ग्रन्थास्तु केवलं प्राकृतभाषामवलम्बमाना एव । तदतिरिक्ताः अस्य चत्वारो ग्रन्थास्तु जैनागमस्य सर्वस्वभूताः––नियमसारः, पंचास्तिकायसारः, समयसारः प्रवचनसार इतिनामधेयाः । तत्रापि अन्तिमाः त्रयो ग्रन्थास्तु नाटकत्रयीति संज्ञया प्रसिद्धाः । यथाहि ब्राह्मणदर्शने, उपनिषद् ब्रह्मसूत्रं गीता च प्रस्थानत्रयीति नाम्ना प्रसिद्धयन्ति तथैव जैनदर्शने, उक्तनाटकत्रयीति नाम्ना प्रख्यातिं गता समेषां आदरास्पदमधिरोहति ।

**समन्तभद्रः**––अयमपरो जैनधर्मस्य सर्वमान्य आचार्यः । अस्य स्थितिकालः तृतीयचतुर्थशतकयोरन्तराले निश्चिन्वन्ति । देवनन्दीविरचितेषु ग्रन्थेषु समन्तभद्रस्य

उल्लेख उपलभ्यते। जनेन्द्रव्याकरणेऽपि "चतुष्टयं समन्तभद्रस्य" (५।४।१६८) इति सूत्रे अस्य नामस्मरणं कृतं दृश्यते। देवनन्दिना उमास्वातिविरचिते तत्त्वार्थसूत्रे लिखितायां सर्वार्थसिद्धिटीकायां समन्तभद्रसिद्धान्तानां प्रचुरप्रभावः प्रतीयते। एवं सति अस्य समयः पूज्यपाददेवनन्दिसमयात्प्राचीन इति पक्षः समीचीनः। दिङ्-नागादप्यसौ प्राचीनः। अस्य ग्रन्थाः (१) देवागमस्तोत्रापरनामधेयः चतुर्दशो-त्तरशतकारिकासंवलितः 'आप्तमीमांसे'त्याख्यः, प्रथमो ग्रन्थः। अकलङ्कभट्ट-रचिता 'अष्टशती', विद्यानन्दलिखिता 'अष्टसाहस्री' अस्य सुप्रसिद्धे टीके, (२) चतुःषष्टिपद्यनिबद्धो युक्त्यनुशासनम् द्वितीयो ग्रन्थः। (३) स्वयम्भूस्तोत्रं, (४) जिनस्तुतिशतकम्, (५) रत्नकरण्डश्रावकाचारः, (६) जीवसिद्धिः, (७) तत्वानुसन्धानम्, (८) गन्धहस्तिभाष्यञ्च।

## मध्ययुगीना आचार्याः

षष्ठशताब्दीत आरभ्य नवमशताब्दीपर्यन्तं मध्ययुगत्वेन गण्यते। युगमेतं स्वर्णयुगं बाभाषन्ते विद्वांसः। अस्मिन्नेव वैदुषीसम्भृतानामनेकग्रन्थरत्नानां रचना सञ्जाता। अस्य कालस्यारम्भो गुप्तकालान्तःपाती। एतत्कालभवानां प्रसिद्धा-चार्याणां संक्षेपतो वर्णनमत्र समभ्युपपन्नम्।

सिद्धसेनदिवाकरः—पञ्चशताब्दीसम्भवो महापण्डितः। उज्जैनाधि-पतिना केनचिद्विक्रमादित्येन सहाऽस्य घनिष्ठा मैत्री। 'वृद्धवादी'नामा प्रखरो विद्वान् किलास्य गुरुवरः। अस्य प्रसिद्धा ग्रन्था 'न्यायावतारः', 'सन्मतितर्कः', 'तत्त्वार्थटीका', कल्याणमन्दिरस्तोत्रञ्चेति चत्वारः। वस्तुतोऽस्य न्यायावताराख्यसन्दर्भो जैन-न्यायस्यादिमो जन्मप्रदाता इति कथ्यते। 'सन्मतितर्क'श्च नितान्तं प्रमेय-बहुलो ग्रन्थः।

हरिभद्रः (वैक्रमेऽष्टमशतके)—अनेन जैनदर्शनमुद्दिश्य बहवो ग्रन्था विर-चिताः। तेषु षड्दर्शनसमुच्चयः, अनेकान्तजयपताका चास्यात्यन्तप्रसिद्धौ ग्रन्थौ।

अकलङ्कभट्टः (अष्टमे शतके)—अष्टमशताब्द्या उत्तरेऽसावुत्पन्नः। अनेन तत्वार्थसूत्रेऽतीव महत्वपूर्णः 'राजवार्त्तिको' लिखितः। आप्तमीमांसायाश्च व्याख्या-रूपेण 'अष्टशती' विरचिता। इदानीमेवास्य ग्रन्थत्रयस्य, लघीयस्त्रय-न्यायविनि-श्चय-प्रमाणसंग्रहाभिधस्य प्रकाशनं संवृत्तम्। इमे हि ग्रन्था जैन-न्यायविषयकाः।

विद्यानन्दः—नवमशतकलब्धजन्मा, महान् भाष्यकारः। अनेन अष्टशती-अष्टसाहस्री-तत्त्वार्थसूत्रेषु श्लोकवार्त्तिको विलिखितः मीमांसामूर्द्धन्यस्य कुमा-रिलभट्टस्य सरणिमवलम्ब्य। असौ महतीं प्रतिष्ठां प्राप्तवान्।

अन्ये चापि प्रसिद्धाः बहवो विद्वांसो जैनदर्शनग्रन्थप्रणेतारोऽभूवन् जैनधर्म-सिद्धान्तप्रचारकाश्च यतयो मुनयो विद्वांसश्च। तेषु वादिराजसूरिः, अवान्तरयुग-भवाश्च देवसूरिः, हेमचन्द्रः, मल्लिषेणसूरिः, गुरुरत्नमहाभागः, यशोविजय-प्रभृतयः निरतिशयमानार्हा विभाव्यन्ते।

जीवः--जैनदर्शने, जीवस्य चैतन्यमत्त्वं, निसर्गत एवानन्तज्ञानविशिष्टत्वं स्वीकृतम्। प्राक्तनकर्मावरणपिहितत्वेन जीवः समावृतशुद्धरूपोऽवभासते, किन्तु सम्यक्चरित्रालम्बनेनं स पुनः स्वशुद्धज्ञानस्वरूपतां विन्दति कैवल्यं सर्वज्ञताञ्च भूयः सुतरामवगाहते, इति तेषां सार्वभौमः सिद्धान्तः।

ज्ञानस्य द्वैविध्यं प्रत्यक्षं परोक्षं तयोर्भेदश्च--ज्ञानञ्चेदं द्विविधम्। प्रत्यक्षं परोक्षञ्चेति। प्रत्यक्षपरोक्षयोः स्वरूपं दर्शनान्तरेभ्यः सर्वथा विलक्षणम्। एषामात्मसापेक्षज्ञानमेव प्रत्यक्षम्। आत्मेतरेन्द्रियादिसापेक्षं ज्ञानञ्च परोक्षम्। यस्मिन् ज्ञाने केवलं स्वतन्त्र आत्मैव कारणीभूतः। इन्द्रियान्तरसाचिव्यं नापेक्षते, तदेव ज्ञानं प्रत्यक्षत्वेनोन्नीयते। यस्मिञ्ज्ञाने तु इन्द्रियसाचिव्यमपेक्ष्यते तत्परोक्षमिति विवेकः। तच्च परोक्षं ज्ञानं द्विविधम्--मतिः श्रुतिश्चेति।[1] द्वयमपीदं इन्द्रियसाचि-व्यमन्तरा न सम्भवितुमीष्टे। पुनश्च तत्परोक्षं प्रकारविधया त्रिविधम्--अवधिः, मनःपर्यायः, केवलञ्चेति। तत्र दूरस्थितानां व्यवहितपदार्थानां ज्ञानमवधिज्ञान-मुच्यते। जीवस्य यदा सात्त्विकसाधनाद्वारा आवरणीयकर्मणामांशिकः क्षय उपक्रमते तदा यज्ज्ञानमात्मनि समुत्पद्यते तदवधिज्ञानपदेन व्यपदिश्यते इति भावः। यत्तु ज्ञानं जन्मसमकालावच्छेदेन जन्यते तद्भवप्रत्ययपदेन, यच्च पुनः व्रतनियमादितपश्चर्या-मपेक्षते तद्गुणप्रत्यय इति संज्ञया समाख्यायते। यदा च जीवस्य ईर्ष्याद्वेषादिपरकीय-मनःप्रवृत्तिबाधककर्मनिचयः क्षिणोति, परमनोगतज्ञानयोग्यता च सम्पादिता भवति तदा स मनःपर्यायप्रज्ञावानित्युच्यते। क्षीणेषु च समस्तकर्मावरणेषु जीवः विशुद्धस्वरूपतामधिगच्छति। तदा स सर्वज्ञतादिधर्मोदयमासादयन् केवलज्ञान-रूपतां प्रतिपद्यते सिद्धः पुरुषश्च सम्पद्यते। विशेषतो जिज्ञासुभिस्तु तत्त्वार्थसूत्रमनु-सन्धेयम्। जैनाचार्याणां प्रत्यक्षपरोक्षयोः कोऽपि विलक्षण एव भेदः। प्रमाण-मीमांसायां हेमचन्द्राचार्येण, षड्दर्शनसमुच्चयटीकायां गुणरत्नाचार्येण च सांव्याव-हारिक-पारमार्थिकभेदेन प्रत्यक्षं च द्वेधा विभक्तम्। यत्र हि इन्द्रियमनःसाहाय्य-

---

१. आत्ममनःसम्पर्कादुद्भूतं ज्ञानं मतिज्ञानम्। मतिज्ञानं, संज्ञा, स्मृतिः, चिन्ता, अभिनिबोध इति अनर्थान्तरम्। मतिज्ञानन्तु विद्यमाने वस्तुनि। प्रवर्तते, श्रुतिज्ञानन्तु पुनरतीते वर्तमाने भविष्यति च त्रैकालिके वस्तुनि। श्रुतिज्ञाने यथा शब्दोल्लेखः प्रवर्तते न तथा मतिज्ञाने इति विवेकः।

मपेक्षते तत्सांव्यावहारिकम् । यत्र च आवरणे विलीने सति, जीवस्य स्वरूपाविर्भावत्वेन यत् केवलज्ञानात्मकत्वं तत्पारमार्थिकम् । तथा च प्रमाणमीमांसायां :—

"तत्सर्वथाऽऽवरणविलये चेतनस्य स्वरूपाविर्भावो मुख्यं केवलम्"
[प्रमाण० १।१५]

परोक्षज्ञानमपि पञ्चप्रकारकम् स्मृति-प्रत्यभिज्ञान-तर्क-अनुमान-आगम-भेदात् । तावतेदं सुतरां शक्यते प्रतिपत्तुं यज्जैनदार्शनिकाः प्रत्यक्षानुमानागमा इति प्रमाणत्रयमेवाङ्गीकुर्वन्ति । प्रत्यक्षस्य प्रमाणत्वं तु सर्व एव मन्यन्ते, परन्त्वनुमानस्य चार्वाकाणामनङ्गीकारः । जैनाचार्यैस्तु अतीव प्रबलाभिर्युक्तिभिरनुमानस्य लोकव्यवहारप्रतिपत्तये अपरिहार्यत्वेन स्थापना कृता व्यज्यंते ।

## स्याद्वादः

स्याद्वादो हि नाम जैनदर्शनस्य प्रधानो वादः । पदार्थाः खल्वनेकधर्माणः । तेषु परिपूर्णं सर्वधर्मसमन्वितं ज्ञानं, अनधिगतकैवल्यपदं सर्वज्ञं सिद्धपुरुषं विहाय सर्वसाधारणजनैः दुरवापतया न शक्यसम्भवम् । अतस्तैः पदार्थस्यांशिकं ज्ञानं भवितुं शक्यम् । तदांशिकज्ञानं 'नय' शब्देनोच्यते । 'एकदेशविशिष्टो यो नयस्य विषयो मतः' (न्यायावतार श्लोक २९) । अपि च 'नीयते परिच्छिद्यते एकदेशविशिष्टोर्थः अनेनेति स नयः ।' [स्याद्वादमञ्जरी पृ० १५९] ।

ज्ञानसामान्यस्य च त्रिप्रकारकत्वमेभिरङ्गीक्रियते दुर्णय-नय-प्रमाणभेदेन । यदि सद्वस्तु सर्वकालावच्छेदेन सद्वस्तुत्वेनैव व्यवह्रियते, तर्हि तत्रान्यधर्माणां निषिध्यमानत्वदोषसत्त्वात् तज्ज्ञानं दुर्णयपदेन स्मिर्यते । धर्मान्तरनिषेधमन्तरा सद्वस्तुमात्रांशिकज्ञानसद्भावाद् यज्ज्ञानं तन्नयपदेनोच्यते । परमेतयोर्न तथा प्रामाण्यं यथा सद्वस्तुविषये 'स्यात्सदिति' असद्वस्तुविषये च 'स्यादसदिति' इति स्यात्कोटिमारूढानां ज्ञाताज्ञातसकलधर्मसङ्कलनविधयाधिगतस्य, स्याद्वादोद्वेल्लितज्ञानस्य प्रमाणत्वम् ।[1]

१. सदेव सत्स्यात् सदिति त्रिधार्थो मीयेत दुर्नीतिनयप्रमाणैः ।
यथार्थदर्शी तु नयप्रमाण-पथेन दुर्नीतिपथं त्वमास्थाः ॥
[स्याद्वादमञ्जरी श्लोक २८]

स्यात् पदं संशयितार्थसचिवसम्भवार्थमभिधत्ते । अस् धातोः विधिलिङि व्युत्पन्नोपि सन्नयमत्र प्रतिरूपाव्ययत्वेन गृह्यते, 'घटवदिदं भूतलम्' इत्यत्रैषां परामर्शः स्यादस्ति घट इत्येवंरूप एव । अत एवामी प्रतिपरामर्शवाक्येन सह स्यादिति प्रयुञ्जन्त एव । स्याद्वादोऽयमतीव महत्त्वपूर्णं पदमादधाति प्रमाणमीमांसायामिति ।

## नयवादः

एष खलु नयवादोऽपि जैनदर्शने सविशेषं स्थानमधिकरोति । नयवादस्य विवेचनं जैनग्रन्थेषु विशदतया कृतमुपलभ्यते । यद्यपि पदार्थानामनन्तधर्मत्वात्तेषां भेदानां भेदनिरूपणप्रकाराणाञ्च संख्याप्यनन्ता एव भवितुर्महति, परं वस्तुगत्या तेषां द्वावेव भेदौ स्वीक्रियते--द्रव्यार्थिक-पर्यायार्थिकनयभेदात् । तत्र द्रव्यार्थिकनयः त्रिप्रकारः, पर्यायार्थिकनयश्च पुनश्चतुष्प्रकारः, तावुभौ मिथः सम्भूय सप्तप्रकारकौ भवतः । नैगम-संग्रह-व्यवहार-ऋजु-शब्द-समाधिरूढ-एवम्भूतनयश्चेति । तेषां व्याख्यानं तु तत्र तत्रैवानुसन्धेयम् ।

## सप्तभङ्गीनयः

दर्शनान्तरेषु परामर्शोऽन्वयव्यतिरेकरूपेण द्विविध एव गृह्यते परं जैनदर्शने स एष सप्तप्रकारकः स्वीकृतः यः सप्तभङ्गीनय इति नाम्ना प्रख्यायते--

(१) स्यादस्ति इति प्रथमो भङ्गः ।
(२) स्यान्नास्ति इति द्वितीयः ।
(३) स्यादस्ति च नास्ति चेति तृतीयः ।
(४) स्यादवक्तव्यम् इति चतुर्थः ।
(५) स्यादस्ति च अवक्तव्यञ्चेति पञ्चमः ।
(६) स्यान्नास्ति चावक्तव्यञ्चेति षष्ठः ।
(७) स्यादस्ति च नास्ति चावक्तव्यञ्चेति सप्तमः ।

उक्तञ्च कुन्दकुन्दाचार्येण

"स्यादस्ति नास्त्युभयवक्तव्यं पुनश्च तत्त्रितयम् ।
द्रव्यं खलु सप्तभङ्गमादेशवशेन सम्भवति ॥

[पञ्चास्तिकायसमयसारे]

अयञ्च सप्तभङ्गीनय एव वस्तुतः पदार्थयाथार्थ्यावबोधाय कल्पते । पदार्थावबोधे हीमे एवोक्तसप्तप्रकाराः सम्भवन्ति । वस्तुतस्तु यथार्थज्ञानस्यानिर्वचनीयतया स्यादस्ति घटः, स्यान्नास्ति वेत्येवंप्रकारकं अनिर्धारणात्मकं ज्ञानमेव सम्भवितुं शक्यम् । तत्रापि सप्तभङ्गीनये, प्रथमाश्चत्वारो यथाकथञ्चिदंशतः पदार्थस्वरूपमवगमयन्ति, त्रयस्त्वन्तिमभङ्गाः पूर्वनिर्दिष्टप्रकारसम्मिश्रणसाचिव्याद् भवन्ति । इति सर्वे सम्भूय, सप्तप्रकारावधारणकारणात्सप्तभङ्गीनय इति पदेन परिभाष्यते इति संक्षेपः ।

## जैनतत्त्वज्ञानम्

जैनानां तत्त्वं हि अनन्तधर्मात्मकम् । कस्यचित्पुरुषस्य स्वरूप-

ज्ञानार्थं न केवलं देश-काल-जाति-वर्ण-रूपादय एवापेक्ष्यन्ते सत्तात्मका धर्माः, ये खलु स्वपर्यायपदेनापि व्यपदिश्यन्ते, अपितु तन्निषेधात्मका धर्म्मा अपि ये अनन्तत्वमवगाहन्ते। यथा देवदत्तो गौरो ब्राह्मणकुलोत्पन्न इत्याद्या धर्म्मा एव न पर्याप्ताः। देवदत्तं पूर्णतयावबोधयितुम्, अपि तु अन्येऽप्यनन्ता निषेधात्मका धर्म्माः अपेक्ष्यन्ते। यथा स न क्षत्रियः, न श्यामः, इत्याद्याः। इमे निषेधात्मका इयत्तया परिच्छेत्तुमशक्या अन्येऽपि अनन्ता धर्म्मा अपरिहार्याः देवदत्तं कार्त्स्न्येन परिज्ञातुम्। ते चेमे निषेधात्मका धर्माः परपर्य्यायनाम्ना उच्यन्ते। अतः एव जैनदर्शने तत्त्वज्ञानमेतत्स्वपर्याय-परपर्यायेत्युभयसमुच्चयेनैव भवितुं शक्नोति नान्यथा।

सत्--सत्स्वरूपविषये प्रायशो दर्शनानि भिद्यन्ते। बौद्धानां सतो निरन्वयक्षणिकत्वमुत्पादविनाशशालित्वम्। कापिलानां चैतन्यमयस्य सत्पदार्थस्य पुरुषस्य कूटस्थनित्यत्वम्। अचेतनाया सत्स्वरूपायाः प्रकृतेश्च परिणामिनित्यत्वमेवमादि। परन्तु जैनानां सत्स्वरूपं नितरां विलक्षणम्। तेषां नये शाश्वताशाश्वतरूपेण पदार्था द्वेधा भिद्यन्ते। तत्र शाश्वतांशमालम्ब्य प्रत्येकस्य पदार्थस्य ध्रौव्यात्मकत्वम्। अशाश्वतांशमुपजीव्य च अनित्यत्वम्। एवं प्रत्येकस्य पदार्थस्योभयात्मकतैव जैनानामभ्युपगमः। उक्तञ्च तत्त्वसूत्रे :--

'उत्पादव्ययध्रौव्यमुक्तं सत्'' [त० सू० ५।२९]

न खल्वे'कस्मिन् धर्मिणि, विरुद्धधर्मद्वयस्यावगाहनाद्' इति न्यायेन, एकस्मिन् पदार्थे नित्यत्वानित्यत्वरूपधर्मद्वयस्य कथं सम्भव इति शङ्क्यम्। जैनानां स्वजातेरच्युततत्त्वमेवेति नित्यत्वस्य लक्षणात्। धर्मिणि परिणामे सम्भवति सत्यपि तज्जातिगतैक्यस्य विघटनासम्भवात् तस्य नित्यत्वाङ्गीकारे न कापि विप्रतिपत्तिः। तथा च स्वर्णे कटकत्व-कुण्डलत्वाङ्गुलीयकत्वादिधर्माणामुत्पादेऽपि तत्सुवर्णत्वान्न च्यवते। परिणामिनित्यता-सिद्धान्तेन वेदान्तिनां कूटस्थनित्यतावादः सौगतानां वा परिणामवादोऽपि संवदत्येव। प्रपञ्चस्य नानात्वेऽपि तदन्तर्गतैकत्वं जैनानामभ्युपगमः। जगतो नानात्वैकत्वे उभेऽपि सम्यगभ्युपपन्ने न वास्तविकपदाद्विहन्येते इति।

द्रव्यम्--जैनसिद्धान्ते, गुणविशिष्टं पर्य्यायविशिष्टञ्च यद्वस्तु तदेव द्रव्यम्। 'गुणपर्य्यायवद् द्रव्यम्' [त० सू० ५।३७]। नित्यविद्यमानत्वे सति वस्तुनो नितान्तावश्यको यो धर्मः स गुणः। पर्यायश्च देशकालजन्यः परिणामशाली धर्मः। एतदुभयविशिष्टस्य तत्त्वस्यैव द्रव्यत्वमभ्युपगम्यते। तच्च द्रव्यं पुनर्द्विविधम्--एकदेशव्यापि द्रव्यं बहुदेशव्यापि द्रव्यञ्च। तत्रैकदेशव्यापिद्रव्यत्वं केवलं कालस्यैव। पदार्थान्तराणान्तु बहुदेशव्यापिद्रव्यत्वमेव। किञ्च बहुदेशव्यापित्वं बिभ्रद्

द्रव्यम् अस्तिकायमाख्यायते। सद्भाववत्त्वादस्तित्वं, कायवद्विस्तारसमन्वितत्वाच्च कायत्वम् इत्यस्तिकायमित्युच्यते। उक्तञ्च द्रव्यसंग्रहे :--

'सति जदो तोणेदे अस्थीतिजिणवरा जम्हा।
काया इव बहुदेसा तम्हा काया य अत्थिकायाय।
[द्र० सं० गाथा ५२]।

तच्चास्तिकायद्रव्यं पुनः पञ्चविधम्--जीवास्तिकाय-पुद्गलास्तिकाय-आकाशास्तिकाय-धर्मास्तिकाय-अधर्मास्तिकायभेदाद्। तत्र देशव्यापकास्तिकायानामपि द्वौ भेदौ, जीवाऽजीवश्चेति। जीवश्चात्रात्मवचनः। जीवोऽपि बद्धमुक्तभेदाद् द्विविधः। बद्धजीवश्च तारक-मनुष्य-तिर्यक्-देवभेदाच्चतुर्विधः। स्थावरजीवः निकृष्टकोटिमालम्बते। जंगमजीवाश्च द्विरिन्द्रियास्त्रिरिन्द्रियाश्चतुरिन्द्रियाश्च भवन्ति। तत्र मनुष्यादयः खलूच्चकोटिमाटीकमानाः पञ्चेन्द्रिया भवन्ति। अजीवाश्चतुष्प्रकाराः--पुद्गलाकाशधर्माधर्मभेदात्।

जीवः--जीवो हि जैनानां चेतन्यलक्षणकः। सर्वप्रकारेषु जीवेषु चैतन्यं तत्त्वं हि सर्वतो मुख्यम्। चैतन्यविरहवत्त्वमथ च जीवत्वं तदेतत्सर्वथा विप्रतिषिद्धम्। चैतन्यं हि जीवस्य मुख्यं लक्षणम्। उक्तञ्च 'चैतन्यलक्षणो जीवः' [षड्दर्शनसमुच्चयकारिका ४९]। एषां जीवोऽनन्तज्ञानवान् अनन्तशक्तिमान् अनन्तगुणसम्पन्नश्च। जैनानां जीवः मध्यमपरिमाणविशिष्टः। शरीरावच्छिन्नो जीवः स्वज्योतिषा प्रदीपयति शरीरमन्दिरम्, प्रदीपवत्। स्वयममूर्त्तोऽपि यथा शरीरम् विकाससङ्कोचशालितामवलम्बते। हस्तिकाये विशालतां, पिपीलिकाकाये च सङ्कोचताम्। उक्तञ्च तत्वसूत्रे--

"प्रदेशसंहारविसर्गाभ्याम् प्रदीपवत्।" [त० सू० ५।१६]

यद्यपि तात्त्विकदृशाल्परूपत्वान्न जीव इन्द्रियगोचरः तथापि स्वसंवेदन प्रत्यक्षद्वारा, अनुमानबलेन वा तत्प्रत्ययगोचरत्वम् इति।

पुद्गलः--पुद्गलशब्दः विलक्षणार्थकः। भूतसामान्यवचनोऽयं शब्दो विशेषतो जैनदर्शनगोचरः। शास्त्रान्तरेषु अदृष्टप्रायः। सर्वदर्शनसंग्रहकारैरस्य निरुक्तिः निम्नाङ्कितप्रकारेण कृता 'पूरयन्ति गलन्ति च ये ते पुद्गलाः प्रचय-विनाशशालिनः इत्यर्थः।' शास्त्रान्तराणां यत् प्रकृति-प्रधान-परमाणुप्रभृतिशब्दैरुच्यते तदेव जैनशास्त्रे पुद्गलपदेन निर्दिश्यते। स एष पुद्गलः खल्वणु-संघातरूपेण च द्विविधः। ते च पुद्गलाश्चतुर्गुणवन्तः। उक्तञ्च

"स्पर्शरसगन्धवर्णवन्तः पुद्गलाः।" [त० सू० ५।२३]

दर्शनान्तराणि तु शब्दमपि भूतगुणविशेषं स्वीकुर्वन्ति। परं जैनदर्शने,

शब्दो न भूतगुणविशेषत्वेन स्वीक्रियते। प्रत्युत सूक्ष्मत्व-स्थूलत्व-अन्धकार-छाया-दिवदुत्पन्नः अवान्तरपरिणामभेदरूप एव शब्दः इत्यभ्युपगम्यते तैः। तथाहि—

"शब्दबन्धाः सौक्ष्म्य-स्थौल्य-संस्थानभेदात्तमश्छायातापोद्योतवन्तश्च।"

इति [त० सू० ५।२५]।

आकाशः—आकाशोऽवकाशप्रदो द्रव्यविशेषः। सत्ता चाकाशस्यानुमानगम्या। जीवपुद्गलधर्माधर्मादिपदार्थानां बहुदेशव्यापित्वात् तद्विस्तारसिद्धये आकाशद्रव्यस्यावश्यकत्वम्। आकाशश्च द्विविधः लोकाकाशोऽलोकाकाशश्चेति। यस्मिन्नाकाशभागे लोकस्थितिः स लोकाकाशः, लोकोपरितन आकाशश्चाऽलोकाकाशः।

कालः—कालोऽप्याकाशवदनुमानगम्यः। जगतः परिणामशीलत्वेऽपि कालस्यैव कारणता। प्रवर्त्तना-परिणाम-क्रिया-परत्वापरत्वेऽपि कालस्यैव हेतुता। पूर्वापरक्षणव्यापिनी क्रिया कालमुपजीव्यैव प्रवर्त्तते। कालश्चायं द्विविधः—व्यावहारिकः कालः, पारमार्थिकः कालश्चेति। तत्रानुमितदण्डघटिकापलाद्यवयवादिघटितः कालो व्यावहारिकः भूतभविष्यवर्त्तमानलक्षणः। स च सादि: सान्तश्च। पारमार्थिकस्तु अनवच्छिन्नरूपेण सातत्येन विद्यमानत्वात् नित्यः।

धर्मः—धर्माधर्मकल्पना हि जैनदर्शने दर्शनान्तरेभ्यो नितरां विभिन्ना। एषां जीवपुद्गलयोः सहकारिकारणलक्षणो द्रव्यविशेषो धर्मः। यथा मत्स्यसंतरणं प्रति सहकारिकारणतां जलं भजते तथैव गतिशीलवतो जीवस्य पुद्गलस्य च गतिं प्रति धर्मास्तिकायः। धर्म एव खलु जीवगतिप्रेरकः। धर्मः स्वयमसमर्थोऽपि जीवगतिविधेः कारणतां धत्ते सहायरूपेण, यथा जलं मत्स्यस्येति भावः।

अधर्मः—अधर्मस्तु धर्मविरुद्धः। स स्थितिशीलस्य जीवस्य पुद्गलस्य च स्थितिसहकारिकारणतां बिभर्ति। यथा विश्रान्तपथिकस्य तरुच्छाया किञ्चिद्विश्रान्तये सहकारिकारणतामालम्बते न च कात्स्न्येन पथिकमामन्त्रयते विश्रान्त्यर्थम् तद्वदधर्मोऽपि जीवपुद्गलयोः स्थितिं प्रति हेतुत्वमधिगच्छति न स्थितिस्थापकः स इति निष्कर्षः।

मोक्षः—सम्यग्दर्शनम् सम्यग्ज्ञानम् सम्यक्चारित्र्यम् एतत्त्रयं मोक्षं प्रतिसाधनत्वेन गृह्यते। सम्यग्दर्शनमित्यत्र दर्शनशब्दः श्रद्धापरः। जैनसिद्धान्तेषु ज्यायसी श्रद्धा अध्यात्मपथपथिकाय मुमुक्षवे परमावश्यकी। ततः सम्यग्ज्ञानम्। ततश्चारित्र्यम्। एतत्त्रयं 'रत्नत्रय'संज्ञयाऽपि व्यवह्रियते।

तथाचोक्तम्—'सम्यग्दर्शनज्ञानचारित्र्याणि मोक्षमार्गः।' [त० सू० १।१]

'तत्त्वार्थश्रद्धानं सम्यग्दर्शनम्।' [त० सू० १।२]

यद्यपि जीवो निसर्गत एव मुक्तः। तथापि अविद्यावासनाजन्यकर्मावरणेनैव तद्बन्धः। कर्मस्वरूपमपि दर्शनान्तरेभ्यो नितरां विलक्षणम्। क्षित्यब्वायुवत्कर्मणो भौतिकत्वम्। कर्म चाष्टविधम्। ज्ञानावरणीय-दर्शनावरणीय-मोहनीय-वेदनीय-आयुष्य-नाम-गोत्र-अन्तरायभेदेन। पुनश्चैषामष्टविधकर्मणां चतुश्चत्वारिंशदुत्तर-शतमितभेदैः भिन्नत्वे विशदं वर्णनं जैनशास्त्रेषु समुपलभ्यते।

सप्तपदार्थाः—जैनदर्शने हि आस्रवो, बन्धः, संवरो, निर्जरा, मोक्षो, जीवोऽजीवश्चेति सप्त पदार्थाः। तत्र मनोवाक्कायानां जीवस्प्रति क्रियायोग एवास्रव उच्यते। स चास्रवो द्विविधो भावास्रव-द्रव्यास्रवभेदात्। कषायसंवलितो जीवः यदा पुद्गलानादत्ते तदा बद्धो भवति। स एव बन्धः। उक्तञ्च—'सकाषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते स बन्धः।' [त०सू०८।२।३] बन्धं प्रति च मिथ्या-त्वाऽवरतिप्रमादयोगानां कारणत्वम्। एभिरेव मिथ्यात्वादिभिः संवलितो जीवः बन्धमवाप्नोति। संवरश्च—'करिष्यमाणानां कर्मणामवरोधः संवरः' [त० सू० ९।१] आस्रवाद्वैरुद्धचमश्नुते। अयञ्च संवरो द्विविधः—भावसंवर-द्रव्यसंवरभेदात्। मुमुक्षूणां कर्ममार्गनिरोधकानां मानसिकप्रयत्नानां प्रयोगविशेषो भावसंवरः। अभिनवपुद्गलकर्मणां वास्तविको निरोधो द्रव्यसंवरः। निर्जरा हि नाम कृतकर्मणां जीर्णीकरणं फलप्रसवाय निर्वीर्यीकरणम्। एतेषां फलमेव मोक्षः एषां नये। कर्मणामात्यन्तिकक्षय एव मोक्षः। उक्तञ्च 'बन्धहेत्वभावनिर्जराभ्यां कृत्स्नकर्मक्षयो मोक्षः'। उपलब्धमोक्षो हि जीवः नैसर्गिकशुद्धस्वरूपतां याति। अनन्तज्ञानं, अनन्त-वीर्यं, अनन्तश्रद्धाम्, अनन्तशान्तिञ्च विन्दन् भूतले लोककल्याणहेतोर्विचरति। आत्मादर्शचरितेन च मार्गप्रदर्शनं विधत्ते इति।

गुणस्थानम्—सिद्धकोटिमारुरुक्षोर्मुमुक्षोराध्यात्मिकविकासाय सोपान-परम्पराविधया क्रमोऽपेक्ष्यते। स एष क्रमः जैनानां नये गुणस्थानमुच्यते। तच्च गुण-स्थानं चतुर्दशविधम्, मिथ्यात्वग्रन्थिभेदमिश्रविरतिदेशविरतिप्रमत्तापूर्वकरणा-निवृत्तिकरणसूक्ष्मसम्परायोपशान्तमोहसंयोगकेवलायोगकेवलेतिभेदात्। सोपान-रूपैरेभिश्चतुर्दशगुणस्थानभेदैः साधकः उपरि उपरि गच्छन् सिद्धभूमिमवाप्नोति। एषा सिद्धभूमिरेव सिद्धानां निवासभूमिः। इयमेव सिद्धशिलोच्यते। सिद्धशिलां प्राप्तो हि जीवः चरमशान्तिमनुभवन् मुक्तः सञ्जायते।

सम्यक्चारित्र्यम्—सम्यक्चारित्र्यसिद्धचर्थम् अहिंसासत्यास्तेयब्रह्मचर्या-परिग्रहा इति पञ्च महाव्रतानां महती आवश्यकता। गृहमेधिनां लोकपाशबद्धानां कृते कदाचित् शैथिल्यं क्षन्तव्यं स्यात्परं यतीनां विषये विशिष्य तु अपरिग्रहाग्रहः कठोरतरः। सम्यक्चारित्र्यमेव मुक्तिं प्रति मुख्यकारणत्वेनोन्नीयते।

## समीक्षा

जैनदर्शनं हि बहुत्ववादप्रतिपादकम् । वास्तववादो हि अस्य परमोऽभ्युपगमः । एतद्धि, बाह्यान्तरेन्द्रियैरनुभूयमानस्य जगतोऽस्तित्वं वास्तविकत्वेनाङ्गीकरोति । केचन दार्शनिका बाह्येन्द्रियगोचरमेव जगद्वास्तविकत्वेनाऽपरे पुनरन्तरिन्द्रियगोचरस्यैव केवलं वास्तविकत्वमङ्गीकुर्वन्ति परं जैनदर्शनमुभयोरेवानयोः पक्षयोः समन्वयं सामञ्जस्यञ्चामन्त्रयते । जैनदर्शने कणे-कणे च जीवसत्ता स्वीकृता । तदणावणौ निवसतां जीवानां परिरक्षणार्थमेवैष परमोदात्तोऽहिंसासिद्धान्तोऽङ्गीकृतोऽवगम्यते जैनदार्शनिकैरिति ।

अनेकान्तवादोऽपि जैनदर्शनस्य परममाननीयो राद्धान्तः । पदार्थानां मिथः सम्बन्धज्ञानादृते सत्यज्ञानस्योदयोऽसम्भवः । तथा च :—

'एको भावः सर्वथा येन दृष्टः, सर्वभावाः सर्वथा तेन दृष्टाः ।
सर्वे भावा सर्वथा येन दृष्टाः, एको भावः सर्वथा तेन दृष्टः ॥
[षड्दर्शनसमुच्चयटीका]

नानात्मकसत्तायास्तात्त्विकालोचना स्याद्वादमूरीकृत्यैव प्रवर्त्तते । जैनदर्शनस्य विविधपदार्थानां समन्वितैकीकरणप्रयत्नोऽतीव प्रशस्तः । परं स एष मध्य एव विरत इव प्रतीयते समग्रविश्वानुस्यूतं परं तत्त्वमनभिसन्दधानः । विरतश्चेदसौ नाभिभविष्यर्त्तर्हि सर्वघटकं परमतत्त्वमवश्यमेवान्वभविष्यत् । तच्च नाकरोदिति आक्षेपविषयः । अतः एव शङ्कराचार्येण शारीरिकभाष्ये स्याद्वादस्य खण्डनं व्यधायि प्राखर्येण । जैनदर्शनेन ईश्वरस्य कापि सत्ता न स्वीकृता, स सर्वथैव मन्तव्यक्षेत्राद् बहिष्कृत इव लक्ष्यते । तत्सत्ता च जागरूकतया निराक्रियते । एतदितरे न सहन्ते । ईश्वराध्यक्षत्वाभावे कस्य खलु कर्मफलदातृत्वमिति नाशङ्क्यम् । कर्मणः स्वातन्त्र्यस्य तत्फलप्रदातृत्वाङ्गीकारात् । यद्यपि अर्हत्सिद्धानाञ्च देवत्वकोटचधिरूढतया ईश्वरवत् श्रद्धास्पदत्वं जीवस्य स्वीकृतम्, तथापि जीवस्य तत्तदावरणरहितस्य विशुद्धस्य शक्त्यानन्त्यं, ज्ञानानन्त्यं सौख्यानन्त्यञ्च स्वीकृत्य, सर्वावरणविधुरो जीव ईश्वरत्वमधिगच्छति समुन्नतेः परां काष्ठामधिरूढ इति चाङ्गीकृत्य महती त्रुटिः पूरिता तथाप्येवं स्वीकृतेऽपि सिद्धपदारूढस्य जीवस्येश्वरभावे अनीश्वरवादपरिपन्थिनि, तत्र नानेश्वरत्वापत्तिस्तु हिमगिरिशिखेव दुर्लङ्घ्या एव जैनदार्शनिकानां सम्मुखे सन्तिष्ठत्येवेति समाकालयन्तस्तार्किका न तोषमुद्वहन्तीति दिक् ।

—०—

# बौद्धदर्शनम्

बौद्धदर्शनं हि जैनदर्शनादुत्तरकालसम्भवम्। बौद्धनिकायेषु जैनानामन्तिमतीर्थङ्करस्य नाटपुत्तस्य सिद्धान्तविवरणं नामोल्लेखश्चोपलभ्यते। परं जैनग्रन्थेषु बौद्धविषयको न कोऽपि तादृश उल्लेखो दृष्टिपथमवतरति। तेन सुतरां बौद्धधर्मस्य जैनोत्तरकालभवत्वमुपपद्यते। इतिहासे रूपद्वयं हि समुपलभ्यते बौद्धधर्मस्य-- धार्मिकं दार्शनिकञ्चेति। धार्मिकसाहित्ये, आध्यात्मिकतत्त्वानां सरहस्यं वर्णनम् आचारव्यवहाराणाञ्च सम्यङ्निरूपणम्। दार्शनिकसाहित्ये च पुनः बौद्धसिद्धान्तानां तत्त्वविवेचनम् यत्र तार्किकबुद्धिप्राखर्येण सूक्ष्मतमानां बौद्धसिद्धान्तानां मूलङ्कषमनुशीलनं कृतमवगम्यते बौद्धदर्शनस्य धूमिलरूपरेखायाश्च सम्यक् स्पष्टीकरणम्। तदेतयोरुभयोरपि संक्षिप्तविवरणमिहोपक्रम्यते।

गौतमबुद्धः—बौद्धधर्मप्रवर्त्तकस्यात्रभवतो महामहिमशालिनो भगवतो गोतमबुद्धस्य चरितं सुतरां प्रख्यातमेव। वैक्रमाब्दात्पञ्चशतोत्तरपञ्चवर्षपूर्वं, वैशाखीपूर्णिमापुण्यावसरे शाक्यगणाधिपस्य श्रीशुद्धोदनस्य भार्याया मायादेव्या गर्भमुक्ताशुक्तितः इदं गौतमाख्यं महार्घमौक्तिकं जनिं लेभे। एकोनविंशतिदेशीये वर्षे स एकदा प्रसुप्तायाः प्रेयस्याः यशोधरायाः प्रेमोद्वेल्लिताननं, बालशशिनवजातशिशोर्मन्दस्मितविकसितं वदनारविन्दञ्च विलोक्य कपिलवस्तुराजधान्याः विशालं राजप्रासादं सहसा परित्यज्य वैराग्येण महाभिनिष्क्रमणमङ्गीचकार। तदनु तेन साङ्ख्योपदेशकस्य आराट्कालामनाम्नो विद्वद्वरस्य बहवो दिव्योपदेशाः श्रवणातिथीकृताः परं सन्तोषो नालम्भि। तत आयुषः पञ्चविंशतितमे वर्षे, स प्रज्ञाप्रकर्षेण स्वयमेव उरुवलस्थाने, चतुर्णामार्यसत्यानामाविष्कारं चकार स्वानुभवेन, बुद्धत्वञ्च प्राप्तवान् विक्रमपूर्व ४७१ तमे शतके वैशाखीपूर्णिमादिवसे। ततः सारनाथे कौण्डिन्यादिपञ्चवर्गीयपञ्चभिक्षुभ्य उपदेशं विधाय च धर्मचक्रं प्रवर्त्तयामास। संस्थापयामास च गणराज्यादर्शमालम्ब्य भिक्षुसङ्घम्। मागधीभाषायाञ्च मानवानां क्लेशविमुक्तये विनयधर्मयोः शिक्षां प्रददौ। आयुषोऽशीतितमे वर्षे मल्लगणतन्त्रस्य राजधान्यां कुशीनगरे च निर्वाणं प्राप्तवान्। जन्म, बोधिप्राप्तिः निर्वाणप्राप्तिश्चैता तिस्रोऽपि घटना वैशाखपूर्णिमायामेव घटिता इति कस्य कौतूहलं नोपजनयेत्? अतएव वैशाखीपूर्णिमा हि बौद्धेषु निरतिशयपुण्यतमा तिथिः परिगण्यते।



बुद्धं शरणं गच्छामि
सङ्घं शरणं गच्छामि
धर्मं शरणं गच्छामि

त्रिपिटकम्—भगवद्गोतमस्योपदेशाः प्रायशः मौखिका एव मगध-भाषायामभूवन् । अतस्तेषां संरक्षणाय बुद्धमहानिर्वाणानन्तरं, महाकाश्यपस्याध्यक्षत्वे बौद्धभिक्षूणां प्रथमं सम्मेलनं राजगृहे सम्पन्नम् । यत्र बुद्धपट्टशिष्यस्य आनन्दस्य सहायेन सुत्तपिटकम्, नापितकुलोद्भूतोपालिसहयोगेन विनयपिटकस्य च सङ्कलनञ्जातम् । सुत्तपिटकस्यान्तर्गतं मात्रिकाख्यस्य दार्शनिकग्रन्थस्य पल्लवीकरणादवान्तरकाले 'अभिधर्म्मपिटकस्य' निर्मितिः समपद्यत । इदं हि खलु पिटकत्रयं बुद्धधर्मस्य सर्वस्वभूतम् । तत्र सुत्तपिटके बुद्धस्योपदेशा गुम्फिताः । विनयपिटके च आचारविशेषाः । अभिधम्मपिटके पुनः दार्शनिकाः सिद्धान्ताः प्रतिपादिताः । सुत्तपिटके च पञ्च निकायाः (सूत्रसमूह इत्यर्थः)—दीर्घनिकायः, मध्यम (मज्झिम) निकायः, संयुत्त (संयुक्त) निकायः, अङ्गुत्तरनिकायः, खुद्दक (क्षुद्रक) निकायश्चेति । यत्र बुद्धस्य क्षुद्रातिक्षुद्रगाथानां द्वाविंशदुत्तरचतुश्शतकानां संग्रहो ग्रथितः । सोऽयं संग्रहो धम्मपदाख्यो ग्रन्थः सञ्जातः । एवं बुद्धपूर्वजन्मसम्बद्धानां ५५० गाथानां संग्रहरूपो जातकाख्यः सन्दर्भः बौद्धसम्प्रदायेऽतीव प्रख्यातः । एतदतिरिक्ताः—खुद्दकपाठः, उदानम्, इतिवुत्तकम्, सुत्तनिपातः, विमानवत्थु, पेतवत्थु, थेरगाथा, थेरीगाथा, निद्देशः, पटिसम्भिदाभग्गा, उपादानं, बुद्धवंशम्, चरियापिटकप्रभृतयो बहवो ग्रन्थाः श्रूयन्ते । विनयपिटकस्य त्रीणि अङ्गानि, सुत्तविभंगः पाति मोक्खो वा, भिक्खुपातिमोक्खो भिक्खुनीपातिमोक्खश्च खन्धक, महावग्ग चूलवग्गपरिवारश्च । अभिधर्मपिटकस्यान्तर्गताः सप्त ग्रन्थाः पुग्गलपञ्जति-धातुकथा-धम्मसंगणि-विभंग-पट्ठानप्रकरण-कथावत्थयमकश्चेति । नागसेनकृतः मिलिन्दपञ्चो महत्त्वधिया त्रिपिटकस्यैव तुलामधिरोहति ।

बुद्धस्याचारमीमांसा—अस्मात् क्लेशबहुलसंसाराद् विमुक्तीकरणमेव सरलतयाचारमार्गप्रदर्शनद्वारेति बुद्धोपदेशानामुद्देश्यम् न जातु तर्कशास्त्रद्वाराध्यात्मग्रन्थि-समुत्पाटनम् । इति हेतोरेव निकायेषु अतिप्रश्नान् कुर्वतः शिष्यान् श्रावस्त्युपान्ते जेतवने, विहारावसरे मालुक्यपुत्तेन, अस्य जगतः शाश्वताशाश्वतविषये जीवशरीरयोर्भिन्नताभिन्नताविषये च प्रश्ना उत्थापिताः परन्त्वाचार्यमहाभागैः आचारपथप्रतिपत्ति प्रति, वैराग्योपशमाभिज्ञानिर्वाणानामसाधनतया तेषामव्याकृत्वमुद्घोषितम् । तदत्रैकं दृष्टान्तमप्याह :—

यथा यदि कश्चिद् व्यक्तिविशेषो विषदिग्धबाणविद्धः अत्युत्कटवेदनानिर्विण्णः चीत्करोति सीत्करोति तदा तद्बन्धुबान्धवाः तच्चिकित्सार्थं विषवैद्यमाकारयेयुः तदा रुग्णनैरुज्याय किं पीयूषपाणेः नामरूपगोत्रादिपरिज्ञानार्थं कृताः प्रश्नाः तद्बालिशत्वद्योतनादतिरिक्तं किन्नामान्यद् भवेत् । तथैवात्राऽपि बोध्यम् ।

भवरोगरुजां, क्लेशबहुलव्याकुलानां मानवानां कृते अध्यात्ममार्गोपदेशेन क्लिष्टतरेण किं प्रयोजनम्। कर्त्तव्यमार्गोपदेश एव तेषां नैरुज्याय प्रकल्पिष्यते। अतः स एव मार्ग उपदेष्टव्यः सर्वश्रेष्ठत्वेनेति तदाशयः।

सत्यचतुष्टयम्—बौद्धानां नये, दुःखं, दुःखसमुदयः, दुःखनिरोधः, दुःखनिरोधगामिनी प्रतिपच्चेति सत्यचतुष्टयं सर्वश्रेष्ठत्वेन गण्यते। एतदेव सत्यचतुष्टयमार्यसत्यनाम्नाऽपि स्मियते। यतः आर्याः सज्जना एव सत्यचतुष्टयं प्रतिपत्तुं शक्नुवन्ति नानार्याः पामराः। उक्तञ्च—

'ऊर्णापक्ष्म यथैव हि करतलसंस्थं न विद्यते पुंभिः।
अक्षिगतं तु तदेव हि जनयत्यरतिञ्च पीडाञ्च॥
करतलसदृशो बालो न वेत्ति संस्कारदुःखता-पक्ष्म।
अक्षिसदृशस्तु विद्वान् तेनैवोद्वेजते गाढम्॥
[माध्यमिककारिकावृत्तिः, पृ० ४७६]

आर्यसत्येषु प्रथमं हि 'दुःखम्' सर्वप्राणिगोचरम्। नहि अस्य सत्ता कथमपि अपलपितुं शक्या। द्वितीयो दुःखसमुदयः दुःखकारणमित्यर्थः। नैतद् दुःखस्य किञ्चिदेकमेव कारणं किन्तु कारणपरम्परा। सा च द्वादशनिदानपदेन व्यपदिश्यते। द्वादशनिदानानि च—जरामरण-जाति-भव-उपादान-तृष्णा-वेदना-स्पर्श-षडायन-नामरूप-विज्ञान-संस्कार-अविद्याख्यानि। अत्र पूर्वं प्रति परस्य कारणता। जरामरणं प्रति जातेः, जातिं प्रति भवस्य। भवो हि पुनर्भवपरोऽत्र, उक्तं हि वसुबन्धुना।

'यद्भविष्यद्भवफलं कुरुते तद्भवः' [अभिधर्मकोष ३।२४]

इत्येवमादि पूर्वं प्रति परस्य कारणतामनुसन्दधानैरविद्यैव सर्वस्य दुःखपुञ्जस्यान्तिमकारणत्वेन स्वीक्रियते। अविद्या हि खल्वाद्यं कारणम्। अविद्यावशंगतो जीवोऽस्मिन् संसृतिचक्रेऽहर्निशं बम्भ्रमीति।

प्रतीत्यसमुत्पादः—एषां द्वादशनिदानानां 'प्रतीत्यसमुत्पाद' इत्यपि अपरासंज्ञा। एष प्रतीत्यसमुत्पादो बौद्धानां मौलिको राद्धान्तः। अयमेव सापेक्षकारणतावादसंज्ञयाऽपि प्रसेत्स्यति। समुदाजहार च चन्द्रकीर्त्तिः—

'प्रतीत्य शब्दो ल्यबन्तः प्राप्तावपेक्षायां वर्त्तते। 'पदि प्रादुर्भाव' इति समुत्पाद शब्दः प्रादुर्भावार्थे वर्त्तते। ततश्च हेतुप्रत्ययसापेक्षो भावानामुत्पादः प्रतीत्यसमुत्पादार्थः' [या० का० वृ० पृ० ७]।

स च प्रतीत्यसमुत्पादो, द्वादशाङ्गस्त्रिकाण्डकः।
पूर्वापरान्तयोर्द्वे द्वे मध्येऽष्टौ परिपूर्णाः॥ [अभि० को० ३।२०]

अयं भावः—(१) अतीतजन्मसम्बद्धनिदाने द्वे, अविद्यासंस्काराख्ये।

(२) वर्त्तमानजीवनसम्बद्धनिदानान्यष्टौ—विज्ञान-नामरूप-षडायतन-स्पर्श-वेदना-तृष्णा-उपादान-भवाख्यानि। (३) भविष्यजीवनसम्बद्धे द्वे—जाति-जरामरणाख्ये।

तदस्या मूलकारणीभूताया अविद्याया निरोधे सत्येव दुःखनिरोधः सम्भवितुमुपपद्यते इति।

दार्शनिकसिद्धान्ताः—बौद्धधर्मस्य दार्शनिकसिद्धान्ता अपि किञ्चिद्विलक्षणा इव प्रतिभान्ति।

आत्मविषये ते वैदिकदर्शनतो भूयस्तरम् भिद्यन्ते। इच्छाद्वेषादिकं ते मानसप्रवृत्तित्वेनाभ्युपगच्छन्ति आत्मास्तित्वं ते स्वातन्त्र्येण नाभिमन्यन्ते। प्रात्यहिकानुभवगोचरमानसप्रवृत्तीनां सङ्घात एवात्मा तेषां नये न जातु तद्भिन्नः कश्चित्स्वतन्त्रसत्तावान् पदार्थः। एषाञ्च अयमात्मा नामरूपात्मकः। नामपदेन मनस्तत्प्रवृत्तयश्च गृह्यन्ते। रूपपदेन च पुनः क्षित्यब्वायुतेजांसि, तज्जन्यं भौतिकं शरीरादिकञ्च। "अनुभवार्थमात्मानं रूपयति यत्तद्रूपम्" चातुर्भौतिकं जगन्मात्रमित्यर्थः। नामानि च पुनश्चतुर्विधानि, वेदना-संज्ञा-संस्कार-विज्ञानभेदात्। रूपञ्चैकविधम्। तदेवमात्मा, रूप-वेदना-संज्ञा-संस्कार-विज्ञानेतिपञ्चस्कन्धानां पुञ्जमात्र एव। इम एव पञ्च रूपादयः पञ्चस्कन्धपदेनापि निजागद्यन्ते।

नैरात्म्यवादः संघातवादो वा—एष एव बौद्धानां नैरात्म्यवादः सङ्घातवादो वा मिलिन्दप्रश्ने भदन्तनागसेनेन दृष्टान्तदिशा यवनाधिपतिं मिलिन्दं प्रति प्रव्यक्तीकृतः। स राजानं पप्रच्छ यं रथमारुह्य भवानत्र आयातः। तं रथं वर्णयेति। किमेतच्चक्रयुगलं रथः? नेति स उवाच। इत्थं अवयवान्तरमपि रथत्वेन पृष्टः नृपो नेति-नेति प्रत्युवाच। तर्हि किंस्वरूपो रथः? स यदा प्रतिवक्तुं न शशाक, तदा नागसेनाचार्यः समुपदिदेश—अवयवसङ्घात एव रथपदभाक्, नत्ववयवः। इत्थमेव पञ्चस्कन्ध एव आत्मपदव्यपदेश्यः न तद्व्यतिरिक्तः कश्चिदन्यः पदार्थ इति। तादृशस्यावास्तविकसत्तावतो जीवात्मनः सत्तामभिसन्धमानाः ये वैदिककर्मकाण्डे श्रद्दधानाः स्वर्गापवर्गञ्च तद्द्वारा कामयमाना अहर्निशं प्रयतन्ते ते तथैवोपहासास्पदतामुपयान्ति चक्षुष्मतां, यथा खपुष्पाणि विचेतुकामाः सोपानमुद्धृत्य गगनमण्डलमारोढुं प्रयतमाना बुद्धिविक्लवा उन्मत्ता इति।

सन्तानवादः—बौद्धानां जीवो जगच्चेत्युभयमप्यनित्यम्, प्रतिक्षणंपरिणामशालि च। यथा दीपशिखाऽनुक्षणं परिणमन्त्यपि दीप्तिसन्तानवितानेन एकत्वावच्छिन्नेवोद्भासते तथैव जगज्जीवयोरपि गतिर्ज्ञेया। नागसेनश्चामुमर्थं पयोविकारदृष्टान्तेन विशदयति। यथा पयो विकृतिमापन्नं, दधिनवनीतघृतादिषु विपरिणम्यमानमपि वस्त्वेकत्वन्न जहाति परिपालयति चाभिन्नताम्। तद्वि-

कारमापन्नस्यापि पयसः पयस्त्वं को नामापलपितुं प्रकल्पेत। प्रवाहरूपेण वस्तुनः समकालत्वावच्छेदेनोत्पादलयौ सम्भवन्तावास्ताम्। न जातु तौ सन्ततितितिमुच्छिन्तः। एवं प्रतिक्षणं परिणामवतो जगज्जीवयोरनित्ययोरपि सतो नित्यता समुद्भासते आपाततो न तु वस्तुगत्येति विवेकः। अयमेव सन्ततपरिणामशालितावादः, सन्तानवादनाम्नापि जरीगृह्यते। वस्तुतो बौद्धानां नये परिणाम एव केवलं विश्वप्रपञ्चेऽस्मिन् सत्यतां बिभर्त्ति। न तु तत्परिणामवत् किञ्चिद्वस्त्वन्तरम् इति।

## बौद्धदर्शनविकासः

बौद्धदर्शनं हि मुख्यतया चतुर्षु विभागेषु विभक्तो दृश्यते। वैभाषिक-सौत्रान्तिक-योगाचार-माध्यमिकाख्येषु। तत्र वैभाषिकाणां बाह्यार्थप्रत्यक्षवादः, सौत्रान्तिकानां बाह्यार्थानुमेयवादः, योगाचाराणां विज्ञानवादः, माध्यमिकानाञ्च पुनः शून्यवाद इति।

तत्रापि बाह्यार्थं प्रत्यक्षरूपेण सत्यं मन्यमाना वैभाषिकाः। बाह्यप्रत्यक्षसिद्धमनङ्गीकुर्वाणाः सौत्रान्तिकाः। बाह्यजगतो नितान्तमिथ्यात्वमङ्गीकुर्वाणाः केवलं चित्तमेव सत्यपदार्थत्वेन स्वीकुर्वाणाः विज्ञानवादिनो योगाचाराः। चित्तस्यापि सत्तास्वातन्त्र्यमनङ्गीकुर्वाणा बाह्यार्थवद् विज्ञानवादमप्यवहेलयन्तो मन्तव्यत्वेन केवलं शून्यमेवोपलालयन्तः शून्यवादिनो माध्यमिकाः। एषां नये समस्तस्य जगतः सत्ता प्रातिभासिकी। केवलं शून्यमेव सत्यसत्ताकम्। इत्थमिदं चतुर्विभागविभक्तं बौद्धदर्शनम् विकासस्य पराकाष्ठामवगाहते। उपश्लोकितञ्च भवति :—

'मुख्यो माध्यमिको विवर्त्तमखिलं शून्यस्य मेने जगत्,
योगाचारमते तु सन्ति मतयस्तासां विवर्त्तोऽखिलः।
अर्थोऽस्ति क्षणिकस्त्वसावनुमितो बुद्धयेति सौत्रान्तिकः,
प्रत्यक्षं क्षणभङ्गुरञ्च सकलं वैभाषिको भाषते॥

[ मानमेयोदये पृ० ३०० आडयारसंस्करणम् ]

एषु चतुर्ष्वपि, वैभाषिकानां सम्बन्धो हीनयानेन, त्रयाणामन्येषाञ्च महायानेन। सत्यपि सत्ताविषयकप्रश्ने मतभेदे खल्वमी महायानसम्मतसिद्धान्तानुयायिनः। तत्त्वसमीक्षादृशा, वैभाषिका यदि पूर्वां दिशमालम्बन्ते, तर्हि योगाचार-माध्यमिकौ पश्चिमामाश्रयेते। सौत्रान्तिकास्तु मध्यगाः। यतोंऽशतोऽमी सर्वास्तिवादमनुमोदन्ते सिद्धान्तान्तरेषु च योगाचारमभिनन्दन्ति।

निर्वाणविषयको मतभेदः—

वैभाषिकाः—संसारनिर्वाणयोरुभयोरपि सत्यतामङ्गीकुर्वन्ति।

माध्यमिकाः—उभयोरपि असत्यताम्।

सौत्रान्तिकाः—संसारस्य सत्यतां निर्वाणस्य चासत्यताम् ।
योगाचाराः—संसारस्यासत्यतां, निर्वाणस्य सत्यताम् ।
इति तेषां निर्वाणविषयको भेदः समासतोऽवगन्तव्यः ।

## बौद्धधर्मस्य साहित्यम्

एषां चतुर्णामपि वैभाषादिकानां आचार्यैः अनेके ग्रन्था विरचिताः । अतो बौद्धदर्शनसाहित्यशेवधिः संख्यातीतैर्ग्रन्थरत्नैः परिपूर्णो विलसति । यद्यपि संस्कृत-भाषायां तावन्तः सन्दर्भा न सन्ति यावन्तो चीनतिब्बतादिदेशान्तरीयभाषासु । वैभाषिकसम्प्रदायावलम्बिनां 'अभिधर्मज्ञानप्रस्थानशास्त्र'मिति सर्वमान्यो ग्रन्थः । यः खलु कात्यायनीयपुत्रेण बुद्धनिर्वाणात् शतत्रयवर्षानन्तरं प्राणायि । अयं चतु-श्चत्वारिंशद्वर्गनिबद्धोऽष्टपरिच्छेदालङ्कृतः विपुलकायो ग्रन्थः संस्कृतभाषायां नोपलभ्यत इति कस्य मनो न दुनोति । परन्तु ह्वेनचाङ्गकृतचीनभाषानुवादः प्रायः सप्तमशताब्द्यां सम्पादितोऽद्यापि समुपलभ्यते । भूभुजः कनिष्कस्य शासनकाले, अस्योपरि 'अभिधर्मविभाषाशास्त्राख्यस्य' विशदस्य व्याख्याग्रन्थस्य रचना संवृत्ता । एष भाष्यग्रन्थोऽपि चीनीयभाषायां तिब्बतीयभाषायां चोपलभ्यते, गीर्वाणवाण्यान्तु अस्याप्यभाव एव । इदं विभाषाशास्त्रमाधारीकृत्य प्रतिष्ठितो वादविशेषोऽपि वैभाषिकशब्देनैव प्रसिद्धिं गतः । महाविदुषो वसुबन्धुमहाभागस्य अभिधर्मकोशाख्यः सन्दर्भः काश्मीरेषु वैभाषिकाणां परमादरणीयः प्रामाणिकश्च वरीवर्त्ति । बौद्धदर्शनप्रपञ्चेतिवृत्ते वसुबन्धुनामाक्षराणि स्वर्णालङ्कृतानि अद्यापि विलसन्ति । अस्य सर्वातिशायिनी प्रतिभा वैदुष्यवैभवञ्चाखिलेऽपि भारते वर्षे प्रख्यातेः परां काष्ठामधिगाहते । यौवनेऽसौ वैभाषिकमतावलम्बी पश्चाद् असंगाख्य-भिक्षोः सदुपदेशेन विज्ञानवादी संवृत्तः । कौशिकगोत्रीयाणां पुरुषपुर (वर्तमान पेशावर) निवासिनां कस्मिंश्चिद् ब्राह्मणकुले समुत्पन्नानां त्रयाणां सुतानामयं मध्यम-मणिरासीदिति कालविद आचक्षते । प्रौढावस्थायां अयोध्यां निवासस्थानञ्चकार । अत्रैवानेन स्थविरबुद्धिमित्रद्वारा हीनयाने दीक्षितो भूत्वा, विवादेषु प्रतिपक्षि-बुधान् पराजित्य प्रगल्भपाण्डित्यस्यापूर्ववावदूकतायाश्च परिचयोऽदायि । कुमार-जीवाचार्येण पुण्यश्लोकस्यास्य चरितमप्यलेखि । अस्य स्थितिकालः कालकोविदैः चतुर्थशतकदेशीयः स्वीकृतः । अभिधर्मकोशाभिधस्यास्य ग्रन्थरत्नस्य गद्यकवि-कुलभूषणेन बाणभट्टेन हर्षचरिते "शुकैरपि शाक्यशासनकुशलैः कोशं समुपदि-शद्भिः", इत्युत्कीर्त्य ब्राह्मणेष्वपि प्रतिष्ठापिता प्रतिष्ठा । अस्य ग्रन्थस्यानेकाष्टीका अपि विरचिता दृश्यन्ते । तासु स्थिरमतेस्तत्त्वार्थाख्या, दिङ्नागस्य मर्मप्रदीपाख्या, यशोमित्रस्य च स्फुटार्था अतीव प्रख्याताः ।

संघभद्रः—चतुर्थशतकभवः संघभद्रो नामापरः वसुबन्धोः प्रतिस्पर्धी बौद्धाचार्यः। वसुबन्धोः सिद्धान्तान् खण्डयितुमनेन कोशकरकाख्यो ग्रन्थो विरचितः। एष च बृहद्ग्रन्थः सप्तलक्षमितैः श्लोकैर्निबद्धः कोशसिद्धान्तखण्डने च लब्धप्रतिष्ठः। 'समयप्रदीपिका' च वैभाषिकसिद्धान्तानां सारभूतोऽन्यो ग्रन्थः।

वैभाषिकराद्धान्ताः—वैभाषिकाणां नये नानात्मकं जगदिदं वास्तविकं सत्यम्। सत्ता चास्य प्रत्यक्षज्ञानगम्या। बाह्याभ्यन्तरेति द्विविधभेदभिन्नस्य भौतिकस्य मानसिकस्य च जगतो मिथो निरपेक्षतया स्वतन्त्रसत्ता स्वीकृता। वस्तुविभागश्च, विषयीगत-विषयगत-भेदेन द्विविधः। विषयीगतविभाजनविधया पुनः समस्ताः पदार्थास्त्रिविधाः—पञ्चस्कन्ध-द्वादशायतनाष्टादशधातुभेदात्। तत्र रूप-वेदना-संज्ञा-संस्कार-विज्ञानानीति पञ्चस्कन्धाः। षडिन्द्रियाणि षड्विषयाश्चेति द्वादशायतनानि। आयतनं हि ज्ञानसाधनीभूतं 'आयं तनोतीत्यायतन'मिति तद्व्युत्पत्तेः। घटनाविशेषाणां सन्तानवितानं धारयन्ति ते अष्टादशधातवः। तेषु द्वादशायतनानि षट् च चक्षुः-श्रोत्र-घ्राण-रसना-काय-मनोविज्ञानानीति सम्भूय सर्वेऽष्टादशधातव उच्यन्ते। विषयगतविधया तु जगदिदमखिलं द्विविधधर्मस्य समुच्चयमात्रम्। वैभाषिकाणां समस्ताः सत्तात्मकाः पदार्थाः धर्मपदेनोच्यन्ते। 'अभिधर्मकोशा'नुसारेण धर्मः सास्रवानास्रवभेदाद् द्विविधः। रागद्वेषादिमलदूषिताः सास्रवाः, तद्रहिताश्चानास्रवाः। एवंविधानां समस्तधर्माणां संख्या पञ्चसप्ततिमिता। तत्र द्विसप्ततिस्तु अनास्रवा, त्रयः सास्रवा इति क्षित्यप्तेजोवायव एव चत्वारि भूतानि। आकाशस्य भूतत्वं ते नाद्रियन्ते। पृथिव्यादिभूतचतुष्टयस्यान्तिमोपादानानि, पार्थिव-जलीय-तैजस-वायवीयपरमाणुरूपाणि। परमाणुश्चैषां षट्कोणात्मकः।

'षट्केन युगपद्योगात् परमाणोः षडंशता।' [स० द० सं०]।

वैभाषिकाणां ज्ञानसाधनानि द्विविधानि—ग्रहणाध्यवसायभेदात्। तत्र ग्रहणद्वारा समान्यज्ञानोपलब्धिः। वस्तुनो नामजातिभ्यां संयोजनञ्चाध्यवसायः। एष ग्रहणाध्यवसायभेदः किञ्चित् सविकल्पनिर्विकल्पज्ञानेन सह संवदति।

निर्वाणः—निर्वाणो द्विविधः सोपधिशेषनिरुपधिशेषभेदात्। अनयोर्ज्ञानप्रस्थानसूत्रेषु विशदविवेचनमुपलभ्यते। क्षीणेष्वप्यास्रवेषु जीवितावस्थायामर्हत अवशेषानेकपञ्चस्कन्धः सोपधिशेषनिर्वाण उच्यते, निरवशेषसमस्तोपधिकश्च निरुपधिशेषः इति। समासतोऽनयोः स एव भेदो यो जीवनमुक्तविदेहमुक्तयोरिति विवेकः।

## सौत्रान्तिकमतम्

हीनयानस्य दार्शनिकानां द्वौ भेदौ वैभाषिकः सौत्रान्तिकश्चेति। सौत्रा-

न्तिका अभिधर्मस्य बुद्धरचनाऽभावात् प्रामाण्यं नाङ्गीकुर्वन्ति । तथागतस्याध्यात्मिका उपदेशा सुत्तपिटकस्य कतिपयेषु सूत्रेषु सन्निविष्टाः। सूत्रान्तस्य हि बुद्धरचितत्वान्नितान्तं प्रामाण्यम् । सूत्रान्तात्प्रवृत्तत्वादेवास्य सौत्रान्तिक इति संज्ञाऽपि अर्थवती प्रतीयते[1] । दार्ष्टिकान्तिकसम्प्रदायस्तु सौत्रान्तिकस्यैवैका शाखा । सौत्रान्तिकमतप्रवृत्तिस्तु वैभाषिकसम्प्रदायात् पश्चात्कालीना । सौत्रान्तिकानां प्रधानसिद्धान्तानामुल्लेखस्य वैभाषिकग्रन्थवृत्तिषु समुपलम्भात् । वसुबन्धुना अभिधर्मकोशस्य स्वरचितभाष्ये वैभाषिकसिद्धान्तानां दोषोद्घाटनपुरस्सरं खण्डनं व्यधायि । अतः वैभाषिकेण संघभद्रेण वसुबन्धुप्रदर्शितान् दोषान् निराकर्तुमेव समयप्रदीपिका, न्यायानुसारश्चेति ग्रन्थद्वयं विरचितम् । यस्य समर्थने सौत्रान्तिकेन यशोमित्रेण स्फुटार्थावृत्तिरुट्टङ्किता अभिधानधर्मकोशमुद्दिश्य ।

कुमारलातः——सौत्रान्तिकसिद्धान्तप्रचारकाश्चत्वारो विशिष्टा आचार्याः कुमारलातः, श्रीलातः, धर्मत्रातः, बुद्धदेवः इत्याख्याः सञ्जाताः। तेषु सौत्रान्तिकसिद्धान्तानामाद्यस्थापकः कुमारलात एव । अस्य स्थितिकालः द्वितीयशतकस्योत्तरार्द्धादारभ्य तृतीयशतकस्य प्रथमार्द्ध एव ऐतिहासिकैः स्वीक्रियते। नागार्जुनसमसामयिक एष प्रतीयते । कल्पनामण्डितका एवास्यैकमात्ररचना गद्यपद्यमयी विविधाभिर्धर्मकथाभिर्निबद्धा । श्रीलातश्च कुमारलातस्याऽनन्यतमः शिष्यः । येन विभाषाशास्त्राख्यसन्दर्भो व्यलेखि, योऽद्य यावदलभ्य एव । धर्मत्रातबुद्धदेवयोः विशिष्टसिद्धान्तानां समुल्लेखो वैभाषिकग्रन्थेषु समुपलभ्यते ।

## सौत्रान्तिकसिद्धान्ताः

सौत्रान्तिकानां कालः केवलं वर्त्तमान एव । कालविषये भूतभविष्यत्कल्पना निराधारा, अवास्तविकी च । वैभाषिकास्तु भूतभविष्यद्वर्त्तमानेति कालत्रयस्यापि सत्तां स्वीकुर्वन्ति अतः एव ते सर्वास्तिवादिन इति पदेनापि जोघुष्यन्ते । एषां ज्ञानस्य स्वतः प्रामाण्यम् । प्रदीपवत् ज्ञानस्य हि स्वयंप्रकाशत्वम् । ज्ञानस्य स्वयंसंवित्तिसिद्धान्तः विज्ञानवादिनामपि अभिमतः । वैभाषिकानामसदृशतया, इमे जगतः सत्तायाः प्रत्यक्षतामनङ्गीकुर्वाणाः तदनुमेयगम्यतामभिनन्दन्ति । जगतः समस्तपदार्थानां क्षणिकत्वात्तेषां प्रत्यक्षतयोपलब्धिरसम्भवा एव । यत्क्षणावच्छेदेन यस्य वस्तुनः प्रत्यक्षता, तदनुक्षणमेव परिवर्तनगर्भनिलीनत्वात् तदुपलब्धेराभासमात्रस्यैव मनःपटले नीलपीतादिरूपेण खचितत्वात्

---

[1] "कः सौत्रान्तिकार्थः । ये सूत्रप्रमाणा न तु शास्त्रप्रमाणास्ते सौत्रान्तिकाः ।"
[ यशोमित्रस्फुटार्थः पृ० १२ ]

केवलं तज्जन्यज्ञानस्यैवावशेषात्, तद्बुद्ध्याकारता किञ्चिज्ज्ञानमुपजनयति अनुमानगम्यम् , न च प्रात्यक्षिकमिति भावः । तथा चोक्तम् :—

'नीलपीतादिभिश्चित्रैर्बुद्ध्याकारैरिहान्तरैः ।
सौत्रान्तिकमते नित्यं बाह्यार्थवस्त्वनुमीयते ।। [सर्व० सि० सं० पृ० १३]

सौत्रान्तिकानां बाह्यवस्तुनः सत्यत्वमभिमतम् । किन्तु तदाकारविषये ते मिथो भिद्यन्ते । केचिद्वस्तुगताकारं वस्त्वाश्रितं मन्यन्ते, अपरे चित्तवृत्तिविनिर्मितम् न जातु वस्तुगतमिति अभ्युपगच्छन्ति, इतरे चोभयात्मकमिति । परमाणुवादविषये सौत्रान्तिकानां विलक्षणमेवाभिमतम् । एषां परमाणूनां निरवयवत्वम् । मिथस्तेषां स्पर्शाभावश्च । परमाणुसंघातस्य तत्परिमाणम्प्रति करणता । सर्वे च पदार्थाः निसर्गत एव विनाशशीलाः । न अनित्याः । विनाशश्च अभूत्वाभावः परिवृत्तिलक्षणः । उत्पादविनाशरूपः । अतः क्षणिकः । आत्माकाशौ हि सत्ताहीनौ । असत उत्पन्नं वस्तु क्षणे स्थित्वा विलयं गच्छति । निर्वाणविषयेऽपि श्रीलातकुमारस्य मतवैलक्षण्यम् । स प्रतिसंख्यानिरोधाऽप्रतिसंख्यानिरोधयोश्च भेदं नाङ्गीकरोति । प्रतिसंख्यानिरोधो हि प्रज्ञानिबन्धना भाविक्लेशानुत्पत्तिः । अप्रतिसंख्यानिरोधश्च क्लेशनिवृत्तिमूलको दुःखानुत्पत्तिः । संसारानुत्पत्तिर्हि क्लेशनिवृत्तिनिबन्धना । अतः क्लेशानुदय एव दुःखानुत्पादं प्रति कारणतामालम्बते । क्लेशानुदय एव तेषां निर्वाणइति भावः ।

## योगाचारमतम्

मैत्रेयनाथः—योगाचारस्याद्यप्रवर्त्तकविषये, सत्यपि भूयसि मतवैमत्य अन्तिमानुसन्धानमालम्ब्य इतिवृत्तविद्भिः निर्णीतप्रायमेवेदं यदस्य प्रवर्त्तको मैत्रेयनाथो नाम परमपण्डितः एव । तत्प्रणीतः प्रथमो ग्रन्थो मध्यान्तविभागनामा गद्यपद्यनिबद्धः सुतरां प्रसिद्धः । कारिकाभागोऽस्य मैत्रेयनाथेन गद्यभागश्च असङ्गमहाभागेन गुम्फितः । अस्य भाष्यम् वसुबन्धुना रचितं तद्भाष्यटीका च स्थिरमतिना सम्पादिता । द्वितीयो 'अभिसमयालङ्कारः' प्रज्ञापारमितोपदेशशास्त्रम्, तृतीयः 'सूत्रालङ्कारः', चतुर्थो 'महायानोत्तरतन्त्रम्', पञ्चमो 'धर्मधर्मताविभागः' ।

असङ्गः—चतुर्थशतकेऽस्य स्थितिकालो निर्धार्यते, पुरुषपुरनगरस्य सम्प्रति पेशावरनाम्ना प्रसिद्धस्य कौशिकगोत्रीयविप्रवंशावतंसस्यास्य असंगनाम्नो महाविदुषो वैदुष्यविभूतिः मैत्रेयख्यातिमप्यतिशेते ।

असङ्गाचार्यः राज्ञः समुद्रगुप्तस्य शासनकाले अयोध्यानिवासमङ्गीचकार । स्वानुजो वसुबन्धुश्चानेन योगाचारदीक्षया दीक्षितः विज्ञानवादप्रचारार्थञ्च

प्रेरितः विविधान् तद्विषयकान् ग्रन्थान् प्रणयितुम् । महायानसंपरिग्रहः, महायानाभिधर्मसंगीतशास्त्रम्, योगाचारभूमिशास्त्रम्, अभिसमयालङ्कारटीका, चास्य प्रसिद्धाः सन्दर्भाः । योगाचारमते लब्धदीक्षितेन वसुबन्धुना त्रिशंतकारिकाभिर्निबद्धो विज्ञप्तिमात्रतासिद्धिनामकः सन्दर्भो विज्ञानवादस्य सर्वमान्यः प्रामाणिकश्च ग्रन्थो व्यलेखि । यश्चाधुना डाक्टर लेवीमहोदयेन 'पेरिस' नगरीतः त्रिंशिकानाम्ना प्रकाशितो लभ्यते ।

स्थिरमतिः—स्थिरमतेः स्थितिकालश्चतुर्थशतकस्यान्तिमो भागः । एष महानुभावो वसुबन्धोः प्रमुखः शिष्यः । त्रिंशिकाभाष्यम्, माध्यान्तविभंगसूत्रभाष्यटीका, अभिधर्मकोशभाष्यवृत्तिः, सूत्रालङ्कारवृत्तिभाष्यम्, मूलमाध्यमिककारिकावृत्तिश्चेति पञ्चास्य सुप्रसिद्धा ग्रन्थाः ।

दिङ्नागः—बौद्धन्यायशास्त्रसुप्रसिद्धो दिङ्नागाचार्योऽयं शास्त्रार्थपटुत्वेन प्रगल्भवावदूकत्वेन च विद्वद्भि 'र्वादिवृषभ' इत्युपाधिना विभूषितः । कांचीं निकषा हिंसवक्राभिधनगरे ब्राह्मणकुलसमुद्भवो दिङ्नागोऽयं वसुबन्धोः मुख्यः शिष्यः ३४५–४२५ तमस्य खीस्ताब्दस्य मध्ये जातः । प्रमाणसमुच्चयः, प्रमाणसमुच्चयवृत्तिः, न्यायप्रवेशः, हेतुचक्रडमरु, प्रमाणशास्त्रम्, आलम्बनपरीक्षा, तद्वृतिश्चेति षड्ग्रन्था दिङ्नागप्रणीता बौद्धन्यायप्रपञ्चे अमिताभया प्रभासन्ते ।

धर्मकीर्तिः—धर्मकीर्तिरयं सप्तमशतकस्य (६३५–६५०) मध्यभवः, दिङ्नागस्य भाष्यकाररूपेण प्रख्यातः । अस्य सुप्रसिद्धौ ग्रन्थौ 'प्रमाणवार्तिक-न्यायबिन्दु'-समाख्यौ । यत्र ब्राह्मणनैय्यायिककृताक्षेपानां निराकरणं बौद्धसिद्धान्तानाञ्च प्रतिपादनं मण्डनञ्च विहितम् । धर्मकीर्त्तिविरचिता अन्येऽपि पञ्च सन्दर्भा उपलभ्यन्ते—हेतुबिन्दुः, प्रमाणनिश्चयः, वादन्यायः, सम्बन्धपरीक्षा, सन्तानान्तरसिद्धिश्चेति ।

धर्मपालः—अपरोऽयं धर्मपालो नाम महापण्डितः सप्तमशतकारम्भभवः नालिन्दा-बौद्धविहारस्याध्यक्षपदेऽलङ्कृत आसीत् । अनेन योगाचार-शून्यवादयोः ग्रन्थेषु टीका उट्टङ्किताः । वसुबन्धुप्रणीत 'विज्ञप्तिमात्रतासिद्धि'व्याख्यायाः शतशास्त्रवैपुल्यभाष्यस्य व्याख्या च कृता ।

## माध्यमिकमतम्

नागार्जुनः—शून्यवादापरपर्यायस्य माध्यमिकसिद्धान्तस्याद्यः प्रचारकोऽत्रभवान् नागार्जुनः । दाक्षिणात्योऽयं ब्राह्मणकुलावतंसो बौद्धधर्मस्य दीक्षाऽङ्गीकारानन्तरं श्रीपर्वते निवसितुमारेभे । अस्य महामेधाविनोऽलौकिकतार्किकस्य कीर्त्तिचन्द्रिका भारतीयदार्शनिकाम्बरेऽक्षुण्णतया विराजते । अस्य प्रधानो ग्रन्थः

माध्यमिकशास्त्राभिधः सप्तविंशतिप्रकरणेषु विभक्तः कारिकानिबद्धः शून्यवाद-प्रतिष्ठापकः विद्वन्मण्डले अतीव प्रतिष्ठितः। अस्य महत्त्वशालिवृत्तिषु श्रीभव्य-प्रणीता 'प्रज्ञाप्रदीपा', चन्द्रकीर्तिविरचिता 'प्रसन्नपदा' च मुख्या। 'प्रज्ञापारमिता-शास्त्रं' श्रीकुमारजीवानूदितम्, 'दशभूमिभाषाशास्त्र'ञ्चास्य विषयपर्यालोचनदृशा महायानस्य विश्वकोशौ एवेति वक्तुं शक्यते। एवमेव, आर्यदेवः (२००–२२४, खीस्ताब्दभवः) स्थविरबुद्धिपालितः (पञ्चमशतकसम्भवः), भावविवेकः, चन्द्र-कीर्तिः, शान्तरक्षितः, इत्येतेऽन्ये महान्तो विद्वांसो माध्यमिकमतप्रचारका अभूवन् यैरनेके ग्रन्था गुम्फिताः। येषां कीर्त्तिलताऽद्यापि बौद्धदर्शनोद्याने सुतरां पम्फुल्यमाना विलसति। जिज्ञासुभिस्तत्रतत्रैवानुसन्धेयम्।

## शून्यवादः

माध्यमिकाचार्याणां सिद्धान्तः शून्यवादपदेन व्यपदिश्यते। बौद्धानां चतुर्ष्वपि दर्शनप्रस्थानेषु शून्यवादस्य तात्त्विकस्वरूपनिरूपणे भूयान् मतभेदः। सामान्येन शून्यशब्दश्च सर्वत्र सर्वसत्ताऽसद्भावमभिधत्ते। परन्तु बौद्धाः अत्र विप्रतिपद्यन्ते। तेषां शून्यशब्दोऽनिर्वचनीयतावचनः। पदार्थस्वरूपनिर्णये चतस्रः कोटयो भवन्ति, अस्ति, नास्ति, तदुभयं, तन्नोभयञ्चेति। परन्तु परमतत्त्वनिर्णये नैता परिवृढाः। उक्तञ्च माध्यमिककारिकायाम्:—

न सन् नासन् न सदसन्न चाप्यनुभयात्मकम्।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः॥ [११।७]

माध्यमिकानां नये शून्यपदं विशिष्टार्थलक्षकम्। हीनयानस्याचारविषयक-मध्यमप्रतिपदनुरूपं, माध्यमिका अपि तत्त्वनिर्णये मध्यमप्रतिपद्राद्धान्तमेव स्वीकुर्वन्ति। एषां नयेन वस्तु नैकान्तिकं सत् नचैकान्तिकमसत्। अनयोः सदसतोः स्वरूपनिर्णयः तयोर्मध्यबिन्दुमालम्ब्यैव सम्भवति। उक्तञ्च––

अस्तीति नास्तीति उभेऽपि अन्ता,
शुद्धी अशुद्धीति इमेऽपि अन्ता।
तस्मादुभे अन्त विवर्जयित्वा,
मध्ये हि स्थानं प्रकरोति पण्डितः॥ [समाधिराजसूत्र]

नैषां शून्यमभावार्थकः। अभावो हि सापेक्षत्वाद् भावं निर्दिशति। एषां शून्यपदं निरपेक्षं सत् परमतत्त्वमवगमयति। तदेतन्मध्यममार्गस्योद्भावकत्वा-देतत्प्रस्थानं माध्यमिकपदेन व्यपदिश्यते।

माध्यमिकाचार्येण श्रीनागार्जुनेन द्विविधं हि सत्यं स्वीकृतम् पारमार्थिकं सांवृतिकं चेति। तत्र पारमार्थिकं वास्तविकं, सांवृतिकमवास्तविकम्। उक्तञ्च

मध्यमकारिकावृत्तौ चन्द्रकीर्त्तिना:—'समन्ताद् वरणं संवृतिः । अज्ञानं समन्तात् सर्वपदार्थतत्त्वाच्छादनात् संवृतिरित्युच्यते ।'' [ पृ० ४९२ ] । तत्र चानुत्पन्नानिरुद्धानुच्छेद्याऽशाश्वतादिविशेषणविशिष्टं शून्यपदवाच्यं तत्त्वं पारमार्थिकम् । यत्तु पुनः बुद्धयगोचरं कल्पनामात्रात्मकं अविद्यालक्षणं ज्ञानसंवलितं वस्तु तत्सांवृतिकम् । उक्तञ्च :—

'सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना ।
लोकसंवृतिसत्यञ्च सत्यञ्च परमार्थतः ॥ [ २४।८ ]

एवञ्च चन्द्रकीर्तिरप्याह, 'अतो भावाऽभावान्तद्वयरहितत्वात् सत्स्वभावानुत्पत्तिलक्षणा शून्यता मध्यमा प्रतिपद् मध्यमो मार्ग इत्युच्यते ।' [प्रसन्नपदा] । इमे च माध्यमिकाचार्याः शून्याद्वैतसमर्थकाः । इदं हि नानारूपं जगत्, शून्यस्यैव विवर्त्तात्मकं रूपम् । यद्यपि परमतत्त्वस्य सद्भावं ते मन्यन्ते तथापि तत्परम-तत्वस्वरूपस्याऽज्ञेयत्वमनिर्वचनीयत्वञ्च को नामापह्नोतुं पारयेत । तन्नापि सत् नाप्यसत् न तदुभयं नापि तदुभयभिन्नमिति । इदमित्थन्तया निर्वक्तुमशक्यत्वादनिर्वचनीयमेवेति कृत्वा, शून्यत्वमनिर्वचनीयत्वमिति विवेकः ।

माध्यमिकप्रस्थानस्य परमपण्डितस्य श्रीनागार्जुनाचार्यस्य तर्कपद्धतिरतीव सूक्ष्मा । अनेन सम्यग्विविच्य मध्यमकारिकायां, सर्वेषामपि गतीन्द्रियस्कन्धधातुदुःखसंसर्गस्वभावकर्मबन्धमोक्षकालात्मप्रभृतिपदार्थानामवास्तविकत्वमसत्यत्वञ्च निर्धारितम् । शून्यताया एव केवलं सत्यत्वं वास्तविकत्वञ्च प्रतिपादितम् । शून्यवादिनां माध्यात्मिकसिद्धान्तानां निष्कर्षः स्वकारिकायां प्रपञ्चितः :—

'न स्वतो नापि परतो न द्वाभ्यां नाप्यहेतुतः ।
उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन ॥' इति

अयं भावः, भावाः स्वतो नोत्पद्यन्ते नापि परतः, नोभयतः न चाहेतुतः । अस्याः कारिकाया व्याख्यायामाचार्यबुद्धिपालितेन भावोत्पत्त्यभावस्य विवेचनमतिवैलक्षण्येन कृतम् । यदि भावाः स्वयमुत्पद्यन्ते, तर्हि विद्यमानपदार्थानां किमुत्पत्तिप्रयोजनम् ? स्वतो भिन्नादपि वस्तुनः पदार्था नोत्पद्यन्ते । तथा सति पदार्थान्तरात्पदार्थान्तरोत्पत्तिः सम्भाव्येत । उभयकल्पेऽपि दोषसद्भावाद् अनयोः समुच्चयो न यौक्तिकः । कारणमन्तरेणैव कार्यमुत्पद्यते इत्यपि न सङ्गच्छते । कारणाभावात्कार्याभाव इति नियमस्य सार्वतान्त्रिकत्वात् । अन्यथा सर्वपदार्थेभ्यः सर्वपदार्थोत्पत्तिसम्भवापत्तिरापद्यते । अतः कामधातुरूपधात्वरूपधातुमयेऽस्मिन् त्रैधातुके जगति न जातु भावानामुत्पत्तिः इति शून्यवादिनां तर्कपद्धतिरिति विवेकः । बुद्धिपालितानुयायिभिः निर्वाणशून्यवादयोः स्वरूपोपलब्धिविषये तर्कप्रसरः सर्वथैव तिरस्कृतः । अतस्ते माध्यमिकप्रासङ्गिकसंज्ञया जेगीयन्ते । परन्तु भावविवेकेन 'भव्या'पर-

नाम्ना माध्यमिकसिद्धान्तोपपत्तये न्यायानुमोदिताः स्वतन्त्रास्तर्काः समुद्भाविताः। अतस्ते 'माध्यमिक स्वातन्त्रिकेति' संज्ञया स्मिर्यन्ते। माध्यमिकानां 'मायोपमा-द्वयवाद-सर्वधर्मप्रतिष्ठानवादौ चेति द्वौ प्रसिद्धौ कल्पौ। तत्र प्रथमः अद्वयवादं माया-सदृशमनुमन्यते। द्वितीयः कल्पश्च सर्वधर्माणामप्रतिष्ठानं परमार्थस्वरूपत्वेना-भ्युपगच्छति। महायानस्याधिमात्रानुयायिनोऽपि शून्यवादप्रतिपादका आसन्।

## त्रिरत्नम्

आर्यसत्यावलोकेनेन प्रतीयते यद् बुद्धसिद्धान्ता उपनिषत्सिद्धान्तैस्सह बहुशः संवदन्ति। 'ऋते ज्ञानान्न मुक्ति'रिति सिद्धान्तो भगवतो बुद्धस्या-प्यभिमतः। परन्तु तन्नये ज्ञानं तावन्नोत्पद्यते यावत्सत्यं मनसा वाचा कर्मणा सर्वात्मना सम्यक् संधार्य शरीरमनसोः शुद्धिर्न सम्पाद्यते। बौद्धदर्शने, शील-समाधि-प्रज्ञेतीमानि त्रीणि रत्नानि त्रिरत्ननाम्ना प्रसिद्धानि। शीलमत्र समस्त-सात्त्विककर्माण्यभिधत्ते। तच्च पञ्चविधम्––अहिंसास्तेयसत्य-ब्रह्मचर्यमादक द्रव्यासेवनञ्चेति। एतच्च भिक्षुगृहस्थयोः कृते समानम्। समाधिः चित्तवृत्ति-निरोधः। तत्फलन्तु पूर्वजन्मस्मृतिः, जन्ममृत्युपरिज्ञानं, चित्तबाधकवृतिसंवित्ति-श्चेति। प्रज्ञा ज्ञानोपलब्धिः। सा च त्रिविधा––श्रुतिमयी, चिन्तामयी, भावनामयी चेति। तत्र श्रुतिमयी आप्तप्रमाणजन्या, चिन्तामयी युक्तितर्कजन्या, भावनामयी च समाधिजन्या। शीलसम्पन्नो जनः श्रुतचिन्ताप्रज्ञालङ्कृतः समाधिस्थितिमश्नुते। ततः परचित्तज्ञानं पूर्वजन्मस्मृतिः दिव्यचक्षुरुपलब्धिश्च सम्भवन्ति। तदेष त्रिरत्न-वादो बुद्धोपदेशानां निष्कर्षरूपः एवावगन्तव्य इति दिक्।

इति वैदिकदर्शनेतरदर्शनानां नास्तिकदर्शनत्वेन प्रसिद्धानां समासतः निरूपण कृतम्। तेषु मुख्यतया, (१) शून्यवादेनैकप्रस्थानं माध्यमिकानाम्। (२) क्षणिकविज्ञानमात्रवादेनापरं योगाचाराणाम्, (३) ज्ञानाकारानुभयक्षणिक-बाह्यार्थवादेनापरं सौत्रान्तिकानाम्। (४) प्रत्यक्षस्वलक्षणक्षणिकबाह्यार्थ-वादेनापरं वैभाषिकाणाम्। एवं सौगतानां प्रस्थानचतुष्टयम्। किञ्च (५) देहातिरिक्तदेहात्मपरिणामवोदेनैकं प्रस्थानं दिगम्बराणाम्। (६) देहात्मवादे-नैकं प्रस्थानं चार्वाकाणाम्। एवं सम्भूय नास्किकाणां षट् प्रस्थानानि इति दिक्।

इति सर्वतन्त्रस्वतन्त्रैः पदवाक्यप्रमाणपारावारीणैः श्रीमदाचार्यपण्डित-
द्विजेन्द्रनाथशास्त्रि-सिद्धान्तशिरोमणिभिः विरचिते
संस्कृतसाहित्यविमर्शाख्य ग्रन्थे
पञ्चमः परिच्छेदः।

## षष्ठः परिच्छेदः

# पुराण-आगम-साहित्यम्

## पुराणसाहित्यम्

वैदिकसाहित्ये पुराणानामतीव गौरवास्पदं स्थानम् । वेद-तत्त्वार्थजातं सारल्येनावगमयितुमेवैतेषां प्रवृत्तिः ।

नूनं 'वेदार्थोपबृंहणानि पुराणानी'त्यतीव प्राचीनः प्रवादो यथार्थः एव । महाभारतेऽपि--

"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ।।"

इत्यनेन, अल्पश्रुतानां वेदार्थतत्वबुभुत्सूनां कृते पुराणानि निर्मितानि महर्षिभिरिति संसूच्यते ।

"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम् ।।"

येषु पञ्च लक्षणानीमानि पूर्णतया सङ्गच्छन्ते तान्येव पुराणकोटिमाटीकन्ते । अघटिताखिलपुराणलक्षणानि तु उपपुराणश्रेणीमाश्रयन्ते ।

'म-द्वयं भ-द्वयञ्चैव ब्र-त्रयं व-चतुष्टयम् ।
अ-ना-प-लि-ग-कूस्कानि पुराणानि प्रचक्षते ।।

इत्यनेन प्रतीकश्लोकेन पुराणानि अष्टादशसंख्याकानि सन्तीति प्रतिपादनपुरस्सरं प्रथमाक्षरप्रतीकेन तेषां नामान्यपि संस्मृतानि सङ्केतितानि च ।

तदेवं--मत्स्य, मार्कण्डेय, भागवत, भविष्य, ब्रह्माण्ड, ब्रह्मवैवर्त्त, ब्रह्म, वामन, वराह, विष्णु, वायु, अग्नि, नारद, पद्म, लिङ्ग, गरुड, कूर्म, स्कन्दान्यष्टादश पुराणानि विज्ञेयानि ।

उपपुराणानि तु--

'सनत्कुमारं प्रथमं नारसिंहं ततः परम् ।
नारदीयं शिवञ्च दौर्वाससमनुत्तमम् ।।

कापिलं मानवञ्चैव तथा चौशनसं स्मृतम् ।
वारुणं कालिकाख्यञ्च साम्बं नन्दिकृतं शुभम् ॥
सौरं पाराशरप्रोक्तमादित्यञ्चेति विस्तरम् ।
माहेश्वरं भागवतं वासिष्ठञ्च सविस्तरम् ॥

इत्युपपुराणान्यप्यष्टादशसंख्याकानि एव ।

तदित्थं पुराणसाहित्यमत्यन्तविशालं मनोहरमलङ्काररूपेण वर्णितं गाथाख्यानोपाख्यानसंवलितं संस्कृतसाहित्यरत्नाकरे अतिभास्वरं महारत्नमिवाभाति।

## पुराणानामाविर्भावः

वैदिकसाहित्यपर्यालोचनेन विज्ञायते, यत्पुराणानि अतिप्राचीनकालतः प्रचलितानि वर्त्तन्ते । एषाञ्च वेदमूलकत्वं तद्विशेषज्ञाः समामनन्ति । उदाहरन्ति च——

'ऋचः सामानि च्छन्दांसि पुराणं यजुषा तथा ।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवाः दिविश्रिताः ।
[अथर्व० ११।७।२४]

"स बृहतीं दिशमनुव्यचलत् । तमितिहासश्च पुराणञ्च, गाथाश्च नाराशंसीश्चानुव्यचलन् । इतिहासस्य च वै स ह पुराणस्य च गाथानाञ्च नाराशंसीनाञ्च प्रियं धाम भवति य एवं वेद।" [अथर्व० १५।५।११।१२]

"एवमिमे सर्वे वेदा निर्मिताः सकल्पाः सरहस्याः सब्राह्मणाः सोपनिषत्का सेतिहासाः सान्वयाख्याताः सपुराणाः सस्वराः" [गोपथ प्रपा० २]

"सोऽयमिति किञ्चित्पुराणमाचक्षीत" [शत० १३।४।३।१३]

"......इतिहासः पुराणं विद्या उपनिषदः" [बृहदा० २।४।११]

छान्दोग्येऽपि——

"ऋग्वेदं भगवोऽध्येमी"त्यारभ्य "इतिहासपुराणं, पञ्चमं वेदानां वेद"-मित्यादि ।

आपस्तम्बधर्मसूत्रे तु स्फुटं पुराणानां श्लोकसंख्याऽपि निर्दिष्टा——

'अथ पुराणे श्लोकानुदाहरन्ति ।
अष्टाशीतिसहस्राणीति ।" [आपस्तम्ब०२।२२।३५]

एवंविधानि वर्णनानि प्रव्यक्तं पुराणानामतिप्राचीनभवत्वं सूचयन्ति । परमुपलभ्यमानानि बृहदाकाराणि पुराणानि, विशुद्धमूलरूपाणि प्रक्षेपोत्सादाभ्यामव्याकुलीकृतानि सन्त्यथवा परिवर्तन-परिवर्द्धनप्रक्षेपाऽपक्षयादिसङ्कुलतया विकृतिं गतानि इति महान् प्रश्नः ? भवतु तद्यथा तथा वा इदन्तु सुनिश्चितं यत्

पुराणसाहित्यं भारतीयाचारव्यवहारस्य आर्यसांस्कृतिकपरम्परायाः, धर्मार्थकाम-मोक्षौपयिकोपदेशानां महान् खलु आकरः, नास्ति तादृशो विषयो लोकहितावहो यस्तत्र न वर्णितो भवेत् ।

## पुराणानामियत्ता

सम्प्रति पुराणानामियत्तानिर्धारणार्थमन्तरङ्गप्रमाणानि प्रस्तूयन्ते :—

१. मत्स्यपुराणम्—'तन्मत्स्यमिति जानीध्वं, सहस्राणि चतुर्दश (१४०००) ।

२. मार्कण्डेयम्—'पुराणं नवसाहस्रं (९०००) मार्कण्डेयमिहोच्यते' ।।

३. भागवतम्—. . . .तद्भागवतमुच्यते । अष्टादशसहस्राणि (१८०००) पुराणं तत्प्रचक्षते ।

४. भविष्यपुराणम्—'चतुर्विंशत्सहस्राणि तथा पञ्चशतानि (२४५००) च । भविष्यचरितप्रायं भविष्यं तदिहोच्यते ।

५. ब्राह्मपुराणम्—ब्राह्मं त्रिदशसाहस्रम् (१३०००) पुराणं परिकीर्त्यते ।

६. ब्रह्मवैवर्त्तम्—तदष्टादशसाहस्रं (१८०००) ब्रह्मवैवर्त्तमुच्यते ।

७. ब्रह्माण्डपु०—तच्च द्वादशसाहस्रं ब्रह्माण्डं द्विशताधिकम्(१२२००) ।

८. वामनम्—'पुराणं दशसाहस्रं (१००००) वामनं परिकीर्त्तितम् ।

९. वाराहपु०—'चतुर्विंशत्सहस्राणि (२४०००) तद्वाराहमिहोच्यते ।

१०. विष्णुपुराणम्—त्रयोविंशतिसाहस्रं (२३०००) वैष्णवम् ।

११. वायुपुराणम्—चतुर्विंशत्सहस्राणि (२४०००) वायवीयम् ।

१२. अग्निपुराणम्—. . . .आग्नेयं. . . . . . ।
तच्च षोडशसाहस्रं (१६०००) सर्वक्रतुफलप्रदम् ।

१३. नारदीयम्—पञ्चविंशत्सहस्राणि (२५०००) नारदीयं तदुच्यते ।।

१४. पद्मपुराणम्—पाद्मन्तु पञ्चपञ्चाशत्सहस्राणीह (५५०००) कथ्यते ।।

१५. लिङ्गपुराणम्—कल्पान्ते लैङ्गिकमित्युक्तं, . . . . तदेकादशसाहस्रम् (११०००) ।

१६. गरुडपु०—. . . गारुडं तदिहोच्यते अष्टादशसहस्राणि (१८०००) ।

१७. कूर्मपु०—'. . .कूर्मरूपी जनार्दनः । अष्टादशसहस्राणि (१८०००) ।

१८. स्कन्दपु०—'स्कन्दं नाम पुराणञ्च ह्येकाशीति निगद्यते । सहस्राणि शतञ्चैकम् (८११००) इति ।

परं सङ्ख्यैषा सम्प्रत्युपलभ्यमानेषु पुराणग्रन्थेषु भूम्ना बेभिद्यते, इति

कुतूहलास्पदम् । एवंविधभेदस्य प्रक्षेपोत्सादादतिरिक्तं तु कारणान्तरं निपुणं मृग्यमाणमपि न बुद्धिपद्धतिमवतरति । पुनरुक्तिदोषस्तु तेषु यत्र तत्र विग्रहवानिव उपतिष्ठते । प्रायशः विषयसाम्यं, कथासाम्यं, भाषासाम्यं सर्वत्र पदमादधाति । प्रावृषि यथैव निर्मलमपि गाङ्गं जलं रजस्वलं सम्पद्यते, तथैव पौराणिकं साहित्यमिदं साङ्कर्यसङ्कुलं संवृत्तम्, इत्यत्र न कस्यापि वैमत्यम् । यदि नाम लक्षाधिक-संख्याभृतामेषामखिलपुराणपद्यानां सारमादाय संक्षेपः क्रियेत तर्हि परिमितैरधिका-धिकसहस्रमितैः श्लोकैरेव सर्वं तत्त्वार्थजातं परिसमाप्येत । तथापि यदि सदसद्विवेक-वन्तो विद्यावन्तो 'हंसो यथा क्षीरमिवाम्बुमध्यादि'ति हंसवृत्तिमूरीकुर्वन्तो वर्त्तेरन्, अवश्यमेव ततः कीलालममृतं पयः समुपलभ्येरन्, "सन्तः परीक्ष्यान्यतरद् भजन्ते' इत्युक्तिं चरितार्थयन्तः । यद्यपि केचन प्रेक्षावन्तः तथा कदर्थितानां पुराणानां विषसम्पृक्तान्नवत्त्याज्यत्वं गृणन्ति । सत्यम्! तथापि तेषां सार्थकत्वं चोरयितुं तु कः क्षमः । "हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा" बुद्धिनिकषे परीक्षितानि वस्तूनि सारासारं स्वयमेवोद्वमन्ति इति ।

## पुराणप्रतिपाद्या विषयाः

अधुना पुराणानां स्वरूपपरिचयार्थं किञ्चित्सङ्ग्रहेण प्रस्तूयते :—

मत्स्यपुराणम्—देवीभागवतपुराणानुसारेणास्य श्लोकसंख्या एकोनविंशति (१९०००) सहस्रमिता, परन्तु सम्प्रति समुपलब्धे मत्स्ये त्रयोदशसहस्रमिता एव दृश्यते । मनुमत्स्यसंवादः, जगदुत्पत्तिप्रलयवर्णनम्, ब्रह्मोत्पत्तिः, वेदप्रादुर्भावः, मरीचिनारदाद्युत्पत्तिः, आदिसृष्टिविवरणम्, मानुषी सृष्टिः, दैवी सृष्टिः, काश्यपान्वयवृत्तान्तः, दितिकथाप्रसङ्गे मदनद्वादशीमाहात्म्यम्, मरुतामुत्पत्तिः, लोकपालाभिषेचनम्, मन्वन्तरानुकीर्त्तनम्, वेन्यचरितम्, सूर्यवंशनिरूपणम्, अश्विनोरुत्पत्तिः, बुधप्रसङ्गे नृपालोत्पत्तिः, उत्कलादित्रिपुत्रोत्पत्तिः, ततः इक्ष्वाकुवंशवर्णनम्, वैराजपितृवंशवर्णनप्रसङ्गे गौरीशतनामकीर्त्तनम्, अग्निष्वात्तपितृवंशवर्णनम्, बर्हिषत्पितृवंशविवरणम्, श्राद्धकल्पे पिपीलिकेतिहासकथा, पितृमाहात्म्यम्, पिण्डीकरणकल्पश्च । [अ० १६–२२] षोडशतमादध्यायाद् द्वाविंशतमपर्यन्तम् ।

ततः सोमवंशवर्णनम्, चन्द्रबृहस्पतिकलहः पुत्रार्थम्, पुरुवंशस्य ययातेश्चरितम् । ययातीन्द्रयोर्गष्टकेन सह संवादः । [अ० २३–४२] तदनन्तरं यदुवंशकीर्त्तनप्रसङ्गे कार्त्तवीर्यकथा, वृष्णिवंश-स्यमन्तकमणिकथा, कृष्णचरितं, श्रीकृष्णस्य षोडशसहस्र (१६०००) स्त्रीणां पुत्राणाञ्च नामादिकीर्त्तनम् । दशावतारविवरणञ्चेति [४३–४७] ।

ततो देवासुरकथा, तुर्वसुप्रभृतिवंशवर्णनम्, इन्द्रबृहस्पतिराजधर्मसंवादः, शिवपार्वतीविवाह-कार्त्तिकेयोत्पत्तिः-हिरण्यकशिपुवधप्रसङ्गे नरसिंहावतारकीर्त्तनम् इत्यादि । तदनन्तरं दानमाहात्म्यं, सावित्रीसत्यवतोः चरितम्, प्रवरानुकीर्त्तनप्रसङ्गे भृगु-आङ्गिरस-अत्रि-विश्वामित्र-वशिष्ठ-पराशर-कश्यप-द्वैपायनादि-वंशवर्णनम् । ततः किञ्चिद् भविष्यकीर्त्तनपुरस्सरं मत्स्यस्यान्तर्धानम्, उपसंहारश्च ।

मार्कण्डेयपुराणम्—

'यत्राधिकृत्य शकुनीन् धर्मान् धर्मविचारणा ।
व्याख्याता वै मुनिप्रश्ने मुनिभिर्धर्मचारिभिः ॥
मार्कण्डेयेन कथितं.....मार्कण्डेयमिहोच्यते ॥

अत्र मार्कण्डेयं प्रति जैमिनेः प्रश्नाः, द्रौणतनयपक्षिणाञ्च वर्णनम्, हरिश्चन्द्रोपाख्यानं, वशिष्ठस्य विश्वामित्रं प्रति बको भवेति अभिशापः, विश्वामित्रस्य वशिष्ठं प्रति आडीभवेति प्रतिशापः । तयोः परस्परयुद्धम्, प्राणिनां जन्ममरण-निरूपणे, भार्गवब्राह्मणेन जडमतिसंवादः । यम-पुरुषसंवादः, दत्तात्रेयकार्त्तवीर्ययोः संवादः, कुवलयाश्वोपाख्यानम्, मन्दालसोपाख्यानम्, मन्दालसाया स्वपुत्रं प्रति वर्णाश्रमधर्मोपदेशः । श्रद्धा, कल्पः, सदाचारः एवं सुबाहु-काशिराजयोः संवादश्च इत्यादि बहूनां विषयाणां वर्णनम् प्रवर्त्तते । मार्कण्डेयपुराणस्य वास्तविक आकार-प्रकारस्तावानेव यावान्, मार्कण्डेयेन क्रौष्टिकं प्रति वर्णितः । इत्येव बहूनामभि-प्रेतम् । ततो व्यतिरिक्तविवृद्धाकारस्तु पश्चात्सङकलितो विभाव्यते । अत्र विशिष्टमनुसन्धानमपेक्ष्यते ।

भागवतम्—यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं तद्भागवतमिष्यते ॥

अस्मिन् प्राग् गायत्रीमुपक्रम्य धर्मविस्तरो वर्णितः । अस्य गायत्री विलक्षणा—

'ओं सर्वचैतन्यरूपां तामाद्यां विद्याञ्च धीमहि ।
बुद्धिं यो नः प्रचोदयात् ।' इति ।

पुराणविदः पुराणान्तरेभ्योऽस्य प्राधान्यं समामनन्ति । तदुपपादप्रमाणत्वेन चोदाहरन्ति :

व्यास उवाच—"शृणु राजन् प्रवक्ष्यामि पुराणं गुह्यमद्भुतम् ।
पुण्यं भागवतं नाम नानाख्यानयुतं शुभम् ॥

तत्र प्रथमस्कन्धे सूत-शौनकादि-ऋषीणां वर्णनम्, विष्णुशक्तिप्रशंसा, देवीमाहात्म्यं, हयग्रीववर्णनम्, मधुकैटभहननम् इत्यादि।

द्वितीयस्कन्धे--शान्तनूत्पत्ति; भीष्मोत्पत्तिः, भीष्मप्रतिज्ञा, सत्यवती-विवाहः, कौरवपाण्डवानामुत्पत्तिः, तेषां राज्यम्, तक्षकस्य कथा, परीक्षितस्याभिशापः, परीक्षितस्य मृत्युः, जनमेजयराज्यं, जनमेजयस्य विवाह-सर्पयज्ञौ, जरत्कारु-आस्तीकयोः कथा चेति ।

तृतीयस्कन्धे--सांख्यनिरूपितप्रधान-प्रकृतिमनुसृत्य देव्या वर्णनम्, वीरसेनस्य कथा, जयद्रथस्य द्रौपदीहरणम्, शशिकलायाः स्वयंवरवर्णनम्, सुदर्शनादि-कथा, रामरावणादिकथा, रावणवधश्च ।

चतुर्थस्कन्धे--कश्यपस्य गोहरणम्, दितिकथा, उर्वश्या उत्पत्तिः, प्रह्लादस्य कथा, नरनारायणयोर्युद्धम्, इन्द्रेण सह युद्धम्, पराजितदैत्यानां शुक्रसमभ्यर्णे गमनमादि. . . . ।

पञ्चमस्कन्धादारभ्य द्वादशतमस्कन्धपर्यन्तम् एवंविधमेव वर्णनम् अतिरोचकमुपदेशप्रदञ्च ।

एतद्दिङमात्रं प्रदर्शितम् । एवमेव पुराणान्तरेष्वपि मृग्यम् । स्थानाभावात् नाऽत्र प्रपञ्च्यते । नूनं पुराणसाहित्यं लोकपरलोकस्वरूपावबोधार्थमत्यन्तमुपयोगितामावहति । समानतात्पर्यविषयीभूतानां पुराणानां परस्परं निन्दात्मकाः श्लोका दृष्टिपथं प्रयाता हृदयमतिमात्रं व्याकुलयन्ति । विष्णुपुराणे शिवनिन्दा, शिवपुराणे च विष्णुनिन्दा न शोभावहा । नूनं परस्परं भेदभावमङ्कुरयितुमेव प्रक्षेपरूपेण एवंविधाः श्लोका अनुस्यूताः स्युरिति प्रतीयते। वैदिकसिद्धान्तानाम् एकवाक्यतां प्रतिपिपादयिषूणां पुराणग्रन्थानां मिथः कलहायमानानां गतिविधिर्न शोभनो नाऽपि प्रशंसार्ह इति को नाम नोरीकुर्यात् । वस्तुतः पुराणानामपि संशोधनमपेक्ष्यतेऽनुसन्धानञ्च । पुराणविशेषज्ञा विद्वांसोऽत्र प्रयतन्तामित्यस्माकं बलीयसी स्पृहा, हार्दिकी मनीषा चेति।

## आगमसाहित्यम्

कः खल्वागमपदस्यार्थ इति जिज्ञासायामुच्यते। वैदिकसाहित्ये निगमः आगमश्चेति द्वौ शब्दौ दृश्येते। तत्र निगमशब्दो वेदवाची, यास्केन तत्र तत्र 'निगमो भवतीति' वेदवाक्यानामेव समुद्धरणात्। "तस्मिन् (निरुक्ते) निगम एव प्रायेण वर्त्तमानां शब्दानां चतुर्थाध्यायस्य द्वितीये काण्डे उपदिष्टत्वात्तस्य काण्डस्य नैगमत्वम् ।" इति माधवाचार्येण निगमपदार्थः क इति जिज्ञासायामृग्वेदभाष्यभूमिकायां

यास्कनिरुक्तग्रन्थप्रयोजनवर्णनावसरे प्रतिपादितम् निगमो वेद इति । तत्प्रतिद्वन्द्वितया आगमपदस्याविर्भावः । आगमस्य लक्षणं शब्दकल्पद्रुमे एवमुदाहृतम् :

"सृष्टिः प्रलयश्चैव देवतानां यथार्चनम् ।
साधनञ्चैव मन्त्राणां पुरश्चरणमेव च ॥
षट्कर्मसाधनञ्चैव ध्यानयोगश्चतुर्विधः ।
सप्तभिर्लक्षणैर्युक्तं त्वागमं तद्विदुर्बुधाः ॥ इति ।

परन्त्वेवं किलावधारयन्ति केचन, यदनादेः कालात् निगमप्रतिद्वन्द्विप्रस्थाननिष्ठैः सौगतार्हतादिभिः आगमसम्प्रदायः समाश्रितः । कालान्तरेण च निगमसम्प्रदायनिष्ठैरपि निगमानुगुण्येन सकलप्राणभृतां श्रेयःकामनया आगमसम्प्रदायः प्रवर्त्तितः । ततो ह्येष आगमः, वैदिकावैदिकभेदाद् द्वेधा विभागं गतः । वैदिकानुगुण्येन प्रवर्त्तिता वैदिकाः इतरे त्ववैदिकाः ।

इदञ्चागमपदं पुरा तु शास्त्रमात्रे प्रयुक्तमालोक्यते मन्वादिभिः । तद्यथा—

प्रत्यक्षमनुमानञ्च विभिन्नागमदर्शनैः ।
अनुपासितवृद्धानां विद्या नातिप्रसीदति ॥ [मनु० अ० १२]

वाक्यपदीयेऽपि च :—

प्रज्ञा विवेकं लभते विभिन्नागमदर्शनैः ।
अनुपासितवृद्धानां विद्या नाति प्रसीदति ॥

परन्त्विदानीन्तु आगमशब्दोऽयं शब्दप्रमाणमात्रे प्रयुज्यते ।

कालान्तरेण आगमशब्दोऽयं तन्त्रपदेनापि व्यवह्रियते । निगमो मन्त्रपर्यायः आगमश्च तन्त्रपर्यायः संवृत्तः यथा मननान्मन्त्रः तथैव तननात्तन्त्रः । तपःपूतेन मनसा साक्षात्कृतो मन्त्रः, मन्त्रार्थस्य विस्तरेण निरूपणाच्च तन्त्रः । उक्तञ्च विष्णुसंहितायाः सप्तमे पटले—

सर्वेऽर्था येन तन्यन्ते त्रायन्ते च भयाज्जनाः ।
इति तन्त्रस्य तन्त्रत्वं तन्त्रज्ञाः परिचक्षते ॥

वाराहतन्त्रेऽपि तन्त्रलक्षणमेवं निरूपितम्—

"सर्गः प्रतिसर्गश्च मन्त्रनिर्णय एव च ।
हरचक्रस्य चाख्यानं स्त्रीपुंसोश्चैव लक्षणम् ।
राजधर्मो दानधर्मो युगधर्मस्तथैव च ॥
व्यवहारः कथ्यते च तथा चाध्यात्मवर्णनम् ।
इत्यादि लक्षणैर्युक्तं तन्त्रमित्यभिधीयते ॥ इति ।

तदित्थं तनुभृतामखिलव्यवहारानुकूलः सर्वशास्त्रसंग्रहस्तन्त्रसन्दर्भ इत्यागमविदामभ्युपगमः।

तदागमपदाभिधेयानां तन्त्राणामपि चतुर्दशविद्यास्थानेषु धर्मशास्त्रेऽन्तर्भावमाकलयन्ति आगमपारदर्शिनः।

त इमे किलागमाः बहुशो विभक्ता अवगम्यन्ते। उक्तञ्च तन्त्रवार्त्तिके—

"सांख्य–योग–पाञ्चरात्र–पाशुपत–शाक्य–निर्ग्रन्थ–धर्माधर्मनिबन्धनानि, चिकित्सा-वशीकरणोच्चाटनोन्मादनादिसमर्थकतिपयमन्त्रौषधकादाचित्कसिद्धिनिदर्शनबलेनाहिंसासत्यवचनदमदानदयादिश्रुतिस्मृतिसंवादि स्तोकार्थगन्धवासितजीविकाप्रायार्थान्तरोपदेशीनि, यानि च म्लेच्छाचारमिश्रकुभोजनाचरणनिबन्धनानि, तेषामेवैतत् श्रुतिविरोधहेतुदर्शनाभ्यामनपेक्षणीयत्वं प्रतिपाद्यते।" इति आगमविभागप्रदर्शनपुरस्सरं तेषु म्लेच्छाचारमिश्रिततत्त्वानां निरूपणाद् अनपेक्षणीयत्वमुक्तम् वेदादिसच्छास्त्रविरुद्धत्वाद् इति विवेकः।

परन्तु नात्र कश्चित्सन्देहावसरो यत् संस्कृतवाङ्मये आगमसाहित्यमतिमहनीयं पदमलङ्करोति। आगमशास्त्रावतरणं तत्प्रतिपाद्यविषयाणामुल्लेखश्च तन्त्रग्रन्थेषु बहुश उपलभ्यते। महानिर्वाणतन्त्रानुसारेण, लोककल्याणहेतवे, कलौ भगवता शङ्करेण आगमानामुपदेशः कृत इत्यभ्युपगम्यते। "विना ह्यागममार्गेण कलौ नास्ति गतिः प्रिये" [महानिर्वाणतन्त्रम्]। किञ्च कुलार्णवतन्त्रेऽपि—

"कृते श्रुत्युक्त आचारस्त्रेतायां स्मृतिसम्भवः।
द्वापरे तु पुराणोक्तः कलावागमसम्भवः॥ इति।

भगवता वाचस्पतिमिश्रेण आगमपदं विवृण्वता तत्त्ववैशारद्यामुक्तम्—'आगच्छन्ति बुद्धिमारोहन्ति यस्माद् अभ्युदयनिःश्रेयसोपायाः स आगमः। निगमागमयोरियानेव भेदोऽवगम्यते। कर्मज्ञानोपसनास्वरूपं निगमयन्तोऽवबोधयन्तो निगमा उच्यन्ते, अभ्युदयनिःश्रेयसयोरुपायान् बुद्धिपद्धतिमवतारयन्तो हि आगमाः परिभाष्यन्ते।"

आगमस्तन्त्रपदेनापि जेगीयते। आगमस्तन्त्रमित्यनर्थान्तरम्। तन्यते विस्तार्यते ज्ञानमनेनेति तन्त्रम्। तन्त्रं व्याचक्षाणः कश्चिदाह :—

तनोति विपुलानर्थान् तत्त्वमन्त्रसमन्वितान्।
त्राणञ्च कुरुते यस्मात् [1]तन्त्रमित्यभिधीयते॥

१. विस्तारार्थकात् 'तनु' धातोः 'सर्वधातुभ्यष्ट्रन्' इत्यौणादिके ष्ट्रनि कृते तन्त्रशब्दो व्युत्पाद्यते। तन्त्रं शास्त्रमित्यर्थः भगवता शङ्कराचार्येण सांख्यशास्त्रमपि तन्त्रपदेन स्मृतम्—'स्मृतिश्च तन्त्राख्या परमर्षिप्रणीता।' [२।१।१ शङ्करभाष्यम्]।

किञ्च—

"न्यायतन्त्राण्यनेकानि तैस्तैरुक्तानि वादिभिः।
यतयो योगशास्त्रेषु यान् स्तुवन्ति द्विजातयः॥"

इति महाभारतेऽपि न्याययोगधर्मशास्त्राणि तन्त्रपदेनैव स्मृतानि । परन्तु पुरा सांख्यन्यायादिशास्त्रपरमपि तन्त्रपदं प्रयुज्यते स्म सम्प्रति तु आगमापरनामसु तन्त्रेषु एव केवलत्वेन योगरूढत्वेन च विशिष्य प्रयुज्यते । आगमसंज्ञया प्रचरितानां ग्रन्थानां आगमवत् तन्त्रमित्यपि पारिभाषिकी संज्ञा। तद्यथा—

वाराहीतन्त्रप्रणेता आगमं लिलक्षयिषुराह :—

सृष्टिश्च प्रलयश्चैव देवतानां यथार्चनम् ।
साधनञ्चैव सर्वेषां पुरश्चरणमेव च ॥
षट्कर्मसाधनञ्चैव ध्यानयोगश्चतुर्विधः ।
सप्तभिर्लक्षणैयुक्तमागमं तद्विदुर्बुधाः ॥ इति॥

पुराणपद्धतिमवलम्ब्यैव निगमानां प्रवृत्तिरनुमीयते, विषयसाजात्यात् । आगमतन्त्राणामनुशीलनेनावगम्यते द्वैविध्यम् वेदमूलकत्ववेदबाह्यत्वभेदात् । तत्र पाञ्चरात्रशैवागमादीनां कतिपयसिद्धान्तास्तु वेदावलम्बिनः प्रतीयन्ते । इतरे वेदबाह्याः । शाक्तागमानां वेदमूलकताविषये तु विदुषां भूयसी विप्रतिपत्तिः । तेषां सप्तविधाचारेषु वामाचारस्यातीवनिन्द्यतया प्रेक्षावन्तः शाक्ततन्त्राणि वेदबाह्यत्वेन बहिष्कुर्वन्ति । यद्यपि अद्वैतविषयकाः सिद्धान्तास्तेषां भूम्नोपनिषन्मूलकत्वं न जहति । वेदमपि क्वचिदनुसन्दधति । ऋग्वेदस्य वागाम्भृणीसूक्तस्य [ऋ० १०।१२५] च्छायामनुसरन्तः एव शाक्तसिद्धान्ता अवभासन्ते । परन्तु क्रियाकलापेषु ते बहुतरं वेभिद्यन्ते। निगमानां ज्ञानप्राधान्यम्, आगमानां क्रियाप्राधान्यं ते समाकलयन्ति। परन्तु ज्ञानकर्मणोः पूर्वपश्चिमदिग्वद्भेदस्तु न कथमपि बुद्धिसाङ्गत्यं बिभर्त्ति ।

## शाक्तानां भावाचारौ

शाक्तानां त्रयो भावा सप्त चाचाराः सम्भवन्ति । तत्र पशुभावः वीरभावः दिव्यभावश्चेति त्रयो भावाः । वेदाचारः, वैष्णवाचारः, शैवाचारः, दक्षिणाचारः, वामाचारः, सिद्धान्ताचारः, कौलाचारश्चेति सप्त आचाराः । भावा हि मानसमनुबध्नन्ति, आचाराश्च पुनः बाह्याचरणम् ।

पशुभावः अद्वैतज्ञानलवस्यानुदयरूपः । संसाररज्जुबन्धनाञ्चितोऽधमः पशुः, भगवद्भक्तः सत्कर्मपरायणश्चोत्तमः पशुः । परमुभावप्येतौ पशुभावव्यपदेश्यौ। ये तु संसारबन्धनोच्छेदेंऽशतो फलवन्तस्ते वीरभावाश्रिताः, ये तु द्वैतभावं

पूर्णतया निरस्य अद्वैतानन्दनिमग्नास्ते दिव्यभावाश्रया अभिलप्यन्ते। एवं आचारेषु प्रथमचत्वारः पशुभावशवलिताः, वामसिद्धान्ताचारौ वीरभाववाच्यौ, अन्तिमः कौलाचारश्च सर्वश्रेष्ठो दिव्यभावनिर्देश्यः। कौला हि पूर्णाद्वैतानन्दरसिका दिव्यसाधका आख्यायन्ते। कुलं सजातीयसमूहः। स चैकविज्ञानविषयत्वरूपसाजात्यापन्नः, साजात्यापन्नता च ज्ञातृज्ञेयज्ञानरूपत्रयात्मिका, ततः सा त्रिपुटी, कुल"मेयमातृमितलक्षणा कुलम्' इति कथ्यते। कुलमधिकृत्य प्रवृत्ताः कौलाः इति तद् व्युत्पत्तेः। सर्वथा भेदभावशून्यः कौल उच्यते। उक्तञ्च भावचूडामणितन्त्रे :—

'कर्दमे चन्दनेऽभिन्नं पुत्रे शत्रौ तथा प्रिये।
श्मशाने भवने देवि! तथैव काञ्चने तृणे।
न भेदो यस्य देवेशि! स कौलः परिकीर्त्तितः॥

तान्त्रिकाणां नये कौलसाधनेयमखिलनिगमागममहोदधिमन्थनसमुत्थः साररूपः अभिलप्यते। तदिदं कौलसिद्धान्तरहस्यं सर्वथैव गोप्यं गोप्यतमञ्च। कौलाः कदापि स्वस्वरूपमपि नोद्घाटयन्ति। तेषां कौलाकौलत्वपरिचयोऽपि नितरां दुष्करः। अत एवेयं निम्नांकिता भणितिस्तेषां विषये प्रचरति––

'अन्तः शाक्ता बहिः शैवाः सभामध्ये च वैष्णवाः।
नानारूपधराः कौलाः विचरन्ति महीतले॥

कौलसम्प्रदायः––सोऽयं कौलसम्प्रदायः प्राचीनकालेऽपि प्रचारबहुल आसीदिति तेषामभ्युपगमः। कौलज्ञाननिर्णयतन्त्रस्य चतुर्दशपटले रोमकूपादिकौलः, वृष्णोत्थकौलः, वह्निकौलः, कौलसद्भावपदोत्थितकौलः, इत्यादिनामभिः प्रसिद्धाः। सप्तदशपटले च सिद्धकौलः, ज्ञाननिर्णीतकौलः, सिद्धामृतकौलः, योगिनीकौलः इत्यादिनामभिश्च सङ्कलिताः कौलसम्प्रदाया एव प्रतीयन्ते। नाथसम्प्रदायस्य सम्बन्धोऽपि कौलसम्प्रदायेन सह अनुमीयते। योगिनीकौलः कामरूपदेशे लब्धप्रसार आसीत्। अतः एवेयं भणितिः––"कामरूपे इदं शास्त्रं योगिनीनां गृहे गृहे।" इति।

हठयोगाचार्याणां गोरक्षनाथादीनामुद्भवोऽपि कौलमार्गमेवानुसन्दधाति। एतत्सम्प्रदायस्य प्राचीनग्रन्थानां, कौलज्ञाननिर्णय–अकुलवीरतन्त्र–कलानन्दतन्त्र-ज्ञानकारिकादिग्रन्थानां प्रकाशनं कालिकातासंस्कृतसिरीजे जातम्। गोरक्षसिद्धान्तसंग्रहः सिद्धसिद्धान्तसंग्रहश्चेति ग्रन्थद्वयमुद्रणं काश्यां सम्पन्नम्।

समयाचारः—कौलाचारव्यतिरिक्तः श्रीविद्योपासकानामेकोऽन्योऽप्याचारः समयाचाराभिधानः। श्रीशङ्कराचार्योऽपि एतदनुयायी आसीदिति एतत्साम्प्रदायिकानां मतम्। सौन्दर्यलहरीटीकायां श्रीलक्ष्मीधरेण एकचत्वारिंशत्तमे श्लोके,

भास्कराचार्येण, समयान्तस्था—समयाचारतत्परादिशब्दानां भाष्ये एतत्सिद्धान्त-रहस्यं पल्लवितम् । समयशब्दोऽयं हृदयाकाशमभिधत्ते । "दहराकाशावकाशे चक्रं विभाव्य तत्र पूजादिकं समय इति रूढ्या उच्यते ।" समयाचारे हि मूलाधारे प्रसुप्तां कुण्डलिनीं जागरूकां विधाय स्वाधिष्ठानादिचक्रेषु समुल्लसत् सहस्रारचक्रे विद्यमानस्य सदाशिवस्य सायुज्यसाधनमेव प्रधानाचारत्वेन विभाव्यते। समयाचारतत्त्वं नितरां गूढं गुरुमुखसंवेद्यमात्रम् । समयमार्गानुयायिना लक्ष्मीधरेण कौलमार्गस्यातितरां निन्दा कृता । परं तत्त्वतो विचार्यमाणे, [1]कौलसमयाचारमार्गयोर्न भूयान् भेद इति बहूनां तत्साम्प्रदायिकानामाशयः ।

एषां तान्त्रिकाणां पूजायां पञ्चतत्त्वसाधनमतिमहत्त्वपूर्णपदमधिकरोति । पञ्चतत्वेषु च—मद्यं-मांसं-मत्स्यः-मुद्रा-मैथुनमिति पञ्चमकारा गृह्यन्ते । लक्ष्मीधरेण—[2]सौन्दर्यलहर्या एकचत्वारिंशत्तमे, 'तवाधारे मूले सहसमयया लास्यपरया' अस्मिन् पद्ये कौलानां पूर्वकौलोत्तरकौलभेदाद् द्वैविध्यं प्रतिपादितम् ।

पूर्वकौला श्रीचक्राभ्यन्तरस्थितयोनिपूजां विदधति, परन्तूत्तरकौलाः प्रत्यक्षसुन्दरयुवतीनां योनिपूजका एव । कौलाचारस्य प्रधानं केन्द्रं कामाख्या आसामप्रान्ते स्थिता । बहुभिरनुमीयते एतादृशः कदर्यप्रभावः तान्त्रिकशास्त्रेषु सर्वथा विदेशीयतिब्बतादिदेशसम्भवः ।

कुलाचार—स्वच्छन्दतन्त्रे कौलव्याख्या एवंप्रकारेण कृता—

'कुलं शक्तिरिति प्रोक्तं अकुलं शिव उच्यते ।
कुलेऽकुलस्य सम्बन्धः, कौलमित्यभिधीयते ॥'

सोऽयं कुलाचारः कौलाचार वामाचार इति-नामभिरपि प्रसिद्धः । अस्य मतेऽपि पञ्चमुद्राभिधं पञ्चतत्त्वमभिमतम् ।

'मद्यं मांसं च मीनञ्च मुद्रा मैथुनमेव च ।
मकारपञ्चकं प्राहुः योगिनां मुक्तिदायकम् ॥'

परन्तु तेषामेषां पञ्चतत्त्वानामुपव्याख्यानं विलक्षणम् । मद्यमांसादिपदानां भासमानमर्थं ते नाभिनन्दन्ति । पारिभाषिका हीमे शब्दाः प्रसिद्धमर्थं विहाय अर्थविशेषं परिभाषन्ते—

---

१. कुः पृथिवीतत्त्वं लीयते यस्मिन् तदाधारचक्रं कुलमित्याख्यायते ।

२. समयिनां मन्त्रस्य पुरश्चरणं नास्ति । जपो नास्ति । बाह्यहोमो नास्ति बाह्यपूजाविधयो न सन्ति । हृत्कमलेन यावत् सर्वमनुष्ठेयम् । [सौन्दर्यलहरी टीका, श्लो० ४१]

मद्यम्—'व्योमपङ्कजनिष्यन्दसुधापानरतो नरः ।
मधुपायीसमः प्रोक्तस्त्वितरे मद्यपायिनः ।। [कुलार्णवे]
जिह्वया गलसंयोगात् पिबेत्तदमृतं तदा ।
योगिभिः पीयते तत्तु न मद्यं गौडपैष्टिकम् ।। [गन्धर्वतन्त्रे]

न मद्यपदेन गौडपैष्टिकी मदिराभिधीयतेऽपितु ब्रह्मरन्ध्रस्थितसहस्रदल-कमलात्क्षरितं पीयूषमेव मद्यपदेनात्राभिधीयते ।

मांसम्—'पुण्यापुण्यं पशुं हत्वा ज्ञानखड्गेन योगवित् ।
परे लयं नयेच्चित्तं मांसाशी न निगद्यते ।।

मत्स्यः—'गंगा यमुनयोर्मध्ये द्वौ मत्स्यौ चरतः सदा ।
तौ मत्स्यौ भक्षयेद्यस्तु स भवेन्मत्स्यसाधकः ।

गंगायमुनेऽत्रेडापिङ्गले । प्राणायामद्वारा तत्प्रवाहितौ श्वासप्रश्वासाववरुध्य कुम्भकेन प्राणवायुं सुषुम्णायां यः सञ्चारयति स मत्स्यसाधक इति भावः ।

मुद्रा—सत्सङ्गेन भवेन्मुक्तिरसत्सङ्गेषु बन्धनम् ।
सत्संगमुद्रणं यत्तु, तन्मुद्रा परिकीर्त्तिता ।।

मैथुनम्—इडादिपिङ्गलयोः प्राणान् सुषुम्णायां प्रवर्त्तयेत् ।
सुषुम्णा शक्तिरुद्दिष्टा जीवोऽयन्तु परः शिवः ।।
तयोस्तु संगमे देवैः सुरतं नाम कीर्तितम् ।।

एषामीदृग्विधैराशयैः एभिः मद्यप्रभृतिभिः शब्दमात्रैः अर्थविशेषमनभिज्ञाय अज्ञा निन्दन्ति तन्त्रशास्त्रमिति तान्त्रिकाः व्यवस्थापयन्ति । वेदवदागमानामपि प्रामाण्यं ते समाकलयन्ति । तथा चाह श्रीकण्ठाचार्यः स्वकीये ब्रह्मसूत्रशैवभाष्ये :—"वयं तु वेदशिवागमयोर्भेदं न पश्यामः, वेदोऽपि शिवागम इति व्यवहारो युक्तः । तस्य तत्कर्त्तृत्वात् । अतः शिवागमो द्विविधः । त्रैवर्णिकविषयः, सर्वविषयश्चेति । उभयोरेकः शिवः कर्त्ता । उभावपि प्रमाणभूतौ वेदागमौ" [श्रीकण्ठ भा० २।२।३८] अस्य श्रीकण्ठभाष्यस्य शिवार्कमणिदीपिकाख्यव्याख्यायां श्रीमदप्पयदीक्षितेन आगमस्य द्वैविध्यं स्वीकृतं, वैदिकमवैदिकञ्चेति । वैदिकतन्त्रं वेदाधिकारिभ्यः । अवैदिकञ्च वेदानधिकारिभ्य इत्यधिकार्यनधिकारिभेदेन तयोः प्रामाण्यं यथास्थानं सुव्यवस्थितमिति सर्वमनवद्यम् ।

इमानि तन्त्राणि सौरतन्त्र-गाणपत्यतन्त्र-वैष्णवतन्त्र-शैवतन्त्र-शाक्ततन्त्र-भेदैः बहुशो भिद्यन्ते । तेषां विवरणं तु तत्रैवानुसन्धेयम् । नाऽत्रग्रन्थभूयस्त्वभिया समुपन्यस्यते ।

पाञ्चरात्रम्--वैष्णवतन्त्रेषु 'पञ्चरात्रमतीव महत्वपूर्णपदमध्यारोहतीति सुविदितमेव । तदेतत्--पाञ्चरात्रमतीव प्राचीनं प्रतीयते । इदंतया त्वस्य कालनिर्णयः साधनाभावात् कर्त्तुं न सुकरः । तथापि एते तान्त्रिका अस्याविर्भावविषये प्रतिपादयन्ति । यत्पुरा महर्षिनारदस्य हृदये पाञ्चरात्रजिज्ञासा विजृम्भिता, तेन भारतवर्षस्योत्तरप्रदेशस्थितस्य नारायणमुनेः सकाशात्तन्त्रमिदं समुपलब्धम् । ततो निवर्त्य समस्ते भारते प्रचारो विहितः । तदेवं नारायणमहर्षिरेवास्य प्रथमप्रवर्त्तकः । इमे पाञ्चरात्रं वेदांशमेव मन्यन्ते । वेदस्यैकायनशाखया चास्य सम्बन्ध इति स्वीकुर्वन्ति । एकायनस्य वर्णनं छान्दोग्योपनिषदि दृश्यते ।

"ऋग्वेदं भगवोऽध्येमि.....वाकोवाक्यमेकायनमिति ।" [७।१२]

केचन यजुर्वेदस्य काण्वशाखाम् एकायनशाखां वदन्ति ।

अस्य पाञ्चरात्रस्य प्रचारकेषु दशमशताब्दीसम्भवस्य आचार्योत्पलस्य नाम शेखरायते । अनेन स्वकीयस्यन्दकारिकायां पाञ्चरात्रश्रुतेः पाञ्चरात्रोपनिषदश्च बहूनि उदाहरणानि समुद्धृतानि । तेनानुमीयते यत्पाञ्चरात्रप्रपञ्चः, पाञ्चरात्रश्रुतिः पाञ्चरात्रोपनिषत् पाञ्चरात्रसंहितासु त्रेधा विभक्तः । एकादशशताब्दीभवेन भगवता यमुनाचार्येण, स्वरचितप्रामाण्यचन्द्रिकायां पाञ्चरात्रग्रन्थानां नामान्युल्लिखितानि । तावतेदमनुमातुं शक्यते यदुपनिषत्काले तन्त्राणि विद्यमानानि आसन् । एतत्पाञ्चरात्रं भागवतधर्मः सात्वतधर्म इति नाम्ना प्रख्यातम् ।

विक्रमप्राग्द्वितीयशताब्द्यां वेसननगरशिलालेखेषु हेलियोडोरससंज्ञकस्य महानुभावस्य भागवतधर्मोपाधिधारणस्य गरुडस्तम्भस्थापनस्य वर्णनमुपलभ्यते । महाभारतेऽपि सात्वतधर्मोल्लेखः उपलभ्यते :--

'सात्वतं विधिमास्थाय, संगीतः संकर्षण यः ।
द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च ॥
[महा० भीष्मपर्व]

शतपथब्राह्मणेऽपि पाञ्चरात्रसत्रवर्णनमवलोक्यते । एवं ऐतरेयेऽपि, एतस्यां दक्षिणस्यां दिशि ये केचन सात्वता राजानो भोज्यायैव ते अभिषिच्यन्ते' इति । पाञ्चरात्राभिमतान् सिद्धान्तान् वैदिकान् एव मन्यन्ते साम्प्रदायिकाः ।

समस्तप्राणिषु एकाधिपत्यप्राप्त्यर्थं पञ्चदिवसपर्यन्तमनुष्ठानादस्य पाञ्चरात्रमिति संज्ञायां बीजम् ।

तन्त्राणां साहित्यानुशीलनेनैवं प्रतीयते यदागमप्रतिद्वन्द्वितयैव आगमानामाविर्भावः । यद्यपि तान्त्रिकाः अखिलमपि तन्त्रप्रपञ्चं वैदिकं वेदोक्तमेव प्रसाधयन्ति, तथापि विवेचका तन्न सहन्ते । ते प्रत्यवतिष्ठन्ते यत्सत्स्वपि जागृतेषु वैदिकेषु

निर्भ्रान्तेषु निर्मलेषु दिव्येषु सिद्धान्तेषु महर्षिगणव्याख्यातेषु वेदव्याख्यानेषु च विद्यमानेषु आगमप्रपञ्चोदञ्चनं न मनागपि सार्थकतामावहति । प्रत्युत भ्रान्तिततिमेवातिरां समुज्जृम्भयति । भवेन्नाम पुरा काले वेदानधिकारिकृते तेषामाविर्भावः । संदिग्धार्थानां द्व्यर्थकानां मद्यमांसमदिरादिपदानां तत्साहित्ये सन्निवेशोऽन्तरेण गर्ह्यतामन्यत्किमर्हति, भ्रमप्रसारादतिरिक्तं प्रयोजनान्तरं तु बुद्धिपथं नारोहति चक्षुष्मताम् । भवतु नाम यद्वा तद्वा, विद्वांसो विपश्चितस्तद्दर्शिन एवात्र प्रमाणम् । अस्माभिस्तु सङ्ग्रहेण तन्त्रप्रतिविम्ब एवात्र प्रत्युपस्थापितो याथातथ्येनेति । वस्तुतः सम्प्रदायोऽयमद्यत्वे न क्वापि लब्धप्रचारः । भूम्ना लुप्तप्राय एव यदि क्वचिद् भवेदपि गोप्यरूपेणैव निश्वसिति, न खलु प्रकटरूपेणेति दिक् । प्रकाशरूपेण त्वयं [1]तन्त्राख्यसम्प्रदायः कदाचिदपि प्रचरितो नाभूदिति बहूनामभिप्रायः प्रायशस्तत्सम्प्रदायातिरिक्तानां सर्वेषामेवाभियुक्तानामिति दिक् ।

—०—

१. तन्त्रविषयत्वेन ज्ञानयोग-क्रिया-चर्येति तत्त्वचतुष्टयं स्वीक्रियते । अष्टाविंशत्संख्याका आगमा उपागमाश्च भगवता शिवेन प्रणीता अवगम्यन्ते । पाञ्चरात्रसंहिताप्रपञ्चस्तु अष्टादशोत्तरसम्मित आसीत्, मुद्रितास्तु केवलं द्वादश एव । अहिर्बुध्न्यसंहिता तु प्राचीना । एतस्या रचनासमयः ख्रीस्तचतुर्थशतके निश्चीयते पाश्चात्यैः । तन्त्रसाहित्ये महानिर्वाणतन्त्रमतिप्रसिद्धम् । ज्ञानयोग-क्रियादि अनुष्ठानेन भोगसचिवमोक्षोऽपि सुतरां सिध्यति इति तेषामभ्युपगमः । उक्तञ्च :—

यत्रास्ति भोगो नहि तत्र मोक्षः यत्रास्ति मोक्षो नहि तत्र भोगः ।
श्रीसुन्दरीसेवनतत्पराणां भोगश्च मोक्षश्च नरस्य एव ॥

अस्यापाततोऽवभासमानादर्थादर्थान्तरमपि विशेषतात्पर्यविषयीभूतत्वेनोन्नीयते तैः ।

# अथ वैदिकप्रकरण-परिशिष्टम्

## सायणाचार्यः

वेदव्याख्याकारेषु प्रकाण्डकर्मकाण्डपण्डितपारीन्द्रस्य भगवतः सायणाचार्यस्य जीवनवृत्तान्तमप्रस्तुत्य वैदिकप्रकरणस्यास्योपसंहरणं नाम खल्वन्याय्यमेव स्यादतः किञ्चिदिव तदत्र प्रस्तूयतेऽधुना। सायणाचार्योऽयं प्रथमबुक्कभूपतेः विद्यागुरुं सचिवञ्चात्मानमवगमयति। अस्य चाग्रजो भ्राता माधवाचार्यः, प्रथमबुक्कभूपतेः साचिव्यधुरं वहति स्म पश्चात् त्यक्तसर्वपरिग्रहः संन्यासाश्रममालम्ब्य विद्यारण्यस्वामीत्याख्यया प्रथितोऽभवत्। शृङ्गेरीमठे च श्रीमच्छङ्करभगवन्मुनिपादपीठमधिष्ठाय च एष प्रकाण्डपण्डितः विविधविषयकान् संस्कृतवाङ्मयस्य शिरोरत्नभूतान् बहून् ग्रन्थान् जग्रन्थ किल।

सायणाचार्यस्यापि नैके ग्रन्था माधवीयेतिनाम्नैव प्रथन्ते। एतावता विदितं भवति यत्सायणाचार्यस्य समयोऽपि स एव यो बुक्कभूपतेः समयः। बुक्कभूपतेः कालश्च १३८९ क्रैस्ताब्दे निर्धारितः कालविद्भिः।

सोऽयमाचार्यः ऋग्वेदसंहितैतरेयब्राह्मणारण्यकादीनां व्याख्याता, अन्येषाञ्चानेकग्रन्थरत्नानां प्रणेता, वैदिकवाङ्मयस्य परमोद्धारकः यावज्जीवनं सुरभारतीश्रीसमृद्ध्यर्थं प्राणपणेनाऽपि यत्प्रयतितवान् तत्को नाम वैदिकदेशिको न वेत्ति। अनेन वैदिकविद्वन्मण्डलशेखरायमाणेन ऋषिकल्पेनानुगृहीता वयमद्य नूनं कृतिनः समभ्युपपन्ना गौरवस्य गर्वस्य च परां काष्ठामालम्बामहे।

नूनं भाष्यकारकलापे तत्र भवान् सायणाचार्यः सर्वमूर्द्धाभिषिक्तो विराजते। अनेन उत्कटतरोऽप्येष वेदार्थपन्था अत्यर्थं सरलीकृतः। वेदार्थभास्करोऽयं यदि नाऽऽविरभविष्यत्तर्हि वेदार्थज्ञानं सर्वथान्धे तमस्येव नितरां न्यमङ्क्ष्यत्। तदर्थञ्च मानवजातिरियं यावच्चन्द्रदिवाकरौ स्थास्यति तत्कार्तज्ञ्यपाशबद्धेति निर्विशङ्कम्। परन्तु सहैव कतिचन वैदिका अतिमात्रमेतदपि तद्विषये सखेदमाकलयन्ति समकालमेव, यदि नाम सायणाचार्योऽयम् एकमात्रं यज्ञपरमेवार्थमनभिनन्द्य आधिभौतिकाधिदैवतानप्यर्थान् वैज्ञानिकधिषणया व्यरचयिष्यत्तर्हि लोकस्य महानु-

पकारः समपत्स्यत। महीयाँश्च स वेदार्थप्रकाशः कयापि दिव्याभया व्यद्योतिष्यत। वस्तुतः सर्वत्रैव प्रायशः एष महारथः विविधज्ञानविज्ञानाद्यनेकतत्त्वसम्भृतानपि मन्त्रान् हठादाकृष्य यज्ञपरेष्वेवार्थाविष्टम्भेषु निगडितवान् इत्याकलयतः कस्य सहृदयस्य न दूयते किल चेतः। सोऽस्य यज्ञपरार्थपारवश्यव्यामोहोऽपि प्रणिभालनीयो दोषज्ञैः। तद्यथाः—

मर्त्तासो मनुष्या (वयं यजमानाः)—[१।१४४।५]।
मर्त्तासो मनुष्या (ऋत्विजः)—[३।९।१]
नरं पुरुषं (यजमानम्)—[१।३१।१५]
जन्तुभिः (ऋत्विग्लक्षणैर्मनुष्यैः)—[१।६९।३]
जनाः प्रज्ञासम्पन्ना (यजमानाः)—[१।४५।६]
जन्तुभिः (ऋत्विग्भिः)—[३।२।५]
विप्रेभिः (मेधाविभिः ऋत्विग्भिः)—[१।२।९]
दाशुषे (यजमानाय)—[१।१४०।२]
क्षितयो (मनुष्या ऋत्विजः)—[६।१।५]
कविभिः (मेधाविभिः ऋत्विग्भिः) सह—[१।७६।५]
कवयः (क्रान्तदर्शिनो अध्वर्यवः)—[३।८।४]

मातरिश्वा फलस्य (मातरि यागे श्वसति चेष्टते इति मातरिश्वा—यजमानः) इत्यादि बहुत्र प्रक्रान्तम्। अहो नु खलु कीदृशः पाण्डित्यप्रौढिमा पण्डितमण्डलाखण्डलस्य सायणस्यास्य? कीदृशी च पुनः यज्ञपरार्थप्रवणता कर्मकाण्डप्रकाण्डपण्डितस्य, यः को वापि शब्दः बलाद् यजमानपरत्वेनैवानेनायोज्य व्याख्यातः। नासौ प्रायशः प्रकरणमनुसन्दधाति न देवतामामन्त्रयते, नार्थान्तरप्रसरमपि मनागवतारयति बुद्धिपद्धतिम्। न कदाचित् कथञ्चिदपि च विस्मरति यज्ञपुरुषम्। यथा मृगतृष्णिकयाकृष्टो मृगो जलमेवानुसन्दधाति यत्र-तत्र-सर्वत्र, तथैवासावपि खलु न क्षणमपि विजहाति यज्ञानुषङ्गप्रसङ्गम्। यथा च 'पित्तेन दूने रसने सिताऽपि तिक्तायते हंसकुलावतंस!' एवमेव यज्ञयागादिरागरञ्जितनयनयुगलोऽसौ सर्वत्र मन्त्रेषु यज्ञमेव खल्वाकलयति बहुशः। 'यज्ञात्परं किमपि तत्त्वमहं न जाने' इति मूलमन्त्र इवानेन स्वीकृतोऽवभाति। अहो नु खल्वस्य महामेधाविनः प्रदीप्तप्रज्ञावतोऽपि सायणस्य कीदृशोऽयं मतिविभ्रमः? नूनं तच्छोचनीयमेवाभवत्। मन्यामहे अत्र हि किल तदीयकालेऽभितः प्रसृतप्रचण्डकर्मकाण्डस्याखण्डसाम्राज्यमेव भूम्नाऽपराध्यति। कारणान्तरन्तु निपुणं मृग्यमाणमपि नाधिरोहति प्रज्ञानपदवीमिति दिक्। यद्यपि नाम क्वचित् क्वचित् तेन वैज्ञानिका अप्यर्था निरतिशय-

पाटवेन कृताः किन्त्वतिवैरल्येन । भवतु नामैतत्, तथाऽपि एतत्तु निश्चितं यत् सायणाचार्योऽयं वेदविद्यासम्भारभासुरः सुयशःशरीरेणाद्यापि जीवति जीविष्यति च कल्पान्तपर्यन्तमित्यत्र न कश्चन संशय इति ।

## भास्कराचार्यः

भास्कराचार्योऽयं क्रैस्ते चतुर्दशोत्तरएकादशशततमेऽब्दे लब्धजन्मपरिग्रहः, चिराय च उज्जैननगर्यां वेधशालायां अध्यक्षपदमलमकार्षीत् । एष महाभागो ज्यौतिषशास्त्रानुबन्धिनो लोकविश्रुतस्य 'सिद्धान्तशिरोमणि' इति ग्रन्थस्य प्रणेता । ग्रन्थोऽयं अङ्कगणित-बीजगणित-नक्षत्रविज्ञान–गोलाख्यैश्चतुर्भिरध्यायैः प्रणिबद्धः । अनेन ज्यौतिषाचार्येण ऐदम्प्राथम्येन पृथिव्या गुरुत्वाकर्षणसिद्धान्त[1] आविष्कृत इति जनश्रुतिः । तथा चोक्तग्रन्थस्य गोलाध्याये :—

'आकृष्टशक्तिश्च मही तया यत्
स्वस्थं गुरुं स्वाभिमुखं स्वशक्त्या ।
आकृष्यते यत्पततीव भाति
समे समन्तात्क्व पतत्वियं खे ॥
(गो० भुव० श्लो० ६॥)

## वाचस्पतिमिश्रः

विद्याद्योतितान्तःकरणः सर्वतन्त्रस्वतन्त्रः षड्दर्शनव्याख्याकारः ब्रह्मसूत्र-शारीरिकभाष्यस्य भामत्याख्यायाः प्रख्यातव्याख्यायाः प्रणेता मिश्रोपाह्वोऽयं विद्यावाचस्पतिः श्रीवाचस्पतिमहाभागः किलैकादशशताब्द्याः पूर्वभागे मिथिला-मण्डलं स्वजनुषा मण्डयामासेति कालविदां निर्णयः । खण्डनोद्धारकृत् वाचस्पतिस्तु किलास्माद् भिन्नः । वाचस्पतिरयम् उद्योतकाराद् अधस्तनः उदयनाच्चोर्ध्वतनः । यतोऽनेन उद्योतकरकृतन्यायभाष्यवार्त्तिकमुद्दिश्य न्याय-वार्त्तिकतात्पर्याख्यं व्याख्यानमकारि । उदयनेन तु तदुपरिन्यायतात्पर्यपरिशुद्धि-रुट्टङ्किता । प्रकाण्डपण्डितोऽयं भामत्यन्ते स्वरचितान् ग्रन्थान् निर्दिशति; येना-स्यानेकग्रन्थप्रणेतृत्वं व्यापकं तलावगाहि पाण्डित्यञ्च प्रकटितं भवति ।

"यन्न्यायकणिकातत्त्वसमीक्षातत्त्वबिन्दुभिः ।
यन्न्यायसांख्ययोगानां वेदान्तानां निबन्धनैः ॥
समचैषं महत्पुण्यं तत्फलं पुष्कलं मया ।
समर्पितमथैतेन प्रीयतां परमेश्वरः ॥

---

१. यद्यपि वेदे स एष आकर्षणसिद्धान्तश्चर्चितचरः ।

तदेवंविधाः संस्कृतवाङ्मयस्यालङ्कारभूता असंख्याता अभिरूपशिरोमणयः भारतभूतले प्रागभूवन् येषां नाममात्रतोऽपि संस्मरणमिच्छन्तोऽपि ग्रन्थलघीयस्त्ववशात् विधातुं नाऽलङ्कर्मीणो वयम्, येषाञ्च प्रातिभप्रभाप्रदीप्यमानैरनेकग्रन्थरत्नैर्नूनं गीर्वाणवाणीवाङ्मयमिदं अवितथतयाऽद्यरत्नाकरपदवीमवगाहते। के नाम ते विदग्धा ये संस्कृतभाषायाः सौन्दर्यं, शब्दसम्पत्तिं, मधुरिमाणं, मृदुलतां अध्यात्मविद्यारत्नरश्मिराशिं, विश्वकल्याणकरीञ्च विचारधारामवलोक्य मुग्धा न भवेयुः। मन्यामहे न केवलमन्येषां चार्वाक-जैन-बौद्धानामपि वाङ्मयं संस्कृतभाषाया एव अधमर्णमस्ति, अपितु संसारस्य समस्ता अपि भाषाः संस्कृतमेवाधारीकृत्य प्रवृत्ताः। लेटिन-ग्रीक-जर्मन-आङ्ग्ल-रूसी-जापानी-मरहठी-गुजराती-तिलगु-तैमिल-आदिषु सर्वासु विश्वभाषासु संस्कृतभाषायाः एव शब्दा उपलभ्यन्ते बाहुल्येन प्रयुज्यमानाः। किमेते न ज्ञापयन्ति यत् पुरा संस्कृतभाषाया एव सर्वत्र सार्वभौमत्वं राराजते स्म। तत्सार्वभौमत्वमस्याः पुनरपि प्रतिष्ठापितं यथा भवेत्, तथा सर्वदेशीयैः जनैः प्रयतितव्यम्। तथानुष्ठानेन, भारतीयविद्याया वेदवेदान्तोपनिषन्न्यायमीमांसादिदर्शनकाव्यनाटकधर्मशास्त्रनीतिशास्त्रप्रभृतिविविधप्रस्थानानि देशदेशान्तरेषु यदा लब्धप्रचाराणि सम्पत्स्यन्ते तदानीमेव जगदिदं स्वर्गमपि शान्तिसम्पदा समुपहसिष्यतीति खल्वस्मदीयो ध्रुवो विश्वासः। यतो भौतिकविद्यया बाह्यं जगत् आन्तरं तु खल्वध्यात्मविद्ययैव प्रकाशितं भवति समुन्नतञ्च। अतः यावदान्तरन्न प्रकाशितं भवेत्तावत् शान्तिः कुतः? इत्यलं पल्लवितेन।

अन्ते च वयं कामयामहे :—

यया लोके वेदा परिकलितभेदाः प्रकटिताः,
स्मृतीनां धात्री या प्रसवनकरी योपनिषदाम्।
जनेभ्यः सर्वेभ्यो ह्युपदिशति याऽध्यात्मिकपथं,
स्फुरद्दिव्यं ज्योतिर्जगति जयतात् सा सुरगिरा॥ इति

इति सर्वतन्त्रस्वतन्त्रैः पदवाक्यप्रमाणपारावारीणैः श्रीमदाचार्यपण्डितद्विजेन्द्रनाथशास्त्रिसिद्धान्तशिरोमणिभिः विरचिते

संस्कृतसाहित्यविमर्शाख्ये ग्रन्थे

षष्ठः परिच्छेदः।

पूर्वार्द्धभागः समाप्तः

शुभं भूयात्।

# प्रचेतना

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।
नास्ति येषां यशःकाये जरामरणजं भयम् ॥

*　　　*　　　*

कुसुमाञ्जलिरपर इव प्रकीर्यते काव्यबन्धोऽत्र ।
मधुलिह इव मधुबिन्दून् विरलानपि भजत गुणलेशान् ॥

*　　　*　　　*

धन्याः शुचीनि सुरभीणि गुणोम्भितानि
　　वाग्वीरुधः स्ववदनोपवनोद्गतायाः ।
उच्चित्य सूक्तिकुसुमानि सतां विविक्त-
　　वर्णानि कर्णपुलिनेष्ववतंसयन्तु ॥

*　　　*　　　*

कविवरमुखनिर्गलितां काव्यपीयूषमधुधाराम् ।
गीर्वाणवाक्परिणतामास्वाद्यानन्दमनुभवत ॥



# अथ सप्तमः परिच्छेदः

# लौकिकसाहित्यप्रकरणम्

१––काव्यलक्षणम् २––काव्यभेदः ३––काव्यप्रयोजनम् ४––पद्यापेक्षया गद्यकाव्यस्य वैरल्ये हेतुः ५––काव्यावतरणम् ६––आदिमहाकविः वाल्मीकिः ७––महाकविः महर्षिः व्यासः।

अथैष समारभ्यते लौकिकसाहित्यप्रकरणसंवलित उत्तरार्धभागो नाम। तत्र तावत् :––

## काव्यलक्षणम्

कवेः कर्म काव्यम्। कविशब्दात् कर्मणि ष्यञ्‌ि कृते [1]काव्यशब्दो निष्पद्यते। काव्यलक्षणमुद्दिश्य यद्यपि कवयो बहुशो भिद्यन्ते, तद्यथा––'गुणालङ्कारयुक्तौ शब्दार्थौ काव्य'मिति वामनः। 'निर्दोषगुणालङ्काररसवद् वाक्यं' काव्यमिति भोजः। 'गुणालङ्काररीतिरसोपेतः सन्दर्भः काव्य'मिति वाग्भटः। 'रमणीयार्थप्रतिपादकः शब्दः काव्य'मिति पण्डितराजः। 'ध्वन्यात्मकं वाक्यं काव्य'मिति महिमभट्टः। 'वाक्यं रसात्मकं काव्य'मिति विश्वनाथः। इत्येवंविधानि विविधानि लक्षणानि दृश्यन्ते। तथापि समेषामेषां विभिन्नलक्षणत्वेन प्रतिभासमानानामपि तात्पर्यविषयीभूतोऽर्थः समान एव। तच्च काव्यं हि तद् 'यददोषौ सालङ्कारौ शब्दार्थौ' नाम। तदत्रैव सर्वाणि लक्षणानि काव्यस्य पर्यवसितानि भवन्ति। एतच्च काव्यं भूम्ना भवति छन्दोबद्धम्।

## काव्यभेदः

तच्चेदं काव्यं श्रव्य-दृश्यभेदाद् द्विविधम्। द्विविधेऽप्यस्मिन् काव्ये दोषगुणरीत्यलङ्कृतिविवेचना प्रवर्त्तते, दृश्ये तु पुनः दर्शन-प्रयोजन-रूपकोपरूपक-विवेचनाऽपि। काव्यस्य गुणरीत्यलङ्कृतय तृणारणिमणिन्यायेनोत्कर्षहेतवः। दोषास्तु खल्वपकर्षहेतवः। तत्रापि निरतिशयोत्कर्षहेतवस्त्वलङ्कारा एव। तदुक्तं वामनेन :––

---

१. कविशब्दाद् 'गुणवचनब्राह्मणादिभ्यः कर्मणि' चेति सूत्रेण ब्राह्मणादित्वात्कर्मण्यर्थे ष्यञ्‌ि कृते काव्यशब्दनिष्पत्तिः।

'एवञ्च काव्यशोभायाः कर्त्तारो धर्मा गुणाः। तदतिशयहेतवस्त्व-लङ्कारा।' इति।

सैषा काव्यगुणदोषविवेचना, दण्डि-रुद्रट-वामन-मम्मटादिभिरालङ्कारिकैः ग्रथितेषु तेषु-तेषु सन्दर्भेषु सम्यक् पल्लविता विलसति, तद्विशेषावबोधकुतूहलिभिस्तु सा तत्र-तत्रैवानुसन्धेया।

तच्च श्रव्यं काव्यं, महाकाव्य-खण्डकाव्य-गीतिकाव्यभेदात्त्रिविधम्। दृश्यं काव्यन्तु पुनः 'नाटक-प्रकरण-भाण-प्रहसन-डिम-समवकार-ईहामृग-उत्सृष्टिकाङ्क-व्यायोग-वीथी'-भेदभिन्नमभिनेयरूपम्।

एतच्च किल काव्यं पुनर्गद्यपद्यमिश्रभेदात्त्रिविधम्। गद्यं हि नाम अपादः पदसन्तानच्छन्दोरहितो वाक्यसन्दर्भः। पद्यञ्च छन्दोबन्धः। तच्चैकेन छन्दसा मुक्तकम्। द्वाभ्यां युग्मं संदानितकञ्च। त्रिभिर्विशेषकम्। चतुर्भिः कलापकम्। द्वादशान्तैः कुलकमुच्यते। मिश्रं काव्यन्तु गद्यपद्यमयी साङ्का सोच्छ्वासा च चम्पूरभिधीयते।

## काव्यप्रयोजनम्

काव्यस्य प्रयोजनजातं निर्दिशद्भिः काव्यकोविदैः प्रतिपादितं यत्काव्यं हि नाम कवेः श्रोतुश्च प्रमोदाय, अनर्थपरिहाराय, त्रिवर्गफललाभाय, कान्तातुल्यतयोपदेशाय कीर्त्तये च भवति। उक्तञ्च :—

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे॥ ——मम्मटः
चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि।
काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते॥ ——विश्वनाथः

उक्तञ्च प्रसिद्धालङ्कारिकेन भामहेनापि :—

धमार्थकाममोक्षेषु वैचक्षण्यं कलासु च।
करोति कीर्त्ति प्रीतिञ्च साधुकाव्यनिषेवणम्॥

तदेवञ्जातीयकफलवतो हि काव्यस्य निष्कृष्टोऽर्थः 'रामादिवद् वर्त्तितव्यं न रावणादिवदि'त्यादिकृत्याऽकृत्यप्रवृत्तिनिवृत्त्युपादेयपरत्व एव पर्यवसितो वेदितव्यः।

## पद्यापेक्षया गद्यकाव्यवैरल्ये हेतुः

संस्कृतवाङ्मयस्य पर्यालोचनेनावगम्यते यत् तत्र वरीवर्त्ति गद्यकाव्यापेक्षया पद्यमयकाव्यानांमतितरां बाहुल्यम्। गद्यमयाः प्रबन्धास्तु खल्वङ्गुलिगणनार्हा दृश्यन्ते। तदत्र गद्यप्रबन्धानां वैरल्ये को वा हेतुर्भवेदिति प्रश्नः सुतरां

सुलभोदयः। तमिमं प्रश्नं समादधानाः केचिदाचक्षते यत् पद्यापेक्षया गद्यलेखनं किञ्चित्क्लिष्टतरम्। यथा पद्यरचनायां एकद्वित्रिसरसपदप्रयोगो समस्तपद्यस्य सौन्दर्यमादधाति न तथा गद्यबन्धे। कवयश्च गद्यरचनायां तथा सौकर्यं नानुभवन्ति यथा पद्यगुम्फने। इति हेतोः कवीनां पद्यबन्धन एव प्रवृत्तिबाहुल्यं न गद्य-सन्दर्भे। अन्ये तु समुत्प्रेक्षन्ते——यत् पद्यबन्धस्य खलु सङ्गीतमयत्वान्मनसो निरतिशयप्रमोद-जनकत्वाच्च कवयोऽभिनन्दन्ति पद्यरचनामेव बहुशः न जातु गद्यरचनाम्। सत्यमेतत्। परमत्र तत्त्वतः पर्यालोचने तु अवगतं भवति यत् पद्यं हि नाम मनसः कोऽपि समुत्तुङ्गानन्दतरङ्गितोल्लासविलासोच्छ्वसितः सङ्गीतमयो नादविशेषः। तादृशनादमलङ्कुर्वाणा छन्दोमयी भारती श्रवणमधुरसान्द्रमन्द्रध्वनिमाकलयन्ती काव्यरूपेण परिणता यथा मानसमानन्दममन्दमातनुते न तथा गद्यमयः प्रबन्धः इति निश्चप्रचम्। इत्येव च गद्यवाङ्मयवैरल्ये प्रमुखो हेतुः प्रतीयते। हेत्वन्तरन्तु सुनिपुणं विमृश्यमानमपि बुद्धिसरणिं नावतरति। युक्तमेवोक्तं केनाप्यभियुक्तेन :——

'गद्यं कवीनां निकषं वदन्तीति.।'

अतः एव अल्पीयांस एव सुबन्धु-दण्डि-बाणभट्टप्रभृतयः महाकवयः गद्यप्रब-न्धान्परिगुम्फ्य यशःशरीरेण जीवन्तोऽद्यापि संस्कृतसाहित्यप्राङ्गणेऽभितो विलसन्ति।

## काव्यावतरणम्

यद्यपि संस्कृतसाहित्यादिस्रोतसि भगवति वेद एव सर्वतः प्राक् कवि-काव्य-शब्दयोश्च समुल्लेखः समुपलभ्यते, 'कविर्मनीषी परिभूः स्वयम्भूः' इति। यद्यपि कविशब्दोऽत्र आदिकविं परमेश्वरमेव परामृशति तथापि कविपदेनात्र तदाम्नानं कस्य न विस्मयावहम्। परमेश्वरीयज्ञानलक्षणं वेदञ्चापि काव्यत्वेनैवानुगृह्णाति श्रुतिः——'पश्य देवस्य काव्यं न ममार न जीर्यति' (वेदः)। 'देवस्य काव्य'मित्यत्र-काव्यपदं वेदमेवाभिधत्ते। इत्यनेनैतदभ्युपपन्नं भवति यत्कविभिः काव्यकलाप्रेरणा किल वेदेभ्य एव समासादिता। वेदेभ्य एव च छन्दसां परिज्ञानं, अलङ्काराणाञ्च परिचयः समाकलितः। वेदे यत्र गायत्री-त्रिष्टुब्-जगतीप्रभृतिछन्दसां प्रयोगः, तत्र लौकिकसाहित्ये तद्भिन्नतत्सदृशानां उपजाति-वंशस्थ-अनुष्टुबादिच्छन्दसां प्रसरः समुल्लसति। वस्तुतः स एष वैदिकछन्दसां प्रपञ्च एव लौकिकच्छन्दसामपि प्रसवभूरित्यशङ्कम्। लौकिकच्छन्दसां प्रणेतृषु तत्र भवान् पिङ्गलाचार्यः प्रमुखः प्राचीनतमश्च। अनेन लौकिकवैदिकोभयच्छन्दोलक्षणनिबद्धः पिङ्गलसूत्राख्यः सुप्रसिद्धः छन्दोग्रन्थो निरमायि। ततः लौकिकच्छन्दसां प्रयोक्तार आदिकवि-भगवद्वाल्मीकिमुनिपादाः इति परम्परानुरोधेन सर्वैः स्वीक्रियते। तदित्थं वाल्मीकित एवेदमादिकाव्यधाराया अवतरणं सम्भाव्यते, इति प्रस्फुटम्।

भगवद्वाल्मीकिविषये दन्तकथेयं प्रचरति यदसौ पूर्वे वयसि ब्राह्मणोऽपि सन् लुण्ठाको जातः। पथिकानुपलुण्ठ्य द्रव्योपार्जनं करोति स्म। परन्तु तदनु कस्यचित्सिद्धतापसस्योपदेशेन तां साहसिकीं वृत्तिं परित्यज्य स घोरतरं तपोऽतप्यत। व्रजति काले, चिरं च एकासनासीनस्य तस्योपरि वल्मीकसञ्चयो जातः। इष्ट-सिद्ध्यनन्तरं वल्मीकान्निर्गतत्वादसौ वाल्मीकिरिति संज्ञां लेभे। ततः तपःपूत-मानसोऽसौ एकदा युग्मचारिणोः क्रौञ्चयोरेकं निषादेन वध्यमानं ददर्श। करुण-रसक्लिन्नहृदयस्य तस्यातिमात्रं शोकप्लुतान्मुखात्सहसा विससर्ज सा काऽपि दिव्य-करुणामयी वाग्धारा—'मा निषादेति'। यस्य शोकस्रुपवर्णयता कविकुलगुरुणा कालिदासेनोपश्लोकितम्—

'निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः।' इति।

स एष काव्यावतरणवृत्तान्तः संक्षेपतः।

---o---



कवीन्दुं नौमि वाल्मीकिं यस्य रामायणीं कथाम् ।
चन्द्रिकामिव चिन्वन्ति चकोरा इव साधवः ॥

# आदिकविः वाल्मीकिः

१--आदिमहाकविः। २--लौकिकसाहित्यस्यारम्भः। ३--रामायणस्य इयत्ता। ४--वाल्मीकेः प्रकृतिवर्णनम्। ५--हेमन्तवर्णनम्। ६--रावणप्रार्थनाभङ्गः। ७--वाल्मीकेः काव्यसुषमा। ८--रामायणीयरामराज्यम्। ९--विहगावलोकनम्। १०--वाल्मीकेः समयः।

संस्कृतसाहित्यस्यारुणोदये एव आदिमहाकविः महर्षिर्वाल्मीकिः कमनीयकाव्यकलाऽलङ्कृतं रामायणाख्यमतिमहनीयं महाकाव्यं जुगुम्फ। भारतीयसाहित्येतिहासे नूनं तद्दिवसं स्वर्णाक्षरैरङ्कितं भविष्यति, यदा पुण्यसलिलाया भगवत्यास्तमसायाः पुनीते पुलिने युग्मचारिणोः क्रौञ्चयोरेकं वध्यमानं दृष्ट्वा महाकवेरस्य कण्ठतः सा काऽपि हृदयाह्लादिनी सुवर्णसुवृत्तरसोज्ज्वला करुणार्द्रा छन्दोमयी वाग्धारा परिपुस्फोट किल निखिलं व्योममण्डलं प्रतिध्वनयन्ती, अधोऽङ्कितं पद्यं द्वारीकृत्य--

मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥

रामायणात्प्राक् लौकिकच्छन्दसामवतारः नैवाभवत् किल लब्धावकाशः। आम्नायादन्यत्र छन्दसामवतार एष एव सर्वप्रथम इति तत्रभवान् भवभूतिः उत्तररामचरितस्य द्वितीयाङ्के वनदेवतामुखेन सूचयति। तद्यथा :--

अथ भगवान् प्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणस्तादृशं विवर्त्तमितिहासं रामायणं ऋषिः प्रणिनाय। एवं स्थिते सति, महर्षिवाल्मीकेरादिकवित्वे को नाम संशयीत। नूनमेष वाल्मीकिरेव आदिमहाकविरिति सर्वसम्मतः पक्षः। रामायणञ्च आदिमहाकाव्यम्। तत्रभवान् भवभूतिरपि अमुमेवार्थं भूयोऽपि मुक्तकण्ठेन वीरचरिते प्रसाधयति। तद्यथा--आत्रेयीमुखेन गाथामारचयति :--

'अथ स ब्रह्मर्षिरेकदा माध्यन्दिनसवनाय नदीं तमसामनुप्रपन्नः। तत्र युग्मचारिणोः क्रौञ्चयोरेकं व्याधेन वध्यमानं ददर्श। आकस्मिकप्रत्यवभासां देवभाषामानुष्टुभेन छन्दसा परिणतामभ्युदैरयत् 'मा निषादे'त्यादिनेति।' स एष आदिकवेः महाकाव्यावतरणप्रत्यवभासः।

तदेतावतेदं सूपपन्नम् यत् संस्कृतसाहित्यप्रपञ्चे कवीनां प्रथमः कविः तत्रभवान् वाल्मीकिरेव। स एव च रामायणं नाम विश्वविख्यातं महाकाव्यं सर्वकाव्यानामादिभूतं प्रणिनाय। तथा च बुद्धचरिते महाकविना अश्वघोषेणोद्घोषितम्—

'वाल्मीकिनादश्च ससर्ज पद्यं जग्रन्थ यन्न च्यवनो महर्षिः।'

अमुमेवार्थं कविकुलशिरोमणिः कालिदासोऽपि समर्थयन् 'प्राचेतसोपज्ञं रामायण'मिति स्वीचकार। करुणरसविभूतिर्भवभूतिरपि—एष एव महर्षि लौकिकछन्दसामादिमः प्रणेतेति मुक्तकण्ठतः प्रत्यपादयत्, "अथ स ब्रह्मर्षिरेकदा माध्यन्दिनसवनाय नदीं तमसामनुप्रपन्नः। तत्र युग्मचारिणोः क्रौञ्चयोरेकं वध्यमानं ददर्श। आकस्मिकप्रत्यवभासां देववाचमानुष्टुभेन च्छन्दसा परिणतामभ्युदैरयत्—'मा निषाद प्रतिष्ठां त्व'मिति। यामाकर्ण्य वनदेवता अपि परममाश्चर्यमापेदिरे—'अहो एष कोऽपि आम्नायादन्यत्र नूतनच्छन्दसामवतारः। तेन खलु समयेन तं भगवन्तमाविर्भूतं शब्दब्रह्मप्रकाशकं ऋषिमुपगम्य भगवान् भूतनाथः पद्मयोनिरवोचत् 'ऋषे! प्रबुद्धोऽसि वागात्मनि ब्रह्मणि। तद् ब्रूहि रामचरितम्। अव्याहतज्योतिरार्षं ते प्रातिभं चक्षुः। आद्यः कविरसि इत्युक्त्वा तत्रैवान्तर्हितः।" इति।

महाकविः क्षेमेन्द्रोऽप्यनुजगौ रामायणमञ्जर्याम् :—

"स वः पुनातु वाल्मीकेः सूक्तामृतमहोदधिः।
ओङ्कार इव वर्णानां कवीनां प्रथमो मुनिः॥"

महाराजभोजराजोऽपि—

"वाल्मीकिगीतरघुपुङ्गवकीर्त्तिलेशै-
स्तृप्तिं करोमि कथमप्यधुना बुधानाम्॥"

इत्युक्त्या द्रढयति उक्तमेवार्थम्। एवं भगवतो वाल्मीकेरादिकवित्वं सुतरामुपपन्नं सर्वसम्मतञ्च। तथा च रामायणेऽपि :—

"सोऽभिषेकं ततः कृत्वा तीर्थे तस्मिन् यथाविधि।
तमेव चिन्तयन्नर्थमुपावर्त्तत वै मुनिः॥
आजगाम ततो ब्रह्मा लोककर्त्ता स्वयं प्रभुः।
चतुर्मुखो महातेजा द्रष्टुं तं मुनिपुंगवम्॥
वाल्मीकिरथ तं दृष्ट्वा सहसोत्थाय वाग्यतः।
प्राञ्जलिः प्रयतो भूत्वा तस्थौ परमविस्मितः॥
पूजयामास तं देवं पाद्यार्घ्यासनवन्दनैः।
प्रणम्य विधिवच्चैनं पृष्ट्वा चैव निरामयम्॥

अथोपविश्य भगवानासने परमार्चिते।
वाल्मीकये च ऋषये संदिदेशासनं ततः ॥
तमुवाच ततो ब्रह्मा प्रहसन्मुनिपुङ्गवम्।
श्लोक एवास्त्वयं बद्धो नात्र कार्या विचारणा ॥
मच्छन्दादेव ते ब्रह्मन् प्रवृत्तेयं सरस्वती।
रामस्य चरितं कृत्स्नं कुरु त्वमृषिसत्तम ॥
धर्मात्मनो भगवतो लोके रामस्य धीमतः।
तच्चाप्यविदितं सर्वं विदितं ते भविष्यति ॥
न ते वागनृता काव्ये काचिदत्र भविष्यति।
कुरु रामकथां पुण्यां श्लोकबद्धां मनोरमाम् ॥
यावत्स्थास्यन्ति गिरयः सरितश्च महीतले।
तावद्रामायणकथा लोकेषु प्रचरिष्यति ॥
* * *

इत्युक्त्वा भगवान् ब्रह्मा तत्रैवान्तरधीयत ॥" इति
[वाल्मीकिरामायणे]

इत्यनेन वाल्मीकेः प्रथमकवित्वोपपत्तिपुरस्सरं भारतीयशिष्टाचारोऽप्युपदर्शितो वेदितव्यः दिङ्निर्देशमात्रम्।

## लौकिकसाहित्यस्यारम्भः

एवं लौकिकसाहित्यस्यारम्भः महामहिमशालिनो भगवतो महर्षिवाल्मीकित एव। समस्ता अपि सुरभारतीभक्ता भारतीयाः सुगृहीतनामधेयममुमादिकविं वाल्मीकिं प्रति अतीव बद्धादराः। सर्वेऽपि कवयस्तं कविकुलादिगुरुत्वेन समाद्रियन्ते। महाकविः त्रिविक्रमभट्टः महाकवये तस्मै नमस्कारं वितन्वानः प्राह :—

"सदूषणाऽपि निर्दोषा सखराऽपि सुकोमला।
नमस्तस्मै कृता येन रम्या रामायणी कथा ॥"

शार्ङ्गधरश्च संग्रहे :—

"कवीन्दुं नौमि वाल्मीकिं, यस्य रामायणीं कथाम्।
चन्द्रिकामिव चिन्वन्ति चकोरा इव साधवः ॥" इति

## रामायणस्य इयत्ता

महर्षिवाल्मीकिप्रणीतं रामायणाभिधं महाकाव्यमिदम्, अनुष्टुब्बहुलै-

विविधैश्छन्दोभिः प्रणिबद्धं चतुर्विंशतिसहस्रमितैः श्लोकैरुपगुम्फितं पञ्चशतसर्गात्मकम्। यत्र चेदमुपश्लोकितं भवति :--

"चतुर्विंशतिसहस्राणि श्लोकानामुक्तवान् ऋषिः।
तथा सर्गशतं पञ्च षट् काण्डानि चोत्तमम् ॥

[बालकाण्ड सर्ग ४, श्लो० २]

अनेन क्रान्तदर्शिना कविना काव्यमिदं प्रक्षेपादिभिः परिरक्षणार्थं प्रतिसहस्रमाद्यं पद्यं क्रमेण गायत्रीमन्त्रगताक्षरैरारब्धम्। चतुर्विंशत्यक्षरा हि गायत्री तावता चतुर्विंशतिसहस्रमिता सङ्ख्या श्लोकानां सुतरां निष्पन्ना भवति। तथा च :--

तत्-- तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम्।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ॥ १ ॥

स-- स हत्वा राक्षसान् सर्वान् यज्ञघ्नान् रघुनन्दनः।
ऋषिभिः पूजितस्तत्र यथेन्द्रो विजये पुरा ॥ २ ॥

वि-- विश्वामित्रः स धर्मात्मा, श्रुत्वा जनकभाषितम्।
वत्स! राम! धनुः पश्य इति राघवमब्रवीत् ॥ ३ ॥

तुः-- तुष्टां वाचं ... ... ... ... ॥ ४ ॥
व-- वनवासं हि ... ... ... ... ॥ ५ ॥
रे-- राजा सत्यञ्च ... ... ... ... ॥ ६ ॥
णि-- निरीक्ष्य स ... ... ... ... ॥ ७ ॥
यं-- यदि बुद्धिः ... ... ... ... ॥ ८ ॥
भर्-- भरतस्यार्यस्य ... ... ... ... ॥ ९ ॥
गो-- गच्छ शीघ्रं ... ... ... ... ॥ १० ॥
दे-- देशकालौ ... ... ... ... ॥ ११ ॥
व-- वन्यास्ते च ... ... ... ... ॥ १२ ॥
स्य-- स निर्जित्य ... ... ... ... ॥ १३ ॥
धी-- धन्या ... ... ... ... ॥ १४ ॥
म-- मङ्गलाभिमुखी ... ... ... ... ॥ १५ ॥
हि-- हितं महर्थं ... ... ... ... ॥ १६ ॥
धि-- धर्मात्मा .... ... ... ... ॥ १७ ॥
यो-- यस्य विक्रम ... ... ... ... ॥ १८ ॥
यो-- योगक्षेमः ... ... ... ... ॥ १९ ॥
नः-- न ते ददृशिरे ... ... ... ... ॥ २० ॥

प्र— प्रणम्य ... ... ... ... ॥ २१ ॥
चो— चालनात्पर्वतेन्द्रस्य ... ... ... ॥ २२ ॥
द— दाराः पुत्राः ... ... ... ... ॥ २३ ॥
यात्— यामेव रात्रिं ... .... ... ... ॥ २४ ॥

एतावता रामायणे प्रक्षेपच्युत्युत्पादाद्यवसरो न जातु सुलभप्रसवः इति।

## वाल्मीकेः प्रकृतिवर्णनम्

वाल्मीकेः प्रकृति-वर्णनमतीव मर्मस्पृक्। जलधरसमयं वर्णयन्नसौ कीदृशीं काव्यकलाचातुरीं व्यक्तीकरोति प्रयुङ्क्ते च कियल्ललितानि पदानि। भावमाधुरीं ध्वनयति—"वत्स लक्ष्मण ! सम्प्राप्त इदानीं वर्षासमयः। निचितं नभो नवनीरदैः। प्रशान्तो रजःप्रसरः। वायुः सहिमो वाति। अयं पर्जन्यो वर्षति। मन्ये द्यौरियं दिनकरस्य किरणैः समुद्राणां रसं पीत्वा कार्त्तिकादीन् नवमासान् धृतं गर्भमिव जलं प्रसूते। निखिलानां जीवानां जीवातुभूतोऽयं रसः साक्षाद्रसायनमिति मे भाति। शोकसन्तप्ता सीतेव धर्मपरिक्लिष्टेयं मही नववारिणा परिप्लुतत्वाद् वाष्पं विमुञ्चति। अस्मिन् शैलेऽमी अर्जुनवृक्षाः फुल्ला दृश्यन्ते। केतकैरभिवासितोऽयं गिरिः। प्रशान्तोऽत्र दावाग्निः। ... ... ... एवं शान्तरिपोः सुग्रीवस्यैवायमनुकुरुत इति कलये। येऽत्र इमे पर्वतास्तिष्ठन्ति ते प्रक्रान्ताध्ययना वटव इवाऽऽभान्ति। मेघरूपाणि हि कृष्णाजिनानि धारयन्तीमे। गुहा एव मारुतापूरिततया शब्दवन्ति मुखानि। हैमीभिः कशाभिरिव विद्युद्भिरभिताडितमम्बरम्, तथा चास्य स्तनितरूपो निर्घोषः श्रूयते। इयमग्रतः स्फुरन्ती नीलमेघाश्रिता विद्युल्लता रावणस्याङ्के स्फुरन्ती वैदेहीव मे प्रतिभाति।"

तथा च :—वहन्ति वर्षन्ति नदन्ति भान्ति,
ध्यायन्ति नृत्यन्ति समाश्वसन्ति॥
नद्यो घना मत्तगजा वनान्ताः,
प्रियाविहीनाः शिखिनः प्लवङ्गाः॥ [रामायणे]

रामायणं भारतीयाचारव्यवहारस्य, परम्परायाः, गृह-समाजव्यवस्थायाश्च यथार्थं स्वरूपं चित्रयति। राज्ञां सत्यप्रतिज्ञत्वं, दण्डेन च धर्मरक्षणम्, आश्रितजनसंरक्षणं, पत्न्याः सतीत्वं, पातिव्रत्यञ्च, पत्युः प्रेमादिकञ्च सम्यक्त्वेन अतीव परिष्कृतया गिरा पुरस्करोति।

## हेमन्तवर्णनम्

स कदाचित्प्रभातायां शर्वर्यां रघुनन्दनः।
प्रययावभिषेकार्थं रम्यां गोदावरीं नदीम्॥

प्रह्वः कलशहस्तस्तु सीतया सह वीर्यवान् ।
पृष्टतोऽनुव्रजन् भ्राता सौमित्रिरिदमब्रवीत् ॥
अयं स कालः सम्प्राप्तः प्रियो यस्ते प्रियंवद !
अलङ्कृत इवाभाति येन संवत्सरः शुभः ॥
नीहारपुरुषो लोकः पृथिवी सस्यमालिनी ।
जलान्यनुपभोग्यानि सुभगो हव्यवाहनः ॥
प्राज्यकामा जनपदाः संपन्नतरगोरसाः ।
विचरन्ति महीपाला यात्रार्थं विजिगीषवः ॥
सेवमाने दृढं सूर्ये दिशमन्तकसेविताम् ।
विहीनतिलकेव स्त्री नोत्तरा दिक् प्रकाशते ॥
प्रकृत्या हिमकोशाढ्यो दूरसूर्यश्च साम्प्रतम् ।
यथार्थनामा सुव्यक्तं हिमवान् हिमवान् गिरिः ॥
रविसंक्रान्तसौभाग्यस्तुषारारुणमण्डलः ।
निश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥
दूरमप्युदितः सूर्यः शशाङ्क इव लक्ष्यते ।
स्पृशन् सुविपुलं शीतमुदकं द्विरदः सुखम् ।
अत्यन्ततृषितो वन्यः प्रतिसंहरते करम् ॥
एते हि समुपासीना विहंगा जलचारिणः ।
नावगाहन्ति सलिलमप्रगल्भा इवाहवम् ॥

[वाल्मीकीयरामायणे]

अहो ! कीदृशोऽलौकिको वाचां प्रवाहः । कस्य सचेतसश्चेतो न समाह्लादयेत् ।

## रावणप्रार्थनाभङ्गः

*　　*　　*　　*　　*

पञ्चदासीशतानि त्वां, सर्वाभरणभूषिताम् ।
सीते, परिचरिष्यन्ति, भार्या मे भव शोभने ॥
प्रत्युवाचानवद्याङ्गी, तमनादृत्य राक्षसम् ।
"महाचलमिवाकम्पं महेन्द्रसदृशं पतिम् ॥
महोदधिमिवाक्षोभ्यमहं राममनुव्रता ॥
पूर्णचन्द्रनिभं शूरं राज-पुत्रं जितेन्द्रियम् ।
पृथुकीर्त्ति महावीर्यमहं राममनुव्रता ॥

*　　*　　*　　*　　*

त्वं पुनर्जम्बूको व्याघ्रीं मामिच्छसि दुर्लभाम् ।
नाहं शक्या त्वया स्प्रष्टुमादित्यस्य प्रभा यथा ॥
सिंहस्य खादतो मांसं मुखादादातुमिच्छसि ।
यो रामस्य प्रियां भार्यां बलात्त्वं हर्तुमिच्छसि ॥
त्वं क्षुरं जिह्वया लेक्षि सूच्या स्पृशसि लोचने ।
यो रामस्य प्रियां भार्यां पापबुद्धया निरीक्षसे ।
व्याघ्र्यास्तरुणपुत्रायाः प्रजामादातुमिच्छसि ।
यो रामस्य ··· ··· ··· ···· ··· ॥
अवसज्य शिलां कण्ठे सागरं तर्त्तुमिच्छसि ।
यो रामस्य ··· ··· ···· ··· ··· ॥
कृष्णसर्पमतिक्रुद्धं निःश्वसन्तं महाविषम् ।
स्प्रष्टुमिच्छसि हस्तेन यन्मां त्वमभिकाङ्क्षसे ॥

[वाल्मीकीये अरण्यकाण्डे]

अहो कीदृशमोजःसम्भृतं काव्यम् । नूनं काव्यान्तरेषु दुर्लभम् एतादृशं वर्णनम् ।

## वाल्मीकेः काव्य-सुषमा

तत्त्वतो विमृश्यमाने सुतरां स्फुटीभवति यद्रामायणेऽखिलानि महाकाव्यलक्षणानि दृग्गोचरीभवन्ति । वाचामुदात्तता, घटनाविन्यासचातुरी, रमणीयदृश्यानां विलक्षणं चित्रणम्, रमणीयं प्रकृतिवर्णनम्, काव्यकला-पूर्णता, विविधछन्दसां प्रसरः, ओजःकान्तिमती च शैली । तदेवंविधा कापि अनितरसाधारणी काव्यसुषमा एवास्य सर्वातिशयलोकप्रियत्वे हेतुः ।

रामायणस्य मधुस्यन्दिनि काव्यधाराप्रवाहे विनिमज्य न कस्य सहृदयस्य परिस्पन्दते हृदयम् ! भारतीया महाकवयो भूयसा वाल्मीकेः काव्यकलया प्रभाविताः प्रतीयन्ते । रामायणत एव काव्यप्रणयनस्फूर्त्तिस्तैरुपलब्धेति समवधारणेऽपि नास्ति काप्यत्युक्तिः । 'उपमा कालिदासस्येति' तत्प्रसिद्धेः बीजं रामायणीयोपमामालामेवानुसन्दधाति । अशोकवाटिकायां निवसन्त्याः सीतायाः वर्णनमेकोनत्रिंशदुपमामालया रमणीयरूपेण प्रपञ्चितम् ।

"अभूतेनापवादेन कीर्त्तिं निपतितामिव ।
आम्नायानामयोगेन विद्यां प्रशिथिलामिव ॥

सन्नामिव महाकीर्त्ति श्रद्धामिव विमानिताम् ।
पूजामिव परिक्षीणामाशां प्रतिहतामिव ॥"

*　　*　　*　　*　　*

[रामायणसुन्दरकाण्डे १९ सर्गे]

शोकसागरनिरूपणमप्यद्भुतरूपेण कृतम् :—

'रामशोकमहावेगः सीताविरहपारगः ।
श्वसितोर्मिमहावर्त्तो वाष्पफेनजलाविलः ॥
बाहुविक्षेपमीनौघो विक्रन्दितमहास्वनः ।
प्रकीर्णकेशशैवालः कैकेयीवडवामुखः ॥
यस्मिन् बत निमग्नोहं कौशल्ये राघवं विना ।
दुस्तरो जीवता देवि मयायं शोकसागरः ॥

कीदृशीयमद्भुतोपमाकाव्यमहासरित् आदिकवेर्हृदयात्प्रावर्त्तत । काव्यसंसारे वाल्मीकेः वाचां परस्तात्पुरस्ताद् वा न किञ्चित् तादृशं प्रादुर्बभूव काव्यम् । "अनुवाल्मीकिं खलु कवयो वाचि भावे चे"ति लोकोक्तिः सर्वथा यथार्था । स्वभाववर्णने, चरित्रचित्रणे, मानव-मनोगत-भाव-विलास-प्रदर्शने, वन-पर्वतसरिदाश्रमादिरूपनिरूपणेऽद्यापि आदिकविरयं सर्वान् कवीन् अतिशेते ! नूनं सहजा सरला समलङ्कृता वाल्मीकेर्भारती । आदिकविरेष नूनमासीद् वागर्थशिल्पिनां गुरुरित्यत्र तु को नाम संदिह्येत । वस्तुतस्तु काव्यमपीदं रामायणमितिवृत्तायते, भारतीयसंस्कृतेरादर्शरूपञ्चेति अलमति पल्लवितेन ।

## रामायणीयरामराज्यम्

रामराज्यस्वरूपमपि किञ्चित्प्रणिभालनीयम् :—

अहन्यहनि रामस्तु कार्याणि स्वयमेव हि ।
प्रत्यवैक्षत धर्मात्मा सह भ्रातृभिरच्युतः ॥
धर्मेण रक्षतस्तस्य हृष्टपुष्टजनाकुला ।
बभूव पृथिवी सर्वा धनधान्यसमृद्धिनी ॥
निर्दस्युरभवल्लोको नानर्थः कश्चिदस्पृशत् ।
न चापि वृद्धा बालानां प्रेतकार्याणि कुर्वते ॥
सर्वं प्रमुदितञ्चासीत् सर्वो धर्मपरो जनः ।
दृष्ट्वा धर्मपरं रामं न चाहिंसत्परस्परम् ॥
आसीद्वर्षशतायुश्च तथा पुत्रसहस्रवान् ।
निरामयो विशङ्कश्च रामे राज्यं प्रशासति ॥

नित्यपुष्पा नित्यफलास्तरवस्तत्र निर्व्रणाः ।
काले वर्षति पर्जन्यः सुखस्पर्शश्च मारुतः ।।
न कदर्यः कश्चिदासीन्नानृतो न शठोऽपि वा ।
न मानी न च संरम्भी न नृशंसो न कत्थनः ।।
नराः स्वदारनिरता नार्यश्चासन् पतिव्रताः ।
सुव्रता धृतिमन्तश्च नरा आसंस्तथा स्त्रियः ।।
नानाहिताग्निर्नायज्वा नानृजुर्न च नास्तिकः ।
स्वकर्मनिरताश्चासन् सर्वे तत्र द्विजातयः ।।
यज्ञाध्ययननिष्ठाश्च विरताश्च प्रतिग्रहात् ।
नामर्षी न चोद्विग्नो नातुरो न भयान्वितः ।।
तत्रैव प्राकृतो नासीद् दरिद्रो वा पुरोत्तमे ।। इत्यादि
[वाल्मीकीये]

राज्येन कीदृशेन भवितव्यमिति रामराज्योपवर्णनेन कविनाऽतिचारुतया निर्दिष्टम्। नूनं धन्यः स कविवृषा, जननी च तस्य धन्या, संस्कृतसाहित्यारुणोदये यस्य वाणी आदिकाव्ये छन्दोऽलङ्कृता विश्वनभःप्राङ्गणे उदयमाससाद इति।

## विहगावलोकनम्

विहगावलोकनेनाऽवगम्यते, यदखिल[1] महाकाव्यलक्षणान्वितं रामायणाभिधं महाकाव्यमिदं संस्कृतसाहित्यमन्दिरस्य स्वर्णकलशायमानं निखिलातिशायिकाव्यगुणगणगरिम्णा सर्वाभिनन्द्यत्वेन राराजते । स्थान एव खलूक्तमेतत् :--

यावत्स्थास्यन्ति गिरयः सरितश्च महीतले ।
तावद् रामायणकथा लोकेषु प्रचरिष्यति ।।

---

१. महाकाव्यलक्षणानि :—

सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः ।
सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः ।।

तत्र सर्गश्च पुनः--

एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः ।
नानावृत्तमयः क्वापि सर्गश्चैकश्च दृश्यते ।।

तत्रापि--शृङ्गारवीरशान्तानामेकाङ्गी रस इष्यते ।
अष्टसर्गान्न तु न्यूनं त्रिंशत्सर्गाच्च नाधिकम् ।। इति

अस्यैव वाल्मीकिमुनिपादस्यातीव प्रसिद्धं योगवासिष्ठाख्यमध्यात्मविषयकं महाकाव्यमपि अनितरसाधारणं संस्कृतसाहित्यसृजि अतिभास्वरं रत्नम् ।

अस्य महाकाव्यस्य भाषा प्राञ्जला, ओजस्विनी, ललितमधुरा प्रसादगुणगुम्फिता च। भावानां भव्यता, छन्दसामौचित्यं, रसानां सरसपरिपाकः, अलङ्काराणामाभरणं नूनं परिपूर्णतामवगाहते। मानवीयान्तःप्रकृतेः सालङ्कारं निरूपणं, नैसर्गिकं विश्लेषणं, बाह्यप्राकृतिकदृश्यानां सजीवचित्रणं, गिरिनिर्झरसरितावन्यलताद्रुमकुसुमषड्ऋतुप्रभृतिवर्णनञ्च यादृशमत्र समपद्यत न तादृशमन्यत्र सुलभम्।

रामायणं हि नाम भारतीयपरम्परायाः संस्कृतेश्च आमूलचूडमव्यभिचरितं चित्रम् अनिर्वचनीयमतीव चारुतया ग्रथ्नाति। अतएव काव्यमिदमतिमात्रं सर्वलोकप्रियतां गतम्। प्रायशः सर्वेऽपि संस्कृतमहाकवयो रामायणादेव तां कामपि कमनीयां कवित्वस्फूर्त्तिमविन्दन्त। रामायणगतोपाख्यानान्येवावलम्ब्य भूम्ना स्वीयानि रूपककाव्यानि तैर्निरमायिषत। सा किल कालिदासस्य कापि कमनीया कृतिः रघुवंशाभिधं महाकाव्यं नाम रामायणीयैरेवोपमालङ्काररसोपवर्णनैरनुप्राणितमवलोक्यते। अतएव स्थान एव, केनाऽप्युट्टङ्कितम् 'मधुमयभणितीनां मार्गदर्शी महर्षिः।' इति

## वाल्मीकेः समयः

यद्यपि वाल्मीकिसमय इदन्तया निर्णेतुमुपकरणसौलभ्याभावान्न सुकरम्। तथापि अन्तर्बहिरुभयविधसाक्ष्यमाश्रित्य, यत् किञ्चिन्निश्चेतुं सुशकं तदिह समासेन प्रस्तूयते। जैनबौद्धयोः साहित्ये रामगाथानिर्देशः प्रव्यक्तमुपलभ्यते तत्र भवता जैनकविविमलसूरिणा किल रामचरितं प्राकृतभाषया निबद्धे 'पउमचरिया'ख्ये समुपवर्णितम्। एतत्काव्यरचनायाः कालः प्रायशः क्रैस्त ६२ तमेऽब्दे सम्भाव्यते। एवमेव बौद्धकविनाऽश्वघोषेणाऽपि स्वकीये बुद्धचरिते सुन्दरकाण्डस्य रमणीयोपमाकलापस्य, उत्प्रेक्षानिचयस्य च सङ्कलनं कृतम्। बौद्धजातकेष्वपि बहुत्र रामकथायाः समुपलब्धेरेतद् धीरमाकलयामः, वाल्मीकेः समयः उक्तनिबन्धेभ्यः पुरातन एवेत्यङ्गीकारे न काप्यापत्तिः। स एष बाह्यसाक्ष्यमुद्दिश्य निर्णयः। अन्तःसाक्ष्यमालम्ब्यापि, समान एव निर्णयः सम्भवति। प्रसिद्धमेवैतत् यल्लोकविश्रुतस्य पाटलिपुत्रस्य प्रतिष्ठापनं, राज्ञा अजातशत्रुणा क्रैस्तात्पञ्चशतवर्षपूर्वं कृतम्। तच्च पाटलिपुत्रं बौद्धग्रन्थेषु पाटलिग्रामनाम्ना प्रसिद्धम्। रामायणे च रामः शोणगङ्गासङ्गममतिक्रम्य पुरःसरति तत्र सन्दर्भे पाटलिपुत्रस्य नामापि न दृग्गोचरी भवति, तावता व्यक्तमिदमापतति, क्रैस्तात्पञ्चशतवर्षप्रागेव रामायणस्य कालः, इत्येवेतिवृत्तविदां निर्णयः इति दिक्।

---o---



ऊर्ध्वबाहु र्विरौम्येष नैव कश्चिच्छृणोति माम् ।
धर्मादर्थश्च कामश्च स धर्मः किन्न सेव्यते ॥

# महाकविः महर्षिः व्यासः

## महाभारतम्

कः खलु महाभारतस्य प्रणेता ?—महर्षिः व्यासः—महाभारतस्य रचनाकालः—भारते राजनीतितन्त्रम्—महाभारतस्यादर्शोपदेशाः—कूटश्लोकमुखेनोपदेशाः—भारतीय-कथावस्तु।

### कः खलु महाभारतस्य प्रणेता ?

महाभारतं हि नाम भूम्ना अनुष्टुब्बहुलछन्दोनिबद्धं महर्षिकृष्णद्वैपायनव्यासमहाभागैः प्रणीतं कौरवपाण्डवयोर्युद्धवर्णनपरं अनेकाख्यानोपाख्यानगाथादिभिः सुगुम्फितं, धर्मार्थकाममोक्षाणां विशदविवरणात्मकं परमरमणीयं महाकाव्यम्। उक्तञ्च महाभारते—

'धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्॥'[1]

इदमद्भुतं महाभारतं नाम बृहदाख्यानं व्यासेन त्रिभिर्वर्षैः प्रणिबद्धमिति महाभारतादेवावगम्यते :

'त्रिभिर्वर्षैः सदोत्थाय कृष्णद्वैपायनो मुनिः।
महाभारतमाख्यानं कृतवानिदमद्भुतम्॥

भारतमाख्यानमिदं पूर्वं व्यासदेवः स्वशिष्याय वैशम्पायनायोपदिदेश, स च अर्जुनस्य प्रपौत्राय जनमेजयाय सर्पसत्रे श्रावयामास। ततः लोमहर्षणपुत्रः शौनकादिभ्यः ऋषिभ्यः। एवं महाकाव्यमिदं त्रिभिर्वक्तृभिः विभिन्नश्रोतृभ्यः श्रावितम्। एवं श्रावणानुश्रावणाद्वा मूलग्रन्थे किञ्चित्कलेवरवृद्धिः स्वाभाविकीति न सम्भावनाकोटिमतिक्रामति। तदेवमुत्तरोत्तरवृद्धिमुपगच्छदिदं लक्षैकपरिमितश्लोकात्मकं संवृत्तम्। एवंविधक्रमेण व्यासमहाभागेन विरचितं पूर्वं [2]जयाख्य-

---

१. विषयातिशयबाहुल्यसन्निवेशाद्धि भारतं 'पञ्चमो वेद' इत्यप्याख्यायते।

२. ग्रन्थेऽस्मिन् कौरवपाण्डवयोर्युद्धे पाण्डवानां जातस्य जयस्योपवर्णनात् प्रथममसौ जयाख्यां लेभे। ततोऽनन्तरं भारतमिति संज्ञाम्।

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत्॥

इत्यत्र जयपदं तदर्थद्योतकमेवेति।

मिदं वैशम्पायनेन प्रवर्द्धितं भारतं सञ्जातम् । तदनन्तरं सौतिना सङ्कलितं महाभारतमित्याख्यामलभत । जयाख्ये काव्ये ८८०० मितश्लोकाः अभवन् । भारताख्ये पुनः २४००० मिताः, "चतुर्विंशतिसाहस्त्रीं चक्रे भारतसंहिताम्" । ततश्च पुनः सौतिना लक्षमितश्लोकसंवलिता कृता इति पाश्चात्यविदुषामभिमतम् । परन्तु वास्तविकी श्लोकसंख्या हरिवंशसहितायां ९६,२४४ मिता दृश्यते । अनुक्रमणिकाध्याये वर्णितसूच्यनुसारेण समस्ते महाभारते अध्याया १९२३ संख्याकाः श्लोकाश्च ८४,२४४ मिता । खिलपर्वणो हरिवंशस्य १२,००० मिताः । सर्वे सम्भूय ९६,२४४ श्लोकाः इति संख्यैव वास्तविकी संख्या अवधार्यते भारतीयैः ।

यद्यपि महाभारतमिदं वैशम्पायनेन सौतिना चाख्यानोपाख्यानसङ्कलनेन बृहत्कलेवरीकृतम् तथाऽपि महर्षिव्यासविरचितमेवेदमिति सर्वसम्मतम् ।

महाभारतमिदं आदि–सभा–वन–विराट्–उद्योग-भीष्म-द्रोण-कर्ण-शल्य-सौप्तिक-स्त्री-शान्ति-अनुशासन-अश्वमेध-आश्रमवास-मौशल-महाप्रास्थानिक-स्वर्गारोहणाख्यैरष्टादशभिः पर्वभिर्निबद्धम् । तत्र प्रधानकथोपन्यासेन सहानेकानि आख्यानोपाख्यानानि सङ्कलितानि । तेषु १––शाकुन्तलोपाख्यानं, २––मत्स्योपाख्यानम्, ३––सावित्र्युपाख्यानम्, ४––रामोपाख्यानम्, ५––नलोपाख्यानञ्च प्रधानानि । भीष्मपर्वणि च भगवद्गीताप्रकरणमतीव महत्त्वपूर्णं रोचिष्णु विश्वविख्यातञ्च । प्रकरणमिदमष्टादशाध्यायैरुपनिबद्धम् सप्तशतश्लोकैरनुस्यूतञ्च । विश्वसाहित्यस्य न कोऽपि ग्रन्थस्तादृशीं प्रशस्तिं प्रतिष्ठाञ्च लेभे यादृशीं महाभारते उपनिबद्धा गीतेति । अस्या असङ्ख्याताष्टीका विलसन्ति विविधासु भाषासु ।

महाभारतस्यान्तिमो भागश्च हरिवंशाख्यो १२,००० श्लोकालङ्कृतः । अस्मिन् भगवतः श्रीकृष्णस्य वंशवर्णनं कृतम् । महाभारतस्य विंशतिसंख्याकाष्टीकाः सन्ति । यासु नारायणसर्वज्ञविरचिता 'भारतार्थप्रकाशा'ख्या, अर्जुनमिश्रविरचिता 'भारतार्थदीपिका', नीलकण्ठविरचिता 'भारतभावदीपिका'नाम्नी चातीव प्रसिद्धाः । महाभारते गीतापञ्चरत्ननाम्ना प्रथिताः श्रीमद्भगवद्गीता, अनुस्मृतिः, गजेन्द्रमोक्षो, भीष्मस्तवराजो, विष्णुसहस्रनाम चेति पञ्च सन्दर्भा निरतिशयगौरवशालिनो महत्त्वपूर्णाश्च ।

## महर्षिः व्यासः

महर्षिर्व्यास एव महाभारतस्य प्रणेतृमुख्यः इति निश्चितप्रायम् । सोऽयं महर्षिः पाराशर्यः, वेदव्यासः, कृष्णद्वैपायनः, सत्यवतीसुत, इत्यादिनामभिरपि प्रथितः । अस्य जनको महर्षिः पराशरः जननी च सरस्वतीनाम्नी

देवी परमविदुषी। सोऽयं व्यासो युद्धकाले विद्यमान इति महाभारताध्ययनादवगच्छामः। युद्धकालविषये च विदुषां भूयान् मतभेदः। केचन ख्रीस्तशतकात् पूर्वं १४००, १५०० वर्षसम्मितः काल इति निश्चिन्वन्ति। अपरे ख्रीस्तशतकात् पूर्वं त्रिसहस्र ३००० वर्षमितं व्यवस्थापयन्ति। परन्तु ख्रैस्तद्वितीये तृतीये वा शतके ग्रन्थोऽयं विद्यमान आसीदिति तु सर्व एव स्वीकुर्वन्ति ऐकमत्येन। हेतुत्वेन च ते पुरस्कुर्वन्ति ख्रैस्ते ४४२ शतके एकस्मिन् शिलालेखे—"शतसाहस्र्यां संहितायां वेदव्यासेनोक्तम्" इति वचनम् विनिगमकरूपेण।

## कश्चास्य रचनाकालः ?

महाभारतस्य पर्यालोचनादवगम्यते यदस्य रचना रामायणाद् बहोः कालादनन्तरं सञ्जाता। योऽयं सांस्कृतिको भेदः उभयोर्बृहद्ग्रन्थयोरनयोः परिणतः स खलु भूयांसं कालमपेक्षते। नहि अल्पीयसा कालेन स शक्यसम्भवः। रामायणे या धर्मभीरुता धर्मजागरूकता विभाव्यते न सा महाभारते। रामायणे करुणा, भावुकता, संयमः, सारल्यं, न्यायः, कर्त्तव्यबुद्धिः, प्रेमभावः, श्रद्धा, मानवता, भक्तिः, धर्मासक्तिश्च यादृशी समुज्ज्वला देदीप्यमाना च बाभाति न तादृशी महाभारते। महाभारते खलु दर्पः, औद्धत्यं, भीरुता, धर्माधर्मविचाराभावः, परस्वत्वापहरणम्, स्वार्थलोलुपत्वम्, आग्रहग्रहिलत्वमित्यादीनामवाञ्छनीयानां शिष्टसमाजलज्जास्पदीभूतानां तत्त्वानां साम्राज्यमासीत्। रामायणे तु पितुराज्ञया प्राज्यं राज्यं परित्यज्य रामो वनं गच्छति। लक्ष्मणो ज्येष्ठभ्रातुः सेवाशुश्रूषार्थं तमनुसरति स्वकीयां प्राणवल्लभार्मूर्मिलामयोध्यायामेव परित्यज्य। भरतश्च पुनः स्वपितुराज्ञामन्याय्यामाकलय्य राज्यं न स्वीकरोति, भगवतो रामचन्द्रस्य चरणपादुके आदाय सम्राट्-प्रतिनिधित्वेन तेऽङ्गीकृत्य पुनः राज्यकार्यभरं निर्भरमुद्वहति कर्त्तव्यधिया। सीतातस्करस्य रावणस्य वधः, विभीषणाय च तद्राज्यपुरस्करणम्, ततः प्रजाप्रसादभीरुतया सीतायाः परित्यागः। इतश्च महाभारते, दुर्योधनेन कौरवाधिराजेन पाण्डवानां राज्यापहरणम्, द्यूतक्रीडनम्, द्रौपद्याश्चीरापहरणं, युद्धनिवारणार्थं भूयसा प्रयत्नवतः श्रीकृष्णस्यापि भगवतो महापुरुषस्यापमानोऽनादरश्च, 'सूच्यग्रं नैव दास्यामि विना युद्धेन केशव !' इत्याद्योषणम्, इत्येवञ्जातीयकोद्घटितो महीयान् विपर्यासः न कर्हिचित् स्वल्पकालसम्भवः। परःसहस्राणि वर्षाणि अपेक्षते तादृशोऽयमामूलचूडव्यत्यासः। इति हेतोरेव कालविद्भिः व्यवस्थाप्यते यन्महाभारतस्य रचनाकालः ख्रैस्तपूर्वं चतुःशतकमितः। यतः ख्रैस्त ४४२ वर्ष समुद्भाविते एकस्मिन् शिलालेखे—

"शत साहस्र्यां संहितायां वेदव्यासेनोक्तम्"

इति वचनात् एतच्छिलालेखसमयात् २००,३०० वर्षपूर्वमेवास्य रचना सम्भाव्यते । लोकमान्यतिलकमहोदयेन चास्य समयः क्रीस्तपूर्वं ४४० वर्षात्किञ्चित्पूर्वतनो निर्धारितः ।

## महाभारते राज्यतन्त्रम्

संस्कृतसाहित्ये राजतन्त्रपरिचायकेषु सन्दर्भेषु महाभारतं कौटलीयार्थशास्त्रञ्चेति ग्रन्थद्वयं प्रधानभावं जुषते । तत्रापि महाभारतम् अतिमहत्त्वपूर्णं विशदञ्च भूम्ना आकरग्रन्थ इवाद्रियते । शान्तिपर्वणः राजधर्मप्रतिपादकाध्यायेषु नृपतेः कर्त्तव्यप्रदर्शनपुरस्सरं शासनव्यवस्थायाः प्रधानाङ्गानां सुविशदं विवेचनं कृतमवलोक्यते । राज्यस्य राजतन्त्रस्य[1] चोपक्रममुद्दिश्य महनीयाः सिद्धान्ताः निर्धारिताः । अनेकेषु चाध्यायेषु[2] नृपाणां सचिवानाञ्चोत्तरदायित्वपूर्णानि कर्त्तव्यानि निर्दिष्टानि, अग्रे च कतिपयाध्यायेषु[3] करव्यवस्था प्रपञ्चिता । राज्यभृत्यानाञ्चापि कर्त्तव्यकर्माणि विवृतानि । स्वराष्ट्रशासन-व्यवस्थाप्युट्टङ्किता सङ्ग्रहेण । यद्यपि रामायणेऽपि राजधर्म-राजमहत्त्वपुरस्सरमराजकस्य राष्ट्रस्य दोषा निर्दर्शितास्तथाऽपि न तथा वैशद्येन यथा भारते । [4]परराष्ट्रनीति-सन्धि-विग्रहादि-विषया अपि सम्यक् तथा विवेचिता यथा न तत्पूर्ववर्त्तिग्रन्थेषु कुत्राप्युपलभ्यन्ते । शान्तिपर्वातिरिच्यापि सभापर्वणि राज्यव्यवस्थायाः किमपि रमणीयं निरूपणं संवृत्तम् । आदिपर्वणि च स्थितिविशेषमुद्दिश्य शासनसञ्चालननिर्भरपरिकरेषु कूटनीतिरप्यपरिहार्यत्वेनोपदिष्टा । सभापर्वणो द्वात्रिंशत्तमे, वनपर्वणश्च पञ्चविंशत्तमेऽध्याये आपद्धर्मस्य मनोहारि वर्णनं विहितम् । महाभारतादवगम्यते पुराकाले न राज्यमासीन्नापि राजा । सर्वाः प्रजाः धर्मेणैव परस्परं रक्षन्ति स्म ।

नियतस्त्वं नरव्याघ्र ! शृणु सर्वमशेषतः ।
यथा राज्यं समुत्पन्नं आदौ कृतयुगेऽभवत् ॥
नैव राज्यं न राजासीन्न च दंडा न दाण्डिकः ।
धर्मेणैव प्रजाः सर्वा रक्षन्ति स्म परस्परम् ॥

---

१. अध्या० ५६, ६६, ६७ ।

२. अध्या० ५६–५६, ७०–७१, ७६, ९४, ९६, १२० ।

३. अध्या० ७१, ७६, ८८, ९७, १२०, १३० ।

४. अध्या० २०, ८६, ९९, १००, १०३, ११० तथा ११३ एते अध्यायाः परामर्शनीयाः ।

पाल्यमानास्तथाऽन्योऽन्यं नरा धर्मेण भारत ॥
दैन्यं परमुपाजग्मुस्ततस्तान् मोह आविशत् ।
प्रतिपत्तिवियोगाच्च धर्मस्तेषामनीनशत् ॥

इत्यनेनैतदपि ध्वन्यते यावद्धर्मभावः प्रजासु जागरूकस्तावदेव योगक्षेमकुशलता-शान्तिसमृद्धिसाम्राज्यं वरीवर्त्ति अन्यथा तु उपप्लव एव प्रवर्त्तते । धर्मभावविधुरे हि राष्ट्रे प्रजानियन्तू राज्ञो महती आवश्यकता, इत्येव राज्यव्यवस्थोदये बीजम् ।

उक्तञ्च रामायणे:—

नाराजके जनपदे स्वकं भवति कस्यचित् ।
मत्स्या इव प्रजा नित्यं भक्षयन्ति परस्परम् ॥

इतिकृत्वैव राज्यव्यवस्था प्रवृत्ता । प्रजासु राज्ञोऽतुलप्रभावद्योतनार्थं तस्मिन् देवत्वमारोपितम् ।

कुरुते पञ्चरूपाणि कार्ययुक्तानि यः सदा ।
भवत्यग्निस्तथादित्यो मृत्युर्वैश्रवणो यमः ॥४१॥
यदा ह्यासीदतः पापान् दहत्युग्रेण तेजसा ।
मिथ्योपचरितो राजा तदा भवति पावकः ॥४२॥
यदा पश्यति चारेण सर्वभूतानि भूमिपः ।
क्षेमञ्च कृत्वा व्रजति तदा भवति भास्करः ॥४३॥
अशुचींश्च यदा क्रुद्धः क्षिणोति शतशो नरान् ।
सपुत्रपौत्रान् सामात्यान् तदा भवति सोऽन्तकः ॥४४॥
यदा त्वधार्मिकान्सर्वान् तीक्ष्णैर्दण्डैर्नियच्छति ।
धार्मिकाँश्चानुगृह्णाति भवत्यथ यमस्तदा ॥४५॥
यदा तु धनधाराभिस्तर्पयत्युपकारिणः ।
तदा वैश्रवणो राजा लोके भवति भूमिपः ॥५६॥

[महाभा० १२।६७]

नृपतन्त्रगणतन्त्रयोर्गणतन्त्रसमुन्नत्यर्थं निर्दिशति :—मन्त्रिमण्डले कीदृशा गुणवन्तः पुरुषाः सन्निवेशनीयाः —

प्रज्ञान् शूरान्महोत्साहान् कर्मसु स्थिरपौरुषान् ।
मानयन्तः सदायुक्तान् विवर्धन्ते गणा नृप ॥
द्रव्यवन्तश्च शूराश्च शस्त्रज्ञाः शास्त्रपारगाः ।
कृच्छ्रास्वापत्सु संमूढान् गणान् सन्तारयन्ति ये ॥

[महाभा० १२।१०७।२०–२१]

अपि च :—

चारमंत्रविधानेषु कोषसंनियमेषु च।
नित्ययुक्ता महाबाहो वर्धन्ते सर्वतो गणाः ॥

[महाभा० १२।१०७।१९]

अन्यत्रापि—

इति वाचा मधुरया श्लक्षणया सोपचारया।
स्वरश्रीनभ्यवसृजेद्योगमाधाय कालवित् ॥

[महाभा० १२।८७।३४]

साम्राज्यवृत्तप्रज्ञानाय बुद्धिशालिनो गुप्तचरान् चारान्नियोजयेत् कालविन्नृपः यतः प्रजासु कोऽप्युद्वेगकरो दुःखप्रसरः पदं न निदध्यात्। प्रजासङ्गोपनमेव राज्ञः परमो धर्मः। प्रजारक्षणं विधास्यामीति प्रतिज्ञावान् हि राजपदयोग्यः नान्यः। यदि राजा धृतरक्षणव्रतो प्रजां न रक्षति, प्रतिज्ञाञ्चोल्लङ्घते तर्हि प्रजया वध्यो भवति इत्यादिष्टम्।

'अहं वो रक्षितेत्युक्त्वा यो न रक्षति भूमिपः।
स संहत्य निहन्तव्यः श्वेव सोन्माद आतुरः ॥

[महाभा० १३।९६।३५]

अतः राज्ञो हि स परमो धर्मः यत्प्रजारक्षणन्नाम। स च धर्मः भूतिमिच्छता नृपेण सर्वात्मनाऽनुष्ठेयः।

'यथा हि गर्भिणी हित्वा स्वप्रियं मनसोऽनुगम्।
गर्भस्य हितमत्यर्थं तथा राज्ञाऽप्यसंशयम् ॥

[महा० शा० अ० ६०]

यदा नृपः प्रजाया हितं नाभिनन्दति, स्वार्थं प्रसाधयन् विषयविलासलोलुपः शक्तिमदोन्मत्तः प्रजाजनं विदलति, उत्सादयति च समृद्धिलतां, समुच्छिनत्ति च धर्मतरुं राष्ट्रस्य तदा स आमन्त्रयते अराजकतां, क्रांतिं कामयते, अशान्तिञ्च प्रज्वलयति, समस्तमपि राष्ट्रं रोषानलसंधुक्षितं सत् सबन्धुबान्धवं विनश्यति। अतः अराजकतां नाभिवाञ्छन्ति विपश्चितो राजानः। उक्तञ्च महाभारते :—

'अराजकेषु राष्ट्रेषु धर्मो न व्यवतिष्ठते।
परस्परञ्च खादन्ति सर्वथा धिगराजकम् ॥

न धनार्थो न दारार्थस्तेषां येषामराजकम्।
प्रीयते हि हरन्पापः परवित्तमराजके ॥

यदाऽस्य उद्धरन्त्यन्ये तदा राजानमिच्छति ।
पापा ह्यपि तथा क्षेमं न लभन्ते कदाचन ॥
एकस्य च द्वौ हरतो द्वयोश्च बहवोऽपरे ।
अदासः क्रियते दासो ह्रियन्ते चाबलास्त्रियः ॥
राजा चेन्न भवेल्लोके पृथिव्यां दण्डधारकः ।
जले मत्स्यानिवाभक्ष्यन् दुर्बलं बलवत्तराः ॥

[महा० शा० अ० ६७]

'धर्माय राजा भवति न कर्मकरणाय तु ।
मान्धातरिति जानीहि राजा लोकस्य रक्षिता ॥
राजा चरति चेद्धर्मं देवत्वायैव कल्पते ।
स चेदधर्मं चरति नरकायैव कल्पते ॥
यस्मिन् धर्मो विराजते तं राजानं प्रचक्षते ।

* * * * *

लोकरञ्जनमेवात्र राज्ञां धर्मः सनातनः ।
सत्यञ्च रक्षणञ्चैव व्यवहारस्य चार्जवम् ॥
न हिंस्यात्परवित्तानि देयं काले च दापयेत् ।
विक्रान्तः सत्यवाक् क्षान्तो नृपो न चलते पथः ॥
चातुर्वर्ण्यञ्च धर्माश्च रक्षितव्याः समीक्षिताः ।
धर्मसङ्कररक्षा च राज्ञां धर्मः सनातनः ॥

[महा० शा० अ० ५७]

राजैव कर्त्ता भूतानां राजैव विनाशकः ।
धर्मात्मा यः स कर्त्ता स्यादधर्मात्मा विनाशकः ॥

[महा० शा० अ० ९१]

रक्षाधिकरणं युद्धं तथा धर्मानुशासनम् ।
मन्त्रचिन्ता सुखं काले पञ्चभिर्वर्द्धते मही ॥

[महा० शा० अ० ८३]

यस्त्ववध्यवधे दोषः स वध्यावधे स्मृतः ।
सा चैव खलु मर्यादा यामयं परिवर्जयेत् ॥
तस्मात्तीक्ष्णः प्रजा राजा स्वधर्मे स्थापयेत्ततः ।
अन्योऽन्यं भक्षयन्तो हि प्रचरेयुर्वृका इव ॥

[महा० शा० अ० १४२]

यस्य स्फीतो जनपदः, सम्पन्नप्रियराजकः ।
सन्तुष्टपुष्टसचिवो दृढमूलः स पार्थिवः ॥ इति ॥

* * * * *

पौरजानपदा यस्य भूतेषु च दयालवः ।
सधना धान्यवन्तश्च दृढमूलः स पार्थिवः ॥
अपराधिषु यो दण्डः स राष्ट्रस्य विशुद्धये ।
विना येन न सन्देहो मात्स्यन्यायो प्रवर्त्तते ॥
यस्मिन् हि सर्वमायत्तं स दण्ड इह केवलः ॥

[महा० शां० अ० १२१]

महाभारते अनेकानि हितोपदेशपराणि आख्यानरूपेण सम्भृतानि पद्यरत्नान्यमूल्यान्यतीव रमणीयानि च समुल्लसन्ति । तत्रैकतमात् जयोपाख्यानात् विदुलोपाख्याननामधेयात्कतिचन रत्नानि विद्वद्हृदयावर्जकानि अत्र पुरस्क्रियन्ते :—

अलातं तिन्दुकस्येव मुहूर्त्तमपि हि ज्वल ।
मा तुषाग्निरिवानर्चिः धूमायस्व जिजीविषुः ॥
मुहूर्त्तं ज्वलितं श्रेयो, न च धूमायितं चिरम् ।
मा ह स्म कस्यचिद् गेहे जनि राज्ञो मृदुः स्वरः ॥
इष्टापूर्त्तं हि हे क्लीव ! कीर्तिश्च सकला हता ।
विच्छिन्नं भोगमूलं ते, किं निमित्तं हि जीवसि ॥
यस्य वृत्तं न जल्पन्ति मानवा महदद्भुतम् ।
राशिवर्द्धनमात्रं स, नैव स्त्री, न पुनः पुमान् ॥
दाने तपसि सत्ये च यस्य नोच्चरितं यशः ।
विद्यायामर्थलाभे वा मातुरुच्चार एव सः ॥
निरमर्षं निरुत्साहं निर्वीर्यमरिनन्दनम् ।
मा स्म सीमन्तिनी काचित् जनयेत्पुत्रमीदृशम् ॥
सन्तोषो वै श्रियं हन्ति, तथाऽनुक्रोश एव च ।
अनुत्थानभये चोभे, निरीहो नाश्नुते महत् ॥
स्वबाहुबलमाश्रित्य योऽभ्युज्जीवति मानवः ।
स लोके लभते कीर्त्तिं परत्र च शुभां गतिम् ॥

* * * * *

उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु ।
भविष्यतीत्येव मनः कृत्वा सततमव्यथैः ॥

*    *    *    *    *

जयो नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा।
महीं विजयते क्षिप्रं श्रुत्वा शत्रूंश्च मर्दति॥

*    *    *    *    *

विद्याशूरं तपःशूरं दानशूरं तपस्विनम्।
ब्राह्म्या श्रिया दीप्यमानं महाभागं महारथम्॥

धृतिमन्तमनाधृष्यं जेतारमपराजितम्।
नियन्तारमसाधूनां गोप्तारं धर्मचारिणाम्।
ईदृशं क्षत्रिया सूते सुतं सत्यपराक्रमम्॥

## भगवद्गीता

गीतायां आत्मस्वरूपं निर्दिशन्तः श्लोका अतीव रुचिरा भावसम्भृताश्च। नूनं गीताप्रकरणं भारतस्यातीव भासुरं रत्नम् :—

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे॥

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही॥

जातस्य हि ध्रुवो मृत्युः ध्रुवं जन्म मृतस्य च।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि॥

अथ चेत्त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि।
ततः स्वधर्मं कीर्त्तिञ्च हित्वा पापमवाप्स्यसि॥

अकीर्त्तिञ्चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्।
सम्भावितस्य चाकीर्त्तिर्मरणादतिरिच्यते॥

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः॥

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि॥

कीदृश ऋतम्भर उपदेशः प्रेरणाप्रदश्चेति।

## महाभारतस्यादर्शोपदेशाः

'शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति।
न तस्य जीवितेनार्थो न धनेन न बन्धुभिः ॥

न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः।
अन्तेष्वपि हि जातानां वृत्तमेव विशिष्यते ॥

सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते।
मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ॥

य एव यत्नः क्रियते परराष्ट्रविमर्दने।
स एव यत्नः कर्त्तव्यः स्वराष्ट्रपरिपालने ॥

वृत्तं यत्नेन संरक्षेत् वित्तमायाति याति च।
अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥

तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता।
सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ॥

द्यूतमेतत्पुराकल्पे दृष्टं वैरकरं नृणाम्।
तस्माद् द्यूतन्न सेवेत, हास्यार्थमपि बुद्धिमान् ॥

परं क्षिपति दोषेण वर्त्तमानः स्वयं तथा।
यश्च क्रुध्यतीशानः स च मूढतमो नरः ॥

## कूटश्लोकमुखेनोपदेशः

'एकया द्वे विनिश्चित्य त्रींश्चतुर्भिर्वशे कुरु।
पञ्च जित्वा विदित्वा षट् सप्त हित्वा सुखी भवेत् ॥

एकमेवाद्वितीयं तु यद्राजन्नावबुध्यसे।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥"

---

१. एकया–बुद्ध्या, द्वे–कर्त्तव्याकर्त्तव्ये निश्चित्य, त्रीन्–मित्रोदासीन-शत्रून्, चतुर्भिः सामदानदण्डभेदैः वशे कुरु। पञ्च–पञ्चेन्द्रियाणि जित्वा षड्–सन्धि-विग्रह-यान-आसन-द्वैधीभाव-साम-आश्रयाख्यान् विदित्वा सप्त–स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम्। महच्च दण्डपारुष्यमर्थदूषणमेव चेति सप्त-संख्याकान् दोषान् हित्वा नरः सुखीभवेदिति तात्पर्यम्।

# महाभारतस्य सुभाषितानि

**महाभारतस्य सुभाषितानि भव्य-भावनिर्भराणि कस्य हृदयसरोवरमानन्दोद्वेल्लितं न विदधति :—**

अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन् ।
लभते बुद्धेरवज्ञानमवमानञ्च केवलम् ॥
किं करिष्यत्यपात्राणामुपदेष्टा सुवागपि ।
तक्षणस्तीक्ष्णः कुठारोऽपि दुर्दारुणि विहन्यते ॥
यदश्रुतधर्मा वै प्रमाद्यति न तच्छलम् ।
धर्म एवायमन्धानां यत्स्खलन्ति खलेष्वपि ॥
व्रजत्यधोऽधो यात्युच्चैर्नरः स्वैरेव कर्मभिः ।
खनितेव हि कूपस्य प्रासादस्येव कारकः ॥
प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः ।
न ते भर्त्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः ॥
अणुपूर्वं बृहत्पश्चाद् भवत्यार्येषु सङ्गतम् ।
विपरीतमनार्येषु यथेच्छसि तथा कुरु ॥
अफलानि दुरन्तानि समव्ययफलानि च ।
अशक्यानि विप्रतूनि नारभन्ते विचक्षणाः ॥
षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णस्तु जातुचित् ।
द्विकर्णस्य तु मन्त्रस्य ब्रह्माप्यन्तं न गच्छति ॥
किन्नु मे स्यादिदं कृत्वा किन्नु मे स्यादकुर्वतः ।
इति सञ्चित्य मनसा प्राज्ञः कुर्वीत वा न वा ॥
बहवो यत्र नेतारः सर्वे पण्डितमानिनः ।
सर्वे महत्त्वमिच्छन्ति तद्वृन्दमवसीदति ॥
न दैवमिति सञ्चित्य त्यजेदुद्योगमात्मवान् ।
अनुद्योगेन कस्तैलं तिलेभ्यः प्राप्तुमर्हति ॥
दैवयोगादुपनताः प्रतिज्ञाहीनसम्पदः ।
अकस्मादेव नश्यन्ति खलानामिव सङ्गतम् ॥
नहीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दानं मैत्री च भूतेषु दया च मधुरा च वाक् ॥
यो यमर्थं प्रार्थयते यमर्थं घटते च यः ।
सोऽवश्यं तमवाप्नोति न चेच्छ्रान्तो निवर्त्तते ॥

गुणेषु यत्नः क्रियतां किमाटोपैः प्रयोजनम् ।
विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥
कारणात्प्रियतामेति द्वेष्यो भवति कारणात् ।
अर्थार्थी जीवलोकोऽयं न कश्चित्कस्यचित्प्रियः ॥
तेजस्विनि क्षमापते नातिकार्कश्यमाचरेत् ।
अतिनिर्मथनाद्वह्निश्चन्दनादपि जायते ॥
यदीच्छसि वशीकर्त्तुं जगदेकेन कर्मणा ।
परापवादशस्येभ्यो गां चरन्तीं निवारयेत् ॥
अनुगन्तुं सतां वर्त्म कृत्स्नं यदि न शक्यते ।
स्वल्पमप्यनुगन्तव्यं मार्गस्थो नावसीदति ॥
जीयन्तां दुर्जया देहे रिपवश्चक्षुरादयः ।
जितेषु तेषु लोकोऽयं ननु कृत्स्नस्त्वया जितः ॥
असहायः समर्थोऽपि तेजस्वी किं करिष्यति ।
निवाते ज्वलितोऽप्यग्निः स्वयमेव प्रशाम्यति ॥
सुमन्त्रिते सुधीक्रान्ते सुकृते सुविचारिते ।
प्रारम्भे कृतबुद्धीनां सिद्धिरव्यभिचारिणी ॥

भारतस्य प्रशस्तिरपि नितरां मनोहारिणी सम्पन्ना महाभारते :—

अथ ते कीर्त्तयिष्यामि वर्षं भारत भारतम् ।
प्रियमिन्द्रस्य देवस्य मनोर्वैवस्वतस्य च ॥
पृथोस्तु राजन् वैनस्य तथेक्ष्वाकोर्महात्मनः ।
ययातेरम्बरीषस्य मान्धातुर्नहुषस्य च ॥
तथैव मुचुकुन्दस्य शिबेरौशीनरस्य च ।
ऋषभस्य तथैलस्य नृगस्य नृपतेस्तथा ॥
कुशिकस्य च दुर्धर्ष गाधेश्चैव महात्मनः ।
सोमकस्य च दुर्धर्ष दिलीपस्य तथैव च ॥
अन्येषां च महाराज ! क्षत्रियाणां बलीयसाम् ।
सर्वेषामेव राजेन्द्र ! प्रियं भारत भारतम् ॥

[भीष्मपर्व अ० ९]

## भगवतो व्यासस्य काव्यविन्याससौष्ठवम्

आदिमहाकवि-महर्षि-वाल्मीकिवत् तत्रभवतो महाकवेर्व्यासदेवस्यापि

काव्यकला कमनीयतायां कस्यचित्तुलां नाभिनन्दति । पदविन्यासः सरलः मधुरः प्रसादसम्पन्नश्च । तद्यथा--

वैशम्पायन उवाच (द्रौपदी श्रीकृष्णं युद्धाय प्रेरयति)--

'राज्ञस्तु वचनं श्रुत्वा धर्मार्थसहितं हितम् ।
कृष्णा दाशार्हमासीनमब्रवीच्छोककर्शिता ।। १ ।।
सुता द्रुपदराजस्य स्वसितायतमूर्द्धजा ।
संपूज्य सहदेवञ्च सात्यकिञ्च महारथम् ।। २ ।।
भीमसेनं च संशान्तं दृष्ट्वा परमदुर्मनाः ।
अश्रुपूर्णेक्षणा वाक्यमुवाचेदं मनस्विनी ।। ३ ।।
विदितं ते महाबाहो धर्मज्ञ मधुसूदन ।
यथा निकृतिमास्थाय भ्रंशिताः पाण्डवाः सुखात् ।। ४ ।।
धृतराष्ट्रस्य पुत्रेण सामात्येन जनार्दन ।
यथा च सञ्जयो राज्ञा मन्त्रं रहसि श्रावितः ।। ५ ।।
युधिष्ठिरस्य दाशार्ह तच्चापि विदितं तव ।
यथोक्तः सञ्जयश्चैव तच्च सर्वं श्रुतं त्वया ।६।।
पञ्च नस्तात दीयन्तां ग्रामा इति महाद्युते ।
अविस्थलं वृकस्थलं माकन्दीं वारणावतम् । ७ ।।
अवसानं महाबाहो कञ्चिदेकंञ्च पञ्चमम् ।
इति दुर्योधनो वाच्यः सुहृदश्चास्य केशव ।। ८ ।।
न चापि ह्यकरोद्वाक्यं श्रुत्वा कृष्ण ! सुयोधनः ।
युधिष्ठिरस्य दाशार्ह श्रीमतः सन्धिमिच्छतः ।। ९ ।।
अप्रदानेन राज्यस्य यदि कृष्ण ! सुयोधनः ।
सन्धिमिच्छेन्न कर्त्तव्यस्तत्र गत्वा कथञ्चन ।।१०।।

* * * * *

नहि साम्ना न दानेन शक्योर्थस्तेषु कश्चन ।
तस्मात्तेषु न कर्त्तव्या कृपा ते मधुसूदन ।।१२।।

साम्ना दानेन वा कृष्ण ये न शाम्यन्ति शत्रवः ।
योक्तव्यस्तेषु दण्डः स्याज्जीवितं परिरक्षता ।।१३।।

तस्मात्तेषु महादण्डः क्षेप्तव्यः क्षिप्रमुच्यते ।
त्वया च महाबाहो पाण्डवैः सह सञ्जयैः ।।१४।।

क्षत्रियेण हन्तव्यः क्षत्रियो लोभमास्थितः।
अक्षत्रियो वा दाशार्ह स्वधर्ममनुतिष्ठता ॥१६॥
अन्यत्र ब्राह्मणात्तात सर्वपापेष्ववस्थितात्।
गुरुर्हि सर्ववर्णानां ब्राह्मणः प्रसृताग्रभुक् ॥१७॥

* * * * *

प्राप्यापदं न व्यथते कदाचिदुद्योगमन्विच्छति यः प्रमत्तः।
दुःखञ्च काले सहते महात्मा धुरन्धरस्तस्य जिता सपत्नाः॥
यस्यात्मा विरतः पापात् कल्याणे च निवेशितः।
तेन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या॥
न स्वप्नेन जयेन्निद्रां न कामेन जयेत्स्त्रियः।
नेन्धनेन जयेदग्निं न पानेन सुरां जयेत्॥

एवं महाभारते गद्यबन्धोऽपि सुमनोहरो बह्वर्थसंभृतोऽवलोक्यते। तद्यथा—महाभारते आदिपर्वणि तृतीयाध्यायस्य पौष्यपर्वणि :—'सौतिरुवाच—जनमेजयः पारीक्षितः सह भ्रातृभिः कुरुक्षत्रे दीर्घसत्रमुपास्ते। तस्य भ्रातरस्त्रयः श्रुतसेन-उग्रसेन-भीमसेना इति। तेषु तत्सत्रमुपासीनेष्वभ्यागच्छत्सारमेयः। स जनमेजयस्य भ्रातृभिरभिहतो रोरूयमाणो मातुः समीपमुपागच्छत्। तं माता रोरूयमाणमुवाच—किं रोदिषि? केनास्यभिहत? इति। स एवमुक्तो मातरं प्रत्युवाच जनमेजयस्य भ्रातृभिरभिहतोऽस्मीति। तं माता प्रत्युवाच, व्यक्तम् त्वया तत्रापराद्धम् येनाऽस्यभिहत इति। स तां पुनरुवाच नापराध्यामि। किञ्चिन्नावेक्षे, हवींषि नावलिह इति। तत् श्रुत्वा तस्य माता सरमा पुत्रदुःखार्त्ता तत्सत्रमुपागच्छद्यत्र स जनमेजयः सह भ्रातृभिः दीर्घसत्रमुपास्ते। स तया क्रुद्धया तत्रोक्तोऽयं मे पुत्रो न किञ्चिदपराध्यति, नावेक्षते, हवींषि नावलेढि, किमर्थमभिहत इति। न किञ्चिदुक्तवन्तस्ते। सा तानुवाच यस्मादयमभिहतोऽनपकारी तस्माददृष्टं त्वां भयमागमिष्यतीति। जनमेजय एवमुक्तो देवशुन्या सरमया भृशं सम्भ्रान्तो विषण्णश्चासीत्। स तस्मिन् सत्रे समाप्ते हस्तिनापुरं प्रत्येत्य पुरोहितमनुरूपमन्विच्छमानः परं यत्नमकरोद्यो मे पापकृत्यां शामयेदिति। स कदाचिन्मृगयाङ्गतः पारीक्षितो जनमेजयः कस्मिंश्चित् स्वविषय आश्रममपश्यत्। तत्र कश्चिदृषिरासाञ्चक्रे श्रुतश्रवा नाम। तस्य तपस्यभिरतः पुत्र आस्ते सोमश्रवा नाम। तस्य तं पुत्रमभिगम्य जनमेजय पारीक्षितः पौरोहित्याय वव्रे। स नमस्कृत्य तमृषिमुवाच, भगवन्! अयं तव पुत्रो मम पुरोहितोऽस्त्विति। स एवमुक्तः प्रत्युवाच जनमेजयम्, भोः जनमेजय! पुत्रोऽयं मम सर्प्यां जातो महातपस्वी स्वाध्यायसम्पन्नो मत्तपोवीर्यसम्भूतो

मच्छुक्रं पीतवत्यास्तस्याः कुक्षौ जातः। समर्थोऽयं भवतः सर्वाः पापकृत्याः शमयितुमन्तरेण महादेवकृत्याम्। अस्य त्वेकमुपांशुवृत्तं यदेनं कश्चिद् ब्राह्मणः कञ्चिदर्थमभियाचेत तं तस्मै दद्यादयं। यद्येतदुत्सहसे ततो नयस्वैनमिति। तेनैवमुक्तो जनमेजयस्तं प्रत्युवाच, भगवन्! तत्तथा भविष्यतीति।

एवं सावित्र्याख्यानमपि निरतिशयहृदयावर्जकम्। महाभारते बहूनि मनोहराणि उपाख्यानानि विलसन्ति। तेषु शकुन्तलोपाख्यानं, मत्स्योपाख्यानं, ऋष्यशृङ्गकथानकं, राज्ञः शिवेरुपाख्यानं, द्रौपदीहरणं, सावित्र्युपाख्यानम्, नलोपाख्यानञ्चेत्येतानि निरतिशयहृदयावर्जकानीत्युक्तपूर्वम्।

## महाभारतीयं कथावस्तु

महाभारतस्य संक्षेपतः वर्णितं कथावस्तु एतदेव यद् धृतराष्ट्रपाण्डवौ, उत्तरभारतस्य राज्ञो दुष्यन्तस्य तनयस्य भरतस्य वंशधरस्य शान्तनोः प्रपौत्रौ आस्ताम्। आसीद्यद्यपि धृतराष्ट्रोऽग्रजन्मा तथापि नयनहीनत्वात् पाण्डुरेव सर्वं राजसिंहासनेऽभिषिक्तः। कालान्तरेण पाण्डुः पञ्चत्वं गतः। धृतराष्ट्रस्य शतपुत्रेषु दुर्योधन एव ज्येष्ठ आसीत्। पाण्डोश्च युधिष्ठिर-भीम-अर्जुन-नकुल-सहदेवेति पञ्च पुत्रा आसन्। कालक्रमेण सर्वेऽमी यदा यौवने पदञ्चक्रुः तदा दुर्योधनश्छलेन तेषां राज्यमपहर्त्तुमैच्छत्। कृतासङ्ख्यप्रयत्नोऽपि यदा स साफल्यं न भेजे, तदा स्वमातुलशकुनिसाहाय्येन द्यूतक्रीडायां पाण्डवान् पराजित्य दौपदीञ्च दुःशासनद्वारा सभायामानीय नग्नां कर्त्तुं प्रयेते, दैववशात् सफलो न जातः। पराजिताः पाण्डवाः द्वादशवर्षपर्यन्तं वनवासस्य वर्षैकं यावच्चाज्ञातवासस्य दारुणां यातनां भेजिरे। ततोऽरण्यात् परावृत्य स्वकीयं राज्यञ्च ययाचिरे।

दौत्यार्थं प्रेषितेन पाण्डवप्रतिनिधित्वालङ्कृतेन श्रीकृष्णेनापि अतितरां प्रयतितम्। किन्तु स्वार्थान्धः दुर्योधनस्तु 'सूच्यग्रं नैव दास्यामि विना युद्धेन केशवेति'' निश्चयाद्रेखामात्रमपि न विचलितः। तदनन्तरं पाण्डवा अपि अगतिकतया युद्धार्थं सन्नद्धा बभूवुः। पाण्डवानां कौरवाणाञ्च युयुत्सूनां, कुरुक्षेत्रे समवेतानां भीषणतुमुलमायोधनं महता सम्भारेण संवृत्तम्। अष्टादशभिर्दिनैश्च प्रतिफलितम्। वराको दुर्योधनः रणे पराजितो निहतः निजदलबलेन साकम्। पाण्डवाश्च किलैते[1] श्रीकृष्णसाहाय्येन विजयशालिनः संवृत्ताः। ज्येष्ठः श्रीयुधिष्ठिरो

१. भीष्मद्रोणतटा जयद्रथजला गान्धारनीलोत्पला,
शल्यग्राहवती कृपेण वहनी कर्णेन वेलाकुला।
अश्वत्थामविकर्णघोरनकरा दुर्योधनावर्त्तिनी,
सोत्तीर्णा खलु पाण्डवै रणनदी कैवर्तकः केशवः॥

धर्मराजो राजसिंहासनं भूषयाञ्चकार। कालान्तरेण द्रौपदीसहिताः पाण्डवा अपि एतन्महारणपरिणतेन दृश्येन सततं सन्तप्तहृदया उद्विग्नमानसाश्च अभिमन्युतनयं परीक्षितं हस्तिनापुरे राज्ये समभिषिच्य हिमालयं जग्मुः। कालक्रमेण च तत्रैव कालकवलतां गता इति कथांशः।

इत्थं महाकविना कुशलकलाकारेण भगवता व्यासेन महर्षिणा महाकाव्येऽस्मिन्नखिलकाव्यलक्षणसम्पन्ने महाभारते सद्दर्पण इव सकला अपि अनेकप्रकाराः संसारवृत्तयः, निरतिशयाश्चर्यचुम्बिता घटना, अघटितघटनापटीयसः विश्वनाटकसूत्रधारस्य भगवतो भूतभावनस्य जगन्नियन्तुः परमेश्वरस्य लीलाभूमयः काव्यव्याजेन प्रतिबिम्बिता लोकचक्षुरुन्मीलनाय संसारस्वरूपप्रतिपत्तये निर्वर्त्तितव्य-प्रवर्त्तितव्य-पथप्रदर्शनाय चेति। तथा चोक्तं केनापि अभियुक्तेन :—

"पाराशर्यवचः सरोजममलं गीतार्थगन्धोत्कटम् ,
नानाख्यानककेसरं हरिकथा सम्बोधनाबोधितम् ॥
लोके सज्जनषट्पदैरहरहः पेपीयमानं मुदा ,
भूयाद् भारतपङ्कजं कलिमलप्रध्वंसि नः श्रेयसे ॥ इति

नूनं निखिलचक्षुष्मतां वन्द्य एव स खलु प्रातराराध्यो भगवान् व्यास इति।

एवंविधानां गणनातीतानामुपयोगिविषयाणां तत्त्वज्ञानपराणां समावेशाद्धि महाभारतमिदं 'पञ्चमो वेदः' इत्युपाधिना समलङ्कृतं जातम्। नूनमद्भुता खलु भगवतो व्यासस्य भारती नितरां वाचामविषयीभूता। अग्निपुराणकृतानि काव्यलक्षणानि व्यासरचनासु अक्षरशो घटन्ते :—

'संक्षेपाद्वाक्यमिष्टार्थं व्यवच्छिन्ना पदावली।
काव्यं स्फुरदलङ्कारं गुणदोषविवर्जितम् ॥ इति

तत्र को नाम तादृशः प्रशंसार्हो विषयः योऽस्मिन् आकरग्रन्थे नोल्लसति। सोऽयं महर्षिः व्यासः कविकुलोल्लासः महतो महाभारतस्यान्ते तत्सारभूतं निष्कर्षस्वरूपं एकेनानवद्येन पद्येन निर्जुघोष दुन्दुभिनिनादेन—

"ऊर्ध्वबाहुर्विरौम्येष नैव कश्चिच्छृणोति माम्।
धर्मादर्थश्च कामश्च स धर्मः किन्न सेव्यते ॥"

[ महाभारते ]

नूनमेष महर्षिः सर्ववन्दनीय एव—

श्रवणाञ्जलिपुटपेयं विरचितवान् भारताख्यममृतं यः।
तमहमरागमकृष्णं कृष्णद्वैपायनं वन्दे ॥ इति।

वस्तुतः संस्कृतसाहित्येतिहासे विशालबुद्धीनां ज्ञानमयप्रदीपप्रज्वालयितृणां भगवन्महर्षिव्यासमुनिपादानां समुल्लसति खल्वनन्यसाधारणं माहात्म्यम्। प्रायशः सर्वैरेव प्राक्तनैः कविभिरेषां यशः सुभृशं प्रगीतम्—

'अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः।
अभाललोचनः शम्भुर्भगवान् बादरायणः॥

महात्मनामेषां प्रणीतत्वेन प्रसिद्धानि योगभाष्य-महाभारत-ब्रह्मसूत्र-पुराणादीनि चानेकग्रन्थरत्नानि तानि च ग्रन्थेऽस्मिन् यथा प्रसङ्गं पर्यालोचितानि।

अस्य महर्षेः पुण्यतिथिसंस्मरणार्थं भारतीयैरस्मत्पूर्वजैर्गुरुपूर्णिमाऽपरनामधेयं व्यासपूजापूर्णिमेति नाम्ना तत्पूजामहोत्सवार्थमेकं पुण्यतमं पर्व प्रवर्त्तितम्। तच्च सर्वत्र भारतेऽद्यापि परिपाल्यते। किं बहुना, महर्षेः एतद्यशोवृत्तं श्रीगोवर्द्धनाचार्यवचोभिः समुपसंहरामः—

'व्यासगिरां निर्यासं सारं विश्वस्य भारतं वन्दे।
भूषणतयैव संज्ञां यदङ्कितां भारती भाति॥ इति संक्षेपः॥

इति सर्वतन्त्रस्वतन्त्रैः पदवाक्यप्रमाणपारावारीणैः श्रीमदाचार्य-
द्विजेन्द्रनाथशास्त्रिसिद्धान्तशिरोमणिभिर्विरचिते संस्कृत-
साहित्यविमर्शाख्ये ग्रन्थे सप्तमः परिच्छेदः।

## अष्टमः परिच्छेदः

# महाकविर्भासः

१--परिचयः। २--स्वप्नवासवदत्तम्। ३--त्रयोदशानां नाटकानां भासकर्त्तृत्वम्। ४--भासस्य शैली। ५--भासस्य स्थितिकालः।

## परिचयः

संस्कृतनाट्यसाहित्यप्रपञ्चे तत्रभवान् महाकविर्भासो नाम आद्यो नाट्यकविरितिसर्वसम्मतम्। अस्य नाट्यप्रणयनचातुरी नूनं किमपि लोकोत्तरसौष्ठवमवगाहते। भाषा सुमधुरा कोमलपदविन्यासशालिनी च, भावभङ्गी हृदयङ्गमा, विषयोपन्याससरणिश्चानितरसाधारणी, कमनीयकवित्वालङ्कृता रचना च कापि निरतिशयचमत्कारिणी। किं बहुना, महाकविनाऽमुना स्वीये नाटकचक्रे काऽप्यपूर्वैव रीतिराविष्कृता, या किल तदनुजातैर्महाकविभिरप्यनुसृता कालिदासादिभिः। तथाहि कालिदासस्य रूपकेषु भासरचनासादृश्यं बहुशो दृष्टिपथमवतरति। तदत्र दिङ्मात्रदिशा किञ्चिन्निरूप्यते। तद्यथा अभिषेकनाटकस्य चतुर्थाङ्के पठितं पद्यमिदं--

'यस्यां न प्रियमण्डनाऽपि महिषी देवस्य मन्दोदरी,
स्नेहाल्लुम्पति पल्लवान् न च पुनर्वीजन्ति यस्या भयात्॥
वीजन्तो मलयानिला अपि करैरस्पृष्टबालद्रुमाः,
सेयं शक्ररिपोरशोकवनिका भग्नेति विज्ञाप्यताम्॥'

अभिज्ञानशाकुन्तलस्य चतुर्थाङ्के पठितेन निम्नाङ्कितेन पद्येनात्यर्थं साजात्यं भजते :--

'पातुं न प्रथमं व्यवस्यति पयो युष्मास्वपीतेषु या,
नादत्ते प्रियमण्डनाऽपि भवतां स्नेहेन या पल्लवम्॥
आद्ये वः कुसुमप्रसूतिसमये यस्या भवत्युत्सवः,
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम्॥' इति

न केवलमत्र भावा एव सादृश्यं भजन्ते अपितु पदविन्यासोऽपि तद्रूपतां स्फुटमाविष्करोति; 'प्रियमण्डनापि', 'स्नेहात्', 'पल्लवान्', 'सेयं' इमानि पदानि चक्षुष्मतां सुनिपुणमवधानमर्हन्ति।

पुनश्च बालचरितस्य प्रथमाङ्के निम्नाङ्कितं पद्यं देवकीमुद्दिश्य प्रवृत्तम् यदा सा बालकृष्णं वसुदेवहस्ते न्यासीकृत्य चिन्तयति :—

हृदयेनेह तत्राङ्गैः द्विधाभूतेव गच्छति।
यथा नभसि तोये च चन्द्रलेखा द्विधाकृता॥

अत्रापि विस्मयावहं सादृश्यं कुतूहलयति मनः अधोऽङ्कितेन शाकुन्तलस्य प्रथमाङ्के घटितेन पद्येन—

गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य॥ इति।

एवमेव स्वप्नवासवदत्तेऽपि प्रथमाङ्के अधोऽङ्कितं पद्यम्—

"विश्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्ययाः।" इति किञ्चित्परिवर्त्तनेन शाकुन्तले इत्थं पठ्यते :

"विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगाः।" अहो कीदृशं साम्यम्।

एवञ्जातीयकानि भूयांसि वचांसि सादृश्यावहानि दृश्यन्ते कालिदासीयरचनासु। एतावता नेदमनुमातुं दुष्करं यत्कालिदासादयो भासस्य काव्यकलयाऽतिमात्रं प्रभाविता अभूवन्। तथा च मालविकाग्निमित्र-प्रस्तावनायां कालिदासो भासस्य काव्यकलोत्कर्षमुद्भासयन् स्वयमेवाह :—

"प्रथितयशसां भाससौमिल्लकविपुत्रादीनां प्रबन्धानतिक्रम्य वर्त्तमानकवेः कालिदासस्य कृतौ कोऽभिनिवेशः।"

एवं हर्षचरितारम्भे भट्टबाणोऽपि :—

'सूत्रधारकृतारम्भैर्नाटकैः बहुभूमिकैः।
सपताकैर्यशो लेभे भासो देवकुलैरिव॥'

अथापि कविराजो वाक्पतिराजो गौडावहे :—

'भासे ज्वलनमित्रे कुन्तीदेवे च यस्य रघुकारे।
सौबन्धवे च बन्धे हरिचन्द्रे च आनन्दः॥

तथैव दण्डिमहाभागोऽपि मुक्तकण्ठं प्रशशंस :—

'सुविभक्तमुखाद्यङ्गैर्व्यक्तलक्षणवृत्तिभिः।
परेतोऽपि स्थितो भासः शरीरैरिव नाटकैः॥' इति।

यदाऽस्य कृतिरामणीयकं महाकवीनामपि हृदयपटले जातं बद्धमूलम्, तदाऽस्य प्रबन्धानां सौष्ठत्वे को नाम खलु संशयीत वराकः ?

सम्प्रति भासकृतित्वेन प्रसिद्धास्त्रयोदश प्रबन्धाः समुपलभ्यन्ते।

(१) स्वप्नवासवदत्तम्, (२) प्रतिज्ञायौगन्धरायणम्, (३) पञ्चरात्रम्, (४) अविमारकम्, (५) बालचरितम्, (६) मध्यमव्यायोगम्, (७) दूतवाक्यम्, (८) दूतघटोत्कचम्, (९) कर्णभारम्, (१०) ऊरुभङ्गम्, (११) अभिषेकनाटकम्, (१२) चारुदत्तम्, (१३) प्रतिमा चेति।

एषु सर्वेषु स्वप्नवासवदत्तमेव निखिलातिशायिगुणगरिम्णा परां ख्यातिमियाय। तथा हि कविवरो राजशेखरः प्राह :—

"भासनाटकचक्रेऽपि च्छेकैः क्षिप्ते परीक्षितुम्।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः॥" इति।

क्रैस्त१९०९ तमाब्दे ट्रावनकोरनिवासिनां तत्रत्यानुसन्धानविभागाध्यक्षाणां राजपण्डित-श्रीगणपतिशास्त्रिणां प्रयत्नेन समुपलब्धानां विलुप्तप्रायाणामेतत्त्रयोदशनाटकानां समुद्धाराय पुनः प्रकाशनाय चेमे तत्रभवन्तो महामहोपाध्यायाः श्रीगणपतिशास्त्रिमहाभागाः सर्वेषां संस्कृतानुरागिणां हार्दिकं धन्यवादमर्हन्ति।

## स्वप्नवासवदत्तम्

भासनाटकचक्रे स्वप्नवासवदत्तं नाम नाटकं महाकवेः प्रदीप्तप्रतिभाखनिप्रसूतं किमपि निरतिशयभासुरं रत्नम्।

एवमेव अन्यैरपि कवीन्द्रैः, आलङ्कारिकमूर्द्धन्यैर्वामन-रामचन्द्र-अभिनवगुप्तप्रभृतिभिर्नाटकादस्मात् पाठोद्धरणादिनाऽस्यासाधारणं प्राशस्त्यमुपोद्वेल्लितम्। किञ्च :

स हि भास इति ख्यातः कालिदासाद्यभिष्टुतः।
यत्कृतान्युपलब्धानि रूपकाणि त्रयोदश॥
* * * * *
तत्रैकं रूपकव्यूहे नाटकं तावदुत्तमम्।
स्वप्नवासवदत्ताख्यम्··· ··· ··· ···· ···॥

एतेनापि नाटकस्यास्य सर्वेतररूपकोत्तमत्वमभ्युपपन्नं भवति। अस्य च नाटकस्य 'स्वप्ननाटकमिति, स्वप्नवासवदत्तेति, स्वप्नवासवदत्तमिति' च त्रीणि नामानि समुपलभ्यन्ते। तत्र स्वप्नप्रधानं नाटकमित्याद्यं, स्वप्नदृष्टा वासवदत्ता तत्प्रतिपादके तच्छब्दोपचार इति द्वितीयं, स्वप्नदृष्टा वासवदत्ताऽत्रेति तृतीयं नामान्वर्थतया व्युत्पाद्यं सम्भवति।

## कथावस्तु

पाण्डववंशावतंसस्याभिमन्योः पञ्चविंशः सन्तानः वीणारणननिपुणः उदयनो नाम वत्सराजः। तमवन्तीश्वरः प्रद्योतः स्वकन्यया वासवदत्तया सह परि-

निणीषुः यदा ऋजुनोपायेन न शशाक स्वमनोरथतरुं सफलयितुं तदा कदाचित्तं स्वराज्योपान्ते मृगयावशान्नागवनं गतमुदयनं कृत्रिमनीलगजप्रदर्शनेन छलयित्वा वनान्तरमानाययितमसहायं स्वान्तःपुरेऽवरुध्य वासवदत्ताया वीणाशिक्षणकर्मणि नियुक्तवान् । एवमतिक्रामति काले तयोः प्रणयपाशः सुदृढबन्धो जातः । तदनु स्वमुख्यामात्ययौगन्धरायणप्रयुक्तनीतिमहिम्ना तदवरोधान्मुक्तः प्रेयस्या वासवदत्तयाऽनुगम्यमानः अवन्तीश्वरमनादृत्य वत्सान् प्रत्याजगाम इति कथांशः प्रतिज्ञानाटिकायां प्रपञ्चितः । तदनुसन्धायैवास्य रूपकस्य प्रवृत्तिः । एतदन्तराले वत्सराजस्य राज्यं केनचिदारुणिनाम्ना रिपुणाऽपहृतम् । तद्रिपुहृतराज्यस्य प्रत्यानयनाय, मगधाधिपतेः दर्शकस्य साहाय्यस्यापरिहार्यतया, दर्शकमैत्रीसिद्धयर्थं वत्सराजस्य दर्शकस्वसृपद्मावतीपरिणयस्याऽवश्यंघटयितव्यत्वेन, तस्य च जीवन्त्यां वासवदत्तायामशक्यसम्भवतया, वत्सराजमन्त्री यौगन्धरायणो रुमण्वादिभिरन्यैरमात्यैः वासवदत्तया च नीतिनिपुणया सह सम्मन्त्र्य, वासवदत्तालीकमरणप्रख्यापनद्वारा, राज्ञो वञ्चनमेव पद्मावतीपरिणयघटनौपयिकं भविष्यति श्रेयस्करमिति निश्चिकाय । तथा च तदेतभ्युपायालम्बनेनापहृतराज्यस्य प्रत्याहरणफलकस्य पद्मावतीपरिणयस्य सिद्धिरेवास्मिन् रूपके प्रणिबद्धा ।

तत्र कदाचिल्लावाणकग्रामात् मृगयार्थं निर्गते राज्ञि दैवात्प्रवृत्ते तद्ग्रामदाहे तत्प्रशमनप्रवणौ वासवदत्तायौगन्धरायणौ, इत्यलीकप्रवादे च बहुलीभूते, अवन्तिदेशीयस्त्रीवेषधारिण्या वासवदत्तया सह विनिर्गतस्य परिव्राड्वेषधारिणो यौगन्धरायणस्य तस्माद् ग्रामात् प्रस्थितस्य क्वचिन्मगधसन्निकृष्टे तपोवने गमनम् । तत्र पद्मावत्या आश्रमे मातृवन्दनाय यादृच्छिकमागमनम् । तस्याः तपस्विजनाकाङ्क्षितार्थदानप्रतिज्ञोद्घोषणम् । तमवसरं लब्ध्वा सिद्धदेशिकादिष्टवत्सराजमहिषीत्वप्रत्ययात् पद्मावतीं विश्वसनीयतरं वासवदत्तान्यासस्थानं मन्यमानस्य यौगन्धरायणस्य प्रोषितभर्तृकस्वभगिनीव्यपदेशेन पद्मावतीहस्ते वासवदत्ताया न्यासीकरणम् । कार्यान्तरसंविधानार्थञ्च तस्य ततो गमनम् । प्रियापायपरिद्यूनवत्सराजवृत्तान्तपरिज्ञानम् । तदनु पद्मावत्या वत्सराजविषयाभिलाषोदयश्चेति प्रथमाङ्के वस्तु । प्रदीप्ताभिलाषायाः पद्मावत्याः तद्भ्रात्रा दर्शकेन वत्सराजाय वाचा दानम् । वत्सराजेन च प्रतिग्रहणम् । इति द्वितीयाङ्के वस्तु ।

दानप्रतिग्रहयोर्निर्वृत्तिवचनात् दातुः पद्मावतीप्सितपरिज्ञानम् । ततो वासवदत्तयैव पद्मावत्यर्थे कौतुकमालिकाया गुम्फनमिति तृतीयाङ्के वस्तु । चतुर्थाङ्के च, अनुभूयमानेऽपि पद्मावतीसम्प्रयोगे, वत्सराजस्य वासवदत्तायाः स्वप्नसन्तानः तदुद्दीपितस्य वासवदत्ताशोकस्यानुभावाश्चेति निरूपणम् ।

शृण्वत्यां वासवदत्तायां तस्य तद्विषयस्वप्नालापानां प्रवृत्तिः। पार्श्वस्थया वासवदत्तया तत्स्वप्नालापसम्भावनम्। प्रबुद्धेन चोदयनेन दृष्टमात्राया वासवदत्ताया तद्दृष्टिगोचराज्झटिति तिरोभावः। ततस्तस्य तीव्रः सन्तापः। अथ दर्शकप्रोत्साहनात् शत्रुविजयार्थं तस्योत्थानम् इति च पञ्चमाङ्के।

षष्ठाऽङ्के च पुना राज्यप्रत्याहरणम् वासवदत्तोपयुक्तनष्टवीणाप्रतिलम्भेन वत्सराजस्य शोकोद्रेकः, वासवदत्ताजनन्या वात्सल्यात् प्रियाशोकविनोदाय प्रेषितस्य वासवदत्तावैवाहिकचित्रफलकस्य वत्सराजेनाधिगमनम्, चित्रदृष्टवासवदत्तासदृशरूपा काचिदवन्तिकावेषा, केनापि ब्राह्मणेन स्वान्तिके कन्याभावेन न्यासीकृतेति पद्मावत्या वत्सराजाय निवेदनम्। तत्कालसन्निहितेन कपटब्राह्मणेन यौगन्धरायणेन न्यासप्रत्यर्पणार्थं चित्रावन्तिकाया रूपपरीक्षणारम्भे यौगन्धरायणवासवदत्ताभ्यां स्वात्मप्रकाशनम्। अथ ताभ्यां समागतस्य स्वामिपरमभक्तमन्त्रियौगन्धरायणनिवेदितदेव्यपनयादिप्रयोजनश्रवणमुदितस्य वत्सराजस्य वासवदत्ता-पद्मावत्यादिभिः सह निजश्वशुरसमाश्वासनार्थमुज्जयिनीं प्रति प्रस्थानञ्चेति वर्णनीयं वस्तु।

अस्मिन् नाटके वासवदत्तागत उदयनविषयकः प्रवासविप्रलम्भो रसः। स च उदयनगतो वासवदत्ताविषयः करुणः। पद्मावत्युदयनयोः परस्परविषयः शृङ्गारोवाऽङ्गम्। सोऽयमङ्गःशृङ्गारोऽर्थशृङ्गार इत्युच्यते।

## त्रयोदशानां नाटकानां भासकर्त्तृत्वम्

भासस्य नाटकानां त्रयोदशसंख्यामवलोक्य केचन विप्रतिपद्यन्ते यत्सर्वेषामेवैषां प्रणेता तत्रभवान् भास एव न भवितुमर्हति; एषु कानिचिदन्यकर्त्तृकान्यपि सम्भवेयुः। यतो नहि कुत्राऽपि तेषु भासस्य नामोल्लेखः कृतोऽवलोक्यते इति। सत्यं तन्नामोल्लेखस्तु नास्ति। परन्तु सन्ति तत्रान्यानि तेषां भासकर्त्तृकत्वोपोद्बलकानि प्रमाणानि यैः प्रव्यक्तं तेषां भासकृतित्वमवगम्यते। तत्र भवान् बाणभट्टः भासमुद्दिश्य समुपश्लोकयति--

"सूत्रकार–कृतारम्भैर्नाटकैर्बहुभूमिकैः।
सपताकैर्यशो लेभे भासो देवकुलैरिव॥"

इत्यादिसकललक्षणलक्षितत्वात् सर्वाणि रूपकाणीमानि भासकृतान्येवेति विद्वद्भिर्मुक्तकण्ठतः स्वीकृतम्।

तत्त्वतः पर्यालोच्यमानेऽपि एषां भासकर्त्तृत्वमेव बुद्धिपद्धतिमवगाहते कतिपयैरधोनिर्दिष्टैर्हेतुभिः। तत्र तावद्--

रचनासाम्यम्--साधारण्येन रूपकेषु प्रायशः 'नान्द्यन्ते' इति मङ्गलश्लोका-

नन्तरमेव 'सूत्रधारः' इति प्रयुज्यते परन्तु एषु "नान्द्यन्ते, ततः प्रविशति सूत्रधारः" इति पठ्यते।

(२) यत्र कालिदास-शूद्रक-भवभूतिप्रभृतयः 'प्रस्तावना' इति प्रयुञ्जते तत्र भासः 'स्थापना' इति प्रयुङ्क्ते।

(३) अस्य प्रत्येकस्मिन् नाटके भरतवाक्यानन्तरं 'इतिनामकं नाटकं समाप्तम्' इति पठ्यते।

(४) प्रत्येकस्मिन् पर्यवसायिनि वाक्ये एषां नाटकानां आशीर्वचनात्मकं पद्यं पठ्यते--'राजसिंहः प्रशास्तु नः' इत्यादिकम्।

(५) रूपकान्तरसदृशमत्र रूपकस्य तत्प्रणेतुः कवेश्च परिचायनात्मकं निरूपणमपि नोपलभ्यते। इत्यादि।

शब्दसाम्यम्--एवमेव शब्दविन्याससाम्यमपि उपलभ्यमानं सर्वेषामप्येषां नाटकानामेककर्तृत्वं सूचयति। तद्यथा :—

(१) 'एवमार्यमिश्रान् विज्ञापयामि', 'अये! किन्नु खलु मयि विज्ञान-व्यग्रे शब्द इव श्रूयते।' इमानि वाक्यानि स्वप्नवासवदत्त-दूतवाक्य-दूतघटोत्कच-ऊरुभङ्ग-बालचरित-अभिषेक-पञ्चरात्राख्येषु समानरूपेणैवोपलभ्यन्ते।

(२) 'भवन्त्वरजसो गावः परचक्रं प्रशाम्यतु', 'इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः।' इदं भरतवाक्यम् प्रतिमा-अविमारक-अभिषेक-पञ्चरात्रे-ष्वपि भूम्ना साम्यमश्नुते।

(३) 'इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम्।
महीमेकातपत्राङ्काम् राजसिंहः प्रशास्तु नः॥'

इदं हि भारतवाक्यं स्वप्नवासवदत्त-बालचरितयोश्चोपलभ्यते।

(४) 'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता॥'

पद्यमिदं दरिद्रचारुदत्त-बालचरितयोरपि पठ्यते।

(५) 'किं वक्ष्यतीति हृदयं परिशङ्कितम्मे' इति स्वप्ननाटकाभिषेकयोरपि दृश्यते।

(६) 'क इह भोः। काञ्चनतोरणद्वारमशून्यं कुरुते। अय्य! अहं विजया किं करीअदु भवति! निवेदयतां निवेदयताम्।"

एष सन्दर्भः स्वप्ननाटकस्य षष्ठाङ्के, अभिषेकस्य च तृतीयेऽङ्केप्यव-लोक्यते।

(७) किञ्च (आचम्य) 'परित्यजन्ति मां प्राणाः इमा गङ्गाप्रभृतयो महानद्यः एता उर्वश्यादयोऽप्सरसो मामभिगताः। अयमनुगच्छामि।' 'राजा—परित्यजन्ति मे प्राणाः।' इत्यपि अभिषेकोरुभङ्गयोः प्रथमाङ्के दृग्गोचरीभवन्ति।

तदेषा बृहत्पदविन्यासतुल्यताऽपि एकप्रणेतृत्वमेवैषां प्रत्याययति।

इत्थमेव भावभङ्ग्यपि प्रायशः सर्वेष्वेतेषु रूपकेषु साम्यतुलाधिरूढतया प्राङ्निर्दिष्टमेवार्थं बलवत्समर्थयति ग्रन्थविस्तरभिया नोऽत्र निरूप्यते। एवमादिभिर्गिरांप्रसरैर्विद्वद्भिः श्रीगणपतिशास्त्रिप्रभृतिभिः महागवेषकैः सदुन्दुभिनिध्वानमङ्गीकृतं तेषां समेषामपि रूपकाणां तत्र भासनामाऽनुपलम्भेऽपि तत्कर्तृत्वमिति।

परन्तु नेमानि सर्वाणि रूपकाणि भासकृतानि इत्यभ्युपगच्छन्तोऽन्ये विद्वांसः स्वपक्षपोषणार्थं प्रत्यवतिष्ठन्ते यत् (१) राजशेखरं विहाय नान्येन केनापि स्वप्नवासवदत्तरूपकस्य भासकृतित्वमङ्गीकृतम्। (२) द्वादशशताब्दीभवरामचन्द्रकृतनाट्यदर्पणे स्वप्नवासवदत्तस्य भासकर्तृत्वमङ्गीकृत्य यत्पद्यमुदाहृतम् न तत्तस्मिन् स्वप्नवासवदत्ताख्ये सम्प्रत्युपलभ्यमाने ग्रन्थे समुपलभ्यते। एतदेवाधारीकृत्य पाश्चात्यविदुषा 'सिल्वनलेवी' महाभागेनापि प्रस्तुतस्वप्नवासवत्तस्य भासकृतित्वं यन्नाङ्गीकृतम्। तन्न समीचीनम्। यतो हि विद्वद्वरेण्य'काले'महाभागेन सम्पादिते स्वप्नवासवदत्ते श्लोकोऽयं यथास्थाने मुद्रितमवलोक्यते। एतदतिरिक्तञ्च राजशेखरमतिरिच्य अभिनवगुप्त–भोज–सर्वानन्द–शारदातनय–सदृशप्रभृतिभिः परीक्षकैः स्वकीयग्रन्थेषु स्वप्नवासवदत्तोपनता या या घटनाः चित्रिताः तास्ता अपि निखिलाः प्रस्तुते रूपके याथातथ्येनोपलभ्यन्ते।

किञ्च यदभिनवगुप्तेन स्वकीयध्वन्यालोकीयटीकायां कविभिरादृताया रसोपेक्षाया उदाहरणरूपेण स्वप्नवासवदत्तपठिताया यस्या आर्याया समुल्लेखः कृतः साऽपि प्रस्तुतनाटके न दृश्यते इति अन्या या वाचोयुक्तिः प्रतिवादिनां साऽपि श्रीगणपतिशास्त्रिणा बलवत्प्रत्याख्याता, 'नहीयमार्या निर्दिष्टस्थाने स्वप्नवासवदत्तकथावस्तुकृते आवश्यकी। केनाऽपि टीकाकारेणैव असाङ्गत्येनैवेयं सङ्केतिता प्रतीयते' इति प्रतिपादयता। यतः पाश्चात्यविदुषो विन्टरनीजमहोदयस्य मतेन, आर्येयमुक्तरूपकस्य पञ्चमाङ्कगतनवमदशमपद्ययोर्मध्यगतस्थानमेवार्हति। परन्त्वेतन्न कदापि सम्भवति यदालङ्कारिकाणां मिथो विरोधवशात् अनन्तरमुद्रितेषु संस्करणेषु तदवहेलिता भवेत्।

इत्थं नैतदपि युक्तं प्रतिभाति यन्नाटकानीमानि केरलजनपदीय'चाक्यार' नटैः स्वाभिनयनार्थं प्रणीतानि। मन्यामहे यच्चाक्यारनटा नाट्यकलायामभिनयदृशा भवेयुर्नाम कुशलाः परन्तु तैरेव इमानि नाटकानि अपि प्रणीतानि भवेयुरिति

तु विनिगमनाभावान्न प्रामाण्यकोटिमधिकरोति। तदेतत्समूहालम्बनेन सर्वमेतदालोच्य इदमेव पर्यवसितं भवति यन्नाटकानीमानि महाकविभासकृतान्येवेति न जात्वन्यकृतानीति सर्वं निरवद्यम्।

## भासस्य शैली

महाकवेर्भासस्य रचना निरतिशयौजःप्रसादगुणालङ्कृता सङ्गीतमयी रसभावमाधुरीधुरीणा कल्पनाऽपि च सुकोमला, लोकोत्तरा। मानवीय-हृदय-संस्पर्शि च चित्रणमत्यद्भुतम्। गद्यपद्योभयरचनाचारुत्वमत्र सुतरां पम्फुल्यतेतराम्। परिपक्त्रिमो वाक्यविन्यासः। नूनं महाकविरयं हृदयान्तर्वेदनासंवित्तरः। नाट्यकलायाः पारङ्गतो हृदयग्राहिण्या वाण्याः, चरित्रचित्रणस्य च चरमसीमानमवगाहमानो धुरन्धर आचार्य आसीदद्वितीयः इति निश्चप्रचम्।

तपोवनस्य प्रशान्तश्रियं चित्रयन्नाह—

विश्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्ययाद्,
वृक्षाः पुष्पफलैः समृद्धविटपाः सर्वे दयारक्षिताः।
भूयिष्ठं कपिलानि गोकुलधनान्याक्षेत्रवत्यो दिशो,
निःसन्दिग्धमिदं तपोवनमयं धूमो हि बह्वाश्रयः॥

भासोऽयं भूम्ना वैदर्भीमेवाभिनन्दति। उदात्तानप्यर्थान् सरलयैव गिरा, समुद्गिरति। तद्यथा—

सुखमर्थो भवेद्दातुं सुखं प्राणाः सुखं तपः।
सुखमन्यद्भवेत्सर्वं दुःखं न्यासस्य लक्षणम्॥
गुणानाञ्च विशालानां सत्काराणाञ्च नित्यशः।
कर्त्तारः सुलभा लोके विज्ञातारश्च दुर्लभाः॥ इति।

अथ च :—

कालक्रमेण जगतः परिवर्त्तमाना,
चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः।

वाक्यविन्यासोऽप्यस्य विलक्षण :—

'पद्मावती बहुमता मे रूपशीलमाधुर्यैः वासवदत्ताबद्धं न तु तावन्मनो मे हरति।', 'दुःखं त्यक्तुं बद्धमूलोऽनुरागः स्मृत्वा स्मृत्वा याति दुःखं नवत्वम्।', 'कथं सा न शक्या मया स्मर्तुं देहान्तरेष्वपि।', 'अहमपि नाम उत्सारितव्या भवामि।', 'परिश्रमः तथा परिखेदं नोत्पादयति यथाऽयम्', 'आर्यपुत्रोऽपि परकीयः संवृत्तः।', 'आर्यपुत्रस्य विश्रामस्थानभूता इयमपि नाम पद्मावती अस्वस्था जाता', 'आर्यपुत्र-



अमृतनेव संसिक्ता चन्दनेनेव चर्चिता ।
चन्द्रांशुभिरिवोद्घृष्टा कालिदासस्य भारती ॥

# महाकविः कालिदासः

१––कविकुलगुरुः कालिदासः । २––जन्मस्थानम् । ३––कालिदासस्य भारती । ४––कुमारसम्भवम् । ५––रघुवंशम् । ६––रघुवंशस्य टीकाकाराः । ७––कालिदासस्य काव्यसुषमा । ८––उपमा कालिदासस्य । ९––प्रकृति-चित्रणम् । १०––प्रकृति-वर्णनम् । ११––मेघदूतम् । १२––गीतिकाव्यं मेघदूतम् । १३––मेघदूतस्य सौष्ठवम् । १४––कालिदासस्य नाट्यकला । १५––अभिज्ञान-शाकुन्तलम् । १६––मालविकाग्निमित्रम् । १७––विक्रमोर्वशीयम् । १८—कालि-दासस्य काव्यदोषाः । १९––कुत्रत्यः सः । २०––कालिदासस्य सर्वशास्त्रपारङ्ग-तत्वम् । २१––कालिदासस्य सूक्तयः । २२––कालिदासस्याविर्भावकालः । २३––विहगावलोकनम् ।

## कविकुलगुरुः कालिदासः

सुविदितमेवैतत् संस्कृतसाहित्यपाथोनिधिकृतावगाहानाम् विद्वद्वरेण्यानां यदखिलभुवनमंडलमंडनायमानं भारतखंडमिदं पुरा सुचिरमलमकार्षुः अनेके मह-नीयकीर्त्तयः कवीन्द्राः स्वजनुषा । परं चरित्रचित्रणधुरीणानां प्रकृतिवर्णनविचक्ष-णानां भारतीयकवीन्द्राणां गणनाप्रसंगे अद्यापि कविकुलशिरोमणिः कालिदास एव कनिष्ठिकामधितिष्ठिति इत्यत्र नास्ति संशयावकाशः । तथा चेयं भणितिः––

पुरा कवीनां गणनाप्रसंगे कनिष्ठिकाधिष्ठितकालिदासः ।
अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव ॥ इति ॥

प्रसादगुणालंकृतया वाण्या, गभीरार्थया कल्पनया, अनन्यसामान्यया व्यंग्य-भंग्या च कालिदासीयप्रखरप्रतिभाप्रसूतानि काव्यानि इतराखिलकाव्यप्रपंचेषु नूनं अग्रिमपदमर्हन्तीत्यत्र को नाम संशयीत ?

सरस्वती स्वादु तदर्थवस्तु निष्यन्दमाना महतां कवीनाम् ।
आलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम् ॥

इति आनन्दवर्द्धनाचार्यस्योक्तिरियं नूनं कालिदासस्योक्तिषु कार्त्स्न्येन सुतरां संजाघटीति। इयं हि खलु कालिदासस्यैव भारती यदनुपमं काव्यरसामृतं निष्यन्दमाना अनन्यसामान्यप्रतिभाविशेषं परिस्फोरयन्ती विलसति संस्कृत-साहित्यप्रांगणे । अतएव अस्य कविकुलगुरोः कृतिरस्मिन् अनन्तकविपरम्परा-

वाहिनि संसारे सर्वातिशायि सौष्ठवमवगाहते। सत्यमशेषशेमुषीसम्पन्नस्य वागधिदेवताराधनप्रसादाल्लब्धकवित्वशक्तेः सिद्धवाग्विभवस्य कविताकौमुदीचन्द्रहासस्य श्रीकालिदासस्याप्रतिमं प्रातिभं ज्योतिः यादृशामिताभया प्रतिभासते संस्कृतवाङ्मयव्योम्नि, न तादृगन्यस्य कस्यचित्।

## जन्मस्थानम्

अथायं कविकुलशिरोमणिः कदा कतमञ्च जनपदमलंचकार स्वजन्मनेति त्वद्यापि नेदमित्थंतया विनिश्चेतुं सुशकम्? विद्यते एवास्मिन् विषये मतिवैषम्यमितिवृत्तविदाम्। तथापि कालिदासीयप्रबन्धानाम् सूक्ष्मेक्षणानुशीलनेन भूम्नेदं तु प्रतिपत्तुं शक्यम् यदेष कवीश्वरः स्वजनुषा भूषयांचकार काश्मीरभुवम्। सम्यगवगतं चैतद् भवति तदीयवर्णनशैलीतः। मेघदूते खल्वयं विदिशात आरभ्यालकापर्यन्तं सकलान् भूभागान् [1]प्रत्यक्षदृष्टानिव यद् वर्णयामास, न तत्तद्भूभागावलोकनमन्तरा शक्यसम्भवम्। तदीयकाव्येषु च तत्तत्प्रसंगोपनतगिरिसरिन्नगरीणां कृतं वर्णनमपि कवेः तैस्सह सम्यक्परिचयञ्चाविष्करोति। कुमारसम्भवोपवर्णितं हिमवद्वर्णनमपि सुतरां समर्थयतितरामसुमेवार्थम्। अपि च विक्रमांकदेवचरिते महाकविश्रीबिल्हणस्य निम्नाङ्कितं पद्यं किं न प्रमाणयति कालिदासस्य काश्मीरदेशसम्भवत्वम्! तथा हि :—

सहोदराः कुंकुमकेसराणां भवन्ति नूनं कविताविलासाः।
न शारदादेशमपास्य दृष्टस्तेषां यदन्यत्र मया प्ररोहः॥

अपि च—

काव्यं येभ्यः प्रकृतिसुभगं निर्गतं कुंकुमं च,
छायोत्कर्षाद् भवति जगतां वल्लभं दुर्लभं च।
यस्मिन्नन्तः स्थितवति जगत्सारभूते प्रयाताः,
काश्मीरास्ते नियतमुरगाधीशरक्षास्पदत्वम्॥ बिल्हणस्य॥

गद्यकलाकलापप्रवीणो बाणः पद्यप्रबन्धरचनाधुरीणश्च कालिदासः उभावप्येतौ न स्यातां चेत्काश्मीरजौ काश्मीरजवत् र्तहि महाकविबिल्हणस्य गर्वोक्तिरियं कथमिव सामंजस्यमश्नुयात्। मन्यामहे प्रौढे वयसि कविरयमुज्जयिनीं गतो भवेन्महीभुजो विक्रमाङ्कस्य राजसभां सभाजयितुम्। परं तरुणे वयसि स काश्मीरानेव अधिजगाहे। यतः तरुणे वयसि विरचितयोः कुमारसम्भवमालविकाग्निमित्रयोः उज्जयिनीपरिचायकम् नोपलभ्यते किमपि वर्णनम्। मेघदूते तु पुनः

१. 'वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तराशा'मित्यपि वर्णनं कवेस्तत्तत्प्रदेशपरिचयं निपुणं प्रत्याययति।

उपलभ्यते शिप्रादीनां उद्यानानां च प्रत्यक्षदृष्टमिव किमप्यद्भुतं चित्रणम् । तदेतदपि पल्लवयति तस्य काश्मीरभवत्वम् ।

कालिदासस्य कीर्त्तिकौमुदी नूनमचिरेणैव दिग्दिगन्तरालव्यापिनी बभूव । तदीयामद्वितीयां काव्यकलां पुरस्कृत्य प्रस्फुरन्ति लोकविश्रुताः गणनातीताः सूक्तयः । तथा च वाणभट्ट :—

निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसान्द्रासु मंजरीष्विव जायते ॥

कोमलाकान्तपदावलिवल्लभेन श्रीजयदेवकविना अपि कालिदासः कविकुलगुरुरिति विरुदेन विभूषितः[1] । एवं च कविवरेण श्रीकृष्णमहाभागेनापि :—

अस्पृष्टदोषा नलिनीव दृष्टा हारावलीव ग्रथिता गुणौघैः ।
प्रियांकपालीव विमर्दहृद्या न कालिदासादपरस्य वाणी ॥

कालिदासमुद्दिश्य खल्वेकमाख्यानं लोकेषु प्रचरति, यत्कालिदासोऽयं पूर्वे वयसि एकदा कस्मिंश्चित्कन्दर्पोत्सवे तस्य विदुष्या जायया विद्योत्तमाख्यया साहित्यसंगीतकलामनाकलयन्, "अहो ! मुशलः किसलायते" इत्येवंविधं सपरिहासं कटुतरमवज्ञातः सन् गृहान्निर्गतः । इतस्ततः पर्यटतश्च तस्य सकलमप्यपमानवृत्तान्तमुपश्रुत्य तन्मुखात् कश्चन सिद्धतापसः करुणहृदयस्तं 'सरस्वतीमुपास्वे'ति सदयमुपदिदेश । कालिदासोऽपि तदीयममृतोपममुपदेशं श्रद्दधानः सत्वरं सरस्वतीमन्दिरमुपेत्य परमया भक्त्या वागधिदेवतामारराधे । सरस्वती च तदाराधनेन सुप्रसन्ना प्रत्यक्षा समभवत् । कालिदासश्च तां प्रत्यक्षां साक्षात्कृत्य शिरःप्रभृतिपादपर्यन्तं कतिपयैः श्लोकैर्वर्णयामास । तदाकर्ण्य रुष्टा भगवती शारदा, 'येन त्वं मानुषीमिव मामपि आशिखनखं वर्णितवान्, किन्न जानासि देवतानां रूपं वर्णयितुम् । तद्दूरे अपसर । शृङ्गारिकः कविर्भवे'त्यभिशशाप किलेति । कदाचित् सरस्वतीवर्णनकृतं दोषं परिमार्ष्टुकाम एव कालिदासः कुमारसम्भवे पार्वत्याः सर्वाङ्गवर्णनमकरोत् । पार्वत्याः सर्वाङ्गवर्णनं विहाय अन्यत्र कुत्रापि स स्त्रीवर्णनप्रसङ्गे सर्वाङ्गवर्णनं नाकार्षीत् ।

## कालिदासस्य भारती

मन्यामहे कालिदासस्य काव्यं खलु श्रृंगारभूयिष्ठमिति प्रत्याययितुमेव कथैषा प्रकल्पिता भवेत् । ततश्च कवित्वकलासम्पन्नः समुपलब्धवाग्देवतादिव्य-

१. कविवरजयदेवविरचितप्रसन्नराघवाभिधनाटकस्य प्रस्तावनायाम्—
'भासो हासः कविकुलगुरुः कालिदासो विलासः ।' इति ।

प्रसादः कालिदासः गृहं प्रतिनिवृत्य प्रेयसीं प्रत्याह "अनावृतकपाटं द्वारं देहीति।" तदा सापि विदुषी 'अस्ति कश्चिद् वाग्विशेष' इति तं सादरं पप्रच्छ। तदासौ प्रश्नस्यास्यादिमध्यान्तगतं पदमभिलक्ष्य 'कुमारसम्भवम्', 'मेघदूतम्', 'रघुवंशम्', चेति काव्यत्रयं कयापि प्रसादगुणगुम्फितया सहृदयहृदयसंवेद्यया गिरासगोचरया गिरा जुगुम्फ। 'अस्ती'त्यालम्ब्य 'अस्त्युत्तरस्यां दिशि देवतात्मा' इति कुमारसम्भवं, 'कश्चिदि'त्यालम्ब्य च "कश्चित्कान्ताविरहगुरुणा स्वाधिकारात्प्रमत्तः", इति मेघदूतं, 'वागि'त्युद्दिश्य च 'वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये', इति रघुवंशञ्च प्रणिनाय। नाटकचक्रेऽपि सुविख्यातं मालविकाग्निमित्रं, विक्रमोर्वशीयम्, अनन्यसामान्यपदमलंकुर्वाणमभिज्ञानशाकुन्तलं चेति नाटकत्रयं निबबन्ध। ऋतुसंहारश्रृंगारतिलकादयश्च केचनान्येपि प्रबन्धा अस्यैव कृतित्वेनाभिमन्यन्ते कैश्चित्, तत्रान्ये विप्रतिपद्यन्ते।

## कुमारसम्भवम्

केचिद्वदन्ति यत्कालिदासेन कुमारसम्भवस्य सर्गाष्टकमेव प्रणीतम्, तदुत्तरभागस्तु केनचिदन्येन प्रणीत इवाभाति। अतएव मल्लिनाथेन पूर्वसर्गाष्टकपर्यन्तमेव टीका कृता, उत्तरभागस्य तत्कृतटीकानुपलम्भाच्चेदमवसीयते नैतत्प्रामाण्यमर्हति। पूर्वं सप्तमसर्गान्तमेव मल्लिनाथ-टीकाऽऽसीत्। सप्तसर्गनिबद्धमेव काव्यमासीत्। इदानीमष्टमसर्गोऽपि क्वचिदुपलब्धो मल्लिनाथटीकानिबद्ध इति अष्टसर्गात्मकमेवेदं काव्यं कालिदासेन निबद्धमिति प्रवादो लब्धप्रचारः सञ्जातः। यदि अतोऽनन्तरमन्येऽपि सर्गाः मल्लिनाथव्याख्यासनाथिताः समुपलभ्येरन् तर्हि तेषामपि कालिदासप्रणीतत्वं सम्पद्येत इति कोऽयमभिनिवेशः पाश्चात्यपण्डितानां यया कयापि विधया कविकालादिनिर्णयकरः। इति तु कथमपि न बुद्धिपद्धतिमधिरोहति। अतः कविकालजन्मदेशादिनिर्णये निकषायमाणा मल्लिनाथविवृत्तिर्नैव प्रामाण्यकोटिमवगाहते।

किञ्च मल्लिनाथादिभिः कुमारसम्भवस्य टीकामाटीकमानैः आशीर्नमस्क्रियादिवस्तुनिर्देशस्य महाकाव्यलक्षणस्य प्रतिपादनादस्य महाकाव्यत्वमङ्गीकृतं विभाव्यते। 'सर्गैर्द्वादशभिर्युक्तमष्टादशभिरप्युत' इति नियमात्कथमिवाष्टसर्गात्मकस्यास्य महाकाव्यत्वं सिद्ध्येत्। तस्माद् अखिलमपि काव्यं कालिदासकृतमेव विभावनीयम्।

कुमारसम्भवं नाम कालिदासस्य सप्तदशसर्गोपनिबद्धम् आदिमहाकाव्यम् यत्र शिवपार्वत्योः विवाहादारभ्य कार्त्तिकेयज्जन्मनः तारकासुरवधस्य च सुरुचिरं काव्यकलापूर्णं वर्णनम् विहितम्। अस्मिन् हि काव्ये महाकाव्यानां निखिलानि

लक्षणानि समीचीनतया चरितार्थतां गतान्यवलोक्यन्ते,। भाषाया रमणीयता, भावानां गाम्भीर्यम्, छन्दसाम् औचित्यम्, रसानां च सरसः परिपाकः परिपूर्णविषयतामवगाहते। मानवीयान्तःप्रकृतेः सालंकारं स्वाभाविकं विश्लेषणम्, बाह्यप्राकृतिकदृश्यानां सजीवचित्रणम्, मानवमनोवृत्त्यनुगुणम् विशदवर्णनम् यादृशमत्र यौगपद्येन समपद्यत न तादृशमन्यत्र सुलभम्। नूनं भारतीयसंस्कृतेः तदीयप्राचीनपरम्परायाश्च किमपि सहृदयहृदयावर्जकं निरूपणं यथेदं ग्रथ्नाति न तथान्यत्र दृग्गोचरम्। कवेरस्य रूपनिरूपणचातुरी, लोकोत्तरं च तच्चित्रनिर्माणकौशलं न कस्य हृदयमानन्दतुन्दिलं कुरुते। कुमारसम्भवे अस्मिन् भगवत्याः पार्वत्याः सर्वाङ्गीणवर्णनमतीव सौन्दर्यशालि संवृत्तम्। 'अभ्युन्नतांगुष्ठनखप्रभाभिः', इत्यारभ्य 'सर्वोपमाद्रव्यसमुच्चयेने'त्यन्तैः एकोनविंशतिभिः पद्यैः सुसम्पन्नं वर्णनं न कस्य हृदयाल्हादि। एषु श्लोकेषु अन्तिमं श्लोकं तावत्प्रणिभालयन्तु रसिकाः। एष हि प्रकृतार्थमतिरिच्य किंचिदभिनवार्थान्तरमपि ध्वनयति वैलक्षण्येन[1] :

किञ्च :—सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन।
सा निर्मिता विश्वसृजा प्रयत्नात् एकस्थसौन्दर्यदिदृक्षयेव॥

अत्र पार्वतीसौन्दर्यवर्णनव्यतिरिक्तं किमपि प्रबन्धप्रकर्षपरम् अर्थान्तरमपि निर्दिशति कविः।

तच्चेदम्, 'यदत्र मदीयकाव्ये अनुपमोपमालंकाराणाम् कोमलकान्तपदावलीविन्यासानां यथाप्रदेशं सन्निवेशादिना यदतीव रामणीयकत्वमापादितम् तदपि कोविदैः सूक्ष्मेक्षिकया समीक्ष्यताम्, इत्यादिकमर्थान्तरमपि च सन्दर्भसंभृतं वरीवर्तीति सुतरां ध्वनितं भवति। तथा हि अत्र मदीये काव्ये, सर्वोपमाद्रव्याणां यथाप्रदेशं सन्निवेशितानां समुच्चयो हि मया प्रयत्नतो विहितः काव्यविश्वसृजा एकत्रैव काव्यसौन्दर्यदिदृक्षयेवेति भावः। तदेतत्कालिदासकाव्यं प्रकृतार्थमपास्य अर्थान्तरेणाप्यलंकृतमस्तीत्यप्यामनन्ति विसृष्टार्थविचक्षणाः परीक्षणचणाः विद्वांसः। एतादृगद्भुतगुणगरिम्णैव याथार्थ्येन तद्रचनागाम्भीर्यतलमनवगाहमाना अखिल-

१. एषा खल्वस्य कवेः पद्धतिः प्रतीयते यत्प्रकरणातिरिक्तं किमपि प्रबन्धपरमर्थमपि असौ वाक्पाटवेन ध्वनयति। तथा च, कुमारसम्भवस्यारम्भ एव प्रथमे श्लोके—यत्साहित्यार्णवस्य तलावगाहितया पारमेत्य एष कुमारसम्भवाख्यो नाम सन्दर्भः, पृथिव्यां मानदण्डहिमालय इव मयाऽपि काव्यजगत्यां मानदण्ड एव प्रत्युपस्थापितः काव्यानां सौष्ठवासौष्ठवपरीक्षणार्थम्। मदीयं काव्यमिदं कवितायाः सौष्ठवस्य मानदण्ड एवेति भावः।

साहित्यसम्पदा सनाथः महाटीकाकृत्स्वयं मल्लिनाथोऽपि उद्‌गृणाति कालिदासगिरमुद्दिश्य :—

कालिदासगिरां सारं कालिदासः सरस्वती।
चतुर्मुखोऽथवा साक्षाद् विदुर्नान्ये तु मादृशाः॥

अपि च पार्वत्या बिम्बाधरमधुरस्मितानि प्रकृतिप्रतानेषु अनुकृतानीव विभावयति कविः। तथा हि :—

पुष्पं प्रवालोपहितं यदि स्यात्
मुक्ताफलं वा स्फुटविद्रुमस्थम्।
ततोनुकुर्याद् विशदस्य तस्या-
स्ताम्रौष्ठपर्यस्तरुचः स्मितस्य॥

यद्येवं स्यात्तदाऽपि स्मितस्यानुकरणमेव सम्पत्स्यते न खलु वास्तविकत्वमिति भावः।

निर्झराणां जलकणेषु रविकिरणसंक्रान्तेषु कालिदासः इन्द्रधनुषः साक्षात्कारं करोति। तथा हि :–

सीकरव्यतिकरं मरीचिभिर्दूरयत्यवनते विवस्वति।
इन्द्रचापपरिवेषशून्यतां निर्झरास्तव पितुर्व्रजन्त्यमी॥

आदर्शसौन्दर्यनिदर्शनमपि वैलक्षण्येनारचयति—

स्थिताः क्षणं पक्ष्मसु ताडिताधराः
पयोधरोत्सेधनिपातचूर्णिताः।
बलीषु तस्याः स्खलिताः प्रपेदिरे
चिरेण नाभिं प्रथमोदबिन्दवः॥

कालिदासः रूपचित्रणे यादृशीं प्रयोगचातुरीमभिव्यनक्ति न तादृशीं कश्चिदन्यः। नायं प्रायेणावलम्बते अभिधावृत्तिम्, व्यञ्जनामेवाधिश्रित्य भूम्ना समुपवर्णयति। यदा महर्षिः अंगिरा हिमालयात् शङ्कराथं भगवतीं पार्वतीं याचमान आस्ते, तदा स्वपितुः सविधे स्थितायाः पार्वत्याः मनोदशाया यादृशं वर्णनमारचितं तत्कस्य मनसि कौतूहलं नावहति :

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी।
लीलाकमलपत्राणि गणयामास पार्वती॥

यद्यप्यत्र कश्चनालंकारविशेषो न व्यज्यते तथापि कविना कमलदलगणना-

वर्णनेन पार्वत्याः निसर्गलज्जालुतायाः, तन्मनोनुगतप्रणयोल्लासविलासस्य, तदाऽनन्दातिरेकसंगोपनप्रवृत्तेश्च यद् व्यंजनयोपवर्णनमारचितं तन्न कस्य वा विस्मयावहम्? शब्दलाघवेन विशदार्थवर्णनप्रवणतैव कवेरस्य वैशिष्ट्यं कवीतरेभ्यः।

न केवलं कविरयं प्रकृतेर्निपुणः परीक्षकः अपितु प्रकृतेर्निगूढरहस्यानामपि पारदृश्वा। प्रकृत्यनुगुणवर्णनचातुरी तु अस्मै सरस्वत्यैव उपायनीकृतेवावगम्यते। सकलमेव संस्कृतसाहित्यं कालिदासीयरुचिररचनारत्नावलीमयूखैः नितरामवभासमानं विलसति।

कुमारसम्भवे कृतं रतिविलापवर्णनं रघुवंशकृताऽजविलापवर्णनापेक्षया न कथमपि अनौज्ज्वल्यं वहति। तथा हि

गत एव न ते निवर्त्तते स सखा दीप इवानिलाहतः।
अहमेव दशेव पश्य मामविषह्यव्यसनेन धूमिताम्॥

किं च—

आत्मानमालोक्य च शोभमानमादर्शबिम्बे स्तिमितायताक्षी।
हरोपयाने त्वरिता बभूव स्त्रीणां प्रियालोकफलो हि वेषः॥

कीदृशं स्त्रीमनोभावानुगुणं स्वाभाविकं चित्रणम्।

## रघुवंशम्

रघुवंशं हि नाम महाकाव्यं रघुकुलोद्भवानां नृपाणां वंशवर्णनविषयकः कश्चन सारगर्भः सन्दर्भः। महामहिमशालिनो दिलीपपुत्रस्य रघोर्नाम्ना, सर्व एव इक्ष्वाकुवंशो रघुवंश इति ख्यातिं गतः। अस्येक्ष्वाकुवंशस्य रघुनाम्ना प्रसिद्धिहेतुस्तु कविना निम्नपद्ये समुद्भावितः—

'ततः समानीय स मानितार्थी
हस्तौ स्वहस्तार्जितवीरशब्दः।
वंशस्य कर्त्तारमनन्तकीर्तिं
सुदक्षिणायां तनयं ययाचे॥ [२।६४]

अस्मिन् काव्ये दिलीपरघ्वजदशरथादीनामूनत्रिंशद्भूपतीनां वर्णनं पल्लवितम्। रघुवंशाख्यं काव्यमिदं खलु सर्वैरेव महाकाव्यलक्षणैः समलङ्कृतम्। अस्मिन्नङ्गी वीरो रसः, करुणशान्तादयश्चाङ्गानि। प्रारम्भेऽस्मिन् 'वागर्थाविव सम्पृक्ता'वित्यादिना पद्येन पार्वती—परमेश्वरयोर्नमस्कारलक्षणमङ्गलपुरस्सरं वागर्थात्मकस्य काव्यस्वरूपस्य लक्षणमपि लक्षितमवगम्यते। 'वागर्थप्रतिपत्तये' इत्यनेन काव्यतत्त्वावगमाय काव्यमिदमपरिहार्यतया परिशीलनीयमित्यपि पाटवेन सङ्केतितं विभाव्यते। महाकाव्ये वर्णनीयाः सन्ध्यासूर्येन्दुरात्रिप्रदोषादयः सर्व

एव विषया अत्र यथास्थानं चारुतया वर्णिताः। काव्येऽस्मिन् नातिस्वल्पा नातिदीर्घाश्च ऊनविंशतिसर्गाः सन्निवेशिताः।

## रघुवंशस्य टीकाकाराः

रघुवंशस्य विंशतिभ्योऽप्यधिकाः श्रूयन्ते टीकाकाराः। तेषु दक्षिणावर्त्तनाथः, मल्लिनाथः, दिनकरमिश्रः, चरित्रवर्धनश्च मुख्याः। तत्रापि मल्लिनाथः सर्वोत्कृष्टत्वेनाद्रियते। तस्य 'सञ्जीवनी'समाख्या टीकाऽद्यत्वे जाता भूम्ना लब्धप्रचारा, लोकप्रिया च संवृत्ता।

रघुवंशमहाकाव्यम् कालिदासस्य प्रौढप्रज्ञाखनिप्रसूतं द्वितीयं महोज्ज्वलं रत्नम्। अस्मिन् हि काव्यस्य सर्वेऽपि उत्कृष्टा गुणा एकत्र संकलिता इवावगम्यन्ते। भाषा प्रसादगुणगुम्फिता, लालित्यसंवलिता, कमनीयकोमलपदावल्यलंकृता, सुपरिष्कृता, मधुरमधुरा, सालंकारा, अनुप्रासविन्यासोल्लासा, सर्वाङ्गपूर्णा च वरीवर्त्ति। अलंकाराणामुपमोत्प्रेक्षाश्लेषार्थान्तरन्यासादीनामपि सन्निवेशः चारुतरः सम्पन्नः। उपमालंकारविषये तु किमु वक्तव्यम्। उपमा त्वस्य निसर्गसिद्धा प्रेयसीव प्रतीयते। अस्य रचनासु उपमालता यादृशी पल्लविता पुष्पिता न तादृशी अन्यत्र कुत्रचित्। अतएव महाकविमेनमुद्दिश्य "उपमा कालिदासस्य"त्युक्तिरपि चरितार्थिता प्रतिभाति कात्स्न्र्येनेति।

## कालिदासस्य काव्यसुषमा

वास्तविकं तत्वं त्विदं यत् कालिदासस्य काव्यसुषमा इयत्तयावच्छेत्तुमेव न शक्यते। अस्य काव्येषु नाटकेषु च यत्कवित्वकलायाश्चित्रणचातुर्यं प्रतीतिपथमवतरति तदन्यत्र न सुलभम्। यः कोऽपि रसस्तेनानुगृहीतः स खल्वनन्यसामान्यतयोत्कर्षस्य पराकाष्ठां नीत इत्यभिहितपूर्वम्। नूनं कविसार्वभौमोऽयं सर्वानपि कवीश्वरानतिशेत इत्यत्र न काऽप्यत्युक्तिः। कालिदासस्योक्तिषु शब्दार्थयोः प्रतीतिः न मात्रयाऽपि क्वचिन्मन्थरीभवति। कालिदासस्य भारती किल सर्वत्र सुप्रसन्नैवाभातीति सर्वाभिमतः कल्पः।

यद्यपि कालिदासस्याखिला कृतिरेव चमत्कृतिपूर्णा, तथाऽपि क्वचित् क्वचित्तत्प्रातिभं ज्योतिः काव्यकलायाः पराकाष्ठामासादादुल्ललास। तन्निदर्शनदिशाऽत्र किञ्चिदिव प्रपञ्च्यते सुमनसां मनसः प्रमोदाय।

सीतायाः परित्यागः—रघुवंशस्य चतुर्दशसर्गगतं सीतायाः परित्यागचित्रणमुट्टङ्कयन् कविरुपश्लोकयति :—'स लक्ष्मणं लक्ष्मणपूर्वजन्मे'त्यारभ्य त्रिचत्वारिंशच्छ्लोकादारभ्य, 'तथेति तस्याः प्रतिगृह्य वाचम्' इत्यन्तम्। तत्रापि रमणीयतमानि रत्नानि सहृदयहृदयात्यन्ताह्लादकानि समुदाह्रियन्ते। तद्यथा—

'स शुश्रुवान् मातरि भार्गवेण, पितुर्नियोगात्प्रहृतं द्विषद्वत् ।
प्रत्यग्रहीदग्रजशासनं तदाज्ञा गुरूणां ह्यविचारणीया ॥
* * * * *
सा नीयमाना रुचिरान् प्रदेशान् प्रियङ्करो मे प्रिय इत्यनन्दत् ।
नाऽबुद्ध कल्पद्रुमतां विहाय, जातं तमात्मन्यसिपत्रवृक्षम् ॥
* * * * *
अथ व्यवस्थापितवाक्कथञ्चित् सौमित्रिरन्तर्गतवाष्पकण्ठः ।
औत्पातिकं मेघमिवाश्मवर्षं महीपतेः शासनमुज्जगार ॥
ततोऽभिषङ्गानिलविप्रविद्धा प्रभ्रश्यमानाऽऽभरणप्रसूना ।
स्वमूर्त्तिलाभप्रकृतिं धरित्रीं लतेव सीता सहसा जगाम ॥
* * * * *
श्वश्रूजनं सर्वमनुक्रमेण विज्ञापय प्रापितमत्प्रणामः ।
प्रजानिषेकं मयि वर्त्तमानं, सूनोरनुध्यायत चेतसेति ॥
वाच्यस्त्वया मद्वचनात्स राजा, वह्नौ विशुद्धामपि यत्समक्षम् ।
मां लोकवादश्रवणादहासीः श्रुतस्य किं तत्सदृशं कुलस्य ॥
कल्याणबुद्धेरथवा तवायं न कामचारो मयि शङ्कनीयः ।
ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः ॥
उपस्थितां पूर्वमपास्य लक्ष्मीं वनं मया सार्द्धमसि प्रपन्नः ।
तदास्पदं प्राप्य तयातिरोषात् सोढास्मि न त्वद्भवने वसन्ती ॥
निशाचरोपप्रतिभर्तृकाणां तपस्विनीनां भवतः प्रसादात् ।
भूत्वा शरण्या शरणार्थमन्यं कथं प्रपत्स्ये त्वयि दीप्यमाने ॥

इत्यादि ।

## उपमा कालिदासस्य

उपमा कालिदासस्येति लोकोक्तिमभिलक्ष्य किंचिदिवाधुना विविच्यते । उपमाविषये कविकुलचूडामणिः कालिदास इतरानखिलान् कवीश्वरान् नितरामतिशेत इति उक्तिः सुतरां ऋतम्भरेति मन्यामहे । न चेयं लोकख्यातिः आख्याति केवलं कालिदासीयकाव्येषु उपमाभूयिष्ठत्वमपितु उपमासौष्ठवमपि । यद्यपि बहुभिरन्यैः कवीश्वरैरपि उपमा समुपलालिता तथापि सा रामणीयकत्वेन परिपूर्णत्वेन याथातथ्येन प्रकृत्यनुरूपनिरूपकत्वेन च कालिदासीयोपमायाः तुलां नाधिरोहति । कालिदासस्योपमा यादृक्तया निमज्जयन्ती रसिकानानन्दसागरे, पाययन्ती कामपि लोकोत्तररसधारां, चमत्कुर्वन्ती चेतांसि विपश्चितामुपदिशन्ती

चानन्यसदृशानुपदेशान् आविष्कुर्वन्ती वा विविधभावावेशान्, यादृशं वा प्रभावमुपजनयन्ती सहृदयहृदयपटलेषु प्रतिभाति न तादृशमन्येषाम्। अस्योपमा आदधाति साकल्येनोपमेयानुरूप्यम्, स्वदते च पूर्णतया स्वारस्यसामंजस्यम्, न मनाग् जहाति नैसर्गिकत्वं चमत्करोति च चमत्कारित्वमपीत्यत्र नास्ति कस्यापि वैमत्यम्। तथा च रसिकानां मनोविनोदाय स्थालीपुलाकन्यायेन कानिचिन्निदर्शनानि अत्रोदाहरामः।

पुरस्कृता वर्त्मनि पार्थिवेन प्रत्युद्गता पार्थिवधर्मपत्न्या।
तदन्तरे सा विरराज धेनुर्दिनक्षपामध्यगतेव सन्ध्या॥

अवसानोन्मुखे दिवसे एकदा पश्चिमायामाशायामुपेयुषि भास्वति अपरतश्च समायान्त्यां रजन्यां तदुभयमध्यगतां सन्धिवेलां नरेन्द्रतत्पत्न्योश्च मध्यगतां धेनुं दिनक्षपामध्यगतया सन्ध्यया सहोपमिमानः कवीन्द्रोऽयं किमुपमासौष्ठवस्य परां कोटिं नावजगाहे? एष कवितल्लजः देशकालपरिस्थितिं सम्यगालोच्य तदानुगुण्येनैव तांस्तान् पदार्थान् तथा प्रयोक्तुमुद्युङ्क्ते याथातथ्येन यथा ते चित्रबद्धा इव दृक्पथमवतरन्तः चक्षुष्मतामभन्दमानन्दमुपजनयन्ति। अपरश्चायं विशेषोऽस्ति अस्योपमायाः, यदयमुपमामुखेन किमप्यद्भुतं विज्ञानानुगतं तत्त्वान्तरमप्याविष्करोति यत्र-तत्र। तथा हि:—

अप्यग्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धेः कुशली गुरुस्ते।
यतस्त्वया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः॥ [रघु० ६, ५, ४]

यथेदं भौतिकं जगत् उष्णरश्मेः सूर्यात् चैतन्यमाप्नोति तद्वत्त्वयापि, हे व्रतिन्! यस्मात् सूर्यतुल्यगुरोरशेषं ज्ञानमधिगतं कच्चित् स तव गुरुदेवः कुशली खलु?

सोऽयमितरकविजनोपमासु सुदुर्लभो विशेषः। कालिदासीयोपमासु यद् यत्र-तत्र ग्रथितानि उपमावस्तूनि सूक्ष्मेक्षणेन विभाव्यमानानि न केवलं कार्त्स्न्येन अनुपमतया घटितत्वात् तान्याल्हादयन्ति विदुषां मनांसि अपितु अन्तरा-अन्तरा इतिवृत्ततत्त्वमपि संकेतयन्ति सौष्ठवेन। तद्यथा:—

तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण।
उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव॥

मृगेन्द्राक्रान्तायाः नन्दिन्या अभिरक्षणे विफलं दिलीपं प्रत्युक्तिरियम्। कविरत्र मृगेन्द्राक्रान्तशोणितपारणां राहुग्रस्तया चान्द्रमस्या सुधया सहोपमिमानः कामपि भाविनीं परिणतिमावहति। राहुणा ग्रस्तापि चान्द्रमसी सुधा किंचित्कालानन्तरं यथाऽक्षता परिमुक्ता सती जनयति लोकानां लोचनानन्दम् तद्वदियं

धेनुरपि परिमुक्ता मृगेन्द्रान्नरेन्द्रमाह्लादयन्ती तस्मै मनोवांछितं वरं प्रदास्यति इत्यपि सुतरामनेन सङ्केतितं भवति । किञ्च—

पितुः प्रयत्नात्स समग्रसम्पदः शुभैः शरीरावयवैर्दिने दिने ।
पुपोष वृद्धिं हरिदश्वदीधितेरनुप्रवेशादिव बालचन्द्रमाः ॥

स रघुः पितुर्दिलीपस्य मनोहरैः शरीरावयवैः सूर्यरश्मेरनुप्रवेशाद् बालचन्द्रमा इव वृद्धिं पुपोष । इति कियत्सौन्दर्येणोपमेयं वैज्ञानिकतत्त्वमाविष्करोति यन्नैष चन्द्रमाः स्वयंप्रकाशः सूर्यरश्मिसंक्रमणेनैव प्रकाशं वृद्धिं चावाप्य परिपूर्णतामेति तद्वदेष रघुरपि दिलीपस्य तेजसः सर्वाङ्गीणां वपुषः सुषमां पूर्णतां च पुपोष । अहो ! कीदृशी पूर्णा मनोहारिणी चेयमुपमा ।

अपि च :—गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्य कामम् ।
गतो वदान्यान्तरमित्ययं मे माभूत्परीवादनवावतारः ॥

अत्र प्रकरणगतमर्थं विहाय कोप्यन्योऽपि अर्थः कविना ध्वन्यते । स चायं यत् साहित्यावबोधरूपं गुर्वर्थं महान्तमर्थं बुभुत्सुः अर्थी विद्यार्थी रघोः सकाशात् रघुवंशकाव्य[1]सकाशात् काममभीष्टार्थमनवाप्य वदान्यान्तरं गतः काव्यप्रबन्धान्तरं गत इति परीवादनवावतारो मा भूत् इत्येतत् रघुवंशस्य प्रबन्धान्तरेभ्यः सौष्ठवमावेदयितुमित्यर्थान्तरमपि गर्भितमत्र विभाव्यते ।[2]

---

१. नामैकदेशेन सर्वनामग्रहणमित्युक्तेः ।

कालिदासो यथा 'गुर्वर्थमर्थी'त्यस्य अनन्यसादृश्यमाविष्कुर्वन् कमप्यर्थविशेषमुपनिबध्नाति, तथैव चतुर्दशतमे सर्गे प्रतिपादितं निगूढं वर्ण्यवस्तुविशेषं व्यंग्यभंग्या प्रदर्शयन्नाह :—

तदेष सर्गः करुणार्द्रचित्तैर्न मे भवद्भिः प्रतिषेधनीयः ।
यद्यर्थिता निर्हृतवाच्यशल्यान् प्राणान् मया धारयितुं चिरं वः ॥

प्रकृतार्थव्यतिरिक्तः कोऽप्यन्यः प्रबन्धपरोऽर्थोऽप्यत्र ध्वन्यते । स चायं यत्करुणार्द्रहृदयैः सहृदयैः किमपि रमणीयतरः करुणरसमयः सीतानिर्वासवर्णनपरः अवश्यमनुवाच्यः प्रशंसनीयश्च । येनाहमात्मानं कृतार्थमाकलयेयम् इति हृदयेशयो भावः ।

इत्थमेव—कुमारसम्भवेऽपि "सर्वोपमाद्रव्यसमुच्चये"नेत्यादिना प्रकृतार्थं विहायात्र मनोहराणामलङ्काराणां, अगण्यकाव्योचितवस्तुतत्त्वानां च यथाप्रदेशं सन्निवेशं विधाय, कुमारसम्भवं नाम काव्यमिदं सविशेषं काव्यसौन्दर्याधायकान् रसाँश्च संयोज्य विरचितमिति रसिका विदाङ्कुर्वन्तु इत्यपि आवेदयति । एवं स्वकाव्यानां प्रकृतार्थसाचिव्येन किमपि सबहुमानं महिमानमपि ध्वनयतीति ।

# प्रकृतिचित्रणम्

किं च कालिदासस्य प्रकृतिचित्रणमपि अद्भुतम् चमत्कारि च। तथा हि रघुवंशस्य त्रयोदशे सर्गे चतुर्भिः श्लोकैः गंगायमुनयोः संगमं कीदृग् हृदयंगमतयोपगुम्फति :

क्वचित्प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा।
अन्यत्र माला सितपंकजानामिन्दीवरैरुत्खचितान्तरेव॥
क्वचित्खगानां प्रियमानसानां कादम्बसंसर्गवतीव पंक्तिः।
अन्यत्र कालागुरुदत्तपत्रा भक्तिर्भुवश्चन्दनकल्पितेव॥
क्वचित्प्रभा चान्द्रमसी तमोभिश्छायाविलीनैः शबलीकृतेव।
अन्यत्र शुभ्रा शरदभ्रलेखा रन्ध्रेष्विवालक्ष्यनभःप्रदेशा॥
क्वचिच्च कृष्णोरगभूषणेव भस्मांगरागा तनुरीश्वरस्य।
पश्यानवद्यांगि विभाति गंगा भिन्नप्रवाहा यमुनातरङ्गैः॥

कीदृशमहो ! चित्रार्पितमिव वर्णनम्। अपि च :—

शरीरसादादसमग्रभूषणा मुखेन सालक्ष्यत लोध्रपाण्डुना।
तनुप्रकाशेन विचेयतारका प्रभातकल्पा शशिनेव शर्वरी॥
संचारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम्।
प्रचक्रमे पल्लवरागताम्रा प्रभा पतंगस्य मुनेश्च धेनुः॥

अनयोरुभयोः श्लोकयोः उपमाश्लेषयोर्निदर्शनं न कस्य विस्मयावहम्।

कविरयं आर्यसंस्कृतिपरम्परामपि वस्तुगत्योपलालयति यत्र-तत्र प्रतिबिम्बयति च तां वैलक्षण्येन। तथा हि पंचभिः श्लोकैः भारतीयपरम्परानुगुणां जीवनपद्धतिम् कुलकेन वर्णयति रघूणामन्वयविवरणं चिकीर्षुः तद्विशेषणव्याजेन :

'सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम्।
आसमुद्रक्षितीशानामानाकरथवर्त्मनाम्॥
यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम्।
यथापराधदंडानाम् यथाकालप्रबोधिनाम्॥
त्यागाय सम्भृतार्थानां सत्याय मितभाषिणाम्।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम्॥
शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम्।
वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्॥''

(रघुणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन्।) इति

अपि च कुमाररघुजन्म प्रशंसयन् कविः भारतीयसंस्कृत्यनुगुणान् जातकर्मादिसंस्करान् वर्णयन् उपमाच्छटामपि प्रदर्शयति :—

स जातकर्मण्यखिले तपस्विना तपोवनादेत्य पुरोधसा कृते।
दिलीपसूनुर्मणिराकरोद्भवः प्रयुक्तसंस्कार इवाधिकं बभौ॥
श्रुतस्य यायादयमन्तमर्भकस्तथा परेषां युधि चेति पार्थिवः।
अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभवम्॥
स वृत्तचूलश्चलकाकपक्षकैरमात्यपुत्रैः सवयोभिरन्वितः।
लिपेर्यथावद् ग्रहणेन वाङ्मयं नदीमुखेनेव समुद्रमाविशत्॥
अथोपनीतं विधिवद् विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम्।
अवन्ध्ययत्नाश्च बभूवुरत्र ते क्रिया हि वस्तूपहिता प्रसीदति॥
धियः समग्रैः स गुणैरुदारधीः क्रमाच्चतस्रश्चतुरर्णवोपमाः।
ततार विद्याः पवनातिपातिभिर्दिशो हरिद्भिर्हरितामिवेश्वरः॥
महोक्षतां वत्सतरः स्पृशन्निव द्विपेन्द्रभावं कलभः श्रयन्निव।
रघुः क्रमाद्यौवनभिन्नशैशवः पुपोष गाम्भीर्यमनोहरं वपुः॥
अथास्य गोदानविधेरनन्तरं विवाहदीक्षां निरवर्त्तयद् गुरुः।
नरेन्द्रकन्यास्तमवाप्य सत्पतिं तमोनुदं दक्षसुता इवाबभुः॥
ततः प्रजानां चिरमात्मना धृतां नितान्तगुर्वीं लघयिष्यता धुरम्।
निसर्गसंस्कारविनीत इत्यसौ नृपेण चक्रे युवराजशब्दभाक्॥

ततो नृपतिर्दिलीपः सकलमपि राज्यभारं प्रभविष्णवे भविष्णवे रघवे समर्प्य हर्षजडेन पाणिना च तं संस्पृशन् भृशमभ्यनन्दत्। ततश्चार्यपरम्परानुकूलां दिवमारुरुक्षुर्नवतिनवाधिकां सोपानपरम्परां ततान चरमे वयसि। तथा हि :—

इति क्षितीशो नवतिं नवाधिकां महाक्रतूनां महनीयशासनः।
समारुरुक्षुर्दिवमायुषः क्षये ततान सोपानपरम्परामिव॥

अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे,
नृपतिककुदं दत्त्वा यूने सितातपवारणम्।
मुनिवरतरुच्छायां देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम्॥

राजधर्ममपि कियत्सौन्दर्येणोपदिदेश चतुरस्रतयासौ कविराजः —

भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम्।
अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः॥

रेखामात्रमपि क्षुण्णादामनोर्वर्त्मनः परम्।
न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः॥
प्रजानामेव भूत्यर्थम् स ताभ्यो बलिमग्रहीत्।
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः॥
सेनापरिच्छदस्तस्य द्वयमेवार्थसाधनम्।
शास्त्रेष्वकुंठिता बुद्धिर्मौर्वी धनुषि चातता॥
तस्य संवृतमन्त्रस्य गूढाकारेंगितस्य च।
फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव॥
जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः।
अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत्॥
ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्ययः।
गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव॥
अनाकृष्टस्य विषयैर्विद्यानां पारदृश्वनः।
तस्य धर्मरतेरासीद् वृद्धत्वं जरसा विना॥
प्रजानां विनयाधानाद् रक्षणाद् भरणादपि।
स पिता पितरस्तासां केवलं जन्महेतवः॥
स्थित्यै दंडयतो दंड्यान् परिणतुः प्रसूतये।
अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः॥
दुदोह गां स यज्ञाय सस्याय मघवा दिवम्।
सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम्॥
न किलानुययुस्तस्य राजानो रक्षितुर्यशः।
व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता॥
द्वेष्योपि संमतः शिष्टस्तस्यार्त्तस्य यथौषधम्।
त्याज्यो दुष्टः प्रियोऽप्यासीदंगुलीवोरगक्षता॥
तं वेधा विदधे नूनं महाभूतसमाधिना।
तथा हि सर्वे तस्यासन्परार्थैकफला गुणाः॥
स वेलाप्रवलयां परिखीकृतसागराम्।
अनन्यशासनामुर्वीम् शशासैकपुरीमिव॥

भारतीयपरम्परोपनतस्त्रीजनस्य भर्तृजनं प्रति निस्पृहप्रेमपारस्पर्यस्य प्रभूतमादर्शभूतं प्रदर्शनं कीदृशमालेख्यबद्धमिवोट्टङ्कितम् :—

किं वा तवात्यन्तवियोगमोघे, कुर्यामुपेक्षां हतजीवितेऽस्मिन्।
स्याद्रक्षणीयं यदि मे न तेजस्त्वदीयमन्तर्गतमन्तरायः॥

साऽहं तपः सूर्यनिविष्टदृष्टिरूर्ध्वं प्रसूतेश्चरितुं यतिष्ये ।
भूया यथा मे जन्मान्तरेऽपि त्वमेव भर्त्ता न च विप्रयोगः ॥
नृपस्य वर्णाश्रमपालनं यत् स एव धर्मो मनुना प्रणीतः ।
निर्वासिताऽप्येवमतस्त्वयाहं तपस्विसामान्यमपेक्षणीया ॥

* * * * *

कवित्वकलाकौशलमतिरिच्य कालिदासीयकृतिषु तदानीन्तनसामाजिकजीवने चरितार्थितानां तत्तद्भावविशेषाणां सन्निवेशोऽपि प्रतिबिम्बित इवावगम्यते। राज्ञो दिलीपस्य सम्राज्ञ्याः सुदक्षिणायाश्च मनसि कीदृशी प्रगाढा गोभक्तिरासीद् इति कियच्चारुतया चित्रयति :—

आस्वादवद्भिः कवलैस्तृणानां कण्डूयनैर्दंशनिवारणैश्च ।
अव्याहतैः स्वैरगतैः स तस्याः सम्राट् समाराधनतत्परोऽभूत् ॥
स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबन्धधीरः ।
जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत् ॥
प्रदक्षिणीकृत्य पयस्विनीं तां सुदक्षिणा साक्षत-पात्रहस्ता ।
प्रणम्य चानर्च विशालमस्याः शृङ्गान्तरं द्वारमिवार्थसिद्धेः ॥

* * * * *

स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्त्तयितुं प्रसीद ।
दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं महर्षेः ॥

[रघु० सर्ग २ श्लो० ५।६।२१।४५]

## प्रकृतिवर्णनम्

प्रकृतिवर्णनमपि कवेरस्यानितरसाधारणीं रमणीयतां बिभर्त्ति। नूनं कविरेष प्रकृतेः सूक्ष्मरहस्यानां पारदृश्वा । सत्यमेवाऽस्य प्रकृतिरूपनिरूपणानि आलेख्यबद्धानीव नेत्रपटलान्ते नरीनृत्यन्तीव अवलोक्यन्ते । तपोवनमावर्णयन् कीदृङ् मञ्जुलतया माधुर्येण चासौ शंसति :

वनान्तरादुपावृत्तैः समित्कुशफलाहरैः ।
पूर्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभिः ॥
आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः ।
अपत्यैरिव नीवारभागधेयोचितैर्मृगैः ॥
सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम् ।
विश्वासाय विहंगानामालवालाम्बुपायिनाम् ॥

आतपात्ययसंक्षिप्तनीवारासु निषादिभिः ।
मृगैर्वर्त्तितरोमन्थमुटजांगणभूमिषु ॥
अभ्युत्थिताग्निपिशुनैरतिथीनाश्रमोन्मुखान् ।
पुनानं पवनोद्धतैर्धूमैराहुतिगन्धिभिः ॥

अपि च वसन्तमुद्दिश्य कविः प्रपंचयति किमपि रोमांचकारि वर्णनम् ।

अभिनयान्परिचेतुमिवोद्यता मलयमारुतकम्पितपल्लवा ।
अमदयत्सहकारलता मनः सकलिका कलिकामजितामपि ॥
प्रथममन्यभृताभिरुदीरिताः प्रविरला इव मुग्धवधूकथाः ।
सुरभिगन्धिषु शुश्रुविरे गिरः कुसुमितासु मिता वनराजिषु ॥
श्रुतिसुखभ्रमरस्वनगीतयः कुसुमकोमलदन्तरुचो बभुः ।
उपवनान्तलताः पवनाहतैः किसलयैः सलयैरिव पाणिभिः ॥
ललितविभ्रमबन्धविचक्षणं सुरभिगन्धपराजितकेसरम् ।
पतिषु निर्विविशुर्मधुमंगनाः स्मरसखं रसखंडनवर्जितम् ॥
शुशुभिरे स्मितचारुतराननाः स्त्रिय इव श्लथशिंजितमेखलाः ।
विकचतामरसा गृहदीर्घिका मदकलोदकलोलविहंगमाः ॥

इत्यादिषु वसन्तर्तोः रमणीयतावर्णनसमकालमेव यमकावलिमनोज्ञतापि कस्य कौतुकं नावहति । अग्रे च दशरथमृगयावर्णनमनुसन्दधानः किमपि कौतूहलात्मकं वर्णनमारचयति परिहासपरम् :

तस्यापरेष्वपि मृगेषु शरान् मुमुक्षोः
कर्णान्तमेत्य बिभिदे निबिडोऽपि मुष्टिः ।
त्रासातिमात्रचटुलैः स्मरयत्सु नेत्रैः
प्रौढप्रियानयनविभ्रमचेष्टितानि ॥

कीदृशो विनोदमयो वाग्विलासः !

यदा दशरथशरेणाहतं पुत्रं ज्ञात्वा स वृद्धो मुनिः हस्तार्पितैर्नयनवारिभिस्तं भूमिपतिं शशाप :

दिष्ट्यान्तमाप्स्यति भवानपि पुत्रशोका-
दन्त्ये वयस्यहमिवेति तमुक्तवन्तम् ।
आक्रान्तपूर्वमिव मुक्तविषं भुजंगं
प्रोवाच कोसलपतिः प्रथमापराद्धः ॥

इति तदा तं अभिशापमपि कविः कलात्मकतया कीदृशेन हृदयंगमप्रकारेण वरत्वेन परिणमयति :

शापोऽप्यदृष्टतनयाननपद्मशोभे
सानुग्रहो भगवता मयि पातितोयम्।
कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो
बीजप्ररोहजननीं ज्वलनः करोति॥

नूनमजविलापवर्णनमपि अतीव मार्मिकम् सहृदयहृदयसंवेद्यं किमप्यपूर्वमेव प्रतिभाति भावावेशसंनिवेशविधौ। तदपि किंचित्समीक्ष्यताम् :

पतिरंकविषण्णया तया करणापायविभिन्नवर्णया।
समलक्ष्यत बिभ्रदाविलां मृगलेखामुषसीव चन्द्रमाः॥
विललाप स वाष्पगद्‌गदं सहजामप्यपहाय धीरताम्।
अभितप्तमयोपि मार्दवं भजते कैव कथा शरीरिषु॥
कुसुमान्यपि गात्रसंगमात्प्रभवन्त्यायुरपोहितुं यदि।
न भविष्यति हन्त साधनं किमिवान्यत्प्रहरिष्यतो विधेः॥
अथवा मृदु वस्तु हिंसितुं मृदुनैवारभते प्रजान्तकः।
हिमसेकविपत्तिरत्र मे नलिनी पूर्वनिदर्शनं मता॥
स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम्।
विषमप्यमृतं क्वचिद् भवेदमृतं वा विषमीश्वरेच्छया॥
अथवा मम भाग्यविप्लवादशनिः कल्पित एष वेधसा।
यदनेन तरुर्न पातितः क्षपिता तद्विटपाश्रिता लता॥

कीदृशं हृदयद्रावकं निरूपणम् कस्य सचेतसः चेतः आश्चर्याम्बुधौ न निमज्जयति इति।

## मेघदूतम्

मेघदूतं खलु गीर्बाणगीर्गीतिवाङ्मयशेवधौ एकं परमोज्ज्वलं रत्नमिवोद्भासते। अस्मिन् हि विरहसन्तप्तस्य यक्षस्य मानसी व्यथाऽतीव मार्मिकतया समुदञ्चिता। एतच्च मेघदूतं पूर्वमेघोत्तरमेघरूपे भागद्वये विभक्तम्। आज्ञाभंगापराधक्षुब्धेन अलकाधीश्वरेण कुवेरेण स्ववशंवदो यक्षः वर्षमात्रकालाय निर्वासितः। सोऽपि वराकः निजप्रेयसीवियोगविषण्णः अतिदूरे रामगिर्याख्ये पर्वते दुर्दैववशाद् उपनतानि दिनानि अमूनि यापयितुमुपचक्रमे। यथाकथंचिद् व्यतीतेष्वष्टमासेषु प्रावृडागमनवेलायां मेघमालयावगाहमानं नभोमंडलं लोचनगोचरीकृत्य मेघद्वारा प्रेयसीं हृदयवल्लभां प्रति प्रणयसन्देशावेदनावसरस्य कल्पनास्य मनसि समुन्मिमील। तथा च मेघं दूतत्वेन नियुयुक्षुः पूर्वमेघे रामगिरिपर्वतादारभ्यालकापुरीपर्यन्तं विशदवर्णनपुरस्सरं मार्गपरिचयं ददाति। उत्तरमेघे च पुनः अलकापुर्याः

स्वभवनस्य वर्णनपूर्वकं प्रेयस्याश्च विरहावेदनं कुर्वन्नन्ते प्रणयसन्देशं प्रददाति तस्मै मेघाय प्रेयस्यै समर्पयितुम्। इति "कश्चित्कान्ता विरहगुरुणा स्वाधिकारात्प्रमत्तः" इत्याद्येन "एतत् कृत्वा प्रियमनुचितप्रार्थनावर्तिनो मे" इत्यन्तेन च मन्दाक्रान्ताछन्दोनिबद्धैः पंचदशोत्तरशतश्लोकैरतिकमनीयं गीतकाव्यमिदं प्रणिनाय।

मेघदूतस्य भाषाऽतीव प्रांजला, परिमार्जिता, प्रवाहवाहिनी, सुमधुरा, प्रसादगुणशालिनी च। कल्पना च पुनरतीव रमणीया कलात्मिका कोमला वर्ण्यविषयानुकला चेति नापेक्षते वक्तव्यविशेषम्। तथा च मेघं प्रति याचनाप्रकारः कियान् मनोहारी :—

जातं वंशे भुवनविदिते पुष्करावर्त्तकानाम्,
जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः।
तेनार्थित्वं त्वयि विधिवशाद् दूरबन्धुर्गतोऽहम्
याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा॥

अहो मनोज्ञमिदं वर्णनम् पर्यालोच्य न कस्य मनसि समुदेति कौतूहलपरम्परा। अधमे निर्गुणे पुंसि लब्धकामापि याचना न वरम्, गुणाढ्ये पुरुषे तु पुनरसफलापि सा वरीयसी इति अर्थान्तरन्यासानुप्राणितः प्रेयोलंकार इति कियान् सुभगः। किं च

धूमज्योतिःसलिलमरुतां संनिपातः क्व मेघः,
संदेशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः।
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे,
कामार्त्ता हि प्रकृतिकृपणाश्चेतनाऽचेतनेषु॥

अत्र भौतिकविज्ञानतत्त्वज्ञापनपुरस्सरं 'धूमज्योतिःसलिलमरुतां संनिपातः क्व मेघ' इत्यादिकं भौतिकं तथ्यं सन्देशाहरणरूपं चेतनसाध्यमर्थमचेतनेन मेघेन साधयितुं प्रवृत्तस्य यक्षस्य तादृगौचितीमर्थान्तरन्याससमुपबृंहितेन विषमालंकारेण कियच्चारुतयोपपादयति कविरिति समीक्षणीयम्। अथ च

गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं,
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः।
सौदामिन्या कनकनिकषस्निग्धया दर्शयोर्वीम्,
तोयोत्सर्गस्तनितमुखरो मा स्म भूर्विक्लवास्ताः॥

अत्र सूचिभेद्यैस्तमोभिः इति सान्द्रतामवगमयितुं तमसः सूचिभेद्यमिति विशेषणमतीव चमत्कृत्याधायकम्। अपरं च—

जाने सख्यास्तव मयि मनः सम्भृतस्नेहमस्मा-
दित्थंभूतां प्रथमविरहे तामहं तर्कयामि।
वाचालं मां न खलु सुभगंमन्यभावः करोति,
प्रत्यक्षं ते निखिलमचिराद् भ्रातरुक्तं मया यत्॥

अत्र सुभगंमन्यभावः इति पदमतीव मर्मस्पृक्। यक्षः मेघं विज्ञापयन् सावधानं करोति यन्मां सुभगंमन्यभावः वाचालं न करोति खलु भ्रातः, अचिरादेव ते निखिलं प्रत्यक्षीभविष्यति यन्मयोक्तम्। एतेनैतदपि ध्वन्यते यत्सुभगमानिनामेष स्वभावो यदात्मनि स्त्रीणामनुरागारोपणं नाम।

मेघदूतेऽपि यथाऽन्यत्र काव्यमुखेन प्रकृतिचित्रणं हि कालिदासस्य वैशिष्ट्यं प्रत्याययति। अखिलविरहिणीसाधारणलक्षणानि समुत्प्रेक्षमाणोऽयं कुलकेनारचयति :

आलोके ते निपतति पुरा सा बलिव्याकुला वा
मत्सादृश्यं विरहतनु वा भावगम्यं लिखन्ती।
पृच्छन्ती वा मधुरवचनां सारिकां पंजरस्थां
कच्चिद् भर्त्तुः स्मरसि रसिके त्वं हि तस्य प्रियेति॥

उत्संगे वा मलिनवसने सौम्य निक्षिप्य वीणां
मद्गोत्रांकं विरचितपदं गेयमुद्गातुकामा।
तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथंचित्
भूयोभूयः स्वयमपि कृतां मूर्च्छनां विस्मरन्ती॥

शेषान्मासान्विरहदिवसस्थापितस्यावधेर्वा
विन्यस्यन्ती भुवि गणनया देहलीदत्तपुष्पैः।
मत्संगं वा हृदयनिहितारम्भमास्वादयन्ती
प्रायणैते रमणविरहेष्वङ्गनानां विनोदाः॥

अतीव कलात्मकं वर्णनम्। पुनश्च

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलायाम्
आत्मानं ते चरणपतितं यावदिच्छामि कर्त्तुम्।
अस्रैस्तावन् मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः॥

वस्तुतः कालिदासेन यक्षस्य तत्प्रेयस्याश्च विरहदशावर्णनमुखेन मानवीयान्तःप्रकृतेः मार्मिकं स्नेहस्पन्दनं करुणक्रन्दनं चित्रार्पितमिव काव्यमुखेन समर्पितम् :

तां जानीथाः परिमितकथां जीवितं मे द्वितीयं,
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम्।
गाढोत्कंठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां,
जातां मन्ये शिशिरमथितां पद्मिनीं वाऽन्यरूपाम्॥

अग्रे विरहोपनतदुःखस्य निरवधितामावेदयन् स्वपत्नीं सान्त्वयति :—

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ,
शेषान्मासान्गमय चतुरो लोचने मीलयित्वा।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं,
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु॥

ततः निरवधौ हेतुमाह :

नन्वात्मानं बहु विगणयन्नात्मनैवावलम्बे,
तत्कल्याणि त्वमपि नितरां मा गमः कातरत्वम्।
कस्याऽत्यन्तं सुखमुपनतं दुःखमेकान्ततो वा,
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण॥

यदा यक्षः स्वप्नावस्थायां प्रेयसीमालिंगितुकामः भुजयुगलं प्रसारयति तदा तस्य करुणादशामवलोक्य प्रकृतिरपि मर्मस्पृक्संवेदनयाऽश्रुपातं करोति इति प्रकृतेः सहानुभूतिमावेदयन् प्रपंचयति किमपि रोमांचकृद् वर्णनम् :

मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतोः,
लब्धायास्ते कथमपि मया स्वप्नसन्दर्शनेषु।
पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां,
मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति॥

एवं पूर्वमेघे विरही यक्षः सृष्टिसौन्दर्यम् विभावयन् विरहविषण्णं हृदयमाश्वासयति, उत्तरमेघे च प्रकृतिसमवेतमानवीयान्तःप्रकृतेः निसर्गजान् भावावेशान् अनुभूय भाविसम्मेलनस्य स्वर्णस्वप्नमभिनन्दयति।

वस्तुतः मेघदूतस्यानितरसुलभलोकप्रियत्वे विविधालंकारसमावेशसचिवमधुर-कोमल-पदविन्यासविलसितकमनीयकल्पनाप्रसूतकथावस्तुव्यतिरिक्तं तत्त्ववर्णनार्थम् यन्मन्दाक्रान्ताछन्दोनिबन्धनं नाम मन्यामहे कारणान्तरेषु तदपि प्रमुखं कारणम्। नूनं मन्दाक्रान्तयाऽस्मिन्सन्दर्भे सुवर्णे सुरभिशुभाधानमारचितम्। मन्दाक्रान्ताच्छन्दः किल मृदुलपदविन्यासविलसितम् यद्यपि सर्वत्र श्रवणमधुरं किमपि सुधानिष्यन्दि सङ्गीतमुपजनयति विशिष्य तु विप्रलम्भशृंगारकरुणकोमलभावावि-

श्चिकीर्षुसन्दर्भेषु । अस्य महिमा नितरां प्रशंसावधिमतिक्रामतितराम् अतएव कालिदासस्य मन्दाक्रान्तां प्रशंसन् महाकविः क्षेमेन्द्रः प्राह--

सुवशा कालिदासस्य मन्दाक्रान्ता विराजते।
सदश्वदमकस्येव काम्बोजतुरगांगना ॥

अमोघराघवप्रणेता कविवरो दिवाकरोऽपि कालिदासं यत् प्रशंसातिरेकेणाभ्यनन्दत् तन्मन्यामहे मेघदूतमभिलक्ष्यैव । तथा हि

रम्या श्लेषवती प्रसादमधुरा शृंगारसंगोज्ज्वला,
चाटूक्तैरखिलप्रियैरहरहस्सम्मोहयन्ती मनः।
लीलान्यस्तपदप्रचाररचना सद्वर्णसंशोभिता,
भाति श्रीमति कालिदासकविता कान्तेव कान्ते रता॥

मेघदूतस्य रचना शृंगारभूयिष्ठापि क्वचित् शिष्टतां न जहाति, अनुपालयति च नीति-मर्यादाम् । यक्षदम्पतिप्रणयनयं सर्वथाऽऽदर्शतयाभिरक्षति। दाम्पत्यनिष्ठामुपलालयन् कालिदासः वस्तुतो मेघदूतमुखेन प्रणयसिद्धान्तस्य निगूढतत्त्वं सन्दिशति निर्दिशति च यद् वियोग एव परिपोषयन् प्रेमतत्त्वं वास्तविकतया परिपक्वतायां परिणमयति। आप्याययति च वास्तविकं प्रेमपुष्पं विरह एव। एतदेव तत्त्वं साकल्येन पम्फुल्यमानं शृंगाररसालंकृतं कमनीयकल्पनारथारूढं मेघदूतरचनायां परिस्फुरति आरोपयति च काव्यमिदं गीतिकाव्येषु मूर्द्धाभिषिक्ते पदे । केचन विवेचकास्तु बलवद् व्यवतिष्ठन्ते यदि नाम कालिदासः मेघदूतातिरिक्तं किमपि काव्यान्तरं नाप्यरचयिष्यत्तदापि स केवलमेघदूतरचनयैव संसारस्य श्रेष्ठानां महाकवीनां श्रेणीमेव कविकुलगुरुत्वेन समलमकरिष्यत्। मेघदूतमुद्दिश्य चत्वारिंशत्प्रमिताः टीका आटीकिता दृश्यन्ते, या निर्विशंकं मेघदूतस्य व्यापकाध्ययनं, लोकप्रियत्वं च परिचाययन्ति। 'मेघे माघे गतं वय' इत्युक्तिरप्युपोद्वलयति पूर्वनिर्दिष्टं तत्त्वम् ।

## गीतिकाव्यं मेघदूतम्

कालिदासस्य मेघदूतं नाम गीतिकाकाव्यं गीतिकाकाव्यान्तरेषु मूर्द्धाभिषिक्तं शब्दालङ्काररसरीतिभावावेशविशेषदृशेति नास्त्यत्र कस्यापि मार्मिकस्य विप्रतिपत्तिः । परन्तु प्रायशः मेघदूतं कूलङ्कषमालोचयन्तो विद्वज्जनाः केवलमेतस्य बाह्याऽलङ्काराडम्बररूपं प्राकृतिकवर्णनात्मकमेव प्रशंसन्ति, प्राकृतिकदृश्यगिरिनिर्झरसरिद्वनावलिवर्णनमेव बहुश आलोचयन्ति, तदेव चास्य वैशिष्ट्यत्वेनाभ्युपगच्छन्ति । तदतिरिक्ततया यदि किञ्चिदालोचयन्ति तर्हि शृङ्गार-

रसस्याद्वितीयः कविरिति 'शृङ्गारे ललितोद्गारे च न कश्चिदन्यः कविः कालिदासस्य तुलां स्पृशति।' 'उपमा कालिदासस्येति' लोकोक्तिमभिसन्धाय वा अलङ्कारप्रसरे च तत्प्रशंसामादाय तद्यशः पताकामुद्वेल्लयन्ति नाऽतोऽधिकं किञ्चित्क्वचिद्विलोक्यते। एतावतैव च कालिदासं महाकविपदेन विभूषयन्ति ते, इति कस्य न चक्षुष्मतः कौतूहलमावहेत्। मन्ये एतन्मात्रकथनं कवेः यशोधवलिम्नः केवलमाविलीकरणमेव। यस्य खलु महाकवेः काव्यपटले विश्वप्रकृतेरान्तरस्मनोनिगूढरहस्यजातमगाधसौन्दर्यञ्च प्रव्यक्तं प्रस्फुटितमनुभूयते, यस्य च दिव्यवचनावलिषु तत्किमपि विश्वात्मन आन्तरं ज्योतिरानन्दमयं शतकृत्वः सहस्रकृत्वश्च समुद्भासते, यस्य वा काव्यामृतमयसङ्गीतेषु किलानन्ता मधुरस्वरलहर्यः प्रतिध्वनिताः श्रूयन्ते, तं दिव्यपीयूषवर्षिणं महाकविसार्वभौमं साधारणकविश्रेण्यामुपस्थापयितुं ये नाम शृङ्गारिकोऽयम्, उपमाकविरयम्, इत्याद्यांशिकगुणावलिमालम्ब्य प्रयतन्ते, ते खलु करुणार्हा एव कविकुलगुरोः काव्यकलामणिरमणीयरश्मिराशिमनाकलयन्तो वराकाः। को वाऽसौ रसः, कतमोऽसावलङ्कारः, को नामासौ गुणः, यः खलु कालिदासीयकाव्येषु पूर्णपवित्रमतया परिफुल्लयमानो रसिकानां नयनानन्दकरो न भवति। कालिदासस्य कृतिचमत्कृतिलतिमियत्तया परिच्छेत्तुं को नामालङ्कर्मीणः इति।

## मेघदूतस्य सौष्ठवम्

कालिदासस्य भणितिषु विलसद्वाग्विलासः न केवलं लौकिकसौन्दर्यपिपासुनरनारीहृदयं तादृशरसास्वादेन सन्तर्पयति अपितु तदन्तर्गामिप्रवाह अध्यात्मानन्दमयं तत्त्वमपि प्रदर्शयति चक्षुर्मद्भ्यस्तद्रसपिपासुभ्यः सहृदयेभ्यः। वस्तुतो विमृश्यमाने, तादृशोद्दामपरमानन्दरसास्वादनमेव सत्कवेः कवितायाश्चरमोद्देश्यत्वेन प्रक्लृप्तं विवेचकैः। महाकविः कालिदासस्तु तादृशरससम्पादने सर्वाग्रणीर्मणिरिति विगतसन्देहम्। एतस्मिन् मेघदूताख्ये विरहमिलनसन्दर्भेऽपि एतादृशामृतरसोऽतीव सौन्दर्येण सम्भृतः। तञ्च तलावगाहिनः पारदर्शिनो मार्मिका एवास्वादयितुं क्षमाः। तथा च निर्दिशति कविः।

आनन्दोत्थं नयनसलिलं यत्र नान्यैर्निमित्तैः,<br>
नान्यस्तापः कुसुमशरजादिष्टसंयोगसाध्यात्।<br>
नाऽप्यन्यस्मात् प्रणयकलहाद्विप्रयोगोपपत्तिः,<br>
वित्तेशानां न च खलु वयो यौवनादन्यदस्ति॥

यत्र तावत्पूर्वमेघे विरही यक्षः प्रकृतिसौन्दर्यं चित्रयन् स्वकीयं विरहव्याकुलितं हृदयं सान्त्वयति तत्रोत्तरमेघे स्वप्रेयस्या अतीतानागतमिलनमाधुर्यस्य स्वप्नसृष्टौ विहरति। यक्षः खल्वलकापुर्याः स्वभवने विराजमानां विरहकातरां स्व-

प्रेयसीं प्रत्येकस्मिन् वस्तुनि सम्पश्यन्नद्वैतवादं प्रतिपादयन् प्रेम्णः पराकाष्ठामधिगाहते ।

प्रासादे सा पथि पथि च सा पृष्ठतः सा पुरः सा ।
सा सा सा सा जगति सकले कोऽयमद्वैतवादः ॥

तमिममद्वैतवादं भूयोऽप्युद्वेल्लयन्नाह मेघमुद्दिश्य--

तं जानीथाः परिमितकथां जीवितं मे द्वितीयं,
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां,
जातां मन्ये शिशिरमथितां पद्मिनीं वाऽन्यरूपाम् ॥

नूनं विरहपीडितस्य व्याकुलहृदयस्य कीदृशी चमत्कारिणीयं मर्मस्पृग्गाथा ? इति दिक् ।

इति दिङ्मात्रं मेघदूतविषये समुल्लिख्य मेघदूतपद्येनैव तदधुना विसृजामः --

एतत्कृत्वा प्रियमनुचितप्रार्थनावर्त्तिनो मे
सौहार्दाद्वा विधुर इति वा ह्यनुक्रोशबुद्ध्या ।
इष्टान्देशान् जलद ! विचर प्रावृषा सम्भृतश्री-
र्माभूदेवं क्षणमपि च ते विद्युता विप्रयोगः ॥

'माभूदेवं क्षणमपि च ते विद्युता विप्रयोग' इत्यन्तिमेन पदेन तु कालिदासः साहित्यमहाम्बरं विद्युच्चाकचक्यमिव चारुतया चमच्चकार ।

## कालिदासस्य नाट्यकला

सम्प्रति कालिदासस्य काव्यकलाप्रदर्शनं निदर्शनमात्रं कृत्वा तन्नाट्यकलामभिलक्ष्य किंचिदिव प्रपञ्च्यते । संस्कृतसाहित्यमहार्णवे वाग्देवताविलासः कालिदास एव सर्वोत्कृष्टः नाट्यकलाकारः अस्तीति सर्वैः कविकोविदैरभिमन्यते । अतएव कविकुलगुरुरित्युपाधिनापि असौ विभूष्यते । कालिदासेन मालविकाग्निमित्रं विक्रमोर्वशीयमभिज्ञानशाकुन्तलमिति नामधेयानि त्रीणि नाटकरत्नानि निरमायिषत । तेषु नाट्यकलायाः पूर्णपरिपाकस्तु खल्वभिज्ञानशाकुन्तल एव सम्प्रतिपन्नः । अभिज्ञानशाकुन्तले संप्रस्तुतेन नाट्यनैपुण्येनैव कविरसौ विश्वप्रांगणे समस्तनाट्यकृत्समाजे अग्रगण्यतामुपलम्भित इत्यत्र तु कः सन्देहावसरः ? अत्र तु को नाम संशयीत यत्कालिदासः खलु प्रकृतेः सूक्ष्मनिरीक्षणपटुः कविः । प्रकृतेर्मोहमये पाशे हि वश्येन्द्रिया मुनयोऽपि कथमिव निपतन्तीति प्रदर्शनपुरस्सरं समधिगतसकल-

राज्यसम्पदः समास्वादितसमस्तभोगविलासोल्लासा अपि जना कामकशावशंवदा, भृङ्गा इव नवविकसितकमलावलिषु, पतङ्गा इव दीपशिखासु, कुरङ्गा इव मृदुमधुरवीणाझङ्कृतिषु कथमिवात्मनः समर्पयन्तो दृश्यन्ते, इत्यादिनिखिलं यत् प्रकृतिनटीकूटकापट्यपाटवं स्वनाट्यपटले प्रतिबिम्बितं न तत्क्वचिदन्यत्र नयन विषयीकृतम्।

एवमस्य महाकवेः कृतित्वेन प्रसिद्धानि त्रीणि नाटकानि, मालविकाग्निमित्र-विक्रमोर्वशीय-अभिज्ञानशाकुन्तलाभिधानि विलसन्ति कयापि समुज्ज्वलयाऽऽभया प्रगुणीकृतानि गीर्वाणवाण्या मन्दिरस्य स्वर्णकलशायमानानि। त्रीण्यप्येतानि कालिदासकृतान्येवेति सर्वोतमः कल्पः। तत्र बलवान् हेतुस्तु कालिदास-चरित्र-चित्रणसाजात्यमेवेति।

## अभिज्ञानशाकुन्तलम्

तत्र तावद् अभिज्ञानशाकुन्तलं नाम नाटकं हि किल कालिदासस्य त्रिष्वपि नाटकेषु परमोत्कृष्टं, मनोरमकथागुम्फनमाधुरीधुरीणं नवाभिनवकल्पनालंकृतं भव्यभावावेशसम्भृतं च वरीवर्त्ति अनन्यसामान्यम् :

'काव्येषु नाटकं रम्यं तत्र रम्या शकुन्तला।'

इत्यत्रेयं लोकोक्तिरपि पूर्णतया घटते। 'शाकुन्तलं' हि कालिदासस्य सर्वस्वमभिधीयते। नाटकमिदं मनोविज्ञानदिशा पर्यालोच्यमानम् किमपि अपूर्वमानन्दं वितनोति। तरुणहृदयस्य दुष्यन्तस्य, तरुण्याः शकुन्तलायाः सन्दर्शनारम्भात् कीदृशः निसर्गसंवेल्लितः क्रमिकः स्नेहविकासः समुज्जृम्भित इति प्रदर्शयितुकाम इव कविः शकुन्तलायाः सर्वाङ्गीणं रूपनिरूपणमकृत्वा तत्तारुण्यमात्रलक्षकं वर्णनमातनुते प्रथमांके। शकुन्तलावलोकनसमकालमेव दुष्यन्तः किंचिद् विस्मयापन्न इव समुदाजहार—

"अहो मधुरमासां दर्शनम्। लब्धमद्य नेत्रनिर्माणफलम्।
मानुषीषु कथं वा स्यादस्य रूपस्य सम्भवः।[1]
न प्रभातरलं ज्योतिरुदेति वसुधातलात्॥

१. अस्मिन् पद्ये, कविः शकुन्तलारूपवर्णनातिरिक्तं, कञ्चिन्नाटकपरमप्यर्थमनुबध्नाति। अस्य अभिज्ञानशाकुन्तलनामधेयस्य रूपस्य रूपकस्य मानुषीषु रचनासु कथमिव सम्भावना भवेत्। कुतः? प्रभातरलं ज्योतिर्हि वसुधातलान्नैवोदेति। दिव्यगुणोपेतस्य मादृशस्य कवितल्लजस्यैव प्रभातरलं काव्यज्योतिरिदमुद्भवितुमर्हति नान्यतः कस्माच्चिज्जडमतेरिति भाव इत्यभिज्ञानशाकुन्तलस्य नाटकान्तरात् सौष्ठवं दिव्यत्वञ्च प्रत्याययति।

पुनः क्षणं किंचिद् विभाव्य

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो जनस्य।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥"

अहो प्रथमसन्दर्शन एव कथमिव खल्वाखेटतां गतो वराको दुष्यन्तः आश्चर्यचुम्बितान्तःकरणोऽशरणः तापसकन्यकायाः सौन्दर्यस्य। मन्त्रमुग्ध इव आत्मगतमवमृशति :

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू।
कुसुममिव लोभनीयं यौवनमंगेषु सन्नद्धम् ॥

भूयोऽपि मनसि परामृशति :

अनाघ्रातं पुष्पं किसलयमलूनं कररुहै-
रनाविद्धं रत्नं मधु नवमनास्वादितरसम्।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघम्,
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥

तां वल्कलधारिणीं हृदयहारिणीं शकुन्तलामवलोक्य दुष्यन्तो मनसि विभावयति :—

इदमुपहितसूक्ष्मग्रन्थिना स्कन्धदेशे
स्तनगुरुपरिणाहच्छादिना वल्कलेन।
वपुरभिनवमस्याः पुष्यति स्वां न शोभां
कुसुममिव पिनद्धं पाण्डुपत्रोदरेण ॥

पाण्डुपत्रेण पिनद्धं कुसुमं कदाचित् स्वशोभां नापि परिपुष्येन्नाम किन्तु काममनुरूपमस्या वपुषो वल्कलं तु अलंकारश्रियं पुष्यत्येव। अपि च—

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥

निसर्गसुषमासम्पन्नस्य शकुन्तलासौन्दर्यस्य कीदृशं मनोज्ञं चित्रणम्। द्वितीयांके च कविः शकुन्तलाया रूपमुपवर्णयन्नाह :

यत्सकललोकवर्तिरूपोच्चयेन काचिदियं लोकोत्तरा स्त्रीरत्नसृष्टिर्मनसैव कृता विभाव्यते न तु हस्ताद्यवयवैः। तथा हि

चित्ते निवेश्य परिकल्पितसत्त्वयोगाद्,
रूपोच्चयेन विधिना मनसा कृता नु।

स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे,
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥

षष्ठांके चित्रार्पितां शकुन्तलामुपवर्णयन्नाह :

दीर्घापांगविसारिनेत्रयुगलं लीलांचितभ्रूलतं,
दन्तान्तःपरिकीर्णहासकिरणज्योत्स्नाविलिप्ताधरम् ।
कर्कन्धुद्युतिपाटलौष्ठरुचिरं तस्यास्तदेतन्मुखं,
चित्रेऽप्यालपतीव विभ्रमलसत्प्रोद्भिन्नकान्तिद्रवम् ॥

अहो नु खलु वर्णनचातुरी ? चित्रबद्धाऽपि शकुन्तला आलपतीव भासते । अपि च

अस्यास्तुंगमिव स्तनद्वयमिदं निम्नेव नाभिः स्थिता,
दृश्यन्ते विषमोन्नताश्च बलयो भित्तौ समायामपि ॥
अंगे च प्रतिभाति मार्दवमिदं स्निग्धप्रभावाच्चिरं,
प्रेम्णा मन्मुखमीषदीक्षत इव स्मेरा च वक्तीव माम् ॥

कालिदासस्य चित्रकलावैदग्ध्यस्य निदर्शनान्तरमपि नेत्रातिथीकरणीयम् । शकुन्तलायाः स्वयमुल्लिखितमपूर्णचित्रमवलोक्य दुष्यन्तः त्रुटिं दर्शयति :—

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी,
पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः ।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः,
श्रृंगे कृष्णमृगस्य वामनयनं कंडूयमानां मृगीम् ॥

अत्र हि यूनां सन्नद्धयौवनां युवतिं प्रति निसर्गसुलभे दृश्यासक्तिः इति कियच्चारुतया कविरवगमयति । अग्रे च पुनः शकुन्तलां प्रत्यात्मनो बलवतीमासक्तिं निह्नोतुमनीशानः दुष्यन्तः विदूषकमावेदयति स्वमनोगतां निरतिशयसुषमां शकुन्तलायाः । विदूषकश्च तत्सौन्दर्यनिरूपणं तदभिलाषाविष्करणं च मनागप्यनास्वदमानः राजानमधिक्षिपति व्यंग्यभंग्या "यथा कस्यापि पिंडखर्जूरैरुद्वेजितस्य तिन्तिण्यामभिलाषो भवेत्तथा स्त्रीरत्नपरिभाविनो भवत इयमभ्यर्थना", ततः नृपतिरुपालम्भते "न तावदेनां पश्यति येनैवमवादीः," कीदृशं मानवस्वभावसुलभं कथनोपकथनम् । अग्रे च पंचमाङ्के दुष्यन्तकृतप्रत्याख्यानप्रसंङ्गे शकुन्तलायाः सरोषं पुरुवंशाधिक्षेपणम् "अनार्य, आत्मनो हृदयानुमानेन पश्यसि क इदानीमन्यो धर्मकंचुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते । .....सुष्ठु तावदत्र स्वच्छन्दचारिणी कृतास्मि । याहमस्य पुरुवंशप्रत्ययेन मुखमधोहृदयस्थितविषस्य

हस्ताभ्याशमुपागता" इति अवमानितायाः, प्रवंचितायाः, प्रत्याख्यातायाः, प्रपीडितायाः, संविषण्णायाः शकुन्तलायाः वागग्निवर्षा कर्णपुटाभ्यां निपीय, आविद्धहृदय इव, सर्पाघ्रात इव, दुष्यन्तस्तूष्णीमास्ते। नेदानीं परामृशति तस्याः अपरिस्फुटशरीरलावण्यम् न चोपलालयत्यात्मनः मानसीं कामकलाम्। समीचीनतया चानुभवति तस्याः पुण्यशीलायास्तापसकन्यकायाः हृदयस्य पवित्रतां, अनुशीलयति चान्तरात्मनः परिग्लानिं, विभावयति पश्चात्तापवृत्तिमसद्वृत्तस्य हृदयस्य। तदेतत्सर्वमपि निसर्गानुस्यूतमिव औचितीमनतिक्रममाणं वर्णनं सहृदयहृदयमात्रसंवेद्यं गिरामगोचरं कविनोपनिबद्धम्। पुनश्चान्ते मारीचाश्रमे तपोवनसंवर्द्धितायाः कैतवानभिज्ञायाः निरागसः शकुन्तलायाः प्रत्याख्यानोपनतानुतापाक्रान्तचित्तस्य तादृशापराधं परिमार्ष्टुकामस्य क्षमां याचितुकामस्य दुष्यन्तस्य शकुन्तलायाश्चरणयोः प्रणिपातः।

सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते,
किमपि मनसः सम्मोहस्तदा बलवानभूत्।
प्रबलतमसामेवंप्रायाः शुभेषु प्रवृत्तयः,
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशंकया॥

इति दुष्यन्तः शकुन्तलायाश्चरणयोर्निपतति, आत्मानं सर्वात्मना समर्पयति। सरलहृदया विशुद्धसत्वा निर्मला च शकुन्तला स्त्रीस्वभावात् साभिनिवेशं तमुत्थापयति। तत्सर्वस्यापि नृपतिकृतगर्हितव्यापारस्य आत्मनः पुराकृतमेव किमपि अपुण्यमिव बीजत्वेनोद्भावयति किल। "उत्तिष्ठत्वार्यपुत्रः, नूनं मे सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणाममुखमासीद् येन सानुक्रोशोऽप्यार्यपुत्रो मयि विरसः संवृत्तः।" नूनमेतत्पूर्णपरिपाकपरिणतं चतुरस्रतयौचितीमवगाहमानं लोकोत्तरं चित्रणम्।

शाकुन्तलेऽपि कालिदासस्य रूपचित्रणचारुता पराकाष्ठामभ्युपपन्ना। यत्किमप्युपवर्णयत्यालेख्यबद्धमिव, चित्रार्पितमिव तत्तथा घटयति यथा वाग्विषयतामतिक्रामति। नूनं तस्य रचनाऽनुभूतिविषयतां यथावगाहते न तथा वाणीविषयताम् तदपि किंचिदत्र निदर्शनदिशा प्रस्तूयते :—

भ्रमरव्याकुलितां शकुन्तलां वीक्ष्य किमप्यद्भुतमेवावगमयति सूक्ष्मदर्शित्वं स्वकीयम्

यतो यतः षट्चरणोऽभिवर्त्तते
ततस्ततः प्रेरितलोललोचनः।
विवर्त्तितभ्रूरियमद्य शिक्षते
भयादकामापि हि दृष्टिविभ्रमम्॥

अथ च षट्चरणं सम्बोध्य

चलापांगां दृष्टिं स्पृशसि बहुधा वेपथुमतीम्,
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।
करौ व्याधुन्वन्त्याः पिबसि रतिसर्वस्वमधरम्,
वयं तत्त्वान्वेषान्मधुकर! हतास्त्वं खलु कृती॥

इत्यकल्पनीयया कल्पनयाऽऽत्मनो हतविधित्वं मधुकरस्य च कृतित्वमुपपादयति। नृपः पुनश्च तरुगुल्मलतादीन् सिञ्चन्तीं शकुन्तलां चित्रमिवाकलयति:

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणात्,
अद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः।
बद्धं कर्णशिरीषरोधि वदने घर्माम्भसां जालकम्,
बन्धे स्रंसिनि चैकहस्तयमिताः पर्याकुला मूर्द्धजाः॥

आत्मानं प्रत्याकृष्टां शकुन्तलामाकलय्य दुष्यन्तश्चिन्तयति :—

वाचं न मिश्रयति यद्यपि मद्वचोभिः
कर्णं ददात्यवहिता मयि भाषमाणे।
कामं न तिष्ठति मदाननसम्मुखी सा
भूयिष्ठमन्यविषया न तु दृष्टिरस्याः॥

द्वितीयाङ्केऽपि च पुनः किंचिदीदृशमेव प्रकृतिपल्लवितं वर्णनम् :

दर्भाङ्कुरेण चरणः क्षत इत्यकांडे
तन्वी स्थिता कतिचिदेव पदानि गत्वा।
आसीद् विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम्॥

मन्यामहे रूपचित्रणकलायामितरे कवयः कालिदासस्य कलामपि न स्पृशन्ति। दुष्यन्तशरभयाद्धावन्तं मृगं चित्रयन्नुपन्यस्यति :

ग्रीवाभंगाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः,
पश्चार्द्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम्।
दर्भैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा,
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्याम् प्रयाति॥

इदं तु खलु धावतो मृगस्य मनोहारि चित्रणम्। अग्रे च पुनः मृगमनुप्रधावतामश्वानां चित्रणं त्वतीव कौतुकावहम् :

मुक्तेषु रश्मिषु निरायतपूर्वकायम्
निष्कम्पचामरशिखा निभृतोर्ध्वकर्णाः ।
आत्मोद्धतैरपि रजोभिरलंघनीया
धावन्त्यमी मृगजवाक्षमयेव रथ्याः ॥

प्रथमाङ्के महाकविरेष रथगतिं निरूपयन्नाह :

यदालोके सूक्ष्मं व्रजति सहसा तद् विपुलताम्,
यदर्द्धे विच्छिन्नं भवति कृतसन्धानमिव तत् ।
प्रकृत्या यद् वक्रं तदपि समरेखं नयनयो-
र्न मे दूरं किंचित् क्षणमपि न पार्श्वे रथजवात् ॥

शकुन्तलायाः पतिगृहं प्रति विसर्जनवेलायां महर्षिः कण्वः कीदृङ्मर्मस्पृग्वचोभिः स्वोद्गारमावेदयति :--

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कंठया,
कंठस्तम्भितवाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमपि स्नेहादरण्यौकसः,
पीडयन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥

अग्रे शकुन्तलामाशीराशिभिः मर्मभेदिभिः सम्भावयति :--

ययातेरिव शर्मिष्ठा भर्त्तुर्बहुमता भव ।
पुत्रं त्वमपि सम्राजं सेव पुरुमवाप्नुहि ॥

'वत्सौ भगिन्याः पन्थानमादेशयताम् ।' तथा कुर्वन्तौ तौ दृष्ट्वा कयापि गद्गदया गिरा कुलपतिः वनलताः सम्बोध्य भो भोः सन्निहितवनदेवतातपोवनतरवः :

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या,
नादत्ते प्रियमंडनापि भवतां स्नेहेन या पल्लवम् ।
आदौ वः कुसुमप्रवृत्तिसमये यस्या भवत्युत्सवः,
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥

पतिगृहं गन्तुमुद्युक्तायाः शकुन्तलाया गमनवृत्तान्तमतीव मार्मिकं संवृत्तम् । अग्रे काश्यपः शकुन्तलां गृहिणीकर्त्तव्यमुपदिशति :

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने,
भर्त्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।

भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी,
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥

गोतमी— एतावान् वधूजनस्योपदेशः । जाते ! एतत्खलु सर्वमवधारय ।

काश्यपः— वत्से परिष्वजस्व मां सखीजनं च ।

शकुन्तला— तात इत एव किं प्रियंवदाऽनसूये सख्यौ निर्वर्त्तिष्येते ।

काश्यपः— इमेऽपि प्रदेये । न युक्तमनयोस्तत्र गन्तुम् । त्वया सह गोतमी यास्यति ।

शकुन्तला— पितरमाश्लिष्य कथमिदानीं तातस्यांगात्परिभृष्टा मलयतटोन्मूलिता चन्दनलतेव देशान्तरे जीवनं धारयिष्ये ?

काश्यपः— किमेवं कातराऽसि ?

अभिजनवतो भर्त्तुः श्लाघ्ये स्थिता गृहिणीपदे,
विभवगुरुभिः कृत्यैस्तस्य प्रतिक्षणमाकुला ।
तनयमचिरात्प्राचीवार्कम् प्रसूय च पावनम् ,
मम विरहजां न त्वं वत्से शुचं गणयिष्यसि ॥

(शकुन्तला पितुः पादयोः पतति)

गोतमी— जाते ! परिहीयते गमनवेला । निवर्त्तय पितरम् ।

शकुन्तला— कदा नु भूयस्तपोवनं प्रेक्षिष्ये ?

काश्यपः— गच्छ वत्से । शिवास्ते पन्थानः सन्तु ।

(शकुन्तला निष्क्रान्ता सहायिनश्च)

सख्यौ— शकुन्तलां विलोक्य हा धिक् ! हा धिक् ! अन्तर्हिता शकुन्तला वनराज्या । तात ! शकुन्तलाविरहितं शून्यमिव तपोवनं कथं प्रविशावः ।

काश्यपः— अनसूये, गतवती वां सह धर्मचारिणी । निगृह्य शोकं अनुगच्छतं मां प्रस्थितम् । (सविमर्शं परिक्रम्य) हन्त भोः, शकुन्तलां पतिकुलं विसृज्य लब्धमिदानीं स्वास्थ्यम् । कुतः

अर्थो हि कन्या परकीय एव,
तामद्य सम्प्रेष्य परिगृहीतुः ।
जातो ममायं विशदः प्रकामं,
प्रत्यर्पितन्यास इवान्तरात्मा ॥

(इति निष्क्रान्ताः सर्वे)

अहो कीदृशमद्भुतं निसर्गानुगुणं निरूपणं गिरामगोचरम् ।

अपि च शकुन्तलायाः दुष्यन्तकृतप्रत्याख्यानदृश्यमपि कियद् रुचिरं कुलीनार्यवीराङ्गनोचितं च घटितं तदपि दृक्पथातिथीकरणीयम् :

पुरोहितः-- एते विधिवदर्चितास्तपस्विनः। अस्ति कश्चिदेषामुपाध्यायसन्देशः। तं देवः श्रोतुमर्हति ।

राजा-- अवहितोऽस्मि ।

ऋषयः-- (हस्तानुद्यम्य) विजयस्व राजन्।

राजा-- सर्वानभिवादये ।

ऋषयः-- इष्टेन युज्यस्व ।

राजा-- अपि निर्विघ्नतपसो मुनयः ?

ऋषयः-- कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति ॥

राजा-- अर्थवान् खलु मे राजशब्दः। अथ भगवान् लोकानुग्रहाय कुशली काश्यपः ?

ऋषयः-- स्वाधीनकुशलाः सिद्धिमन्तः। स भवन्तमनामयप्रश्नपूर्वकमिदमाह।

राजा-- किमाज्ञापयति भगवान् ?

शार्ङ्गरवः-- यन्मिथः समयादिमां दुहितरं भवानुपायंस्त, तन्मया प्रीतिमता उभयोरनुज्ञातम् ।

शकुन्तला-- (आत्मगतम्) किन्नु खलु आर्यपुत्रो भणति ।

राजा-- किमिदम् उपन्यस्तम् ।

शकुन्तला-- (आत्मगतम्) पावकः खल्वेष वचनोपन्यासः।

राजा-- किं चात्रभवती मया परिणीतपूर्वा ?

शार्ङ्गरवः-- किं कृतकार्यद्वेषाद्धर्मं प्रति विमुखतोचिता राज्ञः ?

राजा-- कुतोऽयमसत्कल्पनाप्रश्नः ।

शार्ङ्गरवः-- मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु ।

राजा-- विशेषादधिक्षिप्तोऽस्मि ।

गोतमी-- जाते ! मुहूर्त्तम् मा लज्जस्व। अपनेष्यामि तावत्तेऽवगुंठनम् । ततस्त्वां भर्त्ताऽभिज्ञास्यति ।

राजा-- (शकुन्तलां निर्वर्ण्यात्मगतम्)

इदमुपनतमेवं रूपमक्लिष्टकान्ति,
प्रथमपरिगृहीतं स्यान्नवेत्यव्यवस्यन् ।
भ्रमर इव विभाते कुन्दमन्तस्तुषारं
न खलु च परिभोक्तुं नैव शक्नोमि हातुम् ॥

(इति विचारयन् स्थितः ।)

शाङ्गरवः-- किमिति जोषमास्यते ।

राजा-- भोस्तपोधनाः, चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि ।

शकुन्तला-- पटान्तेन मुखमावृत्य रोदिति । सुष्ठु तावदत्र स्वच्छन्दचारिणी कृतास्मि । याहमस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयस्थितविषस्य हस्ताभ्याशमुपागता । ....भगवति वसुधे, देहि मे विवरम् ।

कीदृशं हृदयद्रावकं दृश्यम् । शकुन्तलायाः पुनर्मिलनदृश्यमपि अतीव कौतूहलावहम् । हेमकूटपर्वते महर्षिकाश्यपस्य पुण्याश्रमपदे स्वर्गात्प्रत्यावर्त्तमानो दुष्यन्तो तपःकृशाङ्गीं शकुन्तलां निर्वर्ण्य विभावयति ।

वसने परिधूसरे वसाना, नियमक्षाममुखी धृतैकवेणिः ।
अति निष्करुणस्य विशुद्धशीला, मम दीर्घम् विरहव्रतं बिभर्त्ति ॥

ततः ससंकोचं लज्जित इवाह :

प्रिये, क्रौर्यमपि त्वयि प्रयुक्तं अनुकूलपरिणामं संवृत्तम् । तदहमिदानीं त्वया प्रत्यभिज्ञातमात्मानं पश्यामि ।

निशम्यैतत् शकुन्तला मौनमास्ते, न किमप्युत्तरति । अतः परं दुष्यन्तः पुनरप्यभिधत्ते ।

राजा-- प्रिये,

स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थितासि मे सुमुखि !
उपरागान्ते शशिनः समुपागता रोहिणी योगम् ॥

शकुन्तला-- जयतु जयतु आर्यपुत्रः ।

राजा-- सुन्दरि,

वाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया ।
यत्ते दृष्टमसंस्कारं पाटलौष्ठपुटं मुखम् ॥

बालः-- मातः ! क एषः ।

शकुन्तला-- वत्स, ते भागधेयानि पृच्छ ।

राजा— (शकुन्तलायाः पादयोः प्रणिपत्य)

सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते,
किमपि मनसः सम्मोहो मे तदा बलवानभूत्।
प्रबलतमसामेवंप्रायाः शुभेषु प्रवृत्तयः,
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशंकया ।।
(इति चरणयोः पतति)

शकुन्तला— उत्तिष्ठत्वार्यपुत्रः । नूनं मे सुचरितप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणाममुखमासीत् । येन सानुक्रोशोऽपि आर्यपुत्रो मयि विरसः संवृत्तः। (राजोत्तिष्ठति)

शकुन्तला— अथ कथमार्यपुत्रेण स्मृतो दुःखभागयं जनः।

राजा— उद्धृतविषादशल्यः कथयिष्यामि ।

कीदृशं हृदयावर्जकं निरूपणम् । अथायमपरोऽपि विशेषोऽस्ति कवेरस्य कविवरान्तरेभ्यः यदसौ भूम्ना प्रयुङ्क्ते अप्रलम्बसमासां प्रचुरप्रयुक्तप्रयोगालंकृतां परिमितपदां पात्रानुरूपां परमोपयुक्तां अनुज्झितौचित्याधारां सालंकारां मृदुलपदावलिविभूषितां भाषाम् । रूपकेषु ग्रथ्नाति पात्रानुरूपां वाक्यावलिं, नातिक्रमते आर्यमर्यादाम्, न च कदर्थयति यथार्थताम्, न वा निःशेषयति भावावेशम्। शकुन्तलया सह दुष्यन्तस्य गान्धर्ववृत्तान्तमाकलय्य कीदृशं तदनुगुणं कथनोपकथनमारचयति ।

यद्यपि गान्धर्वविवाहस्यारुन्तुदं वृत्तमाकर्ण्य मर्माहत इव मनसि कीलित इव महर्षिः विमृशति लम्पटेन नृपतिहतकेन कितवेन दुष्यन्तेन पुण्याश्रमपरिपन्थिना तापसकन्यकायां पण्यांगनायामिव कियदनार्यमाचरितम् । पुनश्च ममागमनात्पूर्वमेव पलायितो वृकः। हंहो, कियद्गर्हितं कृत्यमिदम्। तथापि ततो विचिन्त्य किञ्चिद्—दिष्ट्या धूमाकुलितदृष्टेरपि यजमानस्य पावक एवाहुतिः पतितः । इति कीदृशी मार्मिकी विचारसन्ततिः । तथा विमृशन्तं महर्षिं तातकण्वं यदा वेपमाना लज्जावनतमुखी शकुन्तला पादयोः प्रणमति 'तात, प्रणमामि' इति । तदा विचारवान् अशेषव्यवहारविन्मुनिः मनसि किंचिदाकलय्य मंक्षु समाचक्षते शकुन्तलां सम्बोध्य :—

कण्वः— 'वत्से, सुशिष्याय परिदत्तेव विद्या अशोचनीयाऽसि संवृत्ता ।'

इति कीदृशं परितोषतुन्दिलं वचः ?

यदानसूया प्रियंवदामादिशति यद्दुर्वाससोऽभिशापवृत्तान्तं न संस्पृशेत् शकुन्तलायाः कर्णकुहरम् ।

अनसूया--'प्रियंवदे, रक्षितव्या खलु प्रकृतिपेलवा प्रियसखी।' इति।

तदा प्रियंवदा कियच्चातुर्येण प्रतिब्रूते।

प्रियंवदा-- 'क इदानीमुष्णोदकेन नवमालिकां सिञ्चति।'

कियद्धृदयाह्लादकं वचनम्?

परम्परागतां भारतीयसामाजिकपद्धतिमप्येष कविरक्षुण्णतया परिरक्षति। राज्ञो दुष्यन्तस्य उच्छृंखलप्रणयविधिमपि गान्धर्वविवाहविधिना सुभूषयति। सद्यो हुताग्नीन् प्रदक्षिणीकारयति ऋक्छन्दसा च प्रशास्ति न खलु ऋङ्मन्त्रेणेत्यपि कवेश्चातुरीं चुलुकयति।

अमी वेदीं परितः क्लृप्तधिष्ण्याः,
समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः।
अपघ्नन्तो दुरितं हव्यवाहे
वैतानास्त्वां वह्नयः पावयन्तु॥ इति

मन्यामहे कालिदासस्य कवितायाः लोकप्रियत्वे [1]वैदर्भीरीतिसमाश्रयणमपि कारणान्तरैः सह बहुतरं हेतुतामवगाहते। कविरसौ स्वरचनासु वैदर्भीमेवालम्बे प्राधान्येन। अत एवेयं जनश्रुतिः "वैदर्भीरीतिसन्दर्भे कालिदासो विशिष्यते।" नूनं वैदर्भीमुपलालयन्तः कवयो धन्याः कृतिनश्च। स्थान एवोक्तं बिल्हणेन :--

अनभ्रवृष्टिः श्रवणामृतस्य,
सरस्वती - विभ्रमजन्मभूमिः।
वैदर्भरीतिः कृतिनामुदेति,
सौभाग्य-लाभ-प्रतिभूः पदानाम्॥

श्रीदण्डिमहाभागोऽपि मुक्तकंठतः ऐदम्प्राथम्येन वैदर्भ्युपलालनं तद्वर्त्म-शोधनं प्रति च कालिदासमेव मुख्यत्वेनाधिकरोति। तथा हि :

लिप्ता मधुद्रवेणासन् यस्य निर्विवशा गिरः।
तेनेदं वर्त्म वैदर्भम् कालिदासेन शोधितम्॥

यद्यपि कविरयं प्रायेण शृंगारिक इति कविभिर्जेगीयते तथापि यं यं रसं संस्पृशति तं तमेव उत्कर्षस्य पारं नयति। उपरञ्जयति च तमनन्यसदृशेन निरतिशयनैपुण्येन।

---

१. माधुर्यव्यंजकैर्वर्णैः रचना ललितात्मिका।
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते॥

## मालविकाग्निमित्रम्

मालविकाग्निमित्रं महाकवेः सर्वप्रथमा कृतिर्विभाव्यते । अतएव तस्मिन् तादृशं वैशद्यं कमनीया वा कलाकलना, कश्चन प्रौढ़ःसंवादोऽपि च न यथार्हतया श्लाघनीयः सम्पन्नः । कथावस्त्वपि किञ्चिद् दुरूहं जटिलञ्च सद् व्याकुलीकरोति दुरवबोधतया प्रेक्षकान् । मालविका खल्वत्र नायिका नायकोऽग्निमित्रः । तत्तद्रूप-निरूपणप्रकारोऽप्यत्र यद्यप्यपक्विमस्तथाऽपि क्वचित्क्वचित् कविकुलललामभूत-स्यास्य लेखनी विद्युल्लतेवान्तरान्तरा चमत्करोत्येव चेतांसि रसिकानामित्यत्र न कश्चित् सन्देहः ।

इदं हि मालविकाग्निमित्रं नाम रूपकं कालिदासीयं वा नवेति केचन संशे-रते । किन्तु, एतस्योक्तनाटकत्रयस्यापि कर्त्ता कालिदास एवेति सुदृढं निश्चेतुं न दुष्करम् । यतः एतेषु नाटकेषु कालिदासीयवर्णनचातुर्यमन्यादृशं सम्पन्नं सदपि साजात्यं भजते । विशिष्य तु स्त्रीवर्णनमत्यद्भुतं निरुपमञ्चाभ्युपपन्नम् । त्रिष्वपि रूपकेषु स यत् स्त्रीवर्णनमातनुते तेन किलैतत् स्फुटमवबुध्यते । तत्र सर्व-प्रथमे मालविकाग्निमित्रे पात्राणि खलु भौमानि । मालविका हि नाम विदर्भराजस्य दुहिता । मालवाधिपतये प्रदेयत्वेन निर्धारितत्वादेव तस्या मालविकेति नाम-धेये बीजमुत्पश्यामः । किञ्चित् सूक्ष्मतया प्रेक्षणेनेदं प्रव्यक्तं प्रतीतिपथमवतरति यन्मालविकाग्निमित्रे कविः मर्त्यलोकीयमेव वस्तुवर्णनं भूम्ना सन्तनुते । माल-विका खलु अग्निमित्रस्य राजधान्यां विदिशायां नरेन्द्रस्य प्रेक्षागृहेषु प्राक् प्रादर्शि । तत्र शालायामग्निमित्रो, राज्ञो विदूषको, सर्वशस्त्रविशारदा परिव्राजिका चेति त्रयोऽपि प्रेक्षकाणामासनान्यलञ्चक्रुः । नाट्याचार्यो गणदासश्च मालविकां पुरस्कृत्य तद्गृहमुपेयाय । ताञ्च राजसम्मुखमवस्थाप्य मा भैषीरिति सभा-सम्भ्रमं तस्या न्यवारयत् । अस्मिन्नेव सन्दर्भे राज्ञो मालविकायाः प्रथमदर्शन-संलाभः । तस्या रूपलावण्यञ्च निर्वर्ण्य अग्निमित्रो विस्मयापन्नतया तस्या मुखमण्डलं, नयनयुगलं, वक्षस्थलञ्चालोक्यावलोक्य, अहो कीदृशमलौकिकं कन्यारत्नं विधात्रा सृष्टमिदमिति कौतूहलस्य परां काष्ठामधिजगाहे । तस्या नृत्य-गीतयोर्वैलक्षण्यमभिलक्ष्य नृपः परं विस्मयमुपजगाम । नृत्यावसाने च विदूषकः पुनः तां तत्रावस्थापयितुकामः 'तिष्ठ तिष्ठ, त्वया किञ्चित्करणीयं विस्मृतमासीदिति' तव पाठे कश्चन दोषो विद्यते । नाट्याचार्यो गणदासोऽपि मालविके ! दोषं परिहृत्य पुनर्गच्छेति तामादिदेश । को वा दोषः ? इति पृष्टो विदूषक आह 'प्रथमं तावत् नृत्यारम्भसमये मालविका ब्राह्मणपूजनं नाकरोत् ।' इति वदति विदूषके, सर्वे सभास्तारा उच्चैरट्टहासं जहसुः । मालविकाऽपि परिजहास, नृपश्चापि सोल्लासं

प्राहसत्। विदूषको भूयोऽपि तामवस्थापयितुं यतते, तदनु प्रस्थापयामास च ताम्। अत्र कालिदासः मालविकां त्रिभङ्गीषु प्रदर्श्य राजानं सन्तोषयामास। स्मेरमुखी च मालविकाऽपि रङ्गान्निश्चक्राम। भूम्नाऽत्र मर्त्यलोकाभिनय एव पल्लवितः।

## विक्रमोर्वशीयम्

विक्रमोर्वशीये द्वितीये रूपके प्रायशो दिव्यानि पात्राणि। उर्वशी अप्सराः। तस्याः सहचारिण्यश्चाऽप्सरस एव। अथ च भर्गमुनिरपि स्वर्गीयो नाट्यकारः। उर्वशी च तन्नाटके स्वाभिनयमुन्नाटयति। नाटकेऽस्मिन् उर्वशी कुबेरमाराध्य यदा स्वर्गम्प्रतिनिवर्त्तते। तदा मध्येमार्गं 'केशी नाम कश्चन राक्षसः चित्रलेखाद्वितीया-मुर्वशीं बलादपहृत्य रथे चोपस्थाप्य पलायाञ्चक्रे। तद् दृष्ट्वा सकला अप्सरस उच्चैश्चक्रन्दुः। सूर्योपस्थानान्निवृत्तः पुरुरवा तदाक्रन्दितमाकर्ण्य, का इमा क्रन्दन्ति' इति ससम्भ्रमं पप्रच्छ। केशीनाम दानवः उर्वशीं तरसा जहार। तत्तामस्मत्सखीं परित्रायस्वेति ता ऊचुः। पुरुरवा अपि सत्वरं गत्वा दानवं निहत्य, चित्रलेखया सह उर्वशीं प्रत्यानिनाय। स एष उर्वश्या रङ्गप्रवेशः। विसंज्ञामुर्वशीमालोक्य 'अहो बलवन्मे प्रियसखी परित्रस्ता। नावयोर्वचनान्यपि शृणोति।' इति चित्रलेखा जगाद।

यदा कालान्तरे उर्वशी संज्ञां लेभे तदा उदिते निशानाथे तमसा मुच्यमाना निशेव विगतव्यामोहा च सा ददृशे। अहो! महेन्द्र एव मम रक्षितेति तस्मिन् सकृद् दृक्पातमकरोत्। राजाऽपि स्वयं अप्सरःप्रतिपालनस्थलमाजगाम। उर्वशी रथादवतरणवेलायां किञ्चित्स्खलनं नाटयन्ती रभसा राजानमालम्बे। राजाऽपि च प्रसङ्गमेनं विधिविलसितमेवामंस्त। कविरस्मिन्नपि कथावस्तुनि—प्रथमतो भयत्रस्तां, तदनुव्यपगतमोहां, ततो रथादवतरन्तीमुर्वशीमिति तिसृभिः स्थितिभिः प्रदर्शयति।

इत्थमेव शकुन्तलामपि, अभिज्ञानशाकुन्तले, दुष्यन्तस्तावद् दूरतो द्रष्टु-मारेभे, तत्र तिस्रः स्त्रियो घटीरादाय वृक्षकानसिञ्चन्त। का वा शकुन्तला एतासां मध्ये इति नृपो ना ज्ञासीत्। ततः कविः तां परिचाययितुं कञ्चनोपायमची-क्लृपत्। "सखि! इत इतः, इति तासां काचिदवोचत्। शकुन्तले! तात काश्यपः त्वत्तोऽपि अस्मिन् वृक्षके महत्प्रेम दर्शयति, यतो नवमल्लिकामृदुलामत्रभवतीमस्य जलमासेक्तुं न्ययुङ्क्त इति।"

एतद्वचनेन कुपिता 'किं पितृनियोगमनुरुध्यैव मया वृक्षसेचनं क्रियते? ममापि नाम अस्मिन् वृक्षके प्रेम नास्ति किम्?' इति वदन्ती शकुन्तला वृक्षकमूले

जलमासेचयन्ती समवतस्थे । तदानीमियं शकुन्तलेति दुष्यन्तस्तामजानादिति । तत्रैव लताकुञ्जान्तरितः स भूयोऽपि शकुन्तलां पश्यन्नवर्त्तत । तदेतत् प्रथमं दर्शनम् । तदनु च शकुन्तला जलकुम्भमंसे वहन्ती, चलन्ती प्रस्खलन्ती च जलमावर्ज्य वृक्षकप्रान्ते समवतस्थौ । एतदवस्थायामपि दुष्यन्तो द्वितीयवारं वल्कलधारिणीं शकुन्तलां निभृतं निर्वर्ण्य 'किमिव मधुराणां मण्डनं नाकृतीनाम्' इति विमर्शयन्नास । ततो जलसेचनेन विकम्पिनि वृक्षके कश्चिद् भृङ्गः पुष्पादुड्डीय शकुन्तलाया मुखारविन्दे न्यपतत् । शकुन्तलाऽपि निजहस्तविधूनेन निवारयन्ती इतस्ततो भ्रमितुमारेभे तथापि भ्रमरस्तां न जहौ । तदा एतद्दुष्टभ्रमरान्मां को वा परित्रायेद् इति शकुन्तला चक्रन्द । ततो दुष्यन्त एव महाराजस्त्वां भ्रमरबाधाया मोचयितुं प्रभवतीति तमेवाह्वय इति सपरिहासं सख्यौ समूचतुः । तावतैव दुष्यन्तः कुञ्जाद् बहिर्निश्चक्राम । इत्येवमत्रापि तिसृभिरेव भङ्गीभिः कालिदासः शकुन्तलां दर्शयति । कविरयं प्रतिनाटकं त्रिरेव स्त्रियः प्रादर्शयत् । एतावतैव प्रतिबोधितं भवति त्रयाणामप्युक्तनाटकानां कर्तृत्वं तत्र भवन्तं कालिदासमेव सुतरां संश्लिष्यतितरामिति । तदेतद्वर्णनशैलीसाजात्यं बलवदुद्घोषयति यत् त्रीण्यप्येतानि नाटकानि कालिदासकृतान्येवेति ।

इत्थमेव रघुवंश-कुमारसम्भवयोरेककर्त्तृतायामपि यदेके संशेरते तदपि न युक्तम् । एतयोरपि पद्यपद्यांशानां बहुत्र रचनासाम्यात् । तद्यथा :—

"धनुष्यमोघं समधत्त सायकम् ।' [रघु० ३।५५]
'धनुष्यमोघं समधत्त सायकम् ।' [कुमा० ३।६६]

अपि च :—

ततस्तदालोकनतत्पराणां सौधेषु चामीकरजालवत्सु ।
बभूवुरित्थं पुरसुन्दरीणां त्यक्तान्यकर्माणि विचेष्टितानि ॥
[रघु० ७।५]

तस्मिन्मुहूर्त्ते पुरसुन्दरीणामीशानसन्दर्शनलालसानाम् ।
प्रासादमालासु बभूवुरित्थं त्यक्तान्यकर्माणि विचेष्टितानि ॥
[कुमारसम्भवम्]

एवमेव रघुवंशीय ७।६ श्लोकादारभ्य—११ श्लोकपर्यन्तं, कुमारसम्भवे च ७।५६ श्लोकादारभ्य ६२ श्लोकपर्यन्तं विस्मयावहं सारूप्यं दृष्ट्वाऽपि को नाम एतयोरेककर्त्तृत्वे संशयीत ? इति दिक् ।

## कालिदासस्य काव्यदोषाः

यद्यपि महाकविकालिदासस्य काव्येषु दोषोद्घाटनं नाम नूनमुपहासास्प-

दम्। षोडशकलाऽलङ्कृते प्रपूर्णे चन्द्रमसि कलङ्कोद्भावनन्नाम खलु बालचापलमेव केवलम्। तथा चाह स्वयं कालिदासोऽपि—

'एको हि दोषो गुणसन्निपाते, निमज्जतीन्दोः किरणेष्विवाङ्कः।'

गुणबहुले हि वस्तुनि यदि नाम कश्चिदेको दोषोऽपि सम्भवेत् स तु नितरामगण्यो भवतीति कवेराशयः। एतद्वचोभङ्ग्या, स, स्वकाव्येषु क्वचिन्मानवस्वभावसुलभघटितान् दोषात् सुतरां प्रमार्ष्टीवाभाति। संसूचयति चैतावता यन्न कस्यापि काव्यं सर्वथा निर्दोषं भवतीति।

न चात्रास्माभिः, तद्दोषदृष्टिदिशा किमप्यातन्यते किन्तु महामहिमशालिनां कविकुलगुरूणामपि यदा मानवनिसर्गसौलभ्यात्तादृशा दोषाः समापद्यन्ते तदेतरेषां सामान्यकवीनान्तु खलु कथैव का! एतद्द्योतनार्थमथवा पण्डितपर्यायत्वेन पठितेषु शब्देषु 'दोषज्ञो'ऽपि एकः शब्दः पठ्यते तदनुरोधाद्वा, केवलं विदुषां मनोविनोदार्थं वा वाग्विलासार्थमेव वाऽधुना किञ्चिदिव निर्दिष्टविषयमवतारयामो वयं क्षमायाचनपुरस्सरमिति :—

स देवदारुद्रुमवेदिकायां, शार्दूलचर्मव्यवधानवत्याम्।
आसीनमासन्नशरीरपातः, त्रयम्बकं संयमिनं ददर्श॥ [कुमा० ३।४४]

अत्र त्रयम्बकमिति पदमव्याकृतम्। पाणिनीयेन 'इको यणचि' इति सूत्रेण यणि कृते त्र्यम्बकमित्येव साधु। तदत्र च्युतसंस्कारदोषापत्तिः। किञ्च :—

क्रोधं प्रभो संहर संहरेति,
यावद्गिरः खे मरुतां चरन्ति।
तावत्स वह्निर्भवनेत्रजन्मा,
भस्मावशेषं मदनं चकार॥ [कुमा० ३।७२]

अत्र संहारकारिणः शङ्करस्य स्थाने यन्मदनस्य भस्मकर्तृत्वं सृष्टयुत्पत्तिकारिणि भवे समारोपितं तन्नौचितीमुद्वहति। विरुद्धधर्मावगाहित्वात्। 'भव'स्थाने 'हर' इति प्रयोग एव अनायासेनेष्टसाधकः सम्भवति। तमविधाय कविरनौचित्यदोषेण किं नावलिप्तः?

अपि च :—

द्वयं गतं सम्प्रति शोचनीयतां,
समागमप्रार्थनया पिनाकिनः।
कला च सा कान्तिमती कलावतः,
त्वमस्य लोकस्य च नेत्रकौमुदी॥ [कुमा० ५।७१]

अत्र 'कला च सा' इतिवत् 'त्वञ्चे'ति पदेन भवितव्यं, परं क्रममतिक्रम्य 'त्वमस्य लोकस्य चे'ति चकारस्य व्यवहितप्रयोगः कवेरक्रमदोषसंश्लेषत्वमाविष्करोति। क्रमोत्क्रमणादिति भावः।

तेनाभिघातरभसस्य विकृष्य पत्त्री,
वन्यस्य नेत्रविवरे महिषस्य मुक्तः।
निर्भिद्य विग्रहमशोणितलिप्तपुङ्ख-
स्तं पातयां प्रथममास पपात पश्चात्॥ [कु० सं० ९।६?]

इत्यत्र 'पातयां प्रथममास' इति प्रयोगोऽप्यपाणिनीयः। 'कृञ्चानुप्रयुज्यते लिटि' इत्यत्रानुशब्दस्य व्यवहितविपर्यस्तप्रयोगनिवृत्त्यर्थत्वात्। यथाह वार्त्तिककारोऽपि 'विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थञ्चेति'। तदेष व्याकृतिदुष्टत्वादपप्रयोगः।

एवमन्यत्रापि तत्काव्येषु दोषा आविष्क्रियन्ते समालोचकैः। यथा—

कालिदासप्रयुक्ताः 'सुगात्रि, किन्नरकण्ठि, निविशती'—प्रभृतयः शब्दा अपाणिनीयत्वाच्च्युतसंस्कारा एव। [1]'राजा प्रकृतिरञ्जनात्' इत्यत्र दीप्त्यर्थकाद्राजतेः राजेतिपदं निष्पद्यते न तु रञ्जतेः। यद्यपि धातूनामनेकार्थत्वाद् रञ्जनाद् राजेत्यपि साधु इति तत्र समाधिं करोति मल्लिनाथः। व्याकृतिभङ्गापत्तिस्तु तावता नैवापास्ता भवति।

एवमेवास्मिन्नुक्तपद्ये छन्दोभङ्गापत्तिरपि प्रत्यक्षगोचरा। अत्र तृतीये चरणे पञ्चमाक्षरं दीर्घं विदधानोऽयं 'श्रुतबोधे' 'पञ्चमं लघु सर्वत्रे'ति जागरूकं नियममुल्लङ्घ्य कवितल्लजः किं छन्दोभङ्गापत्तेर्दोषभाङ् न सञ्जातः? इति।

एतादृशस्य व्याकरणमहार्णवस्य च्युतसंस्कारादिदोषदूषितान् कतिपयप्रयोगानालोच्य 'निरङ्कुशाः कवयः' इत्युक्तिमाश्रित्य समाधानमर्पयन्तः तांस्तान् दोषानुपेक्षापक्षे निक्षिपन्ति समालोचकाः कालिदाससम्पोषकाः तदपि किञ्चिद् विमर्शनीयम्, कियद्यावत्तद्युज्यत इति :—

"स सैन्यपरिभोगेन गजदानसुगन्धिना।
कावेरीं सरितां पत्युः शङ्कनीयामिवाकरोत्॥" [रघु० ४।४५]

अत्र 'गजदानसुगन्धिने'ति पदं व्यावृण्वन् मल्लिनाथः प्रब्रूते 'गन्धस्य'

१. यथा प्रह्लादनाच्चन्द्रः प्रतापात्तपनो रविः।
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात्॥ [रघु० ४।१२]

इत्यादिना इकारः समासान्तः। यद्यपि गन्धस्येत्येतदेकान्तग्रहणं कर्त्तव्यम् इति नैसर्गिकगन्धविवक्षायामेवेकारादेशः, तथापि 'निरङ्कुशाः कवयः'[1] इति समाधिमाह।

एवमेव माघेऽपि—"बबुरयुक्छदगुच्छसुगन्धयः"। नैषधेऽपि च—

"अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा"।

इत्यत्र न कर्मधारयान्मत्वर्थीय इति निषेधादिनिप्रत्ययपक्षोऽपि जघन्य एव इत्यपि निरङ्कुशाः कवय इत्यालम्बनमेवावष्टभ्नाति इति।

इदमत्रावधेयम्—'सुगन्धिने'ति पदे बहुव्रीहिसमास एव 'गन्ध' पदस्यान्त्याकारस्य इकारादेशः। परं यत्र गन्धो नैसर्गिकस्तत्रैव 'इत्व'मिष्यते यथा 'सुगन्धि पुष्पमि'त्यत्र। परन्त्वत्र जले नैसर्गिकगन्धस्याभावेऽपि इकारादेशः कवेर्निरङ्कुशतां निर्दिशति। माघेन अनैसर्गिके वायुगन्धे, हर्षेण च जलगन्धेऽस्वाभाविकेऽपि इकारादेशं विधाय कवीनां निरङ्कुशता एव पल्लविता खलु इति।

परन्तु अत्र वैय्याकरणा विप्रतिपद्यन्ते। ते व्यवस्थापयन्ति यत् 'न कर्मधारयान्मत्वर्थीयः' इति वार्त्तिकस्य तात्पर्यविषयीभूतोऽर्थस्तु तत्रैव इकारादेशं निबध्नाति यत्र गन्धगन्धवतोरैकात्म्यप्रतीतिः सम्भवति, नान्यत्र। यथा 'सुगन्ध आपणिकः' अत्र गन्धापणिकयोः सामानाधिकरण्याभावान्नेकारादेशः। परन्तु 'जलगन्धयोः', 'वायुगन्धयो'र्वा सामानाधिकरण्यन्तु को नाम निह्नोतुं प्रभवति। अतः तत्रेकारादेशो न मनाक् च्युतसंस्कारदोषभागिति। अतएव श्री दीक्षितेन—

'सुगन्धि पुष्पं सलिलञ्च सुगन्धिर्वायुः' इति समुदाहृतम्। काशिकावृत्तिकारेणापि 'एम्य एवेति किं? तीव्रगन्धत्वात्' अत्रेकारो न कृतः। तस्मान्नैसर्गिकगन्ध एवेकारादेश इति नियमो न नियतवृत्तिकः। यत्तु भट्टिकाव्यस्य टीकाकृता जयमङ्गलेन—

'आघ्राविवान् गन्धवहः सुगन्धः', इत्यत्र नैसर्गिके गन्ध एव इकारादेशो भवतीति मत्वा यत् 'सुगन्धः' पदस्य साधुत्वं समर्थितं तदपि भ्रमविजृम्भितमेव। श्री कैय्यटोऽपि उक्तवार्त्तिकव्याख्यायां प्राह प्रव्यक्तम् यद् "यत्र विभागापन्नं कुङ्कुमादि देवदत्तादेर्भवति तदा इत्त्वमतत्स्थत्वाद् गन्धस्येति।"

किञ्च मल्लिनाथोऽपि स्वयं 'गुच्छसुगन्धयो वाताः' इति माघीयपद्ये टीकामाटीकमानः विषयमस्पृशन् मौनमेवाललम्बे। अपि च 'शिलीन्ध्राणां सुगन्धिभि-

---

१. प्रायशो मल्लिनाथ एतादृशेषु स्थलेषु कवीनां दोषापह्नवार्थं निरङ्कुशत्वमेव तेषां समाधिव्याजेन व्यपदिशति। नैसर्गिकमेवैतन्न्याय्यञ्च, टीकाकृद्भिः कविपक्षपोषकैरेव भाव्यमिति।

वायुभिः' [माघ० ६।१३] इति व्यावृण्वतो मल्लिनाथस्य पुनश्च 'शिलीन्ध्राणां कदलीकुसुमानां सुगन्धोऽस्ति येषां ते शिलीन्ध्रसुगन्धिनस्तैः । गन्धस्येत्वे तदेकान्तस्याभावादिनिप्रत्ययाश्रयणम् ।' इत्यत्र यच्चक्षुर्निमीलनं तत्कस्य न कौतुकावहम् ? एतावता किन्न सिद्धम् यत्कालिदासो नोल्ललङ्घे क्वचित्पाणिनीयानुशासनानि अपितूपलालयामास तदिदं कवीनां निरङ्कुशत्वमतिरिच्य किमन्यत् ?

एवंविधाः केचनान्येऽप्याक्षेपा विदुषामवधानमर्हन्ति । यथा--

"स दुष्प्रापयशाः प्रापदाश्रमं श्रान्तवाहनः ।
सायं संयमिनस्तस्य महर्षेर्महिषीसखः ।। [रघु० १।४८]

इत्यत्र 'महिषीसखः' इत्यत्र 'महिष्याः सखा' इति विग्रहे महिष्याः प्राधान्यं न राज्ञः तच्च न युज्यते। बहुव्रीहिसमासे च नाऽत्र समासान्त इत्युभयपाशा रज्जुः । इति यन्न तदपि सारगर्भितम् । प्राधान्याप्राधान्यचर्चाया अत्राविवक्षितत्वात् । सहायान्तरवैधुर्यमेवात्र विवक्षितम् । आह च मल्लिनाथः 'महिषीसखः--सहायान्तरनिरपेक्ष इत्यर्थ एवात्र बोद्धव्यः ।' इति समाधिम् ।

एवं बहुत्र समाधानमप्याहुर्विद्वांसः । तद्यथा--

दैत्यस्त्रीगण्डलेखानां मदरागविलोपिभिः ।
हेतिभिश्चेतनावद्भिरुदीरितजयस्वनम् ।। [रघु० १९।१२]

अत्र 'हेति' शब्दस्य 'ऊतियूति' इत्यनुशासनानुगुण्येन स्त्रीत्वम् । 'विशेषणानि विशेष्यनिघ्नानि भवन्ती'ति नियमबलात् 'चेतनावद्भिः' इत्यस्य स्थाने 'चेतनावतीभि'रिति भवितव्यमिति चेन्न तदपि समादरास्पदम्, 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्ये'ति भाष्यानुशासनात् । 'हेति' शब्दस्य पुल्लिङ्गतापि कोशैर्निदिश्यते । तथाहि :--'हेतिरक्लीबे' इत्यस्य पुल्लिङ्गतापि । अत उक्ताक्षेपः खल्वत्र निरवकाश एव ।

अन्यश्चाक्षेपः कुमारसम्भवस्य निम्नाङ्किते पद्ये सोऽपि निरवकाश एव :--

'क्रोधं प्रभो संहर संहरेति, यावद् गिरः खे मरुतां चरन्ति ।
तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनञ्चकार ।।
[कुमा० ३।७२]

अस्मिन् श्लोके 'भवनेत्रजन्मा' इत्यस्य स्थाने 'हरनेत्रजन्मे'ति भवितव्यम् । मदनस्य विनाशप्रयोजने 'हर' पदप्रयोग एव सम्यग्घटते, संहारकत्वात् । न खलु उत्पत्त्यर्थसूचको 'भव' शब्द इति यत्तदपि न यौक्तिकम् । कुतः ? उच्यते । संहारकोऽत्र वह्निः न तु भवः । 'भव' शब्दश्चात्र रूढः योगार्थप्रतिपत्तिकः । अन्यथा--

हरस्य शिवः भवः इत्याद्याः शब्दा पर्यायत्वेन कथन्नाम स्वीकार्या भवेयुः।' भव'-शब्दश्च उत्पादकार्थकत्वादत्र सम्यक् सङ्गच्छते। यतः स नेत्रजन्मनो वह्नेरुत्पादकः सन् भव इति अस्य योगार्थमपि सङ्गमयति। इति हेतोः कालिदासप्रयुक्तो भव-शब्द एव ज्यायान् इति समाधिः।

तदेतावता कालिदासस्य वैयाकरणसार्वभौमत्वं सूपपन्नमेव न तन्मात्रयाऽपि क्षिणोति।

## कुत्रत्यः सः

चित्रमेतद् यत् कालिदासस्यापूर्वकवित्वगुणगणगरिम्णा सर्वेऽपि तं स्वस्व-जनपदोद्भवं प्रसाधयितुं यत्नवन्त इवाभान्ति। केचन तं मालवाभिजनीयम्, अपरे काश्मीरदेशीयम्, अन्ये पञ्चनदजनपदीयम्, इतरे बङ्गभूमिसमुद्भवं मन्यन्ते, इत्थं इदन्तया च स कुत्रत्य आसीदित्यत्र तु सर्वेऽपि कालविदो वाचंयमा एव। परन्तु तथापि अन्तरङ्गबहिरङ्गोभयसाधनलिङ्गैरेव प्रतीयते स वस्तुतः काश्मीरानलञ्चकार स्वजनुषेति निर्विशङ्कम्, यथास्माभिरन्यत्र निरदेशि। कालिदासस्य स्थिति-कालकलनायामपि संशेरते जनाः। एतद्विषयेऽपि मतद्वयं प्रवर्त्तते—भारतीय-मभारतीयञ्च। भारतीयास्तु विक्रमादित्यनवरत्नेषु विद्यमानत्वादस्य महाराजा-धिराजस्य विक्रमस्य काल एव अस्य काल इति सम्मन्वते अधोऽङ्कितपद्यमधिकृत्य :

'धन्वन्तरि-क्षपणकाऽमरसिंह-शङ्कु-वेतालभट्ट-घटखर्पर-कालिदासाः।
ख्यातो वराहमिहिरो नृपतेः सभायां, रत्नानि वै वररुचिर्नव विक्रमस्य॥' इति।

पाश्चात्यविद्वांसस्तु केचित् तृतीयशताब्द्याम्, अन्ये पञ्चमशताब्द्याम्, इतरेऽष्टमशताब्द्याम्, अपरे द्वादशशताब्द्यां सोऽभवदिति तर्कयन्ति। तत्रापि जोन्स विलियम महोदयस्तु भारतीयानामेव मतं समर्थयति। विस्तरस्त्वन्यत्र पल्लवितः।

## कालिदासस्य सर्वशास्त्रपारङ्गतत्वम्

कालिदासीयकाव्यपरिशीलनेन सुतरां तस्य सकलशास्त्रपारगामित्व-मवगतं भवति। समस्तशास्त्रावगाहिधिषणोऽयं धिषणोपमः स्वरचनासु वैलक्ष-ण्येन सुतरां तत्तच्छास्त्राभिज्ञतामाविष्करोतितराम्। तन्निदर्शनमपि किञ्चित् सचेतसां मनोविनोदनायात्र पुरस्क्रियते :—

कुमारसम्भवे—

नमस्त्रिमूर्तये तुभ्यं, प्राक्सृष्टेः केवलात्मने।
गुणत्रयविभागाय पश्चाद् भेदमुपेयुषे॥

यदमोघमपामन्तरुप्तं बीजमज ! त्वया।
अदश्चराचरं विश्वं प्रभावस्तस्य गीयते॥
तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन् ।
प्रलय–स्थिति–सर्गाणामेकः कारणतां गतः॥
स्त्रीपुंसावात्मभोगाय भिन्नमूर्त्तेः सिसृक्षया।
प्रसूतिभाजः सर्गस्य तावेव पितरौ स्मृतौ॥
स्वकालपरिणामेन व्यस्तरात्रिन्दिवस्य ते।
यौ तु स्वप्नावबोधौ तौ भूतानां प्रलयोदयौ॥
जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः।
जगदादिरनादिस्त्वं जगदीशो निरीश्वरः॥

इत्यादिभिः श्लोकैः जगद्ब्रह्मणोरैकात्म्यं विवृण्वन् तिसृभिरात्मशक्तिभिः ब्रह्मविष्णुमहेशलक्षणाभिः सर्गस्थितिप्रलयानां नामरूपविभागानर्हायां दशायां वर्त्तमानोऽपि सन् अस्य चराचरजगतः कारणतां गतः; एकं ब्रह्मैव सत् चराचरविश्वरूपकार्यात्मना परिणतं भवतीति कीदृक् चारुतया वेदान्तसिद्धान्तमौपनिषदर्थमनुसन्दधाति कविः। सृष्टिकर्मणि प्रवृत्तस्य तस्य सिसृक्षोः ब्रह्मणः स्त्रीपुंभावरूपघटकद्वयेन विभक्तस्य सकाशात् सृष्टिरुपजायत इत्यवगमयति। ब्रह्मणः प्रबोधेन जगतामुदयः स्वापेन प्रलयः। जीवानामपि स्वप्ने ब्रह्मणि लयः सृष्ट्यवस्थायाञ्च पुनराविर्भाव इति सन्दर्शयति। ब्रह्मणः स्वयमयोनित्वेऽपि जगद्योनित्वं, निरन्तकत्वेऽपि जगदन्तकत्वम्, अनादित्वे जगदादित्वं, स्वस्य निरीश्वरत्वेऽपि जगदीशरत्वमिति प्रतिपादयन् महाकविरयं कं न कुतूहलयति।

किञ्च—

"आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना।
आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे॥"

इत्यनेनाध्यात्मविद्यारहस्यमाविष्करोति। 'अनेन जीवेनात्मानमनुप्रविश्य नामरूपे व्याकरवाणी'ति श्रुत्यानुगुण्येन चिदचिद्विशिष्टं सूक्ष्मं ब्रह्मैव चिदचिद्विशिष्टस्थूलजगद्रूपेण परिणमतीत्यावेदयति। 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति। यमात्मा न वेद' इत्यादि निगमान्तसिद्धान्तजातं पद्येनामुना विशदयति :

उद्घातः प्रणवो यासां न्यायैस्त्रिभिरुदीरणम्।
कर्म यज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिराम्॥

किञ्च—

'आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव।' इत्यादिना यज्ञादिकर्म-

काण्डकलापस्य परिज्ञानं तत्र प्रणवपुरस्सरं वेदोच्चारणविधिञ्च किन्नावेदयति ? यज्ञाद्यनुष्ठानेन चित्तसम्प्रसादनद्वारा स्वर्गावाप्तिरूपं फलमाम्नायगिरामुपासनेन सम्पद्यते इदञ्च किन्नोपदिशति ?

'परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम्।
विषयेषु विनाशधर्मिषु त्रिदिवस्थेष्वपि निस्पृहोऽभवत्॥
इतरो दहने स्वकर्मणां ववृते ज्ञानमयेन वह्निना।'

इत्यादिभिः पद्यैः किल कवेर्निगमान्तरहस्यावबोधो नोदीर्यते किम्? एवमेव--

मनोऽभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः।
षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः॥

अत्र 'षड्जसंवादिनीः केका' इत्यनेन कविरात्मनः सङ्गीतशास्त्रज्ञानमवगमयति।

ग्रहैस्ततः पञ्चभिरुच्चसंश्रयै-
रसूर्यगैः सूचितभाग्यसम्पदम्।
असूत पुत्रं समये शचीसमा,
त्रिसाधना शक्तिरिवार्थमक्षयम्॥

[रघुवंश ३।१३]

इत्यत्र 'ग्रहैस्ततः पञ्चभिरुच्चसंश्रयै'रित्यंशेन ज्यौतिषशास्त्रावबोधम्, 'त्रिसाधना शक्तिः--तेजःसमुत्साहसन्मन्त्रणारूपा'' इत्यंशेन चात्मनो नीतिशास्त्रविशेषज्ञताञ्च सूचयति।

स एवमुक्त्वा मघवन्तमुन्मुखः, करिष्यमाणः सशरं शरासनम्।
अतिष्ठदालीढविशेषशोभिना वपुः प्रकर्षेण विडम्बितेश्वरः॥
जहार चान्येन मयूरपत्त्रिणा शरेण शक्रस्य महाशनिध्वजम्।
चुकोप तस्मै स भृशं सुरश्रियः प्रसह्य केशव्यपरोपणादिव॥

इत्यादि युद्धवर्णनं, कवेः धनुर्विद्यापरिज्ञानं सुभृशमवबोधयति।

इत्थं कविकुलललामभूतस्यास्य कृतिषु सर्वशास्त्रपारङ्गमत्वं स्पष्टं व्यक्तीभवति।

अस्य संस्कृतभाषायां पूर्णाधिकारः पदवाक्यप्रमाणपारावारपारीणत्वञ्च पदे पदे प्रस्फुटं प्रतिभाति। व्याकरणविशेषज्ञताऽस्य कं न विस्माययति काव्यस्याखिलानि लक्षणानि, अस्य काव्येषु कात्स्न्र्येन संघटन्ते। रघुवंशकाव्यमार-

भमाणः कवीन्द्रोऽयं 'वागर्थाविव सम्पृक्तौ' इत्यत्र सर्वतः प्राक् काव्यलक्षणं निर्दिशन् 'वागर्थप्रतिपत्तये' काव्यतत्त्वपरिबोधायैव एष काव्योपक्रमः इत्यपि प्रबोधयन् काव्यमिदं काव्यलक्षणस्य परिपक्त्रिममुदाहरणमित्यपि सुतरां सूचयति 'शब्दार्थौ काव्य'मिति लक्षणमनुसन्दधानः । न केवलमिदमेव अपि तु यावन्त्यपि काव्यलक्षणानि[1] लक्षणग्रन्थेषु कवीश्वरैर्गुम्फितानि अशेषविशेषाणि तानि सर्वाण्येवात्र रघुवंशे सम्यक् सङ्गतिं लभन्त इत्यपि सङ्केतयति । एवं 'वागर्थाविव' इत्यत्र समासेन 'पितरौ' इत्यत्र, एकशेषेण च कविः 'इवेन समासो विभक्त्यलोपश्चे'ति वार्तिकं, 'पिता मात्रे'ति सूत्रञ्च संस्मारयन् आत्मनो व्याकृतिपरिज्ञानमावेदयति । किञ्च—

स हत्वा बालिनं वीरस्तत्पदे चिरकाङ्क्षिते ।
धातोः स्थान इवादेशं सुग्रीवं सन्न्यवेशयत् ॥

अत्र 'धातोः स्थान इवादेशमिति' कीदृशी हृदयङ्गमोपमा । यथा अस्धातोः स्थाने 'भू', इण् स्थाने 'गा' इत्येवमादय आदेशाः स्थानिनः पूर्ण कार्यं साधयन्ति, तद्वत्स्थानिनो बालिनः समस्तराज्यकार्यं तत्स्थाने समादिष्टः सुग्रीवः सञ्चालयिष्यति इति भावः ।

यः कश्चन रघूणां हि परमेकः परन्तपः ।
अपवाद इवोत्सर्गं व्यावर्त्तयितुमीश्वरः ॥ [रघु० १५।७]

रघुकुलसम्भवः कश्चिदेकल एव शत्रुसमुदायं विदूरयितुं तथा क्षमो यथा एकोऽपवादः अनेकानुत्सर्गान् व्यावर्त्तयितुमिति व्याकृतिधुरन्धरत्वमाख्याति कवितल्लजस्य ।

अन्यत्र कुमारसम्भवेऽपि 'अपवादो बलवान्, निरवकाशो वा विधिर्बाधकः' इति व्याकरणानुशासनस्य समादरः कियत्प्रशस्तविधिना कृत :—

लब्धप्रतिष्ठाः प्रथमं यूयं किं बलवत्तरैः ।
अपवादैरिवोत्सर्गाः[2] कृतव्यावृत्तयः परैः ॥ [कुमार० २।२७]

---

१. 'शब्दार्थौ काव्यमिति' (काव्यालङ्कारः), 'तददोषौ शब्दार्थौ' इति (काव्यप्रकाशः) 'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इति (रसगङ्गाधरः)' 'वाक्यं रसात्मकं काव्यम्' इति (साहित्यदर्पणः), 'इष्टार्थव्यवच्छिन्ना पदावलिः काव्यम्' इति (काव्यादर्शः), 'निर्दोषा लक्षणवती सरीतिर्गुणगुम्फिता । सालङ्काररसानेकवृत्तिर्वाक् काव्यनामभाक् ।' इति (चन्द्रालोके) ।

२. यथा अन्यत्र चरितार्थमुत्सर्गम् 'इको यणचि' इत्याकारकं निरवकाशो बलवत्तरोऽपवादः 'अकः सवर्णे दीर्घः' व्यावर्त्तयति, अथवा 'मा हिंस्यात्सर्वा भूतानि' एनमुत्सर्गम् 'अग्निष्टोमीयं पशुमालभेत' इति बलवत्तरो उत्सर्गो बाधते तद्वत् किं भवन्तो लब्धप्रतिष्ठाः सन्तोऽपि बलवत्तरैः रिपुभिः बाध्यन्ते इति भावः ।

रामादेशादनुगता सेना तस्यार्थसिद्धये।
पश्चादध्ययनार्थस्य धातोरधिरिवाभवत्॥ [रघु० १५।९]

अत्र यथा अध्ययनार्थकादिङधातोः 'अधि' उपसर्गादेवार्थसिद्धिर्भवति, न जातु तद्विना, तथैव विजयरूपार्थसिद्धये रामादेशात् तत्सेना अनुगता विजयलाभाय प्रभवति, इति भावः। इति किं कवेर्व्याकृतिनैपुणीं नाविष्करोति।

अपि च व्याकरणाभ्युपगमेन वाण्याश्चतुष्टयीत्वम्—परा, पश्यन्ती, मध्यमा, वैखरीति संभेदात्। उक्तञ्च—

परा वाङमूलचक्रस्था पश्यन्ती नाभिसंस्थिता।
हृदिस्था मध्यमा ज्ञेया, वैखरी कण्ठदेशगा॥ इति॥

अथवा, 'चतुष्टयी शब्दानां प्रवृत्तिः, जातिशब्दाः, गुणशब्दाः, क्रियाशब्दाः, यदृच्छाशब्दाः' इति व्याकृतितत्वमनुसन्धाय कविरुपश्लोकयति :—

पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता।
प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी॥ [कुमा० २।१७]

इति तारकासुरसन्त्रस्तैर्देवगणैरात्मकरुणकथा यदा ब्रह्मणे निवेदिता, तदा चतुर्मुखेन तेन ब्रह्मणा चतुर्भिरपि मुखैरुत्तरं विनिवेद्य, शब्दानां चतुष्टयी प्रवृत्तिः चरितार्थितैवेति भावः।

न केवलं व्याकरणनियमा एव कालिदासेन काव्योपयोगितया उपमात्वेन प्रयुक्ताः, अपितु क्वचिद् व्याकरणनियन्त्रितान् वैकल्पिकानपि प्रयोगान् निरतिशय-नैपुण्येन प्रयुञ्जानोऽयं व्याकरणसम्पदः परां कोटिमाटीकमान इव संल्लक्ष्यते। तद्यथा—

ईषदर्थक 'कु' स्थाने 'का' 'कव' आदशौ वैकल्पिकौ। कविना च व्याकरण-नियमानुरोधेन प्रयोगद्वयमपि कोष्णम् कवोष्णञ्चेति प्रयुक्तम्।[1]

एवंविधस्याप्रतिहतगतेः वश्यवाचो वाग्मिनः कालिदासस्य गिरां गाम्भीर्यं लोकोत्तरभावोत्कर्षञ्चावलोक्य महाकविर्मल्लिनाथः स्थान एव समुदाजहार—

कालिदासगिरां सारं कालिदासः सरस्वती।
चतुर्मुखोऽथवा ब्रह्मा विदुर्नाऽन्ये तु मादृशाः॥ इति॥

---

१. (क) मत्परं दुर्लभं मत्वा, नूनमावर्जितं मया।
पयः पूर्वैः स्वनिश्वासैः कवोष्णमुपभुज्यते॥ [रघु० १।६७]
(ख) भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि।
प्रस्रवेणाभिवर्षन्ती वत्सालोकप्रवर्त्तिना॥ [रघु० १।८४]

सर्वशास्त्रनिष्णातत्वं हि कवेः परमं लक्षणम्। पल्लवग्राहिपाण्डित्यचञ्चुः कविर्न सम्यक् कविपदमञ्चति। स्थान एवोक्तं केनचिदभियुक्तेन :—

न सा विद्या न सा रीतिर्न तच्छास्त्रं न सा कला।

जायते यन्न काव्याङ्गमहो भारो महाकवेः॥

तदेतल्लक्षणं कालिदासे सर्वांशेन घटते।

## कालिदासस्य सूक्तयः

कालिदासस्य सूक्तयोऽपि निरतिशयरमणीयत्वादतीव लोकप्रियाः संवृत्ताः। तत्सहृदयानां मनोरञ्जनाय संग्रहेण प्रस्तूयन्ते काश्चन मनोरमतमाः।

(१) एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः।
(२) विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः।
(३) न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्च्छति मारुतस्य।
(४) पथः श्रुतेर्दर्शयितार ईश्वरा मलीमसामाददते न पद्धतिम्।
(५) पदं हि सर्वत्र गुणैर्निधीयते।
(६) आदानं हि विसर्गाय सतां वारिमुचामिव।
(७) भवितव्यतानां द्वाराणि भवन्ति सर्वत्र।
(८) सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः।
(९) न प्रभातरलं ज्योतिरुदेति वसुधातलात्।
(१०) हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः।
(११) स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया।
(१२) याच्ञा मोघा वरमधिगुणे नाऽधमे लब्धकामा।
(१३) मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः।
(१४) कस्यात्यन्तं सुखमुपगतं दुःखमेकान्ततो वा,
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण।
(१५) पुराणमित्येव न साधु सर्वम्।
(१६) किमिव हि मधुराणां मण्डनं नाकृतीनाम्।
(१७) शाम्येत्प्रत्यपकारेण नोपकारेण दुर्जनः।
(१८) विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्।
(१९) सूर्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्राः।
(२०) कामी स्वतां पश्यति। इत्यादि

## कालिदासस्याविर्भावकालः

कालिदासस्य कालमुद्दिश्य कालविदां मतानि बहुधा बेभिद्यन्ते । तत्काल-भेदमनुसन्धाय मुख्यतया [1] त्रयः पक्षाः सम्भवन्ति । तत्र--

प्रथमः पक्षः--कालिदासीयरचनासु हूणानां पराजयवर्णनमवलोक्य, पाश्चात्यविद्वान् फर्ग्यूसनमहोदयः प्रतिपादयति यत्क्रैस्त ५४४ तमे वर्षे उज्जयिन्या अधीशेन विक्रमादित्येनैव कारूरसङ्ग्रामे हूणाः पराजिताः । अतः कालिदासः तस्यैव राज्ञः सभापण्डित आसीदिति ।

अनेनैव विक्रमादित्येन स्वनाम्ना विक्रमसंवत्सरः उपक्रान्तः । परन्तु फ्लीट महोदयेन मतमेतत्प्रत्याख्यातम् । तन्मतेन विक्रमसंवत्सरोऽयं पुरा मालव-संवत्सरनाम्ना प्रचलितोऽभवत् । किञ्च क्रैस्ते ५४४ तमवर्षे हूणपराजयो यशोधर्म-विष्णुवर्धनाऽभिधानेन राज्ञा कृतो न तु विक्रमादित्यसंज्ञकेनेत्युपपादितम् इत्य-मुनोक्तः पक्षस्तु सुतरां निरस्तः किल ।

द्वितीयः पक्षः—यद्यपि द्वितीयपक्षस्तु प्रायशः सर्वैरपि पाश्चात्यविद्वद्भि-रूरीक्रियते । सचैष यन्मन्दसूरस्य क्रैस्त ४७३तमशतकोद्भववत्सभट्टनिर्मितशिला लेखे कालिदासस्य काव्योल्लेखं दृष्ट्वा पाश्चात्यपण्डिताः कालिदासं क्रैस्तचतुर्थशतक-सम्भवस्य विक्रमादित्यस्य समकालभवं मन्यन्ते । तथापि भारतीयविद्वांस एतत्पक्ष-मपि न स्वीकुर्वन्ति निम्नाङ्कितैर्हेतुभिः । पूर्वं तावत् कालिदासेन स्वरचिते मालवि-काग्निमित्राख्ये नाटके क्रैस्तपूर्वतृतीयशताब्द्यां सम्भवस्य राज्ञो अग्निमित्रस्य वर्णनं किमिवारचितम् । क्रैस्तद्वितीयशतकसम्भवस्य प्रख्यातनाम्नो बौद्धकवे-रश्वघोषस्य च नामोल्लेखोऽपि कथन्नाकारि ? किञ्च क्रैस्तप्रथमशतकात्पूर्व-र्वत्तिनां पाण्डचनृपाणां विशदं वर्णनञ्च कथं कृतं येषां चतुर्थशताब्द्यां नामापि नाश्रू-यत ? एवञ्जातीयकैर्हेतुभिर्द्वितीयपक्षोऽपि न कालविदामादरास्पदमित्यश्रद्धेयः ।

तृतीय पक्षः—तृतीयपक्षस्तु कालिदासं क्रैस्तप्रथमशताब्दीसम्भूतं मन्यते । स एष एव पक्षः साधीयान् यौक्तिकश्च प्रतिभाति अधोऽङ्कितैर्हेतुभिः --

---

१. भारतीयेतिवृत्तपर्यालोचनतोऽवगतं भवति क्रैस्तैकसहस्रवर्षपर्यन्तं विक्रमा-दित्याभिधानाः षट् क्षितीशा अभूवन् । तेषु पूर्ववर्त्तिनां त्रयाणामेवासौ सभापण्डितः सम्भवितुमर्हति । क्रैस्त ६३४ वर्षोत्कीर्णे आपहोलशिलालेखे कालिदासभारव्योर्नाम-दर्शनात्, अथ च हर्षचरितात्पूर्ववर्त्तिकविवराणां नामस्मरणे च कालिदासो-ल्लेखाच्च । एतदभिलक्ष्य त्रयः पक्षाः सम्भवन्तीति भावः ।

तत्र प्रथमो हेतुः क्रैस्तपूर्वं ५७ वर्षादारभ्यते विक्रमसंवत्सरः। तेनानुमीयते, यदेतस्मिन् समये एव विक्रमनामा कश्चित् प्रतापी नरेन्द्रो बभूव यन्नाम्ना विक्रमसंवत्सरः प्रचलितः। न च विक्रमनाम्नाऽलङ्कृता षड् राजानोऽभूवन्, तत्र कतमोऽयं येन संवत्सरः प्रचालित इत्याशङ्क्यम्। यतः क्रैस्तपूर्वप्रथमशताब्दीभवस्यैव राज्ञः विक्रम इति नामासीत् अन्येषान्तु विक्रम इत्युपाधिरेव न पुनर्नामेति; अतः तस्यैव सभापण्डितः कालिदास आसीदिति निर्णेतुं न दुष्करः। पाश्चात्यविदुषा फ्लीट महोदयेनाऽप्यङ्गीकृतं यद् विक्रमसम्वत्सरः क्रैस्तपूर्व ५७ त आरभ्य अष्टमशतकपर्यन्तं मालवसम्वत्सरनाम्ना प्रसिद्धः पश्चात्स एव विक्रमनाम्ना प्रसिद्धिङ्गतः।

किञ्च विद्वद्वररामचन्द्रविनायकपटवर्धनेन मेघदूतसमयः क्रैस्तपूर्व-५६ तः किञ्चित्पूर्वं निर्णीतः, तत्र हेतुत्वेन चोपात्तम् यन्मेघदूतस्य 'आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानु''मित्यादि, 'प्रत्यासन्ने नभसि दयिते' इत्यादि, 'शापान्तो मे भुजगशयना'दित्यादि श्लोकानवष्टभ्य ज्यौतिषगणनयाऽभ्युपपादितं यन्मेघदूतस्य रचनासमयः क्रैस्तपूर्व ५६ तः किञ्चित्पूर्वतन एवेति। तदेवमादिभिः हेतुभिरवगम्यते यत्कालिदासः क्रैस्तपूर्वप्रथमशताब्द्यामेव सञ्जात इति निरवद्यम्।

केषाञ्चिद् अश्वघोषस्य कालिदासपूर्वतनत्वप्रतिपादनन्तु नितरां भ्रमविजृम्भितम्। यतः अश्वघोषस्य समयः कुषाणनरेशस्य कनिष्कनृपतेः समकालीनत्वात्क्रैस्तप्रथमशताब्द्या उत्तरार्द्धे निर्द्धार्यते। अश्वघोषकाव्येषु च कालिदासस्य प्रभावः स्पष्टतया दृश्यते। बहुत्र तु कालिदासीयश्लोकानां छायामेवानुहरति सः। निदर्शनदिशा पद्यमेकं पुरस्क्रियते। रघुवंशस्य सप्तमसर्गे—

तासां मुखैरासवगन्धगर्भै-
र्व्याप्तान्तराः सान्द्रकुतूहलानाम्।
विलोल — नेत्रभ्रमरैर्गवाक्षाः
सहस्रपत्राभरणा इवासन्। [रघुवंश ७।११]

बुद्धचरितस्य च तृतीयसर्गे :—

वातायनेभ्यस्तु विनिःसृतानि परस्परोपासितकुण्डलानि।
स्त्रीणां विरेजुर्मुखपङ्कजानि सक्तानि हर्म्येष्विव पङ्कजानि॥

कीदृशं विस्मयावहं सादृश्यम्? इति निर्दर्शितपूर्वम्। एतावता अभ्युपपन्नं भवति यत्कालिदासस्य समयः अश्वघोषात्प्राचीनः, क्रैस्तपूर्वप्रथमशतकदेशीयश्चेति।

## विहगावलोकनम्

कालिदासीयकाव्यकलोपसंहरणात्पूर्वं तावद् भूयोऽपि वारमेकं तदीयकृति-

चमत्कृतिः विहगावलोकनमामन्त्रयते । तन्निरतिशयरामणीयकत्वमभिसन्धाय च तादृशमवलोकनमौचितीमप्यादधात्येव । न ह्येवम्भूतस्य काव्यरत्नस्य रश्मिराशि पुञ्जीभूतं कश्चिद् दृष्ट्वा तार्क्ष्यतुल्योऽपि जनः नैकपदे द्रष्टुं प्रभवति किं पुनः साधारणश्चक्षुष्मान् बुधः । अतः पौनःपुन्येन नयनविषयीकर्त्तुं तादृशं प्रकाशपुञ्जं कस्य वा मनस्विनो मनो न धावति । कालिदासस्य भारती च पुनः उत्तरोत्तरं, क्षणे क्षणे नवाभिनवताञ्चोपयाति

'क्षणे क्षणे यन्नवतामुपैति, तदेव रूपं रमणीयतायाः ।'

इति माघोक्तिञ्च कार्त्स्न्येन चरितार्थयन्ती । तदधुना किञ्चिदन्तः सुखाय विद्वज्जनमनःसन्तोषाय च तदुपक्रम्यते । सोऽयमुपक्रमो न खलु न खलु पुनरुक्ति-दोषभाक् । सरसरसालास्वादनप्रसङ्गेषु पौनःपुन्यं न दोषाय प्रभवति इति ।

प्रायशो हायनानां सहस्रद्वयी[1] व्यतीयाय स्वजन्मना भारतभूतलमिदमलङ्कृतवतः कविकुलगुरोः कालिदासस्य । तथाप्यस्यैतादृशस्यातिद्राघीयसः कालस्य प्रभावेणापि कवेः सुयशोधवलिमाऽद्यावधि नाविलीभूतः । वराकः कालोऽपि नाऽलमभवत्तस्य कीर्त्तिचन्द्रिकां मलिनीकर्त्तुमिति कस्य न विस्मयावहम् ? यद्यपि बहवः कवीश्वराः प्रायतन्त तल्लोकोत्तरां कमनीयकाव्यकलामाकलयितुं, परन्तु अद्यावधि न कश्चिदपि शशाक तत्कीर्त्तिस्तम्भमधिरोढुम् । वस्तुतः प्रागनेकजन्मजन्मान्तरार्जितसुकृतराशिवशादुपलब्धपरिपक्त्रिमप्रदीप्तप्रतिभस्य कालिदासस्य काव्यतुलां स्प्रष्टुमपि न प्रभुरभवत्कश्चिदद्ययावदित्यत्र न काप्यत्युक्तिः, को वा वेत्त्यनागतम् ?

नास्ति चात्र सन्देहलवोऽपि यत्कालिदासेन प्रकृतिदेव्या यादृशं गम्भीरं मार्मिकञ्चाध्ययनं कृतं न तादृशमन्येन केनाऽपि कृतं प्रतीयते। गभीरतरदृष्टि-

---

१. यथा आधुनिकानुसन्धानेन कालिदाससमयः सहस्रद्वयीमितः एव निश्चीयते कालज्ञैः, तथैव तदान्तरिकप्रमाणैरपि तावानेव कालः समुपपाद्यते । स्वकीयकृतिषु प्रयुक्तैः कालिदासपद्यैरपि स एव कालो निर्धारयितुं शक्यते। तद्यथा 'प्रससादोदयादम्भः कुम्भयोनेर्महौजसः', 'आषाढस्य प्रथमदिवसे', 'प्रत्यासन्ने नभसि', 'शापान्तो मे भुजगशयनाद्' इत्यादिभिः पद्यांशैर्ज्योतिर्विद्भिर्निश्चीयते यत् स्थितिरियं पुष्यनक्षत्रस्य प्रथमचरणे गते सति सूर्ये, कर्कसङ्क्रान्तिसमये सम्बोभवीति । परमिदानीं स्थितिरियं आर्द्रानक्षत्रोदयारम्भे सम्पद्यते । नभोमासश्चेदानीं २८·३१ अंशव्यवहिते जाते घटते । एतत्स्थितिप्रतिपन्नार्थञ्च प्रायशः वर्षाणां सहस्रद्वयीमितः कालोऽपेक्षितो भवति । किञ्च अगस्त्योदयस्य कृतेऽपि तावानेव कालोऽपेक्ष्यते। तस्माद् उक्तकालमर्यादास्वीकारे न काचिदापत्तिः ।

पातेनावगतं भवति यत्कोऽप्यपूर्वो मनोवैज्ञानिको विकासक्रमः समुल्लसति किलाऽस्य रचनासु काव्यकलालास्यमातन्वानः। तथा च :—

ऋतुसंहारे—अस्य प्रथमं काव्यं ऋतुसंहाराख्यम्। तरुणः कविः प्रकृति-नटीं न तथोपलालयामास यथा कामिनीजनम्। कामिनीनामेव सौन्दर्यवर्णनं, तासां हावभावविभ्रमविलासादिचित्रणमेवास्मै रोचते प्राधान्येन। ऋतुषु ऋतुषु परिवर्त्तमानान् कामिनीजनमनोगतान् भावावेशानेवासौ ग्रथ्नाति भूम्ना, प्रकृति-च्छविन्तु तत्र प्रायश उपेक्षापक्ष एव निक्षिपति। तदनु—

कुमारसम्भवे प्राकृतिक-मानवीय-विभूत्योः साम्यं प्रतिष्ठापयति। प्राकृतिकसौन्दर्यकेन्द्रीभूतस्य पर्वतराजस्य हिमालयस्य पवित्रतां सौन्दर्यनिधित्वञ्च संस्थापयति उमामहेश्वरयोस्तपश्चर्यां द्वारीकृत्य।

मेघदूते च पुनः प्रकृतिमानवयोस्तादात्म्यसम्बन्धं निबध्नाति महता नैपुण्येन। तत्र पूर्वमेघे विरहवह्निसम्प्लुष्टो यक्षो यथातथा वा प्रकृतिसौन्दर्य-सन्दर्शनेन विक्लवतां गतं हृदयमाश्वासयति। सान्त्वयति पुनः वियोगखिन्नं मनः। प्रत्येकं पद्यरत्नं स्वप्रेयसीसौन्दर्यसूत्रपिनद्धं प्रकृतिवर्णनव्याजेन निबध्नाति। तद्यथा कैलासमुद्दिश्य :—

तस्योत्सङ्गे प्रणयिन इव स्रस्तगंगादुकूलां,
न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कर्मचारिन्।
या वः काले वहति सलिलोद्गारमुच्चैर्विमाना,
मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम्॥

उत्तरमेघे च पुनः विरहकातरायाः स्वप्रेयस्या अतीतानागतानां मिलनस्वर्ण-स्वप्नानां जटिलजालमातन्वान आस्ते पुनर्मिलनाशया जीवितं धारयेति आश्वास-यति विषण्णं स्वस्य प्रेयस्याश्च मनश्चञ्चलम् सहजगत्या :—

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ,
शेषान् मासान् गमय चतुरो लोचने मीलयित्वा।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
निर्देक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु॥

सौन्दर्यस्य प्रणयविशेषस्य चाद्भुतकविरयं स्वकाव्यकलापे साम्यं नामन्त्रयते, यद्यपि सर्वैरेव महाकविभिः स्वस्वकृतिषु प्रेम्णः सौन्दर्यस्य च विचित्रचित्रणं कृतं महता पाटवेन, तथापि तेषु नैव कश्चित्कालिदासस्य कोटिमाटीकते—अहो सर्वास्ववस्थासु रमणीयत्वमाकृतिविशेषाणाम्। वस्तुतः आभरणानि नालङ्कुर्वन्ति

सौन्दर्यम्। प्रत्युत सौन्दर्येणैव भवन्त्यलङ्करणानि समलङ्कृतानि। तद्यथा विक्रमोर्वशीये :—

आभरणस्याभरणं प्रसाधनविशेषेषु प्रसाधनविशेषः।
उपमानस्यापि सखे प्रत्युपमानं वपुस्तस्याः॥ [वि० २।३]

आभरणानि अपि बहुशः प्राकृतिकानि कुसुम-कुड्मल-नवपल्लवमयानि, न जातु रत्नखचितस्वर्णमयानि कृत्रिमाणि स उपलालयति। अलकापुरीललनाकरपल्लवेषु लीलाकमलानि, केशपाशेषु कुन्दकुड्मलानि, कपोलपालिषु लोध्रपुष्पपरागरागः, कर्णयुगलेषु मृदूनि शिरीषकुसुमानि, कुन्तललतासु कदम्बकुसुमानि, अलङ्करणत्वेनाङ्गीकृतानि, स्फुटीकरोति कालिदासस्याप्रमेयं प्रकृति-प्रेमप्रपञ्चम्। नारीजनं पुरुषस्योपभोगवस्तुत्वेन स नाभिनन्दति, सा तु खलु तद्दृष्ट्या सचिवरूपा सुगृहिणी, ललितकलानिष्णाता सखी, सहचारिणी, सम्राज्ञी, अर्द्धाङ्गिनी इति पुरुषाणां परमादरास्पदञ्चेत्येवंजीयकत्वेनाऽसौ तां विवृणोति। यद्यपि स प्रकृतिसौन्दर्यं बहुतरं मनुते तथापि मानवीयसौन्दर्यस्य स मुक्तकण्ठतः स्वीकरोति प्रकृतिसौन्दर्यापेक्षया श्रेष्ठत्वम्। तद्यथा मालविकाग्निमित्रे प्रकृतिसौन्दर्यसौष्ठवं व्यावृण्वन् :—

रक्ताशोकरुचा विशेषितगुणो बिम्बाधरालक्तकः,
प्रत्याख्याति विशेषकं कुरवकं श्यामावदातारुणम्।
आक्रान्ता तिलकक्रिया च तिलकैर्लग्नद्विरेफाञ्जनैः
सावज्ञेव मुखप्रसाधनविधौ श्रीमाधवी योषिताम्॥

इतरत्र मानवीयसौन्दर्यस्य सुष्ठुतरत्वमसौ मुक्तकण्ठतः प्रतिपादयति :—

शिरीषपुष्पाधिकसौकुमार्यौ बाहू तदीयाविति मे वितर्कः।
पराजितेनापि कृतौ हरस्य यौ कण्ठपाशौ मकरध्वजेन॥ [कुमा० १।४१

रघुवंशे च पुनः संस्पृशति कुमारसम्भवतः किञ्चिदुत्तरं स्तरम्। कविना तत्र प्रकृतिपुरुषयोः सन्ततसाहचर्यसंवेलितः कोऽप्यविच्छेद्योनुबन्धः, प्रकृतिसम्बन्धविधुरं मानवजीवनं निर्जीवं नीरसञ्च सम्पद्यते इति विशदय्य निरूपितम्। अस्य काव्येषु मानवजीवनस्य सर्वेऽप्युच्चावचभावाः कवित्वपाटवेन चित्रिता अवभान्ति।

यद्यपि प्रायशो रघुवंशे तु प्रमुखाः सर्वे रसाः सर्वे चालङ्काराः पम्फुल्यमानाः पूर्णपरिपोषञ्च जुषमाणा अनुभूयन्ते। अग्निवर्णस्य विलासोल्लासेषु शृङ्गारस्य, रघु-अज-रामप्रभृतीनां युद्धप्रसङ्गेषु वीररसस्य, अजविलापे करुणरसस्य, वशिष्ठवाल्मीकिपुण्याश्रमवर्णने, रघोः सर्वमेधयज्ञप्रसङ्गे च शान्तरसस्य तन्मूर्त्तमिव चित्रणं

कस्य मनो न व्यामोहयति । तथापि शृङ्गाररसे, उपमालङ्कारे चायं सर्वानेव कवीश्वरानतिशेते इत्यत्र नास्ति मतद्वैविध्यम् ।

रसेषु च सत्तमः शृङ्गार एव । एष हि शृङ्गाररसः खल्वालङ्कारिकैः रसेषु सार्वभौमत्वेनोररीकृतः । अस्य च सर्वाङ्गपूर्णः प्रपक्विमः परिपाकः कालिदासीय-काव्येषु साक्षाद् विग्रहवानिव सम्प्रतिपन्नः । सोऽयं शृङ्गाररसः मेघदूत-मालविकाग्निमित्रविक्रमोर्वशीये विशिष्य तु शाकुन्तले अङ्गित्वेन, रघुवंश-कुमारसम्भवयोश्च पुनरङ्गत्वेन अनितरसाधारणतया समभ्युपपन्नः ।

एवमेवालङ्कारेषु कालिदासस्य उपमाऽपि विविधरूपधारिणी चेतसश्च-मत्कारिणी सती अभिदुरे मेघमेदुरेऽम्बरे तदीयकाव्यप्रसरे विद्युल्लतेवाविरतमित-स्ततो विद्योतमाना विलसति किल ।

तां हंसमाला शरदीव गङ्गां
महौषधिं नक्तमिवात्मभासः ।
स्थिरोपदेशामुपदेशकाले
प्रपेदिरे प्राक्तनजन्मविद्याः ।। [कुमा० १।३०]

वस्तुतः कालिदासीयकाव्यकलायाः निरतिशयलोकप्रियत्वं सर्वश्रेष्ठत्वं प्रति शृङ्गारोपमयोरद्भुतः परिपोष एव हेतुतां सञ्जुषते । तत्र च वर्णविन्यासमाधुरी, भाषायाः प्राञ्जलता, प्रसादगुणगुम्फनञ्चेत्यादि गुणोत्कर्षाः स्वर्णे सुरभिमाद-धाना इवाभिलक्ष्यन्ते —

'अयि आत्मगुणावमानिनि ! क इदानीं शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयति', 'आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम्', 'वत्से सुशिष्यपरिदत्तेव विद्याऽशोचनीयाऽसि संवृत्ता', 'सर्वः सगन्धेषु विश्वसिति' इत्यादि । अहो कीदृशः प्रसादपूर्णो वाचां प्रवाहः ? कियद्यावद् वर्ण्येत कालिदासस्य भारती ? न तां वर्णयतो मनस्तृप्यति, नाप्यात्मा सन्तुष्यति, वराकी लेखन्यपि श्रान्ता सन्त्रस्ता च सती नाधुनाग्रे प्रसरितुमुत्सहते, विश्रान्तिमिच्छति सापि वराकी, सामर्थ्याभावान्न जातु तद्गुणानामियत्तयेति । किं बहुना :

अमृतेनेव संसिक्ता चन्दनेनेव चर्चिता ।
चन्द्रांशुभिरिवोद्घृष्टा कालिदासस्य भारती ।। इति ।

—०—

# महाकविरश्वघोषः

१––परिचयः । २––रचनाः । ३––बुद्धचरितम् । ४––नाटकानि ।

## परिचयः

बौद्धमतावलम्बिषु कविषु महाकविरश्वघोषो नामात्युच्चपदमलङ्करोति । प्रचलितपरम्परानुरोधेन, विदितं भवति यदसौ ख्रैस्तप्रथमशताब्द्यां राज्ञः श्रीकनिष्कदेवस्य, गुरुपदमलङ्कुर्वाणः तत्सभायां राजकविपदमध्यतिष्ठत् । जन्मभूमिरस्य खलु साकेतमण्डलम् । कस्मिंश्चिद् वेदशास्त्रसम्पन्ने विप्रकुले चायं लब्धजन्मा जननी चास्य स्वर्णाक्षीनाम्नी परमविदुषी देवी ।

बौद्धधर्मदीक्षानन्तरमनेनाखिलाऽपि शक्तिसम्पद् बौद्धधर्मप्रचारायैव समर्पिता । बौद्धधर्मस्य रहस्यपूर्णान् निगूढान् राद्धान्तान् असौ कवित्वरसप्दाऽतिमधुरया भाषया सर्वसाधारणजनानवबोधयितुमतितरां प्रायतत । एकतस्त्वयमत्युच्चकोटिमाटीकमानः कविरपरतश्च प्रौढतमो दार्शनिकः । तदेतत् सुवर्णे सुरभ्याधानमिवाभ्युपपन्नमस्य रचनासु ।

## रचनाः

अस्य परमप्रथितं सर्वप्रथमं सौन्दरानन्दाख्यम् महाकाव्यम् । काव्येऽस्मिन् भगवतो बुद्धदेवस्य नन्दनाम्नोऽनुजस्य निजप्रेयस्या सुन्दरीनाम्न्या देव्या सह बौद्धधर्मदीक्षाग्रहणवृत्तान्तं कयाऽपि मर्मभेदिन्या गिरा समुपन्यस्तम् ।

मानवान् दुःखावसायिनो भोगविलासाद् विमुखीकृत्य तेषां त्यागतपःपरोपकृतिं प्रत्युन्मुखीकरणमेवास्य चरमोद्देश्यत्वेनावगम्यते । अस्य काव्यस्य शैली तु विशुद्धा वैदर्भी, भाषा प्रासादिकी, भावावेशाश्च सुकोमलाः प्रकृतिवर्णनञ्चातीव हृदयङ्गमम् । तदित्थं काव्यमिदं सर्वतोभावेन हृदयावर्जकं सम्पन्नम् । अत्र सुन्दरी नन्दयोर्वियोगं निशानिशानाथयोर्वियोगेन सहोपमिमानः कवितल्लजोऽयं कियच्चारुतया ग्रथ्नाति :—

'तां सुन्दरीं चेन्न लभेत नन्दः, सा वा निषेवेत न तं नतभ्रूः ।
द्वन्द्वं ध्रुवं तद्विकलं न शोभेतान्योन्यहीनाविव रात्रिचन्द्रौ ॥'

अपि च :—

तं गौरवं बुद्धगतं चकर्ष भार्यानुरागः पुनराचकर्ष।
सोऽनिश्चयान्नापि ययौ न तस्थौ तरन् तरङ्गेष्विव राजहंसः॥

अहो नन्दस्य तदानीन्तनायाः कारुण्यविपन्नावस्थायाः कीदृशमिदं मार्मिकं चित्रणम्! एकतो बुद्धस्य मार्मिकाः उपदेशास्तमाकर्षन्ति, अपरतश्च प्रेयस्यास्ते केऽपि समुद्वेल्यमानाः प्रेमोल्लासाः कदर्थयन्ति, इति तरङ्गेषु तरन् राजहंस इव असौ न यातुं शशाक, न वा स्थातुम्। किं कर्त्तव्यविमूढतयेति भावः।

## बुद्धचरितम्

बुद्धचरिताख्यं नामास्यापरं महाकाव्यम् अष्टाविंशतिसर्गैरुपनिबद्धम्। सम्प्रति केवलमस्याद्भुतकाव्यस्य सप्तदशसर्गा एव समुपलभ्यन्ते इति विषादस्थानम्। अस्मिन् हि काव्ये भगवतो गोतमबुद्धस्य पवित्रचरितमतीव चारुतया संग्रथितम्। भाषाऽस्य सुमधुरा प्राञ्जला च। यत्र-तत्र प्रकृतिवर्णनमपि रमणीयतरं संवृत्तम्।

नूनमश्वघोषस्य कृतिरियं कवित्वकलाचमत्कृतिपूर्णा। यद्यपि क्वचित् क्वचिद् बौद्धसिद्धान्तप्रतिपिपादयिषया पद्येषु तत्तद्दार्शनिकतत्त्वनिवेशार्थं कृतः प्रयासः दुरूहतायां परिणत इवावभासते, तथाऽपि तावता काव्यस्य चारुतां चमत्कारं वापह्नोतुं कः पारयेत। अश्वघोषविरचितानि काव्यानि गीर्वाणवाङ्मयालङ्कारभूतानि। न तानि कथमपि निम्नकोट्यां गणयितुमर्हाणि। यद्यपि तानि कालिदासीयकवित्वकलातुलां न स्पृशन्ति तथापि यत्र-कुत्र तादृशमकल्पनीयं सादृश्यं बिभ्रति, यद्विलोक्य बहवस्तु इत्यद्यावद्धावन्ति, कालिदासकृतौ अश्वघोषस्य काव्यानामनुकृतिमवलोकयन्तश्च व्यवस्थापयन्ति कालिदासपूर्वकालभवामश्वघोषस्य स्थितिम्। परं सूक्ष्मेक्षणेन प्रव्यक्तमिदं भवति यदश्वघोषस्य काव्यानि न मनाक् कालिदासीयकवित्वे, कोमलतायां, पदविन्यासमाधुर्ये च स्पर्द्धितुं क्षमाणि। मनोविज्ञानानुगतभावानां सविश्लेषचित्रणे च यथा कालिदासः कविमण्डलाखण्डलतां बिभर्त्ति न तथाऽन्ये केऽपि महाकवयः, वराकस्याश्वघोषस्य तु वार्त्तैव का।

यद्यपि अनयोः काव्ये सादृश्यमपि क्वचित्क्वचित् विस्मयावहं सम्पन्नम्। तद्यथा बुद्धचरितस्य तृतीये सर्गे :—

ततः कुमारः खलु गच्छतीति, श्रुत्वा जनः प्रेष्यजनात्प्रवृत्तिम्।
दिदृक्षया हर्म्यतलानि जग्मुर्जनेन मान्येन कृताभ्यनुज्ञाः॥१३॥
ताः स्रस्तकाञ्चीगुणविघ्निताश्च सुप्तप्रबुद्धाकुललोचनाश्च।
वृत्तान्तविन्यस्तविभूषणाश्च कौतूहलेनाऽपि भृताः परेयुः॥१४॥

प्रासादसोपानतलप्रणादैः काञ्चीरवैर्नूपुरनिस्वनैश्च ।
विभ्रामयन्त्यो गृहपक्षिसंघानन्योन्यवेगाच्च समाक्षिपन्त्यः ॥१५॥
वातायनेभ्यस्तु विनिःसृतानि, परस्परोपाश्रितकुण्डलानि ।
स्त्रीणां विरेजुर्मुखमण्डलानि सक्तानि हर्म्येष्विव पङ्कजानि ॥१९॥
दृष्ट्वा च तं राजसुतं स्त्रियस्ता जाज्वल्यमानं वपुषा श्रिया च ।
धन्याऽस्य भार्येति शनैरवोचन् शुद्धैर्मनोभिः खलु नान्यभावात् ॥२३॥
अयं किल व्यायतपीनबाहू रूपेण साक्षादिव पुष्पकेतुः ।
त्यक्त्वा श्रियं धर्ममुपेष्यतीति तस्मिन् स्त्रियो गौरवमेव चक्रुः ॥२४॥

इमानि पद्यानि रघुवंशस्य सप्तसर्गगतैरधस्तादङ्कितैः पद्यैः सह सादृश्यमनुबध्नन्ति तत्कियद्यावदौचितीमावहति इति तु सुधियः स्वयमेवावलोकयन्तु । यदा अजः इन्दुमत्या सह राजमार्गं प्राप तदा पुरसुन्दरीणां विचेष्टितानि वर्णयन् आह कालिदासः —

तदा तदालोकनतत्पराणां सौधेषु चामीकरजालवत्सु ।
बभूवुरित्थं पुरसुन्दरीणां त्यक्तान्यकार्याणि विचेष्टितानि ॥५॥
आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः ।
बोद्धुं न सम्भावित एव तावत् करेण रुद्धोऽपि च केशपाशः ॥६॥
प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद् द्रवरागमेव ।
उत्सृष्टलीलागतिरागवाक्षादलक्तकाङ्कां पदवीं ततान ॥७॥
विलोचनं दक्षिणमञ्जनेन सम्भाव्य तद्वञ्चितवामनेत्रा ।
तथैव वातायनसंनिकर्षं ययौ शलाकामपरां वहन्ती ॥८॥
जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्नां न बबन्ध नीवीम् ।
नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वासः ॥९॥
रतिस्मरौ नूनमिमावभूतां राज्ञां सहस्रेषु तथाहि बाला ।
गतेयमात्मप्रतिरूपमेव मनो हि जन्मान्तरसङ्गतिज्ञम् ॥१५॥ इति ।

अहो कीदृग्विस्मयावहं साम्यम् ? ईदृशं हि खलवद्भुतं सादृश्यमनयोरवलोक्य मिथः कवित्वच्छायाऽनुहरणं केचन संशेरते । परं महोद्दामवाचां महाकवीनां विषये तादृशं साजात्यं निसर्गसुलभया गत्याऽपि सम्भवन्न नान्योऽन्यछायानुहरणकोटिं मात्रयाऽप्याटीकते । अतर्कोपनतं तादृशं सादृश्यं न मनाक् सम्भवकोटितः प्रच्यवते । अत्र नास्ति सन्देहलवोऽपि यदश्वघोषस्य काव्यं परमोच्चकोटिमालम्बते । नूनं काव्यमेतदत्यन्तसफलं प्रशंसार्हञ्चाभ्युपपन्नम् । निर्वाणतत्त्वमत्र दीपदृष्टान्तेन कियच्चारुतयोपन्यस्तम् :—

दीपो यथा निर्वृतिमभ्युपेतो नैवावनिं गच्छति नान्तरिक्षम्।
दिशं न काञ्चिद् विदिशं न काञ्चित् स्नेहक्षयात्केवलमेति शान्तिम् ॥

काव्यकलयाऽपि असौ प्रथमां श्रेणीमालम्बते :—

'कृपणं बत यूथलालसो महतो व्याधभयाद् विनिस्सृतः।
प्रविविक्षति वागुरां मृगश्चपलो गीतरवेण वञ्चितः ॥

अश्वघोषस्य रचनान्तरेषु सौन्दरानन्दं बुद्धचरितञ्चातिरिच्य सूत्रालङ्कारः, महायानश्रद्धोत्पादः, वज्रसूची, गण्डितस्तोत्रमित्येतेऽन्ये सन्दर्भाः अपि अतीव हृदयङ्गमाः। परमस्य काव्येषु भूयसा काव्यान्तरच्छाया प्रतिबिम्बिता इव प्रतिभाति इति कुतूहलास्पदम् किल ! इति दिक्।

## नाटकानि

यथान्यत्रोट्टङ्कितम् यदश्वघोषोऽयं बौद्धकविषु सुप्रथितः। क्रैस्त १९१० तमेब्दे एशियाखण्डस्य तूरफानाख्ये स्थाने विद्वद्वरलूडर्समहाभागेन अश्वघोषविरचितं नाटकत्रयमाविष्कृतम्। तत्रैकं तु शारिपुत्रं प्रकरणसंज्ञकम् षड्भिरङ्कैरुपनिबद्धम्। अत्र शारिपुत्रस्य मौद्गलायनस्य बुद्धोपदेशग्रहणविवरणं पल्लवितम्। नाट्यनियमानुसारेणेदं प्रकरणं भवितुमर्हति। नान्दी-प्रस्तावना-सूत्रधारादिव्यवस्था च नाट्यतन्त्रानुबन्धिनी एव। विभिन्नप्राकृतभाषाणां प्रयोगोऽपि शास्त्रीयः। परन्तु पर्यवसाने भरतवाक्यस्य प्रयोगो नोपलभ्यते इति अस्य वैलक्षण्यं नाटकान्तरेभ्यः। अन्यन्नाटकद्वयं त्रुटितं विद्यते। तत्रैकं प्रबोधचन्द्रोयवत् रूपकमेव, यत्र बुद्धि-धृति-कीर्तिप्रभृतिकल्पितपात्राणां चित्राणि चित्रितानि। इतरच्च मृच्छकटिकेन सादृश्यं भजते। अत्र मागधवती नाम्नी वाराङ्गना कौमुदगन्धसंज्ञश्च विदूषकः। एतयोर्नाम्नोरद्यापि परिज्ञानं नास्ति। एषां नाटकानां भाषाऽपि किलासंस्कृता प्रतिभाति।

इति सर्वतन्त्रस्वतन्त्रैः पदवाक्यप्रमाणपारावारीणैः श्रीमदाचार्यद्विजेन्द्रनाथशास्त्रिसिद्धान्तशिरोमणिभिर्विरचिते संस्कृतसाहित्यविमर्शाख्ये ग्रन्थे अष्टमः परिच्छेदः।

—०—

## नवमः परिच्छेदः

# कविवरो भर्तृमेण्ठः

१--परिचयः । २--अस्य समयः ।

### परिचयः

संस्कृतसाहित्ये कविवरस्य भर्तृमेण्ठस्य नामातीव प्रतिभाशालित्वेन स्मर्यते। राजशेखरेणास्य संस्मरणं स्वकीये बालरामायणाख्ये परमरमणीये काव्ये कृतमवलोक्यते :--

बभूव वल्मीकभवः पुरा कवि-
स्ततः प्रपेदे भुवि भर्तृमेण्ठताम् ।
स्थितः पुनर्यो भवभूतिरेखया
स वर्त्तते सम्प्रति राजशेखरः ।।

तदिदं कौतूहलास्पदं यद् वाल्मीकि-भवभूतिकालमध्यवर्त्तिनं लोकविश्रुतं कविकुलगुरुं कालिदासमप्रस्तुत्य भर्तृमेण्ठस्य प्रशंसनं विहितम्। तन्नूनम्महाकवेरस्य गौरवशालित्वमभिव्यनक्ति ।

### अस्य समयः

महाकविना काश्मीरकेण कह्लणेनापि राजतरङ्गिण्यामस्य वर्णनमुपन्यस्तम् :

'हयग्रीववधं मेण्ठस्तदग्रे दर्शयन् नवम् ।
आसमाप्ति ततो नाऽपत् साध्वसाध्विति वा वचः ।।
अथ ग्रन्थयितुं तस्मिन् पुस्तके प्रस्तुते न्यधात् ।
लावण्यनिर्याणभिया राजाऽधः स्वर्णभाजनम् ।।
अन्तरज्ञतया तस्य तादृश्या कृतसत्कृतिः ।
भर्तृमेण्ठः कविर्मेने पुनरुक्तं श्रियोऽर्पणम् ।।

[राज० तृतीये तरङ्गे २६४–२६६]

इत्यनेनावगम्यते यत्कविरेष काश्मीरेषु एव राज्ञो मातृगुप्तस्य सभापण्डितत्वमलञ्चकार। राजतरङ्गिणीसाक्ष्येण मातृगुप्त-भर्तृमेण्ठसमयः खलु समसामयिक एव। एतदनुरोधेन क्रैस्त ४३० मिताब्दसन्निकर्ष एव क्वचित्सम्भाव्योऽस्य समयः।

अस्य रचनात्वेन प्रसिद्धं काव्यं हयग्रीववधाख्यम्। यद्यप्येतदद्यत्वे न सुलभोपलम्भम्, तथाऽपि ग्रन्थान्तरेषु अस्य प्रशंसनावलोकनेन अस्य महनीयत्वं सुतरामाविर्भवति। श्रीमम्मटाचार्येण काव्य-प्रकाशस्य सप्तमोल्लासे 'अङ्गस्याप्यतिविस्तृतिः' इति काव्यदोषं मन्यमानेन 'हयग्रीववधा'देव पद्यमेकं समुदाहृतम्। अनेनास्य सुप्रसिद्धिः सुतरां ध्वनिता भवति। परं समकालावच्छदेनैवास्य काव्यस्य सदोषत्वमप्युपोद्वेलितम्भवति। इदमत्र बोध्यम् यदालङ्कारिकाणामेष समयः यत्काव्येषु रूपकेषु च अङ्गिनो मुख्यपात्रस्यैव विस्तृतं वर्णनं भवति न तदङ्गस्यामुख्यस्येति। परन्तु 'हयग्रीववधे' एष नियमः समुल्लङ्घितोऽवलोक्यते। अत्र हि खल्वङ्गी विष्णुः, अङ्गञ्च पुनः हयग्रीवः। अत्र नायकस्य स्थाने प्रतिनायकस्यैव यद् विस्तृतं वर्णनं प्रपञ्चितं तदेष दोषः। स एव मम्मटाचार्येण दोषत्वेन निर्दिष्टः 'अङ्गस्याप्यतिविस्तृतिः'। कविराजेन सोड्ढलेनाप्यस्य प्रशंसायामुट्टङ्कितम् :—

'यः कश्चिदालेख्यकरः कवित्वे,
प्रसिद्धनामा भुवि भर्तृमेण्ठः।
रसप्लवेऽपि स्फुरति प्रकामं,
वर्णेषु यस्योज्ज्वलता तथैव॥

अस्य वक्रोक्ति प्रशंसन् कवीश्वरो धनपाल आह :—

'वक्रोक्त्या मेण्ठराजस्य वहन्त्या सृणिरूपताम्।
आविद्धा इव धुन्वन्ति मूर्द्धानं कविकुञ्जराः॥

यत्र क्वचित् हस्तिपकनाम्ना सुभाषितेषु सूक्तयः उपलभ्यन्ते ता अपि हस्तिपकापरनाम्नो भर्तृमेण्ठस्यैवेति बहवोऽनूचाना आशेरते। अस्य काव्यरसोऽपि समास्वाद्यताम् :—

त्यक्तो विन्ध्यगिरिः पिता भगवती मातेव रेवा नदी,
ते ते स्नेहनिबन्धबन्धुरधियस्तुल्योदयाः दन्तिनः॥
त्वल्लोभान्ननु हस्तिनि! स्वयमिदं बन्धाय दत्तं वपु-
स्त्वं दूरे ध्रियसे लुठन्ति च शिरःपीठे कठोराङ्कुशाः॥

अपि च :—

घासग्रासं गृहाण, त्यज गजकलभ! प्रेमबन्धं करिण्याः,
पाशग्रन्थिव्रणानामभिमतमधुना देहि पङ्कानुलेपम्।
दूरीभूतास्तवैते शबरवधूविभ्रमोद्भ्रान्तरम्या,
रेवाकूलोपकण्ठद्रुमकुसुमरजोधूसरा विन्ध्यपादाः॥

—o—

# महाकविभारविः

(षष्ठशताब्द्युत्तरार्द्धे)

१——परिचयः। २——रचना। ३——स्थितिकालः। ४——भारवेः सूक्तयः। ५——वैशिष्टयम्। ६——भारवेरर्थगौरवम्।

## परिचयः

महाकाव्यकृतां श्रेण्यां कालिदासाश्वघोषयोरनन्तरं कालक्रमानुरोधात् महाकविर्भारविरेव [1]रविरिवोदेति संस्कृतसाहित्यमहाम्बरे। अस्य कवेः किलार्थगाम्भीर्यतुन्दिलवचनरचनापटीयसी, सुललितपदविलासलास्यलीलावती, विशुद्धरमणीयवर्णाभरणा भारती अमन्दानन्दसन्दोहोल्लासेन कस्य वा सहृदयस्य हृदयसरोवरं नोद्वेल्लयति। यद्यपि व्यास-वाल्मीकिकविपुरन्दराणां संस्कृतसाहित्यधुरन्धराणां काव्यवीणानिक्वणनप्रावीण्यं तु न पस्पर्शास्य कवित्वझङ्कारः, तथापि सोऽतीव श्रवणमधुरः प्रशस्यतरश्च संवृतः[1]।

## रचना

महामहिमशालिनो महाकवि-भारवेः लेखनीलताप्रसूतमिदं किरातार्जुनीयं[2] नाम महाकाव्यकुसुमम्। तत्कथावस्तु तु कविना महाभारतस्य वनपर्वतः सङ्क-

१. प्रकाशं सर्वतो दिव्यं विदधाना सतां मुदे।
प्रबोधनपरा हृद्या भा रवेरिव भारवेः॥

२. भारवेः बाल्यकालप्रथितं वास्तविकं नाम तु दामोदरः। भारविर्नाम तु पश्चात् कवित्वलब्धकीर्तेः तस्य उपनाम। तदनु च एतन्नाम्नैवाऽसौ प्रसिद्धिं गतः। भारविरारम्भादेवातिगम्भीरः धीरः महामेधावी जन्मजातकविश्च। अल्पे वयस्येवास्य प्रकाण्डपाण्डित्यं संवृत्तं लोकप्रशंसाभाजनम्। परन्तु कविप्रवरस्यास्य जनकः कदाप्येनं न प्रशशंस अपितु काले-कालेऽस्य निर्भर्त्सनामकरोत् प्रायशः। एकदा 'सर्वेषां विद्वद्वराणामहं प्रशंसाभाजनं जातः परन्तु पितृचरणा मां सर्वदैव अवजानन्ति' इति खिन्नमनस्को मातरं प्रति सर्वमिदं वृत्तं न्यवेदयत्। तदा सुतवत्सलाऽस्य जननी भारवेर्जनकं पप्रच्छ यत्कथमेवं सकलगुणसम्पन्नमात्मजं सतिरस्कारमवजानन्ति भवन्तः। भवत्कृततिरस्कृतिना सोऽतीवोद्विग्नमनस्कतया कालं यापयति इति विषीदत्यतितरां ममापि हृदयम्। ततो जनक आह——

लितम्, यद् द्वैतवनमधिवसतां पाण्डवानां तात्कालिकवृत्तान्तविशेषमधिकृत्य प्रवृत्तम्। तत्र च पाण्डवानामन्यतमस्य प्रकाण्डवीरस्यार्जुनस्य किरातरूपधारिणः पशुपतेः सकाशाद् मोघास्त्रोपलब्धिरूपं वृत्तमुपगुम्फितम्। अष्टादशसर्गैरुपनिबद्धेऽस्मिन् महाकाव्ये इन्द्रकीलनामके पर्वते प्रवृत्तस्य शङ्करार्जुनयोर्युद्धस्यातीव रोमहर्षणं वर्णनं न कस्य हृदयङ्गमम्। अस्य काव्यस्यारम्भः श्रीशब्देनोपसंहारश्च लक्ष्मीपदेन कृतः। शृङ्गारादिरसानां गौणतया वीररसस्य पुनः प्राधान्येन चित्रणमतिमनोहरं सम्पन्नम्। प्राकृतिकदृश्यानां निरूपणं, शैल-सूर्यास्तमन-जलक्रीडादीनाञ्च वर्णनमतीव मनोज्ञम्। स्वल्पैः पदैर्विशदार्थवर्णनमेव कवेरस्य वैशिष्ट्यम्। "भारवेरर्थगौरवम्" इत्युक्तिरस्य विषये सुतरां सामञ्जस्यमश्नुते। पाशुपतसंज्ञकास्त्रसंप्राप्तिपर्यवसानमेवास्य काव्यस्य फलत्वेनावसीयते। तथा चाह मल्लिनाथः ––

नेता मध्यमपाण्डवो भगवतो नारायणस्यांशजः,
तस्योत्कर्षकृते नु वर्ण्यचरितो दिव्यः किरातः पुनः।
शृङ्गारादिरसोऽङ्गमत्र विजयी वीरप्रधानो रसः,
शैलाद्यानि च वर्णितानि बहुशो दिव्यास्त्रलाभः फलम्॥ इति।

## स्थितिकालः

सोऽयं कविः भारतस्य कतमं जनपदं स्वजनुषाऽलमकार्षीत् कस्य वा वंशस्यावतंसताङ्गत इत्यद्यापि न निर्णयपथमारोहति। तथापि प्रचलितप्रवादमनुसन्धाय पुरावृत्तविदां भारवेः कालनिर्णयविषये केवलं कतिपयैर्बहिरङ्गैरेव प्रमाणैः किञ्चिदुन्नेतुं पार्यते नान्तरङ्गैः। भारवेः रचनास्वनेकत्र कालिदासीयरचनायाः प्रतिबिम्बं प्रत्यवभासमानं कालिदासादस्य परभवत्वं प्रत्याययति। एवं माघेऽपि भारवेः प्रभावो भूम्नाऽवभासते। श्रीबाणभट्टस्य कृतिषु तु न कुत्रापि भारवेरवभासः प्रतिभाति। अतः बाणभट्टस्य स्थितिकाले भारवेर्यशःप्रकाशो दिग्दिगन्तरालं

---

नाहमेनं सर्वगुणज्येष्ठं सुतं मनसा तिरस्करोमि, किन्तु तमतोऽप्यधिकतरं गुणवन्तं दिदृक्षुरहं तथा करोमि। उक्तं च–

'गीर्भिर्गुरूणां परुषाक्षराभिः, सुतक्षिता यान्ति नरा महत्त्वम्।' इति

इत्युवाच भारवेर्जनकः। तदेतत्पित्रोर्वार्तालापं निशम्य भारविरतितरां तुतोष, पितरं प्रति च हृदि समुत्थितानां दुर्भावनानां प्रायश्चित्तं जिज्ञासुः, 'वने गत्वा गाश्चारय' इति समादिष्टस्तथा चचार। तद्वने चरन् किरातार्जुनीयाख्यमिदं महाकाव्यं स निर्ममे इति किंवदन्ती।

न पस्पर्शेति न दुष्करमूहितम् । दक्षिणापथे राज्ञः श्रीराहोलस्य शिलालेखेषु चालुक्यवंशोद्भवस्य श्री पुलकेशिनाम्नो नृपमणेः प्रशस्तिलेखेषु भारवेरुल्लेखोऽधोङ्कितरूपेणोपलभ्यते :—

येनायोजि न वेश्मस्थिरमर्थविधौ विवेकिना जिन वेश्म ।
स विजयतां रविकीर्त्तिः कविताश्रितकालिदासभारविकीर्त्तिः ॥

यच्च रविकीर्त्तिसमुल्लिखिते पुलकेशिद्वितीयस्य ताम्रशासनफलके भारवेर्नामोल्लसति, तत्पत्रं षट्षष्ट्युत्तरपञ्चशततमे, (५६६) शकसम्वत्सरे क्रैस्ते चतुस्त्रिंशदुत्तरषट्शतकमिते (६३४) कालिदासप्रसङ्गेन सम्यगुट्टङ्कितम् सविवरणम् । तदिदं सुस्पष्टमावेदयति यदस्य स्थितिकालः क्रीस्तीय ६३४ संवत्सरतः पूर्वतन एव । अवन्ती-सुन्दरीकथापर्यालोचनञ्चाऽयं पुलकेशिद्वितीयस्य विष्णुवर्द्धनस्य राजसभापण्डितमण्डलललामभूतोऽयमासीदिति सम्यक् पुष्णाति । एतावता प्रोक्तकाल एव कवेरस्याविर्भावकालः इति प्रतिपत्तुं न दुष्करम् ।

'तावद् भा भारवेर्भाति यावन्माघस्य नोदयः ।
उदिते नैषधे काव्ये क्व माघः क्व च भारविः ॥

इत्यस्मिन् नैषधप्रशस्तिपरे पद्ये नैषधप्रशंसकानां केषाञ्चिद्वचनेन समं भारविमाघयोर्नामोत्कीर्त्तनमाकलय्य केचन समालोचकाः समुपकल्पयन्ति भारविमाघयोः समकालवर्त्तित्वम् । परं तन्न विचारसहम् । यतो माघादूर्ध्वतनकालविरचितेषु सन्दर्भेष्वपि भारवेः सुभाषितमुपलभ्यते तस्मात्तदूर्ध्वतनकालस्तु भारवेराविर्भावकाल इति तु सुतरामनुमातुं शक्यते । न च तावतेदमपि वक्तुमर्हं यन्माघकविरत्यर्वाचीनः इति यतो भारवेः अनेके श्लोकाः प्राक्तनालङ्कारिकस्य भट्टमम्मटाचार्यस्य कृतौ काव्यप्रकाशे एवमन्येष्वपि सन्दर्भेषूद्धृता दृश्यन्ते । अतः तस्मात्पूर्वतन एव माघसमयः । मम्मटाचार्यस्य स्थितिकालः क्रीस्तीयैकादशशतकमिति सम्भाव्यते । कवेर्माघस्याविर्भावस्तु तत्पूर्वस्मिन् नवमशतके दशमशतके वा समवधार्यते कालतत्त्वविशेषज्ञैः । सुतरां भारविस्तु पुनः माघकवेरपि पूर्वतनकालवर्त्ती इति सम्यक् प्रतिपद्यते । एतच्च भारवीयरचनायाः माघीयकाव्येषु प्रतिबिम्बितत्वदर्शनेनावगतं भवति । यथाहि शिशुपालवधस्य प्रथमसर्गे महर्षिनारदेन मदगर्वितस्य कृष्णद्विषश्चेदिभूभुजोऽवस्थाया निरूपणं तदनुश्रवणे महाविद्वेषिणः बलदेवस्य निरतिशयमौद्धत्यं तदुपशान्तये च नीतिवचन-संकीर्त्तनम्, तथैव किरातार्जुनीयेऽपि तावद्वर्णिवेशधारिणो वनेचरस्य मुखेन दुर्योधनस्य गतिविधिविज्ञापनम्, तदनु भीमादेः ओजस्विगिरां प्रसरः, तत्प्रशमनार्थं युधिष्ठिरस्य नीतिसंवलितवचनप्रपञ्चीकरणम् इत्यादिकं परस्परं सादृश्यं प्रणिभाल्य सम्यक् शक्यते प्रतिपत्तुं यन्माघोऽपि तत्पूर्ववर्तिनो भारवेः छायां स्वरचनास्वनुहरति भूयसेति ।

यच्च केचन व्याहरन्ति यद् भारविणा जन्मना महाराष्ट्रभूमिः सुभूषिता किरातार्जुनीयस्य निम्नाङ्कितं पद्यमाधारीकृत्य :

उरसि शूलभृतः प्रतिहता मुहुः प्रतिहतिं ययुरर्जुनमुष्टयः ।
भृशरया इव सह्यमहीभृतः पृथुनि रोधसि सिन्धुमहोर्म्मयः ।। इति ।

अत्र सह्यमहीभृतः इति पददर्शनात् सह्याद्रिरेव कवेरावासभूमिरिति कल्पितमवगम्यते । अतएव कविरपि महाराष्ट्रदेशीय इत्थं प्रतिपन्नम् । परन्तत्रान्ये विप्रतिपद्यन्ते । तेषां वाचोयुक्तिरियम् यत् सह्याद्रिनामोल्लेखेनैव यदि सैव भूमिः कवेर्जन्मभूमिरिति अनुमन्येत तर्हि दक्षिणदिग्विभागानां, सह्यसुलेशादिशैलमालानाम्, गोदावरी-कावेरी-ताम्रवर्णीप्रभृतिनदीनां, वनोपवनस्थलीनां च वर्णयितुः 'हरिविजय'काव्यरचयितुः काश्मीरजस्य रत्नाकरस्य तत्तद्देशावासालंकृतत्वपरिकल्पने को वा प्रत्यूहः । एवं विन्ध्याद्रिवननिर्झरवर्णनप्रवीणो बाणोऽपि तत्प्रदेशाधिवासित्वेन कथङ्कारं नालङ्करणीयः ? तस्मात्कस्यचित्स्थानविशेषस्य वर्णनवशात् कवीनां तत्रैव निवासस्थल-कल्पना न मनाक् श्रद्धेयपद्धतिमधिरोहति ।

कविवरोऽयमलङ्कारशास्त्रनिपुणो नीतितन्त्रेषु प्रकाण्डपण्डितः प्रौढो वैयाकरणश्चासीद् इति धारणा तद्विषयेऽद्यापि सुतरां स्वारस्येन जागर्तितरां विद्वन्मण्डले । प्रकृतिपर्यालोचनं भारविणा तार्क्ष्यतीक्ष्णदृशा कृतमिवावलोक्यते । अतएव अस्य वर्णनप्रसरे सजीवता दृग्गोचरीभवति । सायंकालवर्णनं कियच्चमत्कारपूर्णम् ?

मध्यमोपलनिभे लसदंशावेकतः च्युतिमुपेयुषि भानौ ।
द्यौरुवाह परिवृत्तिविलोलां हारयष्टिमिव वासरलक्ष्मीम् ।।

अत्र परिवृत्तिविलोलामिति कीदृगौचितीपूर्णः प्रयोगः भारवेः काव्यं तत्प्रणेतुः संसारानुभवस्योच्चकोटचवगाहिप्रतिपत्तिमावेदयति, प्रत्याययति च तस्य संसारचक्रस्य पारदृश्वताम् । याचनावृत्तिं स धिक्करोति, अभिनन्दति चात्माभिमानगुणम् सुभृशम् ।

'अधातपूर्वा परिवादगोचरं, सतां हि वाणी गुणमेव भाषते ।।'

सज्जनानां वाणी निन्दां न जानाति ।

"वसन्ति हि प्रेम्णि गुणाः न वस्तुनि"

गुणाः खलु प्रेम्णि निवसन्ति न तु वस्तुनि इति कथनं कियत्तथ्यतां बिभर्त्ति ।

किरातार्जुनीयस्य चतुर्थे सर्गे शरद्वर्णनम्, पञ्चमे च हिमालयवर्णनम्, अष्टमे सर्गे गन्धर्वसहिताप्सरसां कुसुमावचयवर्णनम्, जलक्रीडावर्णनम् सालङ्कृतं,

दशमे च षड्तुवर्णनमतीव मनोज्ञं संवृत्तम् । एवं काव्यमिदं अलङ्कृतिना, शैल्या च निदर्शनभूततया कवये यशःप्रतिष्ठाप्रदञ्च प्रत्यपद्यत । अस्याවितथा उपदेशा निरतिशयसहृदयहृदयावर्जकाः —

तावदाश्रियते लक्ष्म्या तावदस्य स्थिरं यशः ।
पुरुषस्तावदेवाऽसौ यावन्मानान्न हीयते ॥
स पुमानर्थवज्जन्मा यस्य नाम्नि पुरःस्थिते ।
नान्यामङ्गुलिमभ्येति, सङ्ख्यायामुद्यताङ्गुलिः ॥
ज्वलितं न हिरण्यरेतसं चयमास्कन्दति भस्मनां जनः ।
अभिनतभयादसूनतः सुखमुज्झन्ति न धाम मानिनः ॥
सर्वथा स्वहितमाचरणीयम्, किं करिष्यति जनो बहुजल्पः ।
विद्यते नहि स कश्चिदुपायः, सर्वलोकपरितोषकरो यः ॥
मुनिरस्मि निरागसः कुतो मे भयमित्येष न भूतयेऽभिमानः ।
परवृद्धिषु बद्धमत्सराणां किमिव ह्यस्ति दुरात्मनामसाध्यम् ॥ इत्यादि

कवेरस्य सम्प्रति किरातार्जुनीयाख्यमेकमेव काव्यमुपलभ्यते । अर्थगौरवदृशा, राजनीतिरहस्यनिरूपणधिया च काव्यमिदं काव्यान्तरेभ्यः अतितरां वैशिष्ट्यमावहति । वर्णनशैली चास्यौजःपूर्णा । अस्मिन् हि महाकाव्यस्य अखिलानि लक्षणानि परिपूर्णतया अभिव्यक्तिमुपगतानि विभाव्यन्ते किल । महाभागेन कृष्णकविना स्थान एवोक्तं खलु :—

तदेव वृत्त्यापि महान्तमर्थं, प्रदर्शयन्ती रसमादधाना ।
सा भारवेः सत्पथदीपिकेव, रम्याकृतिः कैरिव नोपजीव्या ॥

चतुर्थसर्गे शरद्वर्णनमारचयन्नाह :—

मुखैरसौ विद्रुमभङ्गलोहितैः शिखाः पिशंगीः कलमस्य बिभ्रती ।
शुकावलिर्व्यक्तशिरीषकोमला, धनुःश्रियं गोत्रभिदोऽनुगच्छति ॥

कीदृशी सुसंश्लिष्टा अपूर्वा कल्पना !

जलक्रीडामारचयन्तीनामप्सरसां चारुचित्रणमपि किंचिदालोचनीयम् :—

तिरोहितान्तानि नितान्तमाकुलैरपां विगाहादलकैः प्रसारिभिः ।
ययुर्वधूनां वदनानि तुल्यतां द्विरेफवृन्दान्तरितैः सरोरुहैः ॥ [कि० ८।४७]

यद्यपि भारवेः भाषा क्वचित्क्वचिदर्थगाम्भीर्यवशाज्जटिला सञ्जाता तथापि रसगर्भनिर्भरत्वान्न विजहाति मनागपि सा माधुर्यम् । बाह्यरूपमेव कठिनं प्रतीयते नारिकेलफलवत् । आभ्यन्तरन्तु तत्सरसरससम्भृतमानन्दमेव आतनुते सहृदयानाम् । तथा मल्लिनाथोऽप्याह :—

नारिकेलफलसम्मितं वचो, भारवेः सपदि तद्विभज्यते।
स्वादयन्तु रसगर्भनिर्भरं, सारमस्य रसिका यथेप्सितम्॥

कविशिरोमणिः क्षेमेन्द्रोऽप्यस्य वंशस्थवृत्तोत्कृष्टतां वर्णयन्नाह :—

वृत्तच्छत्रस्य सा कापि, वंशस्थस्य विचित्रता।
प्रतिभा भारवेर्येन, सच्छायेनाधिकीकृता॥

महाकाव्यचक्रेतिवृत्ते भारविः सालङ्कृतकाव्यशैलीप्रवर्तकेषु कविमूर्धन्येषु प्रमुखपदमलङ्करोति। प्रायशः नीति-निगूढतत्त्वनिगुम्फनं संवादरूपेणातिचारुतया निरूपयति। तत्किञ्चिदास्वादयन्तु विज्ञरसिका अपि तद्रचनारसमाधुरीम् :—

व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः।
प्रविश्य हि घ्नन्ति शठास्तथाविधाः न संवृतांगन्निशिता इवेषवः॥१।३०॥

किञ्च—

विहाय शान्ति नृप धाम तत्पुनः प्रसीद संधेहि वधाय विद्विषाम्।
व्रजन्ति शत्रूनवधूय निःस्पृहाः शमेन सिद्धिं मुनयो न भूभृतः॥१।४२॥
विषमोऽपि विगाह्यते नयः कृततीर्थः पयसामिवाशयः।
स तु तत्र विशेषदुर्लभः सदुपन्यस्यति कृत्यवर्त्म यः॥२।३॥
क्षययुक्तमपि स्वभावजं दधते धाम शिवं समृद्धये।
प्रणमन्त्यनपायमुत्थितं प्रतिपच्चन्द्रमिव प्रजा नृपम्॥२।११॥
अभिमानवतो मनस्विनः प्रियमुच्चैपदमारुरुक्षतः।
विनिपातनिवर्तनक्षमं मतमालम्बनमात्मपौरुषम्॥२।१३॥

तेजस्विनां स्वभावं कीदृक्चारुतया वर्णयति :—

किमपेक्ष्य फलं पयोधरान् ध्वनतः प्रार्थयते मृगाधिपः।
प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया॥२।२१॥
सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः॥२।३०॥
लभ्या धरित्री तव विक्रमेण ज्यायाँश्चवीर्यास्त्रबलै विपक्षः।
अथ प्रकर्षाय विधिर्विधेयः प्रकर्षतन्त्रा हि रणे जयश्रीः॥

## भारवेः सूक्तयः

भारवेः कवितायां सूक्तयोऽपि मनोहरतराः घटिताः, तद्यथा :—

प्रकर्षतन्त्रा हि रणे जयश्रीः।

वरं विरोधोऽपि समं महात्मभिः ।
हितं मनोहारि च दुर्लभं वचः ।
गुरुतां नयन्ति हि गुणा न संहतिः ।
विजानतोऽपि ह्यनयस्य रौद्रतां, भवत्यपाये परिमोहिनी मतिः ।
प्रायेण सत्यपि हितार्थकरे विधौ हि,
श्रेयांसि लब्धुमसुखानि विनाऽन्तरापि ।
ननु वक्तृविशेषनिःस्पृहा, गुणगृह्या वचने विपश्चितः ।
विचित्ररूपाः खलु चित्तवृत्तयः ।
पराभवोऽप्युत्सव एव मानिनाम् ।
शमेन सिद्धिं मुनयो न भूभृतः ।
निवसन्ति पराक्रमाशया, न विषादेन समं समृद्धयः ।
न महानिच्छति भूतिमन्यतः ।
प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया ।
विजितक्रोधरया जिगीषवः ।।
समवृत्तिरुपैति मार्दवं, समये यश्च तनोति तिग्मताम् ।
अधितिष्ठति लोकमोजसा, स विवस्वानिव मेदिनीपतिः ।।
वीतस्पृहाणामपि भव्यभाजां, भवन्ति भव्येषु हि पक्षपाताः ।
मोहं विधत्ते विषयाभिलाषः ।
निरुत्सुकानामपि योगभाजां, समुत्सुकेवाङ्कमुपैति लक्ष्मीः ।
रम्याणां विकृतिरपि श्रियं तनोति ।
दुःखिते मनसि सर्वमसह्यम् ।
नासहायमुपयाति जयश्रीः ।
आत्मवर्गहितमिच्छति सर्वः ।
हरति मनो मधुरा हि यौवनश्रीः ।
चलति नयान्न जिगीषितां हि चेतः ।
सुलभा रम्यता लोके दुर्लभं हि गुणार्जुनम् ।
आपातरम्या विषयाः पर्यन्तपरितापिनः ।
मूलं दोषस्य हिंसादेः अर्थकामौ स्म मा पुषः,
तौ हि तत्वावबोधस्य, दुरुच्छेदावुपप्लवौ ।
जीयन्तां दुर्जया ह्येते रिपवश्चक्षुरादयः,
जितेषु ननु लोकोऽयं तेषु कृत्स्नः त्वया जितः ।

कामाकृष्टा हि साध्याः शत्रवः।

अविज्ञातप्रबन्धस्य वचो वाचस्पतेरपि,
  व्रजत्यफलतामेव नयद्रुह इवेहितम्।

असन्मैत्री हि दोषाय, कूलच्छायेव सेविता।

शक्तिवैकल्यनम्रस्य निस्सारत्वाल्लघीयसः,
  जन्मनो मानहीनस्य तृणस्य च समा गतिः।

गुरून् कुर्वन्ति तेऽवश्यान् अन्वर्था तैः वसुन्धरा,
  येषां यशांसि शुभ्राणि, ह्रेपयन्ति नृमण्डलम्।

न सुखं प्रार्थये नार्थमुदन्वद्वीचिचंचलम्,
  नानित्यताशनेस्त्रस्यन् विविक्तं ब्रह्मणः पदम्।

किमिवास्ति यन्न सुकरं मनस्विभिः।

प्रकृत्या मित्रा हि सतामसाधवः, भवन्ति गोमायुसखाः न दन्तिनः। इत्याद्याः।

## वैशिष्ट्यम्

किरातार्जुनीयस्य कथानकस्यागुरुत्वेऽपि तत्र चरित्रचित्रणचमत्कारः, कल्पनाकमनीयता, गम्भीरभावानां सन्निवेशश्च महाकाव्यमिदं प्रतिष्ठापयन्ति अत्युच्चसम्मानास्पदे आसने इत्यत्र न संदेहः।

चित्रकाव्यरचनायामपि अनन्यसाधारणनैपुण्यं खलु आविष्कृतम्। पंचदशतमस्सर्गः समग्र एव चित्ररचनया चित्रितः। सर्वतोभद्र-यमक-विलोमकाद्यनेकचित्रबंधैश्चालङ्कृतः। पद्यमेकन्तु एकाक्षरमयमेव गुम्फितम् :—

न नोननुन्नो नुन्नो नो नाना नाना ननानु।
नुन्नोऽनुन्नो न नुन्नोनो नानेनानुन्ननुन्ननुत्॥

अन्यमेकाक्षरपादात्मकम्—

ससासिः सासुसूः सासो, येया येया ययाययः।
ललौ लीलां ललोऽलोलः, शशीशशिशुशी शशन्॥१५।५॥

निरोष्ठ्यकम्,

अथाग्रे हसता साचिस्थितेन स्थिरकीर्तिना।
सेनान्या ते जगदिरे किञ्चिदायस्तचेतसा॥

द्व्यक्षरञ्च,

चारचुञ्चुश्चिरारेची चञ्चच्चीररुचारुचः।
चचार रुचिरश्चारु चारैराचारचंचुरः॥१५।३८॥

सर्वतोभद्रश्च,

दे वा कानि नि का वा दे
वा हि का स्व स्व का हि वा
का का रे भ भ रे का का
नि स्व भ व्य व्य भ स्व नि ॥१५।२५॥

एतादृशानेकगुणगरिम्णा एव किलायं भारविः विद्वन्मूर्धन्यानां परमादरास्पदं गतः। किरात-माघ-नैषधेतिसुप्रथितायां महाकाव्यत्रयीकोट्यामस्य रचनयाऽपि पदमुपालम्भि। सत्यमेवोक्तं केनापि—

नवसर्गे गते माघे नवसर्गे च नैषधे।
नवसर्गे किराते च नवशब्दो न विद्यते॥

## भारवेरर्थगौरवम्

वस्तुतः 'भारवेरर्थगौरव'मिति प्रसिद्धिः सुतरां सामञ्जस्यमावहति। ग्रन्थभूयस्त्वभिया नात्र तत्पल्लवयितुमुत्सहामहे तथापि तत्प्रति नः सर्वथा उपेक्षणमपि न न्याय्यमिति किंचिदिव प्रदृश्यतेः—

ननु साहसिकस्यापि फलसिद्धेः तत्किं विवेकेनेत्यत्राह :—

अभिवर्षति योऽनुपालयन् विधिबीजानि विवेकवारिणा।
स सदा फलशालिनीं क्रियां, शरदं लोक इवाधितिष्ठति॥

विजिगीषुभिर्नृपैः क्रोधादिषड्वर्गं विजित्य गुर्वीं सिद्धिमुद्दिश्य पुरुषार्थोऽभ्युपायेन योजनीयः नहि स्वल्पस्य कृते भूयान् व्ययो आयासो वा विधेयः —

शिवमौपयिकं गरीयसीं, फलनिष्पत्तिमदूषितायतीम्।
विगणय्य नयन्ति पौरुषं, विजितक्रोधरया जिगीषवः॥

विजितक्रोधरयैर्विजिगीषुभिरवश्यतया भाव्यम्। कुतः ? इत्यत्र निदर्शनमाह :—

अपनेयमुदेतुमिच्छता तिमिरं रोषमयं धिया पुरः।
अविभिद्य निशाकृतं तमः प्रभया नांशुमता व्युदीयते॥

ननु दुर्बलः क्रोधादिकं त्यजेत् बलवतस्तु क्रोधादेव फलनिष्पत्तिः, इत्यत्राह :—

बलवानपि कोपजन्मनः, तमसो नाभिभवं रुणद्धि यः।
क्षयपक्ष इवैन्दवीः कलाः, सकला हन्ति स शक्तिसम्पदः॥

अथ विमृश्यकारिणां साफल्यमाह :—

समवृत्तिरुपैति मार्दवं, समये यश्च तनोति तिग्मताम्।
अधितिष्ठति लोकमोजसा, स विवस्वानिव मेदिनीपतिः ।।

निर्दिष्टमार्गादन्यथाऽऽचरणेऽनिष्टापत्तिमाह :—

क्व चिराय परिग्रहः श्रियां क्व च दुष्टेन्द्रियवाजिवश्यता।
शरदभ्रचलाश्चलेन्द्रियैरसुरक्षा हि बहुच्छला श्रियः ।।

एवं समीक्ष्यकारिणोऽपि यदि दैवदुर्विलसितादनर्थापत्तिः तर्हि न तत्र कर्त्ताऽपराध्यति :—

स्पृहणीयगुणैर्महात्मभिश्चरिते वर्त्मनि यच्छतां मनः।
विधिहेतुरहेतुरागसां विनिपातोऽपि समः समुन्नतेः ।।

इत्याद्याः महाकविभारविकृताः सालङ्कृतिस्वर्णसूक्तयः कस्य मनस्विनो मनस्सम्मोहं नातन्वते। किञ्च—

जितेन्द्रियत्वं विनयस्य कारणम्, गुणप्रकर्षो विनयादवाप्यते।
गुणाधिके पुंसि जनोऽनुरज्यते, जनानुरागप्रभवा हि सम्पदः ।। इति।

राजनीतेः स्वरूपं चित्रयन्नाह :—

'सत्यानृता च परुषा प्रियवादिनी च हिंस्रा दयालुरपि चार्थपरा वदान्या।
नित्यव्यया प्रचुररत्नधनागमा च वाराङ्गनेव नृपनीतिरनेकरूपा ।।

किञ्च भारवेः प्रकृतिवर्णनसरणिरपि नितरां मनोज्ञा। निदर्शनरूपेणात्र कतिपयपद्यानि रसिकानां मनोविनोदायोदाह्रियन्ते। शरदमुद्दिश्य :—

मुखैरसौ विद्रुमभङ्गलोहितैः, शिखाः पिशङ्गीः कलमस्य बिभ्रती।
शुकावलिर्व्यक्तशिरीषकोमला, धनुःश्रियं गोत्रभिदोऽनुगच्छति ।।४।३६।

जलक्रीडामारचयन्तीनामप्सरसां चित्रणम् —

'तिरोहितान्तानि नितान्तमाकुलैरपां विगाहादलकैः प्रसारिभिः।
ययुर्वधूनां वदनानि तुल्यताम्, द्विरेफवृन्दान्तरितैः सरोरुहैः ।।

एकत्र युधिष्ठिरः भीमस्य भाषणं प्रशंसन्नाह :—

स्फुटता न पदैरपाकृता, न च न स्वीकृतमर्थगौरवम्।
रचिता पृथगर्थता गिरां, न च सामर्थ्यमपोहितं क्वचित् ।।२।२७।।

चेद् भारविः काव्यकलायां कालिदासादिसादृश्यं नाधिगच्छेत्तथापि अर्थ-गाम्भीर्यं रुचिरपदावलिप्रयोगश्च तद्रचनासु नूनमनुहरति काञ्चनमणिसंयोगम्। किरातार्जुनीयस्याधिको भागः रोचिष्णुसंवादपरिपूर्णः, तस्य विविधच्छन्दोमनोज्ञता, भावगाम्भीर्यं, सरसो वाचां प्रवाहश्च कस्य मनसि न जनयति विस्मयपरम्परामिति।

# महाकविः भट्टिः

१––परिचयः । २––कोऽयं भट्टिर्नाम कश्चाऽस्य कालः ?

## परिचयः

श्रीवत्सपदलाच्छनस्तत्रभवान् भट्टिनामा महाकविः पदवाक्यप्रमाणवित्, कुशलः काव्यकलाकलाकारः सौराष्ट्रेषु वलभीनाम्नीं नगरीं स्वजनुषा समलञ्चकार। एष किल कविः महीपालश्रीधरसेनस्य आसीत् सभापण्डितमणिः। श्रीधरसेनस्य च स्थितिकालः क्रैस्तषष्ठाब्द्युत्तरार्द्धादारभ्य सप्तमाब्द्याः आरम्भकालपर्यन्त एव निर्धारितः कालविद्भिरिति शिलालेखैरवगम्यते।

महाकविभट्टिप्रणीतं 'रावणवध'मित्यपरनामधेयं भट्टिकाव्यमिदं व्याकरणशास्त्रमधिजिगांसूनामत्युपकारकं व्याकृतिप्रक्रियाऽलङ्कृतं महाकाव्यम्। शब्दालङ्कारसहकृतार्थालङ्कार एवास्य काव्यस्य वैशिष्ट्यम्। यमकावलिरपि अतीव मञ्जुला, भाषा च नितरां प्राञ्जला। तद्यथा––

नगजा नगजा दयिता दयिता, विगतं विगतं ललितं ललितम्।
प्रमदा प्रमदा महता महता, मरणं मरणं समयात् समयात्॥

कवेरस्य प्रकृतिचित्रणम्, प्रौढा च व्यञ्जनाप्रणाली, प्रभावशाली च संवादप्रसरः कस्य मनो न रञ्जयति। तद्यथा––

न तज्जलं यन्न सुचारुपङ्कजं, न पङ्कजं तद्यदलीनषट्पदम्।
न षट्पदोऽसौ न जुगुञ्ज यत् कलं, न गुञ्जितं तन्न जहार यन्मनः॥

एकावल्यलङ्कारस्यैतदतिरमणीयमुदाहरणम्।

अस्य तावच्चक्रवाल-यमकाऽलङ्कारोऽप्यति मनोहरः।

अवसितं हसितं प्रसितं मुदा विलसितं ह्रसितं स्मरभासितम्।
न समदा प्रमदा हतसम्मदा पुरहितं विहितं न समीहितम्॥

मण्डलाकारेण यमितत्वादेतच्चक्रवालमुदीर्यते।

काञ्ची–यमकमपि :––

पिशता शितामनुदिशं स्फुटताम् स्फुटता जगाम परिविह्वलता।
हलता जनेन बहुताचरितं चरितं महत्त्वरहितं महता॥ इति॥

महाकवेरस्य शरद्वर्णननैपुणीं प्रणिभालयन्तु विद्वच्चणाः अणुवीक्षणेन। अयोध्याया निर्गत्य रामः सलक्ष्मणः शरदं ददर्श। कालस्याप्रत्यक्षत्वात् तत्कार्य-दर्शनादेवात्र शरद औपचारिकदर्शनं गम्यते :—

तरङ्गसङ्गाच्चपलैः पलाशैर्ज्वालाश्रियं सातिशयं दवन्ति।
सधूमदीप्ताग्निरुचीनि रेजुस्ताम्रोत्पलान्याकुलषट्पदानि॥
बिम्बागतैस्तीरवनैः समृद्धिं निजां विलोक्यापहृतां पयोभिः।
कूलानि साऽमर्षतयैव तेनुः सरोजलक्ष्मीं स्थलपद्महासैः॥
निशातुषारैर्नयनाम्बु-कल्पैः, पत्रान्तपर्य्यागलदच्छबिन्दुः।
उपारुरोदेव नदत्पतङ्गः कुमुद्वतीतीरतरुर्दिनादौ॥
वनानि तोयानि च नेत्रकल्पैः, पुष्पैः सरोजैश्च निलीनभृङ्गैः।
परस्परां विस्मयवन्ति लक्ष्मीमालोकयाञ्चक्रुरिवादरेण॥

काव्यकलाऽपि प्रशस्ता। सीतां वर्णयन्नाह—

हिरण्मयी साललतेव जङ्गमा च्युता दिवः स्थास्नुरवेरिव प्रभा।
शशाङ्ककान्तेरधिदेवताकृतिः सुता ददे तस्य सुताय मैथिली॥
प्रभातवाताहतकम्पिताकृतिः कुमुद्वतीरेणुपिशङ्गविग्रहम्।
निरासभृङ्गाकुपितेव पद्मिनी न मानिनी संसहतेऽन्यसङ्गमम्॥

भट्टिकाव्यं[1] [2]व्याकरणप्रधानं महाकाव्यम्। व्याकरणावबोधाधिजिगांसूनां छात्राणामनुग्रहेच्छया सौकर्येणैव व्याकृतिमवगमयितुमिदं विरचितं महाकविना भट्टि-महाभागेन। व्याकरणमार्गप्रदर्शनपुरस्सरं काव्यचषके नयनाभिरामरामकथामृत-मपि निकामं सम्भृतमत्र विभृतमिव। उक्तञ्च केनाप्यभियुक्तेन :—

व्याकृतिचषकपेयं रामराजकथामृतम्।
शब्द-वाक्य–पदच्छेद–स्थूलाक्षर–विशेषदृक्॥
व्याकृत्या कोशछन्दोभ्यामलङ्कृत्या रसेन च।
पञ्चकेनान्वितं काव्यं भट्टिकाव्यं विराजते॥

तदेवं रस–अलङ्कार–पदविन्यासविलाससमन्वितं काव्यमिदमतिसुभगं सम्पन्नमिति।

---

१. भट्टिकाव्यमिदं द्वाविंशतिसर्गैः प्रणिबद्धं, तत्रादिमचतुर्षु सर्गेषु प्रकीर्ण-नियमाः, ततो नवमसर्गपर्यन्तं विशेषनियमाः, तदनु त्रयोदशसर्गान्तम् अलङ्काराः, तदनन्तरं द्वाविंशतिसर्गपर्यन्तं लकारप्रयोगाश्च प्रपञ्चिताः। तदिदं व्याकरणस्य जीवातुभूतं भट्टिकाव्यमिदं विदुषां समाजे निरतिशयादरास्पदीभूतं विलसति।

२. यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम्।
स्वजनः श्वजनो माभूत्, सकलं शकलं, सकृत् शकृत्॥

दीपतुल्यः प्रबन्धोऽयं, शब्दलक्षणचक्षुषाम् ।
हस्तामर्श इवान्धानां भवेद् व्याकरणादृते ।।

किञ्चास्य काव्यस्य वैशिष्टयं द्योतयन्——

व्याख्यागम्यं काव्यं, उत्सवः सुधियामिव ।
हता दुर्मेधसश्चास्मिन्, विद्वत्प्रियतया मया ।।

यत्रेदं काव्यं कृतं तद्दर्शयन्नपि कविराह :——

काव्यमिदं विहितं मया वलभ्यां श्रीधरसेन-नरेन्द्र-पालितायाम् ।
कीर्त्तिरतो भवतान्नृपस्य तस्य प्रेमकरः क्षितिपो यतः प्रजानाम् ।। इति ।

कानिचित् पद्यानि तु अस्य निरतिशयरमणीयानि ——

रामोऽपि दाराहरणेन तप्तो, वयं हतैर्बन्धुभिरात्मतुल्यैः ।
तप्तेन तप्तस्य यथा तथा नः सन्धिः परेणास्तु विमुञ्च सीताम् ।।

## कोऽयं भट्टिर्नाम कश्चास्य कालः

अथ कोऽयं भट्टिर्नाम, को वास्य निश्चितः समयः इति किञ्चिदिव, स्थूणानिखनन्यायेन पुनरपि भूयस्तरं विविच्यते । यद्यप्यत्र विषये इदमित्थन्तया न किञ्चिद्वक्तुं शक्यम् । तथाऽपि कालविदामाशयमनुरुध्य प्रस्तूयते तावत्——केचन तर्कयन्ति यद् वत्सभट्टिरेव भट्टिनाम्ना प्रसिद्धिं गतः, न कश्चिदन्यः । अपरे भर्तृहरिरेवायम्, भर्तृशब्द एवापभ्रष्टः 'भट्टिः' सञ्जातः । परं सूक्ष्मेक्षिकया निरीक्षणेन एतत्कल्पद्वयमपि शशशृङ्गायते । वत्सभट्टेः महावैय्याकरणेन भट्टिना सहैकात्म्यं वत्सभट्टेः कृतौ आपतितानि व्याकृतिस्खलितानि एव स्वयं निराकुर्वन्ति । नहि तेजस्तिमिरयोरभेदं चक्षुष्मन्तः सोढुमर्हन्ति । इत्थमेव भर्तृहरिरेवापभ्रष्ट भट्टिः संवृत्त इत्यपि क्लिष्टकल्पना मात्रयाऽपि नावतरति बुद्धिपद्धतिम् । तदेवं मन्यामहे, एतद्द्वयाद् भिन्नः कश्चिदन्य एव स्वनामधन्योऽयं भट्टिः भवेदिति निर्णय एव रोचिष्णुः । कालविषयेऽपि, श्रीधरसेननृपतेः समये भट्टिरभूद् इत्युक्तपूर्वम् । तत्र विवेचनीयं भवति यत् श्रीधराख्या नृपास्तु चत्वारोऽभूवन् । तेषु यश्चरमः सः ६४१ तमे ख्रैस्ताब्दे दिवङ्गतः । तेनानुमातुं शक्यते यत् ख्रैस्ताब्दषट्शतमितदेशीय एव कविरेष सम्भवेत् । किञ्च——"व्याख्यागम्यमिदं काव्यम्, उत्सवः सुधियामलम् । हता दुर्मेधसश्चास्मिन् विद्वत्प्रियतया मया ।।' इति भट्टिकाव्यादुद्धृतेन पद्येन सुतरां व्यज्यते यद् भामहात्पूर्वकालभव एव भट्टिरासीत् । प्रसिद्धालङ्कारिकयोर्दण्डिभामहयोरपि भट्टिप्रणीतालङ्कारे नामस्मरणमपि न दृश्यते । तदेतदपि व्यञ्जयति भट्टिमहाभागस्य दण्डिभामहमहाभागात्पूर्वतनकालभवत्वम् इति दिक् ।

# महाकविः माघः

## (६६०–६७५)

१—परिचयः। २—शिशुपालवधम्। ३—माघस्य समयः। ४—माघस्य प्रकाण्डपाण्डित्यम्।

## परिचयः

संस्कृतवाङ्मयमहोदधेस्तत्रभवान् महाकविर्माघः खल्वत्यन्तभासुरं रत्नम्। अस्य हि नवाभिनवपदविन्यासविलासः नितरां प्रौढः लोकविश्रुतश्च। एनमुद्दिश्य जनश्रुतिरियं प्रसिद्धा—'नवसर्गगते माघे नवशब्दो न विद्यते।' सेयमुक्तिः खलु बहुष्वंशेषु तथ्यतां बिभर्त्ति। एतद्विरचितं शिशुपालवधं नाम महाकाव्यं, 'माघकाव्य'मिति तन्नाम्नाऽपि प्रथितम्। अस्मिन् काव्ये वर्णनशैली अतीव प्रौढा, वर्णनमलङ्कारपूर्णं भावगाम्भीर्यसम्भृतञ्च सम्पन्नम्। तद्यथा:—

'उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम्।
वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम्॥४।१०॥

अस्मिन् पद्ये कविः 'रैवतकन्नाम पर्वतमुभयतः सूर्येन्दुरूपविलम्बि घण्टाद्वयपरिवारितवारणेन्द्रलीलामावहन्तमिवाकलयति। मन्येऽस्य कवेः 'घण्टामाघ' इति नाम्नः प्रसिद्धौ इतिनिर्दिष्टकल्पनैव बीजम्। एतादृशविचित्रोक्तिमुपजीव्यैव कदाचित् कविरेष समजनि विद्वज्जनानां परमप्रशंसाभाजनम्। तथाहि :—

'उपमा कालिदासस्य भारवेरर्थगौरवम्।
नैषधे पदलालित्यं माघे सन्ति त्रयो गुणाः॥

परं वस्तुतत्त्वेषु विमृश्यमानेषु विदितं भवति यत्प्रशस्तिरियमस्य प्रशंसकानामतिशयोक्तिमेव व्यक्तीकरोति। यतः यथा उपमायां कालिदासस्य, यथा वा अर्थगौरवे भारवेः, नैषधस्य च पुनर्यथा लालित्ये पदं न तथा माघस्य। माघस्तु एषां महाकवीनां कलयाऽपि तुलां नाऽधिरोहति इति बहव आशेरते। वस्तुतः कवित्वचारुत्वापेक्षयाऽस्य रचनायां पाण्डित्यप्रौढिमा एवावभाति प्रशस्ततरः। पदविन्यासप्रवाहोऽपि न निसर्गसुलभः प्रत्युत हठादाकृष्ट इवाभाति। प्रकाण्डपाण्डित्यन्तु तस्य स्फुटं पदे-पदे व्यक्तीभवति। महाटीकाकारः श्रीमल्लिनाथः माघस्य काव्यकलां वर्णयन्नाह :—

ये शब्दार्थपरीक्षणप्रणयिनो ये वा गुणालङ्क्रिया-
शिक्षाकौतुकिनो विहर्त्तुमनसो ये च ध्वनेरध्वगाः।
क्षुभ्यद्भावतरङ्गिते रससुधापूरे मिमङ्क्षन्ति ये,
तेषामेव कृते करोति विवृतिं माघस्य सर्वङ्कषाम् ॥

नेताऽस्मिन् यदुनन्दनः स भगवान् वीरप्रधानो रसः,
शृङ्गारादिभिरङ्गवान् विजयते पूर्णा पुनर्वर्णना।
इन्द्रप्रस्थगमाद्युपायविषयश्चैद्यावसादः फलम्,
धन्यो माघकविः वयन्तु कृतिनस्तत्सूक्तिसंसेवनात् ॥

## शिशुपालवधम्

माघविरचितं शिशुपालवधं नाम महाकाव्यं विंशतिसर्गसंग्रथितं पञ्चाशदुत्तरषोडशशतमितैः पद्यैः परिगुम्फितं गीर्बाणवाग्वाङमयप्रसरे सुभृशं भासुरत्वेन विराजते कामप्युच्चतमां कोटिमाटीकमानम्। अस्य कथावस्तु तु महाभारतादेव सङ्कलितम्। काव्येऽस्मिन् कवेः प्रौढिमा, दृढ़बन्धः, प्रागल्भ्यं प्रतिपदं समुच्छलतीव प्रतिभाति :—

उदयशिखरिशृङ्गं प्राङ्गणेष्वेव रिङ्गन्,
सकमलमुखहासं वीक्षितः पद्मिनीभिः।
विततमृदुकराग्रः शब्दयन् यो वयोभिः,
परिपतति दिवोऽङ्के हेलया बालसूर्यः ॥

उत्प्रेक्षाप्यस्य प्रेक्षावतां श्लाघनीया भवति। रैवतकं पर्वतं कियच्चारुतया वर्णयति :—

अपशङ्कमङ्कपरिवर्त्तनोचिताश्चलिताः पुरः पतिमुपेतुमात्मजाः।
अनुरोदितीव करुणेन पत्त्रिणां विरुतेन वत्सलतयैष निम्नगाः ॥

अनुप्रासोल्लासोऽप्यस्य चित्तप्रसादकः —

मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥

माघस्य शृङ्गारिकपदावलिस्निग्धताऽपि नितरां मुग्धीकरोति विदग्धान् :—

यां यां प्रियां प्रैक्षत कातराक्षीं सा सा ह्रिया नम्रमुखी बभूव।
निःशङ्कमन्या सममाहितेर्ष्यास्तत्रान्तरे जघ्नुरमुं कटाक्षैः ॥

माघप्रणीतकाव्येषु विषयवैविध्यनिवेशेनानुमीयते यदसौ कविरासीदनेकशास्त्रनिपुणः। सङ्गीत-नाट्य-व्याकरणालङ्कार-राजनीतिविशेषज्ञश्च। अतएव

कविराजेन राजशेखरेण अस्याप्रतिमप्रतिभाप्रभावितेन भावातिरेकवशङ्गतेनेत्थमभाणिः—

कृत्स्नप्रबोधकृद्वाणी भा रवेरिव भारवेः।
माघेन च माघेन कम्पः कस्य न जायते ॥ इति ॥

एवमन्यत्रापि :—

माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे।
स्मरन्तः भा रवेरिव कवयः कपयो यथा ॥

## माघस्य समयः

तत्र भवतो माघस्य समयविषये मतानि बहुधा भिद्यन्ते। यद्यपि नाद्यावधि कोऽपि हृदयङ्गमो निर्णय उपालम्भि तथापि यशस्तिलकचम्पूनाम्नि प्रबन्धे तत्प्रणेत्रा सूरिवरेण सोमदेवेन माघस्योल्लेखः कृतः। एवमानन्दवर्द्धनाचार्येण स्वकीये ध्वन्यालोकाख्ये सन्दर्भे शिशुपालवधस्य यद् द्वौ श्लोकौ समुद्धृतौ तेनैतत्प्रतिपत्तुं न दुष्करं यदेताभ्यामसौ पूर्वतन एवासीत्। श्रीमता नृपतुङ्गाधिपेन राष्ट्रकूटजनपदाधिपेन स्वकीये कन्नडभाषामये कविराजमार्गाभिधेये माघस्य कालिदाससमकालिकत्वं वर्णितम्। तेन स्पष्टमेतद् विदितं भवति यन्नवशताब्द्याः पूर्वार्द्धभागे नृपतितुङ्गकाल एव माघोऽयं साहित्यविदां समाजे सुतरां प्रसिद्धो लब्धप्रतिष्ठश्चाभवत्। तेन माघस्याविर्भावकालः क्रैस्तीयाष्टशताब्दीतः पूर्वतन एव भवितुमर्हति। किञ्च माघस्य पितामहस्य सुप्रभदेवमहाभागस्याश्रयदातुः गुर्जराधिपस्य वर्मलातदेवस्य शिलालेखेषु सुप्रभदेवसमयः पञ्चविंशत्युत्तरषट्शतमित (६२५) शताब्दीतः प्रागेव निरूपितः। एतर्हि सुप्रभदेवपौत्रस्य माघस्य कालः सुतरां क्रैस्तीयसप्तशतवर्षमितकालान्निकषैव क्वचित्सम्भवेत्, न कर्हिचित्तद्भिन्नः। अपि च माघस्य कालनिर्णये एकमन्यदतिमहत्त्वपूर्णमन्तरङ्गमपि प्रमाणमुपलभ्यते तच्चेदम् :—

'अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना।
शब्दविद्येव नो भाति राजनीतिरपस्पशा ॥

[शिशुपालवधम् २।११२]

अत्र हि काशिकावृत्ति-न्यासग्रन्थयोः स्पष्टमुल्लेखः। वृत्तिकारोऽत्र वामनः जयादित्यश्च तयोश्च कालः क्रैस्तीयपञ्चाशदुत्तरषट्शतवर्षाभ्यन्तर एव क्वचिन्निश्चीयते। तन्माघस्यापि कालः एतत्कालोत्तरभव एवेति कस्य न बुद्धिपद्धतिमवतरेत्। एवञ्च बाणभट्टेन हर्षचरिते न्यासग्रन्थस्योल्लेखो व्यधायि, 'कृतगरूपन्यासालोक इव व्याकरणेऽपि।" बाणवत् माघेनापि न्यासस्य निर्देशः कृतः। सोऽयं

न्यासो जिनेन्द्रबुद्धिप्रणीत एवेति वक्तुं न सुशकम्। यतस्तत्पूर्वकाल एव न्यासस्य सन्दर्भान्तरस्य रचनाऽपि लब्धावकाशाऽऽसीत्। अतः एवंविधैर्हेतुभिर्निश्चिनुमः यन्माघस्य कालः सप्तमशताब्द्या अन्तिमचरण एवेति तर्कसङ्गतम्। यद्यपि माघस्यामरकीर्ति शिशुपालवधं विहाय नान्या काचिद्रचना दृक्पथं प्रयाति, तथाऽपि सूक्तिसंग्रहग्रन्थेषु औचित्यविचारचर्चादिग्रन्थेषु माघनाम्नोपगुम्फितानि प्रकीर्णानि पद्यानि समासाद्यन्ते, यानि प्रत्याययन्ति यदन्यान्यपि ग्रन्थरत्नानि माघप्रणीतानि सम्भवेयुरिति। तद्यथा 'औचित्यविचारचर्चा'भिधे सन्दर्भे अधोऽङ्कितं पद्यं माघनाम्ना समुद्धृतम् :—

बुभुक्षितैर्व्याकरणन्न भुज्यते, न पीयते काव्यरसः पिपासितैः।
न विद्यया केनचिदुद्धृतं कुलं, हिरण्यमेवार्जय निष्फला गुणाः॥

चेन्नाम नापि भवेयुरस्यान्याः कृतयः, एकमात्रं शिशुपालवधमेव महाकाव्यमस्य यशश्चन्द्रिकां भुवनमण्डले प्रसारयितुमलमतुलं किमपि भासुरं रत्नम्।

## माघस्य प्रकाण्डपाण्डित्यम्

स एष माघः न केवलमुद्दामवाक्कविरेवासीत् प्रत्युत सर्वशास्त्रपारङ्गतः प्रकाण्डपण्डितोऽप्यासीत्।

अस्य सर्वाङ्गीणपाण्डित्यपरिचायकं शिशुपालवधमेव पर्याप्तम्। तदपि किञ्चिदत्रोदाह्रियते :—

वेदार्थप्रसरे स्वरभेदादर्थभेद[1] उपजायते, एकस्मिन् पदे परिणत उदात्तस्वरः स्वरान्तराणि घटयति अनुदात्तानि। सति एकस्मिन् स्वरे उदात्ते अन्यानि निघात[2]स्वराणि सञ्जायन्ते। इत्यादयोऽनुशासनविधयः स्वकाव्यबन्धेऽतिसौन्दर्येण संग्रथिताः।

एवमेव नाट्यशास्त्रस्य प्रावीण्यमपि काव्यबन्धेऽस्य व्यक्तीभवति :—

'पूर्वरंगः प्रसङ्गाय नाटकीयस्य वस्तुनः।' इति।

---

१. संशयाय दधतोः सरूपतां दूरभिन्नफलयोः क्रियां प्रति।
शब्दशासनविदः समासयोर्विग्रहं व्यवसुः स्वरेण ते॥
[शिशुपालवधम् १४।२५]

२. निहन्त्यरीनेकपदे य उदात्तस्वरानिव।

सङ्गीतशास्त्रस्यापि माघः तलस्पर्शी विद्वान् आसीत् :—

श्रुतिसमधिकमुच्चैः पञ्चमं पीडयन्तः ।
सततमृषभहीनं भिन्नकीकृत्य शब्दम् ॥

अलङ्कारशास्त्रेऽप्यस्य वैचक्षण्यम् । यथा :—

स्थायिनोऽथ प्रवर्त्तन्ते भावाः सञ्चारिणो यथा ।
रसस्यैकस्य भूयांसस्तथा नेतुर्महीभृतः ॥
[ शिशुपालवधम् २।८७ ]

माघस्य नयेन शब्दार्थयोः सामञ्जस्यमेव काव्यम् । एतन्नयमाश्रित्य कियच्चारुत्वेन पद्यमुपनिबध्नाति :—

शब्दार्थौ सत्कविरिव विद्वान् द्वयमपेक्षते ॥
[ शिशुपालवधम् २।८६ ]

एतादृग्वैदुषीवैभवादेवास्य महीयसी प्रतिष्ठा आसीद् विद्वन्मण्डले :—

"तावद् भा भारवेर्भाति यावन्माघस्य[१] नोदयः ।" इति

—०—

१. अस्य जन्मभूः श्रीमालपुरी नाम्नी गुर्जरराजधानी ।

# महाकविः कुमारदासः

(६७५-७५०)

महाकविः कुमारदासोऽयं सिंहलद्वीपाख्यलङ्काधिपतिः अतीव प्रतिभावान् काव्यकलाकारश्चासीत् 'जानकीहरण'नाम्नः काव्यस्य प्रणेता । जानकीहरणाख्यं महाकाव्यं[1] विंशतिसर्गनिबद्धं संस्कृतसाहित्यशेवधौ किमपि जाज्वल्यमानं रत्नम् । कालिदासवदनेनापि वैदर्भी रीतिरेवोपलालिता । शृङ्गार एवात्र प्रमुखो रसः । वस्तुतो जानकीहरणे काव्यकलायाः पूर्णः परिपाकः पल्लवितो विभाव्यते । अतः कविराजेन राजशेखरेण कुमारदासस्य काव्यकलां लक्ष्यीकृत्य भणितम् :—

जानकीहरणं कर्त्तुं रघुवंशे स्थिते सति ।
कविः कुमारदासश्च रावणश्च यदि क्षमौ ।।

महाकविकालिदासीये रघुवंशाख्ये सर्वगुणोपेते महाकाव्ये जाग्रति सति रामाणीयकथामवलम्ब्य कुमारदासेन यज्जानकीहरणं नाम काव्यं विरचितं तन्नूनं स्वीयां काव्यकलां प्रदर्शयितुमेवेति प्रतीयते । यद्यपि कालीदासीयकाव्यकलासौष्ठवं तु नावगाहते काव्यमिदम्, तथाऽप्यस्य विलक्षणमनितरसाधारणं काव्यप्रकर्षं तु को नामापह्नोतुं पारयेत । कालिदासीयरचनासरणिरेवानेन शरणीकृता सम्भाव्यते । तदस्य रचनाचातुरी रसिकैर्लोचनगोचरीकरणीया । शिशिरं वर्णयन्नाह—

शिशिरशीकरवाहिनि मारुते चरति शीतभयादिव सत्वरः ।
मनसिजः प्रविवेश वियोगिनीहृदयमाहितशोकहुताशनम् ।।

उत्प्रेक्षा— वयःप्रकर्षादुपचीयमानस्तनद्वयस्योद्वहनश्रमेण ।
अत्यन्तकार्श्यं वनजायताक्षीमध्यो जगामेति ममैष तर्कः ।।

---

१. सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः ।
सद्वंशो क्षत्रियो वापि धीरोदात्तगुणान्वितः ।।
एकवंशभवा भूपाः कुलजा बहवोऽपि वा ।
शृङ्गारवीरशान्तानामेकाङ्गी रस इष्यते ।।
* * * * *
इतिहासोद्भवं वृत्तमन्यद्वा सज्जनाश्रयम् ।।
इति महाकाव्यलक्षणम् । [ काव्यादर्शः ]

शिशिरान्ते वसन्ते रात्रेः क्षीणतायाः दिनस्य दीर्घतायाः कारणमुत्प्रेक्षते—

'प्रालेयकालप्रियविप्रयोगग्लानेव रात्रिः क्षयमाससाद ।
जगाम मन्दं दिवसो वसन्तक्रूरातपश्रान्त इव क्रमेण ॥
श्रान्त्वा विवस्वानथ दक्षिणाशामालम्ब्य सर्वत्र करप्रसारी ।
ऋत्विक् ततो निःस्व इव प्रतस्थे वसूपलब्ध्यै धनदस्य वासम् ॥
वृक्षा मनोज्ञा द्युतिचम्पकाख्या रूपं वितेनुर्नवकुड्मलाढ्याः ।
न्यस्ता वसन्तस्य वनस्थलीभिः सहस्रदीपा इव दीपवृक्षाः ॥
बन्ध्योऽपि सालक्तकपादघातं लब्ध्वा रणन्नूपुरमङ्गनानाम् ।
उद्भूतरोमाञ्च इवातिहर्षात् पुष्पाङ्कुरैरास नवैरशोकैः ॥
महेन्द्रमूर्ध्नि भ्रमरेन्द्रनीलैर्विभक्तशोभः शिखिकण्ठनीलैः ।
गृहीतभास्वन्मुकुटानुकारस्ततान कान्ति नवकर्णिकारः ॥
* * *

विनिद्रपुष्पाभरणः पलाशः समुल्लसत्पुष्पलतावनद्धः ।
उद्भूतभस्मा मधुनेव रेजे राशीकृतो मन्मथदाववह्निः ॥

दशमे सर्गे कविः राजधर्ममधिकृत्याह —

क्षोणीपतिः पतत्याशु जराक्रान्त इव ध्रुवम् ।
त्यक्तदण्डः पदं वाञ्छन्नगृहीतजगत्करः ॥
इत्थं युक्तमपायानां कुर्वाणस्य चतुष्टयीम् ।
व्रजतीन्दुप्रभागौरं परैरक्षय्यतां यशः ॥
शूरं पुरुषसारज्ञं नीतौ पटुमलम्पटम् ।
सम्यक् संरक्षिताः कोशैर्वर्धयन्ति नृपं प्रजाः ॥
नोच्चैः पदं लम्भनीयो गुण्योऽप्यन्वयवर्जितः ।
रत्नाढ्यमपि कुर्वीत मूर्ध्नि कः पादमण्डनम् ॥
मूर्खो वर्ज्यः कुलीनोऽपि मातङ्ग इव भूभुजा ।
गुणैः कैरप्यविख्यातो वंशेनैव विभावितः ॥
तद्युक्तमुपधाशून्यमन्वयेन गुणेन च ।
साचिव्यं लम्भयन् मौलं न प्रमाद्यति भूपतिः ॥
यस्मिन् कृत्यानुरोधेन सौहृदं प्रतनोति यः ।
स तं त्यजति कृत्यान्ते तीर्णतोय इव प्लवम् ॥
यौ तु निष्कारणामुक्तस्नेहपाशौ सुहृत्तरौ ।
मृत्युनैव तयोर्भेदो देहजीवितयोरिव ॥

* * *

इति प्रकृतिवर्गादिनिर्णयेषु नयाश्रयः ।
क्षपितान्तर्बहिःशत्रुः शाधि साधु वसुन्धराम् ॥

अपि च :—— न जिष्णुः कृतशस्त्रो यो यश्चाढ्यो यज्ञनिस्पृहः ।
कामी यश्च जरन्नेते क्षत्रवंशेषु कत्त्रयः ॥

श्रूयते किल यदसौ कुमारदासः कविशिरोमणेः कालिदासस्य परं भक्तः, काव्यकलायामपि तमेवानुकुरुते । क्वचित्तु कालिदासकृतेरनुवाद मात्रमेवास्य काव्ये प्रतिफलतीव प्रतिभाति :——

तद्यथा——

पुष्परत्नविभवैर्यथेप्सितं सा विभूषयति राजनन्दने ।
दर्पणं न चकांक्ष योषितां स्वामिसम्मदफलं हि योषिताम् ॥

इत्यत्र 'स्वामिसम्मदफलं हि योषिताम्' इति पदं कालिदासीय——'प्रियेषु सौभाग्यफला हि चारुता' इत्यस्य भङ्ग्यन्तरेण भावानुवादमात्रमेवानुकरोति स्फुटम् । पद्यगुम्फने निसर्गसुभगतां नाविष्करोति । नोद्भासयति च यथार्हं वाचां प्रासादिकीं छटाम् । न खलु बिभर्त्ति कालिदासस्य शृङ्गारिकीं श्रियम् ।

जनश्रुतितोऽवगम्यते यदसौ सिंहलद्वीपस्याधिपतिरासीद् बाल्यकालादेव काव्यकलाप्रणयी । अस्य स्थितिकालः ख्रैस्त ५१७ तः ५२८ पर्यन्तं निर्धार्यते । अस्य रचनायां कालिदासरचनायाश्छाया सुतरां प्रतिभासते । एकतोऽयं पाणिनीयाष्टकस्य सुप्रसिद्धायां काशिकावृत्तौ आत्मनः परिचयं ददाति, अपरतः लब्धख्यातिरालङ्कारिको वामनः ख्रैस्त ८०० मितेऽब्दे लब्धजन्मा स्वग्रन्थे जानकीहरणादुदाहरणानि सङ्कलयति ? तदेतदनुरोधेनास्य समयः ख्रैस्त ६५० तः ७५० पर्यन्तमध्यघटितः स्वीकर्त्तुं शक्यः, इति कालज्ञानां सम्मतिः ।

कुमारदासस्य रचनासरणी वैदर्भीमेवालम्बते । काव्यकलाकमनीयता, छन्दसामौचित्यं, गाढबन्धश्च पद्यानां कवेः रचनाचातुरीमाख्याति । माघीयपद्यकलापे जानकीहरणस्य छायानुहरणमस्य माघतः प्राक्कालभवत्वं प्रत्याययति । यतः राजशेखरस्तं मेधाशालित्वेन स्मरति प्रशंसति च प्रतिभासम्पन्नत्वेन :——

"या शब्दग्रामम्, अर्थसार्थम्; अलङ्कारतन्त्रयुक्तिमार्गम् अन्यदपि तथाविधमधिहृदयं प्रतिभासयति सा प्रतिभा । अप्रतिभस्य पदार्थसार्थः परोक्ष इव, प्रतिभावतश्च पुनरपश्यतोऽपि प्रत्यक्ष इवाभाति । यतो मेधाविरुद्रकुमारदासादयोजात्यन्धाः कवयः श्रूयन्ते" इति ततोऽपि विज्ञातं भवति राजशेखरादपि कुमारदासस्य पूर्ववर्त्तित्वम् इति ।

——०——

# महाकविः श्रीरत्नाकरः

(नवमशताब्दी)

महाकाव्येषु सर्वातिशायिबृहत्कायभृतो हरविजयस्य प्रणेता श्री अमृतभानुतनुजन्मा महाकविः श्रीरत्नाकरसमाख्यया प्रख्यातः काश्मीरदेशसम्भवः काश्मीराधिपस्य महामहिम्नो जयापीडस्य सभापण्डितः ख्रीस्तीय ७७९–८१३ शतके व्यराजत। किन्तु कल्हणविरचितया राजतरङ्गिण्या ज्ञायते यदसौ राज्ञोऽवन्तिवर्मणो राज्यकाले ख्रीस्तीय ८८५–८८४ शतके समभवत्। परां प्रसिद्धिञ्चावाप :—

मुक्ताकणः शिवस्वामी कविरानन्दवर्द्धनः।
प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मणः॥

हरविजयव्यतिरिक्तौ द्वावपरावपि 'वक्रोक्तिपंचाशिका', 'ध्वनिगाथापञ्जिका' चेत्याख्यौ एतद्विरचितौ सन्दर्भौ समुपलभ्येते।

महाकाव्यमेतत्पञ्चाशत्सर्गैर्निबद्धं शतत्रयविंशत्युत्तरसहस्रसंख्यामितैरनवद्यपद्यैर्विभूषितं बृहत्कायत्वेन सर्वाणि काव्यान्तराण्यतिशेते। लीलावशाद् भवान्या भवनेत्रे करपल्लवाभ्याच्छादनहेतोः अन्धको नाम तनूजन्मा दृष्टिहीनः समुत्पन्नः। किन्तु तपःप्रभावेन शिवमाराध्य तेन लब्धदृष्टिना लोकत्रयं स्वाधिकारे कृतम्। तदनु प्रक्षुब्धेन महादेवेनासौ पुरन्दरपुरं सम्प्रेषितः। एतावन्मात्रं स्वल्पतरं कथानकं काव्यविस्तारेण बृहत्कायं विदधानोऽसौ विलक्षणं काव्यकौशलमाविश्चकार। काव्येऽस्मिन् जलक्रीडा-चन्द्रोदय-समुद्रोल्लासादिवर्णनं पञ्चदशसर्गेषु उपन्यस्तम्। रत्नाकरस्य कवित्वचमत्कारः नूनं माघरचनामधरीकरोति। अस्याद्भुतप्रतिभाप्रभासम्मुखे माघो हतप्रभ इवावभाति। तथाहि दिङ्मात्रमुदाह्रियतेऽत्र :—

व्यक्तोपकारमधुना स्थगितासु दिक्षु,
प्रेयोगृहं सुखमलक्षितमेव यामः।
धम्मिल्लबन्धरुचिरैरभिसारिकाभिः
प्रेम्णा तमश्चिरमितीव शिरोभिरूहे॥१४।४३॥

प्रत्युपकारं सूचयन्तीभिरभिसारिकाभिः केशपाशव्याजेन अन्धकारः शिरोभिरूहे इति समुत्प्रेक्षते। अग्रे च चन्द्रोदयमुद्दिश्य कवेर्निम्नोक्तिरतीव चमत्करोति चेतांसि विपश्चिताम्—

स्रस्तान्धकारवसनां रजनीपुरन्ध्रि-
मालिङ्गति प्रियसुधास्रुतिदिक्सखीभिः ।
दूरं मृणालशकलामलतन्मयूख-
हासच्छटाञ्चितमुखीभिरिवावसस्त्रे ।।२०।४७।।

किञ्च भगवन्तं शिवं संस्तुवन् आह :—

अपि बालकोटिशतभागविग्रहः,
षड्उपाधिकामपि विधाय पद्धतिम् ।
स्थित एक एव भगवन्नहो भवान्,
विदधाति चेतसि न कस्य विस्मयम् ।।६।११७।।

यदयं शशिशेखरो हरो हरिरप्येष यदीशिता श्रियः ।

अमरा अपि मत्सुरा अमी तदिमास्तस्य विभूतिविप्रुषः ।।

हरविजये माघस्य प्रतिबिम्बं स्पष्टमुद्भासते। माघ इव रत्नाकरोऽपि प्रतिसर्गमन्तिमे श्लोके 'रत्न'मिति शब्दविशेषमनिवार्यतया प्रयुङ्क्ते। यथा माघः स्वकाव्यं 'लक्ष्मीपतेश्चरितकीर्त्तनमात्रचारु' इति विरुदेण विभूषयति तथैव रत्नाकरोऽपि हरविजयं 'चन्द्रार्द्धचूडचरिताश्रयचारु'' इति पदेनालङ्करोति । कविनाऽमुना निजकाव्यमुद्दिश्य या गर्वोक्तिरारचिता सा भूरिशः तथ्यतां बिभर्त्ति। तद्यथा—

ललितमधुराः सालङ्काराः प्रसादमनोहराः ।
विकटयमकश्लेषोद्गारप्रबन्ध — निरर्गलाः ।।
असदृशगतीश्चित्रं मार्गे ममोद्गिरतो गिरो ।
न खलु नृपते चेतो वाचस्पतेरपि शङ्कते ।।

हरविजयावलोकनं कवेरस्य यत्र शैवदर्शन-नीतिशास्त्र-कामसूत्रादीनां गभीरं परिज्ञानमवबोधयति तत्र नाट्यसङ्गीताऽलङ्कारचित्रकलायामप्ययं सम्यक् नैपुण्यमवगमयति ।

युधि धावतः प्रतिगजाभिमुखं पुनरप्यधाद्गजपतेः सरुषः ।
दलिताश्रयः सपदि केतुपटः पतितो मुखे पृथुमखच्छदताम् ।।

'वसन्ततिलका'ख्यछन्दोग्रथने त्वसौ सिद्धहस्त एवासीत् । तथाहि क्षेमेन्द्रः संस्तौति :—

वसन्ततिलका रूढा वाग्वल्लीगाढसंगिनी ।
रत्नाकरस्योत्कलिका चकास्त्याननकानने ।।

वस्तुतः वसन्ततिलका अस्यातीव कमनीया :—

संध्याप्रवृत्तिरुधिरारुणसान्द्र – धातु-
धूलिच्छटाकपिशिताम्बरदिग्विभागाः ।
अद्यम्बुराशि गिरिपङ्क्तिरवन्ध्यपप्त-
दम्भ्यापतत्कुलिशताकुलिता दिनश्रीः ॥

प्राप्तेऽस्तशैलशिखरस्थितमुष्णभासि,
लोकानुसारसरलत्वजुषो नलिन्यः ।
सन्ध्यां ससम्भ्रममविन्दषतेव साय
माताश्रकोरककराञ्जलिजालबन्धाः ॥

स्वकाव्यमहिमानं निरूपयन्नाह :—

हरविजय-महाकवेः प्रतिज्ञां शृणुत कृतप्रणयो मम प्रबन्धे ।
अपि शिशुरकविः कविप्रभावाद् भवति कविश्च महाकविः क्रमेण ॥

नूनं वास्तविकं वचः ।

एतादृशी प्रशस्तिप्रणालिपरिणताऽस्य कवेर्वाग्वल्लरी सविशेषं काव्य-प्रकर्षमवगमयति । अलङ्कारविमर्शेऽपि :—

माघः शिशुपालवधं विदधत् कविमदवधं विदधे ।
रत्नाकरः स्वविजयं हरविजयं वर्णयन् व्यवृणोत् ॥

कविराजराजशेखरश्च :—

मा स्म सन्तु चत्वारः प्रायो रत्नाकरा इमे ।
इतीव सत्कृतो धात्रा कवी रत्नाकरोऽपरः ॥

कवेरस्य 'बालबृहस्पति'रित्युपाधिरपि महामेधावित्वमस्य ध्वनयति ।

सत्यपि एतादृशप्रशंसार्हे सकलकाव्यकलाऽलङ्कृते महाकाव्ये यन्नेदं यथार्हां प्रसिद्धिमावहति, इत्यत्र रहस्यमनुसन्धेयम् परन्तु प्रसिद्धतमेषु दशमहाकविषु कालक्रममालम्ब्य वर्णने रत्नाकरस्याऽपिं नाम सङ्कलितमिति कस्य न चेतसस्तोष-परम्परामातनोति । तद्यथा—

आदौ श्रीकालिदासः स्यादश्वघोषस्ततः परम् ।
भारविश्च तथा भट्टिः कुमारश्चापि पञ्चमः ॥
माघरत्नाकरौ पश्चाद् हरिश्चन्द्रस्तथैव च ।
कविराजश्च श्रीहर्षः प्रख्याताः कवयो दश ॥

---०---

# महाकविः क्षेमेन्द्रः

(१०२५–१०८०)

संस्कृतसाहित्यमहाम्बरे कवीन्द्रस्य क्षेमेन्द्रस्य पदमम्बरमणिपदमिव शेखरायमाणं निरतिशयाभया विभाति। महाकविरेष काश्मीरेषु एकस्मिन् धनाढ्ये ब्राह्मणकुले जनिं लेभे। सिन्धुनाम्नो भूसुरस्य पौत्रः, प्रकाशेन्द्रनाम्नः परमविदुषश्च तनूजः। अस्य पितृचरणाः प्रख्याता दानवीरा अत्युदाराश्चासन्। स्वयं कविरेव स्वकीयबृहत्कथामञ्जर्यामुपन्यस्यति :—

यस्य मेरोरिवोदारकल्याणापूर्वसम्पदः।
अगणयसभूद् गेहे यस्य भोज्यं द्विजन्मनाम्॥

स एष महामतिः विश्वविख्यातालङ्कारिकस्यात्रभवतोऽभिनवगुप्ताचार्यस्य शिष्यतां गतः। आचार्याभिनवसकाशादेव साहित्यविद्यामाजगाहे इति स्वयमेव प्रपञ्चयति :—

श्रुत्वाभिनवगुप्ताख्यात् साहित्यं बोधवारिधेः।
आचार्यशेखरमणेः विद्याविवृतिकारिणः॥ [बृहत्कथामञ्जरी]

क्षेमेन्द्रस्य रचनाऽतीव मधुरा, कोमलो वाक्यविन्यासः, सुदृढ़श्च काव्यबन्धः। अनेन बहवो ग्रन्था अतिगभीरार्थया गिरा सङ्ग्रथिताः। ग्रन्थरचनावैपुल्यदृशाऽसौ महर्षिव्यासदेवं विहायेतरसर्वाग्रगण्यत्वेन प्रसिद्धः। अस्य सम्प्रत्युपलभ्यमानाः सन्दर्भाः त्रिंशत्संख्यामिताः समुल्लसन्ति तेषु प्रमुखास्तु निम्नाङ्किताः —

(१) रामायणमञ्जरी, (२) भारतमञ्जरी, (३) बृहत्कथामञ्जरी, (४) दशावतारचरितम्, (५) बोधिसत्वावदानकल्पलता, (६) कलाविलासः, (७) चतुर्वर्ग-संग्रहः, (८) चारुचर्या, (९) नीतिकल्पतरुः, (१०) समयमातृका, (११) सेव्यसेवकोपदेशः, (१२) अमृततरंगकाव्यम्, (१३) औचित्यविचारचर्चा, (१४) कविकण्ठाभरणम्, (१५) पद्यकादम्बरी, (१५) वात्स्यायनसूत्रसारः, (१७) शिववंशमहाकाव्यम्, (१८) शिवसूत्रविमर्शिनी, (१९) पवनपञ्चाशिका, (२०) मुक्तावली, प्रभृतयः।

दशावतारचरिते क्षेमेन्द्र आत्मानं व्यासदासत्वेनाख्याति :—

इत्येष विष्णोरवतारमूर्त्तेः कथामृतास्वादविशेषहृद्या।
श्री व्यासदासान्यतमाभिधेन क्षेमेन्द्रनाम्ना विहितः स्ववाग्रयः॥

तदेतादृशो बृहत्तरसाहित्यप्रसरोऽनेन लोककल्याणहेतोरेव प्रपञ्चितः। भगवद्व्याससाहित्यवदस्यापि रचनाधर्मनीतिप्रभृतिसदुपदेशविशेषसुभूषिता वरीवर्त्ति। तन्निदर्शनमप्यत्र किञ्चित्प्रस्तूयते :—

सर्वापकारः सुकृतप्रहारः क्लेशावतारः कुशलापसारः।
शीलापचारः कुपदाभिसारः पापप्रकारः परदारहारः॥

[दशावतारचरितम्]

अरण्यनिवासानन्दं कियन्नैपुण्यनारचयति :—

दयित–जन–वियोगोद्वेगरोगातुराणां,
विभव विरह दैन्यम्लायमानाननानाम्।
शमयति शितशल्यं हन्त नैराश्यनश्य-
द्भवपरिभवतान्तिः शान्तिरन्ते वनान्ते॥

अद्वेषपेशलं कुर्यान्मनः कुसुमकोमलम्।
बभूव द्वेषदोषेण देवदानवसंक्षयः॥

यत्नेन शोषयेद्दोषान् न तु तीव्रव्रतैस्तनुम्।
तपस्या कुम्भकर्णोऽभूत् नित्यनिद्राविचेतनः॥

उद्वेजयेन्न तैक्ष्ण्येन रामाः कुसुमकोमलाः।
सूर्यो भार्याभियाच्छित्यै तेजो निजमशातयत्॥

कविभिर्नृपसेवासु वित्तालङ्कारहारिणी।
वाणी वेश्येव लोभेन परोपकरणीकृता॥

कविराजः क्षेमेन्द्रोऽयमतीव प्रौढः कविः। काश्मीरराजस्य अनन्तराजस्य स्थितिकालेऽनेन 'मातृका'ख्यो ग्रन्थः प्रणिबद्धः। अतः अस्य समयोऽपि दशमशताब्दीदेशीय एव विभाव्यते। पूर्वमसौ शैवमतावलम्बी आसीत् प्रखरो दार्शनिकश्च। तदनु शैवदर्शनवद् बौद्धदर्शनेऽप्यसावनुरागं बबन्ध। बौद्धधर्मे एव च सञ्जातः सुतरां बद्धश्रद्धाकः।

साधुमहात्मनां लक्षणानि कियच्चारुतया बध्नाति :—

स्वाम्ये पेशलता, गणे प्रणयिता, हर्षे निरुत्सेकता,
मन्त्रे संवृत्तता श्रुतौ सुमतिता वित्तोदये त्यागिता।
साधौ सादरता, खले विमुखता, पापे परं भीरुता,
दुःखे क्लेशसहिष्णुता, च महतां कल्याणसाकांक्षति॥

व्रते विवादं विमतिं विवेके सत्येऽतिशङ्कां विनये विकारम् ।
गुणेऽवमानं कुशले निषेधं धर्मे विरोधं न करोति साधुः ।।

सदा खण्डनयोग्याय तुषपूर्णाशयाय च ।
नमोऽस्तु बहुबीजाय खलायोलूखलाय च ।।

जिह्वाद्रूषितसत्पात्रः पिण्डार्थी कलहोत्कटः ।
तुल्यतामशुचिर्नित्यं बिभर्त्ति पिशुनः शुनः ।।

ख-चित्रमपि मायावी रचयत्येव लीलया ।
लघुश्च महतां मध्ये तस्मात्खल इति स्मृतः ।।

न शान्तान्तस्तृष्णा धन-लवण-वारिव्यतिकरैः,
शतच्छायः कायश्चिरविरसरूक्षाशनतया ।
अनिद्रो मन्दाग्निर्नृपसलिलचौरानलभयः,
कदर्याणां[1] कष्टं स्फुटमधमकष्टादपि परम् ।।

धर्मः शर्म परत्र चेह च नृणां धर्मोऽन्धकारे रविः,
सर्वापत्तिशमक्षमः सुमनसां धर्माभिधानो निधिः ।
धर्मो बन्धुरबान्धवपृथुपथे धर्मः सुहृन्निश्चलः,
संसारोरुमरुस्थले सुरतरुर्नास्त्येव धर्मात्परः ।।

शीलं शीलयतां कुलं कलयतां सद्भावमभ्यस्यताम्,
व्याजं वर्जयतां गुणं गणयतां धर्मे धियं बध्नताम् ।
क्षान्तिं चिन्तयतां तमः शमयतां तत्त्वश्रुतिं शृण्वताम्,
संसारे न परोपकारसदृशं पश्यामि पुण्यं सताम् ।।

अम्भोधिः स्थलतां, स्थलं जलधितां, धूलीलवः शैलताम्,
मेरुर्मत्कुणतां, तृणं कुलिशतां, वज्रं तृणप्रायताम् ।
वह्निः शीतलतां, हिमं दहनतामायाति यस्येच्छया,
स्वेच्छादुर्ललिताद्भुतव्यसनिने देवाय तस्मै नमः ।। इति ।।

---o---

१. कदर्याणां कृपणानामिति यावत् ।

# श्रीहर्षः

(कैस्त १२ शताब्दी)

संस्कृतसाहित्यललामभूतस्य विश्वविख्यातस्य नैषधीयचरिताभिधस्य महाकाव्यस्य प्रणेता विद्वच्चक्रचूडामणिः कवितार्किकसार्वभौमः लोकोत्तरप्रतिभावान् महाकविः श्रीहर्षमहाभागः। कविरयं श्रीहीरविपश्चितस्तनुजः श्रीमतीपरमविदुषीमामल्लदेवीगर्भशुक्तिमुक्तामणिश्चासीत्। यथा हि कवेरस्य स्ववर्णनेनैवावगम्यते :—

श्रीहर्षः कविराजराजिमुकुटालंकारहीरः सुतः,
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्। इति

केचन कविममुं मैथिलब्राह्मणं साधयितुमुत्सहन्तेऽपरे कान्यकुब्जमिति। उपन्यस्यन्ति च स्वस्वपक्षमुपपादयितुमनेकान् हेतून्। तन्न ग्रन्थविस्तरभियाऽत्र समुट्टङ्कयितुं प्रभवामः। किन्तु स ब्राह्मणकुल एव स्वजन्मपरिग्रहं चकार। ब्राह्मणः खलु स इति तु अपेतसन्देहम्। महामहिमशालिनोऽस्य विद्वन्मणेर्विषये प्रचरति एका आख्यायिका लोके। यदसौ बाल्यकाल एव दैववशाद् अभवत् पितृवियोगदुःखभागिति। भर्तृवियोगवह्निना दग्धहृदयापि शिशोरस्य वराकी जननी जगदिदं शून्यमरण्यमिवाकलयन्त्यपि कुलपरम्परामनुपालयन्ती सुतवात्सल्यवशंवदा वत्समम्ुं धर्मधियोपलालयन्ती अतिप्रेम्णा परिपालयामास।

बालस्त्वयमतीव चपलमतिः वयसा पंचवर्षदेशीय एव एकदा स्वपितुः शास्त्रार्थाहवे केनचित्पण्डितेन[1] कृतमवमानमाकर्ण्य कर्णपरम्परया, विदीर्णहृदयः स्वजनकावमन्तारं विजेतुकामः लोकोत्तरवैदुष्यावाप्तिकाम्यया सरस्वतीमाराध-

---

१. कवेरस्य जनको विद्वदग्रणीर्हीरमहाभागः गहड्वालवंशावतंसस्य काशीराजश्रीविजयचन्द्रस्य राजसभायां प्रधानपण्डितपदमलमकार्षीत्। तदानीन्तनेन सुप्रसिद्धेन नैय्यायिकसार्वभौमेनोदयनाचार्येणासौ महाभागः वादाहवे पराजितः। तत्पराजयावसादावसन्नहृदयो हर्षस्य जनको बाल्यकाल एव पञ्चत्वं गतः। किन्तु प्रस्तुतायां मरणवेलायां श्रेष्ठं ज्येष्ठं पुत्रं हर्षमाहूयादिदेश, 'जात! यदि सुपुत्रोऽसि तर्हि मम विजेता स उदयनाचार्यः त्वयावश्यं विजेतव्यः।' इति किंवदन्ती।

यितुमुद्युक्तोऽभवत् समारेभे च सर्वात्मना वागधिदेवतां प्रसादयितुम्। यथाविधि अनुतिष्ठतोऽल्पवयसोऽप्यस्य अचिरेण कयाचन कालकलया वाग्देवताप्रसादात् प्रतिबभौ कापि लोकोत्तरचमत्कारिणी प्रतिभा। ततश्चायं निश्चिकाय कान्यकुब्जेश्वरराजपरिषदि गत्वा स्वपितुरवमन्तारं विजेतुम्। लब्धावसरश्च दिष्टचा तं व्यजेष्ट चतुरस्रतयेति।

वाग्देवताराधनलब्धप्रसादप्रकर्षो हर्षमहाभागो भूभुजो विजयचन्द्रस्य राजसभायाङ्गतः राजस्तुतिनिरूपकञ्च पद्यमिदं पपाठ :—

गोविन्दनन्दनतया च वपुःश्रिया च,
मास्मिन्नृपे कुरुत कामधियः तरुण्यः।
अस्त्रीकरोति जगतां विजये स्मरः स्त्री-
रस्त्री जनः पुनरनेन विधीयते स्त्री॥

विचित्रपदविन्यासं चमत्कारपूर्णार्थविमर्शकं पद्यमाकर्ण्य राजसभा कविममुमतितरां प्रशशंस। कान्यकुब्जाधीश्वेरण च कविरयं सुभृशं सबहुमानं समादृतः। गच्छता कालेन च स राजपरिषदि सर्वाधिकलब्धप्रतिष्ठो विद्वज्जनगोष्ठीगरिष्ठो वरिष्ठश्च संजातः। आससाद स परां कोटिं राजसम्मानस्य। यथासौ स्वयमेव उपश्लोकयति :—

ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरात्,
यः साक्षात् कुरुते समाधिषु परब्रह्मप्रमोदार्णवम्।
यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः,
श्री श्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम्॥

एवं सरस्वतीसमाराधनोपलब्धाऽसाधारणप्रतिभोऽसौ क्रान्तदर्शी कविः यद्यपि नैषधीयचरितार्णववर्णन-शिवशक्तिसिद्धि-साहसाङ्कचम्पू-छन्दःप्रशस्ति-विजयप्रशस्ति-गौडोर्वीशकुलप्रशस्ति-प्रभृतीन् पीयूषवर्षिणः काव्यसंदर्भान् ईश्वराभिसंधिखण्डनखण्डखाद्यस्थैर्यविचारणाप्रकरणानि, चालौकिकान् गीर्वाणवाण्यलङ्कारभूतान् प्रभूतान् तर्कनिबन्धान् न्यभांत्सीत् तथापि काव्येषु अस्य नैषधीयचरितं ग्रन्थान्तरेषु च खण्डनखण्डखाद्यं यादृशीं प्रशस्तिं यशस्वितां च अवगाहेते, न तादृशीमन्ये प्रबन्धाः। संस्कृतकाव्यप्रपञ्चे तु नैषधीयचरितमतीवोत्कृष्टपदमलङ्करोति आविष्करोति च कवेरस्य कामपि लोकोत्तरां प्रतिभाम्, सुमृदुललितपदविन्यासनैपुणीं, प्रगुणालङ्कारचमत्कारान्, अनन्यसंकाशांश्चानुप्रासविलासान्, अनपेक्षावतीमुत्प्रेक्षां, निरुपमाञ्चोपमाचारुताम्। यदभिलक्ष्यैव मन्यामहे युक्तमेवोक्तं केनाप्यभियुक्तेन :—

तावद् भा भारवेर्भाति यावन्माघस्य नोदयः।
उदिते नैषधे काव्ये क्व माघः क्व च भारविः॥

तदास्वाद्यतां क्षणं सक्षणैर्विचक्षणैरस्य कविशिरोमणेरमन्दानन्दनिस्यन्दि किमपि सुधारसस्पर्द्धि काव्यामृतं नाम। तथा च :—

निपीय यस्य क्षितिरक्षिणः कथास्तथाद्रियन्ते न बुधाः सुधामपि।
नलः सितच्छत्रितकीर्तिमण्डलः स राशिरासीन्महसां महोज्ज्वलः॥

अत्र कीर्तिमण्डले सितच्छत्रित्वनिरूपणाद् रूपकालंकारः कियत्सौन्दर्येणोपनतः। किञ्च :—

तदोजसस्तद्यशसः स्थिताविमौ वृथेति चित्ते कुरुते यदा यदा।
तनोति भानोः परिवेशकैतवात् तदा विधिः कुण्डलनां विधोरपि॥१।१४॥
यदस्य यात्रासु बलोद्धतं रजः स्फुरत्प्रतापानलधूममञ्जिम।
तदेव गत्वा पतितं सुधाम्बुधौ दधाति पंकीभवदङ्कतां विधौ॥

दमयन्त्याः नयने वर्णयन्नाह :—

नलिनं मलिनं विवृण्वती, पृषतीमस्पृशती तदीक्षणे।
अपि खञ्जनमञ्जनाञ्चिते, विदधाते रुचिगर्वदुर्विधम्॥

किं च—

लोकेशकेशवशिवानपि यश्चकार, शृंगारसान्तरभृशान्तरशान्तभावान्।
पञ्चेन्द्रियाणि जगतामिषुपञ्चकेन संक्षोभयन् वितनुतां वितनुर्मदं वः॥

अहो कीदृशी यमकच्छटेयमुट्टङ्किता। उत्प्रेक्षापि काचिदस्योत्प्रेक्षणीया :—

निलीयते ह्रीविधुरः स्वजैत्रं, श्रुत्वा विधुस्तस्य मुखं मुखान्नः।
सूरे समुद्रस्य कदापि पूरे, कदाचिदभ्रभ्रमदभ्रगर्भे॥३।३३॥

दमयन्त्याः सौन्दर्यवर्णननैपुणी अपि अस्य कवेः विचक्षणैः सुनिपुणं प्रणिभालनीया भवति :—

हृतसारमिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा।
कृतमध्यबिलं विलोक्यते धृतगम्भीरखनीखनीलिमा॥२।२५॥

दमयन्त्या नलवरणस्पृहां कीदृगपूर्वतया वर्णयति :—

मनस्तु यं नोज्झति जातु यातु, मनोरथः कण्ठपथं कथं सः।
का नाम बाला द्विजराज! पाणिग्रहाभिलाषं कथयेदभिज्ञा॥

ननं यादृशी पदप्रयोगचातुरी सम्पन्ना हर्षकृतिषु परिस्फुटा, न तादृशी क्वचिदन्यत्र दृक्पथमवतरति। यद्यपि क्वचित् क्वचिदस्य पदगुम्फने जटिलताप्यवसादयति तत्कृतेः प्रासादिकीं श्रियम्। यथा :—

देवः पतिर्विदुषि ! नैषधराजगत्या निर्णीयते न किमु न व्रियते भवत्या।
नायं नलः खलु तवातिमहानलाभो यद्येनमुज्झति वरः कतरः पुनस्ते ।।

तथापि तदनुप्राससचिवपदलालित्यबाहुल्यमन्तर्धत्ते तदखिलपदालिजालजाटिल्यम्। नूनं हर्षस्य पदविन्यासचातुरी सर्वोत्कर्षत्वेन वरीवर्त्ति इत्यत्र तु नास्त्येव काचित् संशीतिः । अस्य काव्यावलीमनुवाचयतः कस्य सहृदयस्य न जायते हृदयममन्दानन्दतुन्दिलम् । दमयन्त्याः विरहोन्मादं कीर्तयन् कविवरः प्राह :—

कुरु करे गुरुमेकमयोघनं बहिरितो मुकुरं च कुरुष्व मे।
विशति तत्र यदैव विधुस्तदा सखि सुखादहितं जहि तं द्रुतम् ।।४।५९।।

स्मरज्वरोन्मादप्रलापेन दमयन्त्याः शशांकविगर्हणा कवेः कवित्वचारुताचातुरीं निरतिशयामिवाख्यापयति।

'अयि विधुं परिपृच्छ'. . . .इति चतुर्थसर्गगतं अष्टचत्वारिंशत्तमं श्लोकमारभ्य 'इतिविधोक्तिविगर्हण . . .' इत्यन्तं विधुविगर्हणं विधत्ते रसिकानां हृदयं खलु चञ्चच्चमत्कृतिसम्भृतम्।

भानुं वर्णयन् कविराह :—

आदाय दण्डं सकलासु दिक्षु, योऽयं परिभ्राम्यति भानुभिक्षुः।
अब्धौ निमज्जन्निव तापसोऽयं, सन्ध्याभ्रकाषायमधत्त सायम् ।।

सन्ध्यां कीदृक्चारुतया चित्रयति :—

कालः किरातस्फुटपद्मकस्य, वधं व्यधाद्यस्य दिनद्विपस्य।
तस्यैव संध्या रुधिरास्रधारा, ताराश्च कुम्भस्थितमौक्तिकानि ।।

कियद् हृदयावर्जकं वर्णनम् !

सर्वशास्त्रावगाहिबुद्धिरयं सिद्धहस्तकविस्तर्ककलायामप्यतितरां निष्णात आसीत्। यथा च तस्य खण्डनखण्डखाद्याभिधाद् ग्रन्थरत्नाद् विज्ञायते :— सन्दर्भोऽयं वादिजनविजिगीषूणामत्यन्तहितावहितया तर्कप्रबन्धान्तरवैलक्षण्येन च परां ख्यातिं प्राप। ग्रन्थोऽयं खण्डनखण्डखाद्यम्, खण्डनखाद्यम्, खाद्यखण्डनञ्चेत्यादिविविधैरभिधानैः प्रथितः। तकपाटवपटीयसि सत्यप्यस्मिन् ग्रन्थे कवेः कवित्वच्छटासम्पुटः सुवर्णे सुरभियोगमिवादधाति । तद्यथा ग्रन्थारम्भ एव शक्तिं संस्तुवन् प्राह :—

मानापनोदनविनोदनते गिरीशे, भासेव सङ्कुचितयोरुचितं तदिन्दोः ।।
भेत्तुं भवानिशचितं दुरितं भवानि, नम्रीभवानि घनमङ्घ्रिसरोजयोस्ते ।।

शक्ति सम्बोध्य आह हे भवानि, तवाङ्घ्रिसरोजयोः घनं निरन्तरं नम्रीभवानि अवनतः स्याम्। किं विशिष्टयोरङ्घ्रिसरोजयोः मानापनोदनविनोद-

नते गिरीशे, तदिन्दोः तन्मौलिचन्द्रस्य भासेव ज्योत्स्नयेव उचितं यथा स्यादेवं सङ्कुचितयोः उपजातसङ्कोचयोः प्रणिपातायोद्यते भर्त्तरि लज्जया चरणसङ्कोचस्तावदुचित एव। तत्र तदिन्दोः भासेवेत्युप्रेक्षा। दवीयस्यपि चन्द्रमसि सरोजसङ्कोचो नेदीयसि सुतरामित्युप्रेक्षोद्दीपनम्। किं कर्त्तुम्? भवानिशचितं दुरितं भेत्तुम्। संसाराविश्रान्तसञ्चितकल्मषनिरासायेत्यर्थः। अथवाऽर्थान्तरमपि ध्वनितम्भवति। हे ब्रह्माद्वैतोपदेशक! त्वं ममानिशचितं दुरितं भेत्तुं भव-प्रभव। अहं तवाङ्घ्रिसरोजयोर्नम्रीभवानि। गिरीशे--वादिनि, गिरामीशो गिरीश इति व्युत्पत्त्या गिरीशो वादी। मानापनोदनविनोदनते वादित्वाभिमानखण्डनविनम्रे सति, अहं भवानि = वादिदुरितभेत्ता भवानीत्यर्थः। अर्थात् तथा तत्त्वमुपदिशामि यथा वादिजनानां दुरितं भङक्ष्यतीति ग्रन्थकृतः स्वयं कृतां प्रत्याशंसां निर्दिशति।

अथ वीतरागाणां तात्त्विकसिद्धान्तबुभुत्सूनामेतद्ग्रन्थप्रवृत्त्यौपयिकं मननलक्षणं प्रयोजनमुक्त्वा रागिणामपि वादिविजिगीषूणां विजयलक्षणं प्रयोजनं दर्शयति :—

शब्दार्थनिर्वचनखण्डनया नयन्तः, सर्वत्र निर्वचनभावमखर्वगर्वान्।
धीराः यथोक्तमपि कीरवदेतदुक्त्वा, लोकेषु दिग्विजयकौतुकमातनुध्वम्॥

हे धीराः! कीरवदेतदस्मदुक्तं खण्डनमुक्त्वा लोकेषु दिग्विजयकौतुकमातनुध्वम्--विस्तारयत। सर्वत्र विवादपदेषु शब्दार्थनिर्वचनखण्डनया—शब्दार्थनिरुक्तिं विधाय तत्खण्डनया--तदनुपन्नत्वव्यवस्थापनेन, अखर्वगर्वान् प्रौढाहङ्कारान् वादिजनान् निर्वचनभावं मूकत्वं नयन्तः प्रापयन्तः सन्त इत्यर्थः। तदेतावता मदुक्तस्य खण्डनस्य सर्ववादिदिग्विजयः फलमिति ध्वनितं भवति। कीदृशी गर्वोक्तिः स्वप्रौढिचिख्यापयिषयेव कविनात्मप्रकाण्डपाण्डित्यप्रकर्ष एव खल्वत्र व्यक्तीकृतः। स्थान एव किलैतत् :—

ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया,
प्राज्ञम्मन्यमना हठेन पठिती माऽस्मिन खलः खेलतु।
श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादय–
त्वेतत्तर्करसोर्मिमज्जनसुखेष्वासञ्जनं सज्जनः॥

[खण्डनखण्डखाद्ये]

श्रीहर्षस्य काव्यप्रवाहे दार्शनिकच्छटाऽपि यत्र तत्र समुच्छलन्तीव विलोक्यते। नैषधीयचरितस्य सप्तमः सर्गः तस्य दार्शनिकविदग्धतयौतःप्रोतश्च दृश्यते। औलूकापरनामधेयस्य वैशेषिकाचार्यस्य कणादमुनेः औलूकेतिसंज्ञान्तरमुपजीव्य यत्समुपश्लोकितं परिहासचुम्बितं किमपि मर्मस्पृग्वर्णनं तत्कं सहृदयं न खलु चुलुकयेत्?

'ध्वान्तस्य वामोरु ! विचारणायां वैशेषिकं चारु मतम्मतं मे ।
औलूकमाहुः खलु दर्शनं तत् क्षमं तमस्तत्त्वनिरूपणाय ।। इति ।।

महाकवेरस्य किलाशुकवित्वशक्तिमुद्दिश्यापि प्रचरन्ति नैके जनप्रवादाः। तेष्वेक एवाऽत्र रसिकानां विनोदनार्थं पुरस्क्रियते :—

एकदा कश्चिदनूचानोऽस्याशुकवित्वशक्तिं परीक्षितुकाम काममासाद्य कवेरावासस्थानं, विलोक्य च तं खण्डनखण्डखाद्यं प्रणयन्तं श्लोकमुखेनैव प्रकामं व्याजहार :—

तर्ककर्कशविचारचातुरी किन्तुरीयवयसा विभाव्यते।
आतुरीभवति यत्र मानसं—

इति प्रश्नात्मकस्य पद्यस्यास्य समाकर्ण्य चरणत्रयं, तदुत्तररूपेण चतुर्थपदं स्वयमुदाजहार :—

धातुरीप्सितमपाकरोति कः ? इति ।।

अहो कीदृशं हृदयाह्लादकमाशुकवित्वशक्तिनिदर्शकं प्रतिवचनम् ?

किञ्चिदस्य कवेस्तर्ककौशलं विषयप्रतिपादनपाटवञ्चापि प्रणिभालनीयम् :—

खण्डनखाद्यकृता हर्षेण वितण्डाकथां लक्ष्यीकृत्य तद्दुर्निरूपोद्देशः कियच्चारुत्वेन प्रदर्शितः—"अथ सर्वासत्त्वे, सदसत्पक्षदोषाणामप्यसत्त्वाद् अनिर्वचनीयताऽप्यसती स्यादिति चेत्, न वयं पर्यनुयोज्याः, साऽपि कृत्स्नप्रपञ्चपरसर्वशब्दाभिधेयमध्यविनिविष्टैव। परस्यैव तु व्यवस्थाया एवं पर्यवस्यति निर्वचनप्रतिक्षेपादनिर्वचनीयत्वम्। विधिनिषेधयोरेकतरनिरासस्येतरपर्यवसितायास्तेनाऽभ्युपेतत्वात्। ततः परकीयरीत्येदमुच्यते—अनिर्वचनीयत्वं विश्वस्य पर्यवस्यतीति। वस्तुतस्तु वयं प्रपञ्चसत्यत्वव्यवस्थापनविनिवृत्ताः स्वतःसिद्धे चिदात्मनि ब्रह्मतत्त्वे केवलं भरमवलम्ब्य चरितार्थाः सुखमास्महे। ये तु स्वपरिकल्पितसाधनं दूषणव्यवस्थया विचारमवतार्य तत्त्वं निर्णेतुमिच्छन्ति तान् प्रति ब्रूमः कृपया तेषां भ्रांतिमपनेतुं तेऽपि कृतार्था भवन्त्विति न साध्वी भवतां विचारव्यवस्था। भवत्कल्पितव्यवस्थयैव व्याहतत्वादिति। अतएव अस्मदुपन्यस्यमानदूषणस्थितिविषयाः पर्यनुयोगाः निरवकाशाः त्वद्व्यवस्थयव तद्व्यवस्थाया व्याहतत्वोपन्यासात्।" इति अनेन सन्दर्भेण स्वपक्षस्थापनाहीनां परपक्षविदलनमात्रावसानां वितण्डामाश्रित्यानिर्वचनीयताया उद्देशः परानुग्रह इति ध्वनितं भवति। इति दिक्।

—०—

# शिवस्वामी

महाकविः शिवस्वामी काव्यकलाकारेषु किमपि महनीयं पदमलङ्करोति। कविरयं जन्मना काश्मीरान् विभूषयामास। जनकोऽस्य भट्टारकः स्वामी। राजतरङ्गिण्याः पर्यालोचनेनावगतं भवति यत् काश्मीराधिपतेः अवन्तिवर्मणः साम्राज्यकालेऽस्याविर्भावोऽभवत्। यद्यपि स्वयमयं शैवमतावलम्बी आसीत् परं पश्चात् चन्द्रमित्राख्यस्य बौद्धाचार्यस्य प्रभावात् प्रेरणया चानेन बौद्धसाहित्यस्य अध्ययनं प्रसारश्च कृतः।

ऋैस्त १८९३ तमेऽब्दे अस्य 'कपिफणाभ्युदयस्य' प्रसिद्धकाव्यस्य प्रकाशनं सर्वतः प्राग् विद्वद्वरगौरीशङ्करमहोदयेन पाञ्चालीयविश्वविद्यालयद्वारा व्यधायि।

अस्य काव्यशैली अतिरमणीया। प्रौढोक्तिः, गाढपदबन्धः, चित्रकाव्यरचना चास्य वैशिष्टचम्। तथा चोक्तं केनचित्कविना :—

प्रौढोक्त्या गाढबन्धेन, चित्रकाव्यचमत्कृतैः।
ध्रुवं कविमदं धुन्वन् शिवस्वामी स्वयं बभौ॥

राज्ञोऽवन्तिवर्मणः काल एवास्य कालोऽवधार्यते। शिवस्वामी, आनन्दवर्धनः, रत्नाकरश्च सर्वेऽमी कवयः समसामयिका एव।

मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः।
प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः॥

वस्तुतः काश्मीरस्येतिहासे कालोऽयं साहित्यकलादृशा स्वर्णयुग एव प्रख्यायते।

यद्यपि मध्यकाले शिवस्वामिनोऽस्य काव्यनिचयो विस्मृतिपथं गतोऽभवत्, परन्तु यत्र-तत्र सुभाषितग्रन्थेषु अस्योद्धरणदर्शनम् कवेरस्य प्रसिद्धिं, गौरवं, प्रतिष्ठाञ्च सूचयति।

मम्मटाचार्येण ध्वनिं व्यावृण्वता तदुदाहरणत्वेन शिवस्वामिन एव श्लोकांश उद्धृत :— 'उल्लासकालकरवालमहाम्बुवाहम्।' इति।

कपिफणाभ्युदयाख्यं महाकाव्यं विंशतिसर्गैरुपनिबद्धम्। अत्र हि दक्षिणजनपदाधिपतिना कपिफणाख्यनृपेण श्रावस्तीनृपो युद्धे पराजितः। पराजितेन प्रसेन-

जिता भगवतो बुद्धदेवस्याराधना कृता। तद्भक्तिप्रसन्नेन बुद्धेन स्वयमाविर्भूय स कपिफणः पराजितः। इत्येवमात्रं कथावस्तु। परन्तु काव्यालङ्करणार्थं मलयपर्वत-षड्ऋतु-कुसुमावचय-जलक्रीडा-सूर्यास्त-चन्द्रोदयादिवर्णनमतिनैपुण्येन कृतम्। तत्र अष्टादशतमे सर्गे चित्रकाव्यं विरचितम्। एकोनविंशतितमे च भगवतो बुद्धस्योपदेशा अतीव मार्मिकैः शान्तरससंप्लुतैः विविधपद्यैर्निबद्धाः। प्रत्येकस्य सर्गस्यान्ते च 'शिव'पदं सन्निवेशितम्। तावता काव्यमिदं 'शिवाङ्ककाव्य'नाम्ना प्रथितम्।

नाऽत्र मात्रयाऽपि सन्देहलेशः यदनेन कविपुङ्गवेन स्वप्रतिभाप्रभावेण बौद्धसाहित्यमनुप्राणितमिवाकारि। अनेन कालिदास-भर्तृमेण्ठ-दण्डिप्रभृतिमहाकवि-काव्यानामनुशीलनं गाढतया कृतमवभाति। यथा चायं स्वयमेव व्याजहारः—

विदितबहुकथार्थश्चित्रकाव्योपदेष्टा,
यमककविरगम्यश्चारुसन्दानमानी ।
अनुकृतरघुकारोऽभ्यस्तमेण्ठप्रचारो,
जयति कविरुदारो दण्डिदण्डः शिवाङ्कः ॥२०।४७॥

अस्य कमनीयकाव्यकलाऽपि प्रणिभालनीया। सूर्यास्तं वर्णयन्नाह :—

प्रणतिपरायणा परिकलय्य दिनापचये,
परिणतिमीयिवांसमभिसन्ध्यमशीतकरम् ।
करपुटकुड्मलानि नियमेन दधे जनता,
नहि महतां क्षयेऽपि गुणगौरवमेति हतिम् ॥११।१८॥

ऋतुवर्णनमपि खल्वस्य हृदयावर्जकम् :—

'नवकदम्बकदम्बकसन्तत-प्रसवनीयवनीयकषट्पदः ।
अकृततोयततो यशसे नगो भुवि भुजङ्गभुजङ्गलितापदम् ॥८।३६॥

प्रववृते परितः परिचुम्बितुं कुमुदकाननमुन्मदरागवत् ।
शिशिररश्मिमुखेन शरत् प्रिया विलसदंशुसदंशुकशोभिना ॥८।४२॥

—०—

# पद्मगुप्तः

(क्रैस्त १०००)

पद्मगुप्तनामाऽयं महाकविः परिमलनाम्नाऽपि स्मर्यते। केचिदमुमभिनवकालिदास इत्यपि वदन्ति। कविरेष धारानगर्यां महाराजभोजराजस्य पितृव्यचरणवाक्पतिराजदेवस्य सभापण्डित आसीत्। पञ्चत्वं गते हि वाक्पतिराजदेवे भोजराजस्य जनकः सिन्धुराजो धारानगर्यां राज्यपदेऽभिषिक्तः। सिन्धुराजोऽयं कुमारनारायण इत्यपरनाम्ना प्रसिद्धः 'नवसाहसाङ्क' इत्युपाधिना विभूषितः।

कविवरेण पद्मगुप्तेन सिन्धराजमुद्दिश्य नवसाहसाङ्कचरिताख्यं महाकाव्यं प्राणायि। एतत्काव्यपर्यालोचनेन अस्य कवेः काव्यकलाकौशलं, प्रौढा च रचनाचातुरी व्यक्तीभवति। पद्मगुप्तोऽयं एकादशशताब्द्यां जातः सम्भाव्यते। सुभाषितादिग्रन्थेषु बहवस्तादृशाः श्लोकाः पद्मगुप्तकृतित्वेनोपलभ्यन्ते ये 'नवसाहसाङ्क'काव्ये न दृग्गोचरीभवन्ति। तेनानुमीयते यदन्येऽपि केचन सन्दर्भा अनेन विरचिताः स्युरिति। परन्त्वद्यत्वे ते नोपलभ्यन्ते।

काव्यमिदं अष्टादशसर्गैरुपनिबद्धं विभिन्नछन्दोभिर्गुम्फितैः १५०० मितैः श्लोकैः संवलितम्। पद्मगुप्तस्य काव्यशैली वैदर्भीविभूषिताऽतीव मनोहरा। कविरयं कविकुलगुरोः कालिदासस्य सरणिमनुहरति भूम्ना।

नवसाहसाङ्कचरितस्य रचना खृस्ते १००५ तमे शतके सम्पन्ना। राजा सिन्धुराजो नागानां महारिपुं वज्राङ्कुशनामानं नृपं पराजित्य नागराजशङ्खपालस्य राजकुमारीं शशिप्रभामुपयेमे। तद्वर्णनं कवित्वपूर्णं विधाय राज्ञो विशदं चरित्रं समुट्टङ्कितम्। अस्य काव्यरसोऽपि रसिकैरास्वादनीयः :—

एवं निसर्गमधुरेण सुधारसैकनिष्यन्दिना फणिवधूरथवा हसन्ती।
चन्द्रांशुना कुमुदिनीव दिनोष्मतप्ता हीनक्लमा नरपतेर्वचसा बभूव॥

परस्परस्पर्द्धि विलाससम्पदा त्रयं भवत्स्वामितया विकल्प्यते।
मरुत्वतो वा रमणी रमाऽथवा कलत्रमर्द्धेन्दुविभूषणस्य वा॥

नूनमस्य काव्यकला प्रशंसनीया भवति, अलङ्कारपूर्णा च। विषमालङ्कारं कियत्सौन्दयणोपनिबध्नाति :—

सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा।
तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोक्याभरणं प्रसूते॥

भोजराजस्य सरस्वतीकण्ठाभरणे, क्षेमेन्द्रस्यौचित्यचर्चायां, मम्मटस्य काव्यप्रकाशे, वर्धमानस्य गणरत्नमहोदधौ च पद्मगुप्तस्य पद्यानामुल्लेख एवास्य कविपुङ्गवत्वं ग्राहयति।

—०—

## पाजकः पण्डितराजः

कविवरोऽयं कुत्रत्यः कदा चाऽभूदिति सर्वमविदितमेवाद्यावधि। परमस्य काव्यकलाऽतीव मनोज्ञा हृदयङ्गमा चेति बहुत्र सुभाषितग्रन्थोद्धृतैरस्य पद्यैः सुतरामवगतं भवति। कविवरोऽयमन्योक्तिकुशलः वक्रोक्तिपण्डितश्च। तद्यथा—

कथं स दन्तरहितः सूर्यः सूरिभिरुच्यते।
यो मीनराशिं भुक्त्वैव मेषं भोक्तुं समुद्यतः॥

क्व क्रीडति क्व चरति क्व करोति वृत्तिं,
वारि क्व नाम पिबति स्वपिति क्व नाम।
इत्थं मृगं निपराधमबाधमानं,
व्याधोऽनुधावति वधाय धनुर्दधानः।

हेमकार ! सुधिये नमोऽस्तु ते, दुस्तरेषु बहुशः परीक्षितुम्।
काञ्चनाभरणमश्मना समं यत्त्वयैतदधिरोप्यते तुलाम्॥

सन्धिविग्रहकालज्ञः कृतकृत्योऽपि पाणिनिः।
परप्रत्ययकारीति भवता नोपमीयते॥

उपसर्गाः क्रियायोगे पाणिनेरिति सम्मतम्।
निष्क्रियोऽपि तवारातिः सोपसर्गः सतां कथम्॥

तव शत्रुश्च भवाँश्चैव द्वयं व्याकरणायते।
स निपातोपसर्गाभ्यां त्वं गुणागमवृद्धिभिः॥

असत्कविप्रणीतानां श्लोकानामिव ते द्विषाम्।
क्लिष्टार्थसन्धिवृत्तीनां निपाताः स्युः पदे पदे॥

प्रायेण सर्वं पश्यन्ति विपरीतं विनश्वराः।
यत्त्वं काञ्चनगौरोऽपि काल एवासि विद्विषाम्॥

त्वया सह विरुद्धानां कुतः कुशलता कुले।
वासो हि नियतं तेषां वने कुश-लताऽऽकुले॥

विरोधात्तव शत्रूणां ज्ञातं सौगत-दर्शनम्।
विग्रहेण क्षणभङ्गित्वं सर्वाङ्गेषु च शून्यता॥

वाराणस्यामसीवारा नीवाराशनसुस्थितेः ।
नवाऽऽरामनिषण्णस्य वाराः स्नातस्य यान्तु मे ॥

लक्ष्मीपङ्ककलङ्किताः परिमितक्ष्माखण्डपिण्डीभुजो,
गर्वग्रन्थिविसंस्थुलैरवयवैर्नेपथ्यकन्थाभृतः ।
एते कीदृश ईश्वराः कुपतयः किं वाऽनया चार्चया,
यस्त्रैलोक्यविलक्षणः फलतु नः सत्यं स एवेश्वरः ॥

स्वजनवसतेर्निःसृत्याराच्छलेन बलेन वा,
लघु विरचयन् गेहं भूमेस्तलेन दलेन वा।
विदधदतुलं प्राणत्राणं फलेन जलेन वा,
वनभुवि कदा स्यां शून्योऽहं मलेन खलेन वा ॥

पूजापद्मपरम्परापुलकितौ पार्ष्ण्योः परं पेलवौ,
पुण्यौ पातकिपापपाटनपटू पृथ्वीं प्रपन्नौ प्रथाम् ।
प्रायः पर्वतपुत्रिकापृथुपटैः पस्त्ये पुरा पूरितौ,
पादौ पण्डितपाजकः पशुपतेः प्रीत्या पुरः पश्यतु ॥

---o---

# पण्डितराजः जगन्नाथः

(१६६०-१६८०)

१--परिचयः, २--पण्डितराजपदवी, ३--पण्डितराजस्य ग्रन्थाः, ४--पण्डितराजस्य काव्यकला ।

## परिचयः

कवित्वकलायां पण्डितराजो जगन्नाथः कालिदासं विहाय अखिलानितरान् कवीश्वरानतिशेते इति ऐकमत्येनाभिमन्यन्ते मार्मिकाः सर्वेऽपि काव्यरसिकाः । स कदाऽभूत् कतमञ्च भूभागं स्वजनुषा विभूषयामास, इत्यत्र यद्यपि मतानि भूम्ना भिद्यन्ते, तथाऽपि पण्डितराजः क्रैस्तीयसप्तदशतमाब्द्यां विराजते स्मेत्यपेतशङ्कम् । तद्विषये एतावन्तः प्रवादाः प्रचरन्ति यत्तेषु सत्यासत्यनिर्णयोऽतिदुष्करः, तदुपपत्तिसाधनाऽसौलभ्यात् । केचन व्यवतिष्ठन्ते यज्जगन्नाथः तैलङ्गदेशादागतः जयपुरे च तेन काचित् पाठशाला संस्थापिता । एकदा कश्चित् काज़ी जयपुरे जयपुरनिवासिनोऽखिलान् पण्डितांश्च शास्त्रार्थमाहूतवान् । काज़ीमहोदयस्याह्वानमूरीकर्त्तुं न कोऽप्यन्यः शशाक पण्डितराजं विहाय । जगन्नाथेनैव मुस्लिमधर्मपुस्तकान्यधीत्य स काज़ी चतुरस्रतया पराजितः । निशम्य वृत्तान्तमिदं दिल्लीनृपः जगन्नाथमाहूय तस्मै राज्याश्रयं प्रदत्तवान् । दिल्ल्यां निवसन् स कस्याश्चिन्मुस्लिमकन्यायाः[1]

---

१. प्रचरति च अस्मिन् विषये एका दन्तकथा यदेकदा पण्डितराजः शाहजहानेन सह शतरञ्जनमाक्रीडन्नासीत् तदा पिपासार्त्तो जलं ययाचे । काचिल्लवङ्गीनाम्नी कन्या सलिलपूर्णं स्वर्णकलशं शिरसि न्यस्य तत्रायाता । तस्याः सौन्दर्यमनुपमं लावण्यञ्च ससङ्केतमुद्दिश्य नृपतिः पण्डितराजमुवाच, कवे ! वर्णय तावदस्या लावण्यलुलितां रूपसम्पत्तिम् । सोऽपि सस्मेरं तां वर्णयन्नाह :--

इयं सुस्तनी मस्तकन्यस्तकुम्भा कुसुम्भारुणं चारु चेलं वसाना ।
समस्तस्य लोकस्य चेतःप्रवृत्तिं गृहीत्वा घटं न्यस्य यातीव भाति ।।

पद्यमिदमाकर्ण्य शाहजहानः अतितरां प्रसीदन्नाह, कवे ! वर्णनं नितरां हृदयाह्लादि तावद्, वृणु यथेच्छं पुरस्कारम् । पण्डितराजोऽपि पुरस्काररूपेण वृणान आह :--

प्रणयपाशे निपतितः। परिणीता च सा तेन, तया सह विहरता च नवीनं वयस्तत्रैव व्यतिवाहितम्—"दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः!' इति। वार्द्धक्ये च पुनः स वाराणसीङ्गतः यत्र पण्डितैः स खलु सापमानं जातिबहिष्कृतः तिरस्कृतश्च बहुशः तस्य यवनजासम्पर्कपरिभ्रष्टत्वात्। ततोऽतीव विषण्णखिन्नमनाः स गङ्गातटं गतः, गङ्गाप्रशस्तिमुपश्लोकयितुञ्चारेभे, सोपान आसन्नो निर्विण्णः। प्रशस्तिप्रपञ्चेनास्य भगवती भागीरथी अपि प्रसन्नतां गता। प्रतिश्लोकमेकैकं सोपानं प्रवाहपूरेणाप्लावयन्ती द्विपञ्चाशन्मितां सोपानपरम्परामाप्लाव्यान्ततः पण्डितराजमपि निजाङ्कमगनञ्चकारेति। सेयमनवद्यपद्यावली 'गङ्गालहरी'ति नाम्ना प्रसिद्धिं गता द्विपञ्चाशच्छन्दोभिर्निबद्धेति।

अपरेऽत्र किञ्चिद्विप्रतिपद्यन्ते। ते कथयन्ति यत् स गङ्गारोधसि गङ्गमाराधमानः प्रावृषेण्यवारां प्रपूरप्रवाहपतितो निममज्जेति।

पण्डितराजो जगन्नाथः स्वयमेवात्मानं परिचाययति प्राणाभरणे—

तैलङ्गान्वयमङ्गलालय-महालक्ष्मीदयालालितः,
श्रीमत्पेरमभट्टसूनुरनिशं विद्वल्ललाटन्तपः॥

---

न याचे गजालिं न वा वाजिराजिं, न वित्तेषु सक्तिर्मदीया कदाचित्।
इयं सुस्तनी मस्तकन्यस्तकुम्भा लवङ्गी कुरङ्गीदृगङ्गीकरोतु॥

अपि च :—

यवनी नवनीतकोमलाङ्गी शयनीये यदि लभ्यते कदाचित्।
अवनीतलमेव साधु मन्ये न वनी माघवनी विलासहेतुः॥

इति निशम्य निर्वर्ण्य च निपुणं कन्या सा दिल्लीश्वरेण शाहजहानेन पण्डितराजाय सहर्षं पुरस्कृता।

यदा लवङ्गिका दुर्दैववशादतर्कोपनतात् सहसा रुग्णतां गता सती पण्डितराजं परित्यज्य यमराजमालिलिङ्ग, तदा स वराकः अनभ्रवज्रपातममुमसहिष्णुर्बाष्पगद्गदं विललाप :—

लूनं मत्तमतङ्गजैः कियदपि च्छिन्नं तुषारार्दितैः,
शिष्टं ग्रीष्मजभानुतीक्ष्णकिरणैर्भस्मीकृतं काननम्॥
एषा कोणगता मुहुः परिमलैरामोदयन्ती दिशो,
हा कष्टं ललिता लवङ्गलतिका दावाग्निना दह्यते॥

स्वर्गगतां लवङ्गीमुपालम्भयति मर्मभेदिभिः पद्यविन्यासैः—

निर्वाणमङ्गलपदं त्वरया विशन्त्या मुक्ता दयावति! दयापि किल त्वयाऽसौ।
यन्मां न भामिनि! निभालयसि प्रभातनीलारविन्दमदभङ्गिमदैः कटाक्षैः॥

सन्तुष्टः कमलाधिपस्य कवितामाकर्ण्य तद्वर्णनम्,
श्रीमत्पण्डितराजपण्डितजगन्नाथो व्यधासीदिदम् ।।
[प्राणाभरणे ५२]

## पण्डितराजपदवी

पण्डितराजपदवी चानेन दिल्ल्यधिपतेः शाहजहानप्रसादाल्लब्धेति तल्लेखेनैव विज्ञाप्यते। तथाहि :—

"मूर्त्तिमतेव नवाबासफखानस्य प्रसादेन द्विजकुलसेवाहेवाकिवाङ्मनःकायेन माथुरकुलसमुद्रेन्दुना रायमुकुन्देनादिष्टेन सार्वभौमश्रीशाहजहानप्रसादाधिगतपण्डितराजपदवीविराजितेन तैलङ्गकुलावतंसेन पण्डितजगन्नाथेनासफविलासाख्येयमाख्यायिका निरमीयत।"

पण्डितराजेन वर्णितो दाराशाहोऽस्यैव शाहजहानमहीभुजो ज्येष्ठः सूनुरासीदिति तु सुविदितमेव।

अलङ्कारालङ्कारभूते स्वविरचिते रसगङ्गाधरे च स स्वकीयगुरुगणमपि गणयति :—

श्रीमज्ज्ञानेन्द्रभिक्षोरधिगतसकलब्रह्मविद्याप्रपञ्चः,
काणादीराक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत्।
देवादेवाध्यगीष्ट स्मरहरनगरे शासनं जैमिनीयम्,
शेषाङ्कप्राप्तशेषामलभणितिरभूत्सर्वविद्याधरो यः ।।

पाषाणादपि पीयूषं स्यन्दन्ते यस्य लीलया।
तं वन्दे पेरुभट्टाख्यं लक्ष्मीकान्तं महागुरुम् ।।

पेरुभट्टोऽस्य जनकः जननी च लक्ष्मी देवीति।

वाग्देवताराधनप्रसादाद् यो वरो लब्धः सोऽधोऽङ्कितपद्ये निबद्धः :—

आकुरुदेशं विचरेर्मा कुरु परवादनिर्जये शङ्काम्।
स्वीकुरु वरमेकं मे व्याकुरु भो वत्स शास्त्राणि ।। इति।।

एतद्वरप्रसादेन जगन्नाथः अतितरां प्रसिद्धिं गतः। एकदा तस्य ख्यातिं श्रवणविषयीकृत्य दिल्लीश्वरस्तं निमन्त्रितवान् दिल्लीमलङ्कर्त्तुं निजागमनेन। परं स तदुत्तरे निम्नाङ्कितं पद्यं प्रेषितवान् स्वयं न गतवान् :—

शीतार्ता इव संकुचन्ति दिवसा नैवाम्बरं शर्वरी,
शीघ्रं मज्जति किञ्च हुतभुक्कोणङ्गतो भास्करः।
त्वञ्चानङ्गहुताशभाजि हृदये सीमन्तनीनां गतः,
नास्माकं वसनं न वा युवतयः कुत्र व्रजामो वयम् ।।

अनेन पद्येनैतत्त्वनुमीयते यदा जगन्नाथः दिल्लीङ्गतः तदाऽविवाहितोऽभूदिति। शाहजहानशासनकाले च स विराजते स्म राजसंसदि। शाहजहानसाम्राज्यसमयश्च खृैतसप्तदशशतकदेशीयः। एष एव समयः पण्डितराजस्यापीति निश्चितम्।

## पण्डितराजस्य ग्रन्थाः

(१) पीयूषलहरी—गङ्गालहरीति वा, द्विपञ्चाशत्पद्यैर्निबद्धा अतिमाधुर्यसंभृता मनोहरा च गङ्गाप्रशस्तिमभिलक्ष्य प्रणीता।

(२) सुधालहरी—द्वात्रिंशत्पद्यैरलङ्कृता सूर्यप्रशस्तिमालम्ब्य रचिता।

(३) अमृतलहरी—यमुनाप्रशस्तिमुद्दिश्य केवलमेकादशश्लोकैर्गुम्फिता लघुनिकाया।

(४) करुणालहरी—चतुःषष्टिपद्यैरलङ्कृता विष्णुदेवप्रशस्तौ विरचिता।

(५) लक्ष्मीलहरी—एकचत्वारिंशत्पद्यबद्धा लक्ष्मीप्रशंसायां प्रणीता।

(६) यमुना (गद्यात्मिका)—न सम्प्रति लब्धप्रचारा। रसगङ्गाधरेऽस्या उद्धरणद्वयमुपलभ्यते केवलम् :—

तनयमैनाकगवेषणालम्बीकृतजलधि-जठरप्रविष्टहिमगिरिभुजायमानाया भगवत्या भारत्याः सखी" इति।

किञ्च, "रविकुलप्रीतिमावहन्ती नरविकुलप्रीतिमावहति। अवारितप्रवाह -सुवारितप्रवाहा" इति।

(७) आसफविलासः—आसफखानस्य प्रशंसायामुपनिबद्धः।

(८) प्राणाभरणम्—कामरूपाधिपतेः प्रशंसायां त्रिपञ्चाशत्पद्यात्मको निबन्धः।

(९) जगदाभरणम्—उदयपुरमहाराजस्य राणाकर्णसिंहस्य सूनोः राजकुमारजगत्सिंहस्य प्रशंसायां विरचितम्, इति तदन्तिमश्लोक[1] पर्यालोचनादवगम्यते।

---

१. श्रीराणाकलिकर्णनन्दनजगत्सिंहप्रभो र्वर्णनम्,
श्रीमत्पण्डितराजसत्कविजगन्नाथो व्यतानीदिदम् ॥

इति महामहोपाध्यायपदवाक्यप्रमाणपारावारीणतैलङ्गकुलावतंसश्रीपेरमभट्टसूरेस्तनयेन विनिर्मितं जगदाभरणाख्यं जगत्सिंहवर्णनम्।

(१०) चित्रमीमांसाखण्डनम्—श्रीअप्पयदीक्षितविरचितस्य चित्रमीमांसाख्यग्रन्थस्य खण्डनरूपम् ।

(११) मनोरमाकुचमर्दनम्—सिद्धान्तकौमुदीटीकात्मकस्य स्वयं भट्टोजिदीक्षितविरचितस्य मनोरमाख्यव्याकरणग्रन्थस्य खण्डनरूपम् ।

(१२) रसगङ्गाधरः—श्रीजगन्नाथविरचितोऽपूर्णो ग्रन्थः, पण्डितराजस्य साहित्यमार्मिकतायाः, तर्ककौशलस्य, विचारचारुतायाः,अलङ्कारशास्त्रप्रावीण्यस्य च परिद्योतकोऽपूर्वो ग्रन्थः। यत्र कवितल्लजेनामुनोदाहरणान्यपि स्वरचितान्येव प्रदत्तानि । उक्तञ्च तत्रैव रसगङ्गाधरे :—

निर्माय नूतनमुदाहरणानुरूपं काव्यं मयाऽत्र निहितं न परस्य किञ्चित् ।
किं सेव्यते सुमनसां मनसाऽपि गन्धः कस्तूरिकाजननशक्तिभृता मृगेण ॥

(१३) भामिनी-विलासः—एतदन्तर्गता विषयाः खलु, प्रस्तावविलासः, शृङ्गारविलासः, करुणाविलासः, शान्तविलासः, अन्योक्तिमुक्तालता चेति ।

इमे चास्य प्रसिद्धा ग्रन्थाः, ये ह्यस्यालङ्कारोदाहरणानां महारत्नखनिरूपा एव विभाव्यन्ते। प्रायशः रसगङ्गाधरे उदाहरणत्वेन समुद्धृता श्लोका एभ्य एव ग्रन्थेभ्यो गृहीताः।

## पण्डितराजस्य काव्यकला

पण्डितराजस्यान्योक्तयः गर्वोक्तयश्चातीव प्रसिद्धाः सहृदयहृदयाह्लादिकाश्च काव्यकलाविलासपुरस्सरं भाववैचित्र्यचित्रितत्वाद् विद्वज्जनानां कण्ठाभरणतां याताः श्रवणयोः पीयूषरसनिष्यन्दिन्योऽनन्यसामान्यरूपेण समुल्लसन्ति । तद्यथा :—

धुर्यैरपि माधुर्यैर्द्राक्षाक्षीरेक्षुमाक्षिकसुधानाम् ।
वन्द्यैव माधुरीयं पण्डितराजस्य कवितायाः ॥

कमलिनी मलिनीकरोति चेतः, किमिति बकैरवहेलिताऽनभिज्ञैः ।
परिणतमकरन्दमार्मिकास्ते जगति भवन्तु चिरायुषो मिलिन्दाः ॥
[भामिनी० प्रस्ता० वि० ८]

हे कवे विद्वन् ! यदि अरसिकास्तवानादरं कुर्वन्ति तर्हि विषादो न विधेयः । कुर्वन्तु नाम ते मूर्खाः । मर्मज्ञा रसिका चिरायुषो भवन्तु, ये तवादरं करिष्यन्ति

सर्वदा । मूर्खाणामादरेणापि किमिति भावः, मूर्खजनकृत आदरो निरादरादपि निकृष्टतर इति भावः ।

पाटीर तव पटीयान् कः परिपाटीमिमामुरीकर्त्तुम् ।
यत्पिषतामपि नृणां पिष्टोऽपि तनोषि परिमलैः पुष्टिम् ॥

नीरक्षीरविवेके हंसालस्यं त्वमेव तनुषे चेत् ।
विश्वस्मिन्नधुनाऽन्यः कुलव्रतं पालयिष्यति कः ॥

आपेदिरेऽम्बरपथं परितः पतङ्गाः,
भृङ्गा रसालमुकुलानि समाश्रयन्ति ।
सङ्कोचमञ्चति सरस्त्वयि दीनदीनो,
मीनो नु हन्त कतमां गतिमभ्युपैतु ॥

क्षीणवित्ते राजनि उपसेवका तं परित्यज्य गच्छन्ति । तन्मात्रालम्बिनस्तदनुरक्ता जनाः क्व यान्तु नामेति भावः ।

किं खलु रत्नैरेतैः किं पुनरभ्रायितेन वपुषा ते ।
सलिलमपि यन्न तावकमर्णव ! वदनं प्रयाति तृषितानाम् ॥

हालाहलं खलु पिपासति कौतुकेन,
कालानलं परिचुचुम्बिषति प्रकामम् ।
व्यालाधिपं च यतते परिरब्धुमद्धा,
यो दुर्जनं वशयितुं तनुते मनीषाम् ॥

लीलालुण्ठितशारदा पुरमहासंपद्भराणां पुरो,
विद्यासद्मविनिर्गलत्कणमुषो वल्गन्ति चेत्पामराः ।
अद्यश्वः फणिनां शकुन्तशिशवो दन्तावलानां शशाः,
सिंहानां च सुखेन मूर्धसु पदं धास्यन्ति शालावृकाः ॥

किञ्च--

कस्मादिन्दुरसौ धिनोति जगतीं पीयूषगर्भैः करैः,
कस्माद्वा जलधारयैष धरणीं धाराधरैः सिञ्चति ।
भ्रामं भ्राममयं च नन्दयति वा कस्मात् त्रिलोकीं रविः,
साधूनां हि परोपकारकरणे नोपाध्यपेक्षं मनः ॥

येन शैशवपदे मदेभराड्गण्डसीम नखरैर्विखण्डितम् ।
यौवनोत्सवमवाप्य केसरी केषु दर्शयतु सोऽद्य पौरुषम् ।

येनाप्तः कमलाविलासकमले किञ्जल्कपानोत्सवो,
यो लीलां वितनोति नाभिनलिनोत्सङ्गे तथा शार्ङ्गिणः।
तस्य स्यात्कुसुमान्तरे मधुलिहः कुत्राऽप्यहो न स्थिति-
न प्रीतिर्न रतिर्न केलिसमयो नो विस्मयो न स्मयः॥

मद्वाणि! मा कुरु विषादमनादरेण,
मात्सर्यमग्नमनसां[1] सहसा खलानाम्।
काव्यारविन्द–मकरन्द–मधुव्रताना-
मास्येषु धास्यसितमां कियतो विलासान्॥

अपि च:—

मधु द्राक्षा साक्षादमृतमथ वामाधरसुधा,
कदाचित्केषाञ्चिन्न खलु विदधीरन्नपि मुदम्।
ध्रुवं ते जीवन्तोऽप्यहह मृतका मन्दमतयो,
न येषामानन्दं जनयति जगन्नाथभणितिः॥

'अन्या जगद्धितमयी मनसः प्रवृत्ति-
रन्यैव कापि रचना वचनावलीनाम्।
लोकोत्तरा च कृतिराकृतिरार्त्तहृद्या,
विद्यावतां सकलमेव गिरां दवीयः॥

स्थितिं नो रे दध्याः क्षणमपि मदान्धेक्षण सखे!
गजश्रेणीनाथ! त्वमिह जटिलायां वनभुवि।
असौ कुम्भिभ्रान्त्या खरनखरविद्रावितमहा-
गुरुग्रावग्रामः स्वपिति गिरिगर्भे हरिपतिः॥

प्रारम्भे कुसुमाकरस्य परितो यस्योल्लसन्मञ्जरी-
पुञ्जे मञ्जुलगुञ्जितानि रचयंस्तानातनोरुत्सवान्।
तस्मिन्नद्य रसालशाखिनि कृशां दैवाद्दशामञ्चति,
त्वञ्चेन्मुञ्चसि चञ्चरीक! विनयं नीचस्त्वदन्योऽस्ति कः॥

पुरा सरसि मानसे विकचसारसालिस्खल-
त्परागसुरभीकृते पयसि यस्य यातं वयः।
स पल्वलजले मिलदनेकभेकाकुले
मरालकुलनायकः कथय रे कथं वर्त्तताम्॥

---

१. पद्येऽस्मिन् वहवः पाठभेदाः। यथा 'मात्सर्यमन्दमनसाम्, मात्सर्यभुग्नमनसाम्; धास्यतितमाम्, यास्यतितमाम्; विपुलं, विलासम्; तरसा, सहसा; कियतो, कति नो।

दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः,
करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः।
इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं,
नखानां पाण्डित्यं प्रकटयतु कस्मिन्मृगपतिः॥

गर्वोक्तिरप्यस्य प्रणिभालनीया––

गिरां देवी वीणागुणरणनहीनादरकरा,
यदीयानां वाचाममृतमयमाचामति रसम्।
वचस्तस्याकर्ण्य श्रवणसुभगं पण्डितपते-
रधुन्वन्मूर्धानं नृपशुरथवायं पशुपतिः॥

शास्त्राण्याकलितानि नित्यविधयः सर्वेऽपि सम्भाविता,
दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः।
सम्प्रत्युज्झितवासनं मधुपुरीमध्ये हरिः सेव्यते,
सर्वं पण्डितराजराजितिलकेनाकारि लोकाधिकम्॥ इति॥

गीतिकाव्यप्रणेतृषु कविवरजयदेवादनु[1] पण्डितराजस्यैवाभिधानं श्रवणपथमवतरति। यद्यपि बहुशोऽनेन स्वरचनासु गीतिरेवोपलालिता, तथाऽपि तासु भामिनीविलासः शेखरायते। अत्र मुक्तकाख्यानां गीतिपद्यानां चारुतरः सन्निवेशः। ग्रन्थोऽयं प्रास्ताविकशृङ्गारकरुणशान्तेति चतुर्भिः प्रकरणैः प्रणिबद्धो लोकानां निरतिशयां प्रीतिमुपजनयति। भर्तृहरिवत् पण्डितराजस्यापि शैली अतीव मनोज्ञा, भाषा प्राञ्जला, प्रौढ़ः पदविन्यासः, चमत्कारी च भावभङ्गिमा।

तीरे तरुण्या वदनं सहासं
नीरे सरोजञ्च मिलद्विकासम्।
आलोक्य धावन्त्युभयत्र मुग्धा
मरन्दलुब्धालिकिशोरमालाः॥

[शृङ्गारवि० २२]

पण्डितरागस्य व्यञ्जना अतीव मार्मिकी, अनुप्रासश्चाऽपि नितरामुल्लासकरः:––

कलिन्दगिरिनन्दिनीतटसुरद्रुमालम्बिनी।
मदीयमतिचुम्बिनी भवतु काऽपि कादम्बिनी॥

---

१. अस्य स्थितिकालः क्रैस्त १६५० तमाब्दात् १६८० तमाब्दस्य मध्यघटितो विभाव्यते कालविद्भिः।

किञ्चास्य पदविन्यासोऽपि खलु लोकोत्तरः :—

आस्ये धास्यति कस्य लास्यमधुना धन्यस्य कामालसत्–
स्ववार्माऽधरमाधुरीं विधुरयन् वाचां विलासो मम ।।

तथा च—

'चुलुकयति मदीयां चेतनां चञ्चरीकः।'

नूनमस्य रचनाचातुरी तत्तद्रसानुगुण्येनापूर्वरसभरी इत्येतत्तु सुतरां करुणालहरीतोऽवबुध्यते :—

विषीदता नाथ विषानलोपम–
विषादभूमौ भवसागरे विभौ।
परं प्रतीकारमपश्यताऽधुना
मयाऽयमात्मा भवते समर्प्यते ।।

भवानलज्वालविलुप्तचेतनः,
शरण्य! तेऽङ्घ्रिं शरणं भयादयाम् ।।
विभाव्य भूयोऽपि दयासुधाम्बुधे!
विधेहि मे नाथ! तथा यथेच्छसि ।।

रमामुखाम्भोजविकासनक्षमो जगत्त्रयोद्बोधविधानदीक्षितः।
कदा मदज्ञानविभावरीं हरे हरिष्यति त्वन्नयनारुणोदयः ।।
सुरासुरस्वान्तचकोरचन्द्रिका समस्तसन्तापभयापनोदिनी।
महानिशीथे मम मानसे कदा स्फुरिष्यति त्वन्मुखचन्द्रचन्द्रिका ।।

अपि च :—

अयि दीनतरं दयानिधे, दुरवस्थं सकलैः समुज्झितम्।
अधुनापि न मां निभालयन् भजसे हा कथमश्मचित्तताम् ।।
सुमहान्ति जगन्ति बिभ्रतस्तव यो नाविरभून्मनागपि।
स कथं परमाप्तदेहिनां परमाणोर्मम धारणे श्रमः ।।
नितरां विनयेन पृच्छयते सुविचार्योत्तरमत्र यच्छ मे।
करितो गिरितोऽप्यहं गुरुस्त्वरितो नोद्धरसे यदद्य माम् ।।
न धनं न च राज्यसम्पदं न हि विद्यामिदमेकमर्थये।
मयि धेहि मनागपि प्रभो करुणाभङ्गितरङ्गितां दृशम् ।।
अयमप्यधमोऽपि निर्गुणो दयनीयो भवता दयानिधे!
वमतां फणिनां विषानलं किमु नानन्दयिता हि चन्दनः ।।

विशालविषपाटवीवलयलग्नदावानल-
प्रसृत्वरशिखावलीविकलितं मदीयं मनः।
अमन्दमिलदिन्दिरे निखिलमाधुरीमन्दिरे
मुकुन्दमुखचन्दिरे चिरमिदं चकोरायताम्॥

अस्य गङ्गालहरीनाम्नी सुप्रख्याता रचना तु सुमधुरातिललितपदाऽलङ्कृतत्वेन सर्वानितरान् गीतिसन्दर्भानतिशेते, इत्यत्र तु कः सन्देहावसरः किल।

तद्यथा :—

समृद्धं सौभाग्यं सकलवसुधायाः किमपि तत्,
महैश्वर्यं लीलाजनितजगतः खण्डपरशोः।
श्रुतीनां सर्वस्वं सुकृतमथ मूर्त्तं सुमनसां,
सुधासौन्दर्यन्ते सलिलमशिवं नः शमयतु॥

अपि प्राज्यं राज्यं तृणमिव परित्यज्य सहसा,
विलोलद्वानीरं तव जननि तीरं श्रितवताम्।
सुधातः स्वादीयः सलिलभरमातृप्ति पिबतां,
जनानामानन्दः परिहसति निर्वाणपदवीम्॥

निधानं धर्माणां किमपि च विधानं नवमुदाम्,
प्रधानं तीर्थानाममलपरिधानं त्रिजगताम्।
समाधानं बुद्धेरथ खलु तिरोधानमधियाम्,
श्रियामाधानं नः परिहरतु तापं तव वपुः॥

अहो कीदृशो मनोहरः पद्यबन्धः?

## पण्डितराजस्य पाण्डित्यम्

सकलशास्त्रावगाहिधिषणस्यास्य पण्डितराजस्य प्रकाण्डपाण्डित्यं स्वकीये चित्रमीमांसाखण्डनाख्ये ग्रन्थ श्रीअप्पयदीक्षितप्रणीतायाः चित्रमीमांसायाः कृतेन प्रचण्डखण्डनेनावबुध्यते। पण्डितराजोऽयं सदुन्दुभिनिध्वानं समुद्घोषयति :—

सूक्ष्मं विभाव्य मयका समुदीरितानाम्
अप्पय्यदीक्षितकृताविह दूषणानाम्।
निर्मत्सरो यदि समुद्धरणं विदध्यात्,
तस्याहमुज्ज्वलमतेश्चरणौ वहामि॥

पण्ड्तिराजोऽयं न केवलं साहित्य-धुरन्धरः अपितु व्याकारणशास्त्रस्यापि

पारदृश्वाऽनूचान आसीत्। तच्चैतद् भट्टोजिदीक्षितविरचितमनोरमाया मनोरमा-कुचमर्दनाख्यखण्डनग्रन्थपर्यालोचनेन ज्ञायते, तच्च शाब्दिकैस्तत्रतत्रैवानुसन्धेयम्।

## असामान्यस्तार्किकः

अस्य तार्किकचक्रवर्त्तिनः तर्कशैली खलु लोकोत्तरा। तदुदाहरणमप्येक-मत्र दीयते तार्किकानां मनःप्रसादाय। प्रखरतार्किकोऽयं प्राचां काव्यप्रकाशकारादीनां काव्यलक्षणं दूषयन्नाह :--

"यत्तु प्राञ्चः 'अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यम्' इत्याहुस्तत्र विचार्यते शब्दार्थयुगलं न काव्यशब्दवाच्यम्, मानाभावात्। काव्यमुच्चैः पठ्यते काव्यार्थोऽवगम्यते, काव्यं श्रुतम्, अर्थो न ज्ञातः, इत्यादिविश्वजनीनव्यवहारतः प्रत्युत शब्दविशेषस्यैव काव्यपदार्थप्रतिपत्तेश्च। व्यवहारः शब्दमात्रे लक्षणया उपपादनीयः इति चेत्, स्यादपि एवं, यदि काव्यपदार्थतया पराभिमते शब्दार्थ-युगले काव्यशब्दशक्तेः प्रमापकं दृढतरं किमपि प्रमाणं स्यात्। तदेव तु न पश्यामः विगतवाक्यन्तु अश्रद्धेयमेव। इत्थञ्च असति काव्यशब्दस्य शब्दार्थयुगलशक्ति-ग्राहके प्रमाणे प्रागुक्ताद् व्यवहारतः शब्दविशेषे सिद्ध्यन्तीं शक्तिं को नाम निवार-यितुमीष्टे। एतेन विनिगमनाभावाद् उभयत्र शक्तिरिति प्रत्युक्तम्। तदेवं शब्दविशेषस्यैव काव्यपदार्थत्वे सिद्धे तस्यैव लक्षणं वक्तुं युक्तम्, न तु स्वकल्पित-स्यैव काव्यपदार्थस्य।" इति दिक्।

---

# श्रीहरिचन्द्रः

श्रीहरिचन्द्रस्य स्थितिकालः अद्यापि न निश्चितो यद्यपि तथापि एतत्तु निर्विवादं यदेष प्राचीनकविषु अन्यतम आसीत्। वाक्पतिराजेन स्वीये 'गौडवहो'ऽभिधे काव्ये भासकालिदाससुबन्धुभिः सार्द्धं हरिचन्द्रस्यापि नामग्राह-मुल्लेखो विहितः :—

'आसस्मि जलणमित्ते, कन्तीदेवे अजस्स रहु आरे।
सौबन्धवे च बन्धम्मि हरियन्ते च आणन्दः।

अस्यैकस्य हस्तलेखबद्धस्य ग्रन्थस्य समयः १२८७ मितविक्रमसम्वत्सरे उल्लिखितः समुपलभ्यते। अतस्ततः पूर्वतन एवास्य स्थितिकालो भवेत्। किञ्च वाग्भटप्रणीते नेमिनिर्वाणकाव्ये 'धर्मशर्माभ्युदयस्य' प्रभावः प्रभूततयोपलभ्यते। तदेवमुक्तग्रन्थगततन्नामस्मरणात्सुतरां प्रतिपत्तुं पार्यते यद् हरिचन्द्रस्य कालः खिस्तीयैकादशतमशतकमध्यगत एव सम्भवेत्। 'सदुक्तिकर्णामृत'कारः कविवरममुं महाकवीनां श्रेणीषु प्रतिष्ठापयामास :—

'सुबन्धौ भक्तिर्नः क इह रघुकारे न रमते,
धृतिर्दाक्षीपुत्रे हरति हरिचन्द्रोऽपि हृदयम्।
विशुद्धोक्तिः सूरः प्रकृतिमधुरा भारविगिरः,
तथाप्यन्तर्मोदं कमपि भवभूतिर्वितनुते॥

तदेतावतेदं स्फुटीभवति यदेष कविवरः अतीव मेधावी लब्धप्रतिष्ठश्चाभूत् कवीन्द्रमण्डले। असौ एकं 'धर्मशर्माऽभ्युदय'न्नाम महाकाव्यमपरञ्च 'जीवनचम्पू'-समाख्यं काव्यद्वयं प्राणैषत्। धर्मशर्माभ्युदये महाकाव्ये पञ्चादशतमतीर्थङ्करस्य धर्मनाथनामधेयस्य जन्मत आरभ्य निर्वाणपर्यन्तं कथानकमुपश्लोकितम्। नून-मस्य काव्यं वैदर्भीरीतिसमन्वितं माधुर्यप्रसादगुणग्रथितं चित्रालङ्कारसमलङ्कृतं रसिकानामतीवानन्दजनकं सम्पन्नम्। तद्यथा :—

स कर्णपीयूषरसप्रवाहं, रसध्वनेरध्वनि सार्थवाहः।
श्रीधर्मशर्माभ्युदयाभिधानं, महाकविः काव्यमिदं व्यधत्त॥

महाकविमाघभारविवदसावपि चित्रालङ्कारप्रणयनप्रिय आसीदिति विभा-व्यते। यतोऽयमपि एकोनविंशतितमे सर्गे चित्रकाव्यात्मकानां पद्यानामेव महान्तं

सम्भारं समुच्चयीकरोति। यथा भारविणा चित्रकाव्यात्मके सर्गे एकः नकारात्मकः एकाक्षरीश्लोको विरचितः तथैव हरिचन्द्रेणाऽपि चतुर्वर्णात्मकः एकः श्लोकः चित्रितः। तद्यथा :—

रैरोऽरी रोरुररुत्काकुकं केकि कङ्किकः।
चञ्चच्चञ्चूचचोंचेतत्ततातीति तं ततः॥ इति॥

काव्यमिदं वैदर्भीरीतिमालम्बते, कल्पनाचारुतां बिभर्त्ति, शब्दसौष्ठवञ्च चिनुते, द्योतयति किमपि विचित्रचरित्रचित्रणचमत्कृतिम्—

"श्रव्यऽपि काव्ये रचिते विपश्चित्, कश्चित्सचेता परितोषमेति।
उत्कोरकः स्यात्तिलकः कटाक्ष्याः, कटाक्षभावैरितरे न वृक्षाः॥

निजक्रोडानुगतमात्मजं विभाव्य जनकस्य हृदि समुद्वेल्लितमपूर्वानन्दं कीदृगुपवर्णयति निसर्गतया गिरा :—

न चन्दनेन्दीवरहारयष्टयो न चन्द्ररोचींषि न चामृतच्छटाः।
सुताङ्गसंस्पर्शसुखस्य निस्तुलां कलामयन्ते खलु षोडशीमपि॥

प्रावृड्वर्णनञ्चापि दर्शनीयम् :—

खल इव द्विजराजमपि क्षिपन् दलितमित्रगणो नवकन्दलः।
अजनि कामकुतूहलिनां पुना रसमयः समयः स घनागमः॥ ११।३२॥
इह घनैर्मलिनैरपहस्तिता कुटजपुष्पवशादुडुसन्ततिः।
गिरिवने भ्रमरारवफूत्कृतैरवततार ततो रतिरम्बरात्॥ २१।३२॥

एष च हरिचन्द्रो भट्टारहरिचन्द्रतो भिन्न एव। भट्टारहरिचन्द्रो गद्यकविः, न खलु स महाकाव्यप्रणेता हरिचन्द्रः। बाणभट्टेन भट्टारहरिचन्द्रस्योल्लेखः गद्यबन्धप्रणेतृत्वेन कृतः :—

पदबन्धोज्ज्वलो हारी कृतवर्णक्रमस्थितिः।
भट्टारहरिचन्द्रस्य गद्यबन्धो नृपायते॥ इति॥

हरिचन्द्रश्चायं जैनमतावलम्बी। जैनसाहित्ये च काव्यमिदं तदेव महनीयं पदमलङ्करोति, यत्संस्कृतसाहित्ये माघकाव्यं, नैषधकाव्यं वा। हरिचन्द्रोयं जात्या कायस्थः नोमकाख्यवंशोत्पन्नः। जनकोऽस्यार्द्रदेवो जननी च रथ्यादेवीनाम्नी विदुषी। स्वकाव्यप्रशंसायामसौ स्थान एवोपन्यस्यति :—

स कर्णपीयूषरसप्रवाहं रसध्वनेरध्वनि सार्थवाहः।
श्रीधर्मशर्माभ्युदयाभिधानं महाकविः काव्यमिदं व्यधत्त॥

# महामुनिः पाणिनिः

प्रातराराध्यो महामुनिः पुण्यशीलस्तत्रभवान् पाणिनिः न केवलं व्याकरणोपज्ञः एव, अपितु महाकविरप्यासीत्। अस्य विशिष्टं वर्णनं व्याकरणप्रकरणे मृग्यम्। नात्र पिष्टपेषणभिया प्रक्रम्यते। अत्र तु केवलं तस्य काव्यकलाविषय एव किञ्चिन्निरूप्यते। कविरेष 'जाम्बवतीविजया'परनामकं 'पातालविजया'ख्यं काव्यं प्रणिनाय। अस्य काव्यसरणिरतिरमणीया हृदयङ्गमा च।

सरोरुहाक्षीणि निमीलयन्त्या, रवौ गते साधुकृतं नलिन्या।
अक्ष्णां हि दृष्ट्वापि जगत्समग्रं फलं प्रियालोकनमेकमेव॥
शुद्धस्वभावान्यपि संहतानि निनाय भेदं कुमुदानि चन्द्रः।
अवाप्य वृद्धिं मलिनात्मनात्मा जडो भवेत्कस्य गुणाय वक्रः॥
उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्।
यथा समस्तं तिमिरांशुकं तया पुरोनुरागाद् गलितं न लक्षितम्॥
प्रकाश्य लोकान् भगवान् स्वतेजसा, प्रभादरिद्रः सवितापि जायते।
अहो चला श्री र्बलमानदाऽप्यहो, स्पृशन्ति सर्वा हि दशा विपर्यये॥

क्षपाः क्षामीकृत्य प्रसभमपहृत्याम्बु सरितां
प्रताप्योर्वीं कृत्स्नां तरुगहनमुच्छोष्य सकलम्।
क्व सम्प्रत्युष्णांशुर्गत इति समालोकनपरा-
स्तडिद्दीपालोकैर्दिशि दिशि चरन्तीह जलदाः॥

पाणौ शोणतले तनूदरिदरक्षामा कपोलस्थली,
विन्यस्याञ्जनदिग्धलोचनजलैः किं म्लानिमानीयते॥
मुग्धे चुम्बतु नाम चञ्चलतया भृङ्गः क्वचित्कन्दली-
मुन्मीलन्नवमालतीपरिमलः किन्तेन विस्मर्यते॥

कल्हारस्पर्शगर्भैः शिशिरपरिचयात् कान्तिमद्भिः कराग्रै-
श्चन्द्रेणालिङ्गितायास्तिमिरनिवसने स्रंसमाने रजन्याः।
अन्योन्यालोकिनीभिः परिचयजनितप्रेमनिस्यन्दिनीभि-
र्दूरारूढे प्रमोदे हसितमिव परिस्पष्टमाशा सखीभिः॥

विलोक्य सङ्गमे रागं पश्चिमाशा विवस्वतः।
कृतं कृष्णमुखं प्राच्या नहि नार्यो विनेर्ष्यया॥ इति

---

# महाकविः घटकर्परः

महाकविः घटकर्परः विक्रमादित्यराजसभायां नवरत्नेष्वेकतमः। ख्रीस्तीय-चतुर्थतमे शतके एव कश्चनास्य स्थितिकालः। घटकर्परनामकं द्वाविंशतिपद्यमय-मेककाव्यमप्यसौ प्रणिनाय। यत्रासौ प्रतिजानीते :—

आलम्ब्य वाम्बुतृषितः करकोशपेयं,
भावानुरक्तवनितासुरतैः शपेयम्।
जीयेम येन कविता यमकैः परेण,
तस्मै वहेयमुदकं घटकर्परेण ॥

अस्मिन् काव्ये मेघदूतस्य कथानकमेव विपर्यासेन वर्णितम्। प्रावृडारम्भे काचिद् विरहिणी पत्नी दूरस्थस्वामिनः समीपे प्रणयसन्देशं प्रहिणोति। अस्य पद्येषु वस्तुतो यमकालङ्कारबाहुल्यमतिशेतेऽखिलानि पद्यान्तराणि। तद्यथा :—

किं कृपापि मयि नास्ति कान्तया पाण्डुगण्डपतितालकान्तया।
शोकसागरवरेऽद्य पातिताम् त्वद्गुणस्मरणमेव पाति ताम् ॥ इति

———

# महाकविः भर्तृहरिः

महाकविः भर्तृहरिः संस्कृतसाहित्ये विशिष्टं पदमलङ्करोति। सुप्रसिद्धेन जनरवानुरोधेन एतद्वक्तुं शक्यते यत्कविरयं राजाधिराजस्य विक्रमादित्यस्याग्रजः आसीत्। यद्यपि नास्ति तत्र किमपि बलवत्प्रमाणम् तथापि यदि नामासीद् भर्तृहरिः तस्यैव विक्रमादित्यस्य ज्येष्ठो भ्राता येन किल चतुश्चत्वारिंशदुत्तरषट्शततमे (६४४) क्रैस्तेऽब्दे कहरूरमहारणे हूणाः पराजिताः तदा त्वस्य स्थितिकालोऽपि क्वचित् षट्शताब्द्या उत्तरचरणे एव निर्धारयितुं पार्यते। ये तु केचन भर्तृहरिं बौद्धमतावलम्बिनं मन्यन्ते, मन्यामहे न ते खलु भ्रान्तिरहिताः। यतोऽस्य रचनासु क्वचिदपि तादृशबौद्धगन्धि पद्यमेकमपि न नयनपथमवतरति, येन तस्य बौद्धमतावलम्बित्वमभिद्योत्येत। तत्प्रतीपत्वेन च भारतीयपरम्परानुगृहीतानि नैकानि लक्षणानि समुपलभ्यन्ते।

## भर्तृहरेः काव्यानि

भर्तृहरेः कृतित्वेन विख्यातानि नीतिशतक-वैराग्यशतक-शृङ्गारशतकाख्यानि त्रीणि निरतिशयकाव्यकलालङ्कृतानि प्रसादगुणगुम्फितानि काव्यानि विलसन्ति। तत्रः—

नीतिशतके :—नीति-रीति-सदाचारपद्धति—धैर्य-शौर्य-साहसौदार्य-परोपकाराद्यनेकसदुपदेशसम्भृतानि पद्यानि कयापि सुललितमधुरभाषया विभूषितानि देदीप्यन्ते।

वैराग्यशतके :—वैराग्योपोद्बलकानि भोगविलासादीन्द्रियसुखानां नश्वरताप्रदर्शकानि अनन्यसामान्यरूपेण छलछद्मगर्भितस्यास्य जगतो क्षणभङ्गुरस्य स्वरूपप्रतिपादकानि विविधच्छन्दोनिबद्धानि पद्यानि समुल्लसन्ति।

भर्तृहरेः शैली तु प्रासादिकी, भाषा सुपरिष्कृता, भावभङ्गी च गम्भीरा। प्रायशो वैदर्भीमेवाऽसौ समुपलालयति। अस्य रचनासु वर्ण्यविषयाणां रोचिष्णुता, छन्दसां वैविध्यं, सूक्तीनामनुपमं सौन्दर्यम्, हृदयग्राहिणी च वाणी एव मन्येऽस्य लोकप्रियत्वे हेतुः। नूनमस्य रचना संस्कृतसाहित्ये साजात्यं न बिभर्त्ति। तद्यथा नीतिशतके :—

साहित्यसङ्गीतकलाविहीनः साक्षात्पशुः पुच्छविषाणहीनः।
तृणन्न खादन्नपि जीवमानस्तद्भागधेयं परमं पशूनाम्॥

मनसि वचसि काये पुण्यपीयूषपूर्णाः,
त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः।
परगुणपरमाणून् पर्वतीकृत्य नित्यं,
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः॥

नीतिशतकस्य सूक्तयो हृदयङ्गमत्वात् प्रायशः सर्वत्र आभणितिरूपेण प्रचलिता विभाव्यन्ते। तद्यथा :—

'विभूषणं मौनमपण्डितानाम्।', 'मूर्खस्य नास्त्यौषधम्।', 'सत्सङ्गतिः कथय किन्न करोति पुसाम्।', 'प्रारब्धमुत्तमजना न परित्यजन्ति।', 'सर्वे गुणाः काञ्चनमाश्रयन्ति।', 'सेवाधर्मः परमगहनो योगिनामप्यगम्यः।', 'न निश्चितार्थाद्विरमन्ति धीराः।', 'मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम्।', 'शीलं परं भूषणम्।', न्याय्यात्पथः प्रविचलन्ति पदं न धीराः।', 'विधिरहो बलवानिति मे मतिः।' इत्याद्याः सूक्तयः अद्याप्यनुश्रूयन्ते विबुधकण्ठकिङ्किणीतोऽभितः झङ्क्रियमाणाः।

शृङ्गारशतकेऽपि कविना शृङ्गारकलायां लीलावत्यः किं किं न आरचयन्ति इति अतीव चारुतया सुमधुरपदालङ्कृतैः ललितललितैः पद्यैः निरूपितम्। तद्यथा :—

संसार तव निस्तारपदवी न दवीयसी।
अन्तरा दुस्तरा न स्युर्यदि रे मदिरेक्षणाः॥

किञ्च :—

मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु।
सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम्॥

अपि च :—

कुङ्कुमपङ्ककलङ्कितदेहा गौरपयोधरकम्पितहारा।
नूपुरहंसरणत्पदपद्मा कं न वशं कुरुते भुवि रामा॥

अग्रे:—

मत्तेभकुम्भदलने भुवि सन्ति शूराः,
केचित्प्रचण्डमृगराजवधेऽपि दक्षाः।
किन्तु ब्रवीमि बलिनां पुरतः प्रसह्य,
कन्दर्पदर्पदलने विरला मनुष्याः॥

वस्तुतः कविरयं यं यं रसमाददाति चित्रयितुं तन्तमुपलम्भयति समुत्कर्षस्य पराकाष्ठामित्यत्र नास्ति सन्देहलवोऽपि इति । तथाहि :—

रत्नैर्महार्हैस्तुतुषुर्न देवा न भेजिरे भीमविषेण भीतिम् ।
सुधां विना न प्रययुर्विरामं न निश्चितार्थाद् विरमन्ति धीराः ।।

वैराग्यरागोऽप्यस्यानुरागकृत् :—

यत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो,
निस्तीर्णः सरितां पतिः नृपतयो यत्नेन सन्तोषिताः ।
मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः,
प्राप्तः काणवराटकोऽपि न मया तृष्णेऽधुना मुञ्च माम् ।।
न ध्यातं पदमीश्वरस्य विधिवत्संसारविच्छित्तये,
स्वर्गद्वारकपाटपाटनपटुर्धर्मोऽपि नोपार्जितः ।
नारीपीनपयोधरोरुयुगलं स्वप्नेऽपि नालिङ्गितम्,
मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम् ।।
अजानन्माहात्म्यं पततु शलभस्तीव्रदहने,
स मीनोप्यज्ञानाद्बडिशयुतमश्नातु पिशितम् ।
विजानन्तोऽप्येते वयमिह विपज्जालजटिलान्
न मुञ्चामः कामानहह गहनो मोहमहिमा ।।

वैराग्यशतकञ्चास्य तृतीया रचना । यं कमपि विषयमसौ उट्टङ्कयति चित्राङ्कितमिव विचित्रतया आरचयति च । वार्द्धक्यं निरूपयति :—

बलिभिर्मुखमाक्रान्तं, पलितैरङ्कितं शिरः ।
गात्राणि शिथिलायन्ते, तृष्णैका तरुणायते ।।

किञ्च :—

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती,
रोगाश्च शत्रव इव प्रहरन्ति देहम् ।
आयुः परिस्रवति भिन्नघटादिवाम्भो,
लोकस्तथाप्यहितमाचरतीति चित्रम् ।।

अग्रे च :—

अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा,
मणौ वा लोष्ठे वा कुसुमशयने वा दृषदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः,
क्वचित्पुण्यारण्ये शिव शिवेति प्रलपतः ।।

संसारस्य विषमतां विभावयन् वर्णयति :—

'क्वचिद्वीणावाद्यं क्वचिदपि च हाहेति रुदितम्,
क्वचिद्विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहः ।
क्वचिद्रामा रम्याः क्वचिदपि गलत्कुष्ठवपुषो,
न जाने संसारः किममृतमयः किं विषमयः ।।

काव्यप्रतिभाया दार्शनिकतया सह यादृशोऽनन्यः प्रसङ्गोऽत्र लक्ष्यते न तादृशः क्वचिदन्यत्र साहित्ये लभ्यते । वैराग्यशतकस्य सूक्तयोऽपि नितरां चेतोहराः । प्रणिभाल्यताम् तावत् :—

पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ।
तृष्णा न जीर्णा वयमेव जीर्णाः ।
सर्वं यस्य वशादगात् स्मृतिपथं कालाय तस्मै नमः ।
विवेकभ्रष्टानां भवति विनिपातः शतमुखः ।
मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः ।
सन्दीप्ते भुवने तु कूपखननं प्रत्युद्यमः कीदृशः ।
किं नाम वामनयना न समाचरन्ति ।
वनं वा गेहं वा सदृशमुपशान्तैकमनसाम् । इत्याद्याः ।

वैराग्यशतकं भर्तृहरेः सर्वस्वभूतमिव प्रतीयते। स खलु 'सन्तोषं परमं सुखं वैराग्यं तदेकमात्रसाधनम्' इति प्रतिपादयन्निवास्ते ।

सांसारिकभोगविलासेष्वासक्तव्यक्तेरुक्तिरियं कियच्चमत्काराधायिकेति सुधियो विभावयन्तु :—

'धन्यानां गिरिकन्दरेषु वसतां ज्योतिः परं ध्यायता-
मानन्दाश्रुकणान् पिबन्ति शकुना निःशङ्कमङ्केशयाः ।
अस्माकन्तु मनोरथोपरचितप्रासादवापीतट-
क्रीडाकाननकेलिकौतुकजुषामायुः परं क्षीयते ।।

भर्तृहरिदृशा तपस्विजीवनमेव परमश्रेयस्करम् :—

मही रम्या शय्या विपुलमुपधानं भुजलता,
वितानं चाकाशं व्यजनमनुकूलोऽयमनिलः ।
शरच्चन्द्रो दीपो विरतिवनितासङ्गमुदितः,
सुखी शान्तः शेते मुनिरतनुभूतिर्नृप इव ।।

अनेकशः सुभगाः सूक्तयो लोकानां कण्ठाभरणतां गताः विलसन्ति :—

आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्द्धं गतम्,
तस्यार्द्धस्य परस्य चार्द्धमपरं बालत्ववृद्धत्वयोः।
शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते,
जीवे वारितरङ्गबुद्बुदसमे सौख्यं कुतः प्राणिनाम्॥

क्षणो बालो भूत्वा क्षणमपि युवा कामरसिकः,
क्षणं वित्तैर्हीनः क्षणमपि च सम्पूर्णविभवः।
जराजीर्णैरङ्गैर्नत इव बलीमन्दिततनुः,
नरः संसारान्ते विशति यमधानी यवनिकाम्॥

आक्रान्तं मरणेन जन्म जरसा वात्युत्तमं यौवनम्,
सन्तोषो धनलिप्सया शमसुखं प्रौढाङ्गनाविभ्रमैः।
लोकैर्मत्सरिभिर्गुणा वनभुवो व्यालैर्नृपा दुर्जरैः,
अस्थैर्येण विभूतयोऽप्युपहता ग्रस्तं न किं केन वा॥

इति विश्वविभूतेः क्षणस्थायित्वं कीदृक्चारुतया वर्णितम्।

किञ्च :—

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः।
अज्ञानलवदुर्विदग्धं ब्रह्मापि च तं नरं न रञ्जयति॥

व्यालं बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते,
छेत्तुं वज्रमणीन् शिरीषकुसुमप्रान्तेन सन्नह्यते।
माधुर्यं मधुबिन्दुना रचयितुं क्षाराम्बुधेरीहते,
नेतुं वाञ्छति यः खलान् पथि सतां सूक्तैः सुधास्यन्दिभिः॥

अम्भोजिनीवननिवासविलासमेव
हंसस्य हन्ति नितरां कुपितो विधाता।
न त्वस्य दुग्धजलभेदविधौ प्रसिद्धां
वैदग्ध्यकीर्त्तिमपहर्त्तुमसौ समर्थः॥

जयन्ति ते सुकृतिनः रससिद्धाः कवीश्वराः।
येषां नास्ति यशः काये जरामरणजं भयम्॥

राजन् दुधुक्षसि यदि क्षितिधेनुमेतां,
तेनाद्य वत्समिव लोकममुं पुषाण।
तस्मिंश्च सम्यगनिशं परिपोष्यमाणे,
नानाफलैः फलति कल्पलतेव भूमिः॥

---------

# विद्यारण्यः सरस्वती

माधवाचार्यापरनामधेयोऽयं विद्यारण्यसरस्वती महामेधावी सर्वशास्त्रावगाहिधिषणः पदवाक्यप्रमाणपारावारपारीणः वेदभाष्यकारः प्रवीणः कविश्चासीत्। श्रीमती नाम्नी देवी चास्य जननी जनकश्च मायणाख्यो ब्रह्मतेजस्समन्वितो ब्राह्मणः। बीजापुरराज्यसंस्थापनेऽसौ धुर्यत्वेनोन्नीयते। विश्वविख्यातवेदभाष्यकारस्य सायणायचार्यस्याऽसौ ज्येष्ठो भ्राता। विशेषस्तु अस्य विषये सायणाचार्यपरिचये द्रष्टव्यः। अनेन बहवो ग्रन्थाः प्राणायिषत। तेषु प्रसिद्धाः--१. जैमिनीयन्यायाधिकरणमाला २. वेदान्ताधिकरणरत्नमाला, ३. माधवीयधातुवृत्तिः, ४. सर्वदर्शनसंग्रहः, ५. पञ्चदशी, ६. ब्रह्मगीता, ७. शङ्करदिग्विजयम्, ८. शतप्रश्नकल्पलतिकाप्रभृतयः। शङ्करदिग्विजयाख्यं हि सुप्रसिद्धमहाकाव्यम्। कवित्वकलादृशा काव्यमिदमतिमहनीयं पदमधिकरोति। अस्य पदविन्यासमाधुरी भावगाम्भीर्यगरिमा च कस्य वा मनस्विनो मनो न निमज्जयति आनन्दोदन्वति महति।

अवातरद्रत्नविचित्रवप्रां विलोकयतां विस्मितमानसोऽसौ।
पुराणवत्पुष्करावर्त्तनीतः पुरोपकण्ठस्थवने मनोज्ञे॥
प्रफुल्लराजीववनेविहारी तरङ्गरिङ्गत्कणशीकरार्द्रः।
रेवामरुत्कम्पितसालमालः श्रमापहृद् भाष्यकृतं सिषेवे॥
कुत्रालयो मण्डनपण्डितस्यैताः स पप्रच्छ जलाय गन्त्रीः।
ताश्चापि दृष्ट्वाऽद्भुतशङ्करं तं सन्तोषवत्यो ददुरुत्तरं स्म॥
स्वतः प्रमाणं परतः प्रमाणं कीराङ्गना यत्र गिरं गिरन्ति।
द्वारस्थनीडान्तरसन्निरुद्धा जानीहि तन्मण्डनपण्डितौकः॥

* * * * *

पीत्वा तदुक्तीरथ तस्य गेहं गत्वा बहिः सद्म कवाटगुप्तम्।
दुर्वेशमालोच्य स योगशक्त्या व्योमाध्वनावातरदङ्गणान्तः॥
तदा स लेखेन्द्रनिकेतनाभं स्फुरन्मरुच्चञ्चलकेतनाभम्।
समग्रमालोकत मण्डनस्य निवेशनं भूतलमण्डनस्य॥
तदातिरुष्टस्य गृहाश्रमेशितुर्यतीश्वरस्यापि कुतूहलं भृतः।
क्रमात्किलेत्थं बुधशस्तयोस्तयोः प्रश्नोत्तराण्यासुरथोत्तरोत्तरम्॥

कुतो मुण्ड्यागलान्मुण्डी पन्थास्ते पृच्छयते मया।
किमाह पन्थास्त्वन्माता मुण्डेत्याह तथैव हि॥
पन्थानं त्वमपृच्छस्त्वां पन्थाः प्रत्याह मण्डनः।
त्वन्मातेत्यत्र शब्दोऽयं न मां ब्रूयादपृच्छकम्॥
अहो पीता किमु सुरा नैव श्वेता यतः स्मर।
किं त्वं जानासि तद्वर्णमहं वर्णं भवान् रसम्॥
मत्तो जातः कलञ्जाशी विपरीतानि भाषसे।
सत्यं ब्रवीमि पितृवत् त्वत्तो जातः कलञ्जभुक्॥
कन्थां वहसि दुर्बुद्धे गर्दभेनापि दुर्वहाम्।
शिखायज्ञोपवीताभ्यां कस्ते भारो भविष्यति॥
कन्थां वहामि दुर्बुद्धे तव पित्रापि दुर्भराम्।
शिखायज्ञोपवीताभ्यां श्रुतेर्भारो भविष्यति।
त्यक्त्वा पाणिगृहीतां स्वामशक्त्या परिरक्षणे।
शिष्यपुस्तकभारेच्छो व्याख्याता ब्रह्मनिष्ठता॥
गुरुशुश्रूषणालस्यात्समावर्त्य गुरोः कुलात्।
स्त्रियः शुश्रूषमाणस्य व्याख्याता कर्मनिष्ठता॥
स्थितोऽसि योषितो गर्भे ताभिरेव विवर्धितः।
अहो कृतघ्नता मूर्ख! कथं ता एव निन्दसि॥
यासां स्तन्यं त्वया पीतं यासां जातोऽसि योनितः।
तासु त्वं मूर्ख स्त्रीषु पशुवद्रमसे कथम्॥
वीरहत्यामवाप्तोऽसि वह्नीनुद्वास्य यत्नतः।
आत्महत्यामवाप्तस्त्वमविदित्वा परमं पदम्॥
दौवारिकान् वञ्चयित्वा कथं स्तेनवदागतः।
भिक्षुभ्योऽन्नमदत्त्वा त्वं स्तेनवद् भोक्ष्यसे कथम्॥
कर्मकाले न सम्भाष्य अहं मूर्खेण सम्प्रति।
अहो प्रकटितं ज्ञानं यतिभङ्गेन भाषिणा॥
यतिभङ्गे प्रवृत्तस्य यतिभङ्गो न दोषभाक्।
यतिभङ्गे प्रवृत्तस्य पञ्चम्यन्तं समस्यताम्॥
क्व ब्रह्म क्व च दुर्मेधाः क्व संन्यासः क्व वा कलिः।
स्वाद्वन्नभक्ष्यकामेन वेषोऽयं योगिनां धृतः॥
क्व स्वर्गः क्व दुराचारः क्वाग्निहोत्रं क्व वा कलिः।
मन्ये मैथुनकामेन वेषोऽयं कर्मिणां धृतः॥

इत्यादिदुर्वाक्यगणं ब्रुवाणे रोषेण साहंकृतिविश्वरूपे।
श्री शङ्करं वक्तरि तस्य तस्योत्तरं च कौतूहलतश्च चारु॥
तन्मण्डनं सस्मितजैमिनीक्षितं व्यासोऽब्रवीज्जल्पसि वत्स दुर्वचः।
आचारणा नेयमनिन्दितात्मनां, ज्ञातात्मतत्वं यमिनं धुतैषणम्॥
अभ्यागतोऽसौ स्वयमेव विष्णुरित्येव मत्वाऽऽशु निमन्त्रय त्वम्।
इत्याश्रवं ज्ञातविधिं प्रतीतं, सुध्यग्रणीः साध्वशिषन्मुनिस्तम्॥
अथोपसंस्पृश्य जलं स शान्तः ससम्भ्रमं मण्डनपण्डितोऽपि।
व्यासाज्ञया शास्त्रविदर्चयित्वा न्यमन्त्रयद् भैक्ष्यकृते महर्षिम्॥
स चाब्रवीत्सोम्य! विवादभिक्षामिच्छन् भवत्सन्निधिमागतोऽस्मि।
साऽन्योऽन्यशिष्यत्वपणा प्रदेया, नाऽस्यादरः प्राकृतभक्तभैक्ष्ये॥

*  *  *  *  *

भवतु सम्प्रति वादकथाऽऽवयोः फलतु पुष्कलशास्त्रपरिश्रमः।
उपनता स्वयमेव न गृह्यते नवसुधा वसुधावसथेन किम्॥

अहो नु खल्वनुपमधाग्वैभवं विद्यारण्यस्वामिनः। एकतः किल सा उद्दामवाचो विद्यारण्यस्य विद्यारण्यस्य प्रसन्नपदैरर्थगौरवनिर्भरैः संवलिता पद्यावलिः, अपरतश्च सुगृहीतनाम्नो भगवन्मुनिपादशङ्कराचार्यस्य शङ्करोपमस्य तच्चरित्रचित्रणम्। इति नूनं स्वर्णे सौरभामोद एवाभ्युपपन्नः।

शङ्करदिग्विजये शङ्करचाण्डालयोः संवादोऽतीव रोचिष्णुतया गुम्फितः—

शङ्करो दिवसमध्यमभागे पङ्कजोत्पलपरागकषायाम्।
जाह्नवीमभिययौ सह शिष्यैराह्निकं विधिवदेष विधित्सुः॥
सोऽन्त्यजं पथि निरीक्ष्य चतुर्भिर्भीषणैः श्वभिरनुद्रुतमारात्।
गच्छ दूरमिति तं निजगाद प्रत्युवाच स शङ्करमेतम्॥
अद्वितीयमनवद्यमसङ्गं सत्यबोधसुखरूपमखण्डम्।
आमनन्ति शतशो निगमान्ता साऽत्र भेदकलना तव चित्रम्॥
दण्डमण्डितकराधृतकुण्डाः पाटलाभवसनाः पटुवाचः।
ज्ञानगन्धरहिता गृहसंस्था वञ्चयन्ति किल केचन वेषैः॥
गच्छ दूरमिति देहमुताहो देहिनं परिजिहीर्षसि विद्वन्।
भिद्यतेऽन्नमयतोऽन्नमयं किं साक्षिणश्च यतिपुङ्गव! साक्षी॥
ब्राह्मणश्वपचभेदविचारः प्रत्यगात्मनि कथं तव युक्तः।
बिम्बितेऽम्बरमणौ— * * * ॥

शुचिर्द्विजोऽहं श्वपच व्रजेति,
मिथ्याग्रहस्ते मुनिवर्य ! कोऽयम् ।
सन्तं शरीरेष्वशरीरमेक-
मुपेक्ष्य पूर्णं पुरुषं पुराणम् ॥
अचिन्त्यमव्यक्तमनन्तमाद्यं विस्मृत्य रूपं विमलं विमोहात् ।
कलेवरेऽस्मिन् करिकर्णलोलाकृतिन्यहन्ताऽऽविरभूत्कथन्ते ॥
इत्यादि ।

# कविवरः प्रकाशवर्षः

यद्यपि कविवरप्रकाशवर्षविषये न किञ्चिदप्यद्यावधि श्रुतं दृष्टं वा, कोऽयमासीत् कुत्रत्यो वा किन्नाम वा काव्यमसौ निबबन्ध, इत्यादि सर्वमेवास्य विषयेऽन्धतमसि लीनमिव प्रतीयते। तथाप्यस्य श्लोकाः सुभाषितग्रन्थेषु प्रकीर्णरूपण यत्रतत्रोपलभ्यमाना ग्राहयन्ति कवेरस्य कवित्वनैपुणीम्। शिशुपालवधस्य टीकाकृता वल्लभदेवेन प्रकाशवर्षविषये समुल्लिखितम्:—

श्रुत्वा प्रकाशवर्षात्तु व्याख्यानं तावदीदृशम्।
विशेषस्तु नैवास्ति बोधोऽनुवादादृते॥ इति।

तेन विज्ञायते यत्कविरयं कवित्वकलाप्रकर्षवान् निरतिशयानुभवशाली च। अस्य रचनारसास्वादोऽपि किञ्चित् समास्वाद्यः सहृदयैः —

जगत्सिसृक्षाप्रलयक्रियाविधौ प्रयत्नमुन्मेषनिमेषविभ्रमम्।
वदन्ति यस्येक्षणलोलपक्ष्मणां पराय तस्मै परमेष्ठिने नमः॥

यञ्चापदं मरणदुःखमिवानुभाव्य दत्तेन किं खलु भवत्यतिभूयसाऽपि।
कल्पद्रुमान् परिहसन्त इवेह सन्तः सङ्कल्पितैरतिददत्यकदर्थितं यत्॥

एवमेव नहि जीव्यते खलात् तत्र का नृपतिवल्लभे कथा।
पूर्वमेव हि सुदुःसहोऽनलः किं पुनः प्रबलवायुनेरितः॥

वन्द्यान्निन्दति दुःखितानुपहसत्याबाधते बान्धवान्,
शूरान् द्वेष्टि धनच्युतान् परिभवत्याज्ञापयत्याश्रितान्।
गुह्यानि प्रकटीकरोति घटयन् यत्नेन वैराशयम्,
ब्रूते शीघ्रमवाच्यमुज्झति गुणान् गृह्णाति दोषान् खलः॥

कृपणसमृद्धीनामपि भोक्तारः सन्ति केचिदतिनिपुणाः।
जलसम्पदोऽम्बुराशेर्यान्ति लयं शश्वदौर्वाग्नौ॥

धनबाहुल्यमहेतुः कोऽपि निसर्गेण मुक्तकरः।
प्रावृषि कस्याम्बुमुचः सम्पत्तिः किमधिकाऽम्बुनिधेः॥

लक्ष्मीसम्पर्करूपोऽयं दोषः पद्मस्य निश्चितम्।
यदयं गुणसन्दोहो धामनीन्दौ पराङ्मुखः॥

कल्पद्रुमान् विगतवाञ्छजने सुमेरौ रत्नान्यगाधसलिले सरितामधीशे।
धात्रा श्रियं निदधता प्रखलेषु नित्यं अत्युज्ज्वलः खलु वटे निहितः प्रदीपः॥ इति

———

# महाकविः अमरुकः

(क्रैस्त ६५०–७५०)

कविकुलाऽलङ्कारभूतोऽयं अमरुक[1]नामा महाकविः शृङ्गारिकः प्रौढोक्ति-कुशलः, विद्वत्समाजे लब्धानितरसाधारणसमादरश्च आसीत्। शार्दूलविक्रीडिताख्य-च्छन्दोबन्धनेऽसावतीव कुशलः। पदविन्यासोल्लासोऽप्यस्य सुरुचिरः। वस्तुतः नायं शब्दकविः, अपितु रसकविः। शब्दरसयोर्द्वन्द्वे समुपस्थिते रसमेवासौ समुपला-लयति न शब्दम्। तथा हि अस्य मुक्तकानुद्दिश्य ध्वन्यालोककारः श्री आनन्द-वर्धनाचार्यः मुक्तकण्ठेनैनं प्रशशंस :—

"मुक्तकेषु हि प्रबन्धेषु इव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते। तथा ह्यमरुकस्य कवेः मुक्तकाः शृङ्गारस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव।" इत्यनेनानुमातुं शक्यते यद् अमरुकोऽयं महाकविः कविश्रेणीषु किल अत्युच्चकोटि-माटीकमानो व्यलसत्।

कविवरेण अर्जुनदेववर्मणाऽपि भूरिशः प्रशंसनमारचितम् अमरुकमुद्दिश्य :—

अमरुक-कवित्वडमरुकनादेन विनिन्हुता न सञ्चरन्ति।
शृङ्गारभणितयोऽन्या धन्यानां श्रवणयुगलेषु॥ इति।

[रसिकसंजीवनीटीकायाम्]

नूनं साहित्यनिकषे कषमाणाऽस्य रचना नितरां प्रखरतरा चमत्कारिणी चावतीर्णा। अमरुकस्य शृङ्गाररससम्भृतानामुदात्तवचसां साम्मुख्ये सुतरा-मितरकविजना वामनायन्तेतरामिति निर्विशङ्कम्। भाषासरणिः प्रसादरम्या, काव्यबन्धः सुदृढः कोमलकल्पनासम्पन्नश्च। अलङ्कारग्रन्थेषु प्रायः अमरुक-कृतानि पद्यानि बहुशः समुद्धृतानि। तदस्य सुधानिस्यन्दिमधुरपद्यावलिरसास्वादः श्रवणपुटकाभ्यामास्वाद्यताम् रसिकैः ––

---

१. यद्यपि कविरयं कतमं जनपदं समलञ्चकार जनुषा, कस्मिन् काले च जातः इदमद्यापि न निश्चितम्। तथाऽपि आनन्दवर्धनाचार्यः ध्वन्यालोके कविममुं यत्प्रशशंस तेन खल्वेतत्तु वक्तुं शक्यते यदेष कविः क्वचित् ख्रिस्तीयपञ्चाशदुत्तर-सप्तशततमेऽब्दे [७५० क्रैस्ते] सञ्जातो भवेदिति।

क्व प्रस्थितासि करभोरु घने निशीथे ?
प्राणाधिको वसति यत्र निजः प्रियो मे।
एकाकिनी वद कथन्न बिभेषि बाले ?
शूरोऽस्ति पुङ्खितशरो मदनः सहायः॥

अच्छिन्नं नयनाम्बु बन्धुषु कृतं तापः सखीष्वाहितो,
न्यस्तं दैन्यमशेषतः परिजने चिन्ता गुरुभ्योऽर्पिता।
अद्यश्वः किल निर्वृतिं व्रजति सा श्वासैः परं खिद्यते,
विस्रब्धो भव विप्रयोगजनितं दुःखं विभक्तं तया॥

असद्वृत्तो नायं न च खलु गुणैरेव रहितः,
प्रियो मुक्ताहारस्तव चरणमूले निपतितः।
गृहाणेमं मुग्धे व्रजतु निजकण्ठप्रणयिता-
मुपायो नास्त्यन्यस्तव हृदयसन्तापशमने॥

मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते,
मानं धत्स्व धृतिं बधान ऋजुतां दूरीकुरु प्रेयसि।
सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना,
नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति॥

उत्कम्पो हृदये स्खलन्ति वचनान्यावेगलोलं मनो,
गात्रं सीदति चक्षुरश्रुकलुषं चिन्तामुखं शुष्यति।
यस्यैषा सखि! पूर्वरङ्गरचना मानः स मुक्तो मया,
वन्ध्यास्ता अपि योषितः क्षितितले यासामयं सम्मतः॥

वस्तुतः मानवीयप्रकृतिसुलभप्रणयपरिपक्त्रिमोल्लेखो यथा साधुतयाऽमरुक-काव्येषु सम्पन्नः तथाऽन्यत्र नावलोक्यते। विदेशं जिगमिषोः प्रियस्य कामिन्या हृदयविह्वलतां कीदृङ् मार्मिकतयाऽनुबध्नाति :—

प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुम्पुरः।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता,
गन्तव्ये सति जीवित! प्रियसुहृत्सार्थः किमु त्यज्यते॥

अन्यत्र प्रियशुभागमनप्रयोजकतत्तदङ्गप्रत्यङ्गहर्षोत्कर्षेण मङ्गलमावेदयति :—

दीर्घा वन्दनमालिका विरचिता दृष्टयैव नेन्दीवरैः,
पुष्पाणां प्रकरः स्मितेन रचितो नो कुन्दजात्यादिभिः।

दत्तस्वेदमुचा पयोधरयुगेनार्घ्यो न कुम्भाम्भसा,
स्वैरेवावयवैः प्रियस्य विशतस्तन्व्या कृतं मङ्गलम् ॥

निम्नाङ्कितेपद्ये नायकनायिकासंवादोऽपि रसिकानां मनांसि रञ्जयति :—

बाले नाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतम्,
खेदोऽस्मासु न मेऽपराध्यति भवान् सर्वेऽपराधा मयि।
तत्किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते,
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ॥

भावसौकुमार्यस्य कीदृग् हृदयस्पर्शि चित्रणम् :—

भ्रूभङ्गे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते,
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते।
कार्कश्यं गमितेऽपि चेतसि तनू रोमाञ्चमालम्बते,
दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिन् जने ॥

अहो कीदृशं चेतोहरं वर्णनम् ! इति।

---

# कविवरो बाणभट्टः

(क्रैस्त ६४०)

गद्यबन्धसम्राजो बाणभट्टस्य पद्यबन्धोऽपि सुतरां काव्यकलालङ्कृतः।

नमस्तुङ्गशिरश्चुम्बि – चन्द्रचामरचारवे।
त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे॥

बाणभट्टस्यालौकिकीं काव्यकलाचातुरीमवलोक्य, प्रागल्भ्यधुरीणताञ्च विभाव्य आचार्यो गोवर्धनः स्वीये आर्यासप्तशतीकाव्ये बाणविषये समुपश्लोकयति :–

जाता शिखण्डिनी प्राग् यथा शिखण्डी तथाऽवगच्छामि।
प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति॥

नूनमस्य गद्यकाव्यकलावतारस्य बाणस्य पद्यकलाऽपि कापि निरतिशयाद्भुता। तन्माधुर्यमपि सहृदयरसिकैः किञ्चिदास्वाद्यताम् :

एकैकातिशयालवः परगुणज्ञानैकवैज्ञानिकाः,
सन्त्यते धनिकाः कलासु सकलास्वाचार्यचर्याचणाः।
अप्येते सुमनोगिरां निशमनाद् बिभ्यत्यहो श्लाघया,
धूते मर्धनि कुण्डले कषणतः क्षीणे भवेतामिति॥

प्रीतिं न प्रकटीकरोति सुहृदि द्रव्यव्ययाशङ्कया,
भीतः प्रत्युपकारकारणभयान्नाकृष्यते सेवया।
मिथ्या जल्पति वित्तमार्गणभयात्स्तुत्यापि न प्रीयते,
कीनाशो विभवव्ययव्यतिकरत्रस्तः कथं प्राणिति॥

न गृह्णाति ग्रासं नवकमलकिञ्जल्किनि जले,
न पङ्कैराह्लादं व्रजति विसभङ्गार्धशकलैः।
ललन्तीं प्रेमार्द्रामपि विषहते नान्यकरिणीं,
स्मरन् दावभ्रष्टां हृदयदयितां वारणपतिः॥

नदीवप्रान् भित्त्वा किसलयवदुत्पाटय च तरून्,
मदोन्मत्तां जित्वा करचरणदन्तैः प्रतिगजम्।
जरां प्राप्यानार्यां तरुणजनविद्वेषजननीम्,
स एवायं नागः सहति कलभेभ्यः परिभवम्॥



रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति ।
सा किं तरुणी! नहि नहि वाणी वाणस्य मधुरशीलस्य ॥

सर्वाशारुधि दग्धवीरुधि सदा सारङ्गबद्धक्रुधि,
क्षामक्ष्मारुहि मन्दमुन्मधुलिहि स्वच्छन्दकुन्दद्रुहि।
शुष्यत्स्रोतसि भूरितप्तरजसि ज्वालायमानार्णसि,
ग्रीष्मे मासि तताऽर्कतेजसि कथं पान्थ ! व्रजन् जीवसि ॥

स्वेदाम्भःकणिकाञ्चितेन वपुषा शीतानिलस्पर्शनम्,
तर्षोत्कर्षजुषा मुखेन शिशिरस्वच्छाम्बुपानादरः।
दूराध्वक्लमनिःसहैरवयवैश्छायासु विश्रान्तयः,
काश्मीरान् परितो निदाघसमये धन्यः परिभ्राम्यति ॥

लवणाम्बुनिधेरम्भः कृत्स्नमुद्गीर्य तोयदाः।
दधुर्धवलतां भयः पीतदुग्धार्णवा इव ॥ इति दिक्।

---

# कविराजो जगद्धरः

कविराजो जगद्धरः शान्तरसप्रधानः प्रासादिकः सुकविः काश्मीरान् स्वजनुषाऽलञ्चकार। कविरयं दार्शनिको, दिग्गजो वैयाकरणः, प्रौढो मीमांसकश्चासीत्। अनेकेषु साहित्यिकसन्दर्भेषु चानेन प्रामाणिकाष्टीका विरचिताः। आत्मपरिचयं ददानोऽयमुपन्यस्यति यद् आसीदेको चण्डेश्वरो नाम प्रसिद्धो मीमांसकः। तदात्मजो रामेश्वरोऽपि लब्धप्रतिष्ठो मीमांसकमूर्द्धन्यस्तदात्मजो गदाधरस्तत्सूनुर्विद्याधरस्तत्सुतो रत्नधरस्तदात्मसम्भवश्चाऽयं साहित्यधुरन्धरो जगद्धरः ख्रैस्तचतुर्दशतमशताब्द्यां लब्धस्थितिकः।

कवेरस्य सर्वोत्कृष्टो ग्रन्थः 'स्तुतिकुसुमाञ्जलिः' अष्टभिः स्तोत्रैर्निबद्धः चतुर्दशसहस्रमितैः श्लोकैः परिगुम्फितः। जगद्धरोऽयं भगवतो महामहिमशालिनो महादेवस्यानन्यो भक्तः। अस्य रचनासु श्लेषानुप्रासयमकानामपूर्वं मिश्रणम्। रससार्वभौमस्य करुणरसस्य च पूर्णः परिपाकः दृग्गोचरीभवति। नूनमस्य सुधास्पर्धि काव्यमाधुर्यं वज्रहृदयानरसिकानपि द्रावयति। तद्यथा :—

स्वैरेव यद्यपि गतोऽहमधः कुकृत्यैस्तत्रापि नाथ तव नास्म्यवलेपपात्रम्।
दृप्तः पशुः पतति यः स्वयमन्धकूपे नोपेक्षते तमपि कारुणिको हि लोकः॥
धन्याः शुचीनि सुरभीणि गुणोम्भितानि वाग्वीरुधः स्ववदनोपवनोद्गतायाः।
उच्चित्य सूक्तिकुसुमानि सतां विविक्तवर्णानि कर्णपुलिनेष्ववतंसयन्ति॥
तेऽनन्त-वाङमय-महार्णव-दृष्टपाराः सांयात्रिका इव महाकवयो जयन्ति।
यत्सूक्तिपेलवलवङ्गलवैरवैमि सन्तः सदस्सु वदनान्यधिवासयन्ति॥
त्रैलोक्यभूषणमणिर्गुणिवर्गबन्धुरेकश्चकास्ति सविता कविताऽद्वितीया।
शंसन्ति यस्य महिमाऽतिशयं शिरोभिः पादग्रहं विदधतः पृथिवीभृतोऽपि॥
शब्दार्थमात्रमपि ये न विदन्ति तेऽपि यां मूर्च्छनामिव मृगाः श्रवणैः पिबन्तः।
संरुद्धसर्वकरणप्रसरा भवन्ति चित्रस्थिता इव कवीन्द्रगिरं नुमस्ताम्॥

अस्थाने गमिता लयं हतधियां वाग्देवता कल्पते,
धिक्काराय पराभवाय महते तापाय पापाय वा।
स्थाने तु व्ययिता सतां प्रभवति प्रख्यातये भूतये,
चेतोनिर्वृतये परोपकृतये प्रान्ते शिवावाप्तये॥

स्फारेण सौरभभरेण किमेणनाभेः तद्धामसारमपि सारमसारमेव।
स्रक्सौमनस्यमपि न पुष्यति सौमनस्यम् प्रस्यन्दते यदिमधुद्रवसूक्तिदेवी॥

स हेमालङ्कारक्षितिपतनलग्नेन रजसा,
तथा दैन्यं नीतो नरपतिशरश्लाघ्यविभवः।
यथा लोष्ठभ्रान्ति व्यवहित विवेक व्यतिकरः,
विलोक्यैनं लोकः परिहरति पादः क्षतिभयात्॥

आहूतेषु विहङ्गमेषु मशको नायन् पुरो वार्यते,
मध्ये वा धुरि वा वसंस्तृणमणिर्धत्ते मणीनां रुचम्।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनाम्,
धिक्सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरम्॥

कदा संसारजालान्तर्बद्धं त्रिगुणरज्जुभिः।
आत्मानं मोचयिष्यामि शिवभक्तिशलाकया॥

वाङ्मनःकायकर्माणि विनिवेश्य त्वयि प्रभो।
त्वन्मयीभूय निर्द्वन्द्वः कच्चित्स्यामपि कर्हिचित्॥

मलतैलाक्तसंसार — वासनावर्त्तिदाहिना।
ज्ञानदीपेन देव त्वां कदा नु स्यामुपस्थितः॥

एकाकी निस्पृहः शान्तः पाणिपात्रो दिगम्बरः।
कदा शम्भो भविष्यामि संसारोन्मूलनक्षमः॥

सुशान्तशास्त्रार्थ — विचार — चापलम्,
निवृत्त — नानारसकाव्य — कौतुकम्।
निरस्तनिःशेषविकल्पविप्लवं,
प्रपत्तुमन्विच्छति चक्रिणं मनः॥

कृष्ण त्वदङ्घ्रियुगलाम्बुजभक्तिरेणुं,
पुञ्जान्तरालपरिधूसर — विग्रहोऽहम्।
भृङ्गः कदा निजपतत्रविधूनेन
प्रेतेश — दिक् — तिमिरपाटपटुर्भवेयम्॥

विजृम्भमाणे तमसि प्रगल्भे यथा भवासक्तमतिः स्थितोऽहम्।
गतेऽपि तस्मिन्नुदितावबोधस्तथा भवासक्तमतिर्भवेयम्॥

———

# महाकविः कल्हणः

(१२ शताब्दी)

महाकविः कल्हणोऽयं काश्मीरकस्यैकस्य ब्राह्मणकुलावतंसस्य चम्पकनाम्नो भूसुरस्यात्मजः। महाराजहर्षदेवस्यातीव विस्रम्भभाग्, राजनैतिकसचिवश्चासीत्। हर्षवर्धनानन्तरमनेन राजनीतिप्रपञ्चः परित्यक्तः। स्वपितृव्यस्य राज्ञो हर्षदेवस्य परमप्रीतिपात्रस्य कनकसंज्ञकस्य देहावसाने विरतो भूत्वा काश्यामागतो वैराग्यमयजीवनं यापयितुं प्रववृते। भारतस्य राजनैतिकेतिवृत्तं लिखितुमुपचक्रमे। तदितिवृत्तमेव राजतरङ्गिणीनाम्ना प्रसिद्धम्। अस्मिन् ग्रन्थे ऐतिहासिकघटनानां क्रमबद्ध उल्लेखः पल्लवितः। खीस्त ११५१ तमसम्वत्सरं यावत् सर्वेषाम् काश्मीरकनृपाणां कालादिनिरूपणपुरस्सरं तत्तद्घटनाचक्रमङ्कितम्।

सेयं राजतरङ्गिणी अष्टखण्डेषु विभक्ता, ७,८२३ श्लोकैश्च प्रणिबद्धा। एतल्लेखनसरण्याऽवगम्यते यत्काश्मीरेषु इतिहासोपन्यासप्रणालिरतिप्राचीनकालत एव लब्धप्रचारा आसीत्। इतिवृत्तविषयका नैके ग्रन्थाश्च आसन् यानाश्रित्य कल्हणो राजतरङ्गिणीमुपन्यस्तुं प्रबभूव। अनेकान् शिलालेख-प्रशस्तिपत्र-दानपत्र-हस्तलिखितग्रन्थान् संस्कृतभाषायां शारदालिपिबद्धान् आदाय राजतरङ्गिणीं प्रणिनाय। प्राचीनमुद्राविशेषाणामुपयोगोऽपि तेन व्यधायि समीचीनतया। एतद्व्यतिरिक्तमस्य ग्रन्थस्य लेखने तद्देशीयजनश्रुतीनां, पारिवारिककथांशानां, प्रथानां, परम्पराणाञ्चावलम्बनं साहाय्यञ्च शरणीकृत्य ग्रन्थोऽयं महता समारम्भेण संग्रथितः। पञ्चदशशतकोपनतवृत्तान्तस्य सतर्कोल्लेखः कवित्वकलासंवलितया ललितया गिरा गुम्फितः। इतिहासस्य सजीवता, वर्णनस्य मनोज्ञता, काव्यमाधुर्यसम्भृतिश्चात्र सुतरां पम्फुल्यमाना इव प्रतिभाति। नूनमसौ यथार्थतया आसीदैतिहासिकः कविः। न्याय्यं सत्यञ्च तत्त्वं निष्पक्षपाततया समुट्टङ्कयति। स्वाश्रयप्रदातू राज्ञो हर्षस्यात्याचारान् निरातङ्कमङ्कितवान्। कविना राज्ञो व्यक्तिगतं राजकीयञ्च जीवनं वैशद्येन चित्रितम्। सत्यपि ऐतिहासिके काव्येऽस्मिन् काव्यकलायाः परिपूर्णः पाकोऽपि दृष्टिगोचरो भवति।

अस्य काव्यशैल्यप्यवलोकनीया :—

परामृशति सस्पृहं मुहुरपेलवं वीक्ष्यते महत्किमपि रत्नमित्यसमसम्मदं गूहते।<br>
कुतोऽपि परिपेलवच्छविमवाप्य काचोपले वहत्यतिकदर्थतां बत वराककः पामरः॥

अस्याः सर्गविधौ प्रजापतिरहो चन्द्रो न संभाव्यते,
नो देवः कुसुमायुधो न च मधुर्ददे विरञ्चिः प्रभुः ॥
एतन्मे मतमुत्थितं यममृतात्काचित्स्वयं सिन्धुना,
या मन्थाचललोडितेन हरये दत्त्वा श्रियं रक्षिता ॥

यो यं जनापकरणाय सृजत्यपायं तेनैव तस्य नियमेन भवेद् विनाशः ।
धूमं प्रसौति नयनान्धकरं यमग्निर्भूत्वाम्बुदः स शमयेत्सलिलैस्तमेव ॥

मौर्ख्यं सर्वापदां निष्ठा का हि नापदजानतः ।
तस्मिन्नप्यविषण्णो यः क्व सोऽन्यत्र विषत्स्यति ॥

यदि नाम कुले जन्म तत्किमर्थं दरिद्रता ।
दरिद्रत्वेऽपि मूर्खत्वमहो दुःखपरम्परा ॥

कः स्वभावगभीराणां जानीयाद् बहिरापदम् ।
बालापत्येन भृत्येन यदि सा न प्रकाश्यते ॥

सत्क्षेत्रप्रतिपादितः प्रियवचोबद्धालवालावलिः,
निर्दोषेण मनःप्रसादपयसा निष्पन्नसेकक्रियः ।
दातुस्तत्तदभीप्सितं किल फलं कालेऽपि बालोप्यसौ,
राजन् ! दानमहीरुहो विजयते कल्पद्रुमादीनपि ॥

हा कष्टं तटवासिनोऽपि विफलप्राग्भारमालोक्य मा-
मन्यत्रैव पिपासवः प्रतिदिनं गच्छन्त्यमी जन्तवः ।
इत्थं व्यर्थजलातिभारवहनप्रोद्भूतखेदादिव,
स्वां मूर्त्तिं वडवानले जलनिधिर्मन्ये जुहोत्यन्वहम् ॥

रत्नोज्ज्वलाः प्रविकिरँल्लहरीः समीरे-
रब्धिः क्रियेत यदि रुद्धतटाभिमुख्यम् ।
दोषोऽर्थिनः स खलु भाग्यविपर्ययाणां
दातुर्मनागपि न तस्य तु दातृतायाः ॥

भुजवनतरुच्छायां येषां निषेव्य महौजसां,
जलधिरशना मेदिन्यासीदसावकुतोभया ।
स्मृतिमपि न ते यान्ति क्ष्मापा विना यदनुग्रहं
प्रकृतिमहते कुर्मः स्वस्मै नमः कविकर्मणे ॥

ननं संस्कृतसाहित्ये एवंविधं काव्यकलासम्पन्नमैतिहासिकं काव्यं नास्ति । यद्यप्यन्येऽपि सन्ति केचनैतिहासिकाः सन्दर्भाः परन्तेऽस्य कलातुलामधिरोढुं नार्हन्ति ।

---

# आचार्य आनन्दवर्धनः

(क्रैस्त ८५०)

संस्कृतस्येतिहासे आनन्दवर्द्धनाचार्यस्याभिधानं स्वर्णाक्षरैरङ्कितं विलसति। अस्य सुप्रसिद्धः सन्दर्भः ध्वन्यालोको नाम। येन समस्तमलङ्कारशास्त्रमालोकितमिवाभाति। अस्मिन् हि ग्रन्थे ग्रन्थकृतः पदे पदे बुद्धिवैभवं, सूक्ष्मा विवेचनशक्तिः, गम्भीरार्थावगाहिता च भास्वररूपेण प्रतिभासमाना आलङ्कारिकाणामादरणीयतां जुषते। रसगङ्गाधरकृतस्तत्रभवतः पण्डितराजजगन्नाथस्योक्तिः स्थान एव प्रतिभाति यत्––"ध्वनिकृताम् आलङ्कारिकसरणिव्यवस्थापकत्वात्।" इति अनेन कवेः आनन्दवर्धनस्य अलङ्कारशास्त्रे परमप्रामाण्यमङ्गीक्रियते आलङ्कारिकैरिति। कविराजराजशेखरस्य प्रशस्तिरियं आनन्दवर्धनमुद्दिश्य नूनमृतम्भरा यत् :––

ध्वनिनातिगभीरेण काव्यतत्त्वनिवेशिना।
आनन्दवर्धनः कस्य नासीदानन्दवर्धनः॥

## आनन्दवर्धनस्य समयः

सोऽयमानन्दवर्धनः काश्मीरकराजस्य अवन्तिवर्मणः सभापण्डित आसील्लब्धप्रतिष्ठः इति राजतरङ्गिण्युल्लेखतोऽवगम्यते। अवन्तिवर्मणो राज्यकालश्च खीस्त ८५५ तमाब्दात् ८८३ तमाब्दं यावद्विभाव्यते। किञ्च आनन्दवर्द्धनेन आलङ्कारिकस्योद्भटस्य मतमुद्धृतं, राजशेखरेण च आनन्दवर्धनस्य मतं सङ्कीर्त्तितम्। एतेनेदं प्रतिपद्यते यदानन्दवर्धनः खीस्त ८०० मितसम्भवाद् उद्भटात् परजः, क्रैस्त ९०० तमाब्दभवाद् राजशेखराच्च पूर्ववर्त्ती आसीत्। अतः आनन्दवर्धनस्य समयः खिस्तीयनवमशताब्द्या मध्यभागे पर्यवसीयते ८५०-तममितदेशीय इति।

वस्तुतः ध्वन्यालोकस्य सम्पूर्णस्य प्रणेता आनन्दवर्धन एव आहोस्विदंशविशेषस्येति प्रश्नावतारे बहुभिः बहुविधमुपन्यस्तम्। अस्ति चात्र भूयान् मतभेदः विद्वत्सु। ग्रन्थोऽयं त्रिष्वङ्गेषु कारिकावृत्त्युदाहरणरूपेषु विभक्तः। तत्र कारिकासु सिद्धान्तप्रतिपादनं, वृत्तौ कारिकाव्याख्यानं, संस्कृतसाहित्यप्राक्कालीनमुनिपुङ्गवानां ग्रन्थेभ्यः सङ्कलितानि च उदाहरणानि। बहूनि तेषु च आनन्दवर्धनस्य स्वकीयान्यपि समुपात्तानि। प्रचलितपरम्परानुरोधेन, कारिका-वृत्तीत्युभयप्रणेता

आनन्दवर्धन एव । समेषामालङ्कारिकाणां प्रतीहारेन्दुराज-कुन्तक-महिमभट्ट-क्षेमेन्द्र-मम्मटप्रभृतीनां वचोविन्यासोऽपि पुष्णात्यमुमेवार्थम् । परन्तु अभिनवगुप्तेन 'लोचने' वृत्ति-कारिकयोः कर्त्तृभेदः प्रतिपादितः । एवं कारिकाकारकृते मूलग्रन्थकृत् वृत्तिकृत्कृते च ग्रन्थकृदिति प्रयोगोऽपि लोचने समुपलभ्यते । तदाधारीकृत्यैव पाश्चात्यैर्विद्वद्वरैः जोकोबी–कीथ–वुह्लरमहाशयैः, भारतीयैः विद्वद्वर डा० डे तथा काणेमहाभागैश्चापि मूलध्वनिकार-वृत्तिकारयोश्च पार्थक्यमभ्यधायि । एषामभ्युपगमेन कारिका केनापि सहृदयाख्येन विदुषा व्यरचि । तदवष्टम्भेनैव अभिनवगुप्तेनापि 'ध्वन्यालोकः' कतिचित्स्थलेषु 'सहृदयालोक' नाम्नापि उपन्यस्तः । इत्यादि । सर्वमेतत्तु भ्रमविजृम्भितम् । यत आनन्दवर्धनेन स्वयं ध्वन्यालोकस्यात्मकृतित्वमुपश्लोकितम्—'इति, काव्यार्थविवेको योऽयं चेतश्चमत्कृतिविधायी सूरिभिरनुसृतसारैरस्मदुपज्ञो न विस्मार्यः ।' इति ॥

अत्र 'अस्मदुपज्ञः' इतिपदं, स्फुटमानन्दवर्धन एव ध्वन्यालोककृदिति प्रत्याययति । किञ्चान्तिमे पद्येऽपि कविः स्पष्टमुपन्यस्यति —

"सत्काव्यतत्त्वविषयं स्फुरितप्रसुप्तकल्पं मनस्सु परिपक्वधियां यदासीत् ।
तद्व्याकरोत् सहृदयोदयलाभहेतोरानन्दवर्धन इति प्रथिताभिधानः ॥

अतः आनन्दवर्धनएव कारिकाकारो वृत्तिकारश्चेति श्रद्धेयः पक्षः । उपक्रमे स "तेन ब्रूमः सहृदयमनः प्रीतये तत्स्वरूप"मिति प्रतिजानीते, अन्ते च "तद् व्याकरोत्सहृदयोदयलाभहेतोरानन्दवर्धन इति प्रथिताभिधानः ।" इति चोपसंहरति ।

## आनन्दवर्धनस्य ग्रन्थाः

ध्वन्यालोकः, विषमबाणलीला (प्राकृतकाव्यम्), हरिविजयम्, अर्जुनचरितम्, मतपरीक्षा, धर्मोत्तमविनिश्चयटीका, देवी शतकम् ।

एष महाभागो न केवलमालङ्कारिकः कविरेव अपितु परमदार्शनिकश्चाप्यासीत् । अस्य मनोहारिणी रचनाऽपि नयनातिथीकरणीया —

अविरताम्बुजसङ्गतिसङ्गलद्बहलकेसरसंवलितेव वः ।
ललितवस्तुविधानसुखोल्लसत्तनुरुहा तनुरात्मभुवोऽवतात् ॥

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
एतत्प्रसिद्धावयवातिरिक्तमाभाति लावण्यमिवाङ्गनासु ॥

उद्यन्त्यमूनि सुबहूनि महामहांसि, चन्द्रोऽप्यलं भुवनमण्डलमण्डनाय ।
सूर्यादृते न तदुदेति न चास्तमेति येनोदितेन दिनमस्तमितेन रात्रिः ॥

नास्योच्छ्रायवती तनुर्न दशनौ नो दीर्घदीर्घः करः,
सत्यं वारण ! नैष केसरिशिशुस्त्वाडम्बरैः स्पर्धते ॥
तेजोबीजमसह्यमस्य हृदये न्यस्तं पुरा वेधसा,
तादृक् त्वादृशमेव येन सुतरां भोज्यं पशुं मन्यते ॥

केलिं कुरुष्व परिभुंक्ष्व सरोरुहाणि ।
गाहस्व शैलतटनिर्झरणीपयांसि ॥
भावानुरक्तकरिणीकर-लालिताङ्ग !
मातङ्ग ! मुञ्च मृगराजरणाभिलाषम् ॥

मनोरथशतैर्वृतो भुवननाथ-चूडोचित-
स्तृणैरलमधः कृतः कृतपदः क्वचिद् ग्रावसु ।
व्रजत्यपि सचेतसां विषयमीदृशां यो दृशोः,
लुठत्यचलकन्दरे विधुर एष चिन्तामणिः ॥

त्वयि जनार्दन ! भक्तिरचञ्चला, यदि भवेदफलप्रवणा मम ।
अभिलषाम्यपवर्गपराङ्मुखः पुनरपीह शरीरपरिग्रहम् ॥

आक्रान्ताः स्तनितैर्विलोचनजलान्यश्रान्तधाराम्बुभि-
स्त्वद्विच्छेदभुवश्च शोकशिखिनस्तुल्यस्तडिद्विभ्रमैः ।
अन्तर्मे दयितामुखं तव शशी वृत्तिः समाप्यावयो-
स्तत्किं मामनिशं सखे जलधर ! त्वं दग्धुमेवोद्यतः ॥

———————

# अप्पय दीक्षितः

तत्रभवानेष अप्पयदीक्षितमहोदयः दक्षिणजनपदमलञ्चकार स्वजनुषा। एष कविः प्रौढ़ो दार्शनिकः परमालङ्कारिकश्चासीत्। अनेके ग्रन्थाश्चास्य प्रणेतृत्वेन प्रसिद्धाः। असौ शैवमतावलम्बी आसीत्। अस्य भ्राता नीलकण्ठदीक्षित इति नाम्ना प्रख्यातः। अस्यैव पौत्रेण कविना नारायणदीक्षितेननीलकण्ठचम्पूनामको ग्रन्थः प्रणिबद्धः। एतच्चम्पूनिर्माणसमयः खृस्त १६३७ तममितो निर्धार्यते। तदनुरोधेन अप्पयदीक्षितमहोदयस्य समयोऽपि षोडशशताब्द्यामनुमीयते कालज्ञैः।

श्री अप्पयदीक्षितविरचितानां प्रसिद्धग्रन्थानां नामावलिः—१. आत्मार्पणस्तुतिः, २. उपक्रमपराक्रमम्, ३. कुवलयानन्दम्, ४. चतुर्मतसारसंग्रहः, ५. चन्द्रकलास्तुतिः, ६. चित्रमीमांसा, ७. दशकुमारचरितसंक्षेपः, ८. नामसंग्रहमाला, ९. ब्रह्मतर्कस्तवः, १०. मध्वमतध्वंसः, ११. रत्नत्रयपरीक्षा, १२. वरदराजशतकम्, १३. वैराग्यप्रकाशः, १४. शिवतत्त्वविवेकः, १५. शिवाद्वैतनिर्णयः, १६. हरिवंशसारचरितम् इत्यादयः। अस्य कवेः कतिपयानि मनोज्ञानि पद्यानि अत्र समुद्ध्राह्रियन्ते :—

नीतिज्ञा, नियतिज्ञा, वेदज्ञा अपि भवन्ति शास्त्रज्ञाः।
ब्रह्मज्ञा अपि लभ्याः स्वाज्ञानज्ञानिनो विरलाः॥
के चौराः के पिशुनाः के रिपवः केऽपि दायादाः।
जगदखिलं तस्य वशे यस्य वशे स्यादिदञ्चेतः॥
बङ्गाः कथमङ्गाः कथमित्यनुयुङ्क्ते वृथा देशान्।
कीदृक् कृतान्तपुरं कोऽपि न जिज्ञासते लोकः॥
त्यक्तव्यो ममकारस्त्यक्तुं यदि शक्यते नासौ।
कर्त्तव्यो ममकारः किन्तु स सर्वत्र कर्त्तव्यः॥
पुत्रा इति दारा इति पोष्यो मूर्खो जनान् ब्रूते।
अन्धे तमसि निमज्जन्नात्मा पोष्य इति नावैति॥
भोगाय पामराणां योगाय विवेकिनां शरीरमिदम्।
भोगाय च योगाय च न कल्पते दुर्विदग्धानाम्॥
अयुतं नियुतं वापि प्रदिशन्ति प्राकृताय भोगाय।
क्रीणन्ति न बिल्वदलैः कैवल्यं पञ्चषैर्मूढाः॥
अश्नीत पिबत खादत जाग्रत संविशत तिष्ठत वा।
सकृदपि चिन्तयताह्लः सावधिको देहबन्ध इति॥

---

# कविवरो वररुचिः

व्याकरणवार्त्तिककारोऽपि वररुचिनाम्ना स्मर्यते परं सोऽस्माद् वररुचेर्भिन्नः । तस्य समयस्तु ख्रीस्तसंवत्सरात् चतुःशतमितवर्षपूर्वतनः कालविद्भिर्निर्धार्यते । भविष्यपुराणलेखानुरोधेन भगवत्पादपतञ्जलिमुनिमहाभागात्पूर्वतनः कात्यायनस्यकालः । पतञ्जलेश्च समयः ख्रीस्तसंवत्सरात् १५० वर्षपूर्वतनः । तदेतेन वररुचेरुक्तसमय एव इति निश्चितप्रायः प्रतीयते ।

'प्राकृतप्रकाश'ख्यस्य ग्रन्थस्य कर्त्तुः कस्यचिद् वररुचिनाम्नो विदुषोऽप्युल्लेखो लभ्यते । एष एव कदाचिद् विक्रमादित्यंशासनकालसम्भवो वररुचिः सम्भवेन्नाम । यत एतत्प्रणीतेन पत्रकौमुदीप्रबन्धेन गम्यते यदसौ विक्रमादित्यसमकालमेव सञ्जात इति ।

विक्रमादित्यभूपस्य कीर्त्तिसिद्धिनियोगतः ।
श्रीमान् वररुचिर्धीमान् तनोति पत्रकौमुदीम् ।। इति ।

अस्य विषये सूक्तिमुक्तावल्यां महाकविना राजशेखरेणोट्टङ्कितम्—

यथार्थता कथं नाम्नि मा भूद् वररुचेरिह ।
व्यधत्त कण्ठाभरणं यः सदारो हरणप्रियः ।।

इत्यप्येतत्सूचयति यत् कण्ठाभरणो नाम कश्चनान्योऽपि एतत्प्रणीतः सन्दर्भोऽस्तीति । अस्य रचना त्वतीव मनोहारिणी :—

दानोपभोगवन्ध्या या सुहृद्भिर्या न भुज्यते ।
पुंसां यदि हि सा लक्ष्मीरलक्ष्मीः कतमा भवेत् ।।

प्रावृड्ऋतुवर्णनमातनुते :—

इन्द्रगोपैर्बभौ भूमिर्निचितेव प्रवासिनाम् ।
अनङ्गबाणैर्हृद्भेदस्रुतलोहितबिन्दुभिः ।।

सान्द्रनीहार-संवीत-तोयगर्भगुरूदरा ।
सततस्तनिताभ्राली निषसादाद्रिसानुषु ।।

व्योम्नि नीलाम्बुदच्छन्ने गुरुवृष्टिभयादिव ।
जग्राह ग्रीष्मसन्तापो हृदयानि वियोगिनाम् ।।

आलोहितमाकलयन् कन्दलमुत्कम्पितं मधुकरेण ।
संस्मरति पथिषु पथिको दयिताङ्गुलितर्जनाललितम् ।।

मानिन्याः मानावसर एव कुतः ? इति व्यङ्ग्यभङ्ग्या सङ्केतयति—

हस्ते कपोलममलं पथि चक्षुर्मनस्त्वयि ।
व्यस्तमास्ते चिरं तस्या मानस्यावसरः कुतः ?

शरदृतुमुपवर्णयति :—

मन्युनेव कृशां ग्रीष्मे वर्षासु रुदितामिव ।
शरत्प्रसादमनयच्छशाङ्कस्य निशाङ्गनाम् ।। इति ।।

किञ्च :—

उपकारिणि विक्षीणे शनैः केदारवारिणि ।
सानुक्रोशतया शालिरभूत्पाण्डुरवाङ्मुखः ।।

माधवाराधनं कियद् भक्तिसमुद्रेकेन याचते :—

यत्र यत्राभिजायेयं यदि दुःखाकुले कुले ।
तत्र तत्राक्षयम्मेऽस्तु माधवाराधनं धनम् ।।

—०—

## कवीश्वरी विज्जका

श्रीमती विज्जकानाम्नीयं कवीश्वरी अतीव मनोरमकाव्यरचयित्री। कुत्रत्या सा, कदा च जन्मपरिग्रहं जग्राहेति नाद्यापि सुविदितम्। या अस्याः सूक्तयः, अन्योक्तयश्च सुभाषितग्रन्थेषु सङ्कलिता दृश्यन्ते, ताभिरस्याः प्रौढपाण्डित्यं कवित्व-चातुरी च सम्यग् व्यज्यते। आत्मगौरवमुपवर्णयन्ती सा दण्डिनमाक्षिपतिः—

नीलोत्पलदलश्यामां विज्जकां[1] मामजानता।
वृथैव दण्डिना प्रोक्तं सर्वशुक्ला सरस्वती॥

अस्याः प्रौढाः पचेलिमाश्चोक्तीः श्रवणेष्ववतंसयन्तु रसिकाः—

कोषः स्फीततरः स्थितानि परितः पत्राणि दुर्गं जलम्,
मैत्रं मण्डलमुज्ज्वलं चिरमधो नीतास्तथा कण्टकाः।
इत्याकृष्टशिलीमुखेन रचनां कृत्वा तदप्यद्भुतं
यत्पद्मेन जिगीषुणापि न जितं मुग्धे त्वदीयं मुखम्॥

प्रियसखि! विपद्दण्डप्रान्तप्रयात परम्परा,
परिचयचले चिन्ताचक्रे निधाय विधिः खलः।
मृदमिव बलात्पिण्डीकृत्वा प्रगल्भकुलालवत्,
भ्रमयति मनो नो जानीमः किमत्र विधास्यति॥

विरम विफलायासादस्माद् दुरध्यवसायतो,
विपदि महतां धैर्यभ्रंशं यदीक्षितुमीहसे।
अयि जडविधेः कल्पापायाव्ययेन निजक्रमाः
कुलशिखरिणः क्षुद्रा नैते नवा जलराशयः॥

केनात्र चम्पकतरो! बत रोपितोसि कुग्रामपामरजनान्तिकवाटिकायाम्।
यत्र प्ररूढनवशाखविवृद्धलोभाद् गोभग्नवाटघटनोचितपल्लवोऽसि॥

माद्यद्दिग्गजदानलिप्तकरटप्रक्षालनशोभिता,
व्योम्नः सीम्नि विचेरुरप्रतिहता यस्योर्मयो निर्मलाः।
कष्टं भाग्यविपर्ययेण सरसः कल्पान्तरस्थायिन-
स्तस्यैकबकप्रचारकलुषं कालेन जातं जलम्॥

—०—

[1] इयं वर्णेन श्यामा आसीत्। आत्मानञ्च साक्षात् सरस्वतीं मेने।

# कविराजो लीलांशुकः

दाक्षिणात्योऽयं कविवरः प्रायशः अपरिचित एव। अस्य रचना इतस्ततः प्रकीर्णरूपेण उपलभ्यन्ते। ताभिः स्फुटं व्यज्यते यदासीत्कविरयं शिवभक्तः, श्रीकृष्ण-परायणश्च। अस्य कृष्णकर्णाभिधः पद्यसंग्रहः त्रिषु शतकेषु विभक्तः कयापि चेतोहारिण्या वाण्या ग्रथितोऽवभाति। तद्यथा :—

मुकुलायमाननयनाम्बुजं विभो ! मुरलीनिनादमकरन्दनिर्भरम्।
मुकुरायमाणमृदुगण्डमण्डलं मुखपङ्कजं मनसि मे विजृम्भताम्॥
मदशिखण्डि-शिखण्डविभूषणं, मदनमन्थरदिग्धमुखाम्बुजम्।
व्रजवधूनयनाञ्चलवञ्चितं विजयतां मम वाङ्मयजीवितम्॥
पुनः प्रसन्नेन मुखेन्दुमानसा पुरोवतीर्णस्य कृपामहाम्बुधेः।
तदेव लीलामुरलीरवामृतं समाधिविघ्नाय कदा नु मे भवेत्॥
अमुनाऽखिलगोपगोपनार्थं यमुनारोधसि नन्दनन्दनेन।
दमुनावनसम्भवः पपे नः किमु नासौ शरणार्थिनां शरण्यः॥
देवकीतनयपूजनपूतः पूतनारिचरणोदकधूतः।
यद्यहं स्मृतधनञ्जयसूतः किं करिष्यति स मे यमदूतः॥
प्रातर्भजामि दधिघोषविधूतनिद्रं, निद्रावसानरमणीयमुखारविन्दम्।
हृद्यानवद्यवपुषं नवनीतचौरो हृद्युन्मीलिताब्जनयनं नयनाभिरामम्॥
अयि मुरलि ! मुकुन्दस्मेरवक्त्रारविन्द-
श्वसनमधुरसज्ञां त्वां प्रणम्याद्य याचे।
अधरमणिसमीपं प्राप्तवत्यां भवत्यां
कथय रहसि कर्णे मद्दशां नन्दसूनोः॥
मुष्णानमेतत्पुनरुक्तशोभा मुष्णेतरांशोरुदयं मुखेन।
तृष्णाम्बुराशिं त्रिगुणीकरोति, कृष्णाह्वयं किञ्चन जीवितं मे॥
लावण्यवीचीललिताङ्गभूषां भूषापदारोपितपुण्यबर्हाम्।
कारुण्यधाराच्छकटाक्षमालां बालां भजे वल्लभवंशलक्ष्मीम्॥ इति॥

—०—

# श्रीभोजराजः

मालवमण्डले धाराधिपतिः कविराजो भोजदेवापरनामधेयो भोजराजः प्रसिद्धः कविः कवीनाञ्चाश्रयदाता चासीत् । यद्यप्यनेन नैके प्रबन्धा निबद्धाः तथाऽपि तेषु सरस्वतीकण्ठाभरणम्, रामायणचम्पू इति काव्यद्वयन्तु अतीव प्रसिद्धम् । नृपशिरोमणिरसौ बहुशास्त्रज्ञ आसीत् । योगदर्शने भोजवृत्तिर्मनुस्मृतौ चैका समीचीना टीका चाप्याटीकिता । भोजदेवस्य जनकः सिन्धुराजः । स्वर्गं प्रयाते तस्मिन् तत्कनीयान् भ्राता मुञ्जदेवः राज्येऽभिषिक्तः । स च बहुतरं भोजदेवं पुरन्दरपुरातिथीकर्त्तुं प्रायतत । परन्तु यस्य विधिः परिरक्षकः तं को नाम हन्तुं प्रभवति ? भोजदेवस्य कालः खीस्त ११ तमशतकदेशीयः सम्भाव्यते ।

काव्यशैली भोजदेवस्यातीव मनोज्ञा प्रज्ञामुग्धकरी च । सरला प्रसादगुणालङ्कृता भावसम्भृता च कस्य चेतो न चमत्करोति । तद्यथा :—

आबालवृद्धमनुगच्छति रामभद्र-
मेषा पुरी तदिह मा खलु निर्गुणा स्यात् ।
इत्यादरादिव धरा बहुधा विधाय,
धूलिच्छलान्निजतनुं तमनु प्रतस्थे ॥

नृपसुखविमुखेन स्वेन कान्तेन साकं,
दुहितरि विधिपाकात् काननाय व्रजन्त्याम् ।
अकुशलमिति मत्वा नूनमह्लाय धात्री
परिजनमुखबाष्पं पांसुभिः पर्यहार्षीत् ॥

यद्यस्ति कौतुकमपूर्वमृगे मृगाक्षि !
चान्द्रं हरामि हरिणं मम सन्निधेहि ॥
यावन्न मुञ्चसि मया हृतमेणमेनं,
तावद्दधातु तव वक्त्रतुलां मृगाङ्कः ।

—o—

# जैनकविः अमितगतिः

कविरेष जैनमतावलम्बी राज्ञो भोजदेवपितृव्यस्य मुञ्जदेवनृपतेः सभायां लब्धप्रतिष्ठः आसीत्। अनेन पण्डितप्रकाण्डेन धर्मपरीक्षा-सुभाषितरत्न-सन्दोह–श्रावकाचारप्रभृतयः बहवो ग्रन्था विरचिताः। अस्य स्थितिकालः खै स्त-९९३ तमाब्ददेशीयः निर्धार्यते। एतच्चास्य सुभाषितरत्नसन्दोहाख्यग्रन्थसमाप्ति-श्लोकेनैव विज्ञाप्यते :—

समारूढे तस्मिंस्त्रिदशवसतिं विक्रमनृपे
सहस्रे वर्षाणां प्रभवति हि पञ्चाशदधिके।
समाप्तं पञ्चम्यां भवति धरणिं मुञ्जनृपतौ
सिते पक्षे पौषे बुधहितमिदं शास्त्रमनघम्॥

एतदनुरोधेन ग्रन्थोऽयं विक्रमीय १०५० तमे सम्वत्सरे समाप्तिमगात्।

अमितगतिरपि काव्यकलायां प्रकामं नैपुण्यमाविष्करोति। अस्य कतिपय-रमणीयपद्यानामपि रस आस्वाद्यतां सहृदयैः। सतो लक्षणमारचयन्नसौ समुप-श्लोकयति :—

चित्ताह्लादि व्यवसनविमुखं शोकतापापनोदि,
यज्ञोत्पादि श्रवणसुखदं न्यायमार्गानुयायि।
तथ्यं पथ्यं व्यपगतमदं सार्थकं मुक्तवादम्,
यो निर्दोषं रचयति वचस्तं बुधाः सन्तमाहुः॥

कर्णोपान्तविलसितं केशश्वेतिमानमधिकृत्य सम्यगुत्प्रेक्षते :—

भवति मरणं प्रत्यासन्नं, विनश्यति यौवनम्,
प्रभवति जरा सर्वाङ्गाणां विनाशविधायिनी।
विरमत बुधाः कामार्थेभ्यो वृषे च कुरुतादरं,
वदितुमिति वा कर्णोपान्तस्थितं पलितं जने॥

चलयति तनुं दृष्टेर्भ्रान्तिं करोति शरीरिणां,
रचयति बलादव्यक्तोक्तिं तनोति गतिक्षतिम्।
जनयति नाना निन्दामनर्थपरम्परां
हरति सुरभिं गन्धं देहाज्जरा मदिरा यथा॥

सज्जनसङ्गतिं वर्णयति :—

तृष्णां चित्ते शमयति मदं ज्ञानमाविष्करोति,
नीतिं सूते हरति विपदं सम्पदं सञ्चिनोति।
पुंसां लोकद्वितयशुभदा सङ्गतिः सज्जनानां,
किं वा कुर्यान्न फलममलं दुःखनिर्नाशदक्षा॥

अन्यदपि :—

प्रबलपवनापातध्वस्तप्रदीपशिखोपमै-
रलिमलनिभैः कामोद्भूतैः सुखैर्विषसन्निभैः।
समपरिचितैर्दुःखप्रान्तैः सतामतिनिन्दितै-
रिति कृतमनाः शङ्के वृद्धः प्रकम्पयते करौ॥

येनेन्द्रियाणि विजितान्यतिदुर्धराणि-
तस्याविभूतिरिह नास्ति कुतोऽपि लोके।
श्लाघ्यं च जीवितमनर्थविमुक्तमुक्तं,
पुंसो विविक्तमतिपूजिततत्त्वबोधैः॥

लोकार्चितं गुरुजनं पितरं सवित्रीं,
बन्धुं सनाभिमबलां सुहृदं स्वसारम्।
भृत्यं प्रभुं तनयमन्यजनञ्च मर्त्यो,
नो मन्यते विषयवैरिवशः कदाचित्॥

लोकार्चितोऽपि कुलजोऽपि बहुश्रुतोऽपि,
धर्मस्थितोऽपि विरतोऽपि शमान्वितोऽपि॥
अक्षार्थ[1]पन्नगविषाकुलितो मनुष्य-
स्तन्नास्ति कर्म कुरुते न यदत्र निन्द्यम्॥

जरां वर्णयन्नाह :—

जनयति वचोऽव्यक्तं वक्त्रं तनोति मलाविलं,
स्खलयति गतिं हन्ति स्थाम श्लथीकुरुते तनुम्।
दहति शिखिवत् सर्वाङ्गाणाञ्च यौवनकाननम्,
गमयति वपुर्मर्त्यानां वा करोति जरा न किम्॥

नूनं कवेरस्य भाषाशैली प्रसादरम्या, उत्प्रेक्षा च प्रशंसनीया। शान्तरस-

१. अक्षार्थोऽत्र ऐन्द्रियविषयः, द्यूतक्रीडनपन्नगविषाकुलितश्चेति। पदमिदं श्लेषेण व्याख्येयम्।

संवलिता हितोपदेशपरा च रचनेयं सुभृशं स्पृहणीयतामुत्तेजयति, काव्यरसिकानां हृदयेषु। भूयांसि पद्यानि चास्य सुभाषितसन्दर्भेषु संगृहीतानि विभाव्यन्ते।

## अन्ये जैनकवयः

संस्कृतसाहित्यललामभूता अन्येऽपि बहवो जैनकवयो विलसन्ति। ग्रन्थविस्तरभिया न सर्वेषां तेषां वर्णनमिहोपक्रान्तम्। परन्तु तेषु दिगन्तविश्रान्तकीर्त्तीनां महाकवीनां वर्णनमप्रस्तुत्याग्रे धावनमप्यन्याय्यमिति तेषां समासेन संस्मरणमात्रमत्र प्रस्तूयते—

धनेश्वरसूरिः—कविरयं क्रैस्त ५१० मितेऽब्दे जातः शत्रुञ्जयाख्यमस्य महाकाव्यम् चतुर्दशसर्गनिबद्धम्। नैकेषां राज्ञां कीर्त्तिराश्यनुबन्धिन्यो दन्तकथा अत्र काव्यरूपेण सन्दृब्धाः।

वाग्भट्टः—अनेन पञ्चदशसर्गात्मकं महाकाव्यं जैनतीर्थङ्करस्य नेमिनाथस्य चरित्ररूपेण गुम्फितं चारुतरं प्रसादगुणालङ्कृतं विनिर्मितम्। अस्य समयः क्रैस्त ११४० तमाब्दमध्यवर्त्ती सम्भाव्यते।

अभयदेवः—अनेन एकोनविंशतिसर्गगुम्फितं जयन्तविजयाख्यं महाकाव्यं निर्मितम् यत्र मगधाधिपस्य जयन्तस्य विजयवर्णनमुपश्लोकितम्।

अमरचन्द्रः—अनेन संक्षिप्तबालभारताख्यं चतुश्चत्वारिंशत्सर्गनिबद्धं, ६९५० श्लोकैरुपगुम्फितं महाभारतीयकथामाश्रित्य विरचितम्।

एभ्योऽन्येऽपि वीरनन्दी–देवप्रभसूरि–वस्तुपाल–बालचन्द्रसूरि–देवविमलगणिप्रभृतयः लोकविश्रुताः कवयः व्यराजन्त, येषां काव्यधारानुशीलनं संस्कृतवाङ्मयवारिधिमवगाढुमभिलषतां सहृदयरसिकानां खल्वनिवार्यमेव, विद्वद्भिस्तत्र तत्रैव परामर्शनीयम्। अत्र तु वयं स्वल्पतरावकाशपारवश्याद् हन्त! वाचंयमाः। इति दिक्।

—०—

# कविवरो दिवाकरः

कविवरो दिवाकरोऽयं चाण्डालकुले लब्धजन्माऽपि अतीव लब्धप्रतिष्ठः लब्धख्यातिश्च बभूव। नृपतेः श्रीहर्षस्यासौ राजपण्डित आसीत्। चाण्डालवंशजातत्वादेवासौ मातङ्गदिवाकर इति नाम्ना जेगीयते। राजशेखरेण दिवाकरमुद्दिश्योल्लिखितम् :—

अहो प्रभावो वाग्देव्या यन्मातङ्गदिवाकरः।
श्रीहर्षस्याभवत्सभ्यः समो बाणमयूरयोः॥

एवं नृपतिश्रीहर्षसमय एवास्य स्थितिकालः सम्भवति। यद्यपि अनेन कश्चन प्रबन्धो विरचितो न वेति न वक्तुं शक्यते, परन्तु कवेरस्य स्फुटानि पद्यानि यानि सुभाषितग्रन्थेषु बहुशो दृश्यन्ते, तैरवगम्यते यदसौ श्लेषप्रियः प्रौढः कविः। रचनाऽप्यस्य सरसा, मनोहारिणी, भावविभूषिता च :—

पातु वो मेदिनी-दोला बालेन्दुद्युतितस्करी।
दंष्ट्रा महावराहस्य पातालगृहदीपिका॥

अनिस्सरन्तीमपि गेहगर्भात् कीर्त्ति परेषामसतीं वदन्ति।
स्वैरं चरन्तीमपि च त्रिलोक्यां त्वत्कीर्त्तिमाहुः कवयः सतीं तु॥

याते शमं रजसि जातजलाभिषेका,
धौताम्बराः स्फुरितपाण्डुपयोधरान्ताः।
पत्युः प्रजार्थमधुना तव पुष्पवत्यो,
वाञ्छन्ति सङ्गममिमाः ककुभश्चतस्रः॥

किं वृत्तान्तैः परगृहगतैः किन्तु नाहं समर्थ-
स्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः।
गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्या-
मुन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्त्तिः॥

—०—

# कविवरो भट्ट भल्लटः

कविवरो भट्टभल्लटोऽयं काश्मीरक एवेति जय्यट-कय्यट-उव्वट-मम्मटादि-नामसाम्येन सम्यगनुमातुं सुशकम्। यद्यपि कवेरस्य स्थितिकाल इदन्तया प्रतिपत्तुन्तु दुःशकम्, तथापि आलङ्कारिकेण मम्मटभट्टेन एकादशतमशताब्दीसंभवेनास्यानेकानि पद्यानि काव्यप्रकाशे समुट्टङ्कितानि, अतः तत्पूर्वभवेनैवानेन भवितव्यम्।

अस्य शैली तु प्रायशः प्रासादिकी शब्दालङ्कारबहुला अन्योक्तिसंवलिता च बाभाति। तद्यथा :—

दानार्थिनो मधुकरा यदि कर्णतालै-
दूरीकृता करिवरेण मदान्धबुद्धचा।
तस्यैव गण्डयुगमण्डनहानिरेषा,
भृङ्गा पुनर्विकचपद्मवने चरन्ति॥

ग्रावाणो मणयो हरिर्जलचरो लक्ष्मीः पयोमानुषी,
मुक्तौघाः सिकताः प्रवाललतिका शैवालमम्भः सुधा॥
तीरे कल्पमहीरुहाः किमपरं नामापि रत्नाकरो,
दूरे कर्णरसायनं निकटतस्तृष्णापि नो शाम्यति॥

भेकेन क्वणता सरोषपरुषं यत्कृष्णसर्पानने,
दातुं कर्णचपेटमुज्झितभिया हस्तः समुल्लासितः।
यच्चाधोमुखमक्षिणी पिदधता नागेन तत्र स्थितं,
तत्सर्वं विषमन्त्रिणो भगवतः कस्यापि लीलायितम्॥

विशालं शाल्मल्या नयनसुभगं वीक्ष्य कुसुमं,
शुकस्याभूद् बुद्धिः फलमपि भवेदस्य सदृशम्।
इति ध्यात्वोपास्तं फलमपि च दैवात्परिणतं,
विपाके तूलोऽन्तः सपदि मरुता सोऽप्यपहृतः॥

आबद्धकृत्रिमसटाजटिलांसभित्तिरारोपितो मृगपतेः पदवीं यदि श्वा।
मत्तेभकुम्भतटपाटनलम्पटस्य नादं करिष्यति कथं हरिणाधिपस्य॥

रज्ज्वा दिशः प्रविततता सलिलं विषेण, पाशैर्मही हुतभुजा ज्वलिता वनान्ताः।
व्याधाः पदान्यनुसरन्ति गृहीतचापाः, कं देशमाश्रयतु यूथपतिर्मृगाणाम्॥

नूनमस्यान्योक्तयोऽत्युज्ज्वलाः प्राञ्जला भाषा चापि। इति॥

—०—

# श्रीगोवर्धनाचार्यः

लब्धख्यातिः शृङ्गारकविशेखरीभूतो गोवर्धनाचार्योऽयं बङ्गनरेशस्य श्रीलक्ष्मणस्य ऋस्त ११११६ मितशताब्दभवस्य राजसभापण्डित आसीत्। 'हाल' कृत प्राकृतसप्तशतीसरणिमनुसृत्यानेनापि स्वकीया सप्तशती आर्याच्छन्दोभिरेव निबद्धा। आर्याच्छन्दसां गुम्फनप्रकर्षो यथाविधः गोवर्धनाचार्यस्यार्यासु परिष्कृत-रूपेण प्रतिपन्नः न तादृशः अन्यत्रोपलभ्यते। गीतगोविन्दस्यामरकविना श्री जयदेव-महाभागेन गोवर्धनाचार्यस्यातीव प्रशंसा कृता। विशिष्य तु शृङ्गारचित्रणे।

"शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्धनस्पर्धी कोऽपि न विश्रुतः"

इत्यादि पद्येनास्याऽद्वितीयत्वमुपपादितम्।

मसृणपदरीतिगतयः सज्जनहृदयाभिसारिकाः सरसाः।
मदनाद्वयोपनिषदा विशदा गोवर्धनस्यार्याः॥

वस्तुतः अस्यार्यासु शृङ्गारस्य मनोहरा मार्मिकी च व्यञ्जना, प्रेमि-प्रेमिकयोरन्तस्तलोत्थललितकोमलकल्पनाकलापः, सुकुमारभावभङ्गितरङ्गाः, पूर्ण-परिपक्त्रिमतया परिणताः प्रतिभान्ति। उपमारूपकादिसादृश्यलक्षणालङ्कारेषु कापि निसर्गसुभगा रचनाचातुरी, गोवर्धनाचार्यं कव्यन्तरेभ्यो विशेषयति। आर्या तस्य सालङ्कृता ललितपदावलिसंवलिता कस्य मनः प्रीतये न भवति? तद्यथा——

सा सर्वथैव रक्ता रागं गुञ्जेव न तु मुखे वहति।
वचनपटोस्तव रागः केवलमास्ये शुकस्येव॥

अपि च:——

पिब मधुप बकुलकलिकां दूरे रसनाग्रमाधाय।
अधरविलेपसमाप्ये मधुनि मुधा वदनमर्पयसि॥

अन्यमुखे दुर्वादो यः प्रियमुखे स एव हि परिहासः।
इतरेन्धनजन्मा यो धूमः सोऽगुरुसमुद्भूतो धूपः॥

सत्कविरसनाशूर्प – निस्तुषशब्दशालिपाकेन।
तृप्तो दयिताऽधरमपि नाद्रियेे का सुधा वराकी॥

सप्तशतमितैरार्याछन्दोभिर्गुम्फिता 'आर्यासप्तशती' स्फुटश्लोकानां संग्रह-मात्रा, लब्धख्यातिरचना नूनं प्रशंसार्हा तथापि यादृशं माधुर्यं रसपरिपाकश्च

प्राकृतभाषया निबद्धायां न तथाऽऽर्यासप्तशत्याम्, आर्यासप्तशती तस्य प्राकृतसन्दर्भस्य तुलां नैव संस्पृशति। शृङ्गारमसृणत्वमस्यातीव सहृदयहृदयावर्जकम् :—

सुप्रभाते भगवत्याः पार्वत्याः चक्षुश्चुम्बनेन तद्गतकज्जलकालिम्नावलिप्तौष्ठकं शिवमवलोक्य, यदसौ निगलितं गरममुद्वमति, इति समाकलयता वेधसा मा वम, संवृणु इति आदिष्टः शिवो विलज्जितो जयति, इति कविरुट्टङ्कयति :—

मा वम संवृणु विषमिदमिति सातङ्कं पितामहेनोक्तः।
प्रातर्जयति सलज्जः कज्जलमलिनाधरः शम्भुः॥
सन्ध्यासलिलाञ्जलिमपि कङ्कणफणिपीयमानमविजानन्।
गौरीमुखार्पितमनाः विजयाहसितः शिवो जयति॥
ब्रह्माण्डकुम्भकारं भुजगाकारं जनार्दनं नौमि।
स्फारे सत्फणाचक्रे धरा शरावश्रियं वहति॥
विहितघनालङ्कारं विचित्रवर्णावलीस्फुरणम्।
शक्रायुधमिव वक्रं वल्मीकभुवं कविं नौमि॥
व्यासगिरां निर्यासं सारं विश्वस्य भारतं वन्दे।
भूषणतयैव संज्ञां यदङ्किता भारती वहति॥
भोगाक्षमस्य रक्षां दृङ्मात्रेणैव कुर्वतोऽनभिमुखस्य।
वृद्धस्य प्रमदापि श्रीरपि भृत्यस्य भोगाय॥
अतिदीर्घजीविदोषाद् व्यासेन यशोऽपहारितं हन्त।
कैर्नोच्यते गुणाढ्यः स एव जन्मान्तरापन्नः॥
श्रीरामायणभारतबृहत्कथानां कवीन्नमस्कुर्मः।
त्रिस्रोता इव सरसां सरस्वती स्फुरति यैर्भिन्नाः॥
आकलितशब्दालङ्कृतिरनुकूला स्खलितपदनिवेशापि।
अभिसारिकेव रमयति सूक्तिः सोत्कर्षशृङ्गारा॥

जयदेवस्य प्राग्वर्णितगोवर्धनाचार्यप्रशस्तिबलादेतन्निश्चितं यदसौ जयदेवकालात्प्राक्कालभवः। अथ च बङ्गाधिपतेः लक्ष्मणसेनस्य राजसभायां गोवर्धनाचार्यो लब्धकीर्त्तिः राजकविरासीद् इति निम्नाङ्कितेन पद्येनाकलयामः —

गोवर्धनश्च शरणो जयदेव उमापतिः।
कविराजश्च रत्नानि समितौ लक्ष्मणस्य च॥

राज्ञो लक्ष्मणस्य च स्थितिकालः क्रैस्त-एकादशतमशताब्द्यां निर्धार्यते कालविद्भिः। स एवास्यापि समयः सम्भवति इति।

—०—

# कविवरो धनञ्जयः

धनञ्जयोऽयं जैनकविः, 'द्विसन्धानाख्य'काव्यस्य प्रणेता। द्विसन्धाननामकं काव्यमिदं राघवपाण्डवीयनाम्नापि प्रसिद्धम्। कविवरोऽयं राज्ञो मञ्जुराजस्यासीत् सभापण्डितः। सूक्तिमुक्तावल्यां राजशेखरेणास्य महती प्रशंसा कृता :—

द्विसन्धाने निपुणतां सतां चक्रे धनञ्जयः।
यया जातं फलं तस्य सतां चक्रं धनञ्जयः॥

अस्य कृतित्वेन प्रख्याताः द्विसन्धानम्, निघण्टुः, दशरूपकञ्चेति त्रयः सन्दर्भाः। तत्र दशरूपकप्रणेता कश्चिदन्यो धनञ्जय इत्येके। परन्तु जैनास्त्वयमेव धनञ्जयो दशरूपककर्त्तेति समामनन्ति।

धनञ्जयस्य जनको वासुदेवो, जननी च श्रीदेवी गुरुस्तावद् दशरथनामा परमपण्डितः इति द्विसन्धानकाव्योपनतेनैकेन श्लोकेनावगम्यते।

द्विसन्धानेऽस्मिन् काव्ये राघवानां पाण्डवानां श्लेषेण चमत्कारपूर्णं कृतं वर्णनमतीव रचनाचातुरीं द्योतयति कवेः। तद्यथा—

अथ कदा नु वशा न परासुता पुरमुपेत्य सदुर्जनकस्य वा।
क्रियत इत्ययमाकुलमानसः प्रभुरवोचत वीक्ष्य पयोनिधिम्॥
अयमगाधगभीरगुरुर्गुणैरुपगतो नियतावधिरार्द्रताम्।
यतिरिवाखिलसत्त्वहितव्रतो जलनिधिः सकलैरवलोक्यताम्॥
असुतरां सुतरां स्थितिमुन्नतामसुमतां सुमतां महतां वहन्।
अरुचितैरुचितैर्मणिराशिभिः स्वरुचितैरचितैरवभात्ययम्॥
अनिधनेन रसातलवासिना विदलितो निबिडं वडवाग्निना।
इह मुहुः शफरीपरिलङ्घनव्यतिकरः क्वथतीव सरित्पतिः॥
कल्लोलाः सपदि समुद्धृता मरुद्भिर्गण्डूषा इव करियादसां विभान्ति।
और्वाग्निज्वलनशिखापशङ्कामेतस्मिन् विदधति पद्मरागभासः॥
भान्त्येतस्मिन् मणिकृतरङ्गाभोगस्तत्सारूप्यन्निहिततरङ्गभोगाः।
क्रीडास्थानैरुचिरमहीनामुच्चैरुद्भ्रान्तानां सुचिरमहीनामुच्चैः॥
एतान् प्रवालविटपान् स्वतटीभिरूढा रूढान्निषिञ्चतिहतैरुदधितरङ्गैः।
रङ्गैरिहाम्बुकणां निकटे वसन्तं सन्तं न सत्त्वसहिता ह्यवधीरयन्ति॥

—०—

# कविवरो दामोदरगुप्तः

दामोदरगुप्तोऽयं काश्मीरकः। काश्मीराधिपतेर्जयापीडस्य[1] च मुख्यामात्यपदारूढः। नृपमणिः जयापीडोऽतीव विद्याप्रणयी, विद्वद्वरेभ्यः कविशेखरेभ्यः प्रदत्तबहुमानः। अस्य राजसभायाञ्च बहव पण्डितपरीन्द्राः विराजन्ते स्म। राजतरङ्गिण्याञ्च दामोदरस्य संस्मरणमुल्लसति :—

तं दामोदरगुप्ताख्यं कुट्टिनीमतकारिणम्।
कविं कविं बलिरिव धुर्यं धीसचिवं व्यधात्॥

अनेन कविना 'कुट्टिनीमत'मित्याख्यं विलक्षणं काव्यमुपनिबद्धम्। यत्र कुट्टिनीनां छलछद्मप्रपञ्चः, विकटकूटकापट्यपाटवञ्च विशदध्य प्रपञ्चितम्।

प्रसिद्धालङ्कारिकेण मम्मटाचार्येण स्वकीयकाव्यप्रकाशे कुट्टिनीमतघटितपद्यानि समुद्धृतानि। तथैव स्वकीये कविकण्ठाभरणे क्षेमेन्द्रेणापि। एतेन मम्मटक्षेमेन्द्रयोः प्राक्कालीनत्वं दामोदरगुप्तस्य सुतरां समुपपन्नं भवति।

दामोदरगुप्तस्य काव्यसरणिर्नूनं कामपि रमणीयतां पुष्णाति :—
विरहिण्या दूतीकृतं वर्णनमारचयन्नाह :—

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला॥
कुमुदामोदी पवनः पिककूजितभृङ्गसार्थरसितानि।
इयमिति सामग्री घटिता दैवेन तद्विनाशाय॥
जीवन्नेव मृतोऽसौ यस्य जनो वीक्ष्य वदनमन्योऽन्यम्।
कृतमुखभङ्गो दूरात्करोति निर्देशमङ्गुल्या॥

कुट्टिनी प्रतारयति स्ववशम्वदम्—

इदमपरमद्भुततमं युवतिसहस्रैर्विलुठ्यमानस्य।
वृद्धिर्भवति न हानिर्यत्तव सौभाग्यकोषस्य॥
आरोग्यं विद्वत्ता सज्जनमैत्री महाकुले जन्म।
स्वाधीनता च पुंसां महदैश्वर्यं विनाप्यर्थैः॥
एकीभावं गतयोर्जलपयसोर्मित्रचेतसोश्चैव।
व्यतिरेककृतौ शक्तिर्हंसानां दुर्जनानाञ्च॥

---

१. काश्मीराधिपस्य जयापीडस्य समयः कालविद्भिः अष्टमशताब्द्यां विभाव्यते।' अस्य शासनकालः ७५५ तमाब्दात् ७८६ तमाब्दपर्यन्तम्। तेनाऽस्य कवेरपि समयः उक्त एवेति प्रमीयते।

# कविवरो जल्हणः

कविवरो जल्हणः जन्मना काश्मीरानलञ्चकार। कविरेष मुरारिवद् वक्रोक्तिरचनायामतिचतुरः। काश्मीरकराजपुरीराज्ञोऽसौ मन्त्रिमुख्यः[1]। सोमविलासाख्यं काव्यञ्चास्य प्रसिद्धा कृतिः। राजानकरूप्यकेण चास्य 'अलङ्कारानुसारिणी' टीका व्यरचि। काव्येऽस्मिन् राज्ञः सोमपालस्य वर्णनमतीव चारुतया प्रपञ्चितम्। काव्यञ्चास्यातीव कमनीयं सहृदयहृदयावर्जकं रसिकजनमनोरञ्जकञ्च सम्पन्नम् :—

स्वप्रज्ञया कुञ्चिकयेव केचित्, सारस्वतं विक्रमभङ्गिभाजम्।
कवीश्वरः कोऽपि पदार्थकोशमुद्घाट्य विश्वाभरणं करोति॥
दैवीर्गिरः केऽपि कृतार्थयन्ति ताः कुण्ठयन्त्येव पुनर्विमूढाः।
या विप्रुषः शुक्तिमुखेषु दैव्यस्ता एव मुक्ता न तु चातकेषु॥
परिश्रमज्ञं जनमन्तरेण मौनव्रतं बिभ्रति वाग्मिनोऽपि।
वाचंयमा सन्ति विना वसन्तं पुंस्कोकिलाः पञ्चमचञ्चवोऽपि॥
हे गन्धकुञ्जर महागिरिकुञ्जराजिमद्यापि मा स्मर सलीलनिलीलिताक्ष।
मुञ्चाभिमानमधुना भज वर्त्तमानं वक्रं विधेरुपरि शासनमङ्कुशञ्च॥
यत्रोषितोऽसि चिरकालमकिञ्चनः सन्नर्णःप्रतिग्रहधनग्रहणाधमर्णः।
निर्लज्ज गर्जसि समुद्रतटेऽपि तत्र धृष्टोऽधमस्तव समो घन नैव दष्टः॥
आस्यं निरस्य रसितैः सुचिरं विहस्य,
गात्रान्तरेषु घन! वर्षसि चातकस्य।
तच्चञ्चुकोटिकुटिलायतकन्धरस्य
प्राणात्ययोऽस्य भवतः परिहासमात्रम्॥ इति

---

१. यथा चरति वक्रेण वाग् यस्य चतुरैः पदैः।
सरस्वत्यै विनिर्मातुमुद्यतेव प्रदक्षिणम्॥
प्रक्रमैर्हठवक्रिम्णो मुरारिमनुधावतः।
श्रीराजशेखरगिरो नीवी यस्योक्तिसम्पदाम्॥
श्रीमद्राजपुरीसन्धिविग्रहस्य नियोगिनम्।
अथानर्चं वचोभिस्तं जल्हणं विनयाञ्चितैः॥
एभिः स्वविरचितैरस्य पद्यैरेवास्य 'शरणीकृतमुरारि-राजशेखररचना-सरणित्वमवगम्यते इति।

# कविवरो भिक्षाटनः

कविवरः शिवापरनामाऽयं भिक्षाटनः कुत्रत्यः, कश्चास्य स्थितिकालः इति सर्वमप्यज्ञातमेवाद्यावधि। परन्त्वस्य भिक्षाटनमितिनामकं यत्खण्डकाव्यमुपलभ्यते, तन्नाम्नैवासावपि भिक्षाटन इति नाम्ना प्रसिद्धिं गतः। अस्मिन् हि काव्ये त्रिपुरदाहानन्तरं यद् भिक्षाटनं कृतं तदधिकृत्यैव एतत्काव्यं विरचितम्। काव्येऽस्मिन् कालिदासबाणभट्टयोरुल्लेखेनावगम्यते यत्तयोरनन्तरमेवास्य काव्यस्य सृष्टिः। रचनाऽस्य अतीव हृदयङ्गमा मनोहारिणी च तद्यथा :—

भिक्षाटनेन पुरुहूतपुराङ्गनाना-
माकस्मिकोत्सवविधायिनि चन्द्रमौलौ।
तासामनङ्गशरजर्जरमानसानां,
नानाविधानि चरितानि वयं वदामः॥

काचिन्निवारितबहिर्गमना जनन्या,
द्रष्टुं प्रियं भवनजालकमाससाद।
तस्या विलोचनमदृश्यत दाशदत्तं,
यन्त्रोपरुद्धशफरोपमितं क्षणेन॥

खलेषु सत्सु निर्याता वयमर्जयितुं गुणान्।
इयं सा तस्करग्रामे रत्नक्रयविडम्बना॥
वर्धते स्पर्द्धते वोभौ संपदा शतशाखया।
अङ्कुरो वस्करोद्भूतः पुरुषश्चाऽकुलोद्भवः॥

अस्थानगामिभिरलङ्करणैरुपेता, भूयः पदस्खलननिह्नुतिरप्रसन्ना।
वाणीव कापि कुकवेर्जनहास्यमाना द्राङ्निर्गता निजगृहाद्वनिता मदान्धा॥

—o—

# कवीन्द्रश्चन्द्रकः

कवीन्द्रश्चन्द्रकोऽयं प्राचीनः कविः जन्मपरिग्रहेण काश्मीराननुजग्राह । महाकविना कल्हणेन चन्द्रकमुद्दिश्य वर्णितं यत्––

नाट्यं सर्वजनप्रेक्ष्यं यश्चक्रे स महाकविः ।
द्वैपायनमुनेरंशस्तत्काले चन्द्रकोऽभवत् ॥

अनेन सूच्यते यदनेन सर्वजनप्रेक्ष्यं नाटकमपि प्रणीतम् यदधुना नोपलभ्यते । कोऽस्याऽऽविर्भावकाल इति नेदन्तया निर्णेतुं पार्यते । परं सुभाषितग्रन्थेषु अस्य श्लोकसंग्रहणादनुमातुमिदं नायुक्तं यत्कविरेष अति प्राचीन इति ।

प्रौढा, निसर्गसुभगा, अस्य रचनासरणिरपि प्रेक्षणीया :––

एषा हि मे रणगतस्य दृढप्रतिज्ञा, द्रक्ष्यन्ति यन्न रिपवो जघनं हयानाम् ।
युद्धेषु भाग्यचपलेषु न मे प्रतिज्ञा दैवं यदिच्छति जयञ्च पराजयञ्च ॥

एकेनाक्ष्णा परिणतरुषा पाटलेनास्तसंस्थं,
पश्यत्यर्कं कुमुदविशदेनापरेण स्वकान्तम् ।
अह्नश्छेदे दयितविरहाशङ्किनी चक्रवाकी,
द्वौ सङ्कीर्णौ रचयति रसौ नर्तकीव प्रगल्भा ॥

कृष्णेनाम्ब ! गतेन रन्तुमधुना मृद् भक्षिता स्वेच्छया,
सत्यं कृष्ण क एवमाह मुसली मिथ्याऽम्ब ! पश्याननम् ।
व्यादेहीति विकासितेऽथ वदने माता समस्तं जगत्,
दृष्ट्वा यस्य जगाम विस्मयवशं पायात्स वः केशवः ॥

स पातु वो यस्य हतावशेषास्तत्तुल्यवर्णाञ्जनरञ्जितेषु ।
लावण्ययुक्तेष्वपि वित्रसन्ति दैत्याः स्वकान्तानयनोत्पलेषु ॥

––०––

# कविवरो मङ्खकः

कविवरो मङ्खकोऽयं जन्मना काश्मीरान् विभूषयामास। कविरेष कर्णिकारमङ्खकः, पण्डितमङ्खक इति नामद्वयेनाऽपि प्रसिद्धः। महाकविक्षेमेन्द्रादनन्तरमेकस्यामेव शताब्द्यामयमपरो महाकविः ख्यातिङ्गतः। प्रसिद्ध आलङ्कारिको रुय्यकोऽस्य गुरुः। उभावपि गुरुशिष्यावेतौ काश्मीराधिपतेर्जयसिंहस्य ख्रीस्त-११२९–५० पर्यन्तं लब्धस्थितिकालस्य सभापण्डितावास्ताम्। अस्य कृतित्वेन प्रसिद्धं श्रीकण्ठचरितन्नाम महाकाव्यम् पञ्चविंशतिसर्गनिबद्धम्। यत्र लघीयसि अपि कथानके, महाकाव्यानुगुण्येन दोला-पुष्पावचय-जलक्रीडा-सन्ध्या-चन्द्र-चन्द्रोदय-प्रसाधना-पानकेलि-क्रीडा-प्रभादिविशदवर्णनेनास्य महाकाव्यत्वं प्रसाधितं सम्भाव्यते। रचना खलु नूनमुच्चकोटिमवगाहते। रुचिरः पदविन्यासः, मनोहारिणी कल्पना, भक्तिरसोद्रेकोऽत्र अतीव शालीनतया पल्लवितः। अतएव तेजःकण्ठेन कवेरस्य प्रशस्तिमुखेन निरूपितम्:—

निष्कलङ्कं तवैकस्य श्रीमङ्खकवितादभुतम्।
स्पष्टोक्तिर्यस्य नास्तुत्य-स्तुतिकीर्त्तनपांसुभिः॥ इति॥

अस्य काव्यनिदर्शनमपि किञ्चिदालोकनीयम्:—

शुक्तौ शुचावेव परे कवीनां, सद्यः प्रमादस्खलितं लभन्ते।
अधौतवस्त्रे चतुरैः कथं वा विभाव्यते कज्जलविन्दुपातः॥ २९॥

नो शक्य एव परिहृत्य दृढां परीक्षां,
ज्ञातुं मितस्य महतश्च कवेर्विशेषः।
को नाम तीव्रपवनागममन्तरेण,
भेदेन वेत्ति शिखिदीपमणिप्रदीपौ॥

अन्धकारं विवृण्वन्नाहः —

किन्नु कालगणनापतेर्मसीभाण्डमर्पमवपुर्हिरण्मयम्।
तत्र यद्विपरिवर्त्तितानने लिम्पति स्म धरणिं तमोमसी॥

[श्रीकण्ठचरिते १०।१९]

विरहवर्णने चन्द्रोपालम्भं शृणुत :—

रात्रिराज! सुकुमारशरीरः कः सहेत तव नाम मयूखान्।
स्पर्शमाप्य सहसैव यदीयं चन्द्रकान्तदृषदोऽपि गलन्ति॥

कालकूटमधुनापि निहन्तुं हन्त नो वहसि लाञ्छनभङ्ग्या ।
यद्भयादिव निगीर्णमपि त्वामाशु मुञ्चति सुधाकर ! राहुः ॥

अज्ञातपाण्डित्यरहस्यमुद्रा ये काव्यमार्गे दधतेऽभिमानम् ।
ते गारुडीयाननधीतमन्त्रान् हालाहलस्वादनमारभन्ते ॥

सरस्वतीमातुरभूच्चिरं न यः कवित्वपाण्डित्यधनस्तनन्धयः ।
कथं स सर्वाङ्गमनाप्तसौष्ठवो दिनाद्दिनं प्रौढिविशेषमश्नुते ॥

वितीर्णशिक्षा इव हृत्पदस्थसरस्वतीवाहनराजहंसैः ।
ये क्षीरनीरप्रविभागदक्षा विवेकिनस्ते कवयो जयन्ति ॥

काव्यामृतं दुर्जनराहुनीतं प्राप्यं भवेन्नो सुमनोजनस्य ।
सच्चक्रमव्याजविराजमानतैक्ष्ण्यप्रकर्षं यदि नाम न स्यात् ॥

अर्थोऽस्ति चेन्न पदशुद्धिरथास्ति साऽपि,
नो रीतिरस्ति यदि सा घटना कुतस्त्या ।
साऽप्यस्ति चेन्न नववक्रगतिस्तदेव,
व्यर्थं विना रसमहो गहनं कवित्वम् ॥

श्लाघैव वक्रिमगतिर्घनदार्ढ्यबन्ध-
स्तस्याः कविप्रवरसूक्तिधनुर्लतायाः ।
कर्णान्तिकप्रणयभाजि गुणे यदीये,
चेतांसि मत्सरवतां झटिति त्रुटन्ति ॥

परश्लोकाँस्तोकाननुदिवसमभ्यस्य ननु ये,
चतुष्पादीं कुर्युर्बहव इव ते सन्ति कवयः ॥
अविच्छिन्नोद्गच्छज्जलधिलहरीरीतिसुहृदः,
सुहृद्या वैशद्यं दधति किल केषाञ्चिद् गिरः ॥

———

# श्रीमयूरः

(क्रैस्त ६२५)

कविप्रवरोऽयं मयूरः मयूराख्यस्य खण्डकाव्यस्य प्रणेता, कान्यकुब्जाधिपस्य श्रीहर्षदेवस्य सभापण्डितः, बाणभट्टस्य च समसामयिकः।

अहो प्रभावो वाग्देव्या यन्मातङ्गदिवाकरः।
श्रीहर्षस्याभवत्सभ्यः समो बाणमयूरयोः॥

कविरयं बाणभट्टस्य सम्बन्धी आसीत्। केचन तस्य श्वशुरोऽयमिति प्रचक्षते। जैनकविमातङ्गाचार्यस्यापि बाणभट्टस्य श्वशुरोयमित्येवाभिमतम्। इति तदीय-'भक्तामरस्तोत्र'मित्यनेनावगतं भवति। मयूरविषये एका किंवदन्ती प्रचलति। यदिमावुभावपि श्रीहर्षराजसभापण्डितावास्ताम्। परस्परं निरतिशयं स्नेहादरञ्च सुतरां बध्नीतः। एकदा यदा बाणः स्वकीयां कुपितां प्रेयसीमनुनयविनयैः सान्त्वयन्नन्ते पद्यमेकं पठितुमारेभे, तदा मयूरोऽपि निखिलं तं कमपि प्रणयकलहमाकर्णयन् द्वारि स्थितोऽभूत्। पद्यस्य चतुर्थचरणञ्च मयूरः सहसाऽपूरयत्। यन्निशम्य वराकी बाणप्रणयिनी लज्जिता सती मयूरं क्रुधा शशाप कुष्ठी भवेति। तच्च पद्यमेवमनुश्रूयते :—

गतप्राया रात्रिः कृशतनुशशी शीर्यत इव,
प्रदीपोऽयं निद्रावशमुपगतो घूर्णित इव।
प्रणामान्ते मानं तदपि न जहासि क्रुधमहो,
कुचप्रत्यासत्त्या हृदयमपि ते चण्डि! कठिनम्॥

सोऽपि वराकः शापोपहतः कुष्ठी अभवत्। तं कुष्ठं निराकर्त्तुमसौ 'सूर्यशतका'परनामधेयं मयूरशतकं खण्डकाव्यं निर्ममे भगवतस्सूर्यस्य स्तोत्ररूपम्। तदनन्तरं मरीचिमालिनः प्रसादाल्लब्धनवशरीरोऽभवत्। तदेवं बाणभट्टस्य समय एवास्यापि स्थितिकालः प्रतिपन्नो भवति।

काव्यमिदं गौडीरीतिमालम्ब्य विरचितं यमकाद्यलङ्कारविशेषविभूषितं विदुषामादरास्पदीभूतं विलसति। अस्य एकादश टीकाः सन्ति। तासु सूर्यानुवादिनी नाम्नी वल्लभदेवविरचिता सर्वोत्कृष्टेत्यवधार्यते।

अस्य विषये बाणभट्टः स्वकीयहर्षचरिते समुल्लिखति :—

दर्पं कविभुजङ्गानां गता श्रवणगोचरम् ।
विषविद्येव मायूरी मायूरीवाङ् निकृन्तति ॥

कविनामुना कश्चनान्योऽपि ग्रन्थो विरचित इति नाद्यापि विदितम् । तथाप्यस्य सूक्तयः प्रशंसार्हाः सुश्लाघनीयाश्च । शिवपार्वत्योः संवादरूपेणाऽस्य रचना मनोहरा । तद्यथा :—

विजयकुशलस्त्र्यक्षो न क्रीडितुमहमनेन सह शक्ता ।
विजये कुशलोऽस्मि न तु त्र्यक्षोऽक्षद्वयमिदं पाणौ ॥

संग्रामाङ्गणसङ्गतेन भवता चापे समारोपिते,
देवाकर्णय येन येन सहसा यद्यत्समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं,
तेन त्वं भवता च कीर्त्तिरमला कीर्त्या च लोकत्रयम् ॥

देवाकर्णय नाकिनां पुरि नृणां लोके पुरे भोगिना-
मासन् केचन सन्ति केचन तथा स्थास्यन्ति ये केचन ।
तन्मध्ये न बभूव नास्ति भविता तादृङ् न नीतौ नतौ
क्रान्तौ काव्यरतौ नतौ रिपुहतौ कीर्त्तौ च यस्ते समः ॥

भूपालाः शशिभास्करान्वयभुवः के नाम नासादिता,
भर्त्तारं पुनरेकमेव हि भुवस्त्वां देव मन्यामहे ।
येनाङ्गं परिमृद्य कुन्तलमथाकृष्य व्युदस्यायतं,
चोलं प्राप्य च मध्यदेशमधुना काञ्च्यां करः पातितः ॥

इत्येवमादि ।

—o—

# महाकविः बिल्हणः

महाकविबिल्हणोऽयं जन्मना काश्मीरभुवं विभूषयामास। जनकोऽस्य ज्येष्ठकलशनामा विप्रवरः प्रवरपुरग्रामसमीपे कोनमुखग्रामनिवासी। पितामहो राजकलशः प्रपितामहश्चभक्तिकलशः। अम्बा च नागा नाम्नी परमविदुषी देवी। इष्टदेवश्चास्य खल्वानन्ददेवः। द्वौ चानुजावास्ताम्।

प्राक्तनजन्मसंस्कारवशादसौ परममेधावी, महातार्किकः ऊहावाँश्चासीत्।[1] अतएव तदानीन्तनेषु काश्मीरपण्डितेषु बिल्हणोऽयं प्रवरिष्ठो लब्धप्रतिष्ठश्च सञ्जातः। गच्छति काले स एष परमगर्विष्ठोऽपि वृत्तिकार्श्यमनुभवन् काश्मीरेभ्यो निष्क्रान्तः। उत्तरप्रदेशे, मथुपुरीं, कान्यकुब्जनगरं, प्रयागं, वाराणसीञ्च संस्पृशन् चेदिराजस्य सभापण्डितो जातः, तत्र कतिचिद्दिनान्यध्युष्य ततो कल्याणनगरे चालूक्यवंशावतंसस्य षष्ठविक्रमादित्यस्य राजसभामलञ्चकार।

नृपतिश्चायममुं विद्यापतिरित्युपाधिना भूषयामास। अस्यैव राज्ञः प्रशंसायां कविरयं विक्रमाङ्कदेवचरितमित्याख्यं महाकाव्यं रचयामास। काव्यमिदमतिरमणीयं वैदर्भीशैल्यलङ्कृतं निरतिशयमाधुर्यसम्भृतं प्रसादगुणगुम्फितञ्च वरीवर्त्ति। रसिकजनानां हृदयपटलेषु नितरां कौतुकमादधदास्ते। वश्यवाचो महाकवेरस्य गर्वोक्तयस्त्वद्यापि विद्वज्जनानां रसनाङ्गणे सुतरां नरीनृत्यन्तितराम्। तद्यथा :—

---

१. मौञ्जीबन्धनात्प्रभृत्येव बाल एष वाग्देवतामाराधयामास। साङ्गोपाङ्गं वेदमधीत्य शास्त्राणि चाखिलानि परिशील्य साहित्यप्रपञ्चं साभिनिवेशमध्यैष्ट। अधीताखिलविद्यश्च काश्मीरान् स्वयशोभिरापूर्य च असाधारणीं काव्यकलाकीर्त्तितरिमाश्रित्य निखिलेऽपि भारते तत्पताकां दोधूयमानः ससम्भ्रमं बभ्राम। तथा चाह राजतरङ्गिणीकारः —

काश्मीरेभ्यो विनिर्यातं काले कलशभूपतेः।
विद्यापतिं यं कर्णाटश्चक्रे परमादिभूपतिः॥
प्रसर्पतः करटिभिः कर्णाटकटकान्तरे।
प्राज्ञोऽग्रे ददृशे तुङ्गं तस्यैवातपवारणम्॥
त्यागिनं हर्षदेवं स श्रुत्वा सुकविबान्धवम्। इति।

गृह्णन्तु सर्वे यदि वा यथेष्टं
नास्ति क्षतिः कापि कवीश्वराणाम्।
रत्नेषु लुप्तेषु बहुष्वमर्त्यै-
रद्यापि रत्नाकर एव सिन्धुः॥

अपि च :—

लङ्कापतेः सङ्कुचितं यशो यद्
यत्कीर्त्तिपात्रं रघुराजपुत्रः।
स सर्व एवादिकवेः प्रभावो
न कोपनीयाः कवयः क्षितीन्द्रैः॥

किञ्च :—

कर्णामृतं सूक्तिरसं विमुच्य
दोषे प्रयत्नः सुमहान् खलानाम्।
निरीक्षते केलिवनं प्रविष्टः,
क्रमेलकः कण्टकजालमेव॥
कुण्ठत्वमायाति गुणः कवीनां
साहित्य – विद्या-श्रमवर्जितेषु।
कुर्यादनार्द्रेषु किमङ्गनानां,
केशेषु कृष्णागुरुधूपवासः॥

कवेरस्य प्रकृतिवर्णनमप्यतीव हृदयङ्गमम्। वसन्तं वर्णयन्नाह :—

विलासिनामादिगुरुस्त्रिलोक्या-
मन्योऽन्यलीलाभुजबन्धनेषु।
उत्तम्भिताशोकपलाशपाणिः
न चैत्रमल्लः प्रतिमल्लमाप॥
चूतद्रुमाली - भुजपञ्जरेण
रणद्द्विरेफावलिकिङ्कणेन।
मित्रं मधुः कोकिलमञ्जुनाद-
पूर्वाभिभाषी स्मरमालिलिङ्ग॥
इत्थं वियोगज्वरजर्जराणा-
मुद्वेजितानां मधुमासलक्ष्म्या।
आसीन्मुहुः पक्ष्मललोचनानां,
चैत्रे विचित्रोक्तिविचेष्टितानि॥

साहित्यपाथोनिधिमन्थनोत्थं
कर्णामृतं रक्षत हे कवीन्द्राः ।
यदस्य दैत्या इव लुण्ठनाय,
काव्यार्थचौराः प्रगुणीभवन्ति ॥
अनभ्रवृष्टिः श्रवणामृतस्य,
सरस्वतीविभ्रम – जन्मभूमिः ।
वैदर्भरीतिः कृतिनामुदेति,
सौभाग्यलाभप्रतिभूः पदानाम् ॥
जयन्ति ते पञ्चमनादमित्र-
चित्रोक्तिसन्दर्भविभूषणेषु ।
सरस्वती यद्वदनेषु नित्य-
माभाति वीणामिव वादयन्ती ॥

अहो नु खलु बिल्हणस्य गर्वोक्तयो नितरां चमत्कारिण्यः । कविकर्मणो गरिमाणमाशंसन्नाह :—

भुजवनतरुच्छायां येषां निषेव्य महौजसाम्,
जलधिरशना मेदिन्यासीदसावकुतोभया ।
स्मृतिमपि न ते यान्ति क्ष्माया विना यदनुग्रहात्,
प्रकृतिमहते कुर्मस्तस्मै नमः कविकर्मणे ॥

न केवलमेतन्मात्रं प्रत्युत नरेन्द्राणां यशसोऽपयशसो वा कविप्रतिभामेव हेतुत्वेन निर्दिशन्नाह :—

'लङ्कापतेः सङ्कुचितं यशो यदित्यादि' निर्दिष्टपूर्वम् ।

बिल्हणस्य वाचां चारुता चमत्कारचातुरी च अष्टादशसर्गे काश्मीरवर्णने तु पराकाष्ठां गता :—

उद्यानेभ्यः सकलभुवनाश्चर्यमाधुर्यधुर्यं,
पीत्वा द्राक्षारसमिव करैर्जातसन्तापशान्तिः ।
ज्येष्ठाषाढेष्वपि कमलिनीकामुको यत्र धत्ते,
रत्नश्रेणीकिरणकलिकाकोमलामंशुमालाम् ॥
उत्तुङ्गानां मणिगृहभुवां यत्र वातायनेषु,
व्याख्याभिख्याप्रणयिनि जगद्दुर्लभे सूरिचक्रे ।
देवाः प्रोद्यद्विपुलपुलकाः किन्न वर्षन्ति पुष्पै-
र्नाशङ्कन्ते यदि सुरगुरोस्तत्र वैलक्ष्यलक्ष्मीम् ॥

धत्ते यस्याः स्फटिकशुचिभिः कान्तिभिः क्षालयन्त्याः,
स्थित्या गौरीगुरुरपि गिरिर्नूनमुच्चैः शिरांसि ।
गङ्गास्पर्द्धोद्धरमधुमती सैकतोत्तंसहंसी,
विद्यारक्षाधिकृतमकरोत्सा स्वयं शारदा यत् ॥

ब्रूमः सारस्वतकुलभुवः किं निधेः कौतुकानाम्,
तस्यानेकाद्भुतगुणकथाकीर्णकर्णामृतस्य ।
यत्र स्त्रीणामपि किमपरं जन्मभाषावदेव,
प्रत्यावासं विलसति वचः संस्कृतं प्राकृतञ्च ॥

काव्यं येभ्यः प्रकृतिसुभगं निर्गतं कुङ्कुमञ्च,
छायोत्कर्षाद् भवति जगतां वल्लभं दुर्ल्लभञ्च ।
यस्मिन्नन्तः स्थितवति जगत्सारभूते प्रयाताः,
काश्मीरास्ते नियतमुरगाधीशरक्षास्पदत्वम् ॥

इत्यादि ।

आत्मानं परिचाययन्नसौ कयापि हृदयग्राहिण्या वाण्या व्याजहार :--

ब्रूमस्तस्य प्रथमवसतेरद्भुतानां कथानां
किं श्रीकण्ठश्वशुरशिखरिक्रोडलीलाललाम्नः ।
एको भागः प्रकृतिसुभगं कुङ्कुमं यस्य सूते,
द्राक्षामन्यः सरससरयूपुण्ड्रकच्छेदपाण्डुम् ॥

कर्त्तुं कीर्तिप्रणयि कुशलाः कौशिकं गोत्रमुच्चै-
स्तत्र ब्रह्मप्रवणमनसो ब्राह्मणाः केचिदासन् ।
यान् काश्मीरक्षितितिलकितो मध्यदेशावतंसान्,
गोपादित्यक्षितिपतिरसौ पावनानानिनाय ॥

येषां जगत्त्रय - पवित्र - चरित्रभाजां
धत्ते स्म मुक्तिकलशः कुलशेखरत्वम् ॥
यस्याग्निहोत्र – परिशीलनजेन जाता,
स्वेदाम्भसेव कलिकाल–कलङ्क–शान्तिः ॥

इष्टापूर्त्तेष्वतिथिविषये सान्त्वने सेवकानां,
नव्येष्वन्येष्वपि च गहनं किन्नु तस्योचितेषु ।
दृष्टादृष्टोपकरणगणप्रापणे यः प्रवीणां
नागादेवीमलभत शुभस्तोमपात्रं कलत्रम् ॥

अङ्गैस्त्वङ्गत्कनकरुचिभिः कार्मणं लोचनानाम्,
सूरेस्तस्मादजनि जगतां शेखरो बिल्हणाख्यः।
सान्द्रैर्वेदध्वनिभिरभितो व्यक्तमञ्जीरनादा
मौञ्जीबन्धात्प्रभृति वदने यस्य वाग्देवतासीत् ॥

साङ्गो वेदः फणिपतिदिशा शब्दशास्त्रे विचारः,
प्राणा यस्य श्रवणसुभगा सा च साहित्यविद्या।
को वा शक्तः परिगणयितुं श्रूयतां तत्त्वमेतत्,
प्रज्ञादर्शे किमिव विमले नास्य सङ्क्रान्तमासीत् ॥

काश्मीरेभ्यः सकलममलं शास्त्रतत्त्वं गृहीत्वा,
प्रालेयाद्रेरपि गुणमसौ निश्चितं स्वीचकार।
देशे देशे कथमपरथा वादिनामाननानि,
क्रुद्धश्चक्रे तुहिनपटलप्लुष्टपद्मोपमानि ॥

दोलालोलद्घनजघनया राधया यत्र भग्नाः,
कृष्णक्रीड़ाङ्गणविटपिनो नाधुनाप्युच्छ्वसन्ति।
जलपक्रीडामथितमथुरासूरिचक्रेण केचित्,
तस्मिन् वृन्दावनपरिसरे वासरा येन नीताः ॥

ग्रामो नासौ न स जनपदः सास्ति नो राजधानी,
तन्नारण्यं न तदुपवनं सा न सारस्वती भूः।
विद्वान्मूर्खः परिणतवया बालकः स्त्री पुमान् वा-
यत्रोन्मीलत्पुलकमखिला नास्य काव्यं पठन्ति ॥

अन्त चासौ मानवजीवननिष्कर्षं कियदुत्कर्षतयोपन्यस्यति :—

लब्धा लक्ष्मीर्दिशि दिशि कृता सम्पदः साधुभोग्याः
प्राप्ता योग्यैः सह कलहतः कुत्र नोच्चैर्जयश्रीः।
गोष्ठीबन्धः सपदि सुजनैः सारनिष्कर्षदक्ष-
प्रज्ञालब्धस्तुतिभिरचिरादस्तु काश्मीरकैर्मे ॥

आरुक्षाम नृपप्रसादकणिकामद्राक्ष्म लक्ष्मीलवान्,
किञ्चिद्वाङ्मयमध्यगीष्महि गुणैः कांश्चित्पराजेष्महि ॥
इत्यज्ञानमयीमकार्ष्म कियतीं नानर्थकन्थां मनः,
स्वाधीनीकृतशुद्धबोधमधुना वाञ्छत्यमर्त्यापगाम् ॥

मन्दाकिन्याः पवनचटुलोत्तालवीचीदुकूले,
कूलोत्सङ्गे विरचितवतां योगनिद्राभियोगम्।
शेषाः केषामपि परिणतौ वासराः पुण्यभाजाम्,
शान्तस्वान्तस्थितिगिरिसुतावल्लभानां प्रयान्ति ॥

स्वेच्छाभङ्गुरमेघभाग्यतडितः शक्या न रोद्धुं श्रियः,
प्राणानां सततप्रयाणपटहश्रद्धा न विश्राम्यति।
त्राणं येऽत्र यशोमये वपुषि वः कुर्वन्ति काव्यामृतैः,
तानाराध्यपदे विधत्त सुकवीन्निर्गर्वमुर्वीश्वराः ॥

बिल्हणसमयः—काश्मीराधिपतेः कलशनाम्नो राज्ञः समये एवासौ अधीत-सकलविद्यः साहित्यकलायां परमकुशलः सम्पन्नः। परन्तदनु देशाटनपर्युत्सुकः काश्मीरेभ्यो बहिर्जगाम। वृन्दावनं, मधुपुरीं, कान्यकुब्जं, प्रयागं, वाराणसीञ्च गत्वा तत्र-तत्र कतिपयानि दिनान्यध्युष्य चेदिराजस्य कर्णनृपमणेः सभामलङ्कृतवान्। ततः पाटनस्याधिपतेः सभां किञ्चित्कालपर्यन्तं सभाजयन् चालूक्यवंशावतंसस्य श्री षष्ठ-विक्रमादित्यस्य आराध्यपदभाजनः समजनि। लब्धवांश्च तत एव विद्यापतिरित्युपाधिम्। अस्यैव नृपतेः प्रशस्तिपरं विक्रमाङ्कदेवचरितं महाकाव्यं प्राणैषीत्। तस्य कलशनाम्नो राज्ञः समयः खीस्त १०६३ तः १०९० पर्यन्तं विभाव्यते अतोऽस्यापि समय स एव खीस्त ११ शतदेशीयः प्रतिपत्तव्यो भवति।

विक्रमाङ्कदेवचरिताऽतिरिक्तं चौरीसुरतपञ्चाशिकाख्यमस्यान्यदप्येकं खण्डकाव्यमुपलभ्यते, यच्च बिल्हणपञ्चाशिका, शशिकलापञ्चाशिकेति नाम्नाऽपि प्रसिद्धम्। काव्यमिदं पञ्चाशत्पद्योपनिबद्धम्। विक्रमाङ्कदेवचरितादपि कमनीयतरमिति विभाव्यते। अस्य च तिसृषु टीकासु रामतर्कवागीशकृता अतिरुचिरा सर्वप्रिया च।

## बिल्हणस्य शैली

संस्कृतसाहित्यधुरन्धरस्य कवेरस्य शैली अतीव सरसा, प्रासादिकी, नितरां रमणीया च। काव्यामृतरसोऽस्य स्वसंवेद्य एव खलु न स वाचां विषयः। अस्य काव्ये अनुप्रासविलासा उपमोत्प्रेक्षादयश्चालङ्कारा यथार्हपरिपक्त्रिमतया पल्लविता विभाव्यन्ते। 'कामदुघा हि महाकवीनां वाचो भवन्ति' इत्युक्तिरस्य विषये सुतरां चरितार्थिता भवति। संस्कृतवाङ्मयप्रसरेऽसौ कालिदाससमकक्ष एवावधार्यते। केचित्तु यद्यपि विक्रमाङ्कदेवचरिते कालिदासीयरघुवंशस्य साम्यातिशयमवलोक्य महाकविमेनमनुकरणशीलतादोषेणाक्षिपन्ति। अपरे चन्द्रलेखास्वयंवरम्,

इन्दुमतीस्वयंवरस्य प्रतिबिम्बरूपं निर्वर्ण्य, विक्रममृगयाविलासे च दशरथमृगयायाः प्रतिकृतिं विभाव्य बिल्हणमुपहसन्ति, तथाऽपि नैष परमोद्दामवाङ् महाकविस्तादृशदोषारोपणमर्हति । सत्यपि तादृशबिम्बप्रतिबिम्बभावे निसर्गसुलभतया तादृशसारूप्यापत्तेः नैतन्मनागपि कौतुकास्पदम् । तादृशसारूप्यपरिणतिः अंशतोऽपि सम्भावनाकोटिमतिक्रमते । पुनश्च कवितल्लजोऽसौ काव्यार्थचौर्यं मुक्तकण्ठतो विनिन्दति 'काव्यार्थचौराः प्रगुणीभवन्ति' इति प्रागुक्तमेव ।

महाकवेर्बिल्हणस्य रचनायां वैदर्भी रीतिः सर्वाङ्गपूर्णतया पम्फुल्यमाना विलसति । अस्य प्रसादरसमाधुरी, सालङ्कृतिरचनाचातुरी, अनुप्रासविन्यासनिर्झरी न कस्य सहृदयस्य विस्मयकरी ? स्वरचनावैशिष्ट्यमधिकृत्य कविः स्वयमेवोद्गिरति :—

रसध्वनेरध्वनि ये चरन्ति, सङ्क्रान्तवक्रोक्तिरहस्यमुद्राः ।
तेऽस्मत्प्रबन्धानवधारयन्तु कुर्वन्तु शेषाः शुकवाक्यपाठम् ।। इति ।

वस्तुतः कविरयं विलक्षणः[1] 'बिल्हणः कालिदासं विहायाखिलानपरान् कवीनतिशेते काव्यकलायामित्यत्र तु न कापि संशीतिः इति ।

इति सर्वतन्त्रस्वतन्त्रैः पदवाक्यप्रमाणपारावारीणैः श्रीमदाचार्य-
द्विजेन्द्रनाथशास्त्रिसिद्धान्तशिरोमणिभिर्विरचिते संस्कृत-
साहित्यविमर्शाख्ये ग्रन्थे नवमः परिच्छेदः ।

—:o:—

१. विलक्षण एवापभ्रंशतया बिल्हण इति संवृत्तः इति सम्भाव्यते ।

दशमः परिच्छेदः

# अथ गद्यकाव्यावतरणम्

## गद्यसाहित्यम्

१—वैदिकगद्यप्रपञ्चः। २—लौकिकगद्योदयः। ३—गद्यसाहित्य-वैरल्ये हेतुः। ४—महाकविः सुबन्धुः। ५—महाकविः बाणभट्टः। ६—महाकविः श्री दण्डी।

### वैदिकगद्यप्रपञ्चः

यद्यपि भगवतो वेदादेव गद्यलेखनपद्धतिः प्रससार सर्वतः प्राग् इति व्यवस्थापनेऽपि न जार्गत्ति काचिदतिशयोक्तिः, तथापि वेदानां पद्यबहुलत्वात्केवलं गद्यनिर्देशका एव खलु ते इत्येवं शक्यते प्रतिपत्तुम्। परन्तु वेद-व्याख्यानरूपाणि ब्राह्मणानि गद्यमयत्वाद् गद्यप्रवर्त्तकानीति कथने तु नास्ति कापि विप्रतिपत्तिः। एवमेव तच्छेषभूतानि आरण्यकानि, आरण्यकोत्तरकाले प्रवृत्तानि च उपनिषद्-ग्रन्थरत्नानि इति।

एषां ब्राह्मणादारभ्य उपनिषदन्तानां गद्यप्रपञ्चपर्यालोचनेनावगतं भवति यद् वाग्विलासप्रसरे क्रमिकविकासः सुतरां पल्लवितः। वेदे गद्यप्रवाहः खलु छान्दसप्रयोगबहुलः, ततो ब्राह्मणारण्यकग्रन्थेषु स किञ्चित् परिष्कृततरः, उपनिषत्सु पुनः स परिष्कृततम इति न तिरोहितम्। उपनिषदां भाषा यथा सरला, व्याकृतिनियमान् प्रायशोऽनुल्लङ्घमाना काव्यमयी, माधुर्यसुधास्यन्दिनी च न तथा ब्राह्मणादीनाम्। अतः वैदिकसाहित्येऽपि गद्यबन्धप्रपञ्चः पदं सुतरामादधात्येवेति निर्विशङ्कम्।

तदेवं लौकिकसाहित्यस्योदयः साक्षात्परम्परया वा वैदिकसाहित्यादेव।

### लौकिकगद्योदयः

अधुना लौकिकसाहित्ये गद्योपक्रमः प्रदर्श्यते।

'वृत्तगन्धोज्झितं गद्यम्' इति लक्षणाद् वृत्तरहितं सुललितपदविन्यासालङ्कृतं वाक्यं गद्यपदेन परिभाष्यते। तच्च गद्यं, वृत्तगन्धि-उत्कलिकाप्राय-चूर्णक-

मुक्तकभेदाच्चतुर्विधम्। गद्येन गुम्फितं काव्यम् गद्यकाव्यम्। तदपि कथाख्यायिका-भेदाद् द्विविधम्। अल्पाक्षरैरनल्पार्थावबोधपुरस्सरं ओजःसमासभूयस्त्वं हि नाम गद्यबन्धस्य वैशिष्टयम्। उक्तञ्च 'ओजः समासभूयस्त्वमेतद् गद्यस्य जीवितम्।" इति। एतादृशलक्षणलक्षितमेव गद्यमस्माभिः प्राचीनेषु शिलालेखेषु समुट्टङ्कित-मवलोक्यते। तद्यथा प्रयागविजयस्तम्भे :—

"महाराजाधिराजश्रीसमुद्रगुप्तस्य कीर्त्तिमितस्त्रिदशपतिभवन-गमनावाप्तललितसुखविचरणमाचक्षाण इव भुवो बाहुरयमुच्छ्रितः स्तम्भः।" इति।

अपि च क्षत्रपरुद्रदाम्नो गिरनारशिलालेखेषु—

"प्रमाणमानोन्मान-स्वरगतिवर्ण-सारस्वतादिभिः, परमलक्षण-व्यञ्जनैरुपेतकान्तमूर्त्तिना स्वयमधिगतमहाक्षत्रपनाम्ना नरेन्द्रकन्या-स्वयम्वरानेकमाल्यप्राप्तदाम्ना महाक्षत्रपेन रुद्रदाम्ना सेतुं सुदर्शन-तरं कारितम्।" इति।

परन्तु वैदिकसाहित्योपनतगद्यलेखनसरणिस्तु सुतरां विभिन्ना। न तत्र समासभूयस्त्वं, न च प्रौढः पदविन्यासविलासः, नापि श्लेषसंश्लेषः। तत्रत्यो गद्य-प्रपञ्चस्त्वतीव सरलः सुगमः, 'ह' 'वै' 'उ' प्रभृतिभिर्वाक्यालङ्कारभूतैरव्ययै-रन्तरान्तरा च प्रणिबद्धः अतीव रोचिष्णुः प्रासादिको हृदयावर्जकश्चोल्लसति। तत्त्वदृग्भिस्सोऽपि निदर्शनदिशा किञ्चित्प्रणिभालनीयः। तद्यथा—

"व्रात्य आसीदीयमान एव स प्रजापतिं समैरयत्। स प्रजापतिः सवर्णमात्मात्मान्यपश्यत्। तदेकमभवत्, तल्ललाममभवत्, तन्महद-भवत्, तज्ज्येष्ठमभवत्, तद्ब्रह्माभवत्, तत्तपोऽभवत्, तत्सत्यमभवत्, तेन प्राजायत।" इति। [अथर्व० १५ का० १ सू०]।

एवं ब्राह्मणग्रन्थेष्वपि—

"अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः। आग्नावैष्णवं पुरोडाशं निर्वपन्ति। दीक्षणीयमेकादशकपालं सर्वाभ्य एवैनं तद्देवताभ्योऽनन्तरायं निर्वपन्ति। [ऐतरेय ब्रा० १।१]

अपि च—

'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति, तद् भूमा। अथ यत्रान्यत्पश्यति, अन्यच्छृणोति, अन्यद् विजानाति, तदल्पम्। यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम्।" [छान्दोग्य ७।२४]

एवं पुराणसाहित्येऽपि गद्यबन्धः सुमनोहरः—

"यथैव व्योम्नि वह्निपिण्डोपमं त्वामहमपश्यं तथैवाऽद्याग्रतो गतमप्यत्र भगवता किञ्चिन्न प्रसादीकृतं विशेषमुपलक्षयामीत्युक्तेन भगवता सूर्येण निजकण्ठादुन्मुच्य स्यमन्तकन्नाम महामणिवरमवतार्य एकान्ते न्यस्तम्।" [विष्णु ४।१३।१४]

अन्यश्च गद्यबन्धप्रसरः दर्शनानां भाष्येषु दृष्टिपथमवतरति। सोऽपि विदुषामवधानमर्हति। तद्यथा प्रौढमीमांसकः तत्रभवान् शबरस्वामी—

"इच्छयात्मानमुपलभामहे। कथमिति। उपलब्धपूर्वे ह्यभिप्रेते भवतीच्छा। यथा मेरुमुत्तरेण यान्यस्मज्जातीयैरनुपलब्धपूर्वाणि स्वादूनि वृक्षफलानि तानि प्रत्यस्माकमिच्छा भवति।" [१।१।५]

एवमेव श्रीमद्भगवच्छङ्कराचार्यस्य गद्यगुम्फनशैली विलक्षणैव विद्वन्मूर्द्धन्येन सर्वतन्त्रस्वतन्त्रेण श्रीवाचस्पतिमिश्रमहाभागेन श्रीशङ्कराचार्याणामनवद्यगद्यधारा प्रसन्नगम्भीरपदेन विभूषिता। नूनमाचार्यस्यास्य तादृशो वाक्प्रवाहः अस्खलद्गतिः, सरस्वतीप्रसादमन्तरा न सुलभोद्भवः। अस्य प्रगल्भगिरां माधुरीधारा श्रुतौ प्रस्रवन्ती श्रोतॄन् नितरां निमज्जयति आनन्दोदन्वति। तद्रसोऽपि किञ्चिदास्वाद्यतां रसिकैः —

"सर्वो हि पुरोऽवस्थिते विषयान्तरमध्यवस्यति, युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि। उच्यते—न तावदयमेकान्ततो नाऽविषयः, अस्मत्प्रत्ययविषयत्वात्। न चायमस्ति नियमः पुरोवस्थित एव विषये विषयान्तरमध्यवसितव्यमिति। अप्रत्यक्षेऽपि हि आकाशे बालास्तलमलिनतामध्यवस्यन्ति।" इति।

एवमेव वैशेषिकदर्शनस्य प्रमाणभूतानां भाष्यकाराणां श्री प्रशस्तपादाचार्याणां सा काऽपि प्रगल्भा गद्यगुम्फनशैली कस्य न विस्मयमुपजनयति। तथाहि परमाणुवादं विशदयन्नाह :—

"इहेदानीं चतुर्णां महाभूतानां सृष्टिसंहारविधिरुच्यते। ब्राह्मणेन मानेन वर्षशतान्तेन वर्त्तमानस्य ब्रह्मणोऽपवर्गकाले संसारखिन्नानां सर्वप्राणिनां निशि विश्रामार्थं सकलभुवनपतेर्महेश्वरस्य संजिहीर्षासमकालं शरीरेन्द्रियमहाभूतोपनिबन्धकानां सर्वात्मगतानां अदृष्टानां वृत्तिनिरोधे सति महेश्वरेच्छात्माणुसंयोगजकर्मभ्यः शरीरेन्द्रियकारणाणुविभागेभ्यः तत्संयोगनिवृत्तौ तेषामापरमाण्वन्तो विनाशः। तथा पृथिव्युदकज्वलनपवनानामपि महाभूतानां अनेनैव

क्रमेण उत्तरस्मिन् सति पूर्वस्य नाशः, ततः प्रविभक्ताः परमाणवोऽवतिष्ठन्ते ।'' इति

अन्यस्यैकस्य न्यायदर्शनाचार्यस्य न्यायमञ्जरीप्रणेतुः श्री जयन्तभट्टस्य गद्यलेखनचातुरी ह्यपि सचेतसां चेतश्चमत्कारिणी । स एव खलु तार्किकसार्वभौमः चतुर्णामपि वेदानां समानभावेन प्रामाण्यमुपपादयन्नाह :—

"तेन प्रामाण्याधिगमोपायविशेषात् समानयोगक्षेमतया चत्वारोऽपि वेदाः प्रमाणम् । व्यवहारोऽपि सर्वेषां सारतरविचारचतुरचेतसां चतुर्भिरपि वेदैश्चतुर्णां वर्णाश्रमाणां चतसृषु दिक्षु चतुरब्धिमेखलायामवनौ प्रसिद्ध इति कोऽयमत्रान्यथात्वभ्रमः । श्रुतिस्मृतिमूलश्चार्यावर्त्तिनां भवति व्यवहारः । ते च श्रुतिस्मृती चतुरोऽपि वेदान् समानकक्षानभिवदतः । ऋग्यजुःसामवेदेष्वपि अथर्ववेदाशंसीनि भूयांसि वचांसि भवन्ति ।'' इत्यादि ।

एवं विद्यमानेऽपि बृहत्तरे गद्यसाहित्यप्रसरे, संस्कृतवाङ्मये यदि कश्चिद् गद्यवैरल्यमेवावलोकेत तर्हि 'नायं स्थाणोरपराधो यदेनमन्धो न पश्यती'ति निरुक्तोक्तिमेव चरितार्थयति किल स वराकः ।

## गद्यसाहित्यवैरल्ये हेतुः

चेन्नाम वैरल्यशब्दोऽत्र कथाख्यानादिगद्यमयसाहित्यबाहुल्यप्रयोजकस्तर्हि सत्यम् । तन्नूनं विचारणामर्हति । प्रत्यक्षमेवैतद्, यावन्ति गणनातीतानि पद्यमयानि ग्रन्थरत्नानि विलसन्ति संस्कृतसाहित्ये न तावन्ति गद्यमयानि । गद्यमयानि त्वल्पीयांस्येव, अङ्गुलिगणनार्हाणि । तत्रापि खलु कारणं तु मृग्यमेव । तदत्र, गद्य[1]काव्यवैरल्यस्य कारणत्वेन प्रतिपादितानि बहूनि बहुविधानि च मतानि उपलभ्यन्ते । केचन आचक्षते यत्पद्यापेक्षया गद्यलेखनं किञ्चित् क्लिष्टतरम् । पद्यरचनायामेकद्वित्रिसुभगपद्यविन्यासो हि यथा सौन्दर्यमादधाति न तथा गद्ये । पद्यमयप्रबन्धेषु, तावदेकस्मिन्नप्यंशविशेषे चमत्कृति-सन्निवेशात् समस्तमेव पद्यं चमत्कृतिमत्तया यथा प्रशस्यते न तथा गद्यमये सन्दर्भे । गद्ये तु सर्वाङ्गीणमेव सौष्ठवं प्रशंसाधायकं भवति न जात्वांशिकम् । पद्येषु पुनश्छन्दःपारवश्यात्

---

१. गद्यं लक्षयन् आचार्यः दण्डी प्राह :—

"अपादः पादसंस्थानः गद्यमाख्यायिका कथा ।"

साहित्यदर्पणकारश्च :—

"कथायां सरसं वस्तु गद्यैरेव विनिर्मितम् ।" इति ।

स्वच्छन्दपदप्रयोगोऽवकाशमेव नोपलभते। तत्र प्रसङ्गप्रस्तुतं स्वल्पमपि वस्तु क्वचिद्विस्तृतिमधिगच्छति, अनल्पञ्च पुनर्नियताक्षरनिबद्धत्वात् समवगाहेत संक्षेपत्वमपि। तत्र तथानुतिष्ठन्नपि कविः तादृशछन्दोबन्धनपारवश्यवशात् न केवलं समालोचकानां विगेयतां व्रजति, अपितु क्षन्तव्यतामप्यधिकरोति। परं गद्यगुम्फने तु कविः सर्वथा स्वतन्त्रः यथार्हपदप्रयोगं कर्त्तुञ्च क्षमः सन्नपि, यदि स यथेष्टपदप्रयोगे न लभते साफल्यं तदा किल वराकः कविरेव वचनीयतामापद्यते तत्र क्षन्तव्यताया अवसर एव खलु कुतः। इत्यपि महीयान् हेतुः प्रतीयते गद्यसाहित्यवैरल्ये। नूनं निकषायते हि खलु तत् कवीनां सौष्ठवासौष्ठवविचारणायां यद् गद्यगुम्फनं नाम। उक्तञ्च युक्तमेवाभियुक्तैः --

"गद्यं कवीनां निकषं वदन्ति" इति

अन्ये तु तर्कयन्ति--यत् पद्यानां संगीतमयत्वात् मनसो निरतिशयानन्दकरत्वाच्च कवयः पद्यरचनामेव बहुशोऽभिनन्दन्ति। अहो नु खलु पद्यबन्धः, आनन्दतरङ्गितान्तरङ्गोल्लासविलासोच्छ्वसितः सङ्गीतरूपेण परिणतः अपूर्वाह्लादजनकः कोऽपि नादो नाम। पद्यरूपमाकलयन्ती भारती सङ्गीतसौन्दर्यमुद्भावयन्ती श्रवणयोर्मधुरसान्द्रमन्द्रध्वनिरसमासिञ्चन्ती किल कस्य मानसं आनन्दतुन्दिलं न विदधाति। गद्यरचना तु पुनस्तत्र वरीवर्त्ति वाचंयमैव। इति हेतोरपि गद्यसाहित्यस्य वैरल्यं नयनविषयतां याति। भवतु यद्वा तद्वा, परन्तु गद्यरचनावैरल्यमस्ति कस्यापि साहित्यप्रपञ्चस्यातीव दोषावहमित्यत्र तु नोदेति कश्चन संशयलेशोऽपि सदसद्विवेचनचणानामिति।

--०--

# महाकविः सुबन्धुः

१--कः खलु गद्यसाहित्यस्याद्यः प्रवर्तकः । २--सुबन्धोः कालः । ३--सुबन्धोः शैली ।

## कः खलु गद्यसाहित्यस्याद्यः प्रवर्त्तकः ?

कः खलु गद्यकाव्यस्याद्यः प्रवर्त्तक, इति प्रश्ने विजृम्भाणे उच्यते यत् :--

गद्यवाङमयस्याद्यः कविः संस्कृतसाहित्यसिन्धुरत्रभवान् महाकविः सुबन्धुरेव किल। सोऽयं बहोः प्राचीनकालात्प्रचलितां पद्यमयप्रबन्धप्रणयनसरणिप्रणालिमुल्लङ्घ्यानवद्य-गद्यलेखनपाटवाय क्रमेण सर्वतः प्रागुपाचक्रे गद्यग्रन्थवैरल्यम् प्रख्यातां वासवदत्ताख्यां रम्यामाख्यायिकां संप्रणीयेति । ततः प्राक् प्रायशः समस्तमपि संस्कृतवाङमयं पद्यमयमेवासीत् गद्यन्तु क्वचिदेव गीर्वाणवाण्यां वैरल्येन लोचनपथमवतरति स्म। अयमेव सुगृहीतनामा कविकुलललामः कवित्वकलाकलापप्रवीणः पदवाक्यप्रमाणपारावारीणोऽभूद् गद्यमयसाहित्यस्याद्यः प्रवर्त्तकः । अस्य वासवदत्तानाम गद्यमयं महाकाव्यमालोक्य स्थान एव भणितिरियं प्रचरति :--

"कवीनामगलद्दर्पो नूनं वासवदत्तया ।"
शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम् ।। [हर्षचरिते]

एष हस्तामलकीकृतसकलसाहित्यसर्वस्वः स्वनामधन्यो गद्यकविमूर्द्धन्यः आत्मीयेन कवित्वकौशलेन, निरतिशयरसगर्भित-प्रत्यक्षरश्लेषविशेषानुबन्धिगिरां गम्फप्रबन्धासु, प्रलम्बसमासबहुलसालङ्कृतिरचनार्चितवचनावलिषु सुधास्पर्द्धिमाधुर्यनिष्यन्दिसान्द्ररसासु तत्रभवतो वसुबन्धोः सूक्तिमुक्तावलिषु को नाम सहृदयः सशिरःकम्पममन्दमानन्दं नोपविन्देत ?

शब्दालङ्काररसरीतिसौष्ठवैर्वासवदत्तातुलामधिरोढुं न काचिदन्या गद्यरचना समुत्सहत इति निर्विवादम् ।

सुबन्धोः प्रबन्धमनुवाचयतां विदुषां हृदयपटलादद्यापि नापसर्पन्ति तानि श्रवणयोः सुधानिष्यन्दीनि मधुरमधुराणि, सुललितपदावलिसमलङ्कृतानि वचांसि गरीयांसि इति निर्व्याजं वक्तुं शक्यते। तद्दिङमात्रमिह प्रदर्श्यंते विदुषां मनस्तोषाय । तत्र रसिकैस्तावत्कवेरस्यानुप्राससचिवश्लेषोपमाद्यलङ्कारच्छटाः किञ्चिन्नयनविषयतां नेयाः । तद्यथा :--

"अभूदभूतपूर्वः सर्वोर्वीपतिचक्रचूडामणिश्रेणीशाणकोणकषणनिर्मलीकृतचरणनखमणिः नृसिंह इव दर्शितहिरण्यकशिपुक्षेत्रदानविस्मयः; कृष्ण इव कृतवसुदेवतर्पणो, नारायण इव सौकर्यसमासादितधरणिमण्डलः, कंसारातिरिव जनितयशोदानन्दसमृद्धिः ...., इत्यादि।

एवं विरोधाभासोऽपि प्रणिभालनीयः --

"विद्याधरोऽपि सुमना, धृतराष्ट्रोऽपि गुणप्रियः, क्षमानुगतोऽपि सुधर्म्माश्रितः, बृहन्नलानुभावोऽपि अन्तःसरलो, महिषीसम्भवोऽपि वृषोत्पाद्यः, तरलोऽपि महानायको राजा चिन्तामणिर्नाम।" पुनश्च :--

"यत्र शासति धरणिमण्डलं, छलनिग्रहप्रयोगो वादेषु, नास्तिकता चार्वाकेषु, कण्टकयोगो नियोगेषु, परीवादो वीणासु, खलसंयोगः शालिषु, द्विजिह्वसङ्गृहीतिराहितुण्डिकेषु, करच्छेदः क्लृप्तकरग्रहणेषु नेत्रोत्पाटनं मुनीनां, द्विजराजविरुद्धता पङ्कजानां .....सूचीभेदो मणीनाम् इत्यादि......।"

किञ्च यमकालङ्कारोऽप्यस्य कुतूहलावहः --

"राजसेनरहितो राजसेन रहितो ध्रुवम्। विशारदा विशारदाभ्रविशदा, विशदात्मनीनमहिमा, महिमानरक्षणक्षमा, क्षमातिलक! धीरताधीरता भूतता, भूततावचसि, साहसेन! साहसेन कमला-कमलापराजिता पराजिता·····" इत्यादि।

तथा चास्य सुदीर्घसमाससंश्लिष्टक्लिष्टतरवाक्यविन्यासोऽपि कस्य न विस्मयावहः --

"कुररखरनखरशिखरखण्डितपृथुरोमाविलम्, अविरलशकुलशल्कजलनकुलोच्चारं, क्रोष्टुकुलोत्सृष्टविकटकर्कटकर्परपरम्परापरिगतोपान्तम्, अतितरलतरजलरयलुलितचटुलशफरकुलकवलनकृतमतिनिभृतबकशकुनिनिवहधवलितपरिसरम्, अतिचपलजलकपिकुलविहरणलुलितसलिलकणनिकरजनितपवनरयपरिमिलितशिशिरतरम्, अतिजवनपवनविधुतजलधि-जलपटल-विनटननिपतित-मणिगणपरिगतपरिसरम्, जलनिधिभुजगनिर्मुक्तनिर्मोकपट्टमिव, दर्पणमिव वसुन्धरायाः स्फटिककुट्टिममिव वरुणस्य, विपुलं पुलिनजलमाससाद।" इत्यादि।

भूयोऽप्यस्य श्लेषसौन्दर्यम्--

"अस्मिन् संसारे केन किं वा न कृतम्? तथाहि--गुरुदार-

ग्रहणं द्विजराजोऽकरोत्। पुरुरवा ब्राह्मणधनतृष्णया विननाश। नहुषः परकलत्रदोहदी महाभुजङ्ग आसीत्। ययातिर्विहितब्राह्मणीपाणिग्रहणः पपात। सुद्युम्नः स्त्रीमय इवाभवत्। सोमकस्य विख्याता जन्तुवधनिर्घृणता। पुरुकुत्सः कुत्स आसीत्। कुवलयाश्वोऽश्वतरकन्यामपि जहार। नृगः कृकलासतामगमत्। नलं कलिरभिभूतवान्। संवरणो मित्रदुहितरि विक्लवतामगमत्। दशरथ इष्टरामोन्मादेन मृत्युमवाप। कार्त्तवीर्यो गोब्राह्मणपीडया पञ्चत्वमयासीत्। युधिष्ठिरः समरशिरसि सत्यमुत्ससर्ज। शान्तनुरतिव्यसनाद्वने विललाप। इत्थं नास्त्यकलङ्कः कोऽपि।"

यद्यपि सत्यम् एवञ्जातीयको वचोविन्यासः क्लिष्टतां संश्लिष्यति, दुरूहतां, बिभर्त्ति, जहाति निसर्गसुभगताम्, संकेतयति कृत्रिमताम्, शिथिलयति कथावस्तु, क्लिश्नाति वाचकान्, समुच्छिनत्ति माधुर्यम्, व्याकुलीकरोति चाध्येतॄन्। नात्र सन्देहः। तथापि सा कापि सुबन्धोर्वाक्सरणिः यमक-श्लेष-विरोधालङ्कारच्छटाभिः प्रकृतिचित्रणचातुरीचारुताभिः शृंगारिकवर्णनकलाभिः, मधुरकोमलकल्पनाभिः परिमण्डिता कस्य सहृदयस्यान्तरङ्गं नोद्वेल्लयति आनन्दतरङ्गैः। मन्यामहे नास्ति तत्र दण्डिनः पदलालित्यं, बाणस्य च प्रातिभं ज्योतिः तथापि श्लेषादिगुम्फनम्, अनेकार्थसमर्थवचोविन्यासवैदग्ध्यं, काव्यरससुधानिष्यन्दसान्द्रतां को नाम, स्योद्भटकवेश्चोरयितुमुत्सहेत। नूनं समासे स्वरमाधुर्यम्, अनुप्रासे मधुरसङ्गीतं, रचनायां कोऽपि लोकोत्तरः सुस्फीतो रसोल्लासोऽस्य रचनासु सर्वोत्कर्षत्वेनावभाति। प्रशंसति चैनं ताद्रूप्येणैव वामनभट्ट बाणः—

प्रतिकविभेदनबाणः कवितातरुगहनविहरणमयूरः।
सहृदयलोकसुबन्धुर्जयति श्रीभट्टबाणकविराजः॥

अस्य कवेर्वक्रोक्तिनैपुणीमुपवर्णयन्नाह :—

सुबन्धुर्बाणभट्टश्च कविराज इति त्रयः।
वक्रोक्तिमार्गनिपुणाः चतुर्थो विद्यते न वा॥

नूनं कविरयम् :—

सरस्वतीदत्तवरप्रसादाच्चक्रे सुबन्धुः सुजनैकबन्धुः।
प्रत्यक्षरश्लेषमयप्रबन्धविन्यासवैदग्ध्यनिधिर्निबन्धम्॥

इत्यस्मिन् पद्ये प्रणिबद्धाया प्रतिज्ञासरितो नैपुण्येन पारमियाय इत्यत्र नास्ति संशयलवः।

गद्यबन्धवत् पद्यरचनायामप्यतिकुशलकलाकारोऽयं चातुरीमात्मनो निपुणतयाविष्करोति :—

"स जयति हिमकरलेखा चकास्ति यस्योभयोत्सुकान्निहिता ।
नयनप्रदीपकज्जलजिघृक्षया रजतशुक्तिरिव ।।
भवति सुभगत्वमधिकं विस्तारितपरगुणस्य सुजनस्य ।
वहति विकासितकुमुदो द्विगुणरुचिं हिमकरोद्योतः ।।
विषधरतोऽप्यतिविषमः खल इति मृषा वदन्ति विद्वांसः ।
यदयं नकुलद्वेषी स कुलद्वेषी पुनः पिशुनः ।।
अतिमलिने कर्त्तव्ये भवति खलानामतीव मलिना धीः ।
तिमिरे हि कौशिकानां रूपं प्रतिपद्यते चक्षुः ।।
गुणिनामपि रूपप्रतिपत्तिः परत एव सम्भवति ।
स्वमहिमदर्शनमक्ष्णोर्मुकुरतले जायते यस्मात् ।।

स्वभावोक्त्या केसरिणं विवृण्वन्नाह :—

पश्योदञ्चदवाञ्चदञ्चितवपुः पश्चार्द्धपूर्वार्द्धभाक्,
स्तब्धोत्तानितपृष्ठनिष्ठितमनाग् भुग्नाग्रलाङ्गूलभृत् ।
दंष्ट्राकोटिविशङ्कटास्यकुहरः कुर्वन् शटामुत्कटा-
मुत्कर्णः कुरुते क्रमं करिपतौ क्रूराकृतिः केसरी ।। इति ।

## सुबन्धोः कालः

सुबन्धोः कालः नाद्यावधि इदन्तया निर्णीतिङ्गतः । यच्च केचन क्रीष्टीय-षष्ठशतकमध्यभागे सुबन्धुस्थितिकालं निर्णयन्ति, न तत्र वयं काञ्चिद् बलवतीं विनिगमनां पश्यामः । अपरे विद्वांसः सुबन्धुं बाणपरवर्त्तिनं, स्वमतोद्वोलकत्वेन च पुरस्कुर्वन्ति यत्, सुबन्धुना कृतो वासवदत्तायामिन्द्रायुधप्रयोगो कादम्बर्याः चन्द्रापीडाश्वमेव सङ्केतयति, वासवदत्तायाः कथांशोऽपि च कादम्बरीच्छायां निषेवते, तेनेदं प्रतिपत्तुं न दुष्करं यद् सुबन्धुर्बाणपरकालवर्त्ती एवेति । किन्त्वन्येषामत्र महती विप्रतिपत्तिः । तेऽत्र प्रत्यवतिष्ठमाना एवं प्रतिपादयन्ति यद् बाणविरचिते हर्षचरिते वासवदत्तायाः संस्मरणं—'कवीनामलगद्दर्पो नूनं वासवदत्तये'ति सुतरां सुबन्धोर्बाणभट्टपूर्वकालभवत्वं सूचयति । किञ्च कादम्बर्याः उपक्रमे—

द्विजेन तेनाक्षतकण्ठकौण्ठ्यया, महामनोमोहमलीमसान्धया ।
अलब्ध वैदग्ध्यविलासमुग्धया, धिया निबद्धेयमतिद्वयी कथा ।।

[का० श्लोक २०]

इत्यत्र 'अतिद्वयी'तिपदं गुणाढ्यकृतां बृहत्कथां सुबन्धुविरचिताञ्च वासव-दत्तामेव परामृशति इति चन्द्रभानुप्रभृतयः कादम्बरीटीकाकृत आशेरते इति स्फुटं

बाणात् सुबन्धोः पूर्वकालिकत्वं प्रमाणयति। किञ्च तत्रभवता महामहोपाध्यायेन श्रीकाणेमहाभागेन सप्रमाणं प्रपञ्चितम् यद् हर्षचरिते कादम्बर्याञ्च 'वासवदत्ता'-पदेन बाणः सुबन्धुकृतां वासवदत्तामेवाभिप्रैति। क्रैस्त ८०० तमशतकभवो वामनोऽपि स्वकीयकाव्यालङ्कारसूत्रवृत्तौ सुबन्धुकृतवासवदत्तायाः, बाणकृतकादम्बर्याश्च समुद्धृतोदाहरणैरुक्तार्थमेव साधयति। यतः द्वावप्यमू क्रैस्त ७५० तमाब्दात् पूर्वमेव सम्भवेताम्। ख्रैस्त १२०० तमाब्दे लब्धजन्मना कविराजेन स्वकीय-राघवपाण्डवीये——

सुबन्धुर्बाणभट्टश्च कविराज इति त्रयः।
वक्रोक्तिमार्गनिपुणाश्चतुर्थो विद्यते न वा॥

इति पद्ये त्रयाणामप्यमीषां वक्रोक्तिकलाकुशलानां सङ्ग्रन्थनं तेषां स्थितिकालक्रममनुरुध्यैव कृतमवगम्यते।

किञ्च ख्रैस्त ७३६ तमाब्दावतरितेन वाक्पतिराजेन स्वकीये 'गौड-वहो' इत्याख्ये प्राकृतभाषानिबद्धे काव्ये सुबन्धुरचनायाः समुल्लेखः कृतः परन्तु बाणस्य तत्र नामाऽपि न स्मृतम्। एतदपि ध्वनयति यदस्य समये सुबन्धोः ख्याति-र्यथा दिग्दिगन्तव्यापिनी बभूव न तथा बाणस्य, कदाचिद् बाणस्तदवधि अप्रसिद्ध एवासीदिति। एतावताऽपि सुबन्धोर्बाणपूर्ववर्त्तित्वमभ्युपपन्नं भवति, एवं मङ्खक-कविविरचिते 'श्रीकण्ठचरिते' सुबन्धुबाणयोर्यौगपद्येनैव प्रशस्तिरवलोक्यते :——

"मेण्ठे स्वर्द्विरदाधिरोहिणि वशं याते सुबन्धौ विधेः।
शान्ते हन्त च भारवौ विघटिते बाणे विषादस्पृशः॥"

इत्येतेनापि कालत्रयमालम्ब्य वर्णनेन, सुबन्धोर्बाणपूर्ववर्त्तित्वमेव प्रत्याय्यते।

पुनश्च वासवदत्तोपनतवर्णनेन सह भवभूतिकृतमालतीमाधवीयं वर्णनं यत्र कुत्र भूम्ना साजात्यं भजते। तद्यथा :——

"हृदयं विलिखितमिव, उत्कीर्णमिव, प्रत्युप्तमिव, कीलित-मिव, वज्रलेपघटितमिव, . . . . . .मर्मान्तरस्थितमिव, . . . कन्दर्पकेतुं मन्यमाना।" [वासवदत्ता]

मालतीमाधवे च——

लीनेव, प्रतिबिम्बितेव, लिखितेवोत्कीर्णरूपेव वा,
प्रत्युप्तेव च वज्रलिम्पघटितेवान्तर्निखातेव च।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभिः,
चिन्तासन्ततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया॥

[मालतीमाधवे ५।१०]

महाकविभवभूतिरचनासु कालिदासीयरचनायास्तदीयभावानाञ्च प्रभावः स्फुटं दृग्गोचरीक्रियते। सम्भवेन्नाम यत्सुबन्धोरपि शब्दाडम्बरेण भावावेशेन भवभूतिरपि प्रभावितो भवेत्। इत्यनुमित्यनुरोधेनापि ख्रैस्तसप्तमशतकसम्भवाद् भवभूतेः प्राक्कालीनः सुबन्धुः सम्भवति इति।

अथापि पाश्चात्यविद्वद्वरेण श्री कीथमहाभागेनापि समुट्टङ्कितम्——यत् सुबन्धुना वासवदत्तायां रमणीये रमणीवर्णने "न्यायस्थितिमिवोद्योतकरस्वरूपां, बौद्धसंगतिमिवालङ्कारभूषिताम्" इत्यस्मिन् श्लेषेण नैयायिकोद्योतकरस्य बौद्धसूरिविरचितस्य बौद्धसंगत्यलङ्कराख्यग्रन्थस्योपन्यासः कृतः, अनयोर्लेखकयोः समयः ख्रैस्तसप्तमशताद्या आरम्भे निर्णीतः। अतः तदभिलक्ष्य, सुबन्धुसमयः ख्रैस्तषष्ठशतके एव सम्भवति।

ख्रैस्त६५०तमाब्दभवो बाणभट्टः खलु स्वयमेव वासवदत्ताया नामकीर्त्तनं करोतीति प्रागभिहितम्। तस्माद् बाणभट्टात्पूर्वकालभवत्वमेव सुबन्धोः सम्भवति। यतः हर्षवर्द्धनस्य शासनकालः, यदाश्रितो बाण आसीत्, ख्रैस्तषट्शतोत्तरषट्तमदेशीयो कालविद्भिर्विभाव्यते इत्येव ताम्रपत्रतश्चाप्यवगम्यते। पुनश्च "सारसवत्ता विहता न बका विलसन्ति चरति नो कङ्कः। सरसीव कीर्त्तिशेषं गतवति भुवि विक्रमादित्ये" इति सुबन्धुः स्वयं यद् विक्रमादित्यं संस्मरति, राजशेखरात्पूर्वभवः कविराजश्च बाणात्पूर्वजं व्यवस्थापयति, तेन सुबन्धोः स्थितिकालः ख्रिस्तीयषष्ठशतकमध्यान्तर्घटित एवेत्युपपद्यतेतराम्। परमन्येऽत्र केचन विप्रतिपद्यमाना ब्रुवन्ति, यदि बाणभट्टात्सुबन्धोः पूर्वकालभवत्वं, केवलं विक्रमादित्यस्य नाममात्रकीर्त्तनात् तर्क्यते—— तदा खल्वेष शङ्कावतारो दुर्निवारः समापद्येत यत्सुबन्धुना सङ्कीर्त्यमानो विक्रमादित्यः कच्चित् शकारातिः विक्रम एव? उतान्यो वा कश्चिद् भवेदिति? यतोऽन्येपि किल बहवो नृपा विक्रमादित्य-विरुदभाजोऽभूवन् भारते। तेषु खलु कतमोऽयं सुगृहीतनामा यस्य नाम सुबन्धुना सङ्कीर्त्तितम्। चेन्नाम स एव शकारातिर्विक्रमः स्यादयम् तर्ह्यपि तदीयकालस्यापि अद्यावधि इदन्तया अनिर्णीतत्वात् सुबन्धोः कालोऽपि दुरुपपादः स्यात्। यद्यपि सति एवंविधे व्यतिकरे, सुबन्धो काचिन्निश्चिता कालोपपत्तिस्तु न सुकरा निर्धारयितुम् तथाऽप्येतत्पार्यते प्रतिपत्तुं यदस्य महाकवेः कालः क्वचित् ख्रैस्तसप्तमशतकमध्यान्तर्घटित एव नूनं सम्भवेदिति।

## सुबन्धोः शैली

सुबन्धोः पदविन्यासः समासबहुलः, अनुप्रासच्छटोट्टङ्कितः ओजस्वी कान्तिमाँश्चेति समभिलक्ष्य प्राधान्येनायं गौडीशैलीमेवोपालालयामासेति न

दुष्करमूहितम् । अस्य रचनायां श्लेष-विरोधाभासाद्यलङ्काराणामुपन्यासोऽतीव हृदयावर्जकः पल्लवितः इति प्राक् प्रदर्शितप्रायम् । क्वचित्क्वचिद्विरोधाभास-विलासस्तु निरतिशयो रमणीयः सम्पन्नः । तद्यथा--

"विद्याधरोऽपि सुमनाः, धृतराष्ट्रोऽपि गुणप्रियः, क्षमानुगतोऽपि सुधर्माश्रितः" इति ।

श्लेषोऽपि पुनः किञ्चित्--

"नन्दगोप इव यशोदयान्वितः, जरासन्ध इव घटितसन्धि-विग्रहः, भार्गव इव सदानभोगः, दशरथ इव सुमित्रोपेतः सुमन्त्राधि-ष्ठितश्च, दिलीप इव सुदक्षिणान्वितः रक्षितगुश्च, राम इव जनितकुश-लववयोरुपच्छायः" इत्यादि ।

मन्यामहे--"ओजःसमासभूयस्त्वमेतद् गद्यस्य जीवितम् ।" इति दण्डिकृतं गद्यलक्षणं, यदि क्वचित् पूर्णतया परिपक्त्रिमत्वेन संघटते तर्हि सुबन्धोर्गद्यबन्ध एवेति ।

यद्यपि सुबन्धुः, श्लेषाद्यलङ्कृतभाषागुम्फनप्रलोभनपाशबद्धतया क्वचित्कथावस्तुप्रवाहमुच्छिनत्ति, अन्यत्र यथार्हरसाभिव्यक्तिमपि व्याकुलीकरोति, समुल्लङ्घयति च क्वचिदौचितीसीमाम्, धूसरयति रम्यान् भावावेशान् आरचयति च केवलां शब्दाडम्बरविडम्बनाम् तथापि नासौ तावता काव्यकला-कौशलात्किञ्चित्प्रच्यवते । किन्तु खलु ध्वन्यालोककृता श्रीमतानन्दवर्द्धनाचार्येण--"दृश्यन्ते च कवयोऽलङ्कारनिबन्धनैकरसा अनपेक्षितरसाः प्रबन्धेषु" इति सुबन्धुमभिलक्ष्यैव तु न लिखितं भवेत् ? अस्तु !

मन्यामहे, यद्यपि वासवदत्तायां न दृश्यते दण्डिनो वाग्विलासः, हास्यरसोल्लासः, प्रसादप्रमोदो वा, नापि च लभ्यते बाणस्य सरसस्वारस्यप्रभावः, भव्य-भावमाधुरी च तथापि तद्रचनायाः या किल विलक्षणा स्वरमाधुरी, अपूर्वा च वर्णन-चातुरी, यच्च प्रखरपदप्रयोगप्रावीण्यं तत्तु तस्य को नाम सुधीरपह्नोतुं पारयेत । मन्यामहे यद्यपि न स्यात्तत्र मृद्वी मृद्वीकरसमाधुर्यधुर्यता, तथापि प्रकाण्डपौण्ड्रकाण्ड-रसमाधुरीं तु खल्वस्य को नाम पण्डितश्चोरयितुं प्रभवेदिति दिक् ।

------

# महाकविः बाणभट्टः

१--परिचयः । २--हर्षचरितम् । ३--कादम्बरी । ४--कादम्बर्याः कथानकम् । ५--शुकनासोपदेशः । ६--बाणस्य शैली । ७--प्रकृतिचित्रणम् । ८--बाणभट्टस्य समयः ।

## परिचयः

संस्कृतगद्यकविमण्डले महाकविर्बाणभट्टः सर्वमूर्द्धाभिषिक्तः अनितरसाधारणप्रतिभावान्, महामेधावी, वश्यवाचामग्रणीश्चासीत् । स्वजीवनविषये, स्ववंशवृत्तान्तमुद्दिश्य चायं स्वविरचिते हर्षचरिते[1], आद्यद्वयोरुच्छ्वासयोः किञ्चित् तृतीयेऽपि च समासेन सञ्जुगुम्फ । एवमसौ कादम्बर्या[2] अपि आरम्भोद्भासे स्वपारिवारिकं परिचयमपि कैश्चिदनवद्यपद्यैर्निबबन्ध । यत्तस्मिन्नेवातिप्राचीने विद्यातपोभ्यां परिपूते वत्सदधीचिप्रभृतिमहर्षीणां यशोधवलिते वंशे तज्जन्मज्योतिरुदयमाससाद, येषां तपःप्रकर्षो वैदुषीविभवश्च अखिलमहीमण्डले विश्रुत आसीत्। बालोऽयं हन्त ! बाल्यकाल एव दैवदुर्विलसितादुपसन्नया जनन्या व्ययुज्यत । अतः समुपजातस्नेहः पितृसुलभवात्सल्यसंवलितोऽस्य जनक एवास्य मातृत्वमकरोत् । विधिपूर्वकं यथाकालञ्च समारोपितोपनयनादिसंस्कारस्यास्य पित्रैव विद्यारम्भसंस्कारो महता समारम्भेण निर्वर्त्तितः । यदाऽसौ कुशाग्रधीर्वटुः, अधीयानो व्याकरणादीनि शास्त्राणि चतुर्दशवर्षीयो जातः तदा दैवदुर्विपाकाज्जनकोऽप्यस्य बालममुमजातपक्षशकुन्तमिव परित्यज्य पुरन्दरपुरं प्रतस्थे । तदनुसंस्थिते पितरि महता शोकवह्निना दन्दह्यमानहृदयोऽयं किञ्चित्कालं स्वग्राम[3] एव उषित्वा दिनानि अनैषीत् । ततोऽप्रतिमप्रतिभाशाली बालकविरयं यदा यौवने पदमधत्त तदा निरङ्कुशयौवनप्रणोदितस्यास्य मनसि देशदेशान्तरपर्यटनोत्सुकत्वमाविरभूत् । बालतया निघ्नतामुपगते देशान्तरावलोकनकौतुकाक्षिप्तहृदयः सत्स्वपि पितृपिता-

---

१. "स बाल एव विधेर्बलवतो वशादुपसन्नया व्ययुज्यत जनन्या । जातस्नेहस्तु नितरां पितैवाऽस्य मातृतामकरोत् । [हर्षचरिते]

२. बभूव वात्सायनवंशसम्भवो द्विजो जगद्गीतगुणोऽग्रणीः सताम् ।
अनेन प्तार्चितपादपङ्कजः कुबेरनामांश इव स्वयम्भुवः ।।

३. ब्राह्मणाधिवासाख्ये ग्रामे ।

महोपात्तेषु ब्राह्मणजनोचितेषु विभवेषु सति चाव्युच्छिन्ने विद्याप्रसङ्गेऽसौ सुहृद्गणैः परीतः गृहान्निरगात्। अगाच्च तथाकुर्वाणः स्वतेजोद्वेषिणां महतां वचनीयताम्। ततो देशाटनेन तृप्तो यदा स्वजन्मभुवं प्रीतिकूटनाम्ना प्रसिद्धां प्रत्यावर्त्तत तदा तस्य कुलबन्धुभिः सुहृद्वर्गैश्च महता समारम्भेण साडम्बरं तत्स्वागतोत्सवो निरवर्त्ति। तदनु कियच्चिरं तत्रैव मित्रबन्धुवर्गैः सह स्वर्गीयसुखसहोदरं मोदं प्रमोदञ्चानुभवन् सुतरामनैषीत् कमपि रसमयं समयम्।

अथैवं व्रजति काले तेनैकदा राज्ञो हर्षदेवस्य यवीयसो भ्रातुः कृष्णस्य सन्देशो मेखलक इत्याख्यसन्देशहरद्वाराऽधिगतः, यत्केनापि भवत्तेजोद्वेषिणा कर्णेजपेन पिशुनेन स राजाधिराजः श्रीहर्षः भवन्तं प्रति कलुषितान्तःकरणः कृतः। यद्यप्यस्मादृशैः सुपरिचितत्वत्कुलशीलैः यथाकथञ्चिन्महाराजस्य त्वद्विषये तादृशकलङ्कपङ्कप्रक्षालनादिना बहुतरमनाविलीकृतं दूषितमन्तःकरणम्, तथापि भवान् सुतरां विजानात्येव यद्राजानः प्रायश उच्छृङ्खलवृत्तयो भवन्ति, शृण्वन्ति च भूम्ना कर्णेजपानेव, आकलयन्ति च तानेव स्वहितवादिनः, व्याकुलयन्ति तथ्यसम्भृतानर्थानपि, कदर्थयन्ति च सदर्थान् भूरिश इति हेतोः भवद्भिरविलम्बमेव राज्ञः सम्भ्यर्णे प्रत्युपस्थाप्यात्मानं सर्वेऽपि तादृशा दोषाभासाः सर्वात्मना निबर्हणीयाः समूलङ्कषं संकषणीयाश्चेति। सन्देशहरमुखेन वृत्तमिदमाकर्ण्य तादृशमरुन्तुदं, मर्माहत इव, वृश्चिकदष्ट इव, सर्पाघ्रात इव, विदीर्णहृदयोऽयं वाणो 'मणितारा' समीपे 'अजिरावती'नाम्नि सैन्यशिविरे विराजमानं राजानं श्रीहर्षदेवं दिदृक्षुः त्वरितमेव तत्सम्भ्यर्णेऽभ्यगात्। तमापाततो दृष्ट्वैव नराधिपः निजसमीपे विराजमानं मालवाधिपतिं श्रीमाधवगुप्तमाह सक्षोभं 'महानयं भुजङ्गः' इति। तद्वचनमाकर्ण्य हालाहलविषमिव च तच्छ्रवणपुटकाभ्यां निपीय कथञ्चिदाश्वास्य हृदयं, ब्रह्मतेजःसमुत्तेजितमुखमण्डलः बालरविरिवारुणभासा समुद्भासयन् दिग्दिगन्तरालं बाणो व्याजहार अनन्यसामान्यया प्रगल्भया गिरा, "देव! नार्हसि मामन्यथा सम्भावयितुमविशिष्टमिव जनम्। ब्राह्मणोऽस्मि जातः सोमपायिनां वंशे वात्सायनानाम्। यथासमयमुपनयनादयः कृताः संस्काराः, सम्यक् पठितः साङ्गो वेदः, श्रुतानि यथाशक्ति शास्त्राणि। दारपरिग्रहादारभ्यागारिकोऽस्मि, का मे भुजङ्गता[1]?" श्री हर्षदेवश्च तन्निशम्य किञ्चिन्मन्त्रमुग्ध इव आलेख्यार्पित इव वाचंयमतामभजत। ततो गच्छति किञ्चित्काले—'यावदस्य

---

१. 'का मे भुजङ्गता' इति द्वयर्थकोऽयं वाक्यविन्यासः। प्रथमार्थो स्पष्टः। का खलु रमणी मे भुजपाशङ्गता भुजपाशबद्धा भवति इति द्वितीयोऽर्थः। कामे किल भुजङ्गतामाश्रयत इति तृतीयोऽर्थः।

स्वयमेव गृहीतस्वभावः पृथिवीपतिः प्रसादवानभूत्'। स्वल्पैरेव चाहोभिः परमप्रीतेन नरेन्द्रेणाऽसौ प्रसादजन्मनो मानसप्रेम्णो विश्रम्भस्य द्रविणस्य नर्मणः प्रभावस्य च परां कोटिमनीयत। तदनु महाकविर्बाणोऽपि नराधिपात् तादृशमादरातिशयमवाप्य आनन्दस्य परां कोटिमधिजगाहे। सहर्षञ्च राज्ञः प्रशस्तिपरं, हर्षचरितसमाख्यमेकमनवद्यं गद्यमयं प्रबन्धं निबबन्ध। यद्यपीयमस्य आद्या एव गद्यमयी रचना तथाऽपि अत्र सा नाम काऽपि अवर्णनीया वर्णनशैली, साऽलङ्कारा वाक्यनिर्झरी, अद्भुता च कवित्वकलापूर्णा वाग्धारा, यामवलोक्य सचेतसां चेतोऽद्याप्यतितरां हठात् तच्चारुत्वचमत्कृतं सञ्जायते इति।

## हर्षचरितम्

बाणभट्टस्येदं हर्षचरिताख्यं निरवद्यंगद्यगुम्फितमाद्यं गद्यमहाकाव्यं नवभिरुच्छ्वासैः प्रणिबद्धं बृहद्ग्रन्थरत्नं निरुपमतया विलसति। समाप्तिलक्षणानुपलम्भादनुमीयते यदेतदस्त्यपूर्णमेव। अस्मिन् हि सन्दर्भे कान्यकुब्जेश्वरस्य हर्षवर्धनस्य चरितं कथावस्तुरूपेणोपन्यस्तम्। महाकविरसौ स्वकीयं परिचयमपि सङ्ग्रहेणारचयति। हर्षचरितमुद्दिश्य सम्प्रति टीकाद्वयमुपलभ्यते। राजानकरुय्यककविप्रणीता 'हर्षचरितवार्त्तिका'नाम्नी, शङ्करकविविरचिता 'हर्षचरितसङ्केत'-नाम्नी च।

अस्मिन् हि काव्ये पल्लविता कापि चारुरचनाचातुरी, लोकोत्तरपदविन्यासोल्लासः सुरुचिरञ्च तत्कथावस्तुचित्रणं न कस्य सचेतसो चेतश्चमत्करोति? तद्दिङ्मात्रमत्रोदाह्रियते काव्यरसिकानां मनस्तोषपोषाय :—

"यस्मिंश्च राजनि निरन्तरैर्यूपनिकरैरङ्कुरितमिव कृतयुगेन, दिङ्मुखविसर्पिभिरध्वरधूमैः पलायितमिव कलिना, ससुधैः सुरालयैरिवावतीर्णमिव स्वर्गेण, सुरालयशिखरोद्धूयमानैर्धवलध्वजैः पल्लवितमिव धर्मेण; बहिरुपचरितविकटसभासत्रप्रपाप्राग्वंशमण्डपैः प्रसूतिमिव ग्रामैः, काञ्चनमयसर्वोपकरणैर्विभवैर्विशीर्णमिव मेरुणा, द्विजदीयमानैरर्थकुशलैः फलितमिव भाग्यसम्पदा।" इति।

अहो कीदृशो विस्मयावहो मधुरवाग्धाराप्रवाहो वाचाम्?

वस्तुतः हर्षचरितमेव केवलं श्लेषविरोधाभासोपमोत्प्रेक्षाद्यलङ्कारविशेषैः समलङ्कृतं मृदुलपदावलिसंवलितं नूनं प्रख्यापयति अस्योद्भटकवेः भट्टबाणस्य गद्यरचनाचातुरीचारुतामित्यत्र नास्ति सन्देहलवोऽपि। मन्ये यथाऽसौ वर्णनीयं वस्तुतत्त्वं चित्रार्पितमिवारचयति यथार्हतया न तथाऽन्यस्तदितरः। तथाहि :—

"स्थानेषु स्थानेषु च मन्दमन्दमास्फाल्यमानालिङ्ग्यकेन शिञ्जानमञ्जुवेणुकेनानुत्तालाबुवीणेन कलकांस्यकोशीक्वणितकोलाहलेन समकालदीयमानानु-

तालतानकेनातोद्यवाद्येनाऽनुगम्यमानाः; पदे-पदे झणझणितरवैरपि सहृदयैरिवानुवर्त्तमाना काललयाः, कोकिला इव मदकलकाकलीकोमलालापिन्यः, विटानां कर्णामृतान्यश्लीलरासकपदानि गायन्त्यः, कुङ्कुमप्रमृष्टरुचिरकायाः काश्मीरकिशोर्य इव वल्गन्त्यः । .... कुमुदिन्य इव रात्रावनुपजातनिद्राः, आविष्टा इव नरेन्द्रवृन्दपरिवृताः, प्रीतय इव हृदयमाहरन्त्यः, गतय इव रागमुद्दीपयन्त्यः, पुष्टय इवानन्दमुत्पादयन्त्यः, मदमपि मदयन्त्य इव, रागमपि रञ्जयन्त्य इव, आनन्दमपि आनन्दयन्त्य इव, नृत्यमपि नर्तयमाना इव, उत्सवमपि उत्सुकयन्त्य इव कटाक्षितेषु पिबन्त्य इवापाङ्गशुक्तिभिः, तर्जनेषु संयमन्त्य इव नखमयूखपाशैः, कोमलाभिनयेषु ताडयन्त्य इव भ्रूलताविभागैः, प्रणयसम्भाषणेषु वर्षन्त्य इव सर्वरसान्, चतुरचङ्क्रमणेषु विकिरन्त्य इव विकारान्, पण्यविलासिन्यः प्रानृत्यन् ।" [हर्षचरिते चतुर्थोच्छ्वासे]

इति कीदृशं याथार्थ्यमतिक्रममाणा वर्णना । पण्याङ्गनानां विभ्रमविलासस्त्वालेख्यबद्ध इवाङ्कितः खल्वत्र । यं कमपि रसमादाय प्रसरति बाणस्य वाणी तन्तं पूर्णपरिपाकमेवावतारयति कात्स्न्येंनेति नात्र कश्चन संशयावकाश इति ।

## कादम्बरी

कादम्बरी बाणभट्टस्य द्वितीया अद्भुता रचना । हर्षचरितम् कादम्बरी चेति द्वे एव बाणस्य रचनात्वेन सुप्रसिद्धे गद्यमहाकाव्ये । यद्यपि अस्मिन् काव्यद्वयेऽपि बाणस्य अलौकिकं काव्य–कलाकौशलं, प्रदीप्तं प्रतिभावैभवञ्च सञ्चकास्ति समीचीनतया तथाऽपि कादम्बरीतुलां तु नाधिरोढुमुत्सहते कस्यापि कवेः गद्यकृतिरद्यावधि । अस्य वाग्विन्यासविलासं विलोक्य रसिका आनन्दमदोन्मत्ता जायन्ते[१] । पुलिन्दभट्टस्य एव वचोविन्यासः सुतरां चरितार्थ एव किल यत् :––

'कादम्बरीरसभरेण समस्त एष, मत्तो न किञ्चिदपि चेतयते जनोऽयम् ।' इति ।

## कादम्बर्याः कथानकम्

कादम्बर्याः कथानकं गुणाढ्यविरचितबृहत्कथातः सङ्कलितम्प्रतिभाति । तां साधारणीं कथां बाणः रसगुणालङ्कराद्यलङ्कृतां विधाय कादम्बरीरूपेण प्राचीकशत् । दैवदुर्विलसितात्कविधुरन्धरोऽयं बाणः कादम्बरीमपूर्णामिव परित्यज्य पुरन्दरपुरं ययौ । कादम्बर्याः पूर्वार्द्धभाग एव बाणप्रणीतः । उत्तरार्द्धभागस्तु बाणात्मजेन पुलिन्दभट्टापरनाम्ना भूषणभट्टेन बाणशैलीमवलम्ब्यैव विरचितः ।

---

१. बाणस्य लोकोत्तरां काव्यकलाकमनीयां शब्दसम्पदाढ्यतां विभाव्य भणितिरियं––"बाणोच्छिष्टं जगत्सर्वम् ।" इति नूनं चतुरस्रतां बिभर्त्ति।

कादम्बर्यां बाणेन याद्भुता प्रतिभाद्युतिः प्रदर्शिता सापि पराकाष्ठां प्राप्ता। श्लेषगुम्फनमतीव कुतूहलजनकं, निदर्शनरूपेण च विन्ध्याटवीं वर्णयन्नसौ व्यलिखत् :—

"प्रेताधिपनगरीव सदासन्निहितमृत्युभीषणा महिषाधिष्ठिता च, समरोद्यतपताकिनीव बाणासनारोपितशिलीमुखा विमुक्तसिंहनादा च, कात्यायनीव प्रचलितखड्गभीषणा रक्तचन्दनालङ्कृता च, कर्णीसुतकथेव सन्निहितविपुलाचला शशोपनता च, कल्पान्तप्रदोषसन्ध्येव प्रनृत्तनीलकण्ठा पल्लवारुणा च, चन्द्रमूर्त्तिरिव सततमृक्षसार्थानुगता, गिरितनयेव स्थाणुसङ्गता मृगपतिसेविता च, जानकीव प्रसूतकुशलवा निशाचरपरिगृहीता च, कामिनीव चन्दनमृगमदपरिमलवाहिनी रुचिरागुरुतिलकभूषिता च, सोत्कण्ठेव विविधपल्लवानलवीजिता समदना च, बालग्रीवेव व्याघ्रनखपङ्क्तिमण्डिता गण्डकाभरणा च, पानभूमिरिव प्रकटितमधुकोशशता प्रकीर्णविविधकुसुमा च, क्वचित्प्रलयवेलेव महावराहदंष्ट्रासमुत्खातधरणिमण्डला, क्वचिद्दशमुखनगरीव चटुलवानरवृन्दभज्यमानतुङ्गशालाकुला, क्वचिदचिरनिवृत्तविवाहभूमिरिव हरितकुशसमित्कुसुमशमीपलाशशोभिता, क्वचिदुद्धतमृगपतिनादभीतेव कण्टकिता, क्वचिन्मत्तेव कोकिलकुलकलप्रलापिनी, क्वचिदुन्मत्तेव वायुवेगकृततालशब्दा, क्वचिद्विधवेवोन्मुक्ततालपत्रा, क्वचित्समरभूमिरिव शरशतनिचिता, क्वचिदमरपतितनुरिव नेत्रसहस्रसङ्कुला, क्वचिन्नारायणमूर्त्तिरिव तमालनीला, क्वचित्पार्थरथपताकेव कप्याक्रान्ता, ...." इत्यादि।

अपि च शाल्मलीतरुवर्णनमपि अतिकौतुकावहं श्लेषरूपेण चमत्करोति चेतांसि सचेतसाम्। तथा हि :—

"दुर्योधन इवोपलक्षितशकुनिपक्षपातः, नलिननाभ इव वनमालोपगूढः, नवजलधरव्यूह इव नभसि दर्शितोन्नतिः, अखिलभुवनतलावलोकनप्रसाद इव वनदेवतानाम्, अधिपतिरिव दण्डकारण्यस्य, नायक इव सर्ववनस्पतीनाम्, सखेव विन्ध्यस्य, शाखाबाहुभिरूपगुह्येव विन्ध्याटवीं स्थितो महाञ्जीर्णः शाल्मलीतरुः।"

[काद० पृ० ५२]

## शुकनासोपदेशः

न केवलं शब्दालङ्करणविशेषः श्लेष एवास्य प्राशस्त्यमर्हति अपितु भावसम्भूतलोककल्याणौपयिकव्यवहार्यापरिहार्यरम्यरीतिराजनीतिविषयकाः साम्योपदेशास्तात्त्विकसुभगसन्देशाश्चापि अस्य कवेः सौष्ठवस्य परां कोटिमाटीकमाना विलसन्ति। तथाहि शुकनासोपदेशः —

"समुपस्थितयौवराज्याभिषेकं च तं कदाचिद्दर्शनार्थमागतमारूढविनयमपि विनीततरमिच्छन् शुकनासः सविस्तरमुवाच—'तात चन्द्रापीड! विदितवेदि-

तव्यस्याधीतसर्वशास्त्रस्य ते नाल्पमपि उपदेष्टव्यमस्ति केवलं च निसर्गत एवाभानुभेद्यमरत्नालोकोच्छेद्यमप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभवम् । अपरिणामोपशमो दारुणो लक्ष्मीमदः । कष्टमनञ्जनवर्त्तिसाध्यमपरमैश्वर्यतिमिरान्धत्वम् । अशिशिरोपचारहार्योऽतितीव्रो दर्पदाहज्वरोष्मा । सततममलमन्त्रगम्यो विषयो विषयविषाद्यास्वादमोहः । नित्यमस्नानशौचवध्यो रागमलावलेपः । अजस्रमक्षपाऽवसानप्रबोधा घोरा च राज्यसुखसन्निपातनिद्रा भवतीति विस्तरेणाभिधीयसे । गर्भेश्वरत्वमभियौवनत्वमप्रतिमरूपत्वममानुषशक्तित्वञ्चेति महतीयं खल्वनर्थपरम्परा सर्वा । अविनयानामेकैकमप्येषामायतनम्, किमुत समवायः । यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्यमुपयाति बुद्धिः । अनुज्झितधवलताऽपि सरागैव भवति यूनां दृष्टिः । अपहरति वात्येव शुष्कपत्रं समुद्भूतरजोभ्रान्तिरतिदूरमात्मेच्छया यौवनसमये पुरुषं प्रकृतिः । इन्द्रियहरिणहारिणी च सततदुरन्तेयमुपभोगमृगतृष्णिका । नवयौवनकषायितात्मनश्च सलिलानीव तान्येव विषयस्वरूपाण्यास्वाद्यमानानि मधुरतराण्यापतन्ति मनसः । नाशयति च दिङ्मोह इवोन्मार्गप्रवर्त्तकः पुरुषमत्यासङ्गो विषयेषु । भवादृशा एव भवन्ति भाजनानि उपदेशानाम् । अपगतमले हि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति सुखेनोपदेशगुणाः । गुरुवचनममलमपि सलिलमिव महदुपजनयति श्रवणस्थितं शूलमभव्यस्य इतरस्य तु करिण इव शङ्खाभरणमाननशोभासमुदयमधिकतरमुपजनयति । हरति अतिमलिनमन्धकारमिव दोषजातं प्रदोषसमयनिशाकर इव । गुरूपदेशः प्रशमहेतुर्वयःपरिणाम इव पलितरूपेण शिरसिजजालममलीकुर्वन्गुणरूपेण तदेव परिणमयति । अयमेव चानास्वादितविषयरसस्य ते काल उपदेशस्य । कुसुमशरशरप्रहारजर्जरिते हि हृदि जलमिव गलत्युपदिष्टम् । अकारणं च भवति दुष्प्रकृतेरन्वयः श्रुतश्चाविनयस्य । चन्दनप्रभवो न दहति किमनलः ? किं वा प्रशमहेतुनापि न प्रचण्डतरो भवति वडवानलो वारिणा ? गुरूपदेशश्च नाम पुरुषाणामखिलमलक्षयमजलं स्नानम् । अनुपजातपलितादिवैरूप्यमजरं वृद्धत्वम् । अनारोपितमेदोदोषं गुरूकरणम्, अतीतज्योतिरालोकः, नोद्वेगकरः प्रजागरः । विशेषेण राज्ञाम् । विरला हि तेषामुपदेष्टारः । प्रतिशब्दक इव राजवचनमनुगच्छति जनो भयात् । उद्दामदर्पाश्च पृथुस्थगितश्रवणविवराश्चोपदिश्यमानमपि ते न शृण्वन्ति । शृण्वन्तोऽपि गजनिमीलितेनावधीरयन्तः खेदयन्ति हितोपदेशदायिनो गुरून् । अहङ्कारदाहज्वरमूर्च्छान्धकारिता विह्वला हि राजप्रकृतिः । अलीकाभिमानोन्मादकारीणि धनानि । राज्यविषविकारतन्द्राप्रदा राजलक्ष्मीः । अवलोकयतु तावत्कल्याणाभिनिवेशी लक्ष्मीमेव प्रथमम् । इयं हि खड्गमण्डलोत्पलवनविभ्रमभ्रमरी लक्ष्मीः क्षीरसागरात् पारिजातपल्लवेभ्य रागम्, इन्दुशकलादेकान्तवक्रताम्, उच्चैःश्रवस-

श्चञ्चलताम्, कालकूटान्मोहनशक्तिम्, मदिराया मदम्, कौस्तुभमणेर्नैष्ठुर्यम्, इत्येतानि सहवासपरिचयवशाद्विरहविनोदचिह्नानि गृहीत्वैवोद्गता। न ह्येवंविधमपरिचितमिह किञ्चिदस्ति यथेयमनार्या। लब्धापि खलु दुःखेन परिपाल्यते। दृढगुणसन्दाननिस्पन्दीकृतापि नश्यति। उद्दामदर्पभटसहस्रोल्लसितासिलतापञ्जरविधृताप्यपक्रामति। मदजलदुर्दिनान्धकारगजघटितघनघटापरिपालितापि प्रपलायते। न परिचयं रक्षति। नाभिजनमीक्षते। न रूपमालोकयते। न कुलक्रममनुवर्तते। न शीलं पश्यति। न वैदग्ध्यं गणयति। न श्रुतमाकर्णयति। न धर्ममनुरुध्यते। न त्यागमाद्रियते। न विशेषज्ञतां विचारयति। न चाचारं पालयति। न सत्यमनुबध्यते। न लक्षणं प्रमाणीकरोति। गन्धर्वनगरलेखेव पश्यत एव नश्यति। अद्याप्यारूढमन्दरपरिवर्तावर्तभ्रान्तिजनितसंस्कारेव परिभ्रमति। कमलिनीसञ्चरणव्यतिकरलग्ननलिननालकण्टकेव न क्वचिदपि निर्भरमाबध्नाति पदम्। अतिप्रयत्नविधृतापि परमेश्वरगृहेषु विविधगन्धगजगण्डमधुपानमत्तेव परिस्खलति। पारुष्यमिवोपशिक्षितुमसिधारासु निवसति। विश्वरूपत्वमिव ग्रहीतुमाश्रिता नारायणमूर्त्तिम्। अप्रत्ययबहुला च दिवसान्तकमलमिव समुपस्थितमूलदण्डकोशमण्डलमपि मुञ्चति भूभुजम्। लतेव विटपकानध्यारोहति। गङ्गेव वसुजनन्यपि तरङ्गबुद्बुदचञ्चला। दिवसकरगतिरिव प्रकटितविविधसङ्क्रान्तिः। पातालगुहेव तमोबहुला। हिडम्बेव भीमसाहसकहार्यहृदया। प्रावृडिवाचिरद्युतिकारिणी। दुष्टपिशाचीव दर्शितानकपुरुषच्छाया स्वल्पसत्वमुन्मत्तीकरोति। सरस्वतीपरिगृहीतमीर्ष्ययेव नालिङ्गति। जनं गुणवन्तमपवित्रमिव न स्पृशति। उदारसत्वममङ्गलमिव न बहु मन्यते। सज्जनमनिमित्तमिव न पश्यति। अभिजातमहिमिव लङ्घयति। शूरं कण्टकमिव परिहरति। दातारं स्वप्नमिव न स्मरति। विनीतं पातकिनमिव नोपसर्पति। मनस्विनमुन्मत्तमिवोपहसति। परस्परविरुद्धञ्चेन्द्रजालमिव दर्शयन्ती प्रकटयति जगति निजं चरितम्। तथाहि सन्ततमूष्माणमुपजनयन्त्यपि जाड्यमुपजनयति। उन्नतिमादधानाऽपि नीचस्वभावतामाविष्करोति। तोयराशिसंभवाऽपि तृष्णां संवर्धयति। ईश्वरतां दधानापि अशिवप्रकृतित्वमातनोति। बलोपचयमाहरन्त्यपि लघिमानमापादयति। अमृतसहोदराऽपि कटुकविपाका। विग्रहवत्यपि अप्रत्यक्षदर्शना। पुरुषोत्तमरतापि खलजनप्रिया। .....नहि तं पश्यामि यो ह्यपरिचितयानया न निर्भरमुपगूढः, यो वा न विप्रलब्धः.....'' इत्यादि।

अन्ते च ''तदेवंप्रायाऽतिकुटिलकष्टचेष्टासहस्रदारुणे राज्यतन्त्रेऽस्मिन् महामोहकारिणि च यौवने, कुमार! तथा प्रयतेथा यथा नोपहस्यसे जनैः, न निन्द्यसे साधुभिः, न धिक्क्रियसे गुरुभिः, नोपलभ्यसे सुहृद्भिः, न शोच्यसे

विद्वद्भिः, यथा च न प्रकाश्यसे विटैः, न प्रतार्यसेऽकुशलैः, नास्वाद्यसे भुजङ्गैः, नावलुप्यसे सेवकवृकैः, न वञ्च्यसे धूर्त्तैः, न प्रलोभ्यसे वनिताभिः, न विडम्ब्यसे लक्ष्म्या, न नर्त्यसे मदेन, नोन्मत्तीक्रियसे मदनेन, नाक्षिप्यसे विषयैः, नावकृष्यसे रागेण, नापह्रियसे सुखेन। कामं भवान् प्रकृत्यैव धीरः, पित्रा च समारोपितसंस्कारः, तरलहृदयमप्रतिबद्धञ्च मदयन्ति धनानि । तथापि भवद्गुणसन्तोषो मामेवं मुखरीकृतवान्। इदमेव च पुनः पुनरभिधीयसे। विद्वांसमपि सचेतनमपि महासत्त्वमप्यभिजातमपि धीरमपि प्रयत्नवन्तमपि पुरुषमियं दुर्विनीता खलीकरोति राजलक्ष्मीरिति। सर्वथा पित्रा कल्याणैः क्रियमाणमनुभवतु भवान्नवयौवराज्याभिषेकमङ्गलम्। कुलक्रमागतामुद्वह पूर्वपुरुषैरूढां धुरम्। अवनमय द्विषतां शिरांसि। उन्नमय स्वबन्धुवर्गम् । अभिषेकानन्तरञ्च प्रारब्धदिग्विजयः परिभ्रमन् विजितामपि तव पित्रा सप्तद्वीपभूषणां पुनर्विजयस्व वसुन्धराम्। अयं च ते कालः प्रतापमारोपयितुम्। आरूढप्रतापो राजा त्रैलोक्यदर्शीव सिद्धादेशो भवति इत्येतदभिधायोपशशाम। उपशान्तवचसि शुकनासे चन्द्रापीडः ताभिरुपदेशवाग्भिः, प्रक्षालित इव, उन्मीलित इव, स्वच्छीकृत इव, निर्मृष्ट इव, अभिषिक्त इव, अभिलिप्त इव, अलङ्कृत इव, पवित्रीकृत इव, प्रीतहृदयो मुहूर्त्तं स्थित्वा स्वभवनमाजगाम।"

[कादम्बरी]

अहो नु खल्वेषा वाचामगोचरया, गम्भीरार्थकल्पनया व्यङ्ग्यभङ्ग्या विभूषिता वाणीयं बाणभट्टस्य न कस्य हृदयवतो हृदये प्रमोदमातनुते।

## बाणस्य शैली

बाणस्तु पाञ्चालीप्रियः --

शब्दार्थयोः समो गुम्फः पाञ्चाली रीतिरिष्यते।
शिलाभट्टारिकावाचि बाणोक्तिषु च सा मता॥

बाणेन प्रायशः स्वरचनासु पाञ्चालीरीतिरेवाश्रिता विभाव्यते। अस्य रचनासु पदपदार्थानां मनोभावावेशानां यादृशं सुरुचिपूर्णं सामञ्जस्यमभिलक्ष्यते न तादृगन्यत्र क्वचिदवतरति दृष्टिपथम् । वर्ण्यवस्त्वनुरूपः पदविन्यासविलास एवास्य रचनाया वैशिष्टचम्। विकटविन्ध्याटवीं हि वर्णयन्नसौ प्रयुङ्क्ते विकटानेव शब्दाटोपान् "क्वचित् प्रलयवेलेव महावराहदंष्ट्रासमुत्खातधरणिमण्डला, क्वचिदुत्कृतमृगपतिनादभीतेव कण्टकिता" इत्यादि । वसन्तवर्णनप्रसङ्गे समुपलालयत्यसौ कामपि मृदुलामतिकोमलाञ्च पदावलीम्। तथाहि :—

"अशोकतरुताडनरणितरमणीमणिनूपुरझङ्कारसहस्रमुखरेषु सकलजीवलोकहृदयानन्ददायकेषु, मधुमासदिवसेषु इति।"

अनुप्रासविन्यासोऽप्यस्य कमप्यद्भुतमेव चमत्कारमादधाति :—

"इभकलभकल्लोनपल्लववेल्लितलवलीलयैः, मधुकरकुलकलङ्ककालीकृत-कालेयककुसुमकुड्मलेषु ।"

महाकवेरस्योपमापरम्पराया अपि किञ्चिन्निदर्शनम् :—

"क्रमेण च कृतं मे वपुषि वसन्त इव मधुमासेन, मधुमास इव नवपल्लवेन, नवपल्लव इव कुसुमेन, कुसम इव मधुकरेण, मधुकर इव मदेन, नवयौवनेन पदम् ।"

अस्य विरोधाभासविलासोऽपि दर्शनीयः —"शिशिरस्यापि रिपुजनसन्ताप-कारिणः, स्थिरस्यापि अनवरतं भ्रमतः, निर्मलस्यापि मलिनीकृताराातिवनिता-मुखकमलद्युतेः, अति धवलस्यापि सर्वजनरागकारिणः ।"

अर्थापत्त्यलङ्कारचमत्कारोऽपि किञ्चिदालोचनीयम्—"किं बहुना तापसाग्निहोत्रधूमलेखाभिरुत्सर्पन्तीभिरनिशमुपपादितकृष्णाजिनोत्तरासङ्गशोभाः फलमूलभृतो वल्कलिनो निश्चेतनास्तरवोऽपि सनियमा इव लक्ष्यन्तेऽस्य भगवतः समीपवर्त्तिनः, किं पुनश्चेतनाः प्राणिनः ।"

बाणस्य कृतिषु मधुरपदविन्यास-समासझङकृतिरेव सर्वत्र कर्णकुहर-माह्लादयन्तीवानुश्रूयते । यथा :—

"वशीकर्तुकामं काममिव सनियमम्, हर्षजलकणनीहारिणि वियद्विहारिणि मनोहारिणि, कर्पूरधूलिधूसरेषु मलयजरसलवलुलितेषु बकुलावलीवलयेषु स्तनेषु ।" इति ।

## प्रकृति-चित्रणम्

बाणस्य प्रकृतिचित्रणं विविधालङकृत्यनुप्राणितं तस्य सूक्ष्मनिरीक्षण-शक्तित्वं प्रमाणयति :—

'एकदा तु नातिदूरोदिते नवनलिनदलसम्पुटभिदि, किञ्चिदुन्मुक्त-पाटलिम्नि, भगवति मरीचिमालिनि' अत्रारुणवर्णवतस्तरुणदिनमणेर्वर्णनेन कविना को नाम कोविदो नाप्यायितः ? एवमेव—'दिवसावसाने लोहित-तारका तपोवनधेनुरिव कपिला परिवर्त्तमाना सन्ध्या" अत्र सन्ध्यां कपिलया धेन्वा सहोपमिमानः कविः कस्यान्तरङ्गं नानन्दतरङ्गितं करोति ?

किञ्च :—"यौवनमिवोत्कलिकाबहुलं, षण्मुखचरितमिव श्रूयमाणक्रौञ्च-वनिताविलापम्, भारतमिव पाण्डवधार्त्तराष्ट्रकुलकृतक्षोभं, कद्रूस्तनयुगलमिव नागसहस्रपीतपयोगण्डूषमच्छोदं नाम सरो दृष्टवान् ।" इति अच्छोदसरोवर्णनं कस्य नातनोति मनोमोदम् ।

"अनेन च समयेन परिणतो दिवसः, स्नानोत्थितेन मुनिजनेनार्घविधिमुपपादयता यः क्षितितले दत्तहस्तमम्बरतलगतः साक्षादिव रक्तचन्दनाङ्गरागं रविरुदवहत। ऊर्ध्वमुखैरर्कबिम्बविनिहितदृष्टिभिरूष्मपैस्तपोधनैरिव परिपीयमानतेजःप्रसरः, विरलातपो दिवसस्तनिमानमभजत। उद्यत्सप्तर्षिसार्थस्पर्शपरिजिहीर्षयेव संहृतपादः पारावतचरणपाटलरागो रविरम्बरतलादलम्बत। विहाय धरणितलमुन्मुच्य कमलिनीवनानि शुककपय इव दिवसावसाने तपोवनतरुशिखरेषु पर्वताग्रेषु रविकिरणाः स्थितिमकुर्वत।" कीदृशमिदं सूर्यास्तवर्णनं चित्राङ्कितमिवोट्टङ्कितम्।

वस्तुतः काव्यादर्शनिर्दिष्टलक्षणं सर्वतोभावेन यदि कुत्रचिद् घटते तर्हि तदत्र बाणकृताविति निर्विशङ्कम्।

'ओजःसमासभूयस्त्वमेतद् गद्यस्य जीवितम्।' इति।

स्वयं बाणोप्याह हर्षचरिते गद्यशैल्या दुष्करत्वं विवृण्वन् :—

नवोऽर्थो जातिरग्राम्या श्लेषोऽश्लिष्टः स्फुटो रसः।
विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुष्करम्॥

परं हर्षचरिते कादम्बर्याञ्च एषां कार्त्स्न्येन सङ्गमस्तु नूनं हृदयङ्गम एव सम्पन्नः। अपि च मदनव्यथापीडितस्य पुण्डरीकस्य, कपिञ्जलमुखेन कीदृश्या प्राञ्जलया प्रौढया च वाण्या भर्त्सनां विदधाति :—

'सखे पुण्डरीक! नैतदनुरूपं भवतः। क्षुद्रजनक्षुण्ण एष मार्गः। धैर्यधना हि साधवः। किं यः कश्चित्प्राकृत इवात्मानं विक्लवीभवन्तं न रुणत्सि। कुतस्तवाऽपूर्वोऽयमद्येन्द्रियविप्लवो, येनास्येवं कृतः। क्व ते तद्धैर्यम्। क्वासाविन्द्रियजयः।. . . . निरुपकारो गुरूपदेशविवेकः, निष्प्रयोजना प्रबुद्धता, निष्कारणं ज्ञानम् यदत्र भवादृशा अपि रागाभिषङ्गैः कलुषीक्रियन्ते, प्रमादैश्चाभिभूयन्ते।" इति।

वस्तुतः बाणवाणी कामपि अनन्यसाधारणीं नैपुणीमाविष्करोति, न कदापि औचितीमतिक्रमते। अनुबध्नाति सर्वदैवोर्वरां कल्पनाम्। उपलक्षयति सूक्ष्मनिरीक्षणधियम्। प्रकटीकरोति लब्धावसरं विकटपदप्रयोगपाटवम्। उपलालयति पदलालित्यम्। ग्रथ्नाति गम्भीरभावकुसुमस्तबकम्। व्यक्तीकरोति प्रलम्बसमासव्यासवैदुषीम्। आलम्बते च शब्दाडम्बरमपि यथास्थानम्। क्वचित्तर्जनं करोति, अन्यत्र भर्त्सनम्, इतरत्र गर्जनम्। एकत्र निर्दिशति, अपरत्रोपदिशति। सर्वत्र परिपुष्णाति भारतीयसंस्कृतिम्, अनुपालयति आर्यमर्यादाम्। संस्तौति ऋषीन्

निन्दति क्षुद्रान्। धर्मं प्रबलयति, अवहेलयत्यधर्मम्। किं किन्न करोति सत्कवि-समुचितमखिलमेव। बिभर्त्ति च प्राचीनपरम्पराम्। प्रकर्षयति विप्रान्। उत्कर्षयति क्षत्रियान्। विरसयति लक्ष्मीम्। सरसयति सरस्वतीम्। प्रदर्शयति आदर्शम्। निदर्शयति जीवनपथम् समीचीनतया। इत्यत्र तु नास्त्येव सन्देहलवः। स्थान एव खलु विदग्धमुखमण्डनकृद् विदग्धशिरोमणिः श्रीधर्मराजो बाणवाणीमधस्तनयार्यया प्रशंसति :—

रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति।
सा किं तरुणि! नहि नहि वाणी बाणस्य मधुरशीलस्य॥

त्रिलोचनमहाभागेनापि सम्यगालोचितम् :—

हृदि लग्नेन बाणेन यन्मन्दोऽपि पदक्रमः।
भवेत्कविकुरङ्गाणां चापलं तत्र कारणम्॥

गोवर्धनाचार्येण तु इयद् यावल्लिखितं यत् सरस्वत्या स्वयं वाक्प्रागल्भ्यमवाप्तुं पुंरूपेण बाणावतारो गृहीतः। तथाहि :—

जाता शिखण्डिनी प्राक् यथा शिखण्डी तथाऽवगच्छामि।
प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूव ह॥

नलचम्पूकृत् त्रिविक्रमभट्टमहोदयोऽपि बाणस्य लोकप्रियतामभिलक्ष्य शंसति :—

शश्वद्बाणद्वितीयेन नमदाकारधारिणा।
धनुषेव गुणाढ्येन निःशेषो रञ्जितो जनः॥

अपि च :—

वाणीपाणिपरामृष्ट - वीणानिक्वाणहारिणीम्।
भावयन्ति कथं वाऽन्ये भट्टबाणस्य भारतीम्॥

सर्वलोकप्रथितां "बाणोच्छिष्टं जगत्सर्वम्" इत्युक्तिस्तु बाणप्रशंसायाः परां कोटिमवजगाहे।

यद्यपि केचन हर्षचरितमभिलक्ष्य :—

बाणस्य हर्षचरिते निशितामुदीक्ष्य।
शक्तिं नवेऽत्र कवितास्त्रमदं त्यजन्ति॥

इत्युद्घोषयन्ति, किन्तु सम्भवेत्कदाचित्कादम्बरीरचनापूर्वतनं वृत्तमिदम्। मन्यामहे, यद्रचनासौन्दर्यदृशा हर्षचरितमादधाति लोकोत्तरं वैशिष्ट्यम्। आविष्करोति च पदे-पदे बाणस्याद्भुतवर्णनाशक्तिं चरित्रचित्रणचारुताञ्च। वयमपि च तां समा-

द्रियामहे। प्रभाकरवर्धनस्य यदपूर्वं वर्णनमालेख्यार्पितमिव कृतं हर्षचरिते न तद्वाग्विषयतामवगाहते। यद्यपि षष्ठतमे उच्छ्वासे च सिंहनादस्योपदेशः कादम्बरीगतशुकनासोपदेशेन सह स्पर्द्धां विधत्ते, तथाऽपि कादम्बरी कादम्बरी एव हर्षचरितञ्च हर्षचरितम्। को नाम समुत्सहेत हर्षचरितं कादम्बरीतुलामधिरोहयितुम्। युक्तमेवोक्तं केनाप्यभियुक्तेन :—

श्लेषे केचन शब्दगुम्फविषये केचिद्रसे चापरे-
ऽलङ्कारे कतिचित्सदर्थविषये चान्ये कथावर्णने।
आः सर्वत्र गभीरधीरकविता-विन्ध्याटवी-चातुरी-
सञ्चारी कविकुम्भिकुम्भभिदुरो बाणस्तु पञ्चाननः॥

पार्वतीपरिणये च बाणः कविसार्वभौमत्वेन संस्तुतः :—

"अस्ति कविसार्वभौमो वत्सान्वयजलधिकौस्तुभो बाणः।
नृत्यति यद्रसनायां वेधोमुखरंगलासिका वाणी॥ इति

अस्य महाकवेरनुपमकवित्ववैभववशात् प्रहृष्टमना श्रद्दधानः श्रीहर्षः श्रीबाणाय अमितां द्रव्यराशिं वितताार। तथा उपश्लोकितम् केनापि :—

"हेम्नो भारशतानि वा मदमुचां वृन्दानि वा दन्तिनाम्,
श्रीहर्षेण समर्पितानि कवये बाणाय कुत्राद्य तत्।
या बाणेन तु तस्य सूक्तिनिकरैरुट्टङ्किता कीर्तय-
स्ताः कल्पप्रलयेऽपि यान्ति न मनाक् मन्ये परिम्लानताम्॥

स्थाने खल्वेतत् प्रशंसोल्लासविजृम्भणम् हृदयवताम् इति। नूनमप्रतिमप्रतिभाचमत्कृता बाणस्य कृतिरनन्यसाधारणतया संस्कृतवाङ्मयेऽभितो विलसति।

को नाम तस्याश्चमत्कृतिचारुतामपह्नोतुं प्रकल्पेत इति।

## बाणभट्टस्य समयः

यतो बाणभट्टोऽयं कान्यकुब्जाधिपस्य हर्षदेवस्य सभापण्डितः आसीत्; हर्षदेवस्य च स्थितिकालः क्रैस्त ६०६ तमोऽवधारितः कालविद्भिरतो बाणभट्टस्याऽपि स एव समयोऽस्तीति सन्देहातीतम्। कतिपयैरन्तरङ्गप्रमाणैरप्येतदेव निश्चीयते।

क्रैस्त ११५० तमसम्भवेन आलङ्कारिकेण रुय्यकेण स्वकीये अलङ्कारसर्वस्वे हर्षचरितस्योल्लेखः कृतः। क्रैस्त १०५० तमभवेन क्षेमेन्द्रेण स्वरचनासु बाणनाम्न उल्लेखः कृतः। क्रैस्त १०६९ जातेन रुद्रटकृतकाव्यालङ्कारस्य टीका-

कारेण नेमिसाधुना यत्रतत्र कादम्बरी-हर्षचरितयोरुद्धरणानि प्रदत्तानि । एवमेव भोजदेवेनाऽपि ऋै० १०२५ तमे लब्धस्थितिकेन स्वकीये सरस्वतीकण्ठाभरणे 'यादृग्गद्यविधौ बाणः पद्यबन्धे न तादृश' इति बाणस्य प्रशस्तिरारचिता । ऋै० १००० सम्भवेन धनञ्जयेन दशरूपके बाणः संस्मृतः । इत्थमेव आनन्दवर्धनेन वामनेनापि बाणो न मुक्तः । किं बहुना, द्वादशशताब्द्या आरभ्य अष्टमशतक-पर्य्यन्तजातैः प्रधानभूतैः सर्वैरपि ग्रन्थकृद्भिः महामहिमशालिनो बाणस्य नाम कीर्तितम् । तेन अपरिहार्यतया सप्तमी शताब्द्येव बाणस्य समय इति निश्च-प्रचम् इति दिक् ।

---

# महाकविः दण्डी

(क्रैस्त ६००)

१—परिचयः । २—दण्डिनः साहित्यम् । ३—त्रयः प्रमुखप्रबन्धाः । ४—दशकुमारचरितस्य प्राधान्यम् । ५—दण्डिनः प्रशस्तिः । ६—तद्रचनानिदर्शनम् । ७—दण्डिजीवनवृत्तम् । ८—दण्डिविषये दन्तकथा ।

## परिचयः

अथ गद्यकविकुलललामभूतो भरतभूमण्डलमण्डनायमानः, महामेधावी, वश्यवाचामग्रणीः गद्यबन्धधुरन्धरः, पण्डितपुरन्दरोऽयं दण्डी नाम महाकविः संस्कृतसाहित्यमहाम्बरेऽम्बरमणिरिव प्राचाकशीति—इति सर्वेषां काव्यकलानुशीलनपराणां विदितमेव। कवेरस्य सुललितपदविन्याससशालीनि, मधुरमधुरतरभावावेशसम्भृतानि, प्रसादगुणगुम्फितानि काव्यरत्नानि कस्य खलु रसिकस्य मनःप्रीतिं नोपजनयन्ति । नूनमसौ सविद्ये गद्यकविकदम्बके परां ख्यातिमलभत, इत्यत्र नास्ति कस्यापि वैमत्यम् । अतएव—"कविर्दण्डी कविर्दण्डी कविर्दण्डी न संशयः" इत्याभणितिः अस्य विषये सुप्रसिद्धा ।

## दण्डिनः साहित्यम्

अत्रभवतो दण्डिनः कृतित्वेन त्रय एव सन्दर्भाः विलसन्ति प्राधान्येन । गद्यमयं काव्यं दशकुमारचरितम्, अलङ्कारमयो ग्रन्थः काव्यादर्शः, छन्दःशास्त्रमया छन्दोविचितिश्चेति। उक्तञ्च कविराजेन राजशेखरेण :—

त्रयोऽग्नयस्त्रयो देवास्त्रयो वेदास्त्रयो गुणाः ।
त्रयो दण्डिग्रन्थाश्च त्रिषु लोकेषु विश्रुताः ॥[1]

परं तत्र छन्दोविचितिविषये विमर्शका विप्रतिपद्यन्ते । केचन व्यवस्थापयन्ति यत् 'लिम्पतीव तमोऽङ्गानि' इत्यादिपद्यस्य काव्यादर्शे मृच्छकटिके[2] चोभयत्रैव दर्शनात्, एवं मृच्छकटिकदशकुमारचरितयोः सामाजिकचित्रणसाजात्याच्च, मृच्छकटिकनाटकमेव दण्डिनस्तृतीयो ग्रन्थ इति । एके 'मल्लिकामारुतं' नाम नाटक-

१. पद्यमिदं शार्ङ्गधरपद्धतौ समुद्धृतं राजशेखरनाम्ना ।
२. काव्यादर्शे २।२६ । मृच्छकटिके च १।३४ ।

मेव दण्डिनस्तृतीयप्रबन्धत्वेनाभिप्रयन्ति । परं नाटकमिदं मालाबारप्रान्तीयस्य उद्दण्डरङ्गनाथकवेः[१] कृतित्वेन कालविद्भिरधुना निश्चितत्वात् नेदं दण्डिप्रणीतमिति निर्विशङ्कम् ।

अपरे 'द्विसन्धान'नामकं काव्यमेव दण्डिनः तृतीया कृतिः इति प्रतिपादयन्ति, भोजदेवमतमालम्ब्य । तथा चोपपत्तिरूपेण च निम्नाङ्कितपद्यमपि ते पुरस्कुर्वन्ति :—

उदारमहिमारामः प्रजानां हर्षवर्धनः ।
धर्मप्रभव इत्यासीत् ख्यातो भरतपूर्वजः ।। इति ।।

अन्ये तु 'अवन्तिसुन्दरी'नामकं गद्यकाव्यमेव अस्य तृतीयकृतित्वेनाभिमन्यन्ते। अवन्तिसुन्दरी-दशकुमारचरितयोः कथावस्तुसाम्यमेवोक्तनिर्णये विनिगमकत्वे नाङ्गीकुर्वन्ति । एवं यद्यपि बहवो बहुविधमत्र व्यवतिष्ठन्ते, तथापि तत्त्वतो विमृश्यमाने, अवन्तिसुन्दरी कथा एवास्य तृतीया कृतिरित्येव कल्पः साधीयान् प्रतिभाति। यतः अवन्तिसुन्दरीकथानकं, दशकुमारचरितकथानकेन सह साजात्यं भजते। काव्यादर्शस्य जडःघालकृतटीकायाञ्च अवन्तिसुन्दरीकथाया उल्लेखोऽपि खल्वमुमेवार्थं समर्थयति । छन्दोविचितिमेवास्य तृतीयकृतित्वेनाङ्गीकुर्वतां मतं तु न श्रद्धेयम् । यतः छन्दोविचितिरिति छन्दःशास्त्रस्यैवाभिधानान्तरमिति गभीरगवेषणया निश्चितप्रायं सम्प्रति। न खलु कस्यचिद् ग्रन्थान्तरस्य नामैतत्। किञ्च "सा विद्या नौर्विवक्षूणाम्" इत्यत्र कविना सा विद्यारूपेण स्मृता न खलु ग्रन्थरूपेण, इत्यपि वचनम् छन्दोविचितेर्ग्रन्थान्तरत्वप्रतिषेधे विनिगमकं भवति। यद्यपि, केचन, अवन्तिसुन्दरीकथायां भाषायाः क्लिष्टत्वं श्लिष्टत्वमाश्रित्य, दण्डिशैलीभेदानुरोधेन च, तां दण्डिकृतित्वेन नाभिनन्दन्ति, तथापि मतभूयस्त्वबलेन अवन्तिसुन्दरीकथाया एव दण्डिकृतित्वेनाङ्गीकारो न दोषाय। ये तु खलु दशकुमारचरितस्यापि, तत्र दण्डिकृतकाव्यादर्शोपलालितनियमभङ्गदर्शनाद् दण्डिकृतित्वमङ्गीकर्त्तुं नोत्सहन्ते तेऽपि न श्रद्धेयाः। दशकुमारचरितस्य, काव्यादर्शसम्भवात्प्राक्तनकालाविर्भावसम्भवात्। ये च पुनः 'काव्यादर्शे' कलापरिच्छेदपरामर्शात् 'कलापरिच्छेद'मेवास्य तृतीयग्रन्थत्वेनाभिप्रयन्ति मन्ये न तेऽप्यादरणीयाः, काव्यादर्शपरिशिष्टत्वेन कलापरिच्छेदाङ्गीकारान्न तु स्वतन्त्रग्रन्थरूपेणेति दिक् ।

## दशकुमारचरितस्य प्राधान्यम्

तत्र दशकुमारचरितं हि दण्डिनः परमप्रसिद्धं, कवित्वकलालङ्कृतं, निर-

---

१. रङ्गनाथस्य स्थितिकालः क्रैस्त १५०० तमवर्षदेशीयः ।

तिशयहृद्यमनवद्यञ्च गद्यमयं काव्यम्। तच्चैतत् पूर्वपीठिका, चरितं, उत्तरपीठिकेति त्रिविभागैर्गुम्फितमष्टाभिरुच्छ्वासैरुपनिबद्धम्। अस्य भाषाभङ्गीमुद्दिश्य केवलं चरिताख्यं मध्यभागमेव दण्डिकृतमभिमन्यन्ते परीक्षकाः। यथा मध्यभागस्य भाषा सुललितपदावलिसमलङ्कृता, प्रसादगुणगुम्फिता मधुरमधुरा च वरीवर्त्ति न तथा पूर्वोत्तरखण्डयोः इति भाषाकृतभेदमवष्टभ्य पूर्वोत्तरखण्डौ न दण्डिविरचितावित्यनुमिन्वन्ति केचनालोचकाः। किन्तु तथाविधं भाषाभेदं पुरस्कृत्य तादृशानुमानं न खलु मानार्हम्। भाषाभङ्ग्या विषयानुबन्धित्वात् कवेस्तात्कालिकमनोवृत्तितरङ्गनिबन्धनाच्च एक एव कविः कदाचित् सुश्लिष्ट-क्लिष्टपदानि प्रयुङ्क्ते कदाचिच्च कोमलानि सरलानि च ! न तावता तत्कृतेः भिन्न-कर्त्तृकत्वानुमानं सामञ्जस्यमुद्वहति।

अस्मिन् हि दशकुमारचरिते, दशराजकुमाराणां देशविदेशाटनानुभवाना-मुच्चावचक्रियाकलापोपक्रमाणां, विविधपराक्रमाणाञ्च मनोरञ्जकं वर्णनमनन्य-साधारण्या सहृदयहृदयग्राहिण्या सुललितमधुरया च वाण्या कृतमस्ति।

सुबन्धुरिव नासौ 'प्रत्यक्षरश्लेषमयप्रबन्धबन्धे निबध्नाति मनः। नापि बाणभट्टवदस्मै रुचिरस्वरवर्णपदानि रोचन्ते। प्रसादमधुराणि ललितललितानि भावगर्भितानि पदान्येवास्मै स्वदन्ते। बाणभट्टवत् प्रलम्बसमाससंवलितो वाक्यविन्या-सोऽप्यस्य नाकर्षणविषयः। पदार्थ-विस्पष्टता, भव्यभावसमभिव्यक्तिः, कोमल-कल्पना-कमनीयता, विचारवैशारद्यमेव च दण्डिनो गद्यमयप्रबन्धस्य खल्वनितर-संस्पृष्टं वैशिष्ट्यम्। प्रसादमाधुरीभृतोऽनुप्रासमयपदविन्यासप्रयास एवास्य कवेः सकलातिशायी श्लाघार्हो गुणः।

किञ्चास्य महाकवेस्तत्तच्चरित्रचित्रणमपि विलक्षणमेव भाति। पात्राणां सजीवता, रोचिष्णुर्हास्यविलासः, हृदयङ्गमा व्यङ्ग्यभङ्गी, अनन्यादृशच्छल-छद्मपरिच्छदाच्छन्नधूर्त्तानां, कूटकपटकौटिल्ययुतानां विप्रवेशधराणां नराणां पुँश्चलीनाञ्च कुट्टिनीनां वाराङ्गनानां, तदानीन्तनजनसमाजे प्रवर्त्तमानाना-माचारव्यवहाराणाञ्चानुरूपतयोपनतं किमपि हृदयावर्जकं विस्फुटं वर्णनं न कस्य सचेतसश्चेतश्चुलुकयति।

## दण्डिनः प्रशस्तिः तद्वचनानिदर्शनञ्च

नूनमत्र कस्यापि अभियुक्तस्यातिशयोक्तिरियं सुतरां सङ्गच्छतेतरां दण्डिनः प्रशस्तिविषयं पुरस्कृत्य—

कविरविरुदितो दण्डी भूमण्डलमण्डनीभूतः सततम्।
यस्य हि कवितासार्थं सुधासदृशं बुधा भजन्ते॥

तदस्य रचनायाः स्वरूपनिदर्शनदिशा किञ्चिदिवात्र प्रदर्शयामः। तद्यथाः—

"अयुगाशरः शरशयने शाययिष्यति', 'असत्येनास्य नास्यं संसृज्यते', 'अनेकस्यानेक आतङ्कश्चिरं चिकित्सकैरसंहार्यः संहृतः', 'स्वदेशो देशान्तरमिति नेयं गणना विदग्धस्य पुरुषस्य', 'आत्मानमात्मनाऽनवसाद्यैवोद्धरन्ति सन्तः', 'न ह्यलमतिनिपुणोऽपि पुरुषो नियतिलिखितां लेखामतिक्रमितुम्', 'इह जगति न निरीहं देहिनं श्रियः श्रयन्ते', 'जीवितं हि नाम जन्मवतां चतुःपञ्चाप्यहानि।', इति।

किञ्च—"एवं मिलितेन कुमारमण्डलेन सह चौडोपनयनादिसंस्कारजातमलभत। ततः सकललिपिज्ञानं, निखिलदेशीयभाषापाण्डित्यं, षडङ्गसहितवेदसमुदायकोविदत्वम्, काव्यनाटकाख्यायिकेतिहासचित्रकथासमन्वितपुराणगणनैपुण्यम्, धर्मशब्दज्योतिस्तर्कमीमांसादिसमस्तशास्त्रनिकरचातुर्यम्, कौटिल्यकामन्दकीयादिनीतिपटलकौशलम्, वीणाद्यशेषवाद्यदाक्ष्यम्, सङ्गीतसाहित्यहारित्वम्, मणिमन्त्रौषधादिमायाप्रपञ्चचञ्चुत्वम्, मातङ्गतुरङ्गादिवाहनारोहणपाटवम्; विविधायुधप्रयोगचणत्वं, चौर्यदुरोदरादिकपटकलापप्रौढत्वञ्च तत्तदाचार्येभ्यः सम्यग् लब्ध्वा यौवनेन विलसन्तं, कृत्येष्वनलसं तं कुमारनिकरं निरीक्ष्य स महीवल्लभः 'अहं शत्रुजनदुर्लभः" इति परमानन्दममन्दमविन्दत।" इति।

अपि च—"कुमारा माराभिरामा रामास्त्रपौरुषा रुषा भस्मीकृतारयो रयोपहसितसमीरणा रणाभियानेनाभ्युदयाशंसं राजानमकार्षुः।"

## दण्डिनः कालः

दण्डिनः कालनिर्णिनीषवः बहवो बहुविधं प्रतिपादयन्ति। केचनामुं गद्यकाव्यकृतामग्रणीं मन्यन्ते। अयमेव संस्कृतसाहित्ये गद्यबन्धस्य आद्यः प्रवर्त्तक इति स्वीकुर्वन्ति। अपरे दण्डिनं बाणभट्टपूर्वकालभवं, अपरे तदुत्तरकालभवमभ्युपयन्ति। एवं दण्डिनः प्रादुर्भावकालमालम्ब्य नास्ति कश्चिदेकः सर्वसम्मतो निर्णयः। केचन खीस्त ८००मितः काल एवास्य स्थितिकालः। अपरे खीस्त ८४६ शताब्दादारभ्य ८६६ मितपर्यन्त एवास्य निश्चितः कालः इति व्यवस्थापयन्ति इति।

परन्तु दण्डिप्रणीतकाव्यादर्शावलोकनेनैतदनुमातुं न दुःशकम्, यदयं कविकुलगुरोः कालिदासादवरज एव। यतोऽस्य काव्यादर्शसन्दर्भपठितेषु कतिपयेषु पद्येषु कालिदासीयपद्यानां प्रभावः प्रव्यक्तं प्रतीयते। तद्यथा :—कालिदासस्य "मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति" इत्यंशस्य, दण्डिना स्वकाव्यादर्शे "लक्ष्म लक्ष्मीं तनोतीति प्रतीतिसुभगं वचः" इति रूपेणोद्धरणं कृतम्। इति हेतोः कालिदासादवरजोऽयमिति प्रतिपद्यते। दण्डिनो निम्नाङ्कितं पद्यम्—

[1]अरत्नालोकसंहार्यमवार्यं सूर्यरश्मिभिः ।
दृष्टिरोधकरं यूनां यौवनप्रभवं तम ।। इति । [काव्यादर्शे २।१९७]

बाणवर्णितशुकनासोपदेशमाधारीकृत्यैव रचितं प्रतीयते । अपि च दण्डिना बाणमयूरयोः प्रशस्तिरप्यारचिता :—

भिन्नतीक्ष्णमुखेनापि चित्रं बाणेन निर्व्यथः ।
व्यावहारेषु जहौ लीलां न मयूरः......।।

किञ्चावन्तिसुन्दरीकथायां कादम्बरीवर्णनं, बाणस्य प्रसिद्धकथया सह साजात्यं भजते, अतः दण्डिनो बाणपश्चात्कालभवत्वं साधयति । परन्तु दण्डिनः शैली बाणशैलीतो नितरां भिद्यते । बाणः क्लिष्टश्लिष्टसमासबहुलां वक्रोक्तिप्रभृत्यलङ्कारालङ्कृतां भाषां समुपलालयति, दण्डी च पुनः सरलां प्रासादिकगुणगुम्फितां भाषामभिनन्दति । यदि नाम दण्डी बाणतो परवर्त्ती स्यात् तस्य भाषाऽपि बाणकृतरचनाशैल्याऽऽवश्यकत्वेन प्रभाविता भवेत् । न च मात्रयाऽपि तथा प्रतीयते । अतः न स बाणपरवर्त्तीति निर्विशङ्कम् ।

डा० वार्नेटमहोदयश्च प्रतिपादयति यत् सिंहालिभाषायां 'स्वभावालङ्कार' नामकस्यालङ्कारग्रन्थस्य रचना काव्यादर्शमाश्रित्य कृता प्रतीयते । अस्य ग्रन्थस्य रचयितू राज्ञः सेनस्य समयश्च ख्रीस्त ८४६–८६६ मितः । किञ्च ख्रीस्त ८१४ तमे कर्मादकीयअलङ्कारग्रन्थे कविराज-मार्गनाम्नि काव्यादर्शस्य पुष्कला छाया प्रतीयते अतः दण्डिनः समयः ख्रीस्त ८०० अब्दमितात्प्राक्तन एव सम्भवेत् ।

एतदतिरिक्तमिदमपि विचार्यम् यत् काव्यादर्शे पञ्चमशताब्दीभवस्य राज्ञा-प्रवरसेनेन विरचितस्य सेतुबन्धकाव्यस्यापि नाम स्मर्यते तेनाऽपि प्रतिपत्तुं शक्यते यद् दण्डिन आविर्भाविकालः क्वचित् ख्रीस्त ५०० त आरभ्य ८०० शतकमध्यग एव प्रतिभाति । किञ्च दशकुमारचरितस्य भौगोलिकं वर्णनं राजनीतिचित्रणञ्च राज्ञो हर्षवर्धनात्पूर्वतनस्य भारतस्य स्थितिं सूचयति । अतः दण्डिनः स्थितिकालः ख्रीस्त-६०० तमदेशीयः प्रायशः सम्भवेदिति युक्तमनुमातुम् ।

दण्डिनः काव्यादर्शमुद्दिश्य कैश्चिदभिधीयते यत्कस्यचिद् राज्ञो राजवर्मणः सूनुमध्यापयितुमेव दण्डी दशकुमारचरितस्य रचनां व्यदधात् । राजवर्मा चैष काञ्चीशासकः शैवधर्मावलम्बी चासीत् । अस्य शासनकालः कालविद्भिः ख्रीस्त ६९० तः आरभ्य ख्रीस्त ७२५ पर्यन्तः निर्णीतः । अवन्तिसुन्दरीकथामनुरुध्य दण्डिसमयः ख्रीस्तसप्तमशताब्द्या अन्तिमे चरणे सम्भवति । पुष्णन्ति चामुमेव

१. केवलं निसर्गत एवाभानुभेद्यमरत्नालोकोच्छेद्यमप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभवम् । [कादम्बरी]

कल्पं प्रमाणान्तराण्यपि । विद्वद्वरकाणेमहाभागेनापि कवेरस्य समयः ख्रैस्त-६०० मितः एव निर्धारितः ।

नीलोत्पलदलश्यामां विज्जकां मामजानता ।
वृथैव दण्डिना प्रोक्तं सर्वशुक्ला सरस्वती ॥

इति शार्ङ्गधरपद्धतिपठितेन श्लोकेन विभाव्यते, यद् अस्या विज्जकायाः पद्यानि ख्रैस्त ८५०तमदेशीयविरचितेषु ग्रन्थेषु उपलभ्यन्ते । अतोऽस्य समयः ख्रैस्त ८५० तः पूर्वतन एव सम्भवेत् । किञ्च--

सरस्वतीव कर्णाटी विजयाङ्का जयत्यसौ ।
या विदर्भगिरां वासः कालिदासादनन्तरम् ॥

इत्यनेनाऽपि शार्ङ्गधरपद्धतिस्मृतेन सम्भाव्यते यदि नाम विजयाङ्का विज्जका च एकैव भवेत् तर्हि सा द्वितीयपुलकेशिनः सूनोः चन्द्रादित्यस्य महिषी विजय-भट्टारिका विजयाङ्केतिनाम्ना प्रसिद्धा । तस्याः समयः ख्रैस्त ६६० तमान्तिके पर्यवस्यति । तदेवं दण्डिनः कालः ख्रैस्ते ६०० तमशतके एव विभावनीयः ।

## दण्डिवृत्तम्

दण्डिनो जीवनवृतं यद्यप्यद्यावधि न पूर्णतया ज्ञातम्, किन्तु सम्प्रति अवन्तिसुन्दरीकथाभिधो ग्रन्थः समुपलब्धः । ग्रन्थोऽयं दण्डिविरचित एव सम्भाव्यते । अस्मिन् ग्रन्थे दण्डिनो जीवनवृत्तं किञ्चिद्विस्तरशः समुद्ग्रथितम् । तेनावधार्यते यद्दण्डी महाभागः विद्वद्वरस्य दामोदरस्य प्रपौत्र आसीत् । दामोदरोऽयं स्वयं भारविरेवाथवा भारवेः कश्चिदन्तरङ्गः [सखा सम्भवेत् । श्री दामोदरस्य सूनुः मनोरथः । मनोरथस्यापि वेदा इव चत्वारः पुत्ररत्नानि जातानि । तेषु लघिष्ठोऽपि सन् वीरदत्तोऽतिप्रौढो दार्शनिकः । तस्माद् गौरीनाम्न्यां विदुष्यां लब्धजन्मपरि-ग्रहोऽयं पण्डितमण्डलमण्डनो दण्डीति । काञ्चीपुरी चास्य निवासस्थानम् । बाल्य-काले एवास्य पितरौ पुरन्दरपुरं ययतुः । असौ च दण्ड[1]धारी नैष्ठिकब्रह्मचारी आसीत् । अस्य विषये एकः प्रवादः प्रचरति यद् वर्षासु ब्रह्मचारिणां नगरनिवासो विहितः ।

तद्विधानानुगुण्येन यदा दण्डी कस्मिंश्चिन्नगरे वासमुपकल्पयामास तदा तन्नगराधिपतिना स्वकन्याजनानां शिक्षणाय स शिक्षकपदे न्ययोजि । तथा नियो-जितस्य तस्य रसिकताप्रकर्षं स्वकन्यामुखेन निशम्य स राजा तदीयनिष्ठासु सशङ्कः समपद्यत । अवगतवृत्तान्तो दण्डयपि राजानं दारिद्र्यमुपवर्णयितुं सुभृश-

---

१. अत एवासौ दण्डीति नाम्ना प्रसिद्धः ।

मनुरुरोध। तथानुरुद्धश्च राजादारिद्र्याष्टकं विरच्य यदैव दण्डिने समर्पयति, तदैव दण्डिनं सस्मितवदनमवलोक्य विदिततन्मनोभावो राजा निश्चिकाय यद् 'अननुभूतदारिद्र्यस्यापि यथा मम तद्वर्णनप्रकर्षस्तथैवास्य नैष्ठिकस्यापि कृत्रिमा रसिकता न तु वास्तविकी'ति तदवधि तस्य तपःपूतमनसो ब्रह्मचर्यप्रकर्षं निश्चित्य सम्मानविशेषमारचयत्।

## दण्डिविषये दन्तकथा

अपि च दण्डिनो निसर्गसुभगामलौकिकीं लालित्यसंवलितरचनावचनावलिं प्रख्यापयितुमेका कपोलकल्पिता कथा विरचिता विभाति तत्प्रशंसकजनैरिति यदेकदा दण्डिकालिदासयोः कतरो ज्यायान् इत्यत्र साक्षात्सरस्वत्या निर्णयमभिकाङ्क्षिभिः विद्वद्भिः सरस्वत्या आवाहनमारचितम्। ततः प्रत्यक्षीभूता भारती कयाऽपि दिव्यया गिरा उदाजहार यद्––"कविर्दण्डी कविर्दण्डी कविर्दण्डी न संशयः।" तदा किञ्चित्क्षुब्धः कालिदासः पप्रच्छ––"कोऽहं रण्डे ?" तदा सा प्राह––त्वमेवाहं त्वमेवाहं त्वन्तु साक्षात् सरस्वती॥" इति।

अपरे विमर्शकास्तु कविशब्दस्य बहुवचनं दण्डि-प्रादुर्भावोत्तरकाल एव सञ्जातम्। पूर्वन्तु द्विवचनमेवासीत् :––

जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत्।
कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि॥ इति।

'मधुराविजया'ख्यकाव्यकवयित्र्या कयाचित्तत्रभवत्या गङ्गादेव्या आचार्यदण्डिनः निरतिशयप्रशंसनमुपश्लोकितम्। तद्यथा––

आचार्यदण्डिनो वाचामाचान्तामृतसम्पदाम्।
विकासो वेधसः पत्न्या विलासमणिदर्पणम्॥ इति।

इति सर्वतन्त्रस्वतन्त्रैः पदवाक्यप्रमाणपारावारीणैः श्रीमदाचार्यद्विजेन्द्रनाथशास्त्रिसिद्धान्तशिरोमणिभिर्विरचिते संस्कृतसाहित्यविमर्शाख्ये ग्रन्थे दशमः परिच्छेदः।

---

## एकादशः परिच्छेदः

# नाट्यशास्त्रम्

१––नाट्यशास्त्रस्याविर्भावः । २––भरतरचितनाट्यशास्त्रम् । ३–नाटकेषु भाषा । ४––रसप्रपञ्चः । ५––किन्नाम तावन्नाटयम् । ६––नाटयाविर्भावकालः ।

## नाट्यशास्त्रस्याविर्भावः

संस्कृतसाहित्ये नाट्यशास्त्रं हि खल्वतीव महनीयं पदमलङ्करोति । नाट्यशास्त्रं नाम कदा कुत्र कुतो वा प्रादुरभूदिति महान् प्रश्नः । यद्यपि सोऽयं प्रश्नोऽद्यापि साधनसौकर्याभावान्नेदन्तया निर्णेतुं सुकरः, तथापि सम्प्रत्युपलब्धप्रकीर्णशीर्णसाहित्यकणिकाभिरेतत्तु वक्तुं पार्यते यन्मुनिवरो भरताचार्य एव नाट्यशास्त्रस्यादिमः प्रवर्त्तकः । भरताचार्यप्रतिभालताप्रसूतप्रसूनमेवेदं किल यन्नाट्यशास्त्रं नाम । तदस्य शास्त्रस्य भरतोपज्ञत्वाभ्युपगमेऽपि कुतो लब्धमस्य बीजं तेन महाभागेनेति भूयोऽपि प्रश्नान्तरमुज्जृम्भते । तत्समाधिस्तु स्वयमाचार्य एव विधत्ते :––

जग्राह पाठ्यमृग्वेदात् सामभ्यो गीतमेव च ।<br>
यजुर्वेदादभिनयान् रसानाथर्वणादपि ।। इति ।

तदेतेनोपन्यस्तं भवति यद् भगवद्वेदेभ्य एव नाट्यशास्त्रस्य बीजमुपलब्धमाचार्येणेति । वेदेषु यत्र-तत्रोपलब्धकथनोपकथन-संवाद-सङ्गीतादि यन्नाटकीयतत्त्वं तदेवास्ति वस्तुतो नाट्यशास्त्रप्रवृत्तौ बीजम् । ततश्च रामायणे समुपलभ्यमानानां नटनर्त्तकरङ्गमञ्चादिशब्दानां प्रयोगा, महाभारते च प्रयुक्ता नटरंगशालादिशब्दा ध्वनयन्तितरां तदानीन्तने काले नाटकानां प्रचारप्राचुर्यम् । तदनु च कविकुलमूर्द्धन्या धन्यतमा भासकालिदासादयो महाकवयः शास्त्रस्यास्य श्रीसमृद्धिमतितरां वितेनिरे । तदेवमद्य भारतीयं नाट्यशास्त्रं विश्वसाहित्ये सर्वोत्कर्षेण सर्वप्राथम्येन च देदीप्यमानं महार्घरत्नमिव विलसति सर्वेषां लौकिकानां परीक्षकाणाञ्च आदरास्पदीभूतम् । तदित्थमिदं भारतीयनाटचशास्त्रं वेदेभ्य एव प्रभवप्रसादमासाद्य आद्यमुनिभरतभासकालिदासभवभूतिप्रभृतिकवीश्वराणामप्रतिमप्रतिभाश्रियमादधानं परिपूर्णस्वातन्त्र्येण क्रमिकोत्कर्षविकासस्य परां कोटि-

माटीकमानं वरीवर्त्ति। एवं तत्त्वतो विमृश्यमाने सूपपन्नमिदं भवति यद् भारतीय-नाट्यशास्त्रमेव विश्वनाटकचक्रस्य किलादिमञ्चक्रवर्त्ति, प्रकाशस्तम्भभूतञ्चेति सगर्वमाकलयन्तो वयं वर्त्तामहे गौरवस्योत्तमां कोटिमलङ्कुर्वाणाः इति।

## भरतरचितनाट्यशास्त्रम्

सम्प्रति उपलब्धं नाट्यालङ्कारविषयकं प्राचीनतमं ग्रन्थरत्नं भरतमुनि-प्रणीतं नाट्यशास्त्रम्। अस्मिन् हि शास्त्रे नाट्यशास्त्रस्य प्राधान्येऽपि तत्सम्बन्धि-अलङ्कार-सङ्गीत-च्छन्दः-शास्त्राणामपि मौलिकाः सिद्धान्ताः प्रपञ्चिताः। शास्त्र-मिदं षट्त्रिंशदध्यायात्मकं पञ्चसहस्रमितैः श्लोकैरुपगुम्फितमनुष्टुप्च्छन्दो-बद्धं केवलं षष्ठे सप्तमे अष्टाविंशतितमेऽध्याये च गद्यमयं विलसति। अस्य च पद्यभागः अभिनवगुप्तमतानुसारेण भरतादपि प्राचीनतरैराचार्यैरुपनिबद्धः, स्वरचित-सूत्रोपपत्त्यर्थञ्च भरतमुनिना यथार्हं तत्र तत्र निवेशितः। उक्तञ्च :—

ता एता ह्यार्या एकप्रघट्टकतया पूर्वाचार्यैर्लक्षणत्वेन पठिताः।
मुनिना तु सुखसंग्रहाय यथास्थानं निवेशिताः॥
(अभिनवभारती अ० ६)

काव्यं खलु दृश्य-श्रव्यभेदेन द्विविधम्। तयोः नाट्य-नाटक-रूपकनामभि-रभिलप्यमानं दृश्यम्। श्रव्यञ्च छन्दोबद्धम्। श्रव्याद् दृश्यं हि अपेक्षया रमणीयतरम-भिमन्यते काव्यरहस्यकोविदैः सुकुमारधियामपि तस्य सद्यः प्रभावकारित्वात्। दृश्ये किल मुखादौ चन्द्रादेरारोपवन्नटे नायकारोपः। तदारोपधर्मसाम्याद् एत-द्रूपकमुच्यते। तच्च रूपकं दशविधम्। उक्तञ्च दशरूपके :—

नाटकं सप्रकरणं भाणः प्रहसनं डिमः।
व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति॥

नाटकेषु पुराणेतिहासप्रसिद्धं वस्तु एवोपनिबध्यते, न जात्वप्रसिद्धम्।

## नाटकेषु भाषा

संस्कृतं प्राकृतञ्चेति भाषाद्वयमपि प्रयुज्यते नाटकेषु। प्रकृतिः संस्कृतं ततः प्रवृत्तं प्राकृतम्। तदुक्तमाचार्यैः :—

"प्रकृतेः संस्कृतायास्तु विकृतिः प्राकृती मता।" इति

संस्कृतन्तु खलु न कस्या अपि भाषाया विकृतिः। संस्कृतं नाम स्वतः सिद्धा भाषा। संस्कृतभाषातः एवाखिला भाषाः प्रवृत्ताः। 'संस्कृतं नाम हि दैवी वागि'ति दण्डिन उक्तिः।

## रस-प्रपञ्चः

श्रव्यकाव्यवद् दृश्य-काव्यप्रपञ्चेऽपि प्राधान्येन रस एव बहुशः चमत्कारकः। नाटकेषु पुनारसः शृङ्गारो वा वीरो वेति नियमः। अन्येऽपि च शान्त-करुण-अद्भतप्रभृतयः रसा यथास्थानं सन्निवेश्यन्ते प्राधान्यन्तु शृङ्गारवीरयोरेवेति प्रसिद्धः कल्पः।

नायकः—नायको हि नाम नाटकस्य प्रधानतमं पात्रम्। तल्लक्षणञ्च 'महाप्रबन्धमूलं तु नेता।' मन्दारेऽप्युक्तम्—'सर्वगुणोपेतः कथाव्यापी स नायकः।' दर्पणकारेणाऽप्युक्तम् :—

त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही।
दक्षोऽनुरक्तलोकः तेजोवैदग्ध्यशीलवान्नेता॥

नायिका च—एवं नायिकाऽपि :—

विनयार्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीया।
साऽपि कथिता त्रिभेदा मुग्धा मध्या प्रगल्भेति॥

इति संक्षेपः। विशेषस्तु तत्र-तत्र यथाप्रकरणमनुसन्धेयम्।

इदञ्च नाटचशास्त्रं नाटचवेद इति संज्ञयापि व्यपदिश्यते। कदाचिद्वेदेभ्य उद्गतत्वादेवास्येयं संज्ञा प्रसिद्धचति। सन्ति च वेदे बहूनि संवादसूक्तानि। तेषु यमयमीसूक्तम्, उर्वशीपुरुरवः सूक्तम्, सरमापणिसूक्तञ्च नितरां हृदयाकर्षकम्। इमान्येव कालान्तरेण सुपरिष्कृतानि परिमार्जितानि सन्ति नाटचतत्त्वस्य प्रणोदकानि सञ्जातानीत्यवगम्यते।

भगवता पाणिनिमुनिना [ख्रैस्तपूर्व ७००] 'पाराशर्यशिलालिभ्यां भिक्षु-नटसूत्रयोः [पाणिनि० ४।३।११०] इति सूत्रे निबद्धं 'नटसूत्रे'त्ति पदं नाटच-शास्त्रमेवावगमयति। तेनावधार्यते यत्पाणिनिसमये नाटकानां प्रचारः सम्यग् व्यवहारपदवीमारूढोऽभवत्। तदेवं नाटकरचनाकालः क्रैस्तप्राक् सप्तशतवर्ष देशीयः सम्भावयितुं पार्यते। भगवान् पतञ्जलिः [क्रैस्तपूर्व ३००] महाभाष्ये 'कंसवध'-'बलिबन्ध' इति नामकं नाटकद्वयं संस्मरति। इत्यनेनापि नाटकानामेतस्मिन् काले प्रयोगोपक्रमः सुतरां प्रचलितोऽभूदिति शक्यते प्रतिपत्तुम्।

केचन पाश्चात्या विद्वांसो भारतीयनाटकेषु यवनिकेतिपदप्रयोगमवलोक्य व्यवतिष्ठन्ते यद् भारतीयनाटकेषु यवनिकादिपदप्रयोगमत्र ग्रीकदेशीयानां प्रभाव-माविष्करोति। तन्न मनोज्ञम् प्रमाणाभावात्। प्रथमन्तु तावत्संस्कृतनाटकेषु नैष प्रयोगः कुत्रापि दृष्टिपथमवतरति भास–कालिदास–भवभूतिप्रभृतिकृतिषु। केवलमेकत्र राजशेखरकृतकर्पूरमञ्जर्याम् 'जवनिकानन्तर'मिति प्रयोगो दृश्यते।

यद्भ्रमेण 'यवनिकानन्तर'मिति मत्वा तादृशी भ्रममूला व्यवस्था कैश्चित् प्रदत्ता परन्तु मूलशब्दस्तु जवनिका एव न तु यवनिका। जवनिका-स्थाने यवनिकेति शब्दो भ्रान्तिविलसितः। तथा च कोशे--

प्रतिसीरा जवनिका स्यात् तिरस्करणी च सा मता।"

[अमर० २।६।१३२]

अस्य व्यत्पुत्तिलभ्यो लोकप्रसिद्धश्चार्थस्तु तिरस्करणी ('परदा' इति हिन्दी भाषायाम्) प्रसिद्धः, जवेन वेगेन प्रतिरोधनमस्ति अस्यामिति तद्व्युत्पत्तेः। अस्मिन्नेवार्थे चायं शब्दो बहुशः प्रयुक्त उपलभ्यते संस्कृतसाहित्ये। तद्यथा :--

"नरः संसारान्ते विशति यमधानीजवनिकाम्।" [भर्तृहरिः]

## किन्नाम तावन्नाट्यम्

नाट्यं[1] हि नाम लौकिकपदार्थव्यतिरिक्तं तदनुकारप्रतिबिम्बालेख्यसादृश्यारोपाध्यवसायोत्प्रेक्षास्वप्नमायेन्द्रजालादिविलक्षणं तद्ग्राहकस्य सम्यग्ज्ञान-भ्रान्तिसंशयानवधारणानध्यवसायविज्ञानभिन्नवृत्तान्तास्वादनरूपसंवेदनसंवेद्यं वस्तु' इत्यभिनवगुप्तः। तदेवं नाट्यशास्त्रमिदं सकलकलागवाहिविषयतयाऽखिलशास्त्रान्तराणाम्मूर्द्धाभिषिक्तं किमप्यनन्यसाधारणतयोपयोगपरम्परम्पुण्यतमं शास्त्रम् श्रीमहामुनिभरताचार्यैराविष्कृतम्।

अस्य हि नाट्यवेदस्य चतुर्वेदोपवेदोपसम्भवत्वञ्च सर्वैः स्वीकृतप्रायम्। उक्तञ्च नाट्यशास्त्रे--

धर्म्यमर्थ्यं यशस्यञ्च सोपदेशं ससङ्ग्रहम्।
भविष्यतश्च लोकस्य, सर्वकर्मानुदर्शकम्॥
सर्वशास्त्रार्थसम्पन्नं सर्वशिल्पप्रवर्त्तकम्।
नाट्याख्यं पञ्चमं वेदं सेतिहासं करोम्यहम्॥
एवं सङ्कल्प्य भगवान् सर्ववेदाननुस्मरन्।
नाट्यवेदं ततश्चक्रे चतुर्वेदाङ्गसम्भवम्॥

---

१. योऽयं स्वभावो लोकस्य सुखदुःखसमन्वितः।
सोऽङ्गाद्यभिनेयोपेतो नाट्यमित्यभिधीयते॥ [नाट्यशास्त्र १२२]

नाट्यमिति शब्दः अवस्यन्दार्थनटधातोर्निष्पन्नः इति। नाटयं किञ्चिच्चालनार्थत्वात्सात्त्विकबाहुल्यम्। अतएव 'तत्कारिषु नटव्यपदेशः'।

[इति दशरूपके धनिकटीकायाम्]

जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतमेव च।
यजुर्वेदादभिनयान् रसानाथर्वणादपि ॥
वेदोपवेदैः सम्बद्धो नाट्यवेदो महात्मना।
एवं भगवता सृष्टो ब्रह्मणा सर्ववेदिना ॥

[नाट्यशास्त्रस्य १० अ० १६।१७।१८ श्लोकाः]

ततः नाट्यशास्त्रस्य प्रयोजनान्याह प्रशस्तिभूयस्त्वेन :--

न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।
नाऽसौ योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते ॥

वस्तुतो लोकमनोरञ्जनपुरस्सरं सामाजिकेषु गुणाधानं, दोषापनोदनमेव नाट्यशास्त्रस्य परमोद्देश्यम्। उक्तञ्चाभियुक्तैः--

देवानामिदमामनन्ति मुनयः शान्तं क्रतुं चाक्षुषं
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते,
नाट्यं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधनम् ॥ इति।

नाट्यस्य फलं प्रतिपादयन्नाह :--

धर्मो धर्मप्रवृत्तानां कामः कामोपसेविनाम्।
निग्रहो दुर्विनीतानां विनीतानां दमक्रिया ॥
क्लीबानां धाष्टर्यजननमुत्साहः शूरमानिनाम्।
अबुधानां विबोधश्च वैदुष्यं विदुषामपि ॥
ईश्वराणां विलासश्च स्थैर्यं दुःखार्दितस्य च।
अर्थोपजीविनामर्थो धृतिरुद्विग्नचेतसाम् ॥
नानाभावोपसम्पन्नं नानावस्थान्तरात्मकम्।
लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम् ॥ इति।

## नाट्याविर्भावकालः

तदेतस्य नाट्यशास्त्रस्याविर्भावकालं कालविदः प्राक्ख्रैस्तद्वितीयशतकं निर्धारयन्ति। सैषा दृश्यकाव्योपज्ञता तु तत्रभवन्तं नाट्याचार्यं भगवद्भरतमुनिपादमेवालङ्करोति। श्रव्यकाव्यारम्भकालस्तु ख्रैस्तीं पञ्चमशताब्दीमेवालम्बते।

भारतीयनाट्यप्रपञ्चे ग्रीकदेशीयनाटकानां प्रभावोऽनुमीयत इति वदतामनुवदताञ्चावधारणं भ्रमविजृम्भितमेवेति निर्दिष्टपूर्वम् इति दिक्।

उपरितनेन विवरणेन सुतरामेतदभ्युपपन्नं भवति यद्भव्यं भारतमेव

तावन्नाट्यकलाया आदिमोद्गमभूमिः। संस्कृतनाट्यकलात एव सर्वत्र नाट्यतन्त्रं प्रसृतम् अतएव भारतीयनाट्यकलेयमुत्कर्षस्य परां कोटिमवगाहमाना वरीवर्त्ति।

भारतीय नाटकानि बहुशः सुखान्तानि भवन्ति न जातु दुःखान्तानि। यद्यपि दुःखान्तनाटकानां सर्वथैवाभावस्तु नास्ति संस्कृतवाङ्मये, तथापि सुखान्तानि एव तानि भूम्ना उपलालितानि भवन्ति कविभिरिव जनसाधारणैरपि।

यत्र स्थाने नाटकान्यभिनीयन्ते तद् रंगशालेत्युच्यते। यत्र च अभिनेतारो नटाः स्वस्ववेशभूषाभिरात्मनः प्रसाधयन्ति-भूषयन्ति तन्नेपथ्यम्। नाट्यशालाया व्यवस्थापकः सूत्रधारः[1], तत्पत्नी च नटी परिभाष्यते। नाटके मङ्गलाचरणं हि नाम नान्दी[2]त्युच्यते। नान्द्यां हि कथावस्तुनो निर्देशः दिङ्मात्रं प्रस्तूयते। सूत्रधारश्च पुनः कवेः नाटकस्य च परिचयं सभां प्रति ससम्मानं विनिवेद्य रङ्गमञ्चतो निष्क्रान्तो भवति। नायकश्च पुनर्धीरोदात्तः कुलीनश्च भवति, नायिकाऽपि तादृशी एव। नाटकानि प्रायशः चेमानि एकाङ्कादारभ्य दशपर्यन्तैरङ्कैर्निबध्यन्ते। तत्र नाटिका अङ्कचतुष्टयप्रणिबद्धा भवन्ति, प्रहसनन्तु खल्वेकाङ्कसमलङ्कृतमेवेति प्रायशो न तत्र कश्चिन्निर्बन्धविशेष इति।

ततः प्रस्तावनां विधाय निष्क्रान्ते सति सूत्रधारे नाटकारम्भो भवति। एकाङ्कस्य परिसमाप्तौ अङ्कान्तरोपक्रमे च प्रवेश-विष्कम्भकादिनामभिर्व्यपदेश्या अङ्कोत्थानिका भवति। नाटकान्ते चाशीरभ्यर्थनासंवलितं छन्दोबद्धं भरतवाक्यसंज्ञकं पद्यं पठ्यते। नाट्यशास्त्रस्य भरतोपज्ञत्वात् तन्महामुनिस्मृतावेव प्रत्येकं नाटकं भरतवाक्येनैव परिसमाप्यते। न हि भरतवाक्यमन्तरा कस्यापि नाटकस्य पर्यवसितिः शक्यसङ्कल्पा इति।

संस्कृतनाटकेषु प्रयुज्यमाना भाषा संस्कृत-प्राकृतमिश्रिता भाषा। सोऽयमपरो विशेषः संस्कृतनाटकानाम्। तत्र नायकादिप्रमुखपात्राणां भाषा संस्कृतं, स्त्री-तत्सहचरीणां वा भाषा प्राकृतं भवति।

संस्कृतनाटकेषु विदूषकस्य स्थानमप्यतीव महत्वपूर्णम्। विदूषको हि नाम नायकसखा न तु तदीयो दासः। अभिनये न केवलं हास्यरसोत्पादनमेव तस्य कार्यमपितु यथावसरं नायककर्त्तव्यकार्येषु साहाय्यकरणमपि तस्य कर्त्तव्यत्वेन निर्दिश्यते।

---

१. नाटकस्य यदनुष्ठानं तत्सूत्रं स्यात्सबीजकम्।
रङ्ग-दैवत-पूजाकृत् सूत्रधार उदीरितः ॥

२. आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते।
देव-द्विज-नृपादीनां तस्मान्नान्दीति संज्ञिता ॥

तदेष संक्षेपतः संस्कृतनाटकानां स्वरूपलक्षणप्रपञ्चः।

एतच्च न तिरोहितं कविकर्मप्रवणानां विपश्चितां यन्निखिलेऽपि साहित्य-प्रपञ्चे वरीवर्त्ति तत्किमपि महत्त्वपूर्णमतीवोच्चपदम् नाटचतन्त्रस्य। गद्यपद्यमयं श्रव्यकाव्यं किल कविकर्मसौष्ठवासौष्ठवस्य न तादृशो निकषग्रावा मानदण्डो वा यादृशं हि नाम दृश्यकाव्यम्। कविकर्मप्रवीणेष्वपि कश्चिदेव विरलस्तन्निकषोपलोपलालितमौज्ज्वल्यमश्नुते। यतो निखिला एव मानववृत्तयः नाटकेषु संक्रान्ता भवन्ति। यथाकालं यथास्थानञ्च निसर्गसुलभानि सकलान्यपि चेष्टितानि अभिनेयत्वेन दर्शयितव्यानि भवन्ति। प्रायशः सर्वेषां रसानां तत्र पूर्णः परिपोषः, अविकलाङ्गतया चाभिनयः चित्रितव्यो भवति समभिनेयश्च। तच्च नैव सुकरमकृतपुण्यकर्मणामनाकलिताखिलतन्त्राणाम्। उक्तञ्च :—

न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।
नाऽसौ योगो न तत्कर्म नाटके यन्न दृश्यते॥ इति।

—०—




भवभूतेः सम्बन्धाद् भूधरभूतेव भारती भाति।
एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा॥

# महाकविः भवभूतिः

(क्रैस्त ७४०)

१——परिचयः । २——भवभूतेः जन्मस्थानम् तदाविर्भावकालश्च । ३——किन्नाम भवभूतिः कालिदासस्य समसामयिकः । ४——भवभूतेः रचना । ५——भवभूतेः नाट्यसौष्ठवम् । ६——भवभूतेः करुणो रसः । ७——भवभूतिकालिदासयोस्तुलना ।

## परिचयः

अथ तत्रभवान् कविकण्ठीरवो भवभूतिर्नाम महाकविः, रामकथां प्रतिपिपादयिषुः दृश्यस्य काव्यस्य श्रव्यापेक्षयोत्कर्षमाकलयन् पूर्वचरितस्य महावीरचरितत्वेनोपर्वाणितत्वात्तदुत्तरं रामचरितं वर्णयितुकाम उत्तररामचरितं नाम करुणरसभूयिष्ठं नाटकं प्रणिनाय महता पाटवेन। कविरयं श्रीकण्ठः, रत्नखेटकः, कोटिसार इत्येतैर्नामभिरपि प्रसिद्धः। केचिद् वदन्ति——'साम्बा पुनातु भवभूतिपवित्रमूर्त्तिः" इत्येतत्कृतपद्यश्रवणसन्तुष्टो राजा एनं भवभूतिरित्याख्यया ख्यापयामास। अन्ये तु स्वयमीश्वर एवास्य काव्यकलासन्तुष्टोऽस्मै भूतिं दत्तवानिति भगवतो भवाद् भूतिर्यस्य स भवभूतिरित्यन्वर्थसञ्ज्ञोऽयं सञ्जात इत्यवधारयन्ति। तथा च सूत्रधारमुखेन कविः स्वयमेवोत्तररामचरिते आत्मानं परिचाययन्नाह :—— "एवमत्रभवन्तो विदांकुर्वन्तु अस्ति खलु तत्रभवान् काश्यपः श्रीकण्ठपदलाञ्छनः पदवाक्यप्रमाणज्ञो भवभूतिर्नाम जातुकर्णीपुत्रः।" इति।

एवमेवासौ वीरचरिते, मलतीमाधवे च प्रस्तावनायामात्मपरिचयं ददाति—— 'अस्ति दक्षिणापथे पद्मपुरं नाम नगरम्। तत्र केचित्तैत्तिरीयिणः काश्यपाश्चरणगुरवः पङ्क्तिपावनाः पञ्चाग्नयो धृतव्रता उदुम्बरा ब्रह्मवादिनः प्रविशन्ति। तदामुष्यायणस्य तत्रभवतो वाजपेययाजिनो महाकवेः पञ्चमः सुगृहीतनाम्नो भट्टगोपालस्य पौत्रः पवित्रकीर्त्तेर्नीलकण्ठस्यात्मसम्भवः श्रीकण्ठपदलाञ्छनो भवभूतिर्नाम जातुकर्णीपुत्रः कविः मित्रधेयमस्माकमित्यत्रभवन्तो विदांकुर्वन्तु" :——

श्रेष्ठः परमहंसानां महर्षीणामिवाङ्गिराः।
यथार्थनामा भगवान् यस्य ज्ञाननिधिर्गुरुः॥

कदाचिज्जतुकर्णगोत्रसम्भवत्वात् भवभूतेर्जननी जातुकर्णीतिनाम्ना प्रसिद्धिं गता। गुरुश्चास्य ज्ञाननिधिनामा यथार्थनामा ज्ञाननिधिरेवासीत्।

## भवभूतेः जन्मस्थानम् तदाविर्भावकालश्च

भवभूतिना जन्मना विदर्भदेशोऽलंकृतः, योऽधुना 'बरार' इति नाम्ना प्रसिद्धः। भवभूतिविरचितमालतीमाधवपर्यालोचनादवगच्छामो यत्तस्मिन् समये विदर्भदेशस्य राजधानी कुण्डिनपुरमासीद् यदधुना 'विहार' इत्याख्यायते। यत्र पद्मपुरे भवभूतिर्जन्मपरिग्रहं चकार तदधुना जनशून्यबृहद्वने परिणतम्। कविना मालतीमाधवस्य नवमाङ्के पद्मावतीनगर्या वर्णनं कृतम्। अस्यामेव नगर्यां मालतीमाधवयोः परिणयः संवृत्तः। एतदभ्यर्ण एव चामुण्डाख्याया देव्या विशालं मन्दिरं विलसति। अस्या नगर्याः सविधे पारा-लवणा-मधुमती नाम्न्यस्तिस्रो नद्यः प्रवहन्ति स्म। मधुमतीरोधसि स्वर्णबिन्दुनाम्नो भगवतः शिवस्य रम्यं मन्दिरं चकास्ति। मालवाप्रदेशे सिन्धुसरित्परिसरे नरवरप्रदेश एव भवभूतिसमये पद्मावती नाम्ना प्रसिद्धः इति कालविदां निर्णयः। भवभूतिना परा-लवणा-मधुमती-नदीनां यद् वर्णनमारचितम् ता नद्यः अधुना पारा–लून–मधुवरानाम्ना स्मिर्यन्ते। मालतीमाधवस्य दशमाङ्के यस्याः पाटलावतीनाम्न्या नद्या वर्णनं कृतं साऽधुना लुप्तप्राया। अष्टम-नवम-दशम-शतकोल्लिखितेषु तिब्बतीयपुस्तकेषु पाटलावतीनद्या उल्लेखोऽवलोक्यते कदाचित्सैवेयं पाटलावती नदी भवेदित्यनुमीयते। अद्यावधि यावन्ति प्रमाणानि उपलभ्यन्ते तान्यवष्टभ्यैतिहासिकैर्निर्णीयते यद् भवभूतिना स्वकीयास्त्रयोऽपि ग्रन्था अष्टमशताब्द्याः प्रारम्भे एव विरचिताः। यद्यपि सीतारामचरितमालम्ब्य अनेकेषां नाटकानां रचनाः पल्लविताः, तासु साहित्यदर्पणकारेण येषां नामोल्लेखः कृतः तानीमानि खलु अधोऽङ्कितानि——वीरचरितम्, बालरामायणम्, राघवाभ्युदयम्, उत्तरचरितम्, उदात्तराघवम्, कृत्यारावणम्, महानाटकम्, छलिरामम्, रामाभिनन्दनम्, प्रसन्नराघवम्, कुन्दमाला, रामाऽभ्युदयम्, अनर्घराघवम्, जानकीराघवम्, राघवानन्दम्, राघवविलासमादीनि।

एभ्यो व्यतिरिक्तं अभिराममणिनाटकस्य भवभूतिकृतित्वेन पाश्चात्यविदुषा विलसनमहोदयेनोल्लेखः कृतः। विद्वद्वरहालमहोदयानां ग्रन्थेषु अमोघराघवम् महावीरानन्दमित्येतन्नाटकद्वयस्यापि नामोल्लेखो दृश्यते। परन्तु एषु सर्वेषु भवभूतिविरचितेषु वीरचरितम्, मालतीमाधवम्, उत्तररामचरितञ्चेति नाटकत्रयम् सर्वतः प्राचीनम् प्रधानञ्चेति निश्चितप्रायम्। कालिदासभवभूत्योः रचनापर्यालोचनादवगम्यते यदिमौ समसामयिकौ नास्ताम्। कालिदासस्य शैली प्रसादबहुला, सरला, निसर्गजा च प्रतिभाति। भवभूतेस्तु काव्यरचना पुनर्जटिला,

प्रलम्बसमासबहुला च। तावता नेदमनुमातुं दुःशकम् यद्भवभूतेः प्रादुर्भूतिः कालिदासादुत्तरकालोद्भवा। बाणभट्टदण्डिप्रभृतीनां समय एव भवभूतेः समय इत्यङ्गीकारेऽपि विप्रतिपत्तिरुदेति। राजतरङ्गिण्याश्चतुर्थेऽङ्के पठ्यते :—

कविर्वाक्पति–राजश्री–भवभूत्यादिसेवितः।
जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दिताम्॥

एतेन पद्येन विज्ञाप्यते यद् भवभूतिः कान्यकुब्जाधिपतेः यशोवर्मणो राजपण्डित आसीत्। यशोवर्माऽसौ काश्मीरकेण राज्ञा ललितादित्येन पराजितः। जनरलकनिंगहम महाभागेन ललितादित्यस्य शासनकालः क्रैस्त ६९३ अब्दात् ७२९ पर्यन्तं निर्धारितः। तदेवं विचार्यमाणे भवभूतेः स्थितिकालः अष्टमशताब्द्याः प्रारम्भ एवेति निश्चितप्रायम्। वाक्पतिराजकृत'गौडवहो' नाम्नि प्राकृतकाव्येऽङ्कितवृत्तान्तेनावगम्यते यद् यशोवर्मणा गौडराजः पराजितः। तत्र कविवरो वाक्पतिराज आत्मपरिचयं ददाति, यद् भवभूतिमहोदधिसमुत्थकाव्यामृतस्य कतिपयबिन्दवः तस्य गौडवहाख्यकाव्येऽपि स्फुटं समुल्लसन्ति। तदेतत्काव्यमपि अष्टमशताब्द्यामेव भूवभूतेर्विद्यमानतां द्रढयति। बालरामायणाख्ये नाटके कविना राजशेखरेणोदलेखि——

बभूव वल्मीकभवः कविः पुरा, ततः प्रपेदे भुवि भर्तृमेण्ठताम्।
स्थितः पुनर्यो भवभूतिरेखया, स वर्त्तते सम्प्रति राजशेखरः॥

एतस्मात् श्लोकादवगम्यते यद् भवभूतिः राजशेखराविर्भावकालात् प्रागेव दिवं गतः। एतावताऽपि भवभूतेरुक्तसमय एव निश्चीयते।

## किन्नाम भवभूतिः कालिदासस्य समसामयिकः

विद्वत्समाजे प्रचरितोऽयं प्रवादः यद्भवभूतिः कालिदासस्य समसामयिक एवासीदित्यपि भवति विचारणीयम्। अस्य प्रवादस्य मूलं भोजप्रबन्धोल्लिखितमाख्यानकमिदमनुमीयते यदेकदा उत्तररामचरितरचनानन्तरं भवभूतिः कालिदासस्य सविधे गतः तच्छ्रावणार्थम्। कालिदासस्तु तदा शतरञ्जनक्रीडाव्यस्तमानसः भवभूतिं प्रत्याह तावदुच्चस्वरेण श्राव्यताम्। सर्वमाद्यन्तं निशम्य कालिदासेन परमसन्तोषः प्रकटितः। उक्तञ्च यद्रूपकमतीव मनोहरं सम्पन्नम्। किन्तु——

किमपि किमपि मन्दं मन्दमासत्तियोगा-
दविरलितकपोलं जल्पतोरक्रमेण।
अशिथिलितपरिरम्भव्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेवं व्यरंसीत्॥

इत्यस्य श्लोकस्य चतुर्थे चरणे 'एवं' इत्यत्रानुस्वारोऽधिकः सञ्जातः। भवभूतिना कालिदास्यैतन्निर्देशमनुसन्धाय 'रात्रिरेव व्यरंसीदि'ति पाठं स्वीकृत्यानुस्वारोऽपाकृतः। प्रवादममुमवष्टभ्य भवभूतेः कालिदासस्य समसामयिकतां प्रतिपादयतां वाचोयुक्तिर्नावतरति बुद्धिपद्धतिम्। निराधारात्। कुतः ? उच्यते। भोजप्रबन्धे पठ्यते, "वाराणसीतः समागतः कोऽपि भवभूतिर्नाम कविर्द्वारि तिष्ठति" इति। भूजानेर्भोजदेवस्य शासनकालस्यायं वृत्तान्तः। भोजदेवश्च मुञ्जभ्रातृजः। यदि भोजदेवस्य शासने भवभूतेः विद्यमानताऽङ्गीक्रियेत तर्हि, भवभूतेः समयः एकादशशताब्द्यां समाकृष्टो भवेत्। महाराजमुञ्जदेवस्य शासनकाले सम्पन्नः 'दशरूपक' नामालङ्कारग्रन्थः। तत्र भवभूतिकृतनाटकस्य कतिपयश्लोका उदाहृता दृश्यन्ते, भवभूतिः मञ्जुदेवादपि प्राक्कालभव इति तैः श्लोकैः सम्भाव्यते। एवं सति भोजप्रबन्धस्योक्तनिर्देशः नितरामसाङ्गत्यं भजते। अतो भोजप्रबन्धस्योक्तयः इतिवृत्तदिशा तु न कर्हिचित्प्रामाण्यमर्हन्ति। यो भोजप्रबन्धाख्यः सन्दर्भः कालिदासं, माघं, मल्लिनाथञ्च एकस्मिन्नेव समयसूत्रे निबध्नाति, तस्य कालनिर्णयः कियन्मात्रं प्रामाणिको भवितुमर्हतीति मतिमन्तः स्वयं प्रणिभालयन्तु। अतः प्राङ्निर्दिष्टः काल एव भवभूतेः सुनिश्चितः काल इति निरवद्यम्।

## भवभूतेः रचना

संस्कृतसाहित्यमहोद्याने तत्रभवतो भवभूतेर्लेखनीलताप्रसूतानि त्रीणि वीरचरित-मालतीमाधव-उत्तररामचरिताख्यानि नाट्य-कुसुमानि पम्फुल्यमानानि समुल्लसन्ति अनन्यसामान्यप्रकर्षेण च सचेतसां चेतांसि समाकर्षयन्ति, इत्यत्र न कस्यापि विचिकित्सा। तत्र त्रिष्वपि नाटकेषु कतिपयश्लोकाः समानाकारतया बाभान्ति, द्वयोस्तु नाटकयोः पुनरन्ये केचित् श्लोकाः समानरूपत्वेनैवोद्धृताः। तदेषां पदविन्यासेन, शैल्या, भावभङ्ग्या चानुमीयते वीरचरितस्यैव प्राथम्यम्। ततो मालतीमाधवम्, उत्तररामचरितञ्चेति तदनन्तरम्। तत्र उत्कर्षदृशा तूत्तरचरितमेवैतेषु शेखरायते। परं कविस्तु स्वयं मालतीमाधवमेव सर्वोत्कृष्टत्वेनाभिनन्दति। मालतीमाधवे यद्यपि घटनापाटवं चमत्कृतिमामन्त्रयतेऽतिमात्रम्, तथापि भाषामाधुर्ये, भावभङ्ग्युत्कर्षे, अन्तर्निगूढार्थाभिव्यञ्जनायाञ्च तदुत्तरचरितस्य तुलामपि न स्पृशति। भवभूतिः वीरचरितमुद्दिश्य कवयति—

महापुरुषसंरम्भो यत्र गम्भीरभीषणः।
प्रसन्नकर्कशा यत्र, विपुलार्था च भारती॥
अप्राकृतेषु पात्रेषु, यत्र वीरः स्थितो रसः।
भेदैः सूक्ष्मैरभिव्यक्तैः प्रत्याधारं विभज्यते॥

परं मालतीमाधवस्योत्कर्षविशेषमातन्वता तेनोपश्लोकितम्——

यद्वेदाध्ययनं तथोपनिषदां सांख्यस्य योगस्य च,
ज्ञानं तत्कथनेन किं नहि ततः कश्चिद् गुणो नाटके।
यत्प्रौढत्वमुदारता च वचसां यच्चार्थतो गौरवम्,
तच्चेदस्ति ततो तदेव गमकं पाण्डित्यवैदग्ध्ययोः॥

अत्र भङ्ग्यन्तरेण कविरस्य नाटकस्य प्रशस्तिमेवोन्नाटयति। एवमुत्तररामचरितमभिलक्ष्य——

यं ब्राह्मणमियं देवी वाग्वश्येवानुवर्त्तते।
उत्तरं रामचरितं तत्प्रणीतं प्रयुज्यते॥

पद्यमिदं कवेः वचसामुदात्ततामावेदयति। उदीरयति ब्राह्मणपदमत्र किमप्यनिर्वचनीयं गौरवगरिमाणं सविशेषम्। सरस्वत्याः स्ववाग्वश्यतामावेदयन् वैदुष्यपाटवस्य काव्यकलामहिम्न आत्मनः पारदर्शिताञ्च ध्वनयन् नाटकस्यास्य सर्वोत्कृष्टत्वं प्रत्याययति कविः। परन्तु उत्तररामचरितस्योत्तमत्वे कः खलु संशयीत।'

## भवभूतेः नाट्य-सौष्ठवम्

दृश्यकाव्यप्रणयने ये ये विषया प्राधान्येन सन्निवेशनीया भवन्ति, भवभूतेः काव्येषु तेषां याथार्थ्येन यथास्थानं सन्निवेशः कस्य न कुतूहलं जनयति। नूनं नाटककारेषु भवभूतेः स्थानं सर्वोत्कृष्टमित्यत्र न काप्यत्युक्तिः। 'उत्तरे रामचरिते भवभूतिर्विशिष्यते।'' इत्युक्तिश्च सर्वथा चारितार्थ्यं भजते। सम्प्रति तस्य नाट्य-सौष्टवमुद्दिश्य किञ्चित्प्रपञ्च्यते।

उत्तरचरितस्य द्वितीयाङ्कारम्भे वनदेवता नेपथ्ये स्वागतमुदीरयन्ति—— "स्वागतं तपोधनायाः" वनदेवताया अनेनोद्गारेण आत्रेय्याः आगमनं सूचितम्। रंगभूमिप्रवेशात्पूर्वमेव यदि कश्चित् जवनिकानन्तयणैव कञ्चिद्विषयं सूचयति तच्चूलिकेति पदेन व्यपदिश्यते——"अन्तर्जवनिकाच्छन्नैश्चूलिकार्थस्य सूचनम्" इति तल्लक्षणात्। अत्र तापस्या आगमनसूचकं वनदेवतानां उक्तवचनं चूलिकाया उत्कृष्टोदाहरणम्। वीरचरितस्य चतुर्थाङ्कारम्भेऽपि चूलिकाप्रयोगकौशलं कविना प्रदर्शितम्। एवमेवाकाशभाषितस्यापि उत्कृष्टमुदाहरणं उत्तरचरितस्य षष्ठाङ्के दृश्यते।

रामचन्द्रः लवं पृच्छति——कोऽन्यस्तव भ्रातेति। प्रश्नसमाप्तिसमकालमेव नेपथ्ये निम्नाङ्कितं वचनं श्रवणपथमवतरति——भाण्डायन! भाण्डायन!

आयुष्मतः किल लवस्य नरेन्द्रसैन्यै-
रायोधनं ननु किमात्थ सखे तथेति।
अद्यास्तमेतु भुवनेष्वधिकारशब्दः,
क्षत्रस्य शस्त्रशिखिनः शममद्य यान्तु ॥

यद्विषयको रामचन्द्रस्य प्रश्नः स शुक एव स्वयं भाण्डायनेन सह वार्त्तालापं कुर्वन् अकस्माद् दर्शकानां दर्शनपथं गतः। भवभूतिना भाण्डायनस्य रंगभूमिप्रवेशं परिहृत्याकाशभाषितेन[1] तत्सूचना दत्तेति आकाशभाषितस्यात्युत्कृष्टमुदाहरणम्।

## भवभूतेः करुणो रसः

भवभूतेः करुणो रसः सर्वस्वभूतः इति प्राक् कृतसङ्केतम्।

एको रसः करुण एव निमित्तभेदाद्,
भिन्नः पृथक्पृथगिव श्रयते विवर्त्तान्।
आवर्त्तबुद्बुदतरङ्गमयान् विकारा-
नम्भो यथा सलिलमेव हि तत्समस्तम् ॥ इति।

स्वयं कविः तमसामुखेन करुणरसस्यैव प्राधान्यं विज्ञापयति अन्ये रसास्तु तद्विकृतय एव। करुणरसस्यैव रससार्वभौमत्वमुद्घोषितं कविना।

अष्टौ रसाः[2]। तेषु करुणस्यव प्राधान्यं भवभूतिनयेन। अतः 'कारुण्यं भवभूतिरेव तनुते'' इति प्रसिद्धोक्तिरपि तद्विषये सामञ्जस्यमावहति। तथा च प्राह गोवर्द्धनाचार्य आर्यासप्तशत्याम् :—

भवभूतेः सम्बन्धाद् भूधरभूतेव भारती भाति।
एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा ॥

---

१. किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत्।
श्रुत्वैवानुक्तमप्येक स्तत्स्यादाकाशभाषितम् ॥

अभिज्ञानशाकुन्तलेऽप्याकाशभाषितस्योदाहरणं दृश्यते—

"प्रियंवदे ! कस्येदमुशीरानुलेपनं मृणालवन्ति च नलिनीपत्राणि नीयन्ते ? (आकर्ण्य) किं ब्रवीषि, आतपलङ्घनाय बलवदस्वस्था शकुन्तलेति।"
[अभिज्ञानशाकुन्तलम्]

२. शृङ्गार - हास्य - करुण - रौद्र - वीर - भयानकाः।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥

किञ्च--'अपि ग्रावा रोदित्यपि च दलति वज्रस्य हृदयम्' इति ग्राव्णो रोदनं वज्रहृदयस्य दलनमिति न किमद्भुतं गिरा गुम्फनम् ।

उत्तरचरिते करुणरसः पराकाष्ठां नीत इवावलोक्यते । तद्यथा—

हा हा देवि स्फुटति हृदयं स्रंसते देहबन्धः,
शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि ।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा,
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ।। इति ।

भवभतिना यदि क्वचिदपशब्दप्रयोगोऽपि कृतः तर्हि सोऽपि अतीव नैपुण्येन कृतः । तद्यथा—उत्तरचरितस्य पञ्चमाङ्के लवः चन्द्रकेतुं प्रति आह :--

वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु किं वर्ण्यते,
सुन्दस्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ते ।।
यानि त्रीण्यपराङमुखान्यपि पदान्यासन् खरायोधने,
यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ।।

न महतां चरितान्यालोचनाविषयाणि भवन्ति । ताडकावधेऽपि रघुपतिः स्त्रीवधपातकेन न लिप्तः । इत्यादि ।

यद्यपि भवभूतिना नाटकेषु यत्रतत्र वीरकरुणबीभत्सादिविविधरसानां सञ्चारः कृतः, तथापि करुणरसो यथा शिखरायितोऽस्य रचनायां तथा नाऽन्ये रसाः । करुणरसमेव स रसान्तरप्रधानत्वेनाङ्गीकरोति ।

मन्यामहे आलङ्कारिकाः क्वचित्क्वचिद्दोषमप्युद्भावयन्ति । तद्यथा-- वीरचरितस्य द्वितीयाङ्के, परशुरामरामचन्द्रयोः युद्धवार्त्तामध्य एव कञ्चुकी रामचन्द्रं निवेदयति राममन्तःपुरे प्रेषयितुम् । परशुरामस्याज्ञामवाप्य रामोऽप्यन्तःपुरे गतः । एतत्सन्दर्भमालङ्कारिको मम्मटाचार्यः अकाण्डच्छेददोषेण दूषयति इति । इमेऽकिञ्चित्करा दोषास्तु तत्प्रदीप्तप्रतिभाभास्वरसन्दर्भच्छटायां विलीयमाना न दृक्पथमवतरन्ति मतिमताम् ।

संस्कृतसाहित्ये यदुच्चतमस्थानं महाकवयेऽस्मै समर्पितः तन्निदानत्वेन न केवलं भाषासौष्ठवमेव मृग्यम्, अपितु तद्व्यतिरिक्तं तद्रचनाया भारतीयसंस्कृतेः प्राचीना परम्परा, रीतिनीतिव्यवहारा, अध्यात्मञ्ज्योतिश्च परिदीप्यमानं प्राधान्येन तद्धेतुतामुपैति । एकतो वीररसमयं परिपूर्णतया प्रीणयति, अपरतोऽसौ करुणरसमुपलालयति । बीभत्सरसमपि कात्स्न्र्येनोद्भासयति । अन्ये रसा यथा सन्निवेशं सौन्दर्येण निवेशिता विभाव्यन्ते । अतएव न केवलं भारतीयानामपितु पाश्चात्यपण्डितानामपि हृदयपटलेषु भवभूतिकृतिभिः तत्प्रतिष्ठया श्रेष्ठत्वेन च पदं न्यधायि । तथा च :—

वीरचरिते-समाजपरिपाटीमुट्टङ्कयन्नाह--

तृतीयाङ्के जामदग्न्यं ब्राह्मणधर्मं कियन्नैपुण्येनावबोधयति ब्रह्मर्षिवशिष्ठ-मुखेन--

"अयि वत्स किमनया यावज्जीवनमायुधपिशाचिकया ? श्रोत्रियोऽसि जामदग्न्यपूतं भजस्व पन्थानम् आरण्यकश्चापि तत्प्रचिनु चित्तप्रसादनाश्चतस्रो मैत्र्यादिभावनाः। प्रसीदतु हि ते विशोका ज्योतिष्मती नाम चित्तवृत्तिः। समापयतु परशुं च। तत्प्रसादजमृतम्भराभिधानमवहिःसाधनोपाधेयसर्वार्थसामर्थ्यमपविद्ध-प्लवोपरागमूर्जस्वलमन्तर्ज्योतिषो दर्शनं प्रज्ञानमपि सम्भवति। तद्धि आचरितव्यं ब्राह्मणेन तरति येन मृत्युं पाप्मानम्।"

तदानीन्तनवैदिकसमाजे चतुर्णाम्विर्णानां ब्राह्मणक्षत्रियवैश्यशूद्राणां, ब्रह्म-चारि-गृहस्थ-वानप्रस्थ-संन्यासाख्यानामाश्रमाणाञ्च संग्रहेण परिज्ञानार्थं भवभूति-कृतवीरचरितस्योत्तररामचरितस्य पर्यालोचनं पर्याप्तम्। उत्तरचरिते चतुर्थाङ्के भांडायन-सौधातकिप्रभृतिविप्रवटूनां दैनिकचर्यामवलोक्य, द्वितीयेऽङ्के च क्षत्रिय-बालानाञ्च वेषभूषाञ्च दृग्गोचरीकृत्य तदानीन्तनवेषभूषायाः परिचयो जायते। वसिष्ठागमे यदा महर्षिवाल्मीकिविद्यालयेऽनध्यायो जातस्तदा भांडायनन सौधातकिं सम्बोध्योक्तम् :--

"अपूर्वः कोऽपि बहुमानहेतुः गुरुषु सौधातके !"

ब्राह्मणानभिलक्ष्य प्रतिपादयति :--

आविर्भूतज्योतिषां ब्राह्मणानां,
ये व्याहारा तेषु मा संशयोऽभूत्।
भद्रा ह्येषां वाचि लक्ष्मीर्निषिक्ता,
नैते वाचं विप्लुतार्थं वदन्ति॥ [उत्तर० चतुर्थेऽङ्के]

एवमुत्तरचरितस्य चतुर्थाङ्के जनकेन लववेशवर्णनव्याजेन क्षत्रियान्ते-वासिनां लक्षणानि चित्रितानि :--

चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतः,
भस्मस्तोकपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम्।
मौर्व्या मेखलया निर्यन्त्रितमधो वासश्च माञ्जिष्ठकं,
पाणौ कार्मुकमक्षसूत्रवलयं दण्डः परः पैप्पलः॥

भवभूतिना प्राचीनसमाजस्य यत्प्रकृतचित्रणं कृतं स्वरचनायां, तद्विशद-वर्णनमत्र नापेक्षते यद्यपि, तथापि तद्रचनासु तदानीन्तनशास्त्रीयाचारव्यवहार-प्रतिबिम्बस्यावभासस्तु वर्णनमर्हत्येव तच्चातुरीं सङ्क्रमयितुं बुद्धिपटलेषु दिङ्मात्र-

प्रदर्शनक्रमेण। यदा बहोः कालादनन्तरं, शूद्रमुनिं हन्तुं, दण्डकारण्ये राममागतमवलोक्य तमसामुखेन सीतामुद्दिश्याह :—

विलुलितमतिपूरैर्बाष्पमानन्दशोकप्रभवमवसृजन्ती तृष्णयोत्तालदीर्घा।
स्नपयति हृदयेशं स्नेहनिष्यन्दिनी ते, धवलबहलमुग्धा दुग्धतुल्येव दृष्टिः॥ इति

तत्र 'स्नेहनिष्यन्दिनी दुग्धकुल्येव दृष्टिः हृदयेशं स्नपयति।' इति कियन्मर्मस्पृग्वर्णनम्। नूनमेतद् भवभूतेरसाधारणकवित्वशक्तिं परिचाययति।

यद्यप्यसौ कालिदासस्य नाटचकलातुलान्तु नाधिरोहति तथापि कविरेषु श्रेष्ठो लब्धप्रतिष्ठश्चासीदित्यत्र न सन्देहः। स्थान एवोक्तं हरिहरेण कविवरेण :

जडानामपि चैतन्यं भवभूतेरभूद् गिरा।
ग्रावाऽप्यरोदीत् पार्वत्या हसतः स्म स्तनावपि॥

## भवभूतिकालिदासयोस्तुलना

कालिदासो भवभूतिश्चेत्युभावपि कवीश्वरौ संस्कृतसाहित्यस्य मूर्द्धाभिषिक्तौ नाटचकारौ। यदि कालिदासः शृङ्गाररससार्वभौमः, भवभूतिरपि करुणरसस्य परमाचार्यः। उभावपि स्व-स्वविषये निरुपमौ नात्र संशयलेशः। यद्यपि महापुरुषयोस्तुलना नोद्वहति खल्वौचितीम्, तथापि मानवस्वभावसुलभोऽयं विषयो यद् द्वयोर्मिथः सन्तुलनन्नाम। इति हेतोरेव बहुभिः समालोचकैस्तथा विहितं स्वस्वदृष्टिबिन्दुमुद्दिश्य। तदत्राऽपि किञ्चिदिव तद्वितन्यते। भवभूतिकालिदासयोः नाटचकलाकलापप्रपञ्चे महदन्तरं प्रतिभाति। कालिदासस्य रचनायां भूम्ना व्यञ्जनावृत्तिराश्रिता दृश्यते, भवभूतेश्च पुनरभिधावृत्तिरेव प्रायशो नृत्यति। शाकुन्तले दुष्यन्तः प्रथमदर्शन एव नितरां चमत्कृत उद्गृणाति 'अहो लब्धं नेत्रनिर्वाणम्'। भवभूतिस्तु 'मालतीमाधवे' मालतीमवलोक्य माधवः —'अविरलमपि दाम्ना पौण्डरेण नद्धः, स्नपित इव च दुग्धस्रोतसा निर्भरेण।' इति स्वहृदयभावमपि विशदय्याविष्करोति। यत्र कालिदासः सङ्केतमात्रं तनुते तत्र भवभूतिः विशदवर्णनमारचयति। कालिदासस्य भाषा सुमधुरा शैली प्रासादिकी, भवभूतेस्तु प्रौढा किञ्चित् कृत्रिमा, समासाडम्बरशालिनी च। कालिदासस्य काव्यकलापे मानवीयहृदयस्य विविधरसरागरञ्जिता कापि आन्तरप्रातिभप्रभा प्रभासमाना विलसति, भवभूतिरचनायां तु जीवनस्य आदर्शभूता कारुण्यसम्प्लुता वाणी मूर्त्तिमतीवावभाति। यद्यपि, काव्यकलानाटचपाटवं, भावावेशसंश्लेषः उभयोरप्यनयोः कवीश्वरयोरलौकिको मार्मिकश्च वरीवर्त्ति तथापि तारतम्यदृशा मृश्यमाने त्ववगतं भवति यद् भवभूतिः कालिदासस्य तुलान्तु खलु नैव संस्पृशति इति ध्रुवम्।

—०—

# श्रीहर्षवर्धनः

भारतीय नाटचकलाकारेषु सम्राड् हर्षवर्धनः (६०६–६४८) अतीव प्रसिद्धः। अस्य कृतित्वेन प्रख्यातानि त्रीणि नाटकानि, प्रियदर्शिका–रत्नावलि–नागानन्दाख्यानि। केचनात्र संशरते यदिमानि नाटकानि नैव हर्षवर्धनविरचितानि। किन्तु तेन केनचिदन्यकविना प्रणीतानि इमानि स्वनाम्ना प्रख्यापितानि। भवेन्नामैतत् किन्तु कतिपयैरन्तरङ्गप्रमाणैः साधयितुं शक्यते, यदिमानि सन्ति खल्वेकस्यैव लेखनीलताप्रसूतानीति। यतः त्रयाणामप्येषां प्रस्तावनायामेकस्यैव रचयितुर्नामोल्लेखः कृतोऽवगम्यते। प्रियदर्शिकायां नागानन्दे चोभयत्र द्वौ श्लोकौ समानौ, नाटकत्रयेऽप्येतस्मिन् समानैव शैली समाश्रिता। एभिर्हेतुभिरस्य प्रणेतृसाम्यं सुतरां प्रतिपत्तुं पार्यते। परन्तु कः खलु स प्रणेतेति प्रश्नस्तावदिदन्तया निर्णयमाकाङ्क्षते। एतन्मतं यन्नृपवरेण हर्षवर्धनेन पुष्कलं द्रव्यं प्रदाय कविभ्योऽस्य नाटकत्रयस्य रचना प्रसाधितेति न प्रज्ञापथमवतरति साधकप्रमाणाभावात्।

यद्यपि मम्मटाचार्येण काव्यप्रकाशे द्रविणप्राप्तिमपि काव्यप्रयोजनत्वेनाङ्गीकृत्य 'श्रीहर्षादेर्धावकादीनामिव धन'मित्युदाहृतम्। टीकाकारैश्चास्याशयोऽपि उक्तकिंवदन्तीमुपपादयन्नेव दर्शितः। तथाऽपि तन्न चारु, यतः दामोदरगुप्तेन (क्रैस्त-८००) स्वकीयकुट्टनीसमाख्ये सन्दर्भे नृपद्वारा रत्नावलीनाटिकायाः प्रणयनस्योल्लेखः कृतः। एतदतिरिच्य हर्षवर्धनः स्वयमेकः श्रेष्ठः कविरासीदिति स्वयं बाणेन स्वरचितहर्षचरिते हर्षः किल 'गीर्हर्षः' इति विरुदेन विभूषितः। तद्यथा :—

श्रीहर्ष इत्यवनिवर्त्तिषु पार्थिवेषु
नाम्नैव केवलमजायत वस्तुतस्तु।
गीर्हर्ष एष निजसंसदि येन राज्ञा,
संपूजितः कनककोटिशतेन बाणः॥

किञ्च—

'अपि चास्य प्रज्ञायाः शास्त्राणि कवित्वस्य वाचः. . . न पर्याप्तो विषयः।'
[हर्षचरिते]

अतः नाटकत्रयमप्येतन्नृपेन्द्रहर्षवर्धनविरचितमेवेति निश्चितप्रायम्।

एषु त्रिष्वपि रत्नेषु प्रियदर्शिकाऽस्य प्रथमा रचना, रत्नावली द्वितीया, नागानन्दश्च खलु तृतीया रचना। तत्र प्रियदर्शिका रत्नावली चेति द्वे नाटिके। यत्र

वत्सराजोदयनयोः प्राचीना लोकप्रिया च प्रणयगाथा सङ्ग्रथिता। नागानन्दे च पुनः जीमूतद्वारा नागानां गरुडात्परिरक्षणमेव कथावस्तुत्वेन प्रणिबद्धम्। नाटकमिदं पञ्चभिरङ्कैर्निबद्धम्। बौद्धसिद्धान्तानां प्रभावञ्चैतत्प्रव्यक्तं व्यक्तीकरोति। क्षुद्रप्राणिनां कृतेऽपि राजकुमारस्य जीमूतवाहनस्य प्राणार्पणम्। अहिंसाधर्मस्य कोऽपि तथाभूत आदर्शोऽनेन मनोरञ्जकतया पुरस्क्रियते। 'परोपकाराय सतां विभूतय' इत्येवास्य ध्येयत्वेनोद्भाव्यते। जीमूतवाहनस्य मृत्युमुद्दिश्य तत्पिता सगद्गदं विलपति :—

निराधारं धैर्यं कमिव शरणं यातु विनयः?
क्षमः क्षान्तिं वोढुं क इह? विरता दानपरता।
हतं सत्यं सत्यं व्रजतु कृपणा क्वाद्य करुणा?
जगज्जातं शून्यं त्वयि तनय! लोकान्तरगते॥

रत्नावली—चतुर्भिरङ्कैरलङ्कृतेयं नाटिका। अत्र प्रधानो रसः शृङ्गारः, नायकश्च धीरोदात्तो ललितः। कथावस्त्वपि कौतूहलजनकम्। धनञ्जयेन स्वकीये दशरूपके रत्नावल्या नैकानि पद्यानि उदाहरणत्वेनोद्धृतानि। तेनास्य रूपकस्य सौष्ठवं प्रतिपादितं भवति। यद्यप्यत्र प्रणयस्य कोऽपि विलासविलसितं चित्रणं व्यधायि कविना तथाऽपि भारतीयसंस्कृतिमर्यादा क्वाप्युल्लङ्घिता न प्रतीता। वर्णनशैली खल्वतिमनोहारिणी। सूर्यः कमलिनीं प्रत्याह :—

यातोऽस्मि पद्मवदने समयो ममैष सुप्ता मयैव भवती प्रतिबोधनीया।
प्रत्यायनार्थमतीव सरोरुहिण्याः सूर्योऽस्तमस्तकनिविष्टकरः करोति॥ [३।६]

रत्नावल्याः सौन्दर्यरचनां विधाय वेधा स्वयमाश्चर्योदन्वति निममज्ज :—

"दृशः पृथुतरीकृता जितनिजाब्जपत्रत्विषः
चतुर्भिरपि साधुसाध्विति मुखैः समं व्याहृतम्।
शिरांसि चलितानि विस्मयवशाद् ध्रुवं वेधसो
विधाय ललनां जगत्त्रयललामभूतामिमाम्॥ [२।१४]

उद्यानलतां व्यावृण्वन्नाह वत्सराज :—

उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरतैरातन्वतीमात्मनः।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवम्,
पश्यन् कोपविपाटलद्युतिमुखे देव्याः करिष्याम्यहम्॥

—०—

# श्री मुरारिः

कविरयं माहिष्मतीनगर्यां कविप्रवरस्य वर्धमानस्यात्मजः मौद्गल्यगोत्रोत्पन्नः। विदुषी तन्तुमती देवी चास्य जननी। कलचूरीवंशोद्भवस्य कस्यचिद्राज्ञोऽयं सभापण्डितः इति तदीयानर्घराघवाख्यनाटकोपनतवर्णनेनानुमीयते। कविराजेन मङ्खकेन च ख्रैस्त ११३५ तमाब्दसम्भवेन स्वकीये श्रीकण्ठचरितनाटके मुरारेः राजशेखरात्पूर्ववर्त्तित्वमुत्कीर्त्तितम्। राजशेखरस्य समयः ख्रैस्तनवमशताब्दीदेशीयः। अतोऽस्यापि समयो नवमशताब्द्याः पूर्वार्द्धात्पूर्वमेव सम्भवति।

अनर्घराघवाख्यं नाटकमस्य कृतित्वेन प्रसिद्धं सप्तभिरङ्कैर्निबद्धं ताडकावधादारभ्य रामराज्याभिषेकपर्यन्तं समस्तघटनाचक्रालङ्कृतमतिरमणीयं रूपकम्। अस्य विलक्षणरचनाचारुतामवलोक्यैव 'मुरारेस्तृतीयः पन्थाः' इत्युक्तिः प्रचरति। बहुभिरालोचकैश्च बहुधा मुरारेः कापि निरतिशया प्रशस्तिरुपश्लोकिता :—

मुरारिपदचिन्ता चेत्तदा माघे मतिं कुरु।
मुरारिपदचिन्ता चेत्तदा माऽघे मतिं कुरु॥
मुरारिपदचिन्तायां भवभूतेस्तु का कथा।
भवभूतिं परित्यज्य मुरारिमुररीकुरु॥

शार्ङ्गधरपद्धतिकारेण तु मुरारिर्भवभूतेरप्यधिकां प्रतिष्ठामुपलम्भितः।

भवभूतिमनादृत्य निर्वाणमतिना मया।
मुरारिपदचिन्तायामिदमाधीयते मनः॥

मुरारेः कवित्वप्रौढिमा, प्रगाढपाण्डित्यञ्च भूरि भूरि प्रशंसामर्हति, अत्र न कश्चन सन्देहः। प्रौढवैय्याकरणेन भट्टोजीदीक्षितमहाभागेन सिद्धान्तकौमुद्यां नैकान्युदाहरणानि अनर्घराघवादुपगृहीतानि। तेनास्य पाण्डित्यप्रकर्षः सुतरां स्फुटीभवति। श्रीकविराजरत्नाकरेण स्वकीयहरविजये काव्येऽयमित्थं स्मृतः :—

अङ्कोत्थनाटक इवोत्तमनायकस्य,
नाशं कविर्व्यधित यस्य मुरारिरित्थम्॥

इत्यनेन रत्नाकरादपि पूर्वभवत्वमस्य सूचितं भवति। मुरारेर्गर्वोक्तयस्तु सुप्रसिद्धाः। आत्मानं परिचाययन्नसौ कवयति :—

देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं,
जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः।
अब्धिर्लङ्घित एव वानरभटैः किन्त्वस्य गम्भीरता-
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः॥

यद्यपि भवभूतेर्नाटकानां कोटिं नाटीकतेऽस्य नाटकरत्नम्, तथापि तस्य नाटकविषये कयापि भावभङ्ग्या कटाक्षमापादयन् स्वनाटकोत्कर्षोतथाकर्षणं प्रदर्शयन्नसौ निरूपयति :—

तस्मै वीराद्भुतारम्भगम्भीरोदात्तवस्तवे।
जगदानन्दकाव्याय सन्दर्भाय त्वरामहे॥

वस्तुतः कवेरस्य नाटकीयवस्तुतत्त्वन्तु न तथा प्रकर्षं प्रकटयति यथाऽस्य प्रौढपाण्डित्यपाटवम् इति।

—०—

# कवीश्वरी मोरिका

इयं हि खलु स्त्री कवयित्री कदाऽभूत्, कतमञ्च जनपदं स्वजनुषा विभूषयामासेति नाद्यापि विदितं परन्तु मोरिकायाः पद्यानि सुभाषितग्रन्थेषु बहुश उपलभ्यन्ते। अस्या रचना रमणीया रुचिरा प्रासादिकी चेति। तद्यथा :--

प्रियतमस्त्वमिमामनघार्हसि प्रियतमा च भवन्तमिहार्हति।
न हि विभाति निशारहितः शशी, न च विभाति निशापि विनेन्दुना॥

लिखति न गणयति रेखा निर्भरवाष्पाम्बुधौतगण्डतला।
अवधिदिवसावसानं मा भूदिति शङ्किता बाला॥

यामीत्यध्यवसाय एव हृदये बध्नातु नामास्पदं,
वक्तुं प्राणसमा समक्षमघृणेनेत्थं कथं पार्यते।
उक्तं नाम तथाऽपि निर्भरगलद्बाष्पं प्रियाया मुखं,
दृष्ट्वापि प्रवसन्त्यहो धनलवप्राप्तिस्पृहा मादृशाम्॥

मा गच्छ प्रमदाप्रिय प्रियशतैर्भूयस्त्वमुक्तो मया,
बाला प्राङ्गणमागतेन भवता प्राप्नोति निष्ठां पराम्।
किञ्चान्यत्कुचभारपीडनसहैर्यत्नप्रवृद्धैरपि-
त्रुटचत्कञ्चुकजालकैरनुदिनं निःसूत्रमस्मद्गृहम्॥ इति

------

# महाकविः भट्टनारायणः

१--परिचयः। २--भट्टनारायणस्य समयः। ३--नाटकस्य सौष्ठवम्। ४--अस्य शैली।

## परिचयः

नाटकचक्रे कविरत्नभट्टनारायणस्यातीव महनीयं पदमिति सर्वैरेवालङ्कारिकैरङ्गीकृतमवलोक्यते। अस्य कृतित्वेन प्रख्यातं वेणीसंहाराख्यं नाटकं निरतिशयमनोरमं वीररससम्भृतं ओजोगुणालङ्कृतञ्च। नाटकमिदं महाभारतीयमाख्यानमवलम्ब्य प्रवृत्तम् षड्भिरङ्कैर्निबद्धम्। महाकविदण्डिमहाभागोल्लेखेन ज्ञायते यदनेन काव्यत्रयं विरचितं परमधुना केवलं वेणीसंहाराख्यमेव केवलमुपलभ्यते--

व्याप्तुं पदत्रयेणापि यः शक्तो भुवनत्रयम्।
तस्य काव्यत्रयव्याप्तौ चित्रं नारायणस्य किम्?॥ इति।

## भट्टनारायणस्य समयः

आलङ्कारिकेण खौस्त ८०० तमाब्दसम्भवेन मम्मटेन, १००० तमाब्दसम्भवेन धनञ्जयेन, ८५० तमाब्दभवेन आनन्दवर्धनेन, ८०० तमाब्दजातेन च वामनेन स्वीयेषु सन्दर्भेषु वेणीसंहारस्य उदाहरणानि सङ्गृहीतानि। अतः भट्टनारायणस्य समयः ७२५ तमाब्ददेशीय एव सम्भाव्यते। सम्भवति च यत्स भवभूतिसमकालीन एव भवेन्नाम। सप्तशतकात्पूर्वभवेन बङ्गाधिपतिना आदिशूराख्येन यज्ञसम्पादनार्थमाहूतः पञ्चभिरन्यैर्ब्राह्मणैः सह स कान्यकुब्जेभ्यो बङ्गानाजगाम। तत्रैव चान्ततो वसतिं स्वीचक्रे।

## नाटकस्य सौष्ठवम्

नाटकमिदं संस्कृतसाहित्ये वीररसप्रधानेषु नाटकेषु प्रमुखं स्थानमधिकरोति। रचनाऽपि नाटकस्यास्य नाट्यशास्त्रनियमानुगुण्येन समपद्यत। अतएव धनञ्जयेन दशरूपकेऽस्य नैकानि पद्यानि उदाहरणत्वेन सङ्कलितानि। नाटकीयदृशाऽस्य संवादा अतीव प्रभावजनकाः सम्पन्नाः। तृतीयाङ्कस्तु विशिष्य कवेर्वैशिष्ट्यपरिचायकः। भीमस्य शौर्यं भीषणत्वञ्च, कर्णस्याहङ्कारः, अश्वत्थाम्नो रोषः, दुर्योधनस्य स्वार्थप्रपञ्चो बिलासित्वञ्च कविना वैशद्येन प्रपञ्चितम्। यद्यपि

नाटकमिदं नाटकीयवस्तुनो दिव्यदर्पणमिवाभाति तथापि क्वचित्क्वचित्तु अनौचित्यमपि पल्लवितम्। द्वितीयाङ्के सङ्गरावसरे दुर्योधनस्य भामत्या सह प्रेमानुबन्धः प्रबन्धदृशा न खल्वौचितीमावहति। अतएव मम्मटाचार्येण 'अकाण्डे प्रथन'मिति दोषस्योदाहरणत्वेन प्रदर्शितम्। कदाचित् कविना दुर्योधनस्य नैतिकदौर्बल्यं सूचयितुमेवेदं कृतं भवेत्। धनकाचार्येण 'दशरूपकावलोके' पञ्चसन्धिविषयक चतुःषष्टिप्रभेदप्रदर्शनावसरेऽपि वेणीसंहारादुदाहरणानि सङ्कलितानि, एतेनेदं ध्वन्यते यत्सर्वेऽप्यालङ्कारिका वेणीसंहारविषये बद्धादराः समभवन्।

## अस्य शैली

अस्य शैली तु गौडीयेति स्फुटमेव। 'ओजःकान्तिमती गौडीये'ति तल्लक्षणात्। स्थान एवोक्तं केनाप्यभियुक्तेन :—

ओजःसंसूचकैः शब्दैः युद्धोत्साहप्रकाशकैः।
वेण्यामुज्जृम्भयन् गौडीं भट्टनारायणो बभौ॥ इति

अस्य भाषा अतीव प्रौढा वीररससंभिन्ना च। तद्यथा :—

मथ्नामि कौरवशतं समरे न कोपाद्,
दुःशासनस्य रुधिरं न पिबाम्युरस्तः।
सञ्चूर्णयामि गदया न सुयोधनोरू,
सन्धि करोतु भवतां नृपतिः पणेन॥ [भीमोक्तिः]

पुनश्च :—

यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतम्,
यद्विस्मर्त्तुमपीहितं शमवता शान्ति कुलस्येच्छता।
तद्द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः,
क्रोधज्योतिरिदं महत्कुरुकुले यौधिष्ठिरं जृम्भते॥

यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां,
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः,
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम्॥
[इति अश्वत्थामोक्तिः]

चञ्चद्भुजभ्रमितचण्डगदाभिघात—संचूर्णितोरुयुगलस्य सुयोधनस्य।
स्त्यानावनद्धघनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्तव देवि भीमः॥ इति

यदा महाभारतसङ्गरं विजित्य कृष्णः आह युधिष्ठिरस्य राज्याभिषेकमुद्-

घोषयन् किन्ते भूयः प्रियं करोमि तदा अन्ते कविः भरतवाक्यरूपेण कियदुद्बोधकं मनोहारि च वचनं प्रोवाच :—

अकृपणमतिः कामं जीव्याज्जनः पुरुषायुषम्,
भवतु भगवन् भक्तिर्द्वैतं विना पुरुषोत्तमे ।
दयितभुवनो विद्वद्बन्धुगुणेषु विशेषविद्,
सततं सुकृती भूयाद् भूपः प्रसाधितमण्डलः ॥

यद्येतादृशाः शुभकामना इदानीन्तनानां राष्ट्रनायकानां हृदयपटलेषु किञ्चिदपि पदमाधातुम्प्रभव्यः प्रभवेयुर्स्तर्हि सन्तप्तस्यास्य संसारस्य सन्तापकलापः कियद्यावन्न प्रशममुपेयादिति ।

—०—

# कविराजः कृष्णमिश्रो यतिः

शान्तरसप्रधानस्य प्रबोधचन्द्रनाटकस्य रचयिता कृष्णमिश्राख्यः प्रख्यातनाटचकलाकुशलो महीपतेः कीर्त्तिवर्मणः शासनकाले लब्धजन्मपरिग्रहः आसीत्। कीर्त्तिवर्मणः स्थितिकालः ख्रैस्त ११०० मितेऽब्दे सम्भाव्यते। अतः कृष्णमिश्रस्यापि समयः तत्सम्वत्सराभ्याश एव निर्धारयितुं शक्यते सोपपत्तिकम्।

रूपकमिदं शान्तरसप्रधानमतीव भावपूर्णम्। अत्र कामक्रोधादिवृत्तीनां स्फीतस्फालनमतिरोचिष्णुसरण्या चित्रितम्। आद्यनाटकाचार्येण तत्रभवता भासमहाभागेन स्वकीये बालचरितरूपके सर्वप्रथमं काल्पनिकपात्राणामभिनयेन तादृशरूपकगुम्फने प्रयासः कृतः। परमेतादृशप्रयासस्य पूर्णतया परिणतः परिपाकः प्रबोधनामकनाटक एव सम्पन्नो दृश्यते। अस्मिन् रूपके हि कविना, विवेक-मोह-ज्ञान-विद्या-बुद्धि-दम्भ-श्रद्धा-भक्ति-आदिभावात्मकपात्राणां स्त्री-पुरुषरूपाणामभिनयनं द्वारीकृत्याध्यात्मविद्याया चारुतरं चित्रं चित्रितम्। दार्शनिकदृशा रूपकमिदं निरतिशयं महत्त्वमाबध्नाति। अतएव एतद्रूपकोपनतानि पद्यानि सुतरां हृद्यानि फलितानि प्रतिपन्नानि च सहृदयहृदयसंवेद्यानि। तद्यथा :—

शान्तेऽनन्तमहिम्नि निर्मलचिदानन्दे तरङ्गावलि-
निर्मुक्ताऽमृतसागराम्भसि मनाङ्मग्नोऽपि नाचामति।
निःसारे मृगतृष्णिकार्णवजले श्रान्तोऽपि मूढः पिब-
त्याचामत्यवगाहतेऽभिरमते मज्जत्यथोन्मज्जति ॥४-६॥

उप्यन्ते विषवल्लिबीजविषमाः क्लेशाः प्रियाख्या नरै-
स्तेभ्यः स्नेहमया भवन्ति न चिराद्वज्राग्निगर्भाङ्कुराः।
येभ्योऽमी शतशः कुकूलहुतभुग्दाहं दहन्तः शनै-
र्देहं दीप्तशिखा सहस्रशिखरा रोहन्ति शोकद्रुमाः ॥५-१६॥

अग्रे अस्य संसारबीजस्य समुन्मूलनाय भगवदाराधनमेव शरणीकरणीयमित्याह :—

अमुष्य संसारतरोरबोधमूलस्य नोन्मूलविनाशनाय।
विश्वेश्वराराधनबीजजातं तत्त्वावबोधादपरोऽभ्युपायः ॥

अस्यान्ये लब्धप्रचुरप्रचाराः श्लोकाः सुभाषितत्वमधिगताः भूयसा प्रचरन्ति :

सङ्गं न केनचिदुपेत्य किमप्यपृच्छन्,
गच्छन्नतर्कितफलं विदिशं दिशं वा।
शान्तेऽप्यपेत–भय–शोक–कषाय–मोहः,
स्वायंभुवो मुनिरहं भविताऽस्मि सद्यः ॥

मोहान्धकारमवधूय विकल्पनिद्रा-
मुन्मथ्य कोऽप्यजति बोधतुषाररश्मिः।
श्रद्धा-विवेक-मति-शान्ति–यमादिकेन,
विश्वात्मकः स्फुरति विष्णुरहं स एव ॥

फलं स्वेच्छालभ्यं प्रतिदिनमखेदं क्षितिरुहां,
पयः स्थाने–स्थाने शिशिरमधुरं पुण्यसरिताम्।
मृदुस्पर्शा शय्या सुललितलतापल्लवमयी,
सहन्ते सन्तापं तदिह धनिनां द्वारि कृपणाः ॥

क्षमा ब्रूते :—

क्रमो न वाचां शिरसो न शूलं न चित्ततापो न तनोर्विमर्दः।
न चापि हिंसादिरनर्थयोगः श्लाघ्या परं क्रोधजयेऽहमेका ॥

अपि च :—

तं पापकारिणमकारणबाधितारं
स्वाध्याय-देवपितृयज्ञ-तपःक्रियाणाम्।
क्रोधं स्फुलिङ्गमिव दृष्टिभिरुद्वमन्तं
कात्यायनीव महिषं विनिपातयामि ॥

प्रायः सुकृतिनामर्थे देवा यान्ति सहायताम्।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥

क्रोधो ब्रूते :—

अन्धीकरोमि भुवनं बधिरीकरोमि,
धीरं सचेतनमचेतनतां नयामि।
कृत्यं न पश्यति नये न हितं शृणोति,
धीमानधीतमपि न प्रतिसन्दधाति ॥

सहजमलिनवक्त्रभावभाजां भवति भवः प्रभवात्मनाशहेतुः।
जलधरपदवीमवाप्य धूम्रो ज्वलनविनाशमनुप्रयाति नाशम् ॥

—०—

# कविवरो दिङ्नागः

कविवरो दिङ्नागोऽयं धीरनाग, वीरनाग इति नामान्तरद्वयेनापि प्रसिद्धः। अनेन विरचितस्य कुन्दमालानाम्नो नाटकस्य सर्वप्रथमोल्लेखः रामचन्द्रगुणचन्द्रकृते नाट्यदर्पणे समुपलभ्यते। भवभूतेः पूर्ववर्त्तिनि साहित्ये न क्वापि कुन्दमालाया उल्लेखो दृष्टिपथङ्गतः। अतः अस्या रचना भवभूतेः परवर्त्तिनी प्रतीयते। तस्माद दिङ्नागस्य स्थितिकालः क्रैस्त १००० तमशतकाभ्याशे सम्भाव्यते। यतः क्रैस्त-११०० शतकात्पूर्वतने साहित्ये क्वचिदपि तन्नामस्मरणं नावलोक्यते।

दक्षिणभारते षड्भिरङ्कैरलङ्कृतायाः कुन्दमालायाः चत्वारि हस्तलिपि-प्रणिबद्धानि पुस्तकानि प्राप्तानि। तान्याधारीकृत्य प्रथमं दक्षिणभारतीयग्रन्थ-मालायां १९२३ तममिते क्रैस्ताब्दे नाटकमिदं प्रकाशितमभूत्। तस्यातिशय-लोकप्रियतामल्पीयसा समयेनैव विविधभाषास्वनुवादाः एव भूम्ना प्रत्याययन्ति।

अस्य नाटकस्य 'कुन्दमालेति' संज्ञायाम् बीजन्तु वाल्मीकेराश्रमे गोमतीनद्यां वहन्तीं कुन्दपुष्पमालां वीक्ष्य, तदभिज्ञानेन रामः सीतामनुस्मरतीत्येव घटनां मन्यते कविः। अस्य कथानकमपि, भवभूतिकृतोत्तररामचरितमिव उत्तरखण्डाद्रामायणादेव सङ्कलितं गम्यते। तत्र तावत्सीतायाः परित्यागः, तदनु तदनुसन्धानम्, ततस्तन्मिलनञ्चेति। एतावतेदनुमातुं न दुष्करं यदस्य कथांशः उत्तरचरितमेवानुसन्दधाति। यद्यपि मन्यामहे दिङ्नागोऽयं भवभूतेर्नाट्यकलां कलयापि न संस्पृशति; उत्तरचरिते, चित्रितानि प्रणयचित्राणि, अङ्कितश्च मानवमनोभावभङ्ग्यः, न मनागपि कुन्दनमालायां दृष्टिपथमवतरन्ति, तथाऽपि सर्वथैवैतन्नाटकं न निम्नश्रेणीमाश्रयते। शैली अस्य मनोज्ञा भाषायामपि दुरूहत्वा-भावः, करुणरसोऽप्यस्य परिपक्त्रिमतासमापन्नः। परित्यक्तां सीतामवलोक्य वन्याः पशुपक्षिणः कियन्मात्रं व्याकुलीभूता इत्यस्य चित्रणं न कस्य मर्मस्पृक् :—

एते रुदन्ति हरिणा हरितं विमुच्य
हंसाश्च शोकविधुरा करुणं रुदन्ति।
नृत्तं त्यजन्ति शिखिनोऽपि विलोक्य देवीं
तिर्यग्गता वरममी, न परं मनुष्याः ॥१-१८॥

एकत्र रामः सीतापरित्यागं संस्मृत्य विलपति सगद्गदम् :—

नीतस्तावन्मकरवसतौ वन्ध्यतां शैलसेतुः,
देवो वह्निर्न च विगणितः शुद्धिसाक्ष्ये नियुक्तः।
इक्ष्वाकूणां भुवनमहिता सन्ततिर्नेक्षिता मे
किं किं मोहादहमकरवं मैथिलीं तां निरस्य॥

भवभूतेः प्रभावस्तु कुन्दमालायां स्पष्टमनुभूयते। भवभूतिवद् दिङ्नागोऽपि प्रकृतिपटलस्योत्कटत्वमुट्टङ्कयामास :—

नादः पातालमूलात् प्रभवति तुमुलं पूरयन् व्योमरन्ध्रं,
पातक्लिष्टा इवैते दिशि दिशि गिरयो मन्दमन्दाश्चरन्ति।
बद्धानन्दाः समन्ताल्लवणजलधयो मथ्यमाना इवासन्,
सीमामुल्लङ्घ्य वेगादुदनिधिसलिलैः स्वानि वेलावनानि॥

## अस्य समयः

राजशेखरो दिङ्नागविषये मौनमालम्बे। कुन्दमालामुद्दिश्य ऐदम्प्राथम्येनोल्लेखः खलु भोजदेवेन (क्रैस्त १०१८–१०६० सम्भवेन) कृतः, ततो महानाटके (क्रैस्ते-द्वादश-त्रयोदशशतकयोरन्तराललिखिते)। एवमेव साहित्यदर्पणेऽप्यवलोक्यते। तस्मात्कुन्दमालायाः प्रणयनकालः प्रायशः दशमशतक एव संभाव्यते।

—:o:—

# कविवरो विशाखदत्तः

१—मुद्राराक्षसम्। २—कः खल्वत्र नायकः। ३—विशाखदत्तस्य शैली। ४—विशाखदत्तस्य समयः। ५—चाणक्यस्य नीतिनैपुणी। ६—राक्षसो विष्णुगुप्तः।

## मुद्राराक्षसम्

संस्कृतनाटककदम्बे सुप्रसिद्धस्य मुद्राराक्षसनामधेयस्य नाटकस्य प्रणेता किल काव्यकलाकुशलः कविवरो विशाखदत्तो नाम। विशाखदेवनाम्नाऽप्यसौ प्रथितः। सुभाषितसन्दर्भाणां पर्यालोचनेनैतद्विज्ञायते यत्कविनानेन मुद्राराक्षसमतिरिच्य अन्यदपि नाटकद्वयं 'देवीचन्द्रगुप्तम्', 'राघवानन्दम्' इत्याख्यं विरचितम्। यदधुना नोपलभ्यते। एतन्मुद्राराक्षसन्नाम नाटकं समस्तसंस्कृतवाङमये साजात्यं नामन्त्रयते। नेदं यद्यपि नाटयशास्त्रानुशासनं कात्स्न्र्येनानुपालयति तथाप्येतन्निरुपमं अतुलनीयञ्च सम्पन्नम्। अस्मिन् हि नाटके राजनीतेः क्रूरकौटिल्यं, कूटनीतेश्च विकटकापटचपाटवम् अतिनैपुण्येन प्रदर्शितम्।

अस्य कथावस्तुनः केन्द्रबिन्दुत्वेन नन्दवंशस्योच्छेदनं, चन्द्रगुप्तस्य च साम्राज्ये प्रतिष्ठापनमेव विभाव्यते। आचार्यचाणक्यस्येयमेव हार्दिकी समीहा, बलीयसी च मनःकामनाऽऽसीद् यत् परमस्वामिभक्तो राजनीतिधुरन्धरो राक्षसो नाम नन्दमुख्यामात्यः चन्द्रगुप्तस्य मुख्यसाचिव्यमङ्गीकुर्यात्। यावन्महामेधावी सत्यनिष्ठोऽयममात्यराक्षसः चन्द्रगुप्तस्य प्रशासनधुरं न स्वीकरोति तावच्चन्द्रस्य राज्यलक्ष्मीः सुस्थिरा, आपातालबद्धमूला च नैव सम्पद्येत। अखिलमपि च चन्द्रसाम्राज्यमेतत्सैकतप्रासादवत् क्षणेनैव भूमिसात् सम्भवेत्। तदेवमस्मिन् नाटकरत्ने, उभयोरपि राजनीतिधुरन्धरयोरेतयोः खलु राक्षसचाणक्ययोः कूटकापटचघटनाचक्रचङ्क्रमणस्य विचित्रचित्रणमतीव चातुर्येण चारुतया च प्रपञ्चितम्। कविमूर्द्धन्येनामुना नाटकीयपात्राणां चित्रणं निरतिशयनैपुण्येन कृतम्। तदनयोर्द्वयोरपि मन्त्रिमुख्ययोरारचितं चरित्रचित्रणं पूर्णतया साफल्यमावहति। एकतः कुटिलः प्रगल्भः प्रौढो जागरूकः विकटकूटकापटचपटीयान् किल चाणक्यो निरतिशयाग्रहग्रहिलः। अपरतः सुस्थिरमतिः, समुदारः, सौजन्यसम्भृतः, राजनीतिनिपुणः ऋजुतरोऽजिह्मश्च राक्षसो विनयशीलः। एवमेव चन्द्रगुप्त-मलयकेतु-भागुरायण-

सिद्धार्थक-विराधगुप्तप्रभृतीनां पात्राणां चरित्रनिरूपणमप्यतीव पाटवेनोट्टङ्कितम्। मुद्राराक्षसे नाटकान्तरापेक्षया कापि नवीना एव सरणिरालम्बिता। सा चेयं यद् भासकालिदासादीनां रूपकेषु त्वङ्कविभाजनं दृश्यान्याश्रित्य न क्रियते किन्तु पात्राण्यभिलक्ष्य। प्रमुखपात्राणि उपक्रमादारभ्यावसानपर्यन्तं रङ्गमञ्च एवोपतिष्ठन्ति, मुद्राराक्षसे न तथा। तत्र तु खल्वङ्कविभाजनं दृश्यमधिकृत्य कृतमालोक्यते। किञ्च मुद्राराक्षसे स्त्रीपात्राणां सर्वथा अभावः। केवलं सप्तमाङ्के एकस्मिन्नेव स्थले श्रेष्ठिप्रवरस्य चन्दनदासस्य पत्नी वध्यस्थाने दृष्टिपथमुपयाति। अन्यत्र कुत्रापि स्त्रीपात्रस्य[1] दर्शनं न भवति। स एष खल्वपरो विशेषोऽस्य रूपकान्तरेभ्यः। शृङ्गाररसस्यापि नाटकेऽत्र नितरामभाव एव। केचन नाटकमेतत्केवलं वीररसप्रधानमिति प्रतिपादयन्ति। परन्त्वितरेऽत्र विप्रतिपद्यन्ते। वस्तुतस्त्विदं नाटकं न रसप्रधानं प्रत्युत घटनाप्रधानमित्येव कल्पो बहुसम्मतः।

## कः खल्वत्र नायकः

अस्मिन्नाटके नायकश्चन्द्रगुप्तो वा चाणक्यो वा इति सविवादो विषयः। एके चन्द्रगुप्तं नायकं मन्यन्तेऽपरे आचार्यचाणक्यम्। वस्तुतत्त्वे विचार्यमाणे तु चाणक्यस्यैव नायकत्वं यौक्तिकं तर्कसिद्धञ्च प्रतिभाति। मुद्राराक्षसमिति नाम्नाऽपि प्रोक्तं तत्त्वमेव सिद्ध्यति। मुद्रया गृहीतो राक्षसो यस्मिन् तन्मुद्राराक्षसन्नाम नाटकम्। एतन्मुद्राया प्रवर्त्तकस्तु चाणक्य एवेति तस्यैव नायकत्वमभ्युपपन्नं भवति।

## विशाखदत्तस्य शैली

कविवरविशाखदत्तस्य शैली निरतिशयं प्रासादिकी, भाषा सुतरां मधुरा, प्राञ्जला च। समासप्रचुरा रचना न रोचतेऽस्मै, न चायमुपलालयति पद्यप्रयोगबाहुल्यम्। गद्यबन्धोऽस्य नितरामोजस्वी, भावावेशश्चातितरां प्रभविष्णुः, यत्र तत्र हास्यपुटमपि रचनासु कवेः पाटवमाख्याति। संवादोऽपि स्वभावसिद्ध इव सम्पन्नः। तद्दिङ्मात्रमिह पुरस्क्रियते विदुषां विनोदाय :—

'न प्रयोजनमन्तरा चाणक्यः स्वप्नेऽपि चेष्टते।', 'अयमपरो गण्डस्योपरि स्फोटः।', 'तन्मयाऽस्मिन् वस्तुनि न शयानेन स्थीयते।', 'सर्वज्ञतामुपाध्यायस्य चोरयितुमिच्छसि।', 'ननु वक्तव्यं राक्षस एवास्माकमङ्गुलीप्रणयी संवृत्तः।', 'कीदृशः पुनस्तृणानामग्निना सह विरोधः।', 'चाणक्योऽपि जितकाशितया तैस्तैराज्ञाभङ्गैश्चन्द्रगुप्तस्य चेतः पीडामुपचिनोति।', 'ननूपायैरेवासौ हृदयेशयशङ्कुरिवोद्धृत्य दूरीकृतः।'

---

१. विषकन्यायास्तु केवलं नाम संकीर्तनमेव, न तु तद्दर्शनम्।

एवमादि रचनाऽस्य कस्य न चेतश्चमत्कारिणी ? श्लेषबन्धोऽपि बन्धुरः संवृत्तः। स्थले स्थले वस्त्वन्तरं भङ्ग्यन्तरेणाप्यसौ निबध्नाति। प्रायशोऽसौ गद्यनिगडितं वस्तु स्थूणानिखननन्यायेन पुनर्दृढीकरणार्थं पद्यग्रथितमपि समारचयति। विशाखदत्तस्य यथा गद्यप्रपञ्चे संस्फुरत्योज; तथैव पद्यप्रबन्धेऽपि प्रवहति कश्चनानवच्छिन्नः प्रासादिकश्च गिरां प्रवाहः। तद्यथा :—

आस्वादितद्विरदशोणितशोणशोभाम्,
सन्ध्यारुणामिव कलां शशलाञ्छनस्य।
जृम्भाविदारितमुखस्य मुखात्स्फुरन्तीं,
को हर्त्तुमिच्छति बलात् परिभूय दंष्ट्राम् ॥

चाणक्यस्य नीतिनैपुणीं निरूपयन्नाह :—

मुहुर्लक्ष्योद्भेदा मुहुरधिगमाभावगहना,
मुहुः सम्पूर्णाङ्गी मुहुरतिकृशा कार्यवशतः।
मुहुर्नश्यद्बीजा मुहुरपि बहुप्रापितफले-
त्यहो चित्राकारा नियतिरिव नीतिर्नयविदः ॥ ५-३ ॥

नाटकेऽस्मिन् कूटनीतिपण्डितस्य परमचतुरार्यचाणक्यस्य लोकोत्तरबुद्धिसम्प्रदर्शकानामतिगम्भीराणां राजनीतितत्त्वानामुपदेश एवैतदुद्देश्यरूपेण निर्धार्यते। राजनीतिचणः चाणक्यः स्वबुद्धिवैभवेन राज्ञो नन्ददेवस्य मुख्यामात्यपदमलङ्कुर्वाणं राक्षसमहोदयं विजित्य, चन्द्रगुप्तनृपतेः साचिव्यं तं ग्राहयितुमिच्छन्, विकटकूटकापटचपुटितकुटिलनीतिजालकञ्चाभितः प्रसार्य राक्षसमृगं निगडयितुं योऽयमनितरसाधारणं बुद्धिचमत्कारं प्रदर्शितवान् स कं चक्षुष्मन्तं न विस्मापयति ? अत्र नास्ति सन्देहलवोऽपि यद् यादृशः कुटिलो दूरदर्शी प्रवञ्चनाचञ्चुश्च आचार्यचाणक्यो न तादृशो राक्षसः। मन्यामहे राक्षसोऽपि परमविचक्षणो राजनीतिचणश्चासीत् परं तादृशकुटिलनीतिपाटवाभावादेव वराकश्चतुरचाणक्यस्य जटिलजाल्मजाले वन्यमृग इव विनिपतितस्तद्वशंवदतां गतः। तदेतदखिलं वस्तु नाटकेऽत्र निरतिशयनैपुण्येन वर्णितं महाकविनेति निश्चप्रचम्।

## विशाखदत्तस्य समयः

महाकविः विशाखदत्तोऽयमात्मानं सूत्रधारमुखेन परिचाययति स्वयमेव स्वकीयनाटके —

'अद्य सामन्तवटेश्वरदत्तपौत्रस्य महाराजपदभाक्पृथुसूनोः कवेः विशाखदत्तस्य कृतिर्मुद्राराक्षसं नाम नाटकं नाटयितव्यमिति।" एतद्व्यतिरिक्तं परिचया-

न्तरन्तु नाद्यावधि सुलभमतः कुत्रत्योऽसौ, कस्मिन् काले च सञ्जात इतीदन्तयावधारयितुं न सुशकम्। कस्मिंश्चिन्नाटकान्तरे, पृथुस्थाने भास्करदत्त इति पाठान्तरदर्शनात् निश्चयोऽतितरां दुरूहः संवृत्तः। तथापि कैश्चित्पाश्चात्यपण्डितैः —

'म्लेच्छैरुद्वेज्यमाना भुजयुगमधुना संश्रिता राजमूर्त्तेः।''

पद्येऽस्मिन् म्लेच्छपददर्शनात्, यवनानामाक्रमणमेवात्र म्लेच्छपदस्याभिप्रेतं स्वीकृत्य क्रैस्तैकादशद्वादशशतकयोर्मध्य एवास्य समयो निर्धारितः। भारतीयैः पुनरपरैः —

'सश्रीमद्बन्धुभृत्यश्चिरमवतु महीं पार्थिवश्चन्द्रगुप्तः।'

इत्यत्र चन्द्रगुप्तनामस्मरणात् नाटकमिदं चन्द्रगुप्तकालरचितं विभाव्यते। यद्येतत्स्यात् तर्हि पञ्चमशताब्दीभवस्य विक्रमादित्येत्यपरनामधेयस्य यवनहूणादिशातनस्य निखिलदेशव्याप्यैकच्छत्रशासनस्य विक्रमसम्वत्सरप्रवर्त्तकस्य चन्द्रगुप्तस्य साम्राज्यकालेऽस्य नाटकस्य प्रणयनमभिनयनञ्च सम्भाव्यते। क्वचिन्नाटकेऽस्मिन् भरतवाक्ये चन्द्रगुप्तस्थाने अवन्तिवर्मेति नामोल्लेखदर्शनात्, यः पश्चिममगधाधिप आसीत्, तस्यैव सभायां राजकविरासीत् विशाखदत्तोऽपि-इति चेदनुमीयते तर्हि विशाखदत्तेनापि मगधदेशवास्तव्येनैव भवितव्यमिति। तस्य च नृपतेः कालः क्रैस्तपञ्चमशतकसम्मितः। स एव कालः कवेरपि सम्भावनीयः।

किञ्च दशरूपकेऽपि [१।६८], [२।५५] मुद्राराक्षसनाटकस्योल्लेखात्, तत्पूर्वविरचितमेवैतन्नाटकं स्याद् इति सुलभानुमानम्। दशरूपकस्य च समयः कालविज्ञैः क्रैस्ते दशमे शतके विभाव्यते। अतस्तदूर्ध्वमेव क्वचिन्नाटकस्यास्य कालः कल्पनीयः। सप्तमेऽष्टमे नवमे वा शतके वेति अस्य कालनिर्णयो बोद्धव्यः।

मुद्राराक्षसनाटकमतीव विलक्षणं राजनीतिपूर्णम्। आचार्यकौटिल्यस्य, महामन्त्रिराक्षसस्य च नीतिचातुर्य्यचारुता, कौटिल्यकूटकापटचञ्च कविना यादृशपाटवेनोट्टङ्कितम् न तदन्यत्र दृष्टिगोचरम्।

नाटकमिदं वीररसप्रधानम्। शृङ्गारकरुणादयो नात्रोपलालिताः। वीररस एव पूर्णपरिपाकं गतो विभाव्यते। स्त्रीपात्रं केवलं चन्दनदासपत्नी एवैका वराकी, प्रतिप्राणा सहृदयमहिलाललामभूता। नृपतिश्चन्द्रगुप्तोऽत्र नायकः। प्रधानपात्रे तु कौटिल्यराक्षसौ। यद्यपि केचन चाणक्यस्यैव नायकत्वमभिनन्दन्ति, न चन्द्रगुप्तस्य, आचार्यस्य मतिवैचित्र्यमेवात्र कारणत्वेनोन्नेयम्। मुद्रया गृहीतो राक्षसः इति तन्नामस्मरणात्तदानुगुण्येन तत्साफल्ये च चाणक्यस्यैव नेतृत्वात् चाणक्यस्यैव नायकत्वं सम्भवति। तदत्र निश्चितं निर्णेतुं तु प्रेक्षावन्त एव प्रमाणम्। तदस्य चाणक्यस्य प्रधानपात्रत्वे तु नास्त्येव सन्देहलवः।

## चाणक्यस्य नीतिनैपुणी

चाणक्योऽयं ब्राह्मणकुलललामभूतोऽनन्यसाधारणो मेधावी, राजनीतिप्रवीणः, धवलधौर्यधुरीणश्च आसीत्। कूटनीतिज्ञमुकुटमणिनाऽनेन नन्दवंशविध्वंसकेन स्वकीयं नीतिनैपुण्यं पूर्णतया प्रमाणीकृतम्। अपूर्वबुद्धिबलादेवासौ गुर्वी प्रतिज्ञां प्रतीर्णवान्। प्राह च सः--

ये याताः किमपि प्रधार्य हृदये पूर्वं गता एव ते,
ये तिष्ठन्ति भवन्तु तेऽपि गमने कामं प्रकामोद्यमाः।
एका केवलमर्थसाधनविधौ सेनाशतेभ्योऽधिका,
नन्दोन्मूलनदृष्टवीर्यमहिमा बुद्धिस्तु मा गान्मम॥

[अङ्क १।२६]

न तेन दैवाधीनत्वं कर्मणामङ्गीकृतम्। किन्तु तेषां पौरुषप्रधानत्वं प्रसाधितम्।

"दैवमविद्वांसः प्रमाणयन्तीति तदाघोषः।" [मुद्रा २२९ पृष्ठे]

कूटनीतिमहाम्भोधौ निमग्नोऽप्येष चक्षुष्मान् सर्वदैव 'पद्मपत्रमिवाम्भसा' प्रावर्त्तत। महामात्योऽपि सन् विशालसाम्राज्यस्य राजप्रासादान् विहाय आत्मीयपर्णकुटीमेव बहु मेने। अस्य महाभागस्य पर्णशालामुपवर्णयन् कविराह--

उपलशकलमेतद् भेदकं गोमयानां,
बटुभिरुपहृतानां बर्हिषां स्तोम एषः।
शरणमपि समिद्भिः शुष्यमाणाभिराभि-
र्विनमितपटलान्तं दृश्यते जीर्णकुड्यम्॥ [अङ्क ३।१५]

अन्यत्र कविः चाणक्यस्य नीतिनैपुणीं तत्साफल्यञ्च प्रशस्तिभङ्ग्या उपश्लोकयन्नाह गर्वगौरवगिरा--

चाणक्यमुखेनैव--
केनोत्तुङ्गशिखाकलापकपिलो बद्धः पटान्तः शिखी[1]?
पाशैः केन सदागतेरगतिता सद्यः समासादिता?
केनानेकपदानवासितसटः सिंहोऽर्पितः पञ्जरे?
भीमः केन च नैकनक्रमकरो दोर्भ्यां प्रतीर्णोऽर्णवः?

पद्यमिदं चाणक्यचातुरीसंचिवं राक्षसस्वरूपमपि प्रकटयति चाणक्यदृशा :--

१. शिखी अग्निः।

चाण्डालः—ननु नीतिनिपुणबुद्धिना आर्येणैव ।

चाणक्यः—भद्र ! मामैवम् । नन्दकुलद्वेषिणा दैवेनेति ब्रूहि ।

(इति आत्मविनयं प्रदर्शयति ।)

* * *

राक्षसः—(विलोक्य स्वगतम्) अये ! अयं स दुरात्मा, अथवा अयं स महात्मा कौटिल्यः । यतः—

आकरः सर्वशास्त्राणां रत्नानामिव सागरः ।
गुणैर्न परितुष्यामो यस्य मत्सरिणो वयम् ।।

## राक्षसो विष्णुगुप्तः

अपरः प्रधानपात्रं राक्षसो विष्णुगुप्तः । सोऽपि विप्रवंशावतंसः नन्दानां मुख्यो महामात्यः । स्वामिभक्तिपरायणो नन्दसाम्राज्यधुरन्धरो नीतिरीतिपुरन्दरः महामेधावी धर्मभीरुश्चासीत् । विनष्टेषु नन्दकुलेषु अतीव विषण्णः खिन्नश्च कुसुमपुरं जहौ, नन्दवंशपुनरुद्दिधीर्षयैव । "अहो राक्षसस्य नन्दवंशे निरतिशयो भक्तिगुणः" इति चाणक्यश्चापि आश्चर्यचकितान्तःकरणः प्रशंसति । "अमात्यं विज्ञापयति चिरात्प्रभृति आर्यः परित्यक्तोचितशरीरसंस्कारः" । किञ्च,

"अक्षीणभक्तिः क्षीणेऽस्मिन् नन्दे स्वाम्यर्थमुद्वहन् ।
पृथिव्यां स्वामिभक्तानां प्रमाणे परमे स्थितः ।।"

इत्याद्युक्तिभिः कवी राक्षसस्य स्वामिभक्तिपराकाष्ठां सूचयति ।

सोऽयं राक्षसो न केवलं नीतिशास्त्रे एव कुशलोऽपि तु शस्त्रास्त्रविद्यायामपि अद्वितीयः कृतविद्य आसीत् । यथाह कौटिल्यः —

गुरुभिः कल्पनाक्लेशैर्दीर्घजागरहेतुभिः ।
चिरमायासिता सेना वृषलश्च मतिश्च मे ।। [अं० ७।८]

परिस्थितिवशान्मित्रकर्त्तव्यपालनार्थमेव राक्षसस्य नन्दकुलधूमकेतोश्चाणक्यस्य कूटकापटचवशंवदतया राज्ञश्चन्द्रगुप्तस्य मन्त्रिपदस्वीकारः न तु स्वार्थवशादिति राक्षसस्य गुणगणं भूयस्तरं प्रगुणयति । तथा च राक्षसश्चिन्तयति—

नन्दस्नेहकणाः स्पृशन्ति हृदयं भृत्योऽस्मि तद्विद्विषां,
ये सिक्ताः स्वयमेव पाणिपयसा छेद्यास्त एव द्रुमाः ।
शस्त्रं मित्रशरीररक्षणकृते व्यापारणीयं मया
कार्याणां गतयो विधेरपि न यान्त्यालोचनागोचरम् ।।

किञ्च :--

(जवनिकामपनीयोपसृत्य च) चाणक्यः --

'भो भो अमात्यराक्षस ! (विष्णुगुप्तोऽभिवादयते) ।

राक्षसः--(स्वगतम्) अमात्य इति लज्जाकरमिदानीं विशेषणपदम् । (प्रकाशम्) भो भो विष्णुगुप्त ! न मां श्वपचस्पर्शदूषितं स्प्रष्टुमर्हसि ।

चाणक्यः---नायं श्वपचः । अयं खलु दृष्टपूर्वः सिद्धार्थकनामा राजपुरुषः । अयमसौ द्वितीयोऽपि राजपुरुषः । ताभ्यामेव सह सौहार्दमुत्पाद्य शकटदासोऽपि तपस्वी तं तादृशमजानन्नेव कपटलेखं मयैव लेखितः । इत्यादि

* * *

राजा--(राक्षसमुपसृत्य) आर्य चन्द्रगुप्तोऽहमभिवादये ।

राक्षसः--(विलोक्य स्वगतम्) अये ! अयं चन्द्रगुप्तः ! य एष

बाल एव लोकेन सम्भावितमहोदयः ।
क्रमेणारूढवान् राज्यं यूथैश्वर्यमिव द्विपः ॥

(प्रकाशम्) राजन् विजयस्व !

राजा---आर्य !

जगतः किन्न जितं मयेति प्रविचिन्त्यताम् ।
गुरौ षाड्गुण्यचिन्तायामार्ये चार्ये च जाग्रति ॥

राक्षसः--(स्वगतम्)

सर्वथा स्थाने यशस्वी चाणक्यः ।

किमेतत्सर्वं सुघटितमार्यराक्षसस्यापि वैशिष्टचम्माहात्म्यञ्च न सूचयति ? इति दिक् ।

--०--

# महाकविः शूद्रकः

## परिचयः

संस्कृतनाटचसाहित्ये शूद्रको नाम महाकविः किमपि मानार्हं पदमधिकरोति। मृच्छटिकाभिधेयं नाटकमस्यामरकृतित्वेन प्रथितं संस्कृतवाङ्मयस्य ललामभूतं रत्नम्। शूद्रकोऽयं कश्चन कविरासीद् राजा वेति एतन्नामेति अद्यापि उपोद्वलकाभावान्न पूर्णतया निश्चितम्। वामनाचार्येण (क्रैस्त ८०० सम्भवेन) स्वकीयकाव्यालङ्कारसूत्रवृत्तौ, मृच्छकटिकस्य[1] पद्यद्वयमुद्धृत्य, शूद्रक एवोक्तनाटकस्य प्रणेतृत्वेन स्वीकृतः। पाश्चात्यविद्वद्वरस्य कीथमहाशयस्य मतेन तु केनापि अज्ञातव्यक्तिविशेषेण भासकृतचारुदत्तन्नाम नाटकमेव परिवर्त्य मृच्छकटिकमिदं राज्ञः शूद्रकस्य नाम्नैव प्रसिद्धिं नीतं विभाव्यते। परन्त्वेतदप्यनुमितिविजृम्भणमेव केवलम्।

एतन्नाटकपर्यालोचनेन एतत्तु सुविदितं भवति यत्कविवरोऽयं शूद्रकः लोकवेदोभयसाहित्यस्य मार्मिको विद्वान्, यज्ञयागादिकर्मकलापानुष्ठाता चासीत्। चरमे वयसि च पुत्रं राजसिंहासने प्रतिष्ठाप्य, अश्वमेधयज्ञं महता समारम्भेण निर्वर्त्तयामास। यज्ञान्ते च तत्रैवाग्निं प्रविष्टः। तथा चोपश्लोकितम्—

'लब्ध्वा चायुः शताब्दं दिनदशसहितं शूद्रकोऽग्निं प्रविष्टः।' [मृ० १४]

अस्य वाग्वैभवं प्रशंसन्नाह दण्डिमहाभागः —

शूद्रकेनासकृज्जित्वा स्वेच्छया खड्गधारया।
जगद् भूयोऽप्यवष्टब्धं वाचा स्वचरितार्थया॥ [दण्डी]

## शूद्रकस्य समयः

प्रसिद्धालङ्कारिकेण श्रीवामानाचार्येण न केवलं शूद्रकप्रणीतप्रबन्धानामुल्लेखः कृतः अपितु मृच्छकटिकनाटकादुद्धरणमप्येकं द्यूतप्रशंसाविषयकं प्रदत्तम्, 'द्यूतं हि नाम पुरुषस्य असिंहासनं राज्यम्' इति। इत्थमेव दण्डिमहाभागेनाऽपि मृच्छकटिकगतस्य 'लिम्पतीव तमोऽङ्गानि' इत्यादिपद्यस्य अलङ्कारनिरूपणमतिनैपुण्येन कृतम्। इत्यनेन शूद्रकस्य दण्डिवामनयोः प्राक्कालभवत्वं सुतरामभ्युपपन्नं भवति।

---

१. मृच्छकटिकम् [१।९, २।६]।

किञ्च मृच्छकटिकस्य नवमाङ्के [९।३३] बृहस्पतेर्मङ्गलविरोधित्वं प्रदर्शितम्। किन्तु प्रसिद्धज्यौतिषाचार्येण वराहमिहिरमहाभागेन अनयोर्ग्रहयोः मैत्रीभावः प्रतिपादितः। बृहज्जातकोल्लेखेना[२।१५]वगतं भवति यत्तादृशी धारणा वराहमिहिरात्पूर्वतनाऽसीद् इति। अतः वराहमिहिरात्पूर्ववर्त्तित्वमेव शूद्रकस्य प्रतिपन्नं भवति। भासाच्च पुनः परवर्त्तित्वम्। यतो हि मृच्छकटिक-चारुदत्तयोस्तुलनया प्रतीयते यद् भासनाटकस्य कथानकमादायैव शूद्रकेण मृच्छकटिकन्नाटकं विरचितं तत्र रोचिष्णुतामापादयितुमिति भासात्परभवत्वं तस्य सोपपत्तिकम्। इत्थं शूद्रकस्य समयः पञ्चमशतकगत एव न्याय्योऽङ्गीकर्त्तुम्।

## शूद्रकस्य नाट्यकला

नाट्यकलादृशा नाटकमिदं सुतरां हृदयावर्जकम्। नायकोऽस्य नगरश्रेष्ठी चारुदत्तः, नायिका च वसन्तसेना। वाराङ्गनाऽपि सती सा सती साध्वी स्त्रीव यद्यपि नाभिनन्दनीया भारतीयसंस्कृतिमनुरुध्य तथाऽपि न निन्दनीया। हास्यरसोऽपि नाटकेऽस्मिन् सुतरां परिफुल्लितः। शकारः खलु मूर्त्तिधरो हासः, मूर्खतायाः, विक्षिप्ततायाः, असम्बद्धप्रलापस्य च विग्रहवान्, द्विपादपुच्छश्च पशुः।

मुख्यो रसोऽत्र शृङ्गारः, करुणरसश्चापि समीचीनतया परिपाकमियाय। हास्यरसोऽप्यत्र चारुतया प्रासादिकः। कथनोपकथनमपि हृदयग्राहि। वसन्तसेना-मदनिका-विट-मैत्रेयादिपात्राणि संवाददृशोत्तमानि। रचनाऽसामान्या प्रीतिकरी च। दरिद्रपुरुषस्य वर्णनं नूनं तथ्यतां बिभर्त्ति :—

दारिद्र्यात्पुरुषस्य बान्धवजनो वाक्ये न सन्तिष्ठते,
सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः।
सत्त्वं ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते,
पापं कर्म च यत्परैरपि कृतं तत्तस्य सम्भाव्यते॥१।३६॥

पद्यबन्धस्तु शूद्रकस्य हृदयाकर्षकः। चन्द्रोदयं वर्णयन्नाह :—

उदयति हि शशाङ्कः कामिनीगण्डपाण्डु-
र्ग्रहगणपरिवारो राजमार्गः प्रदीपः।
तिमिरनिकरमध्ये रश्मयो यस्य गौराः,
स्रुतजल इव पङ्के क्षीरधाराः पतन्ति॥ [१।५७]

—०—

# कविवरो अकालजलदः

अकालजलदो नाम कविरयमतीव प्रतिभाशाली आसीदिति सुभाषितग्रन्थेषु सङ्कलितैस्तद्रचितैस्तन्नाम्ना चोट्टङ्कितैः पद्यैः समीचीनतया प्रतीयते । असौ दाक्षिणात्यमहाकविराजशेखरस्य च पितामह आसीदिति कविराजेन राजशेखरेण स्वकीयवालरामायण-प्रस्तावनायां समुल्लिखितम् स्वपरिचयमारचयता :—

स मूर्त्या यत्रासीद् गुणगण इवाकालजलदः,
सुरानन्दः सोऽपि श्रवणपटुपेयेन वचसा ।
न चान्ये गण्यन्ते तरलकविराजप्रभृतयो,
महाभागस्तस्मिन्नयमजनि यायावरकुले ।। इति ।।

अनेन तर्क्यते यदसौ यायावरकुलावतंसो जन्मना च दक्षिणपथमेवालञ्चकार । इत्यपि प्रतीयते यदस्य नामान्तरमन्यदेव किमप्यासीत्पुरा, यदधुना विस्मृतौ निमग्नम् । अकालजलदेति नाम तु कस्मिश्चित् तद् गुम्फिते पद्ये 'अकालजलद' इति प्रयोगस्य चमत्कृतिमत्त्वात् एतन्नाम्नैवासौ लोके प्रसिद्धि गतः । पद्यञ्च तन्निम्नाङ्कितम् :—

भेकैः कोटरशायिभिर्मृतमिव क्ष्मान्तर्गतं कच्छपैः,
पाठीनैः पृथुपङ्कपीठलुठितैर्यस्मिन् मुहुर्मूच्छितम् ।
तस्मिन् शुष्कसरस्यकालजलदेनागत्य तच्चेष्टितम्,
येनाकण्ठनिमग्नवन्यकरिणां यूथैः पयः पीयते ।। इति ।

यद्यपि अनेन कोऽपि ग्रन्थो निबद्धो नवेति त्वद्यावधि न निश्चितम्, परं यानि पद्यानि तन्नाम्ना सुभाषितग्रन्थेषु समुद्धृतानि तानि स्फुटमस्य काव्यबन्धप्रकर्षं सूचयन्ति । सुरुचिरः पदविन्यासः, प्रौढा कल्पना, गम्भीरश्च भावावेशः इति सर्वमेकपद एवास्य काव्यकलानैपुणीं प्रख्यापयति । तदत्र तन्निदर्शनमुखेन किञ्चिदत्र प्रस्तूयते । कस्यचिद्राज्ञो यशोराशिप्रसरमभिलक्ष्य प्राह :—

राजन् ! यशो हिममिषाच्छिशिरे यदासीत्,
भूमौ लसत्किमुत तद्बलिसद्म यातम् ।
तत्राप्यमादिव ततोऽद्य मधौ त्वदीयम्,
प्रोद्भिन्नमाशु धरणेः कुसुमच्छलेन ।।

अपि च :—

मेघाडम्बरमम्बरं यदि तदा निर्नष्टशोभा वयं,
नित्यं तीक्ष्णतरेण तेन दिवसे तत्राप्यहो बाधिताः।
स्वामी नः शशभृल्लयोदयहतो दुःखादतीवागता,
उद्याने नरदेव! सेवनपराः पुष्पच्छलात्तारकाः॥

पुनश्च :—

श्रीमन्नाथ तवानने भगवती वाणी नरीनृत्यते,
तद्दृष्ट्वा कमला समागतवती लोलेति बद्धा गुणैः।
कीर्त्तिश्चन्द्रकरीन्द्रदन्तकुसुमक्षीरोदनीरोपमा,
त्रासादम्बुनिधिं विलङ्घ्य भवतो नाद्यापि विश्राम्यति॥

किञ्च—

दिग्दन्तावलमण्डली विदलति स्वर्णाद्रिरुत्कम्पते,
क्षोणी क्षुभ्यति बिभ्यति प्रतिदिशं सर्वेऽपि रत्नाकराः।
लङ्कातङ्कमुपैति शेवधिपतिः शङ्कां परां गाहते,
दानाय त्वयि राजशेखरमणे! दर्पं समुद्बिभ्रति॥

कविरसौ राजशेखरस्य पितामह इति प्रागभिहितम्। राजशेखरस्य च समयः ख्रीस्तनवमदशमशतकयोर्वा पूर्वार्द्ध एव क्वचिन्निर्धार्यते तदनुरोधेन अकालजलदस्य समयेनाऽपि ततः पूर्वतनेन भवितव्यमिति पर्यवसितं भवति। अकालजलदोऽयं महाराष्ट्रदेशे 'महाराष्ट्रचूडामणिः' इति विशेषणेन प्रसेसिद्धचति। यायावराः क्षत्रियविशेषाः तद्वंश एवासौ लब्धजन्मा। यायावरीयोऽयं वंशः कवीनां प्रसवभूमित्वेन विश्रुतः, एष एव वंशः सुरानन्द-तरल-कविराजप्रभृतिभिः बहुभिः कवीश्वरैः स्वजन्मभिर्विभूषितः।

—०—

# कविराजो राजशेखरः

## परिचयः

राजशेखरोऽयं महाराष्ट्रदेशीयः। यायावरीयवंशावतंसः महाकवेरकालजलदस्य पौत्रः विद्वद्वरस्य दर्दकस्य च पुत्रः परमविदुषी शीलवती नाम्नी देवी चास्य जननी। कान्यकुब्जाधिपतेर्महेन्द्रपालस्य च सभापण्डितः। अस्य रचनात्वेन त्रीणि रूपकाणि प्रसिद्धानि। कर्पूरमञ्जरी, बालरामायणम्, बालचरिभारतमित्याख्यानि। राजशेखरः स्वयमात्मनः परिचयमित्थं ददाति :—

बभूव वल्मीकभवः पुरा कविः,
ततः प्रपेदे भुवि भर्तृमेण्ठताम्।
स्थितः पुनर्यो भवभूतिरेखया
स वर्त्तते सम्प्रति राजशेखरः॥

## राजशेखरस्य समयः

राज्ञो महेन्द्रपालस्य समयः क्रैस्त ८९३ तः ९०७ पर्यन्तं विभाव्यते। क्रैस्त-१००० देशीये विरचिते तिलकमञ्जरीसन्दर्भे राजशेखरस्य चर्चा समुपलभ्यते। अतोऽस्य समयः क्रैस्तदशमशताब्द्याः प्रथमचरणे कल्पयितुं शक्यते। उक्तग्रन्थत्रयव्यतिरिक्तमस्यैकमन्यदपि हरविलासाख्यं महाकाव्यं, भुवनकोषः, काव्यमीमांसा चेत्यस्य कृतित्वेन प्रसिद्धाः। अस्य काव्यप्रशंसायां क्षेमेन्द्रेणोक्तम्—

'शार्दूलक्रीडितैरेव प्रख्यातो न राजशेखरैः।
शिखरीव पुनर्वक्रैः सौल्लेखैरुच्चशेखरः॥" इति।

धनपालेनापि मुक्तकण्ठेनास्य प्रशस्तिरुट्टङ्किता—

समाधिगुणशालिन्यः प्रसन्न-परिपक्त्रिमाः।
यायावरकवेर्वाचो मुनीनामिव वृत्तयः॥

अस्य साहित्यधुरन्धरत्वं, कवित्वकलाप्रावीण्यं च सुविख्यातमासीत्। काव्यमीमांसायामनेन महाकवि-कविराजयोर्भेदं प्रतिपिपादयिषुणोक्तम्—

"योऽन्यतरप्रबन्धे प्रवीणः स महाकविः। यस्तु तत्र तत्र भाषाविशेषे, तेषु प्रबन्धेषु तस्मिन् तस्मिश्च रसे स्वतन्त्रः स कविराजः।" [काव्यमीमांसायाम्]

राजशेखरस्य काव्यं निरतिशयरुचिरं मनोहारि च। शङ्करवर्मणाऽस्य प्रशंसायामुल्लिखितम्—

पातुं श्रोत्ररसायनं रचयितुं वाचः सतां सम्मता,
व्युत्पत्तिं परमामवाप्तुमवधिं लब्धुं रसस्रोतसः।
भोक्तुं स्वादुफलञ्च जीविततरोर्यद्यस्ति ते कौतुकम्,
तद् भ्रातः ! शृणु राजशेखरकवेः सूक्तीः सुधास्यन्दिनीः ॥

तदस्य ताः सुधास्यन्दिनीः सूक्तीरपि रसिकाः कर्णपुटकाभ्यां किञ्चित् प्रपिबन्तु नाम।

केरलदेशं वर्णयन्नाह :—

पर्णं नागरखण्डमार्द्रसुभगं पूगीफलैलास्तथा,
कर्पूरस्य च तत्र कोऽपि चतुरस्ताम्बूलयोगक्रमः।
देशः केरल एष केलिसदनं देवस्य शृङ्गारिणः,
तद्दृष्ट्वा कुरु कोमलाङ्गि सफले द्राघीयसी लोचने ॥

गङ्गायमुनयोरन्तरालघटितं पाञ्चालदेशं प्रपञ्चयन्नाह :—

यत्रार्यो न तथानुरज्यति कविर्ग्रामीणगीर्गुम्फने,
शास्त्रीयासु च लौकिकीषु च यथा भव्यासु नव्योक्तिषु।
पञ्चालास्तव पश्चिमेन त इमे वामा गिरां भाजना-
स्तद्दृष्टेरतिथीभवन्तु यमुनां त्रिस्रोतसां चान्तरा ॥

कान्यकुब्जललनानां वेषभूषां प्रशंसति :—

यो मार्गः परिधानकर्मणि गिरां यः सूक्तिमुद्राक्रमो,
भङ्गी या कवरीचयेषु रचनं यद् भूषणालीषु च।
द्रष्टुं सुन्दरि ! कान्यकुब्जललनालोकैरिहान्यच्च यत्
शिक्षन्ते सकलासु दिक्षु तरसा तत्कौतुकानि स्त्रियः ॥

सज्जनानां बुद्धिवैशद्यं विवृणोति :—

उदन्वच्छिन्ना भूः स च पतिरपां योजनशतम्,
सदा पान्थः पूषा गगनपरिमाणं कथयति।
इति प्रायोभावा स्फुरदवधिमुद्रामुकुलिताः,
सतां प्रज्ञोन्मेषः पुनरयमसीमो विजयते ॥

दानिप्रशंसाऽपि च रः का रिणी :—

दातुर्वारिधिरस्य मूर्धनि तडिद् गाङ्गेयशृङ्गारिता,
वृक्षेभ्यः फलपुष्पदायिनि मधौ मत्तालिवृन्दस्तुतिः ।
भीतत्रातरि वृत्तिदातरि गिरौ पूजाङ्गरैश्चामरैः,
सत्कारोऽयमचेतनेष्वपि विधेः किं दातृषु ज्ञातृषु ॥

राजशेखरेण चौहानवंशीया अमरसुन्दरी नाम्नी क्षत्रियबाला परिणीता । सा न केवलं संस्कृतभाषाया अपितु प्राकृतभाषाया अपि परमपण्डिता आसीत् । राजशेखरेण काव्यमीमांसायामस्याः पाकविषये नामग्रहणमुल्लेखो विहितः —

'आग्रहपरिग्रहादपि पदस्थैर्यपर्यवसायस्तस्मात्पदानां परिवृत्तिवैमुख्यं पाक' इति वामनीयाः "इयमशक्तिर्न पुनः पाकः" इत्यवन्तिसुन्दरी । [काव्यमीमांसा]

राजशेखरः स्वयमपि बहुभाषाभिज्ञ आसीदिति तत्कृतवर्णनत एव व्यक्तीभवति :—

गिरः श्रव्या दिव्याः प्रकृतिमधुरा प्राकृतधुराः,
सुभव्योऽपभ्रंशः सरसवचनं भूतवचनम् ।
विभिन्नाः पन्थानः किमपि कमनीयाश्च त इमे,
निबद्धा यस्त्वेषां स खलु निखिलेऽस्मिन् कविवृषा ॥

अनेन षट् प्रबन्धा निबद्धा इति 'विद्धि नः षट् प्रबन्धा'निति बालरामायणपद्यनावगम्यते । राजशेखरस्य पद्यानि नितरां हृद्यानि भवन्ति सहृदयहृदयसंवेद्यानि च ।

यद्यपि केचिदाशेरते यत्केरलभूपतिरेवायं कविराजो राजशेखरः परन्तु तद्विनिगमनाविरहान्न श्रद्धार्हम् ।

राजशेखरकृतिषु 'काव्यमीमांसे'त्यलङ्कारग्रन्थः, 'हरविलासा'ख्यं महाकाव्यम् । कर्पूरमञ्जरी-विद्धशालभञ्जिका-बालरामायण-बालभारत-प्रचण्डपाण्डव इति नामधेयानि च चत्वारि नाटकानि । तत्र कर्पूरमञ्जरीतिनामकं चतुर्भिरङ्कैः निबद्धं प्राकृतभाषया ग्रथितं नाटकमतीव प्रसिद्धम् । संस्कृतसाहित्ये एकमेवेदं नाटकं प्राकृतभाषयालङ्कृतं विलसति । अत्र हि राज्ञश्चण्डपालस्य कुन्तलराजकुमार्याः कर्पूरमञ्जर्याश्च प्रणयगाथा गुम्फिता । यद्यपि कथावस्तु लघु, चरित्रचित्रणञ्चाविशदं तथाऽपि कतिपयैर्दृष्टिबिन्दुभिर्नाटकमिदं महत्त्वमावहति । प्रथमतस्तु नाटकमिदं प्राकृतभाषयाऽलङ्कृतं नाटकान्तरविसदृशम् । द्वितीयतः, प्रायः नाटकान्तरेषु

नान्द्यन्ते सूत्रधारः प्रविशति, परमत्र नान्द्यन्ते स्थापकः प्रविशन् श्लोकं पठति। तृतीयः, अस्य प्रस्तावनयैवं प्रतीयते यत्तस्मिन् काले स्त्रिय एव स्त्रीणामभिनयं नाटयन्ति स्म। चतुर्थोऽयं विशेषः यदत्र विष्कम्भकप्रवेशकयोर्वा कृते कुत्रापि स्थानमेव नास्ति। पञ्चमश्च विशेषः प्रत्येकस्याङ्कस्यान्ते जवनिकान्तर इति प्रयोगः सर्वप्रथममस्मिन्नेव नाटके उपक्रान्तः। नाटकान्तरविसदृशमत्र च विशिष्टनृत्यकलायाः प्रदर्शनमाह्लादकरम् संवृत्तम्। एवमेवास्य नाटकान्तराण्यतिरमणीयानि समभ्युपपन्नानि।

---

## इतरे नाट्यकाराः

पूर्वनिर्दिष्टान् नाटककारान् विहाय अन्येऽपि बहवो नाट्यकृतोऽभूवन्। तेषां विशदवर्णनमत्र कर्त्तुं ग्रन्थविस्तरभिया नालङ्कर्मीणो वयम् अतः संक्षेप एव साधीयान्, इति तेषु प्रसिद्धानां नाममात्रोल्लेखेनैवाधुना सन्तुष्यामः।

### कविप्रवरः क्षेमीश्वरः

नैषधानन्द-चण्डकौशिकयोः प्रणेता क्षेमीश्वरः राजशेखरस्य समकालीनः। अनयोरुभयोरपि आश्रयप्रदाता कन्नौजाधिपो महीपाल एव। तत्र नैषधानन्दनामकं नाटकं सप्तभिरङ्कैरलङ्कृतम्, यत्र नलदमयन्त्योः प्रसिद्धा गाथा समुपगुम्फिता। चण्डकौशिके च सत्यवादिनो राज्ञो हरिचन्द्रस्य कथोपनिबद्धा। अस्य समयः क्रैस्तनवमशतके विभाव्यते।

### कविराजो वत्सराजः

कविराजो वत्सराजोऽयं कालञ्जरनरेशस्य मन्त्रिपदमलञ्चकार। अस्य रचनात्वेन प्रसिद्धानि किरातार्जुनीय-व्यायोग-कर्पूरचरित-हास्यचूडामणि-रुक्मिणीहरण-त्रिपुरदाह-समुद्रमन्थननामानि षड् रूपकाणि। कविवरभासमतिरिच्य न केनापि कविना इयन्ति विविधविषयविभूषितानि नाटकानि विरचितानि।

वत्सराजस्य शैली सरला, पदविन्यासः प्रौढः प्रलम्बसमासरहितश्च। नाटकीयकला चैषु चमत्कारिणी परिपक्त्रिमा च विलसति। अस्य समयः क्रै० ११६३–१२०३।

### कविवरः शक्तिभद्रः

'आचार्यचूडामणि'नामकन्नाम नाटकं कविवरशक्तिभद्रविरचितं मद्रराजप्रान्ते क्रैस्ते १९२६ तमेऽब्दे मुद्रापितं वर्त्तते। मालावारजनपदे जनश्रुतिरियं

प्रचरति यत् शक्तिभद्रोऽयं श्रीशङ्कराचार्यस्य शिष्य आसीत्। अतः अस्य समयः नवमशताब्द्या आरम्भ एव निर्धार्यते।

शक्तिभद्रस्य शैली अतीव सरसा मधुरा भावगर्भिता चास्ति । दुर्गमे वने सुन्दरीवेशां शूर्पणखां विलोक्य लक्ष्मणः प्राह :—

क्वेदं वनं वनचरैरपि दुर्विगाहं
क्वेदं वधूः कुवलयच्छविचोरनेत्रा।
हेमारविन्दमकरन्दरसोपयोगां
कः श्रद्दधीत जलधौ जलहंसकन्याम् ॥

जयसिंहसूरिः (क्रै० १२३०)—हम्मीरमदमर्दनम् वीररसप्रधानं रूपकम्।

जगदीश्वरः (क्रै० १६००)—हास्यार्णवम् । हास्यरसप्रधानम् ।

रामभद्रदीक्षितः (क्रै० १७००)—जानकीपरिणयः ।

र० कृष्णमाचार्यः (क्रै० १८९२)—वासन्तिकस्वप्नम् ।

लक्ष्मणसूरिः (क्रै० १८९२)—दिल्लीसाम्राज्यम् ।

मूलशङ्करयाज्ञिकः—छत्रपतिसाम्राज्यम्, प्रतापविजयम्, संयोगितास्वयम्वरञ्चेत्याख्यम् नाटकत्रयम् इति ।

इति सर्वतन्त्रस्वतन्त्रैः पदवाक्यप्रमाणपारावारीणैः श्रीमदाचार्य-
द्विजेन्द्रनाथशास्त्रिसिद्धान्तशिरोमणिभिर्विरचिते संस्कृत-
साहित्यविमर्शाख्ये ग्रन्थे एकादशः परिच्छेदः ।

———

## द्वादशः परिच्छेदः

१--चम्पूसाहित्यम्। २--कथासाहित्यम्। ३--अलङ्कारशास्त्रम्। ४--सङ्गीतशास्त्रम्। ५--धर्मशास्त्रम्। ६--अर्थशास्त्रम्। ७--कामशास्त्रम्। ८--स्तोत्रसाहित्यम्। ९--उपसंहारः।

# चम्पूसाहित्यम्

१--कविवरो त्रिविक्रमभट्टः। २--अन्ये चम्पूकाव्यकाराः।

गीर्वाणगिरां वर्णनप्रकरणे चम्पू-वाङ्मयस्य विस्मरणं तु खल्वन्याय्यमेव, यतः संस्कृतवाङ्मये चम्पूसाहित्यमतीव प्रशस्तं पदमलङ्करोति। गद्यपद्ययोः सम्मिश्रणेन चम्पूर्निबध्यते। चम्पूकाव्ये हि गद्यपद्ययोः स एव सम्बन्धः, यः किल सङ्गीते गीतिवाद्ययोर्नाम। आह च कविराजो भोजः--

गद्यानुबन्धरसमिश्रित – पद्यसूक्तिः।
हृद्यापि वाद्यकलया कलितेव गीतिः॥ [रामायणचम्पूः]

चम्पूलक्षणमुपनिबध्नन् दर्पणकारः प्राह :--

'गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते।' यद्यपि वासवदत्ता-कादम्बरी-हर्षचरितादिषु गद्यसन्दर्भेष्वपि पद्यजातमुपलभ्यते तथाऽपि न तेषां चम्पू-प्रपञ्चे गणना। गद्यबन्धस्यैव तत्र बाहुल्यात्प्राधान्याच्च। चम्पू-प्रबन्धे च पुनरुभयोर्गद्य-पद्ययोः प्रायशः समानरूपेणैव सन्निवेशात् तत्त्वं समभ्युपपन्नं भवति। चम्पूकाव्येषु गद्यगुम्फितकथामेवानुप्राणयन्ति पद्यानि मनोरञ्जनार्थञ्च सन्निवेश्यन्ते। अतएव च तासां रामणीयकत्वं सहृदयलोकप्रियत्वञ्च सम्भवति। उक्तञ्च :--

उदात्तनायकोपेता गुणवद्वृत्तमुक्तका।
चम्पूश्च हारयष्टिश्च केन न क्रियते हृदि॥

तदेवं चम्पूरचनाया मनोरञ्जकत्वं सुतरां प्रव्यक्तम्। परन्तु नेयं चम्पू-काव्यप्रणालिः प्राचीनसंस्कृतसाहित्ये नयनगोचरीभवति। दशमशताब्द्याः प्राक् तु चम्पूकाव्यानां नामापि नानुश्रूयते स्म। सर्वतः प्राक् क्रैस्त ६०० तमशतकभवेन तत्रभवता दण्डिमहाभागेन स्वकीये काव्यादर्शे चम्पूलक्षणमुपन्यस्तम्। ततः पूर्वतन

एव स्याच्चम्पूप्रादुर्भाव इत्यनुमातुं न दुष्करम्। तदित्थं पर्यवसीयते यद् दशमशताब्द्याः पूर्वतनः चम्पूसाहित्यस्योदयः न लब्धावसरः। यद्यपि बौद्धजातकग्रन्थेषु गद्यपद्यमयप्रबन्धानां सद्भावोऽवलोक्यते परन्तु न तेषु चम्पूलक्षणानि कात्स्न्र्येन संघटन्ते।

## कविवरः त्रिविक्रमभट्टः

स एष चम्पूकाव्यस्य आद्यः प्रवर्त्तकस्तत्रभवान् त्रिविक्रमभट्टः। नलचम्पूनामा ग्रन्थोऽनेन सर्वप्रथमो विरचितः सप्तोच्छ्वासैर्निबद्धो नलदमयन्त्योः कथासंवलितः। केवलं नलदम्पत्योः स्वयंवरपर्यन्ता एव कथाऽत्र गुम्फिता। तेन ग्रन्थस्यास्यापूर्णत्वमेव ध्वनितं भवति। अत्र कवयितुः शब्दालङ्कारोट्टङ्कने यथा नैपुणी प्रतिभाति न तथालङ्कारे।

त्रिविक्रमभट्टोऽयं कविवरस्य श्रीधरात्मजस्य देवादित्यस्य पुत्रः शाण्डिल्यवंशावतंसः। यद्यपि बाल्यावस्थायां मन्दमतिः, तथाऽपि प्रौढावस्थायां सरस्वतीप्रदत्तवरप्रसादात् सुबन्धुवदतीव प्रगल्भः श्लेषरचनाप्रधानश्च कविः सञ्जातः। तथा चासौ स्वयमेवोदाजहार :--"भङ्गश्लेषकथाबन्धं दुष्करं कुर्वता मया" इति।

अस्य श्लेषकवित्वे च न कश्चन सन्देहावकाशः। कृतित्वेन चास्य 'नलचम्पूः' 'मदालसाचम्पू'श्चेति चम्पूद्वयमेव प्रसिद्धम्।

नलचम्पूरियं दमयन्ती--कथेत्याख्ययापि प्रख्याता। सप्तभिरुच्छ्वासैरुपनिबद्धेयं नलदमयन्त्योः कथा तयोः स्वयम्वरवर्णनान्तमेवोपलभ्यते। एतद्विषये प्रचरति दन्तकथैका, यदेकदा पितरि बहिर्गते जनकस्यास्याश्रयदात्रा राज्ञाऽसौ राजसभायामाहूतः केनचित् शास्त्रार्थधिया बहिर्देशादागतेन पण्डितप्रकाण्डेन सह शास्त्रार्थं विधातुम्। तदाऽसौ निरक्षरतया निरतिशयलज्जामापन्नः कुलदेवतां सरस्वतीमाराधयितुं साभिनिवेशं परमया भक्त्या प्रववृते। प्रसन्नया च तया वाग्देवतया दत्तवरो राजसभायां गत्वा तं पण्डितं पराजितवान्। वरश्चैष पितुरागमनपर्यवसायी। अतस्तदागमनपर्यन्तमेवानेन सप्तोच्छ्वासाः प्रणिबद्धाः, पितुरागमनसमकालमेव वराऽवसितिः सञ्जाता। इति हेतोरेव ग्रन्थोऽयं सप्तोच्छ्वासात्मक इति जनश्रुतिः। चम्पूकाव्यमिदमुद्दिश्य पञ्च टीका विलसन्ति। नूनं कवेरस्य रचना सरसा शब्दालङ्कारसमलङ्कृता रमणीयार्था चमत्कारपूर्णा च। तद्यथा--

प्रसन्नाः कान्तिहारिण्यो नानाश्लेषविलक्षणाः।
भवन्ति कस्यचित्पुण्यैर्मुखे वाचो गृहे स्त्रियः॥

अप्रगल्भाः पदन्यासे जननीरागहेतवः ।
सन्त्येके बहुलालापाः कवयो बालका इव ।।
किं कवेस्तस्य काव्येन किं काण्डेन धनुष्मता ।
परस्य हृदये लग्नं न घूर्णयति यच्छिरः ।।
ते वन्द्यास्ते महात्मानः तेषां लोके स्थिरं यशः ।
यैर्निबद्धानि काव्यानि ये वा काव्येषु कीर्त्तिताः ।।

रत्नान्यमूनि मकरालय मावमंस्थाः,
कल्लोलवेल्लितदृषत्परुषप्रहारैः ।
किं कौस्तुभेन विहितो भवतो न नाम
याच्ञाप्रसारितकरो पुरुषोत्तमोऽपि ।।

मदालसाचम्पूश्चास्यापरा कृतिः । चम्पूरियं कुवलयाश्वचरितनाम्नाप्याख्यायते । कथा चास्या मार्कण्डेयपुराणात् सङ्कलिता । नायकश्चात्र कुवलयाश्वो नाम नायिका च पुनर्मदालसेति ।

अस्मिन् काव्ये पद्यवद् गद्यमप्यनवद्यं हृद्यञ्च सम्पन्नम् । तद्यथा—"यस्याञ्च दिव्यदेवकुलालङ्कृता स्वर्गा इव मार्गाः, सततमपांसुवसना सागरा इव नागराः, समत्तवारणानि वनानीव भवनानि, सुरसेनान्विताः स्वर्गभूपा इव कूपाः, अधिकन्धरोद्देशमुद्भासन्तो हरा इव विहाराः ।" इति ।

गद्यरचनाधुरन्धरेण सुबन्धुना केवलमभङ्गश्लेषबन्ध एवानुगृहीतः किन्तु त्रिविक्रमेण सभङ्गश्लेषोऽप्युपलालितः । यद्यपि सभङ्गश्लेषानुबन्धने काव्यबन्धे प्रायशः काठिन्यमुज्जृम्भते "वाचः काठिन्यमायान्ति भङ्गश्लेषा विशेषतः" इति । तथापि भट्टत्रिविक्रमकाव्यबन्धे काठिन्यं न तादृग्विधं पदमाबध्नाति । इत्येवास्य कवेर्वैशिष्ट्यम् ।

भवन्ति फाल्गुने मासि वृक्षशाखा विपल्लवाः[1] ।
जायन्ते न तु लोकस्य कदापि च विपल्लवाः ।। इति ।।

भोजराजस्य सरस्वतीकण्ठाभरणे नलचम्पूकाव्यस्य पद्योपलम्भेनावगम्यते क्रैस्त १००० तमाब्दात्पूर्वतन एवास्य समय इति । एवमेव राष्ट्रकूटराज्ञस्तृतीयेन्द्रस्य क्रैस्त ९१५ तमाब्दघटितेन दृषल्लेखेनाप्यस्य नलचम्पूकाव्यस्य प्रणेतृत्वेन त्रिविक्रमभट्ट एवानुगृहीतः । अतोऽपि अस्य कालः क्रैस्तदशमशताब्द्या प्रथमचरणघटित एवोद्भाव्यत इति ।

---

१. विपल्लवा इत्यत्र विगत पल्लवाः, विपत्+लवा इति श्लेषः ।

## अन्ये चम्पूकाव्यकाराः

त्रिविक्रमभट्टव्यतिरिक्ता अन्येऽपि बह्वोऽद्भुताश्चम्पूग्रन्थकृतो विलसन्ति।

**सोमदेवसूरिः**—तत्र दशमशताब्दीसम्भवस्य सोमदेवसूरिकवेः यशस्तिलकचम्पूग्रन्थः लोकविश्रुतो जैनसिद्धान्तसंवलितः यशोधरनृपतेश्चरितचित्रणात्मकः।

**भोजराजः**—एकादशशताब्द्यां सम्भवस्यास्य कृतित्वेन प्रसिद्धा 'चम्पूरामायणा'ख्यं काव्यं सुप्रसिद्धम्।

**जीवगोस्वामी**—षोडशशताब्दीसञ्जातस्यास्य 'गोपालचम्प्वा'ख्यं काव्यमतिमधुरपदविन्याससंवलितम्।

**कविकर्णपूरः**—षोडशतमशतकसम्भवस्यास्य 'आनन्दवृन्दावन'चम्पूकाव्यं भगवतः श्रीकृष्णस्य ललितलीलावर्णनालङ्कृतमतिरमणीयम्।

**शेषकृष्णः**—१६ शतकलब्धजन्मनोऽस्य कृतित्वेनातिप्रसिद्धं 'पारिजातहरणचम्पू'नामकं काव्यमतिरोचिष्णु। स एष कौमुदीकारस्य दीक्षितस्य गुरुरासीत्।

**नीलकण्ठदीक्षितः**—ऋैस्त १६३७ तमाब्दे जातेनानेन 'नीलकण्ठा'-भिधेयं काव्यं, भगवतः शङ्करस्य कथाजातसम्भृतमतिनैपुण्येन प्रणीतम्।

**वेङ्कटाध्वरिः**—ऋैस्त १६४० तमाब्दलब्धजन्मनः कृतित्वेन प्रख्याता 'विश्वगुणादर्श'चम्पूः। अत्र हि भारतीयप्रसिद्धतीर्थानां नगराणाञ्च वर्णनमतिकवित्वपाटवेनोट्टङ्कितम्।

**सोड्ढलः**—कविरेष कायस्थकुलोत्पन्नः कोङ्कणप्रदेशस्य राज्ञो मुम्मणिराजस्य ऋैस्त १०६० तमभवस्य आश्रित आसीत्। अनेन 'अवन्तिसुन्दरीकथा'चम्पूनामकं काव्यं लालित्यमाधुर्यादिगुणगणैः सुगुम्फितम्, तच्चातीव प्रख्यातम्। अस्य रचनासु हर्षचरितस्य छटाः यत्र तत्र प्रतिबिम्बिता इवावलोक्यन्ते।

इदानीमेव तञ्जोरसंस्कृतग्रन्थागारे, राज्ञ्या तिरुमालम्बया प्रणीता 'वरदाम्बिका-परिणयचम्पूः' पाण्डुलिपिबद्धा समुपलब्धा। सेयं रचना खैस्त १५२९–१५४० तमाब्दयोरन्तराल एव सम्पन्नेति धीरमाकलयन्ति कालविदः।

इत्थं चम्पूकृतो बहवः कवयोऽभूवन् येषां ग्रन्थरत्नानां वर्णनं कर्त्तुं न पारयामो वयमत्र स्थानाऽभावात्। तेषु मुख्यतमानां सङ्कलनं केनाऽपि कविना निम्नाङ्कितैः पद्यैः प्रणिबद्धं समुल्लसति—

त्रिविक्रमश्च सोमश्च हरिचन्द्र[1]स्तथैव च ।
भोजश्च सोड्ढलश्चैव राज्ञी तिरुमलाह्वया ।
कर्णपूरकविर्जीव - गोस्वामी च तथाऽष्टमः ॥

नारायणस्तथा चासन् वेङ्कटाध्वरिसूरयः ।
शङ्करोऽपि च प्रख्याताः चम्पूकाव्यविधायकाः ॥ इति ।

---

१. हरिचन्द्रोऽयं क्रैस्तनवमशतकसम्भवः । तत्र नैतदिदन्तया निश्चितं यदेष 'धर्माभ्युदया'ख्यजैनमहाकाव्यस्य रचयिता हरिचन्द्र उत वा कश्चिदन्यः ? अनेन 'जीवन्धरचम्पूः' विरचिता । अस्याः कथावस्तु गणभद्रकविविरचितोत्तर-पुराणीयकथामाश्रित्य प्रणिबद्धा । शैली च वाक्पतिराजशैलीमेव बहुशोऽनुहरति ।

# कथा-साहित्यम्

१--बृहत्कथाकारो गुणाढ्यः। २--पञ्चतन्त्रम्। ३--विष्णुशर्मा कुत्रत्यः कश्चास्य समयः। ४--हितोपदेशः। ५--बृहत्कथामञ्जरी। ६--कथासरित्सागरः। ७--वेतालपञ्चविंशतिका।

संस्कृतसाहित्ये कथासाहित्यमपि अनितरसाधारणं स्थानमधिकरोति। कथामुखेनातिमनोरञ्जकतया विविधसदुपदेशप्रदानमेवास्य प्रमुखं प्रयोजनम्।

## बृहत्कथाकारो गुणाढ्यः

तदिदं कथासाहित्यं द्वेधा विभज्यते--उपदेशात्मकमनोरञ्जनात्मकभेदात्। उपदेशप्रदकथाप्रसङ्गः पशुपक्षिमुखेनोपक्रम्यते। मनोरञ्जककथाकलापस्तु पुनः मानवजीवनस्य प्रकल्पितगाथामुखेन किमपि मनोरञ्जकं चित्रणं पुरस्करोति। संस्कृतवाङ्मये तदेतदुभयमपि साहित्यमतीव विशदं वर्त्तते। मनोरञ्जकसाहित्यप्रसरे, लोकविश्रुतस्य प्राचीनतमस्य बृहत्कथाख्यस्य सन्दर्भस्य स्थानमतीव गौरवशालि। महाराजहालाभिधस्य नृपतेः राजकविनाद्भुतसाहित्यसम्पदाढ्येन तत्रभवता गुणाढ्येन महाकविना बृहत्कथेयं सर्वप्राथम्येन प्रणिबद्धा। इयं हि खलु 'बृहत्कथा' सौष्ठवेन इतरानखिलानपि कथासन्दर्भानतिशेते। अत्र हि नृपशिरोमणेरुदयनस्यात्मजस्य नरवाहनदत्तस्य, स्वमित्रगोमुखसाहाय्येन मदनमञ्जूषां परिणीय विद्याधराणामाधिपत्याधिगमसाफल्यप्राप्तिकथोपगुम्फिता। एतद्बृहत्कथान्तर्गताः कथाः समाश्रित्यैव भास-श्रीहर्ष-भट्टनारायणप्रभृतयो महाकवयोऽपि स्वस्वकथासन्दर्भान् जग्रन्थुः।

सैषा बृहत्कथाकीर्त्तिततिः भारतीयसागरसीमानमुल्ललङ्घ। प्रायशः सर्वैरेव कविभिः प्रमुक्तकण्ठेनास्याः प्रशंसनमारचितम्।

भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम्। [काव्यादर्शे]
धनुषेव गुणाढ्येन निःशेषो रञ्जितो जनः। [नलचम्पू]

आर्यासप्तशत्यामपि :--

अतिदीर्घजीविदोषात् व्यासेन यशोऽपहारितं हन्त।
कैर्नोच्येत गुणाढ्यः स एव जन्मान्तरापन्नः॥

एवमेव महाकविबाणेनाऽपि मुक्तकण्ठतोऽस्याः प्रशंसा कृता :—

समुद्दीपितकन्दर्पा कृतगौरीप्रसाधना ।
हरलीलेव नो कस्य विस्मयाय बृहत्कथा ॥

सेयं बृहत्कथा मूलतः पैशाचीभाषया निबद्धा। पैशाचीभाषेयं प्राकृतभाषास्वन्यतमा भाषा । यस्याः परिचयः प्राकृतव्याकरणग्रन्थेषु प्रस्फुटं प्रकटीभवति । सा च मूलबृहत्कथाऽधुना नोपलभ्यत इति कस्य सचेतसो न विषादजनकम् ? अधुना तु केवलं बृहत्कथायाः त्रयः संस्कृतानुवादाः समुपलभ्यन्ते । प्रथमस्तावन्नैपालराज्यनिवासिना अष्टमनवमशतकयोरन्तरालसम्भवेन कविवरबुद्धस्वामिना विरचितः बृहत्कथाश्लोकसंग्रहाख्यो विशदसन्दर्भः ।

द्वितीयः, क्षेमेन्द्रविरचितबृहत्कथामञ्जरीसमाख्यः ७५०० पञ्चसप्ततिसहस्रमितैः श्लोकैः संग्रथितः सुविश्रुतो ग्रन्थः। तृतीयश्च पुनः 'कथासरित्सागरः' कविवरसोमदेवविरचितः। त इमे सर्वेऽपि सन्दर्भा बहुशः गुणाढ्यीयबृहत्कथामुपजीव्यैव कवीन्द्रैः प्रावर्त्तिषत स्वतन्त्रानुवादरूपेण मूलकथांशमव्यभिचरन्तः। तथा हि प्राह सोमदेवः कथासरित्सागरे :—

यथामूलं तथैवैतन्न मनागप्यतिक्रमः ।
ग्रन्थविस्तारसंक्षेपमात्रं भाषा च भिद्यते ॥

औचित्यान्वयरक्षा च यथाशक्ति विधीयते ।
कथारसाविघातेन काव्यांशस्य योजना ॥

वैदग्ध्यख्यातिलोभाय मम नैवायमुद्यमः ।
किन्तु नानाकथाजालस्मृतिसाङ्कर्यसिद्धये ॥

गुणाढ्यस्य काव्यकलासौष्ठवं सर्वैरेव विशेषज्ञैर्जेगीयमानं विलसति । कविराजो जगद्धरः स्वकीयवासवदत्ता-टीकोपक्रमे समुल्लिखति :—

तेन किल (गुणाढ्येन) भगवतो भवानीपतेः मुखकमलाद् उपश्रुत्य बृहत्कथा निबद्धेति। बृहत्कथेयं, गद्यबद्धा पद्यबद्धा वेत्यत्र मतानि भिद्यन्ते। काश्मीरकेषु इयं पद्यात्मिकेति प्रसिद्धिः दण्डिविरचितकाव्यादर्शावलोकेनावबुध्यते यदियं पद्यात्मिका। मन्यामहेऽन्यकथासन्दर्भवत् बृहत्कथापि गद्यपद्योभयात्मिका सम्भवेत्।

गुणाढ्यस्य कालः स एव यः शालिवाहनस्य। शालिवाहनस्य समयश्च क्रैस्ताष्टसप्तति (७८) वत्सरान्निकषैव प्रतिभाति। स एवास्यापि समयः इति कालविद आचक्षते। यद्यप्येषा कथालेखनसरणिरतिप्राचीना। वैदिकसाहित्ये, वेदेषु ब्राह्मणेषु आरण्यकेषु उपनिषत्सु चाऽपि दृष्टपूर्वा, तथापि बृहत्कथासन्दर्भस्य

कथांशप्राधान्यादेव अस्या एतत्सरणिप्रणयनोपज्ञता गुणाढ्यमेव संश्लिष्यति, इत्यत्र न सन्देहावसरः। एवमन्येऽपि हरिचरितचिन्तामणिप्रभृतयः कथासन्दर्भा व्यराजन्त पुरा। परन्तु सम्प्रति ते सर्वङ्कषस्य करालकालस्य दुरभिगमगहनोदरदर्यां क्वचिन्निलीना इति नूनं विषीदति हृदयम्।

बृहत्कथामतिरिच्य, कविवरशिवदासविरचितो 'वेतालपञ्चविंशतिका'-ख्योऽद्भुतकथासंग्रहो ग्रन्थः। अत्र हि पञ्चविंशतिकथाः सङ्गृहीताः। एवमेव 'सिंहासनद्वात्रिंशिका', 'द्वात्रिंशत्पुत्तलिका' वेति नाम्ना प्रसिद्धोऽन्यो गाथाग्रन्थः। इति संक्षेपः।

## पञ्चतन्त्रम्

अस्मिन् कथासाहित्ये यदत्यन्तप्रख्यातं लोकप्रियञ्च तत् पञ्चतन्त्रं नाम निरतिशयदेदीप्यमानं सन्दर्भरत्नम्।

अस्य तुलनां सर्वस्मिन् विश्वसाहित्ये नाद्यापि बिभर्त्ति कश्चनान्यो ग्रन्थः। चत्वारिंशद्भाषासु अस्यानुवादः नूनं प्रख्यापयति खल्वस्य अनितरसाधारणलोकप्रियत्वमद्वितीयत्वञ्च। सन्दर्भेऽस्मिन् सुमनोज्ञकथाकुसुमस्तबकानामन्तराऽन्तरा च कथातत्त्वसंपोषकाणामनवद्यपद्यरत्नानां सन्निवेश एव स्वर्णे सौरभाधानमादधानः लोकसाधारणस्य हृदयङ्गमत्वे हेतुत्वेनोन्नेयः।

सर्वप्रथममस्यानुवादः पहलवीभाषायां खुसरो नौशेरवानाम्ना महीपेन क्रैस्ते ५७० मितेऽब्दे प्रवर्त्तितः। तदनु सीरिभाषायां 'कलिलग दमनग' नाम्ना, ततश्च अरबीभाषायां ग्रन्थोऽयमनूदितो गम्यते। अनेन कैश्चिदेतदप्यनुमीयते यत्पुरा पञ्चतन्त्रमिदं करटकदमनकनाम्नैव प्रथितं भवेत्। यतः करटकदमनकाभिधानयोः द्वयोः शृगालयोः कथानकमेवास्य सन्दर्भस्य शृङ्गारभूतत्वेन विलसति।

पञ्चतन्त्रस्य रचयिता विष्णुशर्मा नाम ब्राह्मणः सकलशास्त्रनिष्णातः विशेषेण नीतिशास्त्रपारङ्गतः कौटलीयार्थशास्त्रस्य वात्सायनादिकामशास्त्रस्य च तलावगाही विद्वान्।

एतदनुश्रूयते यद् दक्षिणापथे महिलारोप्यनाम्न्यां राजधान्यां कश्चनामरकीर्त्तिनामा नृपतिः स्वराजकुमारान् देववाण्यां राजनीतौ च स्वल्पीयसा समयेन निपुणान् विधातुमेनं परमविद्वांसं विष्णुशर्माणं न्ययुङक्त। सोऽपि कथामुखेन पञ्चतन्त्रात्मकेनानेन सन्दर्भेण सुनिपुणमध्याप्य तान् नीतिपारङ्गतान् चकार। आससाद च परां प्रतिष्ठां राजकुले यथा च पञ्चतन्त्रकथारम्भमुखेनावबुध्यते :—

मनवे वाचस्पतये शुक्राय पराशराय ससुताय।
चाणक्याय च विदुषे नमोऽस्तु नयशास्त्रकर्त्तृभ्यः॥

सकलार्थशास्त्रसारं जगति समालोक्य विष्णुशर्मेदम् ।
तन्त्रैः पञ्चभिरेतच्चकार सुमनोहरं शास्त्रम् ॥

एतेन किल विष्णुशर्मचाणक्ययोरेकत्वप्रतिपादयतां मतमपि निराकृतो वेदितव्यः ।

पञ्चतन्त्रस्य भाषा निरतिशयप्राञ्जला वाक्यविन्यासः सरलः सरसश्च । कथामुखेन सर्वमपि लोकव्यवहारं सदाचारपद्धतिं नीतिपाटवञ्चातीव हृदयग्राहिण्या वाण्या समुपदिदेश । कथानुरूपाणि तत्तत्त्वसंपोषकाणि सुरुचिराणि पद्यान्यवचित्य लोकशास्त्रसारञ्च निस्सार्य सागरं चषक इवादधानोऽसौ विप्रकुलभूषणः कस्य वा विदुषश्चेतो न चमत्करोति ।

स्वामिना सेवका स्नेहेन रक्षणीया इत्याचिख्यासुः प्राह :—

शिरसा विधृता नित्यं स्नेहेन परिपालिताः ।
केशा अपि विरज्यन्ते निःस्नेहाः किन्न सेवकाः ॥

वस्तुतः पञ्चतन्त्रे सर्वेऽपि ते ते लोकव्यवहृतिङ्गता विषयाः सुकुमारधियां बालानामपि सौकर्येणावबोधनाय कथामुखेन सन्निवेशिताः । कथापात्रत्वेन प्रायः पशुपक्षिण एवोपात्ताः । तेऽपि मनुष्यवाचा वदन्ति व्यवहरन्ति च परस्परं मनुष्यवदेव । प्रीति-कलह-सन्धि-विग्रह-यान-साम-दान-दण्ड-भेदादींश्चानुतिष्ठन्ति तथैव । मन्यामहे पञ्चतन्त्राध्येतारो न कदापि धूर्त्तपाटच्चराणां प्रवञ्चकानां कपटपाशे निपतिष्यन्ति इति प्रव्यक्तम् ।

तन्त्रपञ्चकापरनामधेयं पञ्चतन्त्रमिदं मित्रभेद-मित्रलाभ-सन्धिविग्रह-लब्धप्रणाश-अपरीक्षितकारकेति पञ्चभिः प्रकरणैरुपनिबद्धं निखिलेतरकथासन्दर्भानतिशेते इत्यत्र न विदुषां वैमत्यम् ।

## विष्णुशर्मा कुत्रत्यः कश्चास्य समयः

विष्णुशर्माऽयं कुत्रत्यः कतमञ्च जनपदमलञ्चकार जनुषा, कदा वेममद्भुतं प्रबन्धं न्यभान्त्सीदिति नेदन्तया निश्चेतुं शक्यते । तथापि गवेषणया पाश्चात्यविदुषा हर्टेलमहाभागेन पञ्चतन्त्रस्य रचना, काश्मीरेषु क्रैस्तपूर्वे द्वितीयशतके सम्पन्नेति निर्धारितम् यतः पहलवीभाषायामस्यानुवादः क्रैस्त ५७० मिताब्दात्पूर्वमेव सम्भाव्यते । ततः कतिपयवर्षपूर्वमेवास्य रचना सम्भवेदित्यनुमातुं न खलु दुष्करम् । परन्तु कीथमहोदयस्य मतमतो भिद्यते । स क्रैस्त २०० शतकतः पूर्वतनोऽस्य निर्माणकाल इति व्यवस्थापयति । वस्तुतो विषयोऽयं भूयोऽपि

गवेषणामपेक्षते। यदि भासकालिदासयोः समयः क्रैस्तपूर्वप्रथमा शताब्दी निश्चीयते तर्हि विष्णुशर्मणोऽपि समयः क्रैस्तद्वितीयशताब्दीति निर्णये न कोऽपि प्रत्यूहः। एष एव पञ्चतन्त्र[1] निर्माणकालः।

## हितोपदेशः

नीतिकथासन्दर्भेषु पञ्चतन्त्रादर्वाक्कालभवो हितोपदेशो नामातिलोकप्रियो ग्रन्थः। ग्रन्थोऽयं श्रीमन्नारायणपण्डितेन प्रणीतः। नारायणपण्डितोऽयं बङ्गाधिपतेर्महाराजधवलचन्द्रसेनस्य लब्धप्रतिष्ठः राजपण्डित आसीत्। हितोपदेशरचनाकालः क्रैस्तचतुर्दशशतकान्तर एव क्वचिन्निर्धार्यते कालविद्भिः। अस्य रचना च भूयसा पञ्चतन्त्रमाश्रित्यैव सम्पन्ना। तथा प्रस्तावनायाम्—'पञ्चतन्त्रात्तथाऽन्यस्माद् ग्रन्थादाकृष्य लिख्यते।' ग्रन्थोऽयं त्रिचत्वारिंशत्कथाभिरुपनिबद्धः। तत्र पञ्चविंशतिकथास्तु प्रव्यक्तं पञ्चतन्त्रादेव सङ्कलिताः। ग्रन्थरत्नमिदं मित्रलाभ–सुहृद्भेद-विग्रह-सन्धिभेदाच्चतुर्भिः प्रकरणैरलङ्कृतं गद्यबहुलञ्च। पञ्चतन्त्रापेक्षयाऽत्र पद्यानां बाहुल्यम्। भाषाशैली चापि पञ्चतन्त्रीयामेव शैलीमनुहरति।

हितोपदेशस्य पाण्डुलिपिः क्रैस्त १३७३ तमेऽब्दे हस्तङ्गता। अतो नैवैतदनुमातुं दुश्शकं यदस्य रचना चतुर्दशशताब्द्याः पूर्वमेव समपद्यत।

अस्मिन् हि हितोपदेशे काश्चन कथाः शुकसप्तत्याः सङ्गृहीताः, काश्चन वेतालपञ्चविंशतिकातः। नीतिप्रधानाः कथास्तु कामन्दकीयं नीतिशास्त्रमाश्रित्य प्रवृत्ताः। हितोपदेशस्योद्देश्यं प्रणेता स्वयमेवोद्भावयति :—

श्रुतो हितोपदेशोऽयं पाटवं संस्कृतोक्तिषु।
वाचां सर्वत्र वैचित्र्यं नीतिविद्यां ददाति च॥

यावत्स्वर्णाचलोऽयं दवदहनसमो यस्य यावत्स्फुलिङ्गः।
तावन्नारायणेन प्रचरतु रचितः संग्रहोऽयं कथानाम्॥

हितोपदेशस्य लेखनपद्धतिरतीव सरला बालैरपि सुखेन बोद्धुं शक्या। तथाहि 'बिडाली-श्येनयोः'

---

१. कालक्रमेण पञ्चतन्त्रस्यानुवादा बहवो जाताः। अरबीभाषायामस्य पद्यानुवादः सहलबिन नवबख्तनाम्ना विदुषा कृतः। पुरस्काररूपेण च स्वर्णमुद्राणां सहस्रमवाप्तं तेन। तदनु किलानुक्रमेणास्य सर्वत्र प्रसृत्वरां कीर्तिमाश्रित्यास्य लेटिन-ग्रीक-जर्मन-फ्रेंच-स्पेनिशाङ्ग्लादिभाषास्वपि खल्वस्यानुवादाः समपद्यन्त।

"अस्ति, कस्मिंश्चिज्जीर्णतरुस्कन्धकोटरे कोऽपि महान् शीर्णनखरो जराविगलितनयनो हिंस्रः पक्षी प्रतिवसतिस्म। अथ तत्रस्था वायसास्तज्जीवनाय स्वसंगृहीतान्नात्तस्मै किञ्चिद्ददुः। सोऽपि च तेषु पक्षिषु भक्ष्यान्वेषणार्थमुपक्रान्तेषु तेषां शावकान्नभिरक्षन्नतिष्ठत्। अथैकस्मिन् दिने दीर्घकर्णा नाम बिडाली वायसशावकान् भक्षयितुं तत्र प्राप्ता। तां विलोक्य त उच्चैरार्त्तरवं चक्रुः। अथ श्येनस्तं श्रुत्वाऽपृच्छत् 'कस्त्वं' भो इति। बिडाल्याहमिति दीर्घकर्णया प्रत्युक्ते, "दूरेऽपसर नोचेत्त्वां घातयामि" इति। सा मैवम्। नाहं सम्प्रति मांसाशिनी।. . . सर्वे वनचरा मयि स्निह्यन्ति। तदिह वासार्थं मामनुज्ञां दातुमर्हति भवान्। यतो हि भवान् वयोवृद्धो ज्ञानवाँश्च। तस्मान्मामनल्पं शिक्षयितुं शक्ष्यति इति। एवमभिष्टुतः स वृद्धश्येनः तस्यास्तत्रावस्थानमनुमेने बिडाली च सर्वानपि तान् काकशावकानेकैकशो भक्षयाञ्चकार।" इति कीदृशी मनोहारिणी लेखसरणिः।

## बृहत्कथामञ्जरी

इयं किल बृहत्कथामञ्जरी, गुणाढ्यकृतबृहत्कथायाः संक्षेपः क्षेमेन्द्रकविना विरचितः, ७५०० पद्यैर्गुम्फितः। अस्या रचना क्रैस्ते १०६३ मितेऽब्दे सम्भाव्यते। मञ्जरीयमष्टादशाध्यायैरलङ्कृता। तत्र कथापीठाख्ये प्रथमेऽध्याये गुणाढ्यकृतबृहत्कथाया आविर्भावकथा प्रपञ्चिता। द्वितीये तृतीये च उदयनस्य चरितं चित्रितम्। चतुर्थे च नरवाहनदस्य जीवनकथामुपन्यस्य, तदवशिष्टे तस्य मदनमञ्जुकाख्याया नायिकाया सम्बन्धानुबन्धि विद्याधराणामाधिपत्यावाप्तिविवरणं प्रतिबिम्बितम्। कथायाः शैली च क्षेमेन्द्ररचितां रामायणमञ्जरीं भारतमञ्जरीञ्चानुहरति। पदविन्यासप्रौढिमा, भावावेशविशेषश्च कवेः सुतरां सहृदयसंवेद्यतया निरतिशयप्राशस्त्यमवगाहते। क्षेमेन्द्रस्य रचनाचातुरी कस्य वा मनस्विनो मनोमोदं नातनुते। गाथासाहित्यनिर्माणे न खलु कोऽपि गद्यपद्ययोरनुबन्धः। कविरत्र यदृच्छया गद्येन पद्येन वा उभाभ्यां वा रचयितुं स्वतन्त्रः इत्यवसेयम्।

वस्तुतः इमे कथासन्दर्भा आपाततो बालकथारूपा एव प्रतीयन्ते। परन्तु अन्तः प्रविश्य सूक्ष्मदृशा निरीक्ष्यमाणा अमी संसारस्य निगूढतमानि रहस्यानि जटिलतमानि ग्रन्थिलानि तत्त्वानि सरलीकर्त्तुं सौकर्येण प्रभविष्णवो रोचिष्णवश्च इत्यत्र को नाम वैमत्यं भजेत। इमा गाथाः सुपठिताः कूटनीतिज्ञानामपि चक्षूंषि विस्फारयन्ति, वितरन्ति च समकालमेव संस्कृतभाषापाटवम्, विदलयन्ति व्यामोहान्धकारम्, समुन्मीलयन्ति प्रज्ञानयनानि, विकासयन्ति खलु व्यवहारबुद्धिकलिकाम्, वितरन्ति च वैचक्षण्यं वैलक्षण्येन इति।

तदेवं गाथासाहित्यमेतत्संसारस्य निरतिशयमुपकरोति।

# कथासरित्सागरः

कथासरित्सागराख्योऽयं सन्दर्भः कैस्त १०६३ तमाब्दतः १०८१ तमाब्दयोरन्तरालकालनिर्मितः सम्भाव्यते। एष एव कालः किञ्चिदन्तरेण क्षेमेन्द्रविरचिताया बृहत्कथामञ्जर्या अपि अनुमीयते। अत्रैका कथा प्रचलति यत्काश्मीराधिपस्य श्री अनन्ताभिधेयस्य राज्ञः महिष्याः सूर्यमतीनाम्न्या मनो विनोदयितुमेव अस्या मञ्जुलकथायाः काश्मीरकेण लोकविश्रुतकीर्त्तिना सोमदेवपण्डितेन रचना प्रपञ्चिता। अस्य रचनायाः शैली प्रसादगुणालङ्कृता विशदा च। निदर्शनमत्र निम्नाङ्कितं पद्यमेव :--

परार्थफलजन्मानो न स्युर्मार्गद्रुमा इव।
तापच्छिदो महान्तश्चेज्जीर्णारण्यं जगद् भवेत्॥

बाहुल्येनानुष्टुप्छन्दोबद्धान्येव पद्यानि विलसन्ति। अल्पीयांसि चेतरच्छन्दोमयानि। कथासंग्रहोऽत्रातीव रोचिष्णुर्हृदयावर्जकश्च सम्पन्नः।

# वेतालपञ्चविंशतिका

इमाः पञ्चविंशतिः कथा वेतालेन त्रिविक्रमसेननृपाय निवेदिताः। सर्वा अपि ताः बृहत्कथामञ्जरीतः कथासरित्सागरतो वा सङ्कलिता विभाव्यन्ते।

*'शुकसप्ततिः'* इति नाम्ना प्रसिद्धोऽपि एकोऽन्यः कथासन्दर्भः। सर्वाऽपि एता उपदेशपराः सन्मार्गप्रदर्शिकाश्च।

अन्ये अपि बहवः कथाप्रबन्धाः श्रूयन्ते परन्तु न ते किमपि वर्णनार्हं महत्त्वमाविष्कुर्वन्तीति, नात्रोपवर्ण्यन्ते। इति संक्षेपः॥

------

# अथ अलङ्कारशास्त्रम्

१--कोऽयमलङ्कारो नाम ? २--अलङ्कारशास्त्रप्रणेतारः। ३--अलङ्कारशास्त्रस्य सम्प्रदायाः। ४--रससम्प्रदायः। ५--अलङ्कारसम्प्रदायः। ६--भामहस्य कालः। ७--रीतिसम्प्रदायः। ८--वक्रोक्तिसम्प्रदायः। ९--ध्वनिसम्प्रदायः। १०--औचित्यसम्प्रदायः।

संस्कृतवाङ्मयस्य वैशद्यमियत्तया परिछेत्तुमतीव दुष्करम्। अस्मिन् लघुतरे सन्दर्भे तु खलु तदतिशयं दुष्करमित्यत्र नाणीयानपि सन्देहः। विगतेषु परिच्छेदेषु यदुट्टङ्कितं तदतिरिक्तं भूयस्तरमन्यदपि साहित्यमवशिष्यते, मुद्रितममुद्रितं लिपिबद्धं वा प्राप्तमप्राप्तञ्चेति। येषामस्तित्वं केवलं यत्र-तत्रोपलब्धेषु ग्रन्थेषु उद्धरणादिना संस्मरणेनैवावगम्यते। तदेतादृशस्य महतो महामहिमशालिनो वाङमयस्य कात्स्र्न्येन वर्णनं न सुकरं ग्रन्थभूयस्त्वाद्यनेकप्रत्यूहव्यूहकारणवशादिति चेतश्चेखिद्यतेतरां तथाऽपि स्थितिवशंवदतया तादृशस्यापि साहित्यस्यैर्तहि किञ्चिदतिसमासेन स्थालीपुलाकन्यायेनात्र वर्णनमातन्यते। तत्र तावदलङ्कारशास्त्रम् :--

## कोऽयमलङ्कारो नाम ?

संस्कृतसाहित्यप्रपञ्चे अलङ्कारशास्त्रं शब्दार्थशोभाधायकत्वात्किमपि कमनीयं पदमलङ्करोति। अलङ्क्रियतेऽनेनेति करणसाधनोऽयं शब्दः शब्दार्थालङ्कारमभिधत्ते। साहित्यशास्त्राभिधानोऽलङ्कारशब्दस्तु तावद् भावसाधनः। अलङ्करणमलङ्कार इति। उक्तञ्च :--

शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः।
रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत् ॥

अतएव सौन्दर्यमलङ्कार इति वामनेन लक्षितम्। स चैष खल्वलङ्कारो दोषहानाद् गुणाधानाच्च यशःकामुकस्य कवेरतिशयसम्पाद्यत्वेन विवक्षितः। तस्मात्काव्योत्कर्षाभिलाषुकेण कविना दोषा यत्नतो हातव्या गुणाश्च पुनराधातव्या भूयसाऽऽयासेन। तदानीमेव काव्यं चारु सत् प्रीतिजनकं कीर्त्तिकरञ्च सम्पद्यते, नान्यथेति।

तदिदानीमलङ्कारविषये किञ्चिदिव विविच्यते--काव्यप्रपञ्चे अलङ्कार

एव प्रधानमिति प्राचां मतम् । 'काव्यं ग्राह्यमलङ्कारात्' । 'सौन्दर्यमलङ्कारः'—[काव्यालङ्कारसूत्रवृत्तिः] अतोऽलङ्कारस्यैव काव्ये सौन्दर्याधायकत्वमङ्गीकृतं तज्ज्ञैः । उक्तञ्चाग्निपुराणे 'अर्थालङ्काररहिता विधवेव सरस्वती' इति । तदत्रालङ्काराणां प्राधान्येन शासनात्, 'प्राधान्येन व्यपदेशा भवन्ती'ति न्यायात् एतद् 'अलङ्कारशास्त्र'मुच्यते । अलङ्कृतिरलङ्कार इति भावव्युत्पन्नोऽयं शब्दः । स चैष खल्वलङ्कारो दोषहानाद् गुणाधानाच्चैव कवीनां संधाद्यत्वेन प्रपञ्चितः प्रतिपत्तव्यः । इत्यस्मादेव हेतोः काव्यस्योत्कर्षापकर्षौ अलङ्कारप्रपञ्चमपेक्ष्यैव पर्यवसितौ वेदितव्यौ इति ।

तदिदमलङ्कारशास्त्रं केन कदा चाविष्कृतम् इति यद्यपि न सुशकमिदन्तया निर्णेतुम्, तथापीदं सम्भाव्यते, यद्वेदेषु[1] बीजरूपेण प्रथममुपदिष्टमिदमलङ्कारतत्त्वं, पश्चात् पुराणेषु[2] विशदतया प्रपञ्चितम्, तदनु दण्डिभामहादिभिः[3] समीचीनतया निरूपितम् ? उक्तञ्च अग्निपुराणे हि :—

'स्यादावृत्तिरनुप्रासो वर्णानां पदवाक्ययोः ।'

इत्यादि । अनुप्रासादयः शब्दालङ्काराः :—

अलङ्करणमर्थानामलङ्कार इष्यते ।
तं विना शब्दसौन्दर्यमपि नास्ति मनोहरम् ॥
'अर्थालङ्काररहिता विधवेव सरस्वती ।' इत्युपक्रम्य
उपमा नाम सा यस्यामुपमानोपमेययोः ।
सत्ता चान्तरसामान्ययोगित्वेऽपि विवक्षिता ॥
किञ्चिदादाय सारूप्यं लोकयात्रा प्रवर्त्तते ॥

इत्यादिना उपमादयोऽर्थालङ्काराश्चोपलक्षिताः । इत्थमस्यालङ्कारशास्त्रस्याग्निपुराणे मूलमुपलभ्यते । अत्र हि न केवलं अलङ्काराणां वर्णनमपि तु काव्यलक्षणपुरस्सरं विभावादिभेदा रीतयश्चापि सम्यक्तया प्रपञ्चिताः ।

## अलङ्कारशास्त्रप्रणेतारः

अलङ्कारशास्त्रप्रणेतारः दण्डि–भामह–भट्टोद्भट–रुद्रट-भट्टनायक-वामन-

---

१. 'वेदे अलङ्कारनिदर्शनम्' इति वेदप्रकरणे प्रागुपदर्शितम् ।

२. अग्निपुराणस्य ३७३, ३४४ अध्यायौ ३३७, ३३९, ३४० अध्यायाश्चाप्यत्रानुसन्धेयाः ।

३. दण्डि-भामह-भट्टोद्भट-रुद्रट-वामनान्ताः प्राञ्चोऽलङ्कारप्रबन्धकर्त्तारः सुप्रसिद्धाः ।

मुकुल-प्रतीहारेन्दुराज-आनन्दवर्द्धनाचार्य-महिमभट्ट-वक्रोक्तिकार-हृदयदर्पणकार-अभिनवगुप्त-शौद्धौदनि-वाग्भट-रुय्यक-भोजराज-मम्मट-हेमचन्द्र-केशवमिश्र-पीयूषवर्ष-विद्यानाथ-विश्वनाथ-गोविन्दठक्कुर - विद्यानाथ - अप्पयदीक्षित-जगन्नाथ-विद्याभूषण-विश्वेश्वरपण्डित-अच्युतरायप्रभृतयः प्रायश एकत्रिंशत्तु नितरां प्रसिद्धाः।

तत्र दण्डी--दण्डी कविः[1] कस्मिन् काले देशे वा समुत्पन्न इति तु तत्कृत-काव्यादर्शाख्यालङ्कारग्रन्थे वैदर्भमार्गस्य प्रशंसनेन, तदनुगुणालङ्कारोदाहरण-प्रदर्शनेन चायं विदर्भदेशजो दाक्षिणात्य इत्यनुमीयते।

भामहस्तु काश्मीरदेशीयः अतिप्राचीनतरः। अतएव विद्यानाथेनोक्तम् :--

पूर्वेभ्यो भामहादिभ्यः सादरं विहिताञ्जलिः।
वक्ष्ये सम्यगलङ्कारशास्त्रसर्वस्वसंग्रहम्॥

एवमलङ्कारसर्वस्वे रुय्यकेणापि :--

'भामहोद्भटप्रभृतयश्चिरन्तनालङ्कारकाराः।' इति

इत्थं भामहस्य प्राचीनतरत्वं बहुभिरङ्गीकृतमवधार्यते। अलङ्कारचार्येषु प्रथमत्वेन विभावितो नानादर्शननिष्णात उद्भटवैयाकरणः रक्रिलगोमिसूनुः[3] भामह[3] एव।

*भट्टोद्भटः*--एष खलु उद्भट-उद्भटभट्ट-उद्भटाचार्य इति नामभिरपि स्मर्यते। अयमपि काश्मीरभवः। राज्ञो जयापीडस्य सभापतिरासीदिति राजतरङ्गिण्या अवलोकनेन ज्ञायते। अलङ्कारसारसंग्रहाख्यमलङ्कारप्रबन्धञ्चासौ निबबन्ध। अस्य प्रबन्धस्य प्रतीहारेन्दुराजविरचिता वृत्तिस्तु अद्यापि लब्धप्रचारा उपलभ्यते। प्राङ्निर्दिष्टकाश्मीरकजयापीडस्य राज्ञः शासनकालः ख्रैस्त ७७९ संवत्सरमारभ्य ८१३ संवत्सरपर्यन्तः इति राजतरङ्गिणीतो निर्धार्यते। अतोऽस्यापि तत्कालभवत्वं को नामापह्नोतुं प्रगल्भेत ? असौ च

---

१. दण्डी कविः द्रष्टव्यो गद्यकाव्यप्रकरणे।

२. तथा चायं काव्यालङ्कारनाम्नि स्वरचिते ग्रन्थेऽङ्गीकरोति :--
'अवलोक्य मतानि सत्कवीनामवगम्य स्वधिया च काव्यलक्ष्म।
सुजनावगमाय भामहेन ग्रथितं रक्रिलगोमिसूनुनेदम्।
इदमिति काव्यालङ्कारमभिधत्ते इति।

३. राजतरङ्गिण्याः चतुर्थे तरङ्गे ४९५ श्लोकोऽवलोक्यः।

भट्टोद्भटो अधिगतानेकशास्त्रसारज्ञो भवन् प्रौढो वैय्याकरण आसीत् । यतोऽनेन विभावनालङ्कारलक्षणे 'कारणस्य निषेधेऽपि' इति प्रयोक्तव्ये कारणपदस्थाने क्रियापदं प्रयुक्तम् । तन्नावैयाकरणः प्रयोक्तुं प्रसीदति । वैय्याकरणैरेव क्रियाफलस्य कार्यत्वेनाभ्युपगमादिति ।

अलङ्कारशब्दोऽयं संस्कृतसाहित्य आभूषणवचनः । वामनाचार्येण 'सौन्दर्यमलङ्कारः' इति सौन्दर्यपरत्वेन लक्षितः । सौन्दर्याधायकत्वादाभूषणस्य तत्तत्समानार्थकत्वे न काचिद्विप्रतिपत्तिः । एतदनुसन्धायैव खलु परमालङ्कारिकेण भामहेन सन्दर्भस्य 'काव्यालङ्कार' इति नामकरणं कृतम् । पुरा किल अलङ्कारशास्त्रमिदं साहित्यविद्या–साहित्यशास्त्र–क्रियाकल्पप्रभृतिभिर्नामभिः प्रथितमासीत् परन्तु तदनन्तरं सर्वातिशायिगुणगरिम्णा चेतोहरतया, अलङ्कारशास्त्रपदेनैव ख्यातिङ्गतो लब्धप्रचुरप्रचारः सञ्जातः । प्रसिद्धिं गतेऽस्मिन् नाम्नि तानि नामान्तराणि शनैः शनैरन्धकारपटले निलीनानि । तदेवमलङ्कारशास्त्रं न केवलं वागर्थबाह्यशोभाजनकमपितु अशेषविशेषान्तरसौन्दर्याधायकमपि । अतएवालङ्कारस्य निखिलसौन्दर्यावगाहितत्त्वजनकतया सम्पन्न एष एव मुख्योऽर्थः यन्निरतिशयकाव्यशोभाधायकत्वन्नामेति ।

## अलङ्कारशास्त्रस्य सम्प्रदायाः

तदिदमलङ्कारशास्त्रं षट्सम्प्रदायभेदभिन्नम् । षट् सम्प्रदायाश्च ते––रस-अलङ्कार-गुण-वक्रोक्ति-ध्वनि-औचित्याख्याः । तच्चैतत्सम्प्रदायभेदकारणं प्रतिपादयता अलङ्कारसर्वस्वस्य टीकाकृता समुद्रबन्धनाभिधेन कविना तत्रोपन्यस्तम् यत् :––

"इह विशिष्टौ शब्दार्थौ काव्यम् । तयोश्च वैशिष्ट्यं धर्ममुखेन, व्यापारमुखेन, व्यंग्यमुखेन वेति त्रयः पक्षाः । आद्येऽप्यलङ्कारतो गुणतो वेति द्वैविध्यम् । द्वितीयेऽपि भणितिवैचित्र्येण भोगकृत्त्वेन वेति द्वैविध्यम् । इति पञ्चसु पक्षेष्वाद्यः उद्भटादिभिरङ्गीकृतः, द्वितीयो वामनेन, तृतीयो वक्रोक्तिजीवितकारेण, चतुर्थो भट्टनायकेन, पञ्चम आनन्दवर्धनेनेति ।" षष्ठश्च किल औचित्यसम्प्रदायः ।

## रससम्प्रदायः

आचार्यो भरतमनिः रससम्प्रदायस्य प्रधानाचार्यः । नाट्यशास्त्रस्य षष्ठे, सप्तमेऽध्याये च रसभावादिनिरूपणमुपन्यस्तम् । रसनिष्पत्तिं प्रति विभावानुभावव्यभिचारिभावसंयोग एव हेतुत्वेन सूत्रितः––'विभावानुभावसञ्चारिभावसंयोगाद्रसनिष्पत्तिः' इति । सूत्रमिदं बहुभिः टीकाकृद्भिः बहुधा व्याख्यातम् । तत्र

भट्टलोल्लट-शङ्कुक-भट्टनायक-अभिनवगुप्ताख्याश्चत्वारो व्याख्याकाराः प्रमुखाः। भट्टनायकस्तेषु भुक्तिवादी। तन्मते विभावादीनां रसेन भोज्यभोजकसम्बन्धः। तत्साधनार्थमनेन अभिधाऽतिरिक्तं भावकत्वं भोजकत्वञ्च व्यापारद्वयमङ्गीकृतम्। भट्टलोल्लटश्च उत्पत्तिवादी। स रसं विभावादिजन्यं कार्यं मनुते। शङ्कुकस्तु विभावादिद्वारा रसस्यानुमितिमभिनन्दन्ति। तन्मते रसेन विभावादीनाम् अनुमाप्यानुमापकसम्बन्धः। अभिनवगुप्तश्चाभिव्यक्तिवादी। तन्नये विभावादिद्वारा जायमानरसानामभिव्यक्तिः आनन्दरूपे रसे परिणमति।

रसो हि नाम काव्यस्य प्राणभूतं वस्तुतत्त्वम्। ते च शृङ्गारहास्य-करुण-रौद्र-वीर-भयानक-बीभत्स-अद्भुत-शान्ता इति नवसङ्ख्याकाः। केचनाचार्याः शान्तरसं नाभिनन्दन्ति। नाट्येषु अप्रयोज्यत्वात्। काव्येषु तु तत्सत्ता अव्याहता। आनन्दवर्धननयेन महाभारतस्य मूलभूतो रसः शान्त एव। रुद्रटेन प्रेयानपि रसत्वेनादृतः। विश्वनाथेन च वात्सल्यमपि। इत्थं बहुभिर्बहुधा मता अपि रसाः बहवः सम्भवन्ति। परं सति तत्त्वतो विमृश्यमाने सर्वेषामपि तेषां नवस्वेवान्तर्भावान्नव एव ते इत्येवानवद्यः कल्पः।

यद्यपि गुणयुक्तं दोषमुक्तमलङ्कारभूषितं शब्दार्थरूपं काव्यशरीरमुक्तं, परं प्राणरहितं शरीरमिव तन्निरात्मकं रसमन्तरा न शोभते। अतः काव्यस्य सर्वस्वभूतो रस इति प्रचक्षते प्रेक्षावन्तः।

उक्तञ्च :—

"वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्।"

अपि च :—

काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।<br>
क्रौञ्च-द्वन्द्व-वियोगोत्थः शोकः श्लोकत्वमागतः॥ [ध्वन्यालोके]

इत्यत्रापि स एव प्रतीयमानो रसः काव्यस्यात्मत्वेनाङ्गीकृतः। नानाविध-शब्दार्थरचनाप्रपञ्चचारुणः काव्यस्य सारभूत आत्मा एव रसः। तथा च आदिकवेर्वाल्मीकेर्निहतसहचरीविरहकातरक्रौञ्चाक्रन्दनोत्थः शोक एव श्लोकत्वेन परिणतः। शोको हि नाम करुणरसस्य स्थायिभावः।

वस्तुतः रसोऽयमतीव महनीयं पदमलङ्करोति काव्यप्रपञ्चे। उक्तञ्च—

यामिनी वेन्दुना मुक्ता नारीव रमणं विना।<br>
लक्ष्मीरिव ऋते त्यागान्न वाणी भाति नीरसा॥

यथा च—

स्वादुपाकेऽप्यनास्वाद्यं भोज्यं निर्लवणं यथा।
तथैव नीरसं काव्यमिति ब्रूमो रसान् क्रमात्॥ इति।

तदेवमेष रससम्प्रदायः सर्वैरेव मुक्तकण्ठतः स्वीकृतः। तदस्य रसस्य स्वरूपनिरूपणपुरस्सरमास्वादप्रकारमुदञ्चयन्तो व्यक्तं प्राहुराचार्याः —

सत्त्वोद्रेकादखण्ड – स्व – प्रकाशानन्दचिन्मयः।
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः॥
लोकोत्तरचमत्कारे प्राणः कैश्चित्प्रमातृभिः।
स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः॥ इति।

## अलङ्कारसम्प्रदायः

आलङ्कारिकसम्प्रदाये पदवाक्यप्रमाणज्ञो नानाशास्त्रनिष्णातो रक्रिलगोमिसूनुर्भामहनाम्ना आचार्यः प्रधानत्वेनाद्रियते। आचार्योऽयं षट्परिच्छेदात्मकं सलक्ष्यलक्षणं काव्यालङ्काराख्यं प्रबन्धरत्नं महता श्रमेण निबबन्ध। अस्य प्रबन्धस्य टीकाकारौ रुद्रटोद्भटावपि अलङ्कारसम्पोषकौ। तत्र भवता दण्डिमहाभागेनापि यया कयापि विधयाऽलङ्कारस्यैव प्राधान्यमुररीकृतम्। आलङ्कारिकाणां नये तु अलङ्कार एव काव्यस्य जीवातुत्वेनाद्रियते। एषां मते काव्यस्यालङ्काररहीनत्वं तथैव हास्यास्पदं यथाग्नेरनुष्णत्वम्। उक्तञ्च चन्द्रालोके [१।८] —

अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती।
असौ न मन्यते कस्मादनुष्णमनलं कृती॥ इति॥

## भामहस्य कालः

भामहोऽयं महाभाष्यकारात्पतञ्जलेः पश्चात्काव्यादर्शकाराद्दण्डिनश्च पूर्वं विदर्भेषु क्वचिज्जनिं लेभे। यतोऽनेन स्वसन्दर्भे—

समुदायार्थशून्यं यत्तदपार्थमिहेष्यते।
दाडिमानि दशापूपाः षडित्यादि यथोदितम्॥

इत्यत्र महाभाष्योक्तं दशदाडिमादिवाक्यमुपन्यस्तम्। अतः पतञ्जलेरर्वाचीनत्वं, दण्डिनश्च पुनः काव्यादर्शे भामहनाम संस्मृतमतस्ततः पूर्ववर्त्तित्वमस्य सूपपन्नम्।

भरतमुनिना नाटचशास्त्रे किल अनुप्रासोपमारूपकदीपकाख्याः अमी चत्वार एवालङ्काराः प्रतिपादिताः। येष्वेकः शब्दालङ्कारः त्रयोऽन्येऽर्थालङ्कारा इति। तदनु कालक्रमानुरोधेन विकासङ्गतास्ते कुवलयानन्दकारेण शतोत्तर-

पञ्चविंशतिसङ्ख्याका उपन्यस्ताः। सूक्ष्मदृशा विमृश्यमाने तु को नाम अलङ्कारान् इयत्तया परिच्छेतुमलङ्कर्मीणः। तथाऽप्याचार्यैस्ते साधारणतया न गणनया नियन्त्रिताः। ते च अलङ्काराः पुनर्द्विविधाः--शब्दालङ्कारा अर्थालङ्काराश्च। तत्र तावदर्थालङ्काराः जात्युपमा–उत्प्रेक्षा–रूपक–दीपक–अन्योक्ति–समासोक्ति-प्रभृतयः। शब्दालङ्कारास्तु पुनः चित्र-श्लेषानुप्रास-वक्रोक्ति-युक्ति-यमक-पुनरुक्तवदाभासाः षडेव। एषां विस्तरस्तु तत्र तत्र सन्दर्भेषु एव अनुसन्धेयः।

## रीतिसम्प्रदायः

रीतिवादस्य प्रवर्त्तकः प्रधानाचार्यो वामनो नाम। तन्मते रीतिरेव काव्यस्य आत्मा[1]। रीतिर्हि विशिष्टपदरचना नाम। रीयते गुणानां विशेषो ज्ञायतेऽनया सेति तद्व्युत्पत्तेः। सा खलु स्वाश्रयव्यङ्ग्यरसादिवृत्तिगुणव्यञ्जकतया काव्योत्कर्षाधायिका। सा च पुनश्चतुर्विधा---वैदर्भी-गौडी-पाञ्चाली-लाटिकासमाह्वा। तासां लक्ष्यलक्षणन्तु यथाप्रकरणमनुसन्धेयम्।

तस्याश्च रीतेः, रसादिगुणवृत्तिव्यञ्जकतयैव काव्योत्कर्षाधायकत्वम् न जातु स्वातन्त्र्येण। अत एवोक्तं 'काव्यशोभायाः कर्त्तारो धर्मा गुणाः' इति। वामनमतेऽपि काव्यस्य ग्राह्यत्वन्तु खल्वलङ्कारादेव 'काव्यं ग्राह्यमलङ्कारा'दिति। गुणाश्च पुनर्द्विविधाः—शब्दगुणा अर्थगुणाश्च। शब्दगुणाः ––

श्लेषः प्रसादः समता माधुर्यं सुकुमारता।
अर्थव्यक्तिरुदारत्वम् ओजःकान्तिसमाधयः॥

उभयविधानामेषां नामानि तु दशेमानि समानानि। लक्षणानि बेभिद्यन्ते। तानि तु तत्र-तत्र यथाप्रकरणमनुरुध्यानुसन्धेयानि।

तदेषां गुणानां काव्यशोभाकर्तृकत्वाङ्गीकारेऽपि वामनमतेन, तदतिशयशोभाहेतुत्वन्त्वलङ्काराणामेव 'तदतिशयहेतवोऽलङ्काराः' इति भामहेन रसादीनामलङ्कारेष्वन्तर्भावः प्रपञ्चितः। वामनेन पुनस्तेषां कान्तिगुणेऽन्तर्निवेशः कृतः। तदेवं काव्यप्रपञ्चे रसानां महनीयं पदमक्षुण्णतया विलसत्येव। रीतिरपि भवतु नाम तदुत्कर्षाधायिका काव्यस्यात्मेत्यत्र न क्वापि विप्रतिपत्तिः। इदमत्रावधेयम्, रीतिर्यद्यपि रसगुणाद्यवष्टम्भेनैव काव्यस्योत्कर्षत्वमनुबध्नाति, तथाऽपि तस्यास्तदुत्कर्षाधायकत्ववैशिष्ट्यन्तु खलु को नाम सहृदयोऽपह्नोतुं पारयेतेति। रीतिवादिनां काव्यस्य यथाकथञ्चित्तदात्मकत्वमव्याहतमेवेति सुस्थितमिति दिक्।

---

१. 'रीतिरात्मा काव्यस्ये'ति वामनः।

## वक्रोक्तिसम्प्रदायः

वक्रोक्तिसम्प्रदायस्य प्रवर्त्तको मुख्याचार्यः कुन्तको नाम। एतन्मये वक्रोक्तिः काव्यस्य जीवितत्वेनाङ्गीकृता--"वक्रोक्तिः काव्यजीवितम्" इति। अन्याभिप्रायेणोक्तं वाक्यम् अन्याभिप्रायकं यदा कल्प्यते तदा वक्रोक्तियोगात्तद्-वक्रोक्तिरित्युच्यते। उक्तञ्च विश्वनाथेन :--

अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद्यदि।
अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधा॥

सा च वक्रोक्तिर्द्विविधा, श्लेषवक्रोक्तिः काकुवक्रोक्तिश्चेति। वस्तुतः सर्वै-रेवालङ्कारिकैर्वक्रोक्तिरुपलालिता। भामहेनापि मुक्तकण्ठतो वक्रोक्तेर्महनीयता स्वीकृता :--

सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना॥

भामहमते वक्रार्थकाः शब्दाः प्रयुक्ता अलङ्काराय कल्पन्ते :--

'वाचां वक्रार्थकशब्दोक्तिरलङ्काराय कल्पते।' [५।६६]

आचार्यकुन्तकेन वक्रोक्तिं लिलक्षयिषुणोपन्यस्तम् यत् :--

"वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते।"

काव्यादर्शकारेणापि--

"श्लेषः सर्वासु पुष्णाति प्रायः वक्रोक्तिषु श्रियम्।"

वक्रोक्तेः पोषणकरः श्लेष इत्युद्भावितम्। कुन्तकाचार्यस्य वक्रोक्तिः खलु नितान्तं बह्वर्थावगाहिनी बहुमुखी च। ध्वनेरखिलोऽपि प्रपञ्चः वक्रोक्ता-वेवान्तर्भवितुमर्हति। अतएव कुन्तकेन वक्रोक्तिमेव काव्यस्य जीवितमङ्गीकुर्वता 'वक्रोक्तिजीविता'ख्यो बृहत्सन्दर्भो विगुम्फितः। वक्रोक्तिरहस्यावबोधकुतूहलिभिः ग्रन्थोऽयमवश्यमेवानुसन्धेयः इति।

## ध्वनिसम्प्रदायः

ध्वनिसम्प्रदायस्य व्यवस्थापकः आचार्य आनन्दवर्धनो नाम, न तु तत्प्रव-र्त्तकः। ये तु केचन वर्धनोपज्ञत्वं ध्वनेः प्रतिपादयन्ति ते गगनकुसुममालां लीलया धारयन्तो मनस आमोदमातन्वते। यत आनन्दवर्धनः स्वयं ध्वनेः समाम्नातपूर्वत्व-मभिनन्दति :--

काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-
स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये ।
केचिद्वाचां स्थितिमविषये तत्त्वमूचुस्तदीयं
तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम् ।। इति

अतएव लोचनकारेणाप्येष एवार्थः समर्थितः ।

'तदाह समाम्नातपूर्व इति । पूर्वग्रहणेनेदम्प्रथमता नाऽत्र सम्भाव्यते' इति ।

तत्र ध्वन्यभाववादिनां त्रयो विकल्पाः सम्भवन्ति, अभाववादः, भक्तिवादः, अलक्षणीयवादश्चेति । एतान् सर्वान् आनन्दवर्धनाचार्येण सम्यङ्निरस्य ध्वनिस्वरूपं चतुरस्रतया निरूप्य सुव्यवस्थापितम् । तदधुना तं ध्वनिसिद्धान्तं प्रति सर्व एवालङ्कारिका बद्धादराः इति ।

न च यत्स्वयं ध्वनिकारेण—

इति काव्यार्थविवेको योऽयं चेतश्चमत्कृतिविधायी ।
सूरिभिरनुसृतसारैरस्मदुपज्ञो न विस्मार्यः ।।

इत्यत्र 'अस्मदुपज्ञः' इतिपदं प्रयुञ्जानेन ध्वनेः स्वोपज्ञता सुतरां प्रतिपादिता, तद्ध्वनेरानन्दवर्धनोपज्ञतायां को दोषः ? इति वाच्यम् । काव्यार्थविवेकस्य तदुपज्ञताशंसनात् न जातु ध्वनेः, येन तदुपज्ञत्वं ध्वनेरनुमन्येतेति । काव्यार्थविवेकश्चात्र ध्वनिस्वरूपमभिधत्ते न कर्हिचिद् ध्वनिम् । अग्रे चान्तिमश्लोके स स्वयमेवाह—

सत्काव्यतत्त्वविषयं स्फुरितप्रसुप्त-
कल्पं मनस्सु परिपक्वधियां यदासीत् ।
तद्व्याकरोत्सहृदयोदयलाभहेतो-
रानन्दवर्धन इति प्रथिताभिधानः ।।

इत्यनेनाऽपि ध्वन्यते, यत् परिपक्वधियां मनस्सु यत्काव्यतत्त्वं स्फुरितमपि प्रसुप्तकल्पमासीत् तद् आनन्दवर्धनोऽयं व्याकरोद् इति विवेकः ।

एवं ध्वनिसम्प्रदायस्याविर्भावस्तु तत्प्रतिष्ठापकस्य आनन्दवर्धनस्याविर्भावादपि बहुपूर्वतन इति सूपपन्नम् ।

तत्त्वतः ध्वनिसिद्धान्तस्य मूलभूतो वैयाकरणानां स्फोटवादः । तथा च स्वयमाह ध्वनिकार :—

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ।।

इत्यत्र 'सूरिभिः कथितः' इत्यनेन वैयाकरणा एव परामृश्यन्ते इति ।

श्लोकममुं व्याचिख्यासुः स्वयं ध्वनिकार एव प्राह--'यत्रार्थो वाच्यविशेषो वाचकविशेषः शब्दो वा तमर्थं व्यङ्क्तः, स काव्यविशेषो ध्वनिरिति।'

ध्वनिसिद्धान्तस्य प्रतिष्ठापकः आलोकादिनैकप्रबन्धप्रणेता राजानकाख्य-ब्राह्मणकुलोत्पन्नः आनन्दवर्धनाचार्यः काश्मीरेषु बभूव। तदस्य ध्वन्यालोकस्य चत्वार उद्योता भवन्ति। प्रथमे ध्वनिमतभेदप्रदर्शनपुरस्सरं ध्वनिस्थापनम्, द्वितीये अविवक्षितवाच्यप्रभेदनिरूपणम्, तृतीये अविवक्षितवाच्यप्रभेदनम्, चतुर्थे ध्वनिव्युत्पादनप्रयोजनान्तं प्रतिपादितम्। ध्वन्यालोकमधिकृत्य सहृदयालोकापर-संज्ञं लोचनाख्यमतीव प्रौढं व्याख्यानम्। लोचनमिति संज्ञाकरणे तु ध्वन्यालोकस्य चन्द्रिकाख्या व्याख्या बीजभूता। यथा चोक्तं लोचने--

किं लोचनं विना लोके भाति चन्द्रिकया हि। इति।

आनन्दवर्धनाचार्यस्य समयस्तु अवन्तिवर्मसमकालिकः। राज्ञोऽवन्तिवर्मणो राज्यकालः ८५५ क्रैस्ताब्दात् ८८४ क्रैस्ताब्दपर्यन्तं निर्धारितः कालविद्भिः। कविवरकल्हणस्य राजतरङ्गिणीतोऽपि एष एवाऽर्थः समुपोद्बलितो भवति :--

मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः।<br>
प्रथां रत्नाकरश्चागात्साम्राज्येऽवन्तिवर्मणः॥

इति प्रागुक्तम्।

ध्वनिग्रन्थास्तु--ध्वन्यालोकः, लोचनम्, हृदयदर्पणः, व्यक्तिविवेकः। एतेऽपि काश्मीरेष्वेव प्राणायिषत। तदेवमलङ्कारप्रपञ्चे ध्वनिसिद्धान्तोऽयमतीव महनीयं पदमधिकरोति।

## औचित्यसम्प्रदायः

कविराजः क्षेमेन्द्रो नाम औचित्यचर्चायाः प्रमुखः प्रवर्त्तकः। एतद्विरचित-'औचित्यविचारचर्चा'ख्यो ग्रन्थोऽतिप्रसिद्धः। तन्मतेन औचित्यं रसादीनां जीवित-भूतम्। औचित्यस्य लक्षणन्तु--

उचितं प्राहुराचार्याः सदृशं किल यस्य यत्।<br>
उचितस्य च यो भावस्तदौचित्यं प्रचक्षते॥

आनन्दवर्धनोऽपि औचित्यस्य महत्त्वं प्रदर्शयन्नाह --

अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्।<br>
औचित्योपनिबन्धस्तु रसस्योपनिषत्परा॥

एवं यद्यपि बहुभिः पूर्वाचार्यैरौचित्यविषयश्चर्चितः, तथापि क्षेमेन्द्रेणास्य

सविशेषं विवेचनं व्यधायीति तस्यैवात्र प्राधान्यं मन्यन्ते विपश्चितः। तथा च, नाटचशास्त्रकारेण--

अदेशजो हि वेषस्तु न शोभां जनयिष्यति।
मेखलोरसि बन्धे च हास्यायैवोपजायते॥

इत्यत्र शब्दतोऽनभिदधानेनाऽपि सुतरामौचित्यमेव पल्लवितम्। तदेव विशदय्य क्षेमेन्द्रोऽपि ग्रथ्नाति--

कण्ठे मेखलया, नितम्बफलके तारेण हारेण वा,
पाणौ नूपुरबन्धनेन चरणे केयूरपाशेन वा।
शौर्येण प्रणते रिपौ करुणया नायान्ति के हास्यतां,
औचित्येन विना रुचिं प्रतनुते नालङ्कृतिर्नो गुणाः॥

साहित्यतत्त्वानामितिवृत्तमौचित्यादारभ्यालङ्कारपर्यवसायीति कथने न काचिदत्युक्तिः। उक्तञ्च--

औचितीमनुधावन्ति सर्वे ध्वनिरसोन्नयाः।
गुणालङ्कृतिरीतीनां नयाश्चानृजुवाङ्मयाः॥

औचित्यमेव सर्वेऽपि रसाः सुतरामनुबध्नन्तीति वचो नितरामुचितं यौक्तिकञ्चेति दिक्।

------

# सङ्गीतशास्त्रम्

१——सामान्यपरिचयः । २——सङ्गीतशास्त्रस्यावतरणम् । ३——सङ्गीत-गोष्ठीक्रमः । ४——सङ्गीतपद्धतिः । ५——गीतिकाव्यकारः श्रीजयदेवः ।

## सामान्यपरिचयः

संस्कृतसाहित्ये सङ्गीतशास्त्रं किमपि अनितरसाधारणं महनीयं पदमलङ्करोति । अर्हति च तद्रसिकानां सविशेषमवधानम् । सङ्गीतमभिलिलक्षवो महान्तः प्राञ्चः सङ्गीताचार्या आहुः ——

'गीतं वाद्यं नर्त्तनञ्च त्रयं सङ्गीतमुच्यते ।'

गीतं-वाद्यं-नर्त्तनञ्चेति त्रयमपि सम्भूय सङ्गीतपदेन परिभाष्यते । तत्र नर्त्तनं वाद्यानुगामि, वाद्यञ्च पुनर्गीतानुगामि भवति । परं प्राधान्यन्तु तत्र गीतस्यैवाचार्यैरङ्गीकृतम् । तद्यथा——

नृत्यं वाद्यानुगं प्रोक्तं वाद्यं गीतानुवृत्ति च ।
अतो गीतं प्रधानत्वादादावुपवर्ण्यते ॥ इति ॥

[सङ्गीतरत्नाकरे १।२४]

तदिदं सङ्गीतं स्वरमूलम् । स्वराश्च ते षड्जादयः सप्त । उक्तञ्च पाणिनीयशिक्षायाम् :——

उदात्तो निषादगान्धारावनुदात्त ऋषभधैवतौ ।
स्वरितप्रभवा ह्येते षड्ज—मध्यम—पञ्चमाः ॥ इति ॥

त एवामी सप्त स्वराः सङ्गीततन्त्रे षड्ज-ऋषभ-गान्धार-मध्यम-पञ्चम-धैवत-निषादाश्चेति संज्ञया संगीयन्ते । ते च स्वरास्तावद् ध्वन्यात्मका एवेति न वक्तव्यमपेक्षन्ते । ध्वनिः——निनादः—निनदः—ध्वानः—रव इत्यनर्थान्तरम् । स्वराश्चामी पुनर्मन्द्र-मध्यम-तारभेदेन आरोहावरोहात्मकोच्चावचतां तत्तत्स्थानभेदेनाऽनुगृह्णन्ति । तत्र मन्द्रा उरसि समुत्पद्यन्ते, मध्यमाः खलु कण्ठादाविर्भवन्ति, ताराश्च स्वराः शिरसः समुद्भवन्ति । एतेषां स्वराणां ध्वनिसाजात्यं पशुपक्षिगणेषु अवबुध्य सङ्गीततत्त्वविद्भिरुपश्लोकितम् :——

षड्जं मयूरो वदति गावो रम्भन्ति चर्षभम् ।
अजाविकेषु गान्धारं क्रौञ्चो वदति मध्यमम् ॥

पुष्पसाधारणे काले कोकिलो वदति पञ्चमम्।
अश्वस्तु धैवतं वक्ति निषादं वक्ति कुञ्जरः॥

[नारदीयशिक्षायाम्]

तच्च सङ्गीतं रागमयं भवति। तेऽमी रागास्तावच्चतुष्टयाधिकाः शतद्वयसंङख्याकाः भवन्ति। उक्तञ्च शार्ङ्गदेवेन सङ्गीतरत्नाकरे :—

'रागाणाञ्च शतद्वयं चतुःषष्टचधिकं ब्रूते शाङर्गी श्रीकरणाग्रणीः' इति। रञ्जकत्वात्खल्विमे रागा उच्यन्ते—रञ्जयन्तीमानि मनांसीति। रागाश्चैते सामयिका भवन्ति, समयानुसारेण गीयमाना एव रञ्जका भवन्ति। तथा चोक्तं प्राक्तनैः—

'यथाकाले समारब्धं गानं भवति रञ्जकम्।' इति।

प्रथमप्रहरमारभ्याष्टमप्रहरपर्यन्तं प्रतिप्रहरं गीयमाना द्विशतादभ्यधिका रागा अद्यापि लब्धप्रचाराः समुल्लसन्ति।

कालमनुरुध्य संगीतानां रागाणां ते ते रसा अप्युद्भवन्ति। यथा दिनस्य प्रथमे प्रहरे गीयमानो रागः शान्तरसमुद्भावयति, द्वितीये करुणरसं, तृतीये वीररौद्रौ, चतुर्थे च पुनः शृङ्गारम्। इत्थमेव रात्रावपि बोद्धव्यम्। रात्रेः प्रथमे प्रहरे शृङ्गारं, द्वितीये वीररसं, तृतीये च करुणरसमनुगृह्णन्ति रागाः। तेषु रसेषु च किल शान्तस्समाह्लादको वीरः समुत्तेजकः, शृङ्गारः प्रेमभावोद्भावको भवति।

परन्तेषु सङख्याबहुलेषु रागेषु प्रमुखा रागास्तु खलु षडेव, षट्त्रिंशत्सङख्याकाश्च रागिण्यो भवन्ति। त एव भूयो माधुर्याविष्करणार्थं मिथो विविधरागाणां सम्मिश्रणेनासंख्याता जायन्ते। विशुद्धा रागाः सन्तोऽपि प्रशंसार्हा यथास्वरं यथाकालं सङ्गीयमाना न तथा माधुर्यं पुष्णन्ति यथा खलु मिश्रिता रागाः। यद्यपि माधुर्यं ते प्रकटयन्ति निस्सन्देहं किन्तु तन्माधुर्यं मिश्रितरागाणां तु तुलां न स्पृशति, इत्यत्र तु न सन्देहावसरः। मिश्रितेषु रागेषु च कालप्रतिबन्धस्तथा नाद्रियते, यथा विशुद्धेषु। विशुद्धेषु रागेषु माधुर्यसमुत्पादनार्थं, संगीतविद्याऽधिजिगांसुभिर्यद्यपि सुभृशं प्रयत्यते, सम्यक्तया च समभ्यस्यते सातत्येन। तेषु मन्द्रमध्यम-तारस्वरेषु मन्द्रस्यैव प्राधान्यम्। संसिद्धे हि किल मन्द्रस्वरे सर्वेऽपि स्वराः सिद्धाः सम्भवन्ति। अतः सिद्धहस्तैरपि गायकैः प्रतिदिनं न्यूनतो न्यूनं होराद्वयपर्यन्तं मन्द्रस्वर-साधनाऽनुष्ठीयते। ततः परश्शतानामालापानां सहस्राधिकानाञ्च तानानां समभ्यासेन संगीतमाधुर्यसिद्धिः सम्पद्यते। अनाकलितस्वराभ्यासानां सङ्गीतानि प्रायशः कर्कशानि भवन्ति न श्रवणमधुराणि। माधुर्यन्तु सङ्गीतस्य खल्वभ्यासानुबन्धि, यावानभ्यासस्तावदेव माधुर्यमिति निष्कर्षः।

यथाकालं संगीतानि गीतकानि मधुराणि भवन्तीत्युक्तपूर्वम् । भूयोऽपि माधुर्याधानार्थं किञ्चित्कालकृतव्यत्यासोऽपि न प्रत्यवायायेति प्राञ्चः, अर्वाञ्चश्चाप्याचार्या सुतरामभ्युपगच्छन्ति । तत्र यामार्द्धयामस्य परिवर्त्तने न काचिद्विशिष्टाऽऽपत्तिः । तत्तु प्रायशोऽधुनापि सङ्गीतकैर्विधीयत एव । तद्यथा—भैरवी-भैरव-तोडी-असावरी, इत्यादयः प्रातःकालगेया रागाः प्रातरेकादशवादनपर्यन्तमपि गीयन्ते । गौडसारङ्गोऽपराह्णे, भीमपलाशो मुलतानी च पूर्वरात्रे, यमन-भूप-केदार-कामोद-हम्मीर-शुद्धकल्याण—श्यामकल्याणप्रभृतयो रागा रात्रौ, शङ्करा-कानडा-काफी-वागीश्वरीत्यादयोऽर्द्धरात्रौ, मालव-कौशिक-वसन्त-विहार-सोहनीप्रभृतयश्च प्रत्यूषसि, योगी-हिंडोल-विभासादयश्चापि प्रातरेव गीयमाना अनुश्रूयन्ते । यद्यपि एतेषां शास्त्रविहितः समयः यामार्द्धयामावर्वाक्तन एव वरीवर्त्ति तथापि साम्प्रदायिकः स्थितिवशंवदतया कृतस्तावान् कालभेदो न दोषायेति नितरामङ्गीकृतमवधार्यते तद्विद्भिः पुरातनैराचार्यैः ।

## सङ्गीतशास्त्रस्यावतरणम्

तदस्य महामहिमवतस्सङ्गीतशास्त्रस्यावतरणन्तु किल भगवतस्सामवेदादेव । 'गीतिषु सामाख्ये'ति पूर्वमुक्तमेव सामवेदप्रकरण इति । एवमस्य सामवेदस्य उपवेदोऽपि गान्धर्ववेदः । गान्धर्ववेदोऽयं सामगानस्य गानविद्यायाश्च व्यवस्थापको ग्रन्थः । रागरागिणीनां स्वरताललयालापसन्तानमीडमूर्च्छनानाञ्च परिचायको ग्रन्थः इत्यवोचाम । तमेतं सामवेदोपवेदं गान्धर्वं नाम वेदमुपजीव्यैव सङ्गीतशास्त्रस्य प्रवृत्तिरिति फलितोऽर्थः ।

यद्यपि वस्तुतः सङ्गीतसाहित्यं किमप्यतीव विपुलं वस्तु । नाट्याचार्यो भरत[1] मुनिरेवास्य सङ्गीततन्त्रस्यापि किलादिम आचार्य इत्येवानुश्रूयते । तथापि भरतोपज्ञता तु गानशास्त्रस्य नाङ्गीकर्त्तुं शक्यते यतः तत्पुराणा अपि श्रुतयो, गानविज्ञानकुशला महर्षयो देवर्षयश्च गन्धर्वा किन्नराश्च नितरां सुप्रथन्तेतरां गानविद्याधराः । भगवतः शङ्करस्य को नाम न जानाति डमरूध्वन्यनुबन्धि ताण्डवनृत्यपुरस्सरं किमपि तद् हृदयाह्लादि सङ्गीतम् । देवर्षिनारदस्य वा को नाम न शृणोत्यद्यापि वल्लकीनाम्नीं विपञ्चीं सरागं पञ्चमरागमुदञ्चयन्तीम् । 'गन्धर्वा ललितं जगु' रिति विश्रुतमेव किल लोके । इत्येतेषु बहवः सङ्गीतशास्त्रप्रणेतारोऽपि सम्भवेयुरित्यत्र न शङ्कावकाशः । ते च ग्रन्थाः प्रायशः लोपङ्गताः, तेषु सङ्गीत-

---

१. पञ्चाशीत्यधिकं ह्येतद् गीताङ्गानां शतं स्मृतम् ।
स्वयमेव पुरा प्रोक्तं भरतेन श्रुतेः परम् ॥ इति

रत्नाकर-सङ्गीतकलानिधिप्रभृतीनां नामानि यत्र तत्र क्वचिदुद्धरणेषु मेघमालायां विद्युल्लतेव विद्योतमानाः समुपलभ्यन्तेऽद्यापि। हन्त! एवंविधायाः सर्वोत्कृष्टायाः सुललितकलायाः वाङ्मयविलोपः कस्य मनो न व्याकुलीकुर्यात्! अस्तु,

भारतीया गानविद्या विद्यान्तरवदतीव रमणीया भाति, अनितरसाधारण-प्रशंसार्हा च। अतिललितलयतानालापमूर्च्छनाऽलङ्कृतगीतझङ्कारस्य माञ्जुल्यं नितरामाञ्जस्येनोपवर्णितं कविभिः—

शरज्ज्योत्स्नाहते दूरे तमसि प्रियसन्निधौ।
धन्यानां विशति श्रोत्रे गीतझङ्कारजा सुधा॥

अपि च :—

नान्यद् गीतात्प्रियं लोके देवानामपि दृश्यते।
शुष्कस्नायुः स्वराह्लादात् त्र्यक्षं जग्राह रावणः॥

तपोऽतिरेकहेतोः शुष्कस्नायुः रावणो हि त्रीणि अक्षीणि यस्यासौ त्र्यक्षः शिवस्तं जग्राह वशीचकार इत्याशयः। इति कथनं गानस्वराणां विस्मयावहं प्रभावमभिधत्ते।

किञ्च—

यथा नयति कैलासं नगं गान-सरस्वती।
तथा नयति कैलासं न गङ्गा न सरस्वती॥

इति गानविद्याया माहात्म्यं खलु वाचामगोचरम्।

नूनं सकलमपि प्राणभृज्जगत् गानविद्यायै स्पृहयति। यथा मानवेभ्यो गानं रोचते, तथैव पशुपक्षिभ्योऽपि, सरीसृपेभ्योऽपि। यथा मनुष्याणां वीणा-मृदङ्ग-किङ्किणी-वंशीनिक्वणन्निनादं निशम्य हृदयसरोवराणि निर्भरमानन्दतर-ङ्गितानि बोभवन्ति तथैव मृग-गज-गवां गणोपि गानमाकलय्य मन्त्रमुग्ध इव, आलेख्यबद्ध इवावलोक्यमानो नयनविषयीकृतः सुज्ञैः। को नाम न वेत्ति यन्मधुकरा मञ्जुलं गुञ्जन्ति, कोकिलाः काकलीरवं कुर्वन्ति, पञ्चममालस्व्य मयूराः केकां क्वणन्ति, सरीसृपाणां तुम्बीवाद्यानुरागं सर्व एव जानन्ति, कुरङ्गाश्च वेणुवादनानुरागेण समाकृष्टा अद्धा वागुराबद्धा भवन्ति। एवं सर्वस्याऽपि प्राणिनिकरस्य सङ्गीतेऽस्ति सा कापि विलक्षणा आसक्तिः। कः खलु तां गानकला-मियत्तयाऽवच्छेत्तुं क्षमः स्याद् वराकः?

तत्र भगवतः प्रभविष्णोर्विष्णोरपि सङ्गीतानुरागोऽभूदद्भुतः सोऽपि समुदाजहार :—

नाहं वसामि वैकुण्ठे योगिनां हृदये न च।
मद्भक्ता यत्र गायन्ति, तत्र तिष्ठामि नारद ! ।। इति ।।

तदिदं सङ्गीतशास्त्रं गान्धर्ववेदविदो ब्रह्मणः सकाशाद् भगवती सरस्वती जग्राह, सरस्वत्या नारदः, नारदाच्च भरतमुनिः, भरतमुनिसकाशाच्चान्ये सङ्गीताचार्या इति तदवतरणक्रमः। अस्य संगीततन्त्रस्य प्रस्थानभेदाश्चासङख्याताः। सन्तोऽपि ते संनियता रागान्तरसम्मिश्रणेनासंख्याततां [1] याताः। तच्च गुणाधानेन तत्तद्रागाणामुज्ज्वलीकरणार्थं, माधुरीसम्पादनार्थञ्चैव मिश्रणमभिवन्द्यते किल। तदत्र स्थालीपुलाकन्यायेनात्र किञ्चिदिव सङ्गीतसरणिरपि प्रदर्श्यते :--

भारतीयपरम्परायां प्रयोगक्रमः सङ्गीतगोष्ठीनां तावदेवंविधः, यत्सर्वतः प्रथममीश्वरस्तवनम्, ततः सरस्वती वन्दना गुरुवन्दना च, ततः राष्ट्रसङ्गीतम्। तदनन्तरं यथाकालं तत्तद्विशिष्टरागाणामुपक्रमः। स एष क्रमः प्रायशः सर्वत्रैवाधुनापि सङ्गीतसम्मेलनेषु भूम्ना परिपाल्यते।

इदं तु बोध्यम्--सङ्गीतकानि हि भवन्ति च्छन्दोनिबद्धानि पद्यानि, न जातु गद्यरूपाणि। यदृच्छया येन केनाऽपि च्छन्दसा गुम्फितानि तानि सकलैरेव रागैर्गेयानि भवन्ति। गायन्ति च रागिणस्तानि यथेच्छम्, न तानि रागविशेषप्रतिबन्धं सहन्ते। एकमेव गीतसनेकैस्तैस्तैर्भैरवी-वागीश्वरी-मालकोशप्रभृतिभी रागैः गातुं शक्यते सामञ्जस्येन न तत्र कोऽपि खल्वनुबन्धविशेषः।

षड्जादयः सप्त स्वरा इत्युक्तम्। तेषु मूलभूतः स्वरस्तु षड्जस्वरः। तदतिरिक्तानामृषभादिषट्स्वराणां जनकत्वादेष षड्जाभिधेयतां गतः। त इमे सप्त स्वरा भूयोऽपि वादी-संवादी-अनुवादी-विवादीति भेदाच्चतुर्धा भिद्यन्ते। तत्र रागस्वरूपप्रद्योतकः प्रमुखस्स्वरो वादीति परिभाष्यते। ययोः स्वरयोः समश्रुतिस्तौ मिथः संवादिनौ भवतः। ययोश्च पुनः स्वरयोः श्रुतिसंख्यासंस्थानक्रमादेकान्तरं

---

१. येषाञ्च प्रपञ्चप्रसरः तेषु तेषु सङ्गीतग्रन्थेषु कृतोऽवलोक्यते। यद्यपि बहवो ग्रन्थाः विलुप्ताः तथापीदानीमपि य उपलभ्यन्ते तेषां नामान्यत्र निर्दिश्यन्ते।
रागतत्त्वबोधः श्रीनिवासविरचितः। रागतरङ्गिणी पण्डितलोचनप्रणीतः।
रागनिरूपणम् नारदमुनिकृतम्। रागमञ्जरी पुण्डलीविट्ठलप्रणीता।
रागलक्षणम् रागकविविरचितम्। रागमाला ,, ,, ।
रागविबोधः सोमनाथविरचितः। सङ्गीतरत्नाकरः श्रीशार्ङ्गदेवकृतः।
सङ्गीतमकरन्दः नारदमुनिकृतः। सङ्गीतपारिजातः अहोबलरचितः। इत्यादयोऽनुसन्धेयाः।

भवति तौ मिथो विवादिनौ भवतः, संवादिविवादिभ्यो व्यतिरिक्ताः स्वरास्तु खल्वनुवादिनो भवन्तीति विवेकः। अथैर्ताह तेषां सप्त स्वराणां स्वरूपप्रतिपत्तये-ऽधस्तात्प्रकोष्ठः प्रदीयते :—

| स्वराणां क्रमः | वादी | संवादी | अनुवादी | विवादी |
|---|---|---|---|---|
| १. षड्जः | स | पम | रे ग ध नी | ० |
| २. ऋषभः | रे | ध | स म प नी | ग |
| ३. गान्धारः | ग | नी | स म प ध | रे |
| ४. मध्यमः | म | स | रे ध प ध नी | ० |
| ५. पञ्चमः | प | स | रे ग म ध नी | ० |
| ६. धैवतः | ध | रे | स ग म प | नी |
| ७. निषादः | नी | ग | स रे म प | ध |

इदमत्र बोध्यम् यत्सप्तस्वराणामुच्चारणे प्रत्येकं यः समयोऽवधारितः तस्यैव सूक्ष्मतरावन्तरभेदः श्रुतिरित्युच्यते। आभिरेव श्रुतिभिः स्वराः तीव्रकोमलातिकोमलभावं व्रजन्तो रागरागिणीनां सत्यस्वरूपं व्यक्तीकर्त्तुं प्रभवन्ति। अतः स्वरस्वरूपप्रतिपत्त्यर्थं श्रुतिज्ञानमपरिहार्यं प्रवदन्ति सङ्गीततत्त्वविदः। अस्तु,

## सङ्गीतगोष्ठीक्रमः

भारतीयसङ्गीतगोष्ठीपरम्परायां तावद् ईश्वरस्तवनं, तदनु सरस्वतीवन्दना, ततो गुरुवन्दना, राष्ट्रगीतञ्च। तत्पश्चात् सङ्गीतप्रपञ्चः। ततः कालानुसारि रागेण समाप्तिश्च।

### ईश्वरस्तवनम्

यं ब्रह्मा वरुणेन्द्ररुद्रमरुतः, स्तुन्वति दिव्यैः स्तवैः,
वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः।
ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो,
यस्यान्तं न विदुः सुरासुरगणाः देवाय तस्मै नमः॥

अपि च :—

नमस्ते सते ते जगत्कारणाय
नमस्ते चिते सर्वलोकाश्रयाय ।
नमोऽद्वैततत्त्वाय मुक्तिप्रदाय
नमो ब्रह्मणे व्यापिने शाश्वताय ॥

त्वमेकं शरण्यं त्वमेकं वरेण्यं
त्वमेकं जगत्पालकं स्वप्रकाशम् ।
त्वमेकं जगत्कर्तृ पातृ प्रहर्तृ-
त्वमेकं परं निश्चलं निर्विकल्पम् ॥

भयानां भयं भीषणं भीषणानां
गतिः प्राणिनां पावनं पावनानाम् ।
महोच्चैःपदानां नियन्तृ त्वमेकं
परेषां परं रक्षणं रक्षणानाम् ॥

वयं त्वां स्मरामो वयं त्वां भजामो,
वयं त्वां जगत्साक्षिरूपं नमामः ।
सदेकं निधानं निरालम्बमीशं
भवाम्भोधिपोतं शरण्यं व्रजामः ॥ इति ।

ततः —

सरस्वतीवन्दना

या कुन्देन्दुतुषाहारधवला या शुभ्रवस्त्रावृता,
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना ।
या ब्रह्माच्युत-शङ्कर - प्रभृतिभिर्देवैः सदा वन्दिता,
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥

अपि च :—

आशासु राशीभवदङ्गवल्ली-
भासेव दासीकृतदुग्धसिन्धुम् ।
मन्दस्मितानिन्दितशारदेन्दुं
वन्देऽरविन्दासनसुन्दरीं त्वाम् ॥

## गुरुवन्दना

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।
गुरुः साक्षात्परं ब्रह्म तस्मै श्री गुरवे नमः ॥

## राष्ट्रगीतम्

वन्दे मातरम्।
सुजलां सुफलां मलयजशीतलां
शस्यश्यामलां मातरम्। वन्दे०

शुभ्रज्योत्स्ना-पुलकितयामिनीम्
फुल्लकुसुमितद्रुमदलशोभिनीम्
सुहासिनीं सुमधुरभाषिणीं,
सुखदां वरदां मातरम्। वन्दे०

त्रिंशत्कोटिकण्ठकलकल-निनाद-कराले
द्वित्रिंशत्कोटिभुजैर्धृत-खर-करवाले।
बहुबलधारिणीं नमामि तारिणीं
रिपुदलवारिणीं मातरम्। वन्दे०

नमामि कमलां अमलां अतुलां सुजलां सुफलां,
श्यामलां सरलां सुस्मितां भूषितां
धरणीं भरणीं मातरम्। वन्दे०

## सामान्यगीतम्

चन्दनचर्चित – नीलकलेवर – पीतवसन – वनमाली।
केलिचलन्मणिकुण्डलमण्डित – गण्डयुगः स्मितशाली।
हरिरिह मुग्धवधूनिकरे, विलासिनि विलसति केलिपरे॥

कापि विलासविलोलविलोचन – खेलनजनितमनोजम्।
ध्यायति मुग्धवधूरधिकं मधुसूदनवदन – सरोजम्॥

श्रीजयदेवे कृतहरिसेवे भणति परमरमणीयम्।
प्रमुदितहृदयं हरिमतिसदयं नमत सुकृतकमनीयम्॥

## सङ्गीतपद्धतिः

सङ्गीतलक्षणग्रन्थेषु सर्वेषां रागोपरागरागिणीनाञ्च ते ते प्रस्ताराः

स्वरूपभेदाश्च संल्लक्षिताः समुपलभ्यन्ते । तत्र भैरवादिषण्णां रागाणां, प्रत्येकरागञ्च षड्रागिण्यो भवन्तीति षट्त्रिंशद्रागिण्यः प्रकल्पिताः। तदासां रागिणीनां, रागाणां मूलस्वरूपे कोमलतीव्रस्वराणाम् आरोहावरोहयोर्वर्ज्यावर्ज्यस्वराणां भेदोपभेदकल्पनात्तावान् प्रस्तारः। पुनश्च तत्र रागरागिणीस्वरूपेषु स्वरमिश्रणात् नानाविधाः उपरागा अपि सम्पद्यन्ते, इति हेतोरेव रागोपरागरागिणीनां प्रस्तारविस्तारस्येयत्तयावच्छेत्तुमशक्यत्वादस्य सङ्गीतशास्त्रस्याप्यानन्त्यमुपोद्बलितं सम्भवति। एतदवष्टम्भेनैतेषां रागाणां गानपद्धतयोऽपि नानाविधैर्भेदैर्भिद्यमाना विलसन्ति सङ्ख्यातीताः । परं तासु शास्त्रीयसङ्गीतपद्धतिर्भावसङ्गीतपद्धतिश्चेति द्वे तु प्राधान्यं जुषेते। शास्त्रीयसङ्गीतपद्धतिप्रपञ्चे शास्त्रोक्तनियमानां नाणुमात्रमपि व्यत्यासं विषहन्ते सङ्गीताचार्याः। ईषदपिताललयादिविकारजन्यं स्वरवैरस्यं तानतितरां व्याकुलयति, तादृशं स्वरवैरस्योपनतं शास्त्रीयपद्धतितः स्वल्पमपि स्खलनं तेभ्यो न मनाक् संस्वदते। अतः तादृशस्खलनदोषः तेषां नयेऽक्षन्तव्यताकोटिमवगाहते। शास्त्रपद्धतिमुद्गायन्तो नाणुमात्रमपि ततः स्खलन्तञ्च भूम्ना समाद्रियन्ते। अधुनाऽपि तेषु दाक्षिणात्याः, द्राविड़ाः, महाराष्ट्रियाश्च तामेव पद्धतिमनुरुन्धाना गर्वस्य गौरवस्य च साम्प्रदायिकेषु किलाग्रासनमलङ्कुर्वन्ति।

भावगीतपद्धतिमालम्बमानास्तु पुनः शास्त्रनियमोपनियमाननुरुन्धाना भावावेशप्रधानां निसर्गसुलभां मधुरमधुरां सहृदयहृदयाह्लादिनीं श्रोतृवृन्दचेतश्चमत्कारिणीं मनोमोहिनीं शैलीमवलम्ब्य गायन्तो जनसाधारणस्यातितरां प्रशंसाभाजनीभवन्तः मोदन्तेतरां मोदयन्ति चेतरानपीति । यद्यपि पद्धतिरियमद्यत्वे लब्धप्रचुरप्रचारा, बहुभिरभिनन्द्यमाना वरीवर्त्ति तथाऽपि नेयं शास्त्रीयपद्धतितुलामंशतोऽपि संस्पृशति। शास्त्रीयपद्धतिः सङ्गीतविदां, भावसङ्गीतपद्धतिश्च पुनरनाकलितशास्त्राणां मनोरञ्जनाय प्रभवतीति विवेकः।

## गीतिकाव्यकारः श्रीजयदेवः

संस्कृतगीतिकाव्यस्याप्रतिमः कविर्जयदेवः जन्मना बङ्गभूमौ कन्दुबिल्वनामग्राममलञ्चकार। जनकोऽस्य भोजदेवो जननी च पुना राधादेवी। नृत्यकलाकुशला पद्मावती चास्य पत्नीपदविभूषिता। तथाहि गीतगोविन्देऽसौ वर्णयति 'पद्मावतीचरणचारणचक्रवर्ती'। पद्मावती जयदेवस्य गीतितालानुगुण्येन नित्यं

नृत्यति स्मेति जनश्रुतिः । बङ्गदेशनृपतेर्लक्ष्मणसेनस्य सभापण्डितमण्डलस्रजि मध्यमणिरिवासौ व्यराजत । तत्र गयाप्रदेशे समुपलब्धेन शिलालेखेन लक्ष्मणसेन-समयः ११९६ मिते क्रीस्तीये अवसीयते । तदस्य कवेरपि स्थितिकालः कैस्त-एकादशशत (११००) मित एवेति गम्यते । आर्यासप्तशतीप्रणेता गोवर्द्धनाचार्य-श्चाऽस्य समसामयिकः । तथा च :—

वाचः पल्लवयत्युमापतिधरः सन्दर्भशुद्धिं गिरां ;
जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुतेः ।
शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्धन-
स्पर्धी कोऽपि न विश्रुतः श्रुतिधरो धोयी कविक्ष्मापतिः ।। इति ।

गीतगोविन्दं नाम गीतिकाव्यमस्याद्भुतचमत्कृतिपूर्णा कृतिः । केचन महानुभावाः काव्यमिदं शृङ्गारमहाकाव्यमिति नाम्नाऽपि व्यपदिशन्ति । गीतगोविन्दे भावानुभूतेरभिव्यञ्जना सुतरामाविष्कृताऽवधार्यते । संस्कृतसाहित्ये गीतिचर्चितरचनाप्रणाल्याः सर्वप्रथमप्रवर्त्तकः श्रीजयदेव एव[1] । राधाकृष्णयोः केलिकथाः रहस्यानुनयः अभिसारलीला च गीतगोविन्दं प्रगुणतया सरसमारचयति । प्रलम्बसमस्तपदप्रयोगप्राचुर्येऽपि काव्यमिदं रमणीयतां न विजहाति, प्रवाहयति चानवच्छिन्नां वाग्विलासोल्लासधाराम् । तद्यथा वसन्तरागः यतितालाभ्यां गीयते :—

ललितलवङ्गलतापरिशीलनकोमलमलयसमीरे ।
मधुकरनिकरकरम्बितकोकिलकूजितकुञ्जकुटीरे ।।

कृष्णो गोपाङ्गनाभिः संक्रीडति :—

चन्दनचर्चित – नीलकलेवर – पीतवसन – वनमाली ।
केलिचलन्मणिकुण्डलमण्डित - गण्डयुगः स्मितशाली ।।
हरिरिह मुग्धवधूनिकरे विलासिनि विलसति केलिपरे ।
पीनपयोधरभारभरेण हरिं परिरभ्य सरागम् ।
गोपवधूरनुगायति काचिदुदञ्चितपञ्चमरागम् ।। इति ।

पुनश्च राधिका-सखी तद्विरहपीडां कृष्णं प्रति निवेदयति :—

निन्दति चन्दनमिन्दुकिरणमनुविन्दति खेदमधीरम् ।

---

१. अस्या अभिनवरचनाप्रणाल्याः जयदेवेनैव सूत्रपातो व्यधायि । तदनु तत्सरणिमनुसृत्य गीतराघव–गीतगङ्गाधर–अभिनवगीतगोविन्दप्रभृतीन्यनेकानि गीतिकाव्यानि प्रादुर्भूतानि ।

व्यालनिलयमलिनेन गरलमिव कलयति मलयसमीरम्।
माधव मनसिजविशिखभयादिव भावनया त्वयि लीना॥
सा विरहे तव दीना।

अपि च :--

वहति च वलित-विलोचन-जलधरमाननकमलमुदारम्।
विधुमिव विकटविधुन्तुददन्तदलन-गलितामृतधारम्॥ इति।

किञ्च :--

विहरति हरिरिह सरसवसन्ते।
नृत्यति युवतिजनेन समं सखि विरहिजनस्य दुरन्ते।
उन्मद - मदन-मनोरथ - पथिक - वधूजन - जनितविलापे।
अलिकुल - संकुल - कुसुमसमूह–निराकुल–वकुल–कलापे।
मृगमदसौरभरभसवशंवद – नवदलमालतमाले।
युवजन–हृदय–विदारण–मनसिज–नखरुचि-किंशुकजाले।
मदनमहीपति – कनकदण्डरुचि – केसरकुसुम – विकासे।
मिलित–शिलीमुख–पाटलि–पटल–कृतस्मरतूर्ण–विलासे॥

अपि च--

हरिं प्रति गन्तुं सखी राधिकां कया रागात्मिकया प्रासादिकरीत्योत्प्रेरयति :--

रतिसुखसारे गतमभिसारे मदनमनोहरवेशम्।
न कुरु नितम्बिनि गमनविलम्बनमनुसर तं हृदयेशम्॥
धीरसमीरे यमुनातीरे वसति वने वनमाली।
गोपी - पीन - पयोधर - मर्दन - चञ्चलकर - युगशाली॥
मुखरमधीरं त्यज मञ्जीरं रिपुमिव केलिसुलीलम्।
चल सखि कुञ्जं सतिमिरपुञ्जं शिथिलय शीलनिचोलम्॥ इति।

गीतगोविन्दे यमकाऽनुप्रासालङ्कारैर्यादृशी भावव्यञ्जना आविष्कृता सा साहित्यान्तरे दुरवापैव। यावन्मात्रं भाषायां माधुर्यं तावन्मात्रमेव भावेषु सौन्दर्यम्। गीतगोविन्दस्य कोमलकमनीयपदावलिः वसन्तोपवनकोमलकिसलयावलिमनुहरति। नूतनपाटलकुसुमानामरुणिमा तदीयशैलीसुषमामनुसरति। रसानां सरसो विलासश्च नैकविधकुसुमविकासमुपस्थापयति। किं बहुना, गीतकाव्यमिदं वसन्तप्रतिच्छायामेवाभिव्यनक्ति भूयस्तया इति।

अहो अस्य काव्यमाधुरी सुधास्यन्दिनिर्झरीव कियदमन्दहृदयानन्दमातनोति। जयदेवस्य गर्वोक्तिरियं :—'सन्दर्भशुद्धिं गिरां जानीते जयदेव एव' सुतरां जुषते सामञ्जस्यम्। तदीया आत्मप्रशंसाऽपीयं सर्वथा संघटते तदीयकाव्यविषये :—

यदि हरिस्मरणे सरसं मनो,
यदि विलासकलासु कुतूहलम्।
मधुर – कोमल – कान्तपदावलीं,
शृणु तदा जयदेव - सरस्वतीम्॥

वस्तुतः शृङ्गाररसंवलितं विलासलास्यसम्भृतं सुललितं काव्यमिदं सर्वाणि गीतिकाव्यान्तराणि अतिशेते। न कोऽपि गीतिकविः जयदेवस्य कोटिमद्ययावदवजगाहे। सत्यमेवोक्तं त्रिविक्रमभट्टैः महाभागैः —

प्रसन्नाः कान्तिहारिण्यो नानाश्लेषविचक्षणाः।
भवन्ति कस्यचित्पुण्यैर्मुखे वाचो गृहे स्त्रियः॥

भणितिरियं जयदेवजीवने कार्त्स्न्येन संघटते।

अद्यापि अस्य कवेर्जन्मपरिग्रहग्रामे प्रतिवर्षमस्य पुण्यतिथौ, महानुत्सवो भवति यत्र भक्तवृन्दैर्गीतगोविन्दमद्यापि महता समारम्भेण गीयते। महाकाव्यमेतद् द्वादशसर्गप्रणिबद्धं दक्षिणापथेऽष्टपदीति नाम्नाऽपि प्रसिद्धम्। श्रीकृष्णस्य राधिकायाश्च प्रेमोल्लासविलासाः पल्लविताः। गीतानि च सकलानि रागतालादिसमन्वितानि। अतस्तत्कर्त्तुः सङ्गीतशास्त्रविशेषज्ञता सुतरां व्यक्तीभवति तावता। काव्येऽस्मिन् विप्रलम्भसम्भोगयोरुभयोरपि शृङ्गाररसयोः समीचीनः परिपाको दृष्टिपथमवतरति। प्रसादानुप्रासमाधुर्यमत्र अनन्यसामान्यतयोद्वेल्लितमिवाभाति। कविश्च पुनरयं स्वयमेवोपश्लोकयति :—

साध्वी माध्वीक ! चिन्ता न भवति भवतः शर्करे ! कर्कशाऽसि,
द्राक्षे ! द्रक्ष्यन्ति के त्वाममृत ! मृतमसि क्षीर ! नीरं रसस्ते।
माकन्द ! क्रन्द कान्ताऽधर ! धरणितलं गच्छ यच्छन्ति भावं,
यावच्छृङ्गारसारस्वतमिह जयदेवस्य विष्वग्वचांसि॥

एतदेवास्य निरतिशयलोकप्रियत्वं सूचयति यन्नाम काव्यस्यास्य त्रिंशत्सङ्ख्याकाष्टीकाः समुल्लसन्ति। टीकाकृत्सु च प्रौढनैय्यायिकाः उदयनाचार्य–शङ्करमिश्रसन्निभाः, गङ्गाभट्टसङ्काशाश्च प्रगल्भमीमांसकाः अपि विलसन्ति। नूनं गीतिकाव्यमिदं संस्कृतसाहित्यालङ्कारभूतम्।

कविवरजयदेवविरचितं गीतगोविन्दं नाम सुललितं गेयकाव्यमधुनापि

भारते महता समारम्भेण जेगीयते रसिकैः[1] । सङ्गीतविषयकाः सन्दर्भाः बहुशः कालवृकोदरेऽवतीर्णा विदीर्णा जीर्णाश्च संवृत्ताः । तथापि लभ्यमानेष्वपि सन्दर्भेषु सुबहूपक्रान्तमाचार्यैः[2] । न तद्ग्रन्थगौरवभयादुट्टङ्कयते इति संक्षेपः ।

———

१. यथा :—'हरिरिह विहरति यमुनातीरे ।'
ललितलवंगलतापरिशीलन-
कोमलमलयसमीरे ।
मधुकरनिकरकरम्बितकोकिल-
कूजितकुञ्जकुटीरे ॥

२. तथा च :—
सप्त स्वरास्त्रयो ग्रामा मूर्च्छनाश्चैकविंशतिः ।
तालास्त्वेकोनपञ्चाशत् तिस्रो मात्रा लयास्त्रयः ॥
स्थानत्रयं यतीनाञ्च षडास्यानि रसा नव ।
रागाः षट्त्रिंशत्तु भावाश्चत्वारिंशत्ततः स्मृताः ॥

# धर्मशास्त्रम्

१—स्मृतिसाहित्यम् । २—मनुस्मृतिः । ३—याज्ञवल्क्यस्मृतिः । ४—पाराशरस्मृतिः ।

## स्मृतिसाहित्यम्

गीर्वाणवाणीवाङ्मयमहार्णवालोडनोत्थसाररूपं तत्त्वं यद्यपि समासेनेह प्रपञ्चितम् । तथापि तदतिरिक्तमन्यदपि विशदं साहित्यं वर्त्तते यदनुस्मरणं नाम खल्वन्याय्यं भवेदिति सङ्ग्रहेण किञ्चित्तदपि प्रस्तूयते । तच्च नाम साहित्यं पुरुषार्थसाहित्यनाम्नाभिधातुं शक्यते। पुरुषमात्रेणार्थनीयत्वाद्धि तत्पुरुषार्थसाहित्यमुच्यते। परमर्षिभिः शास्त्रकृद्भिर्लोकानुजिघृक्षया, धर्म-अर्थ-काम-मोक्षेतितत्त्व-चतुष्टयं परमपुरुषार्थत्वेन निर्दिष्टम्। तदेतद्विशदीकरणार्थं तत्ववेत्तृभिः धर्मशास्त्रम्, अर्थशास्त्रं, कामशास्त्रं, मोक्षशास्त्रञ्चेति शास्त्रचतुष्टयं प्रणीतम् ।

तत्र तावद् धर्मशास्त्रम् सर्वेषां शास्त्राणामाधारभूतम्। धर्मशास्त्रस्याविर्भावस्तु वैदिककाल एव सञ्जातः। वेदाङ्गेष्वन्यतमानां किल सूत्राणां मध्ये धर्मसूत्राणां किमपि महत्त्वपूर्णं पदम्। तानि धर्मसूत्राण्युपजीव्यैव धर्मशास्त्राणां प्रवृत्तिः। तेषु च आचार-व्यवहार-प्रायश्चित्तेति विषयत्रयं प्राधान्येनोपन्यस्यते। तत्राचारखण्डे वर्णाश्रमधर्मोपदेशस्य विशदस्य प्रतिपादनम् । व्यवहारखण्डे च राजप्रजाधर्माणां विवरणम् । प्रायश्चित्तीयप्रकरणे च पुनः ज्ञानाज्ञानकृतानां पापानां पातकानाञ्च निराकरणाय विविधप्रायश्चित्तानां विधानं पल्लवितं भवति। यद्यपि नैष नियमस्सार्वत्रिकस्तथापि भूम्ना इमे एव विषया अनुशास्यन्ते धर्मशास्त्रैरङ्गेणेति।

यद्यपि स्मृतिग्रन्थाः सन्ति भूयांसः। तेषां संख्या प्रायशः पञ्चाशत्सङ्ख्यामतिक्रमते । तद्यथा—मनुस्मृतिः, नारदीयस्मृतिः, अत्रिस्मृतिः, विष्णुस्मृतिः, दक्षस्मृतिः, आङ्गिरसस्मृतिः, शातातपस्मृतिः, पाराशरस्मृतिः, बृहत्पाराशरस्मृतिः, लघुहारीतस्मृतिः, वृद्धहारीतस्मृतिः, याज्ञवल्क्यस्मृतिः, कात्यायनस्मृतिः, आपस्तम्बस्मृतिः, लघुशङ्खस्मृतिः, शङ्खस्मृतिः, वशिष्ठस्मृतिः, औशनसस्मृतिः, व्यासस्मृतिः, प्रजापतिस्मृतिः, आश्वलायनस्मृतिः, बौधायनस्मृतिः, गोतमस्मृतिः,

वृद्धगोतमस्मृतिः, यमस्मृतिः, अरुणस्मृतिः, पुलस्त्यस्मृतिः, काश्यपस्मृतिः, व्याघ्रपादस्मृतिः, देवलस्मृतिश्चेत्याद्याः।

## मनुस्मृतिः

सर्वास्वपि एतासु स्मृतिषु मनु-याज्ञवल्क्यस्मृत्योरेव प्राधान्यं परप्रामाण्यञ्चाङ्गीक्रियते विद्वद्वरेण्यैः। तत्रापि विशेषतः मनुस्मृतेरेव।

'यन्मनुरवदत् तद् भैषजम्' इति।

मनुस्मृतिरियं द्वादशभिरध्यायैरुपनिबद्धा। यद्यप्यनेकाष्टीका आटीकितास्तथापि मेधातिथि-कुल्लूकभट्टयोस्तास्वतिप्रसिद्धे महत्त्वशालिन्यौ प्रमाणभूते चेति। धर्मं लिलक्षयिषुः भगवान् मनुराह :—

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्॥

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥

श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रन्तु वै स्मृतिः।
ते सर्वार्थेषु मीमांस्ये ताभ्यां धर्मो हि निर्बभौ॥ इति।

क्रमागतानां चतुर्णां वर्णानां कर्त्तव्यं कर्म निर्दिश्यते—

अध्यापनमध्ययनं यजनं याजनं तथा।
दानं प्रतिग्रहश्चैव ब्राह्मणानामकल्पयत्॥

प्रजानां रक्षणं दानमिज्याऽध्ययनमेव च।
विषयेष्वप्रसक्तिश्च क्षत्रियस्य समादिशत्॥

पशूनां रक्षणं दानमिज्याऽध्ययनमेव च।
वणिक्पथं कुसीदञ्च वैश्यस्य कृषिमेव च॥

एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत्।
एतेषामेव वर्णानां शुश्रूषामनसूयया॥

परीक्ष्यैव धर्मस्वरूपो बोद्धव्यः—

एको वेदविद्धर्मं यं व्यवस्येद् द्विजोत्तमः।
स विज्ञेयः परो धर्मः नाज्ञानामुदितोऽयुतैः॥

इत्यादिकं प्रमाणभूतं तत्त्वं सर्वैरस्ततन्द्रमनुष्ठेयम् इति।

## याज्ञवल्क्यस्मृतिः

मनुस्मृतेरनु याज्ञवल्क्यस्मृतिरतीव प्रतिष्ठास्पदीभूता विराजते। महर्षियाज्ञवल्क्यविरचितेयं स्मृतिः परमप्रमाणभूताऽभिमन्यते शास्त्रज्ञैः। विद्वद्वरेण विज्ञानेश्वरेण दाक्षिणात्ये जनपदे एकादशशताब्द्यां मिताक्षरा नाम्नी टीका विरचिता। स एव विज्ञानेश्वरः चालुक्यवंशावतंसीयषष्ठविक्रमादित्यनृपतेः राजपण्डित आसीत्। अद्यत्वे सर्वस्मिन् भारते मिताक्षरायाः प्रामाण्यं स्वीक्रियते विशिष्य तु दायभागानुबन्धिविषये एकं बङ्गदेशं विहाय। बङ्गेषु तु तत्र जीमूतवाहनस्मृतेः प्रामाण्यमाद्रियते।

याज्ञवल्क्यस्मृतिरियं भूम्ना मनुस्मृतिनैव संवदति। धर्मलक्षणं प्रतिपादयन् ऋषिराह :—

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम्॥
इज्याचारदमाहिंसादानं स्वाध्यायकर्म च।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्॥

## पाराशरस्मृतिः

याज्ञवल्क्यस्मृतेरनन्तरं कलौ पाराशरस्मृतेर्मान्यता जोघुष्यते।

'कलौ पाराशरः स्मृतः।' इति।

एतामुद्दिश्य माधवाचार्यापरनामधेयेन श्रीविद्यारण्यस्वामिना पाराशरमाधवाभिधं विशदं प्रामाणिकञ्च भाष्यमारचितम्। यस्य रचनाकालः चतुर्दशशतके विभाव्यते। स एव धर्मशास्त्रविषयः संक्षेपतः। अतोऽनन्तरं अर्थः। तद्विषयकार्थशास्त्रविषयेऽधुना किञ्चित्प्रस्तूयते।

——————

# अर्थशास्त्रम्

१—राजधर्मविषयका ग्रन्थाः। २—अर्थशास्त्रस्य राजतन्त्रत्वम्। ३—कौटलीयार्थशास्त्रस्य प्राधान्यम्। ४—किमिदमर्थशास्त्रं नाम? ५—राजधर्मः। ६—उपधाचतुष्टयम्। ७—गुप्तचराणां वेशः। ८—मन्त्रिमण्डलं कीदृशं स्यात्? ९—कोशसंरक्षणम्। १०—रत्नमौक्तिकादिविवरणम्। ११—गोहन्ता वध्यः। १२—स्त्री—धनकल्पः। १३—कौटलीयार्थशास्त्रस्य सूक्तयः। १४—चाणक्यकालः। १५—चाणक्यस्य अन्याः कृतयः। १६—चाणक्यात्पूर्वतना आचार्याः। १७—चाणक्यस्यालौकिकप्रतिभाशालित्वम्। १८—वेधसे विष्णुगुप्ताय नमः।

## राजधर्मविषयका ग्रन्थाः

यद्यपि संस्कृतसाहित्ये राजधर्मप्रतिपादकेषु ग्रन्थेषु बहूनां नामान्युद्धरणानि च दृग्गोचरीक्रियन्ते तथाऽपि अस्माकं दुर्भाग्यधेयात् प्रायः तेषु बहवो विलुप्ता एव विभाव्यन्ते। यद्यपि महाभारतादिषु इतिहासग्रन्थेष्वपि प्रकरणशः राजतन्त्रविषयाः चर्चिताः। पुराणेष्वपि एष विषयो बहुत्र पल्लवितः। बौधायनादिप्रणीतेषु सूत्रग्रन्थेष्वपि संस्पृष्टः। अर्थशास्त्रमुद्दिश्य अनेकैः नीतिनिपुणैः अर्थशास्त्रचणैर्विद्वद्भिः अनेके अर्थशास्त्रसंदर्भाश्च प्रणिबद्धाः। परं तेषु अल्पिष्ठा एव सम्प्रत्युपलभ्यन्ते इति कस्य मनस्विनो मनो न दुनोति।

प्रमुखास्तु तेषु अर्थशास्त्रग्रन्थनिर्मातृषु कात्यायन-किञ्जल्क-चारायण-कणिक-भरद्वाज-पाराशर-शुक्र-बृहस्पति-मन्वादय आसन् सप्तदश अर्थशास्त्रपारदृश्वान इति तत्तद्ग्रन्थोपनतैस्तत्तन्नाम्नोद्धरणैर्विज्ञायते परं तेषु कौटल्यः प्रधानतमः। तेन प्रणीतमिदं कौटलीयमर्थशास्त्रमपि विद्वद्भिः प्रधानतमत्वेनाद्रियते। सोऽयं कौटिल्यः आर्यचाणक्यनाम्नापि संस्मर्यते। एतच्चार्थशास्त्रं बह्वर्थसंवलितम्। इदानीन्तनैः परिभाषितमर्थशास्त्रं, भारतीयपरिभाषायां वार्त्ताशास्त्रमित्यभिधीयते। "कृषिपशुपाल्ये वाणिज्ये च वार्त्ता, धान्यपशुहिरण्यकुप्यविष्टिप्रदानाद् औपकारिकी" इति स्वयं कौटल्यो लक्षितवान्। राजसंस्थाया व्यवहारपथप्रदर्शकं वार्त्ताशास्त्रमिदं नितरामपेक्षणीयम् भवति अतएव राजभी राजपुरुषैश्च शास्त्रमेतदवश्यं परिशीलनीयम्।

## अर्थशास्त्रस्य राजतन्त्रत्वम्

न खल्विदं वार्त्ताशास्त्रमस्मात्रयाऽपि राजतन्त्राद् भिद्यते अपित्वतिसन्निकृष्टतयैव तेन सह सम्बध्यते। तदिदमर्थशास्त्रं कौटल्यापरनामधेयेन द्विसहस्रसम्वसरात्प्राक् प्रादुर्भूतेनार्यचाणक्येन भूसुरेण राज्ञश्चन्द्रगुप्तमौर्यस्य मुख्यामात्यपदमलङ्कुर्वाणेन विरचितं तद्राज्यव्यवस्थासम्पादनार्थम्। एष एव ग्रन्थः राजनीतितन्त्रेषु प्राचीनतमो विभाव्यते।

शुक्रनीतिसमाख्यस्य ग्रन्थस्य रचना, कौटल्यार्थशास्त्रादनेकशताब्द्यनन्तरं सम्पन्ना। अस्मिन् सन्दर्भेऽपि राजतन्त्रस्य विशदं विवरणमुपलभ्यते। कामन्दकीयनीतिसारोऽपरो राजनीतिपरो ग्रन्थो गुप्तकालीनः। ग्रन्थोऽयं कौटल्यार्थशास्त्रस्य छायामेव प्रायशोऽनुहरति। अपरश्च मित्रमिश्रविरचितः राजनीतिप्रकाशाख्यो ग्रन्थः। मित्रमिश्रोऽयं मध्यभारतस्य राज्ञो वीरसिंहदेवस्य सभापण्डित आसीत्। अन्यश्चैको राजनीतिरत्नाकराख्यो ग्रन्थः श्रीचण्डेश्वरप्रणीतः। एवमादयो बहवो ग्रन्था आसन्। परन्तु आर्यचाणक्यकृतकौटलीयार्थशास्त्रस्य ते मनागपि तुलां नाधिरोहन्ति इति प्रस्फुटम्।

## कौटलीयार्थशास्त्रस्य प्राधान्यम्

विष्णुगुप्तापरनामधेयः कौटल्यः चाणक्यो वा राजतन्त्रज्ञसार्वभौमः कौटलीयार्थशास्त्रस्य प्रणेता। एतद्ग्रन्थारम्भे "ओम् नमः शुक्रबृहस्पतिभ्याम्' इत्यनेन स्वपूर्वकालिकानां अर्थशास्त्रप्रणेतॄणामाचार्याणां नामग्राहं नमस्करणात् स आत्मनः प्रागपि अर्थशास्त्रस्य सद्भावं सूचयति। अतएव "सर्वशास्त्राण्युपक्रम्य प्रयोगमुपलभ्य चे"त्यंशेन स्वपूर्वभवानां मनु-भारद्वाज-विशालाक्ष-पाराशर-पिशुन-कौणपदत्तप्रभृतीनां राजनीतिज्ञानामाचार्याणां राजतन्त्रविदां मतानि पर्यालोच्यास्मिन् सन्दर्भे गुम्फितानीत्यपि ध्वन्यते। स चायं सारगर्भः सन्दर्भः राज्ञे चन्द्रगुप्ताय राज्यशासनस्य निर्वहणविधिप्रदर्शनार्थमेव[1] गुम्फितः। प्रायशः महापुरुषोऽयं २२५० वर्षपूर्वं भारतवर्षमार्यावर्त-देशम् स्वजन्मना अलमकार्षीदिति कालविदो वदन्ति। 'कामन्दकीयनीतिसार' ग्रन्थस्यारम्भे विष्णुगुप्ताय नमोवाचं वितन्वानो ग्रन्थकर्त्ता प्राह :—

---

१. सर्वशास्त्राण्युपक्रम्य प्रयोगमुपलभ्य च।
कौटल्येन नरेन्द्रार्थे शासनस्य विधिः कृतः॥

नीतिशास्त्रामृतं धीमानर्थशास्त्रमहोदधेः ।
समुद्दध्रे नमस्तस्मै विष्णुगुप्ताय[1] वेधसे ॥

अस्य ग्रन्थस्य भाष्यमपि स्वयं विष्णुगुप्त एव चकार ।

दृष्ट्वा विप्रपत्तिं बहुधा शास्त्रेषु भाष्यकाराणाम् ।
स्वयमेव विष्णुगुप्तश्चकार सूत्रञ्च भाष्यञ्च ॥

अस्य शास्त्रस्य फलश्रुतिमाख्यापयन् कौटल्यः पुनः प्राह––

एवं शास्त्रमिदं युक्तं एताभिस्तन्त्रयुक्तिभिः ।
अवाप्तौ पालने चोक्तं लोकस्यास्य परस्य च ॥
धर्ममर्थञ्च कामञ्च प्रवर्त्तयति पाति च ।
अधर्मानर्थविद्वेषानिदं शास्त्रं निहन्ति च ॥

धर्मम्, अर्थं, कामञ्च शास्त्रमिदं साधयति । अधर्मम्, अनर्थं, विद्वेषञ्च निहन्ति इति भावः ।

तदेवंविधं साफल्यं शास्त्रमिदं प्रसाधयति, इत्यत्र आत्मन एव निदर्शनमर्पयन् उपश्लोकयत्ति चाणक्यः ––

येन शास्त्रञ्च शस्त्रञ्च नन्दराजगता चमूः ।
अमर्षेणोद्धृतान्याशु तेन शास्त्रमिदं कृतम् ॥ इति ॥

तच्चेदं कौटलीयार्थशास्त्रं राजनीतिसन्दर्भेषु प्रधानभावं भजते । कौटलीयार्थशास्त्रञ्चैतत्पञ्चदशाधिकरणैः गुम्फितम् राज्यव्यवस्थापकोऽतीव सारगर्भः सन्दर्भो नूनं प्रशस्ततमः । तत्र प्रथमाधिकरणे––विनयाधिकारः, द्वितीयेऽध्यक्षप्रचारः, तृतीये धर्मस्थायनादिकं, चतुर्थे कण्टकशोधनम्, पञ्चमे योगवृत्तम्–– षष्ठे मण्डलयोनिः, सप्तमे षाड्गुण्यम्, अष्टमे व्यसनाधिकारिकः, नवमे अभियास्यत्कर्म, दशमे सांग्रामिकम्, एकादशतमे सङ्घवृत्तम्, द्वादशतमे आबलीयसम्, त्रयोदशतमे दुर्गालम्भोपायाः, चतुर्दशतमे औपनिषदिकम्, पञ्चदशतमे च तन्त्रयुक्तिः चाणक्यसूत्राणि च विलसन्ति ।

---

१. अस्य शास्त्रस्य प्रणेता विष्णुगुप्तश्चाणक्यः कौटल्यश्चेति त्रिभिर्नामभिः प्रख्यायते । तत्र विष्णुना गुप्तो रक्षित इति विष्णुभक्तेन तत्पित्रा नामकरणसंस्कारकाले कृता विष्णुगुप्त इति सांस्कारिकी संज्ञा । चणको देशविशेषस्तत्सम्बन्धाच्चाणक्य इति देशनिबन्धना संज्ञा । कुटलश्च कश्चन गोत्रप्रवर्त्तको महर्षिस्तस्य गोत्रापत्यमिति कौटल्य इति गोत्रनिबन्धना संज्ञेति विवेकः ।

अर्थशास्त्रं लिलक्षयिषुराचार्य आह––

"मनुष्याणां वृत्तिरर्थः। मनुष्यवती भूमिरित्यर्थः। तस्याः पृथिव्या लाभपालनोपायः शास्त्रम् अर्थशास्त्रमिति।"

या पृथिवी वसुधा–वसुमती–रत्नागर्भादिसमाह्वया प्रथिता, तस्या लाभः कथं, तत्पालनविधिर्वा कः? इत्यादि पथप्रदर्शकं यत् शास्त्रं तस्यान्वर्थसंज्ञेयं यदर्थ-शास्त्रं नामेति। एवंविधस्यार्थशास्त्रस्योल्लेखो दण्डिप्रभृभितिर्महाकविभिः स्व-रचनास्वपि कृत उपलभ्यते। तद्यथा दण्डी प्राह––

"अधीष्म तावद्दण्डनीतिम्। इयमिदानीमाचार्यविष्णुगुप्तेन मौर्यार्थे षड्भिः श्लोकसहस्रैस्संक्षिप्ता सैवेयमधीत्य सम्यगनुष्ठीयमाना यथोक्तकर्मक्षमेति।"

## राजधर्मः

राज्ञा तावत् चतस्रो विद्याः समभ्यसनीयाः। आन्वीक्षिकी, त्रयी, वार्त्ता, दण्डनीतिश्चेति। आसां संक्षिप्ता व्याख्या––

तत्रान्वीक्षिकी––(१) सांख्यं योगो लोकयतञ्चेत्यान्वीक्षिकी, (२) धर्मा-धर्मौ त्रय्याम्। (३) (क) अर्थानर्थौ वार्त्तायाम्[1]। (४) नयानयौ दण्डनीत्यां बलाबले चैतासाम्।

राज्ञा स्वशासनस्य राजदण्डस्य वोपयोगः साधूनां रक्षणाय दुर्जनानाञ्च दण्डनाय कर्त्तव्यः। असति तथा मात्स्यन्यायेन दुर्जनाः सज्जनान् पीडयिष्यन्ति। प्रजासु यत्र तत्र सत्ताया बलस्य चैव शासनादनवस्थाप्रसङ्गः सम्भवेदित्यतः कौटल्य आह :––

"तस्माल्लोकयात्रार्थी नित्यमुद्यतदण्डः स्यात्।"

विनयमूलो दण्डः प्राणभृतां योगक्षेमावहः। आचार्यचाणक्यः इन्द्रियजयमेव सर्वविधयानुष्ठेयत्वेनानुशास्ति। अवश्येन्द्रियो राजा सद्यो विनश्यति च :––

"तद्विरुद्धवृत्तिरवश्येन्द्रियश्चतुरन्तोऽपि राजा सद्यो विनश्यतीति।"

नृपेण धर्ममाचरता, पावित्र्यमनुपालयतैव काम्यकर्माणि साधनीयानि। सुखसम्पत्तिश्च भोग्या। यद्यपि तदर्थं 'अर्थ एव प्रधानः' परं तदर्थप्राप्तयेऽपि कर्हिचिदपि मर्यादा नोल्लङ्घनीया। आचार्याः अमात्याश्चापि तदर्थं तथैव सावधातव्याः।

समयावधानार्थं यन्त्रं 'छायानलिका प्रतोद' मित्याचक्षते। तदपि सावधान-तया रक्षणीयम् समयः परिपालनीय एव सर्वात्मना। राजरथं सञ्चालयितुमेकाकी

---

१. 'कृषि–पशुपाल्ये वाणिज्या' चेत्यपि वार्त्तायामेव संगृह्णन्ति।

नृपः अक्षमः। अतः योग्यान् सचिवनिवहान् तत्र नियोजयेत्। तेषां योग्यता च सम्यक् परीक्षणीया। योग्यतानिकषं प्रदर्शयति :—

"कार्यसामर्थ्याद्धि पुरुषसामर्थ्यं कल्पेत।"

## उपधाचतुष्टयम्

किञ्च राजनिष्ठापरिज्ञानार्थं कौटल्येन चतस्रो निकषात्मिका उपधाः कल्पिताः—धर्मोपधा, अर्थोपधा, कामोपधा, भयोपधा चेति।

*धर्मोपधा*—तत्र धर्मोपधा नाम पुरोहितद्वारा मन्त्रिणः राज्यनिष्ठायाः परीक्षणम्। राज्ञो विस्रम्भभाजः पुरोहितस्य कृत्रिमप्रकोपद्वारा केनाऽपि व्याजेन तदधिकारात्पृथक्कृत्य बहिष्करणम्। ततः स पुरोहितो मन्त्रिणमभ्येत्य राजानं निन्द्यात्, राज्ञश्च राज्यात्परिभ्रंशोद्योगः, तत्स्थाने च नृपान्तरस्य राज्याभिषेकः कर्त्तव्य इत्यादिभिर्वचोभिर्यदि सचिवः पुरोहितषड्यन्त्रपाशे न पतेत् तर्हि तदेवंविधं विश्वासपात्रं मन्त्रिणमेव राजा नियोजयेन्मन्त्रिपदे नान्यमिति राज्ञो विरुद्धः कृत्रिमो गूढाभिसन्धिर्हि धर्मोपधा उच्यते।

*अर्थोपधा*—अर्थोपधा च पुनर्या सेनापतिमुखेन राज्यनिष्ठाया अशेषविशेषपरीक्षा सा "सेनापतिरसत्प्रग्रहेणावक्षिप्तः सत्रिभिरेकैकममात्यमुपजापयेल्लोभनीयेनार्थेन राजविनाशाय सर्वेषामेतद्रोचते कथं वा तवेति—प्रत्याख्याने शुचिरित्यर्थोपधा।" [कौट०]

*कामोपधा*—काममालम्ब्य या परीक्षा सा कामोपधा। यथा काचिदन्तःपुरात् काञ्चिद् दूतीं मन्त्रिसमीपे सम्प्रेष्य राजमहिष्याः प्रेम तं प्रति निवेद्य सा त्वामाह्वयति रहः केलिं कलयितुमिति गोप्यतमं वृत्तञ्चैतद् रक्षणीयमिति निवेदयन्ती मन्त्रिणञ्च राज्ञ्याः प्रेमपाशैर्निगडयितुं प्रयतितुमारभेत कृत्रिमरूपेण। यदि नाम सचिवस्तत्पाशे न निपतति तर्हि स मन्त्रिपदे नियोजनीयो भवति। सेयं राजनिष्ठायाः परीक्षा कामोपधेति पदेन परिभाष्यते।

*भयोपधा*—चतुर्थी भयोपधा—"प्रवहणनिमित्तमेकोऽमात्यः सर्वानमात्यानावाहयेत्। तेनोद्वेगेन राजा तानवरुन्ध्यात्। कापटिकश्चात्र पूर्वावरुद्धस्तेषामर्थमानावक्षिप्तमेकैकममात्यमुपजपेत्—असत्प्रवृत्तोऽयं राजा, साध्वेनं हत्वा अन्यं प्रतिपादयिष्यामः। सर्वेषामेतद्रोचते कथं वा तवेति। प्रत्याख्याने शुचिरिति भयोपधा।

तदेवमुत्तीर्णसकलोक्तपरीक्षं सर्वोपधाशुद्धं जनमेव साचिव्ये राजा नियोजयेत्। प्राह च कौटल्यः—

तस्माद् बाह्यमधिष्ठानं कृत्वा कार्ये चतुर्विधे।
शौचाशौचममात्यानां, राजा मार्गेत सत्रिभिः॥

## गुप्तचराणां वेशः

गुप्तचरैः कीदृशो वेशो धारणीय इत्यत्रोच्यते 'कापटिकोदास्थितगृहपतिक–वैदेहक–तापसव्यञ्जनान्––सत्रि-तीक्ष्ण-रसद[1] भिक्षुकीश्चेति। अपि च–– 'परिव्राजिका, वृत्तिकामा, दरिद्रा, विधवा, प्रगल्भा-ब्राह्मण्यन्तःपुरे कृतसत्कारा महामात्रकुलान्यधिगच्छेत्।'

## मन्त्रिमण्डलं कीदृशं स्यात्

मन्त्रिमण्डले योग्यतमान् चतुरानाचारसम्पन्नानेव जनान् विबुधान् संगृह्णीयात्––न 'प्रमाद-मद-सुप्त-प्रलापकामादिरुत्सेक' इत्यादिदुर्गुणोपेतान्।

अपि च––"मन्त्रिभिः त्रिभिश्चतुर्भिर्वा सह मन्त्रयेत।" वस्तुतो मन्त्रिमण्डलमेव राज्ञां चक्षुः।

'इन्द्रस्य हि मन्त्रिपरिषदृषीणां सहस्रम्। तच्चक्षुः। तस्मादिमं द्व्यक्षं सहस्राक्षमाहुः।"

राज्ञः कर्त्तव्यमादिशति––

प्रजासुखे सुखं राज्ञः, प्रजानाञ्च हिते हितम्।
नात्मप्रियं हितं राज्ञः प्रजानां तु प्रियं हितम्॥

राज्ञो हि व्रतमुत्थानं यज्ञः कार्यानुशासनम्।
दक्षिणा वृत्तिसाम्यं च दीक्षितस्याभिषेचनम्॥

## कोशो हि मूलं राज्यस्य

अल्पकोशो हि राजा पौरजानपदानेव ग्रसते।
भूमि-मार्गवृक्षोपकरणानुग्रहणं कुर्यात्। (राजेति शेषः)
बाल-वृद्ध-व्याधित-व्यसन्यनाथाँश्च बिभृयात्।
दण्डविष्टिकराघातैः रक्षेदुपहतां कृषिम्।
स्तेनव्यालविषग्राहैः व्याधिभिश्च पशुव्रजान्॥
किञ्च––'अकृष्यायां भूमौ पशुभ्यो विवीतानि प्रयच्छेत्?'
कोष्ठागारे वर्षमानमरत्निमुखं कुण्डं स्थापयेत्।

---

१. ये बन्धुषु निःस्नेहाः क्रूराश्चालसाश्च ते रसदाः उच्यन्ते।

कोशो हि मूलं राज्यस्य। अतः राज्ञा कोशरक्षणं, तत्सम्वर्धनं यथाकालञ्च सम्यग्व्ययश्च नैपुण्येन साधनीयम् । कृष्यादिरक्षणम् । तदर्थं स्तेन-व्याल-विष-व्याधिग्राहादिभिः पशूनां रक्षणं, पशुभ्यश्च अकृष्यायां भूमौ ग्रासप्रकोष्ठजातं प्रदेयम् ।

राजकर्मचारिणः निसर्गतः चञ्चलवृत्तयः, अश्वादि[1]पशुवत् कर्मसु शिथिला भवन्ति ते यथावसरं तत्र तत्र प्रणोदितव्याः। ते राज्ञो धन[2]माहरन्ति अज्ञातदिशा अतः तेषां कार्याणि लेखपञ्जिकाश्च सुनिपुणं परीक्षणीयाः। आय-व्ययौ च निरीक्षणीयौ। नृपः दुर्ग-राष्ट्र-खनि-सेतु-वन-व्रज-वणिक्पान्थानाञ्च सम्यग-वेक्षणं विदध्यात्। एतादृशेषु राज्यसम्पद्वृद्धिकरेषु वस्तुतत्त्वेषु राज्ञा सावधानेन स्थातव्यम्। अग्रे च परराष्ट्रैः सह सन्धिपत्रादिलेखाः सावधानतया विधेयाः-- लेखप्रकाराश्चोपदिष्टा लेखगुणात्मकाः। 'सोऽव्यग्रमना राज्ञः सन्देशं श्रुत्वा निश्चितार्थं लेखं विदध्यात्। "अर्थक्रमः, सम्बन्धः, परिपूर्णता, माधुर्यमौदार्यं, स्पष्टत्वमिति लेखसम्पत्।" [3]लेखदोषाश्चापि निरूपिताः।

## कोशसंरक्षणम् रत्नमौक्तिकादिविवरणञ्च

कोशाध्यक्षण तावत्कोशागारे रत्नमौक्तिकानि सम्यक् परीक्ष्य संग्राह्याणि। तत्र मौक्तिकानां प्रकारा नामग्राहं प्रदर्शिताः। प्रायशः मौक्तिकानां प्रसवित्रीं नदीमालम्ब्यैव तानि तानि नामानि प्रदत्तानीति प्रतीयते। यथा ताम्रपर्णाख्यायां नद्यामुत्पन्नानि ताम्रपर्णिकानि। एवं रत्नान्यपि। यथा महेन्द्राख्यपर्वतात्प्राप्तानि माहेन्द्राणि। एवं पाशिम्य, कौलेय, स्रैतसीय, हैमवतानि बहुविधानि रत्नमौक्तिकानि वर्णितानि। तत्र मौक्तिकेषु--

'स्थूलं, वृत्तं, निस्तलं, भ्राजिष्णु, श्वेतं, गुरु, स्निग्धं देशविद्धञ्च प्रशस्तम्" इति।

एवं मौक्तिकानामष्टोत्तरैकसहस्रमिता जातयः प्रदर्शिताः।

## अध्यक्षाः

प्रशासनप्रबन्धार्थं राज्ञा तत्तद्विभागानुगुण्येन अध्यक्षा नियोक्तयाः। यथा-- गोऽध्यक्ष-अश्वाध्यक्ष-हस्त्यध्यक्ष-रथाध्यक्ष-पत्त्यध्यक्ष-मुद्राध्यक्ष-विवीताध्यक्ष, सेनाध्यक्षप्रभृतयः अध्यक्षाः नियोक्तव्याः।

---

१. अश्वसंधर्माणो हि मनुष्याः नियुक्ताः कर्मसु विकुर्वते।

२. "युक्ताः तथा कार्यविधौ नियुक्ता ज्ञातुं न शक्ता धनमाददानाः।"

३. अकान्तिर्व्याघातः पुनरुक्तमपशब्दः सम्प्लव इति लेखदोषाः।

## गोहन्ता वध्यः

गवां प्रकाराः प्रदर्शिताः। तासां शृंग-खुर-लाङ्गूलादीनाञ्च रागः आकृति-सामान्यानां परिचायकानि चिह्नानि चर्चितानि। गोवधस्य च सर्वथा निषेधः कृतः।

तत्र गोरक्षणमभिलक्ष्य आदिष्टं यत्:—

"स्वयं हन्ता घातयिता हर्त्ता हारयिता च वध्यः।" इत्यादेशः।

अश्वशालायाः वर्णनम्। "वडवा-वृष-किशोराणां एकान्तेषु" संरक्षणम्। "अश्वानां द्विरह्नस्नानं गन्धं माल्यञ्च दापयेत्।"

चातुर्वर्ण्यसंरक्षणम् जातिभेदाभावः, स्त्रीणां परिरक्षणं, विधवानां पुनर्विवाहः, पुत्रार्थाः स्त्रियः, अनेकपत्नीत्वं, पतित्यागः, दायभागः मिश्रविवाहः, सन्ततिरक्षणप्रभृतयः सामाजिकाः विषया अतीव नैपुण्येन प्रपञ्चिताः। अर्थशास्त्रेऽस्मिन् बहवो रासायनिकाः प्रयोगाः, विषाक्ता योगा शत्रुदलविनाशार्थं वापी-कूप-तडागादिजलानां विषीकरणम्, शस्त्रास्त्राणि विषाक्तानि कर्त्तव्यानि, इत्यादि विशदय्य निरूपितम्। एवं प्रायशः अनेके आश्चर्यकारिणो बहवो विषया अस्मिन्नर्थशास्त्रे निवेशिता दृश्यन्ते। तत्तद्विषयप्रतिपादनसरणिप्रतिपत्त्यर्थमपि किञ्चिदत्र प्रस्तूयते।

कौटलीयार्थशास्त्रे विनयाधिकारे प्रथमाधिकरणे षोडशं प्रकरणं राजप्रणिधिः।

"राजानमुत्तिष्ठमानमनत्तिष्ठन्ते भृत्याः। प्रमाद्यन्तमनुप्रमाद्यन्ति। कर्माणि चास्य भक्षयन्ति। द्विषद्भिश्चाति सन्धीयते। तस्मादुत्थानमात्मनः कुर्वीत। नलिकाभिरष्टधा रात्रिं विभजेत। छायाप्रमाणेन वा। त्रिपौरुषी-पौरुषी-चतुरङ्गुला च छाया मध्याह्न इति चत्वारः पूर्वे दिवसस्याष्टभागाः। तैः पश्चिमा व्याख्याताः।"

* * * *

एवं समयविभागं प्रदर्शयन्नाह:—

"तत्र पूर्वे दिवसस्याष्टभागे रक्षाविधानमायव्ययौ च शृणुयात्।
तृतीये स्नानं भोजनं सेवेत स्वाध्यायञ्च कुर्वीत।
प्रतिष्ठितेऽहनि सन्ध्यामुपासीत।"

ततोऽग्रे--"आत्मानुकूल्येन वा निशार्हभागाम् प्रतिविभज्य कार्याणि सेवेत।

सर्वमात्ययिकं कार्यं शृणुयान्नातिपातयेत्।
कृच्छ्रसाध्यमतिक्रान्तमसाध्यं वा विजायते॥

*  *  *  *

तस्मान्नित्योत्थितो राजा कुर्यादर्थानुशासनम्।
अर्थस्य मूलमुत्थान[1]मनर्थस्य विपर्ययः॥

अनुत्थाने ध्रुवो नाशः प्राप्तस्यानागतस्य च।
प्राप्यते फलमुत्थानाल्लभते चार्थसम्पदम्॥" इति।

## स्त्री-धनकल्पः

मृते भर्त्तरि धर्मकामा तदानीमेवास्थाप्याभरणं शुल्कशेषं लभेत। कुटुम्बकामास्तु श्वशुरपतिदत्तं निवेशकाले लभेत। निवेशकालं हि दीर्घप्रवासे व्याख्यास्यामः।

न्यायोपगतायाः प्रतिपत्ता स्त्रीधनं गोपायेत। पतिदायं विन्दमाना जीयते। धर्मकामा भुञ्जीत। पुत्रवती विन्दमाना स्त्रीधनं जीयेत। तत्तु स्त्रीधनं पुत्रा हरेयुः। पुत्रभरणार्थं वा विन्दमाना पुत्रार्थं स्फीतीकुर्यात्....। अपुत्रा पतिशयनं पालयन्ती गुरुसमीपे स्त्रीधनं आ आयुःक्षयाद् भुञ्जीत। जीवति भर्त्तरि मृतायाः पुत्राः दुहितरश्च स्त्रीधनं विभजेरन्। अपुत्राया दुहितरः। तदभावे भर्त्ता। शुल्कमन्वाधेयमन्यम् वा बन्धुभिर्दत्तं बान्धवा हरेयुः इति।

अस्य हि सकलशास्त्रपारदृश्वनः ब्रह्मतेजसा प्रदीप्तस्य ब्राह्मणस्य स्वर्णसूक्तय ऋतम्भरास्तासु काश्चन उदाह्रियन्ते :—

## कौटलीयार्थशास्त्रस्य स्वर्णसूक्तयः

न कञ्चिदवमन्येत सर्वस्य शृणुयान्मतम्।
बालादप्यर्थवद् वाक्यमुपयुञ्जीत पण्डितः॥

ब्राह्मणेनैधितं क्षत्रं मन्त्रिमन्त्राभिमन्त्रितम्।
जयत्यजितमत्यन्तं शास्त्रानुगमशस्त्रितम्॥

---

१. उत्थानमत्रोद्यमः पुरुषार्थः।

तस्मान्नास्य परे विद्युः कर्म किञ्चिच्चिकीर्षितम् ।
आरब्धारस्तु जानीयुरारब्धं कृतमेव वा ॥

यथा योगपुरुषैरन्यान् राजाधितिष्ठति ।
तथाऽयमन्यबाधेभ्यो रक्षेदात्मानमात्मवान् ॥

अपि शक्या गतिर्ज्ञातुं पततां खे पतत्रिणाम् ।
न तु प्रच्छन्नभावानामुक्तानां चरतां गतिः ॥

पक्वं पक्वमिवारामात् फलं राज्यादवाप्नुयात् ।
आत्मच्छेदभयादामं वर्जयेत्कोपकारकम् ॥

एवं षड्भिर्गुणैरेतैः स्थितः प्रकृतिमण्डले ।
पर्येषेत क्षयात् स्थानं स्थानाद् वृद्धिञ्च कर्मसु ॥

अल्पागमाऽतिव्ययता क्षयो वृद्धिविपर्यये ।
समायव्ययता स्थानं कर्मसु ज्ञेयमात्मनः ॥

वृद्धि क्षयञ्च स्थानञ्च कर्शनोच्छेदनं तथा ।
सर्वोपायान् समादध्यादेतान् यश्चार्थशास्त्रवित् ॥

एवमन्योन्यसञ्चारं षाड्गुण्यं योऽनुपश्यति ।
स बुद्धिनिगलैर्बद्धैरिष्टं क्रीडति पार्थिवः ॥ इति ।

## चाणक्यस्य कालः

अथैतर्हि तत्रभवतोऽर्थशास्त्रप्रणेतुः आचार्यचाणक्यस्य स्थितिकालमुद्दिश्य किञ्चिद्विविच्यते । सकलशास्त्रनिष्णातोऽयं, मगधेषु कुसुमपुरे स्वपरिभवामर्षोत्तप्तस्तदधीश्वरान् नन्दान् समुन्मूल्य तदीये सिंहासने च चन्द्रगुप्तमभिषिषेचेति प्रसिद्धमैतिह्यं । तस्य चन्द्रगुप्तस्य स्थितिकालः ख्रीस्तपूर्वचतुर्थशताब्दी निर्णीयते कालकोविदैः । चाणक्यादर्वाचीनाः कामन्दकादयश्च स्मरन्ति तं तदीयार्थशास्त्रञ्च । किन्तु श्री शङ्करभगवत्पादशिष्यः सुरेश्वराचार्यो विश्वरूपाचार्यापरनामधेयः, बालक्रीडाख्यायां याज्ञवल्क्यस्मृतिव्याख्यायाम् अर्थशास्त्रस्मरणप्रसङ्गे कौटल्यं कौटलीयमर्थशास्त्रं वा कथन्न सस्मारेति जिज्ञासायामुच्यते, व्याख्याता हि परिचितात् स्वप्राक्कालभवात् समानवयस्काद्वा ग्रन्थान्तरादुद्धृत्य तत्तद्वस्तुतत्त्वं दर्शयितुं प्रक्रमते न जातुचित्तदर्वाक्कालजन्मनः सकाशात् । युक्तञ्चैतत्प्रतिभाति । तथा च विश्वरूपाचार्यः बार्हस्पत्यं वैशालाक्षं चार्थशास्त्रं भगवता याज्ञवल्क्येन विदितपूर्वमार्षग्रन्थममन्यत; अतस्तेनैवाभीष्टं साधितवानसौ । कौटलीयन्तु तदर्वाक्काल-

भवत्वान्न तत्र संस्मृतम् । कौटल्यस्य च याज्ञवल्क्यादर्वाचीनत्वे तु को नाम सन्दिह्येत किल ? यतः कौटल्यः स्वयं कतिपय-साहस-दण्डविधानपराणां केषाञ्चिद् याज्ञवल्क्यक्स्मृतिपठितानां वचसां छायां शब्दतोऽर्थतो वा स्ववचनैरनुविदधान आत्मनो याज्ञवल्क्यस्मृतेः परिचयं सूचयति । कानिचित्तेषु अधस्तादुदाहरामः --

करपाददन्तदण्डे छेदने कर्णनासयोः ।
मध्यो दण्डो व्रणोद्भेदे मृतकल्पहते तथा ॥

[याज्ञ० अ० २ श्लो० २२४]

एतच्छायामनुहरत्तावत्कौटलीयं वचनम्--

"मृतकल्पमशोणितं घ्नतो हस्तपादपराञ्चिकं वा कुर्वतः पूर्वः साहसदण्डः पाणिपाददन्तभङ्गे, कर्णनासाच्छेदने, व्रणविदारणे, चान्यत्र दुष्टव्रणेभ्यः ।" [कौट० अ० १९] ।

किञ्च--

स्वच्छन्द[1] विधवागामी विक्रुष्टेऽनभिधावकः ।
अकारणे च विक्रोष्टा चण्डालश्चोत्तमान् स्पृशन् ॥२४०॥
शूद्रप्रव्रजितानाञ्च दैवे पित्र्ये च भोजकः ।
अयुक्तं शपथं कुर्वन् अयोग्ये योग्यकर्मकृत् ॥२४१॥
वृक्षक्षुद्रपशूनाञ्च पुंस्त्वस्य प्रतिघातकः ।
साधारणस्यापलापी दासीगर्भविनाशकृत् ॥२४१॥
पितापुत्रस्वसृभ्रातृदम्पत्याचार्य – शिष्यकाः ।
एषामपतितान्योन्यत्यागी च शतदण्डभाक् ॥२४३॥

इत्यादि याज्ञवल्क्यवचनानुबन्धीनि किल कौटलीयवाक्यानि :--

'विधवां छन्दवासिनीं प्रसह्याधिचरतः, चण्डालस्यार्यान् स्पृशतः, प्रत्यासन्नमापद्यनभिधावतो निष्कारणमभिधावनं कुर्वतः, शत्य[2] इति ।

* * * *

'शपथवाक्यानुयोगमनिसृष्टं कुर्वतो, युक्तकर्मणि चायुक्तस्य, क्षुद्रपशु-

---

१. स्वच्छन्दविधवागामी इत्यत्र स्वच्छन्दमिति पदं क्रियाविशेषणत्वेनोन्नेयम् । अस्य भावस्तु स्वेच्छया न तु विधवेच्छयापीत्यर्थः । कौटलीयवाक्ये च पुनः--"स्वच्छन्दवासिनीम्" छन्देन वसन्तीं तूष्णीं स्थिताम् अकामयमानामिति भावः । इति बहुशः याज्ञवल्क्यप्रतिपादितानर्थान् अनुहरति चाणक्यः ।

२. शत्यो दण्ड इति भावः ।

वृषाणां पुंस्त्वोपघातिनः। दास्याः गर्भमौषधेन पातयतश्च पूर्वः साहसदण्डः। पितृपुत्रयोर्दम्पत्योर्भ्रातृभगिन्योर्मातुभागिनेययोः शिष्याचार्ययोर्वा परस्परमपतितं त्यजतः स्वार्थाभिप्रायं ग्राममध्ये वा त्यजतः पूर्वः साहसदण्डः कान्तारे मध्यमः।" [कौटली० धर्मस्थी० अ० २०]

सर्वेष्वेतेषु कौटलीयवाक्येषु रेखाङ्कितपदान्येव केवलमधिकानि। अन्यानि तु याज्ञवल्क्यस्मृतिस्मृतान्येवेति सुस्पष्टम्।

पुनश्चाचार्योऽयं सर्वतन्त्रस्वतन्त्रप्रतिभः आर्षदृष्टिः राजनीतिचणो विचक्षणो विद्वान् आसीदिति तदीयकृतिकलापपर्यालोचनेन सुतरामवगम्यते। तथाहि--

## चाणक्यस्यान्ये सन्दर्भाः

भट्टस्वामी स्वव्याख्यायामध्यक्षप्रचाराधिकरणस्य द्वादशाध्याये 'शुल्वधातुशस्त्ररसे' त्यादिपदं व्याचिख्यासन् धातुकौटलीयाख्यं सन्दर्भं स्मरति। सुप्रसिद्धज्यौतिषाचार्यो वराहमिहिरोऽपि 'उक्तञ्चाचार्यविष्णुगुप्तेने'ति ज्योतिस्तन्त्रविषयकं श्लोकमुदाहरति बृहत्संहितायाम् :--

अप्यर्णवस्य पुरुषः प्रतरन् कदाचि-
दासादयेदनिलवेगवशेन पारम्।
नत्वस्य कालपुरुषाख्यमहार्णवस्य
गच्छेत्कदाचिदनृषिर्मनसापि पारम्॥ इति।

कामसूत्रजयमङ्गलायामपि च पुनः म्लेच्छितविकल्पविवरणप्रसङ्गे कौटलीयमपि सुस्मृतं भवति। तद्यथा--

दादेः क्षान्तस्य कादेश्च स्वरयोरुभयोरपि।
विन्दूष्मणो विपर्यासाद् दुर्बोधमिति संज्ञितम्॥ इति।

तदेतावताऽनुमीयते यत् तन्त्रान्तरेष्वप्यस्य महामेधाविन ऋषिकल्पस्य अव्याहतगतिरवश्यमेव सम्भवेदिति।

## चाणक्यात् पूर्वाचार्याः

आचार्यचाणक्यात्पूर्वमपि बहवोऽर्थशास्त्रप्रवर्त्तका आचार्या अभूवन्। यान् खलु नामग्राहमसौ विलक्षणो ब्राह्मणः समुपश्लोकयति। ते पूर्वाचार्यास्तावदेते दश तु प्रसिद्धाः :--

मनुः, बृहस्पतिः, शुक्रः, द्रोणः, विशालाक्षः, पराशरः, नारदः, भीष्मः, उद्धवः, इन्द्रश्चेति।

अत्र स्थालीपुलाकन्यायेनार्थशास्त्रस्य प्रतिपाद्या धर्मविषया पुनरुच्यन्ते—

## वर्णाश्रमप्रतिबद्धा जीवनमर्यादा हि राष्ट्रं धारयति

चाणक्यनयेन वर्णाश्रमधर्मौ हि राष्ट्रमूलाधारभूतौ। वर्णाश्रमप्रतिबद्धा हि जीवनमर्यादा राष्ट्रं धारयति। तत्र चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः। ब्राह्मणस्य स्वधर्मः "अध्ययनाध्यापनं, यजनं, याजनं, दानं, प्रतिग्रहश्चैवेति। क्षत्रियस्याध्ययनं, यजनं, दानं, शस्त्रजीवित्वं, भूतरक्षणञ्च। वैश्यस्य यजनं, दानं, कृषिपशुपाल्ये, वाणिज्या च। शूद्रस्य-द्विजातिशुश्रूषा, वार्त्ता, कारुकशीलकर्म च।"

चत्वार एवाश्रमाः ब्रह्मचर्य-गृहस्थ-वानप्रस्थ-संन्यासाश्चेति। तत्र गृहस्थस्य स्वकर्मजीवस्तुल्यैरसमानर्षिभिर्वैवाह्यमृतुगामित्वं देवपित्रतिथिभृत्येषु त्यागः। शेषभोजनञ्च।

[1]ब्रह्मचारिणः स्वाध्यायोऽग्निकर्माभिषेकौ भैक्षव्रतत्वमाचार्यपरायणी वृत्तिस्तदभावे गुरुपुत्रे सब्रह्मचारिणि च वा।

वानप्रस्थस्य ब्रह्मचर्यं भूमौ शय्या, जटाजिनधारणमग्निहोत्राभिषेकौ देवतापित्रतिथिपूजा वन्याहारश्च।

परिव्राजकस्य संयतेन्द्रियत्वमनारम्भो, निष्काञ्चनत्वं, सङ्गत्यागो, भैक्ष्यमनेकत्र अरण्यवासो, बाह्याभ्यन्तरञ्च शौचम्।

सर्वेषामहिंसा, सत्यं, शौचमनसूयानृशंस्यं क्षमा च।

स्वधर्मः स्वर्गायानन्त्याय च। तस्यातिक्रमे लोकः सङ्करादुच्छिद्यते।

तस्मात्स्वधर्मं भूतानां राजा न व्यभिचारयेत्।
स्वधर्मं संदधानो हि प्रेत्य चेह च नन्दति॥

अस्मिन् हि शास्त्रे मुख्यतः नृपेण शासनचक्रं कथमिव निर्वहणीयम्। का खलु शासनसरणिः तेनोपादेया इत्यादि सामान्यतो विशेषतश्च सर्वमत्र कयाऽपि विलक्षणया वाचोभङ्ग्या उपन्यस्तम्। राजा धर्मप्रधानः कर्मकुशलोऽप्रमादी, अरिदलप्रयुक्तकपटप्रतिविधानदक्षः विद्वान् प्रजाजनमेककुटुम्बमिव योगतः क्षेमतश्च सावधानतया समाकलयन् स्वपरिवारनिर्विशेषम् सर्वथा सर्वदा च राष्ट्ररक्षणे प्रगल्भते। राष्ट्रसमुन्नत्यर्थं न तत्किञ्चिदवशिष्यते यदत्र न प्रपञ्चितम्। प्रजाभ्यो

१. ब्रह्म वेदः तच्चरितुं शीलमस्येति ब्रह्मचारी। वने प्रकर्षेण तिष्ठतीति वनप्रस्थः, स एव वानप्रस्थः स्वार्थेऽण्। परित्यज्य सर्वं व्रजतीति परिव्राजकः संन्यासीत्यर्थः।

धनमुत्थापनम्, उत्थापितस्य च न्याय्यो विनियोगः, प्रजानां परस्परस्माद् युक्तोपयुक्ताध्यक्षामात्यप्रभृतिभ्यः राजवल्लभादिभ्यश्च पीडा यथा नोत्पद्यते यथा च ते राजकार्यहानिकरं किञ्चिदपि कदापि न चेष्टेरन्, तथा तन्निरीक्षणसरणिः, दृष्टदोषदण्डप्रणयनविधिश्च सम्यङ् निरूपितः। गूढपुरुषप्रणिधानं नाम साध्वसाधुवृत्तपर्यवेक्षणं नानाप्रकारं मन्त्रवद्राज्यतन्त्रस्य सञ्चालनमित्यादयोऽनेके समुपयुक्ता विषयाश्च निवेशिताः। स्वराज्यपरिरक्षणं, सति सिद्धे तस्मिन् पर-राज्याक्रमणादिप्रतिबन्धनं राज्ञः कर्त्तव्य-सर्वस्वभूतं यथा सम्यङ् निष्पन्नं स्यात्तथा तदनुष्ठानविधयः तत्साधका लोकोत्तरा मार्गाश्च प्रदर्शिता विविधाः। नूनं शास्त्रमिदं समानतन्त्रान्तरचक्रातिशाय्यत्यद्भुतचमत्कारकारितया तदुत्कर्षप्रकर्षस्य परां कोटिमाटीकमानं समुल्लसति राजतन्त्रप्राङ्गणे नात्र काचित्संशीतिः।

## चाणक्यस्यालौकिकी प्रतिभा

तत्रभवतश्चाणक्यस्य बृहद्ग्रन्थकर्त्तृत्वं, बहुद्रष्टृत्वं, बहुश्रुतत्वं लोकोत्तरप्रज्ञाप्रकर्षञ्चावलोक्य केचनाशङ्कन्ते यत् प्रकृतार्थशास्त्रप्रतिपादितं यावत्प्रमेयद्रष्टृत्वमेकस्य कर्तुर्न सम्भवति। अतोऽर्थशास्त्रमिदं चाणक्यनामधेयैः बहुभिः सम्भूय प्रणीतं स्यात् कालान्तरेण तदेकीकृतमनुमीयते, इति न तद्विचारसहम्। कुतः? यतो न हि सर्वशास्त्रावगाहिधिषणे धिषणोपमे कस्मिंश्चिल्लोकोत्तरप्रज्ञाप्रकर्षालङ्कृते पुरुषविशेषे सर्वज्ञकल्पत्वमपि नावगाहतेऽसम्भवत्वकोटिम्। किमुत पुनरेवञ्जातीयकालौकिकशास्त्रकर्तृत्वम्। प्रदीप्तप्रतिभावतामशेषशेमुषीकाणां साक्षाद्राजतन्त्रविग्रहवतां मानवविशेषाणां कृते नैतत्कथञ्चिदपि दुष्करं यदखिलविषयावगाहिशास्त्रप्रणयनन्नामेति विवेकः।

## वेधसे विष्णुगुप्ताय नमः

संकीर्तितञ्च कामन्दकेन[1] चाणक्यस्य बहुप्रमेयद्रष्टृत्वं बहुशास्त्रप्रणेतृत्वं वेधसा तुल्यत्वञ्चेति--

वंशे विशालवंशानामृषीणामिव भूयसाम्।
अप्रतिग्राहकाणां यो बभूव भुवि विश्रुतः॥
जातवेदा इवार्चिष्मान् वेदान् वेदविदां वरः।
योऽधीतवान् सुचतुरश्चतुरोऽप्येकवेदवित्॥

---

१. कामन्दकोऽयं क्रैस्तप्राचीनप्रथशमताब्द्यां स्थितः। चाणक्यासन्नकालिको ह्येष चाणक्यचरितस्य सुविशेषाभिज्ञो भवेदिति तु न वक्तव्यमपेक्षते।

यस्याभिचारवज्रेण वज्रज्वलन-तेजसः ।
पपातामूलतः श्रीमान् सुपर्वा नन्दपर्वतः ॥

एकाकी मन्त्रशक्त्या यः शक्त्या शक्तिधरोपमः ।
आजहार नृचन्द्राय चन्द्रगुप्ताय मेदिनीम् ॥

नीतिशास्त्रामृतं श्रीमानर्थशास्त्रमहोदधेः ।
य उद्दध्रे नमस्तस्मै विष्णुगुप्ताय वेधसे ॥ इति

* * * *

एवं शास्त्रमिदं युक्तमेताभिस्तन्त्रयुक्तिभिः ।
अवाप्तौ पालने चोक्तं लोकस्यास्य परस्य च ॥

धर्ममर्थञ्च कामञ्च प्रवर्त्तयति पाति च ।
अधर्मानर्थविद्वेषानिदं शास्त्रं निहन्ति च ॥

येन शास्त्रञ्च शस्त्रञ्च नन्दराजगता च भूः ।
अमर्षेणोद्धृतान्याशु तेन शास्त्रमिदं ततम् ॥

नूनं नास्तीत्यत्र कस्यापि प्रेक्षावतो वैमत्यम् यदाचार्यचाणक्यः आसीद् राजतन्त्रविशेषज्ञकुलगुरुः, परममेधावी, दुर्दान्तो नयसार्वभौमो विजेता च । न तादृशोऽद्भुतोद्भटः नीतिज्ञः जगति भूतो न भविष्यतीति धीरसाकलयामः इति ।

------

# अथ कामशास्त्रम्

१--कामशास्त्रस्य प्रणेता तत्प्रयोजनञ्च । २--कामशास्त्रस्यान्ये प्रणेतारः ।

संस्कृतसाहित्ये धर्मार्थकाममोक्षाख्यस्य पुरुषार्थचतुष्टयस्य महत्त्वमतितरां वैशिष्टचमावहति । एषु चतुर्ष्वेव सम्यक्तया प्रतिपन्नेषु अखिलमपि पुरुषार्थजातं परिसमाप्यते । तत्र धर्मस्याभ्यर्हितत्वादवशिष्टैस्त्रिभिः अर्थ-काम-मोक्षैः सह तत्साहचर्यं नियतवृत्त्या सम्बध्यते । धर्मपुरस्सरोऽर्थः, धर्मपुरस्सरः कामः, धर्मपुरस्सरो मोक्षश्चाधिगतो भवेन्नान्यथेति तदाशयः[1] । यत्रेदं स्मृतं भवति :--

परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ । [मनु०]

## कामशास्त्रस्य प्रणेता तत्प्रयोजनञ्च

भगवद्वात्स्यायनमुनिपाद एवास्य कामशास्त्रस्य प्रणेता । कामशब्दोऽयमभिलाषवचनः । ईप्सा, सङ्कल्पः, समीहा, कामना, स्पृहादयः शब्दाः काममेवाभिदधति । मानवमानसे समुत्पद्यमानं मनीषामात्रं कामशब्देनैव व्यपदेष्टुं शक्यते । कामप्रणोदित एव पुरुषः यस्मिन् कस्मिन् वा कर्मणि प्रवर्त्तते, नहि अकामः । तथा चोदाजहार भगवान्मनुः --

अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचित् ।
यद्यद्धि कुरुते किञ्चित्तत्कामस्य चेष्टितम् ॥

अन्येषान्तु कथैव का स्वयं भगवान् परमेश्वरोऽपि जगदिदं कामेनैव प्रसूते :-

'कामस्तदग्रे समवर्त्तताग्रे [ऋक्० ८।७।१७।५]

अग्रे जगदुत्पत्तेः प्राक् कामः सङ्कल्पः समजायत 'बहु स्याम् प्रजायेय' इत्यात्मकः । अतः कामस्य सर्वप्रवृत्तिनिमित्तकत्वं सर्वसम्मतम् । अन्यत्राऽपि--

"यत्कामास्ते जुहुमस्तन्नोऽस्तु ।' [यजुः०]

तदित्थं पुरुषेण कामनीया ये ये पदार्थास्तेषां सर्वेषां विधिव्यवस्थापकं शास्त्रं कामशास्त्रमुच्यते । तच्च भगवद्वात्स्यायनविरचितं कामशास्त्रमतिप्राचीनम् ।

अस्य धर्मार्थकाममोक्षाख्येषु पुरुषार्थेषु तृतीयस्थानमुपलम्भितस्य कामस्य विशदविवरणार्थमेव कामशास्त्रस्य प्रवृत्तिः । कामशास्त्रस्योद्देश्यं हि किला-

१. उक्तञ्च कालिदासेनापि :—

न धर्ममर्थकामाभ्यां ववाधे न च ते च तौ ।
नार्थं कामेन कामं वा सोऽर्थेन सदृशस्त्रिषु ॥ [रघु० १७।५७]

अर्थात् स राजा त्रिष्वपि धर्मार्थकामेषु तुल्यवृत्तिरभूदिति भावः ।

खिललोकहिताधानम्। कामप्रधाना हि लोकव्यापृतिर्भवति, अकामस्य प्रवृत्त्यभावादित्युक्तपूर्वम्। विशदार्थकोऽयं कामशब्दः नानङ्गकेलिकलापमेवाभिधत्ते केवलमपितु मानवजीवनस्य साफल्यार्थं ब्रह्मचर्यव्रतस्य सुसंयतजीवनस्य अपरिहार्यत्वमेवावेदयति लोकयात्रासिद्ध्यर्थम्। प्रवृत्तिपथपथिकैः आत्मकल्याणमभीप्सुभिः बुधैर्विविधमनःकामनावाप्तये कल्याणपथप्रदर्शकं शास्त्रमिदं सर्वात्मना समादरणीयम्। इहपरोभयलोकसाधकस्यास्य तन्त्रस्य सर्वोपयोगिविषयव्यवस्थापकस्य अनादरन्तु को नाम अनूचानः विषहेत ? अस्य संसारचक्रस्य निर्वहणार्थं कामशास्त्रानुशासनानि प्रतिपालनीयान्येव। कामशास्त्रस्य प्रयोजनमुद्दिश्य भगवान् वात्स्यायनः प्राह––

तदेतद् ब्रह्मचर्येण परेण च समाधिना।
विहितं लोकयात्रायै न रागार्थोऽस्य संविधिः॥
रक्षन् धर्मार्थकामानां स्थितिं स्वां लोकवर्त्तिनीम्।
अस्य शास्त्रस्य तत्त्वज्ञो भवत्येव जितेन्द्रियः॥ इति

तदेवं जीवनेन तपोमयेन ब्रह्मचर्यव्रतव्रतिना च भवितव्यम् न जातु रतिभोगविलासलालसावतेति कामशास्त्रस्यार्थनिष्कर्षः।

एतत्कामशास्त्रमुद्दिश्यैव श्रीमच्छङ्कराचार्येण जयमङ्गला नाम्नी प्रामाणिकी टीका आटीकिता। अस्मिन् हि मनुष्यजीवनस्य सुखसम्पत्समृद्ध्यर्थं यावन्तोऽपि विषया अपेक्ष्यन्ते ते सर्व एव प्रायशो विवेचिताः। वास्तुविज्ञानस्य, दाम्पत्यसम्बन्धस्य, सामाजिक–सांस्कृतिकविषयाणाञ्चोल्लेखः अतीव रमणीयतया कृतोऽवलोक्यते।

यद्यप्यद्यत्वे कामशास्त्रीयसन्दर्भाभिधेयाः पञ्चसायक-अनंगरंग-कलाविलास-कुट्टिनीमतप्रभृतयः ग्रन्था उपलभ्यन्ते परन्तु त एकदेशीया एव। न सर्वथा कामशास्त्रस्य प्रयोजनजातं साधयन्ति। वस्तुतः केवलमेकांशेनैवतद्विषयमुपवर्णयन्तस्ते कामशास्त्रस्यातिमहत्त्वपूर्णं तत्त्वार्थं व्याकुलीकुर्वन्ति, प्रच्यावयन्ति पुरुषमभीष्टादर्थात्। कामशास्त्रानुबन्धि बहुतरं साहित्यन्तु विलुप्तप्रायमेवेति खेदविषयः।

## कामशास्त्रस्यान्ये प्रणेतारः

यद्यपि कामशास्त्रस्य प्रणेतारो नन्दिनमारभ्य–औद्दालकिः, बाभ्रव्यः, दत्तकः, चारायणः, सुवर्णनाभः, घोटकमुखः, गोनर्दीयः, गोणिकापुत्रः, कुचुमारः, कक्कोकः, दैवज्ञसूर्य्यः, दण्डी, भरतादयो बहवोऽन्येऽप्याचार्या अभूवन् परन्तेषां रचना अद्यत्वे न सुलभोपलम्भाः। अद्यत्वे समुपलभ्यमानेषु ग्रन्थेषु कामसूत्र-रतिरहस्य-कामरत्न - मन्मथसंहिता-रसिकसर्वस्व-रतिमञ्जरी-मनसिजसूत्र-अनङ्गरङ्ग-कामप्रकाश–नागरवल्लभ–स्मरदीपिकाप्रभृतयः कामशास्त्रानुबन्धिनो बहुमूल्यप्रबन्धाः श्रुतिविषयतामुपयन्ति। विषयोऽयं भूयस्तरमनुसन्धानमपेक्षत इति।

------

# स्तोत्रसाहित्यम्

१--स्तोत्रसाहित्यस्य विशेषता। २--स्तोत्रसाहित्यप्रणेतारः। ३--जैन-बौद्धस्तोत्राणि।

## स्तोत्रसाहित्यस्य विशेषता

संस्कृतसाहित्ये स्तोत्रसाहित्यमप्यतीव विशिष्टं पदमधिकरोति। स्तोत्र-काव्येषु कवयो भक्तिभावेन भगवन्महिमवर्णनपुरस्सरं हृद्गतकोमलभावानां हृदयस्पर्शिवर्णनमभ्यर्थनां, याचनञ्चाभिव्यक्तीकुर्वन्ति कयापि हृदयहारिण्या वाण्या। एषु प्रायशः करुण-शान्त-रस-परिपोष एव स्फुरति भूम्ना। गीतिकाव्य-माश्रित्यैव स्तोत्राणि प्रवर्त्तन्ते अतएव तेषु मोहकता मूर्त्तिमतीव विराजते। यद्यपि स्तोत्रसाहित्यमिदमतीव विपुलं वर्त्तते, तस्य विशदवर्णनन्तु स्वतन्त्रग्रन्थमपेक्षते। तथापि तत्स्वरूपपरिचायनार्थं किञ्चित्समासत एवाऽत्र विविच्यते।

## स्तोत्रसाहित्यप्रणेतारः

अस्मिन् सुविशाले स्तोत्रप्रपञ्चे, कविवरपुष्पदन्ताचार्यविरचितस्य शिवमहिम्नस्तोत्रस्य प्रमुखं स्थानम्। यद्यपि अस्य स्थितिकालाभिजनादिविषये अज्ञातमेव सर्वमिदानीं यावत्, तथापि यतः राजशेखरेण स्वकाव्यमीमांसायां कृतोद्धरणेन, अस्य समयः दशमशतकपूर्वतन एव विभावयितुं शक्यते।

भगवतः शङ्करस्य गुणगणातीतत्वं संस्तुवन्नाह :--

असितगिरिसमं स्यात् कज्जलं सिन्धुपात्रे,
सुरतरुवरशाखा लेखनी पत्रमुर्वी।
लिखति यदि गृहीत्वा शारदा सर्वकालं,
तदपि तव गुणानामीश पारं न याति॥

मयूरभट्टः---भट्टमयूरोऽपि श्रीहर्षदेवस्य राजसभायाः प्रतिष्ठितः कवि-रासीत्। भाग्यविप्लववशादसौ कुष्ठरोगाक्रान्तोऽभवत्। तन्निवारणार्थमनेन सूर्यशतकन्नाम स्रग्धराछन्दोबद्धं स्तोत्रं प्रणिबद्धम्। अस्य रचनाऽतीव गौढा अनुप्रासोल्लाससम्भृता च। सूर्यदेवस्यात्र सर्वाङ्गपूर्णं वर्णनमतीव हृदयावर्जकं सम्पन्नम्।

बाणभट्टः—हर्षचरित-कादम्बरीरचयितुस्तत्रभवतो बाणभट्टस्य गद्यकवि-सार्वभौमस्य कृतित्वेन प्रसिद्धं चण्डीशतकनामकं स्रग्धरावृत्तालङ्कृतं भगवत्या दुर्गायाः स्तवनरूपं स्तोत्रम्। भोजराजेन स्वकीयकण्ठाभरणे चण्डीशतकस्य एकं प्रशस्तं पद्यं दृष्टान्तरूपेण समुद्धृतम्—

विद्राणे रुद्रवृन्दे सवितरि तरले वज्रिणि ध्वस्तवज्रे,
जाताशङ्के शशाङ्के विरमति मरुति त्यक्तवैरे कुबेरे।
वैकुण्ठे कुण्ठितास्त्रे महिषमतिरुषं पौरुषोपघ्ननिघ्नम्,
निर्विघ्नं निघ्नती वः शमयतु दुरितं भूरिभावा भवानी ।। इति ।।

शङ्कराचार्यः—बाणमयूरयोः प्रायशः पञ्चाशद्वर्षान्तराल एव श्रीमच्छङ्कराचार्यभगवन्मुनिपादानां शङ्करावतारत्वेन प्रसिद्धानाम्।विर्भावो जातः। शिव-विष्णु-गणपति-शक्ति-हनुमत्स्तुतिविषयाणि स्तोत्राणि एषामेव सुललित-लेखनीलताप्रसूतानि विलसन्ति। यद्यपि तान्यसङ्ख्यातानि, तथाऽपि तेष् सर्वाणि शङ्कराचार्यकृतानीति मतन्तु भ्रमविजृम्भितमेव। परमत्र नास्ति सन्देहकणिकाऽपि, यानि शङ्करकृतानि तानि तु स्तोत्रसाहित्यमन्दिरस्य स्वर्णकलशायमानानि नितरामलङ्कारभूतत्वेन विलसन्ति।

'सौन्दर्यलहरी'त्याख्यं परमरमणीयदिव्यकाव्यकलाऽलङ्कृतं सर्वोत्कृष्टं स्तोत्रम्। तथाहि :—

तनोतु क्षेमं नस्तव वदनसौन्दर्य-लहरी-
परीवाहः स्त्रोतःसरणिरिव सीमन्तसरणी।
वहन्ती सिन्दूरं प्रबलकबरीभारतिमिर-
द्विषां वृन्दैर्बन्दीकृतमिव नवीनार्ककिरणम् ।। इति ।।

कुलशेखरः—कविवरः कुलशेखरोऽयं त्रिवाङ्कुरराज्यस्याधिपतिः दशम-शतकलब्धजन्मा वैष्णवधर्मपरायणोऽनन्यसाधारणो मेधासम्पन्नः स्तोत्रकृत्। एतद्विरचितं मुकुन्दमालाख्यं स्तोत्रं, वैष्णवस्तोत्राणां मुकुटमणिरभिमन्यते। यद्यपि चतुस्त्रिंशत्पद्यबद्धमिदं लघीय एव तथाप्यस्य पद्यावलिरतीव रमणीया हृदय-हारिणी सम्पन्ना। यथा :—

दिवि वा भुवि वा ममास्तु वासो नरके वा नरकान्तक! प्रकामम्।
अवधीरित — शारदारविन्दौ चरणौ ते मरणेऽपि चिन्तयामि ।।

यामुनाचार्यः—यामुनाचार्योऽसौ रामानुजाचार्यस्य वैष्णवधर्मप्रतिष्ठापकस्य परमगुरुरासीत्। क्रैस्तदशमा शती एवास्य स्थितिकालः। 'आलवन्दार'[1] स्तोत्रं

---

१. 'आलवन्दार' इति कवेरस्य तामिलनाम, तदनुरोधेनैव स्तोत्रमपि तन्नाम्नैव प्रसिद्धिं गतमिति विभाव्यते।

काव्यकोमलत्वादिकमनीयगुणगरिम्णा वैष्णवेषु एतत् 'स्तोत्ररत्न' नाम्ना प्रसिद्धम्। भक्तिभावनायाः करुणरससम्प्लुततया अभिव्यक्तिरस्मिन् स्तोत्र आलेख्यबद्धा इव विलसति काव्यरसामृतस्यन्दिनी। तद्यथा :—

तवामृतस्यन्दिनि पादपङ्कजे निवेशितात्मा कथमन्यदिच्छति।
स्थितेऽरविन्दे मकरन्दनिर्भरे मधुव्रतो नेक्षुरसं समीक्षते॥

लीलांशुकः—लीलांशुकविरचितं 'कृष्णकर्णामृत'न्नाम स्तोत्रं भगवतश्चैतन्य-महाप्रभोः परमप्रियमनुश्रूयते। अस्मिन् स्तोत्रे भाव-भाषायुगलमतीव सौन्दर्यो-ल्लसितम्, माधुर्यरससम्प्लुतञ्च। तथा च :—

मुग्धं स्निग्धं मधुरमुरली-माधुरीधीरनादैः,
कारं कारं करणविवशं गोकुलव्याकुलत्वम्।
श्यामं कामं युवजनमनोमोहनं मोहनाङ्गं,
चित्ते नित्यं निवसतु महो वल्लवीवल्लभं नः॥

वेङ्कटाध्वरिः—अनेन दशमशतकमध्यसम्भवेन लक्ष्मीसहस्रनामकं स्तोत्रं भगवत्या लक्ष्म्याः स्तवनात्मकं सहस्रमितपद्यैरलङ्कृतमतीव रोचिष्णु स्तोत्रं विरचितम्। अस्मिन् स्तोत्रे रसभावालङ्काराणां काप्यद्भुतद्युतिर्विद्योतिता प्रतिभाति। दिव्येनामुना काव्येन कविरयं नूनममरपदवीमुपलम्भितः। अस्य कल्पनाकमनीयताऽप्याकलयितव्या भावुकैः—

परमादिषु मातरादिमं यदिमं कोषकृदाह मध्यमम्।
अमरः किल पामरस्ततः स बभूव स्वयमेव मध्यमः॥[1]

अत्रास्य प्रदीप्तप्रतिभासाचिव्येन पाण्डित्यमपि प्रभासितं भवति।

इमे हि वैष्णवस्तोत्रकवयः। सम्प्रति शैवस्तोत्रविधायकानां रचना अपि नयनसरणिमवतारणीयाः —

उत्पलदेवः—काश्मीरभवैः कवीश्वरैरपि बहूनि रमणीयानि स्तोत्राणि विरचितानि स्तोत्र-साहित्यालङ्कारभूतानि। उत्पलदेवस्य समयः नवमशताब्दी एव विभाव्यते। 'शिवस्तोत्रावलि'संज्ञकमस्य सुप्रसिद्धं स्तोत्रम्। अत्र हि

---

१. अस्यायमाशय :—हे मातः सर्गस्यादिषु वस्तुष्वप्यादिममिमं तव कटि-प्रदेशं यद् अमरः कोषकृन्मध्यममाह अर्थात् कटिपर्यायत्वे यद् 'मध्यमञ्चावलग्नञ्च मध्योऽस्त्री' इत्यमरः इति तत्तस्यापराध एव खल्वनौचित्यात्। अत एव तस्यापराधस्य दण्डोऽपि तेन लब्धः यत्स्वयं मध्यमः सञ्जातः। 'मध्ये मः यस्य स मध्यमः', अमरपदस्य मध्ये 'म' अस्त्येवेति भावः।

भगवतः शङ्करस्य विविधगुणगणावलिवर्णनात्मकानामेकविंशतिस्तोत्राणां संग्रहः कृतोऽवगम्यते ।

कण्ठकोणविनिविष्टमीश ! ते कालकूटमपि मे महामृतम् ।
अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि मे न रोचते ॥

जगद्धरभट्टः—भट्टोऽयं चतुर्दशशताब्दीसम्भवो विद्वद्वरस्य गौरधरभट्टस्य पौत्रः रत्नधरभट्टस्य चात्मज आसीत् । असावपि काश्मीरकः । अस्य सुप्रसिद्धं स्तोत्रं 'स्तुतिकुसुमाञ्जलि'नामकं चतुर्दशशतैः (१४००) श्लोकैरलङ्कृतम् । स्तोत्रसन्दर्भेषु एतत्स्तोत्रमतीवोच्चपदं बिभर्ति । भूम्नाऽत्र करुणरस एवोपलालितः —

स्वैरेव यद्यपि गतोऽहमधः कुकृत्यै-स्तत्रापि नाथ तव नाऽस्म्यवलेपपात्रम् ।
दृप्तः पशुः पतति यः स्वयमन्धकूपे नोपेक्षते तमपि कारुणिको हि लोकः ॥

पण्डितराजो जगन्नाथः—अस्य तैलङ्गान्वयसम्भवस्य प्रकाण्डपण्डितकवेः वर्णनमन्यत्र कृतपूर्वम् । अस्य काव्यकलापवर्णने को वा सविस्मयं न भजेत वाचंयमताम् । भगवतो नन्दनन्दनस्य दिव्यद्युतिच्छटामुट्टङ्कयन्नसौ व्याजहार :—

स्मृतापि तरुणातपं करुणया हरन्ती नृणा-
मभङ्गुरतनुत्विषां वलयिता शतैर्विद्युताम् ।
कलिन्दगिरिनन्दिनीतटसुरद्रुमालम्बिनी
मदीयमतिचुम्बिनी भवतु कापि कादम्बिनी ॥

## जैनबौद्धस्तोत्राणि

शैववैष्णवस्तोत्राणिवत् जैनबौद्धमतावलम्बिभिः कविभिरपि बहूनि प्रशस्तानि स्तोत्राणि विरचितानि । तत्र जैनकविषु मानतुङ्गाचार्य-सिद्धसेनदिवाकरौ सुप्रसिद्धौ ।

मानतुङ्गाचार्यः—अस्य 'भक्तामरस्तोत्रं' जैनस्तोत्रे निरतिशयप्रशंसाभाजनम् । अस्मिन् हि खलु भक्तिभावानां परिपक्त्रिमाऽभिव्यक्तिः पूर्णतां जुषमाणा भक्तमणीनां हृदयानि करुणरससम्प्लुतानि विदधाति ।

अल्पश्रुतं श्रुतवतां परिहासधाम त्वद्भक्तिरेव मुखरीकुरुते बलान्माम् ।
यत्कोकिलः किलमधौ मधुरं विरौति तच्चारुचूतकलिकानिकरैकहेतुः ॥

एवमेव बौद्धस्तोत्रेषु अनेकानि बौद्धस्त्रोत्राणि प्रसिद्धानि । तेषु शून्यवादस्य प्रथमप्रतिष्ठापकस्य नागार्जुनस्य, 'निरौपम्यस्तवः', 'अचिन्त्यस्तवः' इति स्तोत्रद्वयन्तु नितरां प्रशस्तम् ।

नाऽऽमयो नाशुचिः काये क्षुत्तृष्णासम्भवो न च ।
त्वया लोकानुवृत्त्यर्थं दर्शिता लौकिकी क्रिया ॥ इति ॥

—:०:—

# उपसंहारः

अथेदानीं पुण्यतमस्यास्य संस्कृतवाङ्मयस्य गौरवगाथेयं पर्यवसितङ्गतेत्युपसंह्रियते ।

अत्र हि किल वैदिकलौकिककोभयविधं संस्कृतवाङ्मयपाथोनिधिमन्मथोत्थं साररूपं 'नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यत' इति श्रीमल्लिनाथस्य वचनमनुसृत्य अस्मिन् विमर्शदर्पणे समालोचनपुरस्सरं प्रतिबिम्बीकृतम् । तत्त्वतो विमृश्यमाने विदितं भवति यत्तत्र प्रामुख्यं तु खल्वितराखिलवाङ्मयस्य मूलभूतत्वाद् वैदिकवाङ्मयस्यैव । तदितरस्य अशेषविशेषस्य साहित्यस्य तदुपव्याख्यानात्वेनाङ्गीरात् । वस्तुतः वेदातिरिक्तैर्विविधप्रस्थानप्रभिन्नैर्निखिलवाङ्मयप्रसरैः खलु वेद एव परिबृंह्यते । वेदार्थमेव वै शद्येन ते प्रतिपादयन्ति पुष्णन्ति च । स्वातन्त्र्येण न किञ्चिन्मात्रमप्युपोद्बलयन्तीति हेतोरेव वेदानां स्वतः प्रामाण्यं, परतः प्रामाण्यञ्चेतरेषां तेषां समेषाम् । वेदातिरिक्तानां वेदव्याख्यानभूतानां वैदिकवाङ्मयानुबन्धिनां ग्रन्थानामपि यदा स्वतःप्रामाण्यं नास्ति तदाऽन्येषां वराकाणां डित्थपित्थकपित्थादीनां तु गाथैव खलु का ? परम्परयाऽप्येतदेवाऽभ्युपपन्नं भवति, यत्सर्वत्रापि तर्कव्याकुलितेऽर्थे 'इति श्रुते' रिति श्रुतिरेव निर्णेतव्ये निर्णीतार्थे चोपोद्बलकत्वेनैव शरणीक्रियते प्रमाणकोविदैः । वेदानामपौरुषेयत्वेन भ्रमप्रमादविप्रलिप्सादिदोषराहित्याद्, यथार्थसत्यतत्त्वप्रतिपादकत्वाद्, इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकोपायस्योपोद्बोधकत्वात्, सकलवाङ्मयजीवातुभूतत्वाच्च अनितरसाधारणप्राधान्यं नितरां शेखरायतेतरामिति । अशेषविशेषमपि यन्नाम भारतीयं सांस्कृतिकं तत्त्वं तदखिलं वेदस्वरूपे भास्वरस्वर्णभाण्डोदरेऽस्मिन् विलसतितरां सुसम्भृतमिति मनागपि संशयपदवीं नाधिरोहति ।

भारतीयसंस्कृतेः तदीयपरम्परायाश्च चित्राङ्कनमेव समस्तेऽपि संस्कृतवाङ्मये दृग्गोचरीभवति । आध्यात्मिक-भौतिक-यावत्प्रमेयनिधिभूतं, संस्कृतसाहित्यमिदमितरविश्वसाहित्यं स्वसाजात्येन नामन्त्रयते । यदवलम्ब्य मानवजीवनस्य सौख्यं शान्तिः समृद्धिर्विश्वबन्धुत्वं वा पल्लवितं भवति तदखिलं ज्ञानविज्ञानं संस्कृतवाङ्मयमिदं सर्वोत्कर्षत्वेन परिपूर्णतया च परामृशति । तदेतादृशस्य प्रेय-

श्रेयःसाधकस्य सर्वतोमुखप्रमुखज्ञेयज्ञानसाधननिधानभूतस्यास्य साहित्यस्याऽपरिशीलनं नाम नूनं दैवदुर्विलसितमेव केवलमित्याकलयामो वयम्।

संस्कृतभाषा या माधुर्य-प्रागल्भ्य-नैसर्गिकत्व-सौकर्य-भावगाम्भीर्यादिगुणगरिम्णेयमखिलेतरभाषाणां मूर्द्धाभिषिक्तत्वेन विराजते। तदस्या भाषाया परिशीलनं मनुष्यमात्रस्य परमो धर्मः। प्रकृत्येयं भाषा यत्तदुपज्ञत्वेन स्वत्वेन वा यं कमपि देशविशेषं नानुबध्नाति, सम्बध्नाति चात्मीयत्वेनाखिलानेव देशान्। अतएवायं देवभाषेति पदवीमारोपिता विद्वद्भिः अतः सर्वे एव स्त्रियः पुरुषा वा साधिकाराः अध्येतुमिमामिति। अद्यापि परःसहस्राः संस्कृतविद्वांसः रूस-जर्मन-फ्रांस-इङ्गलैण्ड-अमेरिका-पोलैण्डादिदेशेषु योरोपखण्डे विराजन्ते। एशियाखण्डे तु ततोऽप्यधिकाः।

सर्वास्वपि तत्तद्देशीयासु भाषासु च अद्यापि असङ्ख्याताः शब्दा विशुद्धसंस्कृताः संस्कृतशब्दैः सह सादृश्यं जुषमाणास्तद्विकृतरूपा वा समुपलभ्यन्ते इतस्ततः प्रसृताः संस्कृतभाषाया विश्वभाषाजननीत्वं साधयन्त इति कस्याविदितम्। अस्यां भाषायां ये ये धार्मिका राजनीतिकाः सामाजिका अर्थानुबन्धिनो वैज्ञानिकाश्च विषयाः प्रणिबद्धाः सत्याहिंसापरस्वागृध्नुतादयो मानवमात्रहितावहा वर्त्तन्ते, मन्यामहे तेषां तलावगाहितया सम्यक् परिशीलनेन महानुपकारो जगतो भविष्यतीत्यस्माकं सुदृढो विश्वासः। अतः शान्तिसुधानिष्यन्दकरी अमन्दानन्दनिर्झरी संस्कृतभाषामाधुरीयं सर्वैः शान्तिसाम्राज्यस्थापनाकामैः विश्वैकात्म्यविधित्सुभिः सुधीभिः सर्वात्मना निषेव्या परिशीलनीया च।

किञ्च विद्वद्वरेण्यैः एतदप्यवधेयं भवति—

संस्कृतसाहित्यस्य बृहत्तमं विस्तारमुद्दिश्य विशदवर्णनं तु विमर्शकल्पेऽस्मिन् स्वल्पनिकाये सन्दर्भेऽसम्भवकोटिनिविष्टमेव प्रतिभाति अतो वयमिच्छन्तोऽपि स्थितिवशम्वदतया तथा विधातुं सर्वथाऽनीशानाः खेदस्य निर्वेदस्य च परां काष्ठामालम्बामहे। तथापि समासेन किञ्चिदिवात्र नाममात्ररूपेण चर्च्यते। सन्दर्भेऽस्मिन् यद् यदुक्तं तदतिरिक्तमन्यान्यपि नैकानि शास्त्राणि ज्ञानविज्ञानपराणि विविधानि च प्रस्थानान्तराणि वैशद्येन सन्दृब्धानि संस्कृतवाङमये हस्तलेखबद्धानि तालदलाङ्कितानि परम्पराप्राप्तप्राचीनविद्वद्गृह-मन्दिर-पुस्तकालयेषु सुरक्षितानि विद्यन्तेऽद्यापि प्रकीर्णानि इति नाविदितं विदुषाम्। तत्र तावद्रसायनशास्त्रम्, धनुःशास्त्रम्, गान्धर्वशास्त्रम्, आग्नेयशास्त्रम्, समराङ्गणसूत्रधारम्, आयुर्वेदशास्त्रम्, विमानशास्त्रम्, वास्तुशास्त्रम्, यन्त्रविज्ञानम्, खगोलशास्त्रम्, भूगोलशास्त्रम्, भूगर्भशास्त्रम्, खनि-

तन्त्रम्, रत्नविज्ञानम्, धातुतन्त्रम्, वायुविज्ञानम्, प्राणिविज्ञानम्, वनस्पतितन्त्रम्, औषधशास्त्रम्, नौतन्त्रम्, शिल्पतन्त्रम्--इत्यादिकं बहुतरमवशिष्टं भूयस्त्वभिया सकलमविकलं वा ग्रन्थेऽस्मिन्निवेष्टुं न प्राभवाम वयम् ।

परेशानुकम्पया यद्यस्य सन्दर्भस्य पुनर्मुद्रणवेला लप्स्यते तदानीमवशिष्टानामेषां ग्रन्थरत्नानां सुप्रसिद्धानाञ्च कवीनामपि विशदं वर्णनं प्रकाशयितुमभिलषामो वयम् । अग्रे तु कालाधिनाथः स भगवान् विधिरेव प्रमाणमिति । इति शम् ।

अतो जगदिदं परितो विस्फूर्ज्यमानाहवाग्निसम्प्लुष्टं सानन्दं शान्तिरसमारसयद् भूयोऽपि चतुरस्रतया समुल्लसत् किल स्वर्गसादृश्यमादधानमिति अस्माकं हार्दिकी अभ्यर्थनेति :--

धन्यं भारतभूतलं सुललितं सारस्वतं मन्दिरम्,
धन्या संस्कृतवाक् सुधेव मधुरा गीर्वाणसंसेविता ।
धन्याश्च प्रतिभायुताः सुकवयः पाण्डित्यसम्मण्डिताः,
तेषां सूक्तिसुधारसः क्षितितले दीव्यात्समाः शाश्वतीः ।।

शं शुभञ्च भूयात्
सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु, मा कश्चिद्दुःखभाग्भवेत् ।। इति

इति सर्वतन्त्रस्वतन्त्रैः पदवाक्यप्रमाणपारावारपारीणैः सिद्धान्तशिरोमणिपदालङ्कृतैः श्रीमदाचार्यद्विजेन्द्रनाथशास्त्रिभिः प्रणीते संस्कृतसाहित्यविमर्शे द्वादशः परिच्छेदः समाप्तः ।

समाप्तश्चायं ग्रन्थः ।



भारती प्रतिष्ठानस्यान्यानि मुद्राप्यमाणानि ग्रन्थरत्नानि —

I कालिदासभारती

II बाणभारती

III स्वराज्यविजयं महाकाव्यम्

IV भारतीयसंस्कृतिः

V अधयावदप्रकाशितानां हस्तलिपिबद्धानां प्रकीर्णग्रन्थानां च प्रकाशनम्

VI भास - भारती, (भासीय प्रमुखनाटकानांसटीक-प्रकाशनम्)

—इत्यादि



